# श्रीमद्भगवद्गीता ।



आनन्दगिरिकृत टीकासहिता

शाङ्करभाष्यसम्वलिता

श्रीधरस्वामिकृत सुबोधिनी सहिता च

एवं तदनुसारतः

त्यक्तुज श्रीयुक्त पण्डित जगन्नाथ शुक्ल विरचित

मनभावनी नाम भाषाटीकाविभूषिता ।

उक्त श्रीजगन्नाथ पण्डितैरेव मुद्रयितुमारब्धा ।

द्वितीयसंस्करणम् ।

कलकत्ता

नीमतला गली ८ नम्बर मकान श्रीभुवनचन्द्र वसाक के

ज्ञानरत्नाकर छापे से छपी ।

श्रीसम्वत् १८२७ श्रावणे मासि ।

## विज्ञापन।

इस असार संसार मे वेद शास्त्र पुराण इतिहास का सारांश रूप तथा मोह तम तिरोहणके अर्थ तरुणतर अति प्रचण्ड मार्तण्ड और अज्ञान तिमिरान्ध जनसमूह को ज्ञानाञ्जन का अञ्जनूटा यह अनूठा जो गीताशास्त्र सो समरभूमि मे बंधुवध निमित्तसे व्याकुल अर्जुन को देख श्रीकृष्ण भगवानने उपदेशदिया था सोई श्रीनारायण का अवतार श्रीवेदव्यासने महाभारत के बीच भीष्मपर्व मे प्रकाश किया है और उसका तात्पर्य्य भी स्वामी श्रीशङ्कराचार्य्यने भाष्य करिके कहा फेरि शङ्करभाष्य का भी टीका „आनन्दगिरि ने किया और परम ज्ञान वान श्रीधरस्वामीने भी गीता पर सुबोधिनीनाम तिलक किया है परन्तु ए सब संस्कृत मे हैं इससे पण्डित छोड और लोगों के समझमे नहीं आवते हैं इस कारण से कान्यकुब्ज श्रीयुत शिवनन्दन पांडे के उद्योग औ उपदेश तथा रुपये खरच सेऔ कान्यकुब्ज श्रीयुतविश्वेश्वरनाथ पांडेजी की मदत औ रुपये खरचसे तथा वैश्यवंश अवतंश श्रीयुत परमधार्म्मिक जैनीलालजीके रुपये औ उत्साहसे और श्रीयुत वैश्यकुलभूषण श्री जगुल किसोरजी के रुपये खरचसे तथा वैश्यवंश उजागर नागर श्रीयुत नाहरमलजी के रुपयों से औवैश्यकुल दीप श्रीडेढ़राज के रुपये औ सहायता से तथा वैश्यकुल कुमुद के सुददायक चन्द्र समान श्रीच न्द्रभान जीके धन से और श्रीमोती राम जी महाराज की मदत से तथा श्री सोनीराम रामदयाल औ श्रीभगवान दास जी की उत्साहसे कान्यकुब्ज पण्डित श्रीजगन्नाथशुक्ल ने परम धार्म्मिक परोपकारी इन सब लोगों की आज्ञानुसार मनभावनी नाम भाषा टीका करके श्रीमद्भगवद्गीता शाङ्करभाष्य आनन्दगिरि कृत टीका औ श्रीधरस्वामी के तिलक समेत यथामति शुद्ध करके सम्वत् १९२७ मे श्रीभुवन चन्द्र बसाकके ज्ञानरत्नाकर छापेखाने मे दूसरी वार बडेअक्षरोंसे छपवाया है।

गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः।
या स्वयं पद्मनाभस्य मुखपद्मा द्विनिःसृता॥

## शाङ्करभाष्यमुपक्रमणिका

ओंनारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम्।
अण्डस्यान्तस्त्विमेलोकाः सप्तद्वीपाचमेदिनी॥१

### आनन्दगिरिकृतटीका।

दृष्टिंमयिविशिष्टार्थांक्षमामीषुपवर्षिणीम्। केरव्वदेच्छितनूकृलेड्व्यूहनिवारिणीम्॥१॥ यद्वक्त्रपङ्केरुहसंप्रसूतंनिष्ठाद्वतंविश्वविभागनिष्ठम्। साध्येतराभ्यांपरिनिष्ठितान्तंतंवासुदेवंसततंनतोस्मि॥२॥ प्रत्यञ्चमच्युतंनत्वागुरूनपिगरीयसः। क्रियतेशिष्यशिक्षायैगीताभाष्यविवेचनम्॥३॥

कर्मनिष्ठाज्ञाननिष्ठेत्युपायोपेयभूतनिष्ठाद्वयमभिज्ञात्यप्रवृत्तंगीताशास्त्रंव्याचिख्यासुर्भगवान्भाष्यकारोविघ्नोपशान्तोपशमनादिप्रयोजन प्रसिद्धयेप्रामाणिकव्यवहारमाणकमिष्टदेवतातत्वानुस्मरणंमङ्गलाचरणंसम्पादयन् अवशेषेणेतिहासपुराणयोपर्यालोचितव्यासितगीताशास्त्रे णैकवाक्यतामभिप्रेत्यपौराणिकश्लोकमेकमेवान्तर्यामिविषयमुदाहरति नारायणइति आपोनाराइतिप्रोक्ताआपोवैनरसूनवः अयनंत

### भाषा अनुवाद

इससंसारमेंयहसबकिसीकेइच्छारहतीहै किदुखदूरहोयऔनिरन्तरसुखमिलैपरन्तुउसकीकोईउपायविनाजानेबहुतेरेलोगअनेकअनेकयतनकरिवेदपुराणनिहारिहारिबैठेऔरअपनेमनोरथकोनपहुंचे तबपरमदयालुभगवानवासुदेवश्रीकृष्णजीने उसकीएकअतिउत्तमउपायरूपगीताशास्त्रअर्जुनकोउपदेशकियाजिससेज्ञाननिष्ठा औरज्ञाननिष्ठाकाकारणरूपजोकर्मनिष्ठाअर्थात्कर्मकेद्वाराज्ञानकीप्राप्तिहोतीहै यहीदोनोंनिष्ठामेंप्रवृत्तकरहेकहताऊं आजोगीताशास्त्रतिसकातात्पर्यकहनेकेलियेभगवानभाष्यकारशंकराचार्यसकलइतिहासपुराणोंकेसाथगीताकीएकवाक्यताअर्थात्किसीसेविरोधनहीं है यहजनातेहुयेग्रंथकेआरम्भमेंअन्तर्यामीपरमेश्वरकाप्रतिपादक कहेकहनेवालाएकपुराणकाश्लोकमङ्गलाचरणकियाहै।

## आनन्दगिरिकृतटीका ।

स्यता:पूर्व्वंतेननारायण:स्मृतइतिस्मृतिसिद्ध:स्थूलदर्शांनारायणशब्दार्थ:सूक्ष्मदर्शिन:पुनराचक्षतेनरशब्देनचराचरात्मकंशरीरजातमुच्यतेतत्रनित्यसन्निहिता:चिदाभासाजीवानाराइतिनिरुच्यतेतेषामयनमाश्रयोनियामकोऽन्तर्यामीनारायणइतियमधिकृत्यान्तर्य्यामिब्राह्मणंश्रीनारायणाख्यमत्राम्नायञ्चाधीयतेतदनेनशास्त्रप्रतिपाद्यंविशिष्टंतत्त्वमादिष्टंभवति ननुपरस्यात्मनोमायासम्बन्धादन्तर्य्यामित्वंशास्त्रप्रतिपाद्यत्वंचवक्तव्यमन्यथाकूटस्थासङ्गाविषयाद्वितीयस्यतद्योगात्तथाचशुद्धतासिद्धौकथंयथोक्तापरदेवताशास्त्रादावनुस्मर्य्यतेशुद्धस्यहितत्त्वस्यानुस्मरणमभीष्टफलवदभीष्टंतत्राहपरोव्यक्तादितिअव्यक्तमव्याकृतंमायेत्यनर्थान्तरंतस्मात्परोव्यतिरिक्त:तेनासंस्पृष्टोयमपर:अक्षरात्परत:परइतिश्रुते: गृहीत:तत्त्वतोमायासम्बन्धाभावेपिकल्पनयातदीयंसङ्गतिमङ्गीकृत्यान्तर्य्यामित्यादिकमुन्नेयम्यस्मादीश्वरस्यव्यतिरेकोविवक्षितस्तस्मिन्नव्यक्तेसाक्षिसिद्धेपिकार्य्यलिङ्गकमनुमानमुपन्यस्यतिअण्डमितिअपञ्चीकृतपञ्चमहाभूतात्मकंहैरण्यगर्भंतत्त्वमण्डमित्यभिलप्यतेतदव्यक्तात्पूर्व्वोक्तादुत्पद्यतेप्रसिद्धादिश्रुतिस्मृतिवादेषुहिरण्यगर्भस्यमूलकारणादुत्पत्तिस्तथाचकार्य्यलिङ्गादव्यक्ताभिव्यक्तिरित्यर्थ: हिरण्यगर्भे श्रुतिस्मृतिसमधिगतेपिकार्य्यलिङ्गकमनुमानमस्तीतिमन्वानोविराडुत्पत्तिमुपदर्शयति अण्डस्येति उक्तस्याण्डस्यहिरण्यगर्भाभिधानीयस्यान्तरिमेभूरादयोलोकाविराडात्मकावर्त्तन्तेकार्य्यंहिकारणस्यान्तर्भवतितेनहिरण्यगर्भान्तर्भूताभूरादयोलोकाविराडात्मानस्तेनसृष्टाइति तल्लिङ्गाद्धिरण्यगर्भसिद्धिरित्यर्थ: लोकानेवपञ्चीकृतपञ्चमहाभूतात्मकविराडात्मत्वेनव्युत्पादयतिसप्तद्वीपेति सापृथिवीअभवदितिश्रुतौविराजोजन्मसङ्कीर्त्तितमित्यङ्गीकाराद्शेषद्वीपोपेतापृथिवीत्यनेनसर्व्वलोकात्मकोविराडेवोच्यतेचशब्देनविराजोहि हिरण्यगर्भपूर्व्वोक्ताण्डात्मन्यन्तर्भावस्तत:सम्भवोनुकृष्यतेपरमात्माहिस्वज्ञानद्वारा जगदशेषमुत्पाद्यस्वात्मन्येवान्तर्भावाखण्डैकरससच्चिदानन्दात्मनास्वेमहिम्नितिष्ठतीत्यर्थ:अत्रचनारायणशब्देनाभिप्रेयमुक्तंनरएवनाराजीवास्तत्पदवाच्या:तेषामयनमधिष्ठानंतत्पदवाच्यं परंब्रह्मतथाचकल्पितस्याधिष्ठानातिरिक्तस्वरूपाभावाद्वाच्यस्यकल्पितत्वेपिलक्ष्यस्यब्रह्ममात्रत्वाद्ब्रह्मात्मैक्यंविषयोत्रसूच्यतेतेनार्थाद्विषयविषयिभाव:सम्बन्धोपिध्वनित:परोव्यक्तादित्यनेनमायासं संसर्गाभावोक्त्यासर्व्वानर्थनिवृत्त्यापरमानन्दाविर्भावलक्षणोमोक्षोपिविवक्षितस्तेनचतत्कामस्याधिकारोद्योतित:परिशिष्टेनतुशब्देनवस्तुनोवास्तवमद्वितीयत्वमावेदितं

## शाङ्करभाष्यमुपक्रमणिका।

सभगवान्सृष्ट्वेदंजगत्तस्यचस्थितिंचिकीर्षुर्मरीच्यादीनग्रेसृष्ट्वाप्रजापतीन् प्रवृत्तिलक्षणंधर्म्मंग्राहयामासवेदोक्तंततोऽन्यांश्चसनकसनन्दनादीनुत्पाद्यनिवृत्ति धर्म्मंज्ञानवैराग्यलक्षणंग्राहयामास।

## आनन्दगिरिकृतटीका

तेनचवस्तुद्वारापरमविषयत्वंतज्ज्ञाननिष्ठायास्तदुपायभूतकर्म्मनिष्ठायाश्चावान्तर विषयत्वमित्यर्थादुक्तमित्यवधेयम्।

ननुनैवंसाध्यसाधनभूतंनिष्ठाद्वयमत्रभगवताप्रतिपाद्यतेब्रह्मणाभ्यर्थितस्यभगव तोभूमिभारापहारार्थंवसुदेवेनदेवक्यामाविर्भूतस्यतादर्थ्येनमध्यमंपृथासुतंप्रथितम हिमानंप्रेरयितुंधर्म्मयोरिहानुद्यमानत्वाद्‌तोनास्यशास्त्रस्यनिष्ठाद्वयंपरापरविष यभावमनुभवितुमलमितितन्नभगवतोधर्म्मसंस्थापनस्याभाव्यश्रौव्याह्लसंद्वयस्थापनार्थ मेवप्रादुर्भावाभ्युपगमाद्भूभारपरिहारस्यचार्थिकत्वादर्जुनंनिमित्तीकृत्याधिकारिणं स्ववर्मप्रवर्तनद्वाराज्ञाननिष्ठायामवतारयितुंगीताशास्त्रस्यप्रणीतत्वादुचितमस्यनि ष्ठाद्वयविषयत्वमिति परिहरतिसभगवानित्यादिनाधर्म्मद्वयमर्ज्जुनायोपदिदेशेत्यन्ते नभाष्येणतत्रनेदंगीताशास्त्रं व्याख्यातुमुचितमाप्तप्रणीतत्वानिर्द्धारणात्तथाविधशा स्त्रान्तरवदित्याशंक्यमङ्गलाचरणस्योद्देशं दर्शयन्नादौशास्त्रप्रणेतुराप्तनिर्द्धारणार्थं सर्व्वज्ञत्वादिप्रतिज्ञापूर्व्वकंसर्व्वजगज्जनयितृत्वमाह सभगवानिति प्रकृतोनाराय णाख्योदेवःसर्व्वज्ञः सर्व्वेश्वरःसमस्तमपिप्रपञ्चमुत्पाद्यव्यवस्थितोनचतस्यानाप्तत्व मीश्वरानुगृहीतानामाप्तत्वसिद्धयातस्यपरमाप्तत्वसिद्धेरित्यर्थः ननुभगवतासृष्टम पिचातुर्वर्ण्यादिविशिष्टं हिरण्यगर्भादिलक्षणजगन्नव्यवस्थितिमास्थातुंशक्यतेव्यव

## भाषा अनुवाद

उसकाअर्थयहहैकिजोअव्यक्तनाममायाजगत्कीप्रकृतितिससेस्थावरजङ्गमकी शरीरसमूहसेअधिष्ठितकहेंटिकेजोसकलजीवउनकेआश्रयभूतअन्तर्यामीनारा यणहैं औरउसीमायासेअंडाकारयहब्रह्माण्डप्रगटभयाहै किजिसब्रह्माण्डके भीतरसकललोकऔरसातद्वीपसमुद्रसमेतयहवसुन्धरापृथिवीधरीभईहै॥१॥

सोईनारायणजगतकोसिर्जनकरिइससृष्टिकेपालनकरनेकेलियेमरीचिअत्रि आदिप्रजापतियोंकोपहलेउत्पन्नकिया औरउनकोवेदविहितप्रवृत्तिलक्षण धर्मकीशिक्षादिया फेरसनकादिकोंकोउपजायउनकोज्ञानवैराग्यनिवृत्तिलक्ष णधर्मउपदेशकिया।

## शाङ्करभाष्यमुपक्रमणिका ।

द्विविधोहिवेदोक्तोधर्मः प्रवृत्तिलक्षणोनिवृत्तिलक्षणश्च तत्रैकोजगतःस्थितिकारणं प्राणिनांसाक्षादभ्युदयनिःश्रेयसहेतुर्यःसधर्मः ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिःश्रेयोर्थिभिरनुष्ठीयमानोदीर्घेणकालेनअनुष्ठातॄणांकामोद्भवाद्धीयमानविवेकविज्ञानहेतुकेनाधर्म्मेणाभिभूयमानेधर्म्मेप्रवर्द्धमानेचाधर्मेजगतःस्थितिंपरिपालयिषुःसआदिकर्त्तानारायणाख्योविष्णुर्भौमस्यब्राह्मणोब्रह्मणत्वस्यरक्षणार्थंदेवक्यांवसुदेवादंशेनकृष्णःकिलसम्बभूवब्राह्मणत्वस्यहिरक्षणेनरक्षितःस्याद्वैदिकोधर्मःतदधीनत्वाद्वर्णाश्रमभेदानाम् ।

## आनन्दगिरिकृतटीका ।

स्थापकाभावान्नचपरस्यैवेश्वरस्यव्यवस्थापकत्ववैयर्थ्यादिप्रसङ्गात्तत्राहतस्यचेतिसृष्टस्य जगतोमर्य्यादाविरहितत्वशङ्कितेतदीयांव्यवस्थांकर्तुमिच्छन्व्यवस्थापकमालोच्यत्तत्वस्यापिस्वतत्त्वेनप्रसिद्धंधर्मान्तथाविधधर्ममधिगम्यसृष्टवानित्यर्थः सृष्टस्यधर्मस्यसाध्यत्वभावतयासाधयितारमन्तरेणासम्भवात्तस्यैवतदनुष्ठातृत्वानभ्युपगमात्प्राणिप्रभेदानामधर्मप्रायाणांतद्योगात्कुतस्तदीयासृष्टिरित्याशंक्याह मरीच्यादीनिति तेषांभगवतासृष्टानांप्रजासृष्टिहेतूनांयागदानादिप्रवृत्तिसाध्यंधर्ममनुष्ठातुमधिकृतानांस्वकीयत्वेनतदुपादानमुपपन्नमित्यर्थः चैत्यवन्दनादिभ्योविशेषार्थंधर्मंविशिनष्टि वेदोक्तमिति ननुनैतावताजगदशेषमपिव्यवस्थापयितुंशक्यतेप्रवृत्तिमार्गस्यपूर्वोक्तधर्मप्रतिनियतत्वेपिनिवृत्तिमार्गस्यतेनव्यवस्थापनायोग्यत्वात्तत्राह ततोन्यांश्चेति निवृत्तिरूपस्यधर्मस्यशमदमसाद्यात्मनोगमकमाह ज्ञानेतिविवेकवैराग्यातिशयेशमाद्यतिशयोगम्यतेततोविवेकादितस्यगमकमित्यर्थः ।

धर्मब्रह्मविदांविवादर्शनाज्जगतःस्थेम्नेकारणीभूतधर्मान्तरमपिस्रष्टव्यमस्ती

## भाषा अनुवाद

सोवैदिककहेवेदविहितधर्मदोप्रकारकाहै पहलाजगतकोस्थितिकरनेवाला जिसकोप्रवृत्तिलक्षणकहतेहैं दूसरामुक्तिकादेनहारनिवृत्तिलक्षणहै जिसको ब्राह्मणआदिचारोवरणऔआश्रमीचारोअपनेकल्याणकेअर्थअनुष्ठानअर्थात्धारणकरतेहैं ।

जगतमेलोगोंकीकामनावशतेविवेकज्ञानकेनाशकअधर्मकीवृद्धिभईतोजगतकीस्थितिकहेपालनकोइच्छाकरिकेवहीआदिकर्तानारायणब्राह्मणऔब्राह्मणकेआधीनवेदविहितधर्मकीरक्षाकेनिमित्तदेवकीकेगर्भमेवसुदेवजीसेअंशरूपप्रगटभये।

## शाङ्करभाष्यमुपक्रमणिका ।

सचभगवान्ज्ञानैश्वर्य्यशक्तिबलवीर्यतेजोभिःसदासम्पन्नस्त्रिगुणात्मिकांवैष्णवीं
स्वांमायांमूलप्रकृतिंवशीकृत्याजोऽव्ययोभूतानामीश्वरोनित्यशुद्धबुद्धमुक्तस्वभावोपिस
न्स्वमाययादेहवानिवजातइवलोकानुग्रहंकुर्वन्लक्ष्यतेस्वप्रयोजनाभावोपिभूतानु

## आनन्दगिरिकृतटीका ।

त्याशंक्याह द्विविधोहीति अतिप्रसङ्गप्रसङ्गव्यावृत्तयेप्रकृतंधर्मंलक्षयतिप्राणिना
मिति प्रवृत्तिलक्षणोधर्मोऽभ्युदयार्थिनांसाक्षादभ्युदयहेतुःनिःश्रेयसार्थिनाम्परम्पर
यानिःश्रेयसहेतुर्निवृत्तिलक्षणस्तुधर्मःसाक्षादेवनिःश्रेयसहेतुरितिविभागःज्ञानस्यै
वनिःश्रेयसहेतुत्वेपिशमादीनांज्ञानद्वारामोक्षहेतुत्वंज्ञानातिरिक्तव्यवधानाभावाच्च
साक्षादित्युक्तं यद्येवंधर्मोलक्ष्यतेतर्हिवर्णित्वमाश्रमित्वञ्चोपेक्ष्यसर्वैरेवपुरुषार्था
र्थिभिर्द्विविधोपिधर्मोयथायोग्यमनुष्ठेयोनित्यनुष्ठाननियमासिद्धिरित्याशंक्याह ब्राह्मणा
द्यैरिति अर्थित्वाविशेषेपिश्रुतिस्मृतिपर्यालोचनयानुष्ठानान्नियमसिद्धिरित्यर्थः
नित्यनैमित्तिकेषुजातिवर्णाश्रमनुष्ठानङ्काम्येपुकरणांशेरागाधीनाप्रवृत्तिरितिकर्तव्य
तांशेवैशेषिकभागेपिकदाचिदेवानुष्ठानमितिविभागमभिप्रेत्याह दीर्घेणेति अथ
यथोक्तधर्मवशादेवजगतोव्यवस्थितिसिद्धेर्भगवतोनारायणस्यादिकर्तुरनेकानर्थ
कलुषितशरीरपरिग्रहासम्भवादन्यस्यैवकस्यचिदनाप्तस्यवैपश्यदेहवतोविग्रहप
रिग्रहद्वारेणगीताशास्त्रप्रणयनमिति कुतोस्याप्तप्रणीतत्वंतत्राह अनुष्ठातृणामिति
अथवायथोक्तशङ्कायान्दीर्घेणेत्यारभ्योत्तरं महताकालेन कृतत्रेतात्ययेद्वापरावसाने
साधकानां कामक्रोधादिपूर्वकादविवेकादधर्मबाहुल्याद्धर्माभिभवादधर्माभिवृद्धेश्च
जगतोमर्य्यादाभेदेतदीयांमर्य्यादामात्मनिर्मितां पालयितुमिच्छन्प्रकृतोभगवानेत
दर्थनचातुर्वर्ण्यादिसंरक्षणार्थं लीलामयंमायाशक्तिप्रयुक्तंस्वेच्छाविग्रहंजग्राहेत्यर्थः
भौमस्यब्रह्मणोगुप्त्यै वसुदेवादजीजनदिति स्मृतिमनुसृत्यपदद्वयमनूद्यव्याचष्टे
भौमस्येतिअंशेनेति स्वेच्छानिर्मितेनमायामयेनस्वरूपेणेत्यर्थः किलेत्यस्मिन्नर्थेपौरा
णिकोप्रसिद्धिरनूद्यतेनहिभगवतोव्यतिरिक्तस्येदंजन्मेतियुज्यतेवक्तृविभागमवि
रोधादितिभावः ननुवैदिकधर्मसंरक्षणार्थंभगवतोजन्मयदायदाहिधर्मस्येत्यादि

## भाषा अनुवाद

सोईभगवानसदाज्ञानऐश्वर्यशक्तिबलवीर्यतेजसेसम्पन्नकहेयुक्तअपनीवैष्णवीत्रि
गुणमयीमायाकोअपनेवशकरकेऔरआपमुक्तरूपमायाकेद्वारादेहधारीउत्पन्नभ
येऐसेदेखपडेयेकिअपनेकिसीप्रयोजनकेविनाभीलोगोंपरअनुग्रहप्रकाशकरिके।

## शाङ्करभाष्यं उपक्रमणिका

जिघृक्षयावैदिकंहिधर्मद्वयमर्जुनायशोकमोहमहोदधौनिमग्नायोपदिदेशगुणाधिकैर्हिगृहीतोऽनुष्ठीयमानश्चधर्मःप्रचयंगमिष्यतीति । तंधर्मंभगवतायथोपदिष्टंवेदव्यासःसर्व्वज्ञोभगवान्गीताख्यैःसप्तभिःश्लोकशतैरुपनिबबन्ध ।

## आनन्दगिरिकृतटीका ।

दर्शनात् किमिदंब्राह्मणत्वस्यरक्षणार्थमितितत्राह ब्राह्मणत्वस्येति तथापिवर्णाश्रमभेदव्यवस्थापनंविनाकथंयथोक्तधर्मरक्षणमित्याशङ्क्याह तदधीनत्वादिति ब्राह्मणंहिपुरोधायक्षत्रादिप्रतिष्ठांप्रतिपद्यते याजनाध्यापनयोस्तद्धर्मत्वात्तद्द्वाराचवर्णाश्रमभेदव्यवस्थापनादतोब्राह्मण्येरक्षितेसर्वमपिसुरक्षितंभवतीत्यर्थः ।

नन्वेमपिभगवतोनारायणस्यशरीरादिमत्त्वेसत्यस्मदादिभिरविशेषादनीश्वरत्वप्रसक्तिरित्यासङ्क्यज्ञानादिकृतंविशेषमाह सचेति ज्ञानंज्ञप्तिरर्थपरिच्छित्तिरैश्वर्य्यमोश्वरत्वंस्वातन्त्र्यंशक्तिस्तदर्थनिर्वर्त्तनसामर्थ्यंबलंसहायसम्पत्तिः वीर्य्यंपराक्रमवत्त्वंतेजस्तुप्रागल्भ्यमधृष्यत्वंएतेचषड्गुणाःसर्व्वविषयाः सर्व्वदाभगवतिवर्त्तन्तेतथाचतस्यशरीरादिमत्त्वेपि नस्मदादिसाम्यमित्यर्थः अथैवमपिकथमीश्वरस्यानादिनिधनस्यनित्यशुद्धबुद्धमुक्तस्वभावस्यस्वभावविपरीतंजन्मादिसम्भवति नहिभृतानामीशितास्वतन्त्रःस्वात्मनोऽनर्थं स्वयमेवसम्पादयितुमर्हतिनचास्यदेहादिग्रहेकिमपिफलमुपलभ्यतेतत्राह त्रिगुणात्मिकामिति सिसृक्षितदेहादिगतवैरूप्यसिद्ध्यर्थमिदंविशेषणंतस्याव्यापकत्वंवक्तुंवैष्णवोमित्युक्तम् ईश्वरमारवश्यन्तस्यादर्शयतिस्वामिति तस्याश्चप्रतिभासमात्रशरीरत्वमेवनतुवस्तुत्वमित्याह मायामिति तस्याःनानाविधकार्य्याकारेणपरिणामित्वंसूचयतिमूलप्रकृतिमिति ईश्वरस्यप्रकृत्यधीनत्वंवारयतिवशीकृत्वेति नित्यत्वंकार्य्याकारविरहितत्वंशुद्धत्वमकारणत्वंबुद्धत्वमजडत्वंमुक्तत्वम् अविद्याकामकर्मपारतन्त्र्यराहित्यंनचनित्यत्वादयःसंसारावस्थायामसन्तोमोक्षावस्थायांसम्भवन्तीतियुक्तमित्याह स्वभावइति देहग्रहेप्राधान्यंमायायादर्शयितुंपुनःस्वमाययेत्युक्तं सवाअयंपुरुषोजायमानःशरीरमभिस

## भाषा अनुवाद

जिसमेंइसधर्मकोसवलोगजानिकरिग्रहणकरेंक्योंकिवडोंकेआचरनकियेधर्मकोसवलोगग्रहणकरेंगेयहविचारिश्रीकृष्णजीनेसंग्रामकेवीचशोकसागरमेंनिमग्नअर्जुनसेवेदोक्तप्रवृत्तिनिवृत्तिदोनोप्रकारकेधर्मउपदेशकियाथा सोईभगवतकाकहाउपदेशसातसैश्लोकमेसर्व्वज्ञभगवानवेदव्यासयहगीतानिबंधकियाअर्थात्बनाया

### शाङ्करभाष्यं उपक्रमणिका

तदिदं गीताशास्त्रं समस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थं तदर्थाविष्करणायानेकै र्विवृतपदपदार्थ वाक्यार्थ न्यायमप्यत्यन्तविरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपल भ्याहं विवेकतोऽर्थनिर्द्धारणार्थं संक्षेपतो विवरणं करिष्यामि ।

### आनन्दगिरिकृतटीका ।

स्पद्यमानइति श्रुतिमाश्रित्याह देहवानिति इवकाराभ्यां देहादेरवस्तुत्वेन कल्पि तत्वं द्योत्यते धर्मद्वयोपदेशद्वारा प्राणिवर्गस्याभ्युदयनिःश्रेयसतत्परत्वापादनं लोका नुग्रहः यद्यपि कूटस्थः स्वतन्त्रो नित्यत्वादिलक्षणश्चाहमोश्वरः स्वतोदृश्यते तथापि यथोक्तमायाशक्त्या देहादिगृहीत्वा प्राणिनामनुग्रहमादधानो नस्वभावविपर्य्ययं पर्य्ये तीत्यर्थः ननु प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तत इति न्यायादीश्वरस्याप्तकामतया कृतकृत्यस्य प्रयोजनाभावादनुग्राह्याणाञ्चाद्वैतवादे व्यतिरिक्तानामसत्त्वान्न धर्मद्वयमु पदेष्टुमुचितमिति तत्राह स्वप्रयोजनेति कल्पितभेदभाञ्जि भूतान्युपादाय तदनुग्र हेच्छया चैत्यवन्दनादिविलक्षणं धर्मद्वयमर्जुनं निमित्तीकृत्याप्तकामोपि भगवानुपदि ष्टवानित्यर्थः अर्जुनस्योपदेशापेक्षास्तीति दर्शयितुं विशिनष्टि शोकेति ननु भूतानुग्रहे कर्त्तव्ये किमित्यर्जुनाय धर्मद्वयं भगवतोपदिश्यते तत्राह गुणाधिकैरिति प्रचयं गमि ष्यतीति मत्वा धर्मद्वयमर्जुनाय उपदिदेशेति सम्बन्धः अथ तथापि सुगतोपदिष्टधर्म वद्यमपि भगवदुपदिष्टो धर्मो न प्रामाणिकोपादेयतामुपगच्छेदित्याशङ्क्य वेदोक्त त्वान्नास्य तत्तुल्यत्वमित्युक्तमित्यभिप्रेत्य शिष्टपरिगृहीतत्वाच्च मैवमित्याह तं धर्ममिति अधर्मे धर्मबुद्धिर्वेदव्यासस्य जातेत्याशङ्क्याह सर्वज्ञ इति कृष्णद्वैपायनं विद्धि व्यासं ना रायणं प्रभुमिति स्मृतेः सज्जनोपकारक भगवदवतारत्वाच्च व्यासस्य नान्यथा बुद्धिरि त्याह भगवानिति गीताशास्त्रस्याप्तप्रणीतत्वमपाकृत्य व्याख्येयत्वमुपपादितमुपसंह रति तदिदमिति पौरुषेयस्य वचसो मूलप्रमाणाभावेनाप्रामाण्यमिति मत्वा विशिन ष्टि समस्तेति शास्त्रान्तरैरेव तदर्थप्रतिपत्तिसम्भवे किमिति व्याख्यानमित्याशङ्क्याह दुर्विज्ञेयार्थमिति पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना आक्षेपस्य समाधानव्या

### भाषा अनुवाद

सकल वेदोंके अर्थका सारसंग्रहस्वरूप इस गीताका तात्पर्यार्थ लोगोंको अति दुर्ज्ञेय कहे जानने योग नहीं है इसोसे बहुतोंने यद्यपि इस गीताका अर्थ प्रकाश किया तौभी साधारण लोग उसका उलटा सुलटा भाव अर्थ ग्रहण कर लेते हैं यह जानि यथावत् ठीक ठीक अर्थ निर्धारण करनेके लिये हम संक्षेपसे विवरण करनेमें प्रवृत्त भये हैं ॥

## शाङ्करभाष्यं उपक्रमणिका

तस्यास्यगीताशास्त्रस्यसंक्षेपतःप्रयोजनंपरंनिःश्रेयसंसहेतुकस्यसंसारस्यात्यन्तोपरमलक्षणंतच्चसर्व्वकर्मसन्न्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवतितथेम मेवगीतार्थधर्ममुद्दिश्यभगवतैवोक्तं सहिधर्मस्सुपर्याप्तोब्रह्मणः पदवेदनंइत्यनु

## आनन्दगिरिकृतटीका ।

ख्यानंपञ्चलक्षणमित्यादिक्रमेणास्यशास्त्रस्यपूर्व्वाचार्य्यैर्व्याख्यातत्वात्किमर्थमिदमारभ्यते गतार्थत्वात्तत्राह तदर्थेति गीताशास्त्रार्थस्यप्रकटीकरणार्थंपदविभागस्तदर्थोक्तिःसमासद्वारावाक्यार्थनिर्देशस्तत्रापेक्षितोन्यायश्चाक्षेपसमाधानलक्षणोटत्तिकारैर्दर्शितस्तत्रापितथाविधमेव शास्त्रंशास्त्रपरिचयशून्यैःसमुच्चयासमुच्चयवादिभिर्विरुद्धार्थत्वेन अनेकार्थत्वेनचगृहीतमालक्ष्यतद्बुद्धिमनुरोद्धुमिदमारब्धमित्यर्थः येषांप्राचीनेव्याख्यानेबुद्धिरप्रविष्टातेषांसम्प्रतितने एतस्मिन्नसौप्रवेक्ष्यतीति कुतो नियमस्तत्राह विवेकतइति पूर्वव्याख्यानेतत्तदर्थनिर्द्धारणार्थोपन्यासःमङ्कीर्णवद्भातीतिनतत्रकेषाञ्चिन्मनीषासमुन्मिषति प्रकृतेत्वसम्प्रकीर्णतयातत्पदार्थनिर्णयोपयोगिन्यायोविविच्यते नेतावमन्दमध्यमयोरपिबुद्धिरवतरतीत्यर्थः किञ्चानपेक्षिताधिकग्रन्थसद्भावान्नप्राचीनेव्याख्यानेश्रोतृणांप्रवृत्तिरत्रत्वपेक्षितालपग्रन्थेविवरणे प्रायशःसर्वेषांप्रवृत्तिःस्यादितिमत्वाह संक्षेपतइति ।

ननुअनाप्तप्रणीतत्वाद्यभावेपिनेदंशास्त्रव्याख्येयंविषयाद्यनुबन्धस्यानभिहितत्वेन शास्त्रत्वाभावादित्याशङ्क्यसर्वव्यापाराणांप्रयोजनार्थत्वादादौप्रयोजनमाह तस्येतिप्रसाधितप्रामाण्यस्यव्याख्येयत्वेनमनसिसन्निहितस्यगीताशास्त्रस्यसंक्षेपतःसंग्रह सम्पिण्डितत्वमेकवाक्यत्वंतेनेदंपरमंफलंयन्निश्चितंश्रेयोनिःश्रेयसंकैवल्यंअवान्तरफलन्तुतत्रतत्रावान्तरवाक्यभेदेनमनोनिग्रहादिविवक्ष्यतेनिःश्रयसञ्चद्विविधंनिरतिशयसुखाविर्भावोनिःशेषानर्थोच्छित्तिश्चतत्राद्यमुदाहरतिपरमिति द्वितीयंदर्शयतिसहेतुकस्येति संसारोपरमस्यात्यन्तिकत्वंप्रतियोगिनःसंसारस्यपुनरुत्पत्त्ययोग्यत्वंतच्चसापमूर्च्छादिव्यवच्छेदार्थविशेषणंतदेवसाधयितुंसहेतुकस्येत्युक्तं उक्तंफलंसमुच्चितादेकाकिनोवाकर्म्मणः स्यादितितस्यैवशास्त्रप्रतिपाद्यतेत्याशङ्क्याभिधेयमभिधित्समानःसमाधत्तेतच्चेति आत्मज्ञाननिष्ठाशेषत्वेनकर्मनिष्ठाप्युच्यतेप्राधान्येन

## भाषा अनुवाद

दुखरूपईससंसारसेउपरतिरूपजोनिर्वाणकहेमुक्तिसोईगीताशास्त्रकाप्रयोजनहै परन्तुसर्वकर्मपरित्यागमूलकज्ञाननिष्ठारूपनिवृत्तिधर्मकेअनुष्ठानकरनेसे वहप्रयोजनसिद्धहोताहै अनुगीताआदिग्रन्थोंमे भगवानआपयहीसकलअभिप्राय

शाङ्करभाष्यमुपक्रमणिका ।

तासुकिञ्चान्यदपितत्रैवोक्तं नैवधर्म्मीनचाधर्म्मीनचैवहिशुभाशुभी यःस्याट्टेका
सनेलीनस्तुष्णींकिञ्चिदचिन्तयन् ज्ञानंसन्न्यासलक्षणमितिच इहापिचान्ते
उक्तमर्जुनायसर्व्वधर्मान्परित्यज्यमामेकंशरणंव्रजेति अभ्युदयार्थोऽपिय:प्रवृत्ति
लक्षणोधर्म्मोवर्णाश्रमांश्चोद्दिश्यविहितःसचदेवादिस्थानप्राप्तिहेतुरपिसन्नीश्वरार्प
णबुद्ध्यानुष्ठीयमानसत्त्वशुद्धयेभवतिफलाभिसन्धिवर्जितः शुद्धसत्त्वस्यचज्ञाननिष्ठा
योग्यताप्राप्तिद्वारेणज्ञानोत्पत्तिहेतुत्वेनचनिःश्रेयसहेतुत्वमपिप्रतिपद्यते तथाचेम

आनन्दगिरिकृतटीका

त्वात्मज्ञाननिष्ठैवात्रप्रतिपाद्यतेइत्यर्थः ननुशेषिणीनिष्ठाकुतोनभवतिसन्न्यासा
त्कर्म्मनिष्ठायाःशेषत्वात्तत्राह सर्व्वेति सन्न्यासद्वारेणासकृदनुष्ठितश्रवणादेः
शेषिणीनिष्ठासिद्धप्रतिशेषत्वञ्चकर्म्मणस्तत्रपरम्परायत्वमित्यर्थः ननुयज्ञदानतपः
कर्म्मनत्याज्यंकार्य्यमेवतदितिवाक्यशेषात्समुच्चितमात्मज्ञानमत्रप्रतिपाद्यतेनेत्याहत
थेति सर्व्वकर्म्मसन्न्यासपूर्व्वकमात्मज्ञाननिष्ठारूपंधर्म्मंनिःश्रेयससाधनंप्रयोजनंप्रा
गुक्तंपराम्शतिइममेवेति वक्तृभेदादभिप्रायभेदाशङ्कांवारयतिभगवतैवेति उ
क्तमनुगीतास्थितिसम्बन्धःब्राह्मणःपदंपूर्व्वोक्तंनिःश्रेयसंतस्यवेदनंलाभस्तत्रविशि-
ष्टोज्ञाननिष्ठारूपोधर्म्मःसमर्थोभवतीत्यर्थः यज्ञदानादिवाक्यस्यतुतत्वाख्यानाव
सरेतात्पर्य्यंवक्ष्यते कर्म्मत्यागस्यभगवतोभिप्रेतत्वेवाक्यान्तरमनुगीतागतमेवोदाह
रतितत्रैवेति धर्माधर्मापूर्व्वासंसर्गित्वेहेतुमाहनैवेति क्रियाद्वयसम्बन्धाभावात्त
न्निर्वृत्तापूर्व्वाश्यासम्बन्धेप्राप्तमर्थमाह यःस्यादिति वागादिवाह्यकरणव्यापार
विरहितत्वंतूष्णीमित्युच्यतेकिञ्चिदचिन्तयन्नित्यन्तःकरणव्यापाराभावोभिप्रेतः
द्विविधकरणव्यापारविरहितःसन्प्रागुक्तोयोधिकारीकेवलमेकस्मिन्नद्वितीयेब्रह्म
ण्यासनमवस्थानंतत्रलीनस्तस्मिन्नेवसमाप्तिभागीस्यात्तस्यासम्प्रज्ञातसमाधिनिष्ठस्य
सर्व्वकर्मत्यागहेतुकंज्ञानंमुक्तिहेतुर्भवतीत्यर्थः नकेवलमनुगीतास्वेवयथोक्तंज्ञानमु

भाषा अनुवाद

प्रमाणरूपप्रगटदेखायाहै औरजोवर्णआश्रमकेविषयमेंजगतकास्थितिसाधनकहे
सहायककर्मनिष्ठारूपप्रवृत्तिलक्षणधर्मइसमेकहींकहींकहाहै वहयद्यपिदेवादि
लोकप्राप्तिकाहेतुहै परतौभीईश्वरार्पणबुद्धिसेकियाजाचित्तशुद्धिकेसाथज्ञान
निष्ठाकीयोग्यताकेद्वारानिर्वाणमुक्तिकासाधनहोताहै यहबातइसीग्रन्थमेंपीछूसे
कहीजायगी ।

## शाङ्करभाष्यसुपक्रमणिका।

मर्थमभिसन्धाय वक्ष्यति ब्रह्मण्याधाय कर्माणि यतचित्ता जितेन्द्रियाः योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये इति. इमं द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वञ्च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतोऽभिव्यञ्जयन् विशिष्टप्रयोजनसम्बन्धाभिधेयवद्गीताशास्त्रं यतस्तदर्थविज्ञानेन समस्तपुरुषार्थसिद्धिरतस्तद्विवरणे यत्नः क्रियते मया अत्र च धृतराष्ट्र उवाच धर्मक्षेत्र इत्यादि।

## आनन्दगिरिकृतटीका

क्तं किन्तु प्रकृतेऽपि शास्त्रसमाप्त्यवसरे दर्शितमित्याह इहापीति नन्वत्र निवृत्तिलक्षणधर्मात्मकं ससन्न्यासमात्मज्ञानमेव न प्रतिपाद्यते कुरु कर्मैव तस्मात्त्वं इत्यादौ प्रवृत्तिलक्षणस्यापि धर्मस्य वक्ष्यमाणत्वाद्धर्मयोश्च प्रकृतत्वाविशेषात्तत्राह अभ्युदयार्थोऽपीति ननु वर्णिभिराश्रमिभिश्चानुष्ठेयत्वेनान्यत्र विहितस्यापि तस्य न युक्तं मोक्षसाधनत्वाभिकारे विधानं देवादिस्थानप्राप्तिहेतुत्वेन मोक्षप्रतिपक्षत्वात् सत्यं तथापि फलाभिलाषमन्तरेणेश्वरार्पणधियाकृतस्य बुद्धिशुद्धिहेतुत्वात्तस्येह वचनमित्याह स च देवादीति फलाभिसन्धिद्वाराकृतः सन्निति शेषः प्रवृत्तिलक्षणधर्मस्योक्तरीत्या चित्तशुद्धिहेतुत्वेऽपि मोक्षहेतुत्वेन कृतो मोक्षाधिकारे निर्देशः स्यादित्याशङ्क्याह शुद्धेति प्रतिपाद्यते प्रागुक्तो धर्म इति शेषः यदुक्तं फलाभिसन्धिवर्जितमीश्वरार्पणबुद्ध्यानुष्ठितं कर्म बुद्धिशुद्धये भवतीति तत्र वाक्यशेषमनुकूलयति तथा चेति।

शास्त्रस्य प्रयोजनं ससाधनमुक्तमानूद्य विषयं दर्शयति इममिति दर्शितेन फलेन शास्त्रस्य निष्ठाद्वयद्वारा साध्यसाधनभावः सम्बन्धो विषयेण विषयविषयित्वमिति विवक्षित्वाह विशेषत इति एवमनुबन्धत्रयविशिष्टं शास्त्रं व्याख्यानार्हमित्युपसंहरति विशिष्टेति सिद्धे व्याख्यानयोग्यत्वे व्याख्येयत्वे फलितमाह यत इति एवं गीताशास्त्रस्य साध्यसाधनभूतनिष्ठाद्वयविषयस्य परापराभिधेयप्रयोजनवतो व्याख्येयत्वं प्रतिपाद्य व्याख्यातुकामः शास्त्रं तदेकदेशस्य प्रथमाध्यायस्य द्वितीयाध्यायैकदेशसहितस्य तात्पर्य्यमाह अत्र चेति गीताशास्त्रे प्रथमाध्याये प्रथमश्लोके कथासम्बन्धप्रदर्शनपरे स्थिते सतीति यावत्।

## भाषा अनुवाद

इसीभांति निर्वाणमुक्तिका कारणरूप दो प्रकारका धर्म औ वासुदेव जो परब्रह्म परमारथ तत्व सोई विशेषरूपसे प्रगट करते विशेष प्रयोजन अभिधेय औ सम्बन्ध विशिष्ट इस गीताशास्त्र के अर्थज्ञानसे सब पुरुषार्थ सिद्ध होते हैं इसलिये इसका तात्पर्य्य कहनेको मैं यत्न करता हूं इस विषय मे धृतराष्ट्र ने कहा कि हे संजय इत्यादि।

## स्वामिकृतटीका उपक्रमणिका

शेषाशेषसुखव्याख्याचातुर्य्यन्त्वेकवक्त्रतः दधानमद्भुतंवन्देपरमानन्दमाधवम्॥१॥ श्रीमाधवंप्रणम्योमाधवंविश्वेशमादरात् तद्भक्तियन्त्रितःकुर्व्वेगीताव्याख्यांसुबोधिनीम्॥ २॥ भाष्यकारमतंसम्यक्तद्व्याख्यातुर्गिरस्तथा यथामतिसमालोक्य गीताव्याख्यांसमारभे ॥ ३ ॥ गीताव्याख्यायतेयस्याःपाठमात्रप्रयत्नतः सेयंसुबोधिनीटीकासदाध्येयामनीषिभिः ॥ ४ ॥

इहखलुसकललोकहितावतारःपरमकारुणिकोभगवान् देवकीनन्दनस्तत्त्वज्ञानविजृम्भितशोकमोहभ्रंशितविवेकतयानिजधर्मपरित्यागपरधर्म्माभिसन्धिनमर्जुनंधर्म्मज्ञानरहस्योपदेशप्लवेनतस्माच्छोकमोहसागरादुद्दधार तमेवभगवदुपदिष्टमर्थंकृष्णद्वैपायनःसप्तभिःश्लोकशतैरुपनिबबन्ध तत्रचप्रायशःश्रीकृष्णमुखादिनिःसृतानेवश्लोकानलिखत्कांश्चित् तत्सङ्गतयेस्वयञ्चव्यरचयत्यथोक्तंगीतामाहात्म्ये गीतासुगीताकर्त्तव्याकिमन्यैःशास्त्रविस्तरैः यास्वयंपद्मनाभस्यमुखपद्माद्विनिःसृतेत्यादि अत्रतावद्धर्मक्षेत्रे इत्यादिनाविषीदन्निदमब्रवीदित्यन्तेनग्रन्थेन श्रीकृष्णार्जुनसंवादप्रस्तावायकथानिरूप्यते।

श्रीमद्भगवद्गीता।

प्रथम अध्यायः।

धृतराष्ट्र उवाच।

धर्मक्षेत्रेकुरुक्षेत्रेसमवेतायुयुत्सवः मामकाःपाण्डवाश्चैवकिमकुर्व्वतसञ्जय ॥१॥

आनन्दगिरिकृतटीका।

तत्रैवमक्षरयोजनाधृतराष्ट्रउवाचेति धृतराष्ट्रोहिप्रज्ञाचक्षुर्बाह्यचक्षुरभा द्वाह्यमर्थंप्रत्यक्षयितुमनीशःसन्नभ्यासवर्त्तिनं सञ्जयमात्मनोहितोपदेष्टारंपृच्छति धर्मक्षेत्रइति धर्मस्यतद्धेत्रक्षेत्रेसंभिष्टद्विकारणंयदुच्यतेकुरुक्षेत्रमिति तत्रसम वेताःसङ्गतायुयुत्सवोयोद्धुकामास्तेचकेचिन्मदीयाः दुर्य्योधनप्रभृतयःपाण्डवाश्चा परेयुधिष्ठिरादयस्तेचसर्व्वेयुद्धभूमौसङ्गताःभूत्वाकिंअकुर्व्वत कृतवन्तः ॥१॥

स्वामिकृतटीका।

धृतराष्ट्रउवाच धर्मक्षेत्रइत्यादि भोःसञ्जयधर्मभूमौकुरुक्षेत्रेधर्मक्षेत्रइति कुरुक्षेत्रविशेषणंएषामादिपुरुषःकश्चित्कुरुनामाबभूवतस्यकुरोर्धर्मस्थानेमामका मत्पुत्राःपाण्डुपुत्राश्चयुयुत्सवोयोद्धुमिच्छन्तः समवेतामिलिताःसन्तःकिमकुर्व्वत किंकृतवन्तः ॥१॥

भाषा अनुवाद।

नेत्रहीनधृतराष्ट्रयुद्धमेसन्देहकरतेभयेप्रशंसावाक्यसेधर्मक्षेत्रकुरुक्षेत्रकावि शेषणदेकरआत्महितकारीसञ्जयसेपूछाकि हेसञ्जयधर्मक्षेत्रधर्मभूमिजोकुरुक्षेत्र तहांमेरेपुत्रदुर्य्योधनआदिक औरपाण्डुकेपुत्रयुधिष्ठिरादिसबयुद्धकीइच्छाकरि इकट्ठेहोक्याकरतेहैं इससेयहआयाकिधृतराष्ट्रकेपूर्व्वपुरुषोंमेकोईकुरुनामराजा येजिनकायहकुरुक्षेत्रधर्मस्थानहै यहांधर्मबुद्धिहोयसंग्रामछोड़मेलकरकेराज्य काविभागतोनकरदेंयगेयहभीतरीअभिप्रायहै औररणभूमिमेसैन्यदलदेखिसश ङ्कितकौनहै क्याधीरवीरभीष्मपितामहकेसाथमेरीप्रबलसेनाकोदेखिशत्रुवोंको भयभईयाहिंमाकीभयदोनोमानिसंग्रामसेनिवृत्तहोजायंगेयहधृतराष्ट्रपूछतेहैं॥१॥

सञ्जयउवाच।

दृष्ट्वातुपाण्डवानीकंव्यूढंदुर्य्योधनस्तदा आचार्य्यमुपसङ्गम्यराजावचनमब्रवीत् २
पश्यतांपाण्डुपुत्त्राणामाचार्यमहतींचमूं व्यूढांद्रुमदपुत्त्रेणतवशिष्येणधीमता ३

आनन्दगिरिकृतटीका।

किमस्मदीयंप्रबलंबलंप्रतिलभ्यधीरपुरुषैर्भीष्मादिभिरधिष्ठितंपरेषांभयमाविरभूत्यद्वापरबलस्यहिंसानिमित्ताधर्मभयमासीद्येनएतेयुद्धादुपरमेरन्निति एवं पुत्रपरवशस्यपुत्त्रस्नेहाभिनिविष्टस्यधृतराष्ट्रस्यप्रश्नेसञ्जयस्यप्रतिवचनं दृष्ट्वेत्यादि पाण्डवानांभयप्रसङ्गोनास्तीत्येतत्तुशब्देनद्योत्यतेप्रत्युतदुर्य्योधनस्यैवराज्ञोभयंप्रभूतंप्रादुर्वभूवपाण्डवानां पाण्डुसुतानांयुधिष्ठिरादीनामनीकंसैन्यंधृष्टद्युम्नादिभिरतिधृष्टैर्व्यूह्याधिष्ठितंदृष्ट्वाप्रत्यक्षेणप्रतीत्यवस्तहृदयोदुर्य्योधनोराजा तदातस्यांसंग्रामोद्योगावस्थायामाचार्य्यंद्रोणनामानमात्मःशिक्षितारंरक्षितारञ्चस्वाभयन्नुपसंगम्य तदीयंसमीपं विनयेनप्राप्यभयोद्विग्नहृदयत्वेपि तेजस्वित्वाद्ववचनमर्थसहितं वाक्यमुक्तवानित्यर्थः॥२॥तदेववचनमुदाहरतिपश्येति एतामस्मदभ्यासेमहापुरुषानपिभवत्प्रमुखानपरिगणय्यभयलेशशून्यामवस्थितांचमूमिमांसेनां पाण्डपुत्त्रैर्युधिष्ठिरादिभिरानीतांमहतीमनेकाक्षौहिणीसहितामक्षोभ्यांपश्येताचार्य्यदुर्य्योधनोनियुक्तनियोगद्वारावतस्मिन्परेषामवज्ञांविज्ञापयन्क्रोधातिरेकमुत्पादयितुमुत्स

स्वामिकृतटीका

सञ्जयउवाचदृष्ट्वेत्यादि पाण्डवानामनीकंसैन्यंव्यूढंव्यूहरचनयाधिष्ठितंदृष्ट्वा द्रोणाचार्य्यसमीपंगत्वाराजादुर्योधनोवक्ष्यमाणंवचनमुवाच ॥२॥ तदेववचनमाह पश्यैतामित्यादिनवभिःश्लोकैःपश्येत्यादि हेआचार्य्यपाण्डवानांमहतींविततांचमूं सेनांपश्यतवशिष्येणद्रुमदपुत्रेणधृष्टद्युम्नेनव्यूढांव्यूहरचनया धिष्ठिताम् ॥३॥

भाषा अनुवाद।

तवसञ्जयनेकहाकिहेराजापाण्डुपुत्रयुधिष्ठिरादिकासैन्यदलव्यूहाकाररचनारचितयुद्धकेलियेतयारखड़ादेखिराजादुर्य्योधनद्रोणाचार्यकेनिकटजायकरवक्ष्यमानयहवातकही इससेयहजनायाकिभयऔरशङ्कातुमारेहीपुत्रकोभईहै ॥२॥
सोईदुर्योधनकीकहीसववातेंसञ्जयधृतराष्ट्रकेप्रतिनवश्लोकसेकहतेहैं किहे आचार्यदेखियेतोयहयुधिष्ठिरकासैन्यदलजिसकोआपकाशिष्यद्रुपदकापुत्रबुद्धिनिधानधृष्टद्युम्ननेरचाहै सोमहात्माआपकेसामनेवडेविस्तारमेंयुद्धकरनेकोतयारनिडरखड़ाहै ॥३॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि युयुधानो विराटश्च द्रुपदश्च महारथः ४
धृष्टकेतुश्चेकितानः काशीराजश्च वीर्यवान् पुरुजित्कुन्तिभोजश्च शैव्यश्च नरपुङ्गवः ५

आनन्दगिरिकृतटीका।

इते परकीयसेनायावैशिष्ट्याभिधानद्वारापरामरपक्षेपि त्वदीयमेवबलमिति सूचयन्नाचार्य्यस्यतन्निरसनंसुकरमिति मन्वानःसन्नाह व्यूढामिति राज्ञोद्रुपदस्य पुत्रस्तवशिष्योधृष्टद्युम्नोलोकेख्यातिमुपगतः स्वयञ्चशस्त्रास्त्रविद्यासम्पन्नोमहाम हिमःतेनव्यूहमापाद्याधिष्ठितामिमाञ्चमूङ्किमितिनप्रतिपद्यसेकिमितिवाक्यस्यसी त्यर्थः ॥३॥

अन्येपिप्रतिपक्षेपराक्रमभाजोबहवःसन्तीत्यनुप्रेक्षणीयत्वंपरपक्षस्यविवक्षय न्नाह अत्रेति तस्यांहिप्रतिपक्षभूतायांसेनायांशूराःस्वयमभीरवःशस्त्रास्त्रकुशला भीमार्जुनाभ्यांसर्व्वसम्प्रतिपन्नवीर्य्याभ्यांतुल्याःयुद्धभूमावुपलभन्ते तेषांयुद्धशौण्डीरं विशदीकर्तुं विशिनष्टिमहेष्वासाइतिइषुरस्यतेऽस्मिन्नितिव्युत्पत्त्याधनुस्तदुच्यतेत च्चमहदन्यैरप्रधृष्यंतद्विद्यतेयेषांतेराजानस्तथाविवक्षन्ते यानेवपरसेनामध्यमध्या सीनान्परपक्षानुरागिणोराज्ञोविज्ञापयति युयुधानइत्यादिनासौभद्रोद्रौपदेया श्चेत्यन्तेन ॥४॥ किञ्चधृष्टकेतुरिति स्पष्टम् ॥५॥

स्वामिकृतटीका

अत्रेत्यादि अत्रास्यांचम्बाइषवोबाणाअस्यन्तेक्षिप्यन्तेएभिरितिइष्वासाधनूंषि महान्तइष्वासायेषांतेमहेष्वासाःभीमार्जुनौ तावदत्रातिप्रसिद्धौयोद्धारौताभ्यांस माःशूराःसन्ति तानेवनामभिर्निर्दिशतियुयुधानइतियुयुधानःसात्यकिः ॥४॥
किञ्चधृष्टकेतुरितिचेकितानोनामएकोराजानरपुङ्गवःनरश्रेष्ठःशैव्यः ॥५॥

भाषा अनुवाद।

औरइससेनाकेवीचयुद्धकरनेमेंभीमअर्ज्जुनकेसमानधनुषधारीमहाबलीऔर औरकितनेयोद्धाहैं तिनकेनामदुर्योधनद्रोणाचार्यसेकहतेहैं कियुयुधानजोसा त्यकीऔरराजाबिराटमहारथीद्रुपदराजा ॥४॥ औरधृष्टकेतुचेकितानराजाऔ बलवानकाशीराजऔपुरुजितराजाकुन्तिभोजऔशैव्ययेसबराजानरश्रेष्ठऔबल वान्हैं ॥५॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ६
अस्माकन्तु विशिष्टा ये तान्निबोध द्विजोत्तम नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ७

आनन्दगिरिकृतटीका।

तेषां सर्वेषामपि महाबलपराक्रमभाक्त्वादनुपेक्ष्यत्वं पुनर्विवक्षति सर्व एवेति॥६॥ यद्येवं परकीयं बलमतिप्रभूतं प्रतीत्यातिभीतवदभिदधासि हन्त सन्धिरेव परैरिष्यतामलं विग्रहाग्रहेणेत्याचार्य्याभिप्रायमाशङ्क्य ब्रवीति अस्माकमिति तुशब्देनान्तरुत्पन्नमपि स्वकीयं भयं तिरोदधानो धृष्टतामात्मनो द्योतयति ये खल्वस्मत्पक्षेऽव्यवस्थिताः सर्वेभ्यः समुत्कर्षं जुषस्तान्मयोच्यमानान्निबोध निश्चयेन मद्वचनादवधारयेत्यर्थः यद्यपि त्वमेव तैर्वर्णिकेषु तैर्विद्यदष्टेषु प्रधानत्वात् प्रतिपत्तुं प्रभवसि तथापि मदीयसैन्यस्य ये मुख्यास्तानहं ते तुभ्यं संज्ञार्थमसंख्येषु तेषु मध्ये कतिचिन्नामभिर्गृहीत्वा परिशिष्टानुपलक्षयितुं विज्ञापनं करोमि न लक्ष्यातं किञ्चित्तव ज्ञापयामीति मत्वाह द्विजोत्तमेति ॥ ७॥

स्वामिकृतटीका।

युधामन्युरिति विक्रान्तो युधामन्युर्नामैकः सौभद्रोऽभिमन्युः द्रौपदेया द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यो जाताः पुत्राः प्रतिविन्ध्यादयः पञ्च महारथादीनां लक्षणं एको दशसहस्राणि योधयेद्यस्तु धन्विनां शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः अमितान्योधयेद्यस्तु संप्रोक्तोतिरथस्तु सः रथी चैकेन यो योद्धा तन्न्यूनोऽर्द्धरथस्तु सः ॥६॥ अस्माकमिति निबोध बुद्धस्व नायका नेतारः संज्ञार्थं सम्यक् ज्ञानार्थमित्यर्थः॥७॥

भाषा अनुवाद।

पराक्रमी युधामन्यु नाम राजा और बलवान उत्तमौजा नाम एक राजा और सुभद्राके पुत्र अभिमन्यु और द्रौपदीके गर्भमें युधिष्ठिरादि पांचसे उत्पन्न प्रतिविन्ध्यादि पांच भाई एसब महारथी वीर हैं महारथीका लक्षण जो अस्त्रशस्त्रमें निपुण होदश हजार धनुर्धारी योद्धोंके साथ अकेला युद्ध करसके उसीको महारथी कहते हैं और असंख्य योद्धोंके साथ युद्ध करनेमें जो समर्थ उसे अतिरथी शास्त्रमें कहते और एक योद्धाके साथ युद्ध करै सो रथी है उससे भी कम अर्द्धरथी कहावै है ॥६॥ जो प्रबल शत्रुसेना दलदेखि डरैसे बोलते हो तो मेलक्यों नकर लो लडाईसे क्या फल है ऐसा द्रोणाचार्यने कहें इस शङ्कासे दुर्योधन कहता है कि मेरे पक्षमें जो नायक कके सेनापति हैं वे सब आपसे छिपे नहीं हैं तौ भी उनके नाम आपको स्मरन करानेके लिये मैं कहता हूं ॥७॥

भवान्भीष्मश्चकर्णश्चकृपश्चसमितिञ्जयः अश्वत्थमाविकर्णश्चसौमदत्तिर्जयद्रथः ८
अन्येचवहवःशूरामदर्थेत्यक्तजीविताः नानाशस्त्रप्रहरणाःसर्वेयुद्धविशारदाः ९
अपर्याप्तंतदस्माकंवलंभीष्माभिरक्षितं पर्याप्तंत्विदमेतेषांवलंभीमाभिरक्षितं १०

आनन्दगिरिकृतटीका।

तानेवस्वसेनानिविष्टान्पुरुषधौरेयानात्मीयभयपरिहारार्थंपरिगणयतिभवा नित्यादिना ॥८॥ द्रोणादिपरिगणनस्यपरिशिष्टपरिसंख्यार्थत्वंव्यावर्त्तयति अन्ये चेति सर्वेपिभवन्तमारभ्यमदीयष्टतनायांप्रविष्टाःस्वजीवितादपिमह्यंस्पृहयन्तीत्याह मदर्थइति यत्तुतेषांशूरत्वमुक्तंतदिदानींविशदयति नानेतिनानाविधान्यनेकप्रका राणिशस्त्राण्यायुधानिप्रहरणानिप्रहरणसाधनानियेषांतेतथा वज्जविधायुधसम्प त्तावपितत्प्रयोगेनैपुण्याभावेतद्वैफल्यमितिचेन्नेत्याह सर्वइति ॥९॥

स्वामिकृतटीका।

तानेवाह भवानितिद्वाभ्यांभवान्द्रोणाचार्यःसमितिंसंग्रामंजयतीतितथासौमद त्तिःसोमदत्तस्यपुत्रोभूरिश्रवाः ॥८॥ मदर्थेमत्प्रयोजनार्थंजीवितंत्यक्तुमध्यवसिताइ त्यर्थःनानाअनेकानिशस्त्राणिप्रहरणसाधनानियेषांतेयुद्धेविशारदानिपुणाः ॥९॥

भाषा अनुवाद।

सोईयेदोश्लोकसेकहतेहैं किसंग्रामविजयोआपऔभीष्मपितामहकर्णकृपा चार्यअश्वत्थामाविकर्णऔसोमदत्तकापुत्रभूरिश्रवाऔजयद्रथयेसववीरअपनीओ रहैं ॥८॥ अवकहतेहैं किऔरऔरभीधोरवीरशूरजोमेरेअर्थप्राणपरित्याग करनेकोनिश्चयकरिराखेहैं औरनानाप्रकारकेअस्त्रशस्त्रचलानेवालेयुद्धविद्यामे विशारदकहेअतिनिपुणवेसबलोगभीइधरहैं ॥९॥ इसकेअनन्तरदुर्योधननेजो कहासोईधृतराष्ट्रसेसञ्जयकहतेहैं किऐसेऐसेशूरवीरोंसेभरीपूरीऔरभीष्मपि तामहसेरक्षितभीहमारीसेनाअपर्य्याप्तकहेपाण्डवकीसेनाकेसाथयुद्धकरनेमेअस मर्थसीजानीजातीहै औरविपक्षपाण्डवोंकाअपूर्णदलआलसीभीमसेनसेरक्षितप र्याप्तअर्थात्समरमेसमर्थसादेखपडैहै दूसराअर्थदुर्योधनअपनेहृदयकोनिडरता प्रकाशकनतेऊयेद्रोणाचार्यसेकहतेहैं किहमाराग्यारहअक्षौहिणीसैन्यदलम हात्माबुद्धिमानपितामहजिसकोहरतरहसेरक्षाकरतेहैं निसन्देहशत्रुवोंकापरा भवकरनेकोसमर्थहै औरइनविचारोंकीएकतोसातअक्षौहिणीमात्रथोड़ीसेना दूसरेचपलबुद्धिमहागर्वारभीमसेनसेपरिपालितहोकहोहमारासामनाक्याकरे गीपराभवकरनातोवड़ीदूरहै ॥१०॥

अयनेषुचसर्व्वेषुयथाभागमवस्थिताः भीष्ममेवाभिरक्षन्तुभवन्तःसर्व्वएवहि॥११॥

आनन्दगिरिकृतटीका।

राजापुनरपिस्वकीयभयाभावेहेत्वन्तरमाचार्य्यंप्रत्यावेदयतिअपर्य्याप्तमिति अस्माकंखल्विदमेकादशसंख्याकाक्षौहिणीपरिगणितमपरिमितंवलंभीष्मेणचप्रथितमहामहिम्नासूक्ष्मवुद्धिनासर्व्वतोरक्षितंपर्य्याप्तंमरेषांपुनस्तदल्पसप्तसङ्ख्यकाक्षौहिणीपरिमितवलंभीमेनचचपलवुद्धिनाकुशलताविकलेनपरिपालितमपर्य्याप्तमस्माकमभिभवितुमसमर्थमित्यर्थःअथवातदिदमस्माकंवलंभीष्माधिष्ठितमपर्य्याप्तमपरिमितमधृष्यमक्षोभ्यमेतेषांपाण्डवानांवलंभीमेनाभिरक्षितंपर्य्याप्तंपरिमितंसोढुं शक्यमित्यर्थः अथवातत्पाण्डवानांवलमपर्य्याप्तंनालमस्माकमसह्यंभीष्माभिरक्षितं भीष्मोभिरक्षितोऽस्मैपरवलनिवृत्त्यर्थमितितदेवतथोच्यतेइदंपुनरस्मदीयंवलमेतेषांपाण्डवानांपर्य्याप्तंपरिभवेसमर्थंभीमाभिरक्षितंभीमोदुर्व्वलहृदयोयस्मादस्मैपरवलनिवृत्त्यर्थमभिरक्षितःतस्मादस्माकंनकिञ्चिदपिभयकारणमस्तीत्यर्थः॥१०॥

स्वकीयवलस्यभीष्माधिष्ठितत्वेनवलिष्ठत्वमुक्त्वाभीष्मशेषत्वेनतदनुगुणत्वंद्रोणादीनांप्रार्थयतेअयनेष्विति कर्त्तव्यविशेषद्योतीचशब्दःसमरसमारम्भसमयेयोद्धानांयथाप्रधानंयुद्धभूमौ पूर्व्वापरादिदिग्विभागेनावस्थितिस्थानानिनियम्यन्तेनान्यतायनान्युच्यन्तेसेनापतिश्च सर्व्वसैन्यमधिष्ठायमध्येतिष्ठतितेषुसर्व्वेषुप्रकॢप्तंप्रविभागमप्रत्याख्यायभवानश्वत्थामाकर्णश्चेत्येवमादयोभवन्तःसर्व्वेवस्थिताःसन्तोभीष्म

स्वामिकृतटीका।

ततःकिमत आह अपर्य्याप्तमित्यादि तत्तथाभूतैर्वीरैर्युक्तमपिभीष्मेणाभिरक्षितमपिअस्माकंवलंसैन्यंअपर्य्याप्तंतैःसहयोद्धुमसमर्थंभातिइदन्त्वेतेषांपाण्डवानांवलंभीमाभिरक्षितंसैन्यंपर्य्याप्तंसमर्थंभाति॥१०॥ तस्माद्भवद्भिरेवंवर्त्तितव्यमित्याह अयनेष्विति अयनेषुव्यूहप्रवेशमार्गेषुयथाभागंविभक्तांस्वांस्वांरणभूमिंअपरित्यज्यावस्थिताःसन्तोभीष्ममेवाभिरक्षन्तुयथान्यैर्युद्धमानःपृष्ठतःकैश्चिन्नहन्येत्तथारक्षन्तुभीष्मवलेनास्माकंजीवनमितिभावः॥११॥

भाषाअनुवाद।

इससेअवतुमसवलोगोंकोयहीकरनाउचितहै किशत्रुकेसैन्यदलकेभीतरप्रवेशकरनेकोक्रमसेअलगअलगहोअपनीअपनीरनभूमिपरखड़ेहोकरभीष्मजीकीसवरक्षाकरो। जिसमेंऔरकोईशत्रुकीओरकायोधापीछेसेइनकोनमारनेसकेइसकीअभिप्राययहहै किभीष्महीकेवलसेहमाराजीवनहै तोउनकीरक्षाकरनीअवश्यहै

तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् १२
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् १३

आनन्दगिरिकृतटीका ।

मेव सेनापतिं सर्वतो रक्षन्तु तस्य हि रक्षणे सर्व्वमस्मदीयं बलं रक्षितं स्यात् परबलनि वृत्त्यर्थत्वेन तस्याश्माभी रक्षितत्वादित्यर्थः ११ तमेवमाचार्यं प्रति सम्वादं कुर्व्वन्तं भयाविष्टं राजानं दृष्ट्वा तदभ्यासवर्त्ती पितामहस्तद्बुद्ध्यनुरोधार्थं इत्थं कृतवानित्याह तस्येति राज्ञो दुर्य्योधनस्य हर्षं बुद्धिगतमुल्लासविशेषं परपरिभवद्वारा स्वकीयविजयद्वारकं सम्यगुत्पादयन् भयं तदीयमपनिनीषुरुच्चैः सिंहनादं कृत्वा शङ्खमापूरितवान् किमिति दुर्य्योधनस्य हर्षमुत्पादयितुं पितामहो यतते कुरुवृद्धत्वात्तस्य कुरुराजत्वात् पितामहत्वाच्चास्य दुर्य्योधनभयापनयनार्था प्रवृत्तिरुचिता तदुपजीवितया तद्वशत्वाच्च तस्य सिंहनादे शङ्खशब्दे च परेषां हृदयव्यथा सम्भाव्यते दूरादेवारिनिवर्हं प्रति भयजननलक्षणप्रतापत्वादित्यर्थः ॥ १२॥ राजाभिप्रायं प्रतीत्य भीष्मप्रवृत्तेरनन्तरं तत्पक्षैस्तै स्तै राजभिः शङ्खादयो वाद्यविशेषा झटिति शब्दवन्तः सम्पादिताः स च शङ्खादिप्रयुक्तशब्दस्तुमुलो बहुलं भयं परेषां परिद्योनयन्नासीदित्याह तत इति ॥ १३॥

स्वामिकृतटीका ।

तदेवं बहुमानयुक्तं राजवाक्यं श्रुत्वा भीष्मः किं कृतवान् तदाह तस्येत्यादि तस्य राज्ञो हर्षं कुर्वन् पितामहो भीष्म उच्चैर्महान्तं सिंहनादं कृत्वा शङ्खं दध्मौ वादितवान् १२

तदेवं सेनापतेर्भीष्मस्य युद्धोत्सवमालोक्य सर्व्वतो युद्धोत्सवः प्रवृत्त इत्याह तत इत्यादिना पणवा मर्द्दलाः आनका गोमुखाश्च वाद्यविशेषाः सहसा तत्क्षणादेवाभ्यहन्यन्त वादिताः स शब्दः शङ्खादिशब्दस्तुमुलो महानभूत ॥ १३॥

भाषा अनुवाद ।

तब तो ऐसी राजा दुर्योधन की सनमानकी वातैं सुनि भीष्मजीने जो किया सो कहते हैं कि दुर्योधन के सन्तुष्ट होने के कारन कुरुवंश के वृद्ध पितामह उच्च के आगे बढ़ि सिंहनाद करि शङ्ख बजे धुधुकार शब्द से बजाया ॥ १२॥ भीष्म पितामह की युद्ध में ऐसो उत्साह देखि सकल सेना के सरदार लोग जिस भांति युद्ध उत्सव मे प्रवृत्त भये सो ई कहते हैं कि तदनन्तर शङ्ख भेरी कहे तूरही पणव जो मृदङ्ग अनक जो नगारा गोमुख वाद्यविशेष तत्काल एकवार गी जो सभों ने बजाया तो वह शब्द एक बड़ा आश्चर्यभूत भयानक धूधूकार भया ॥ १३॥

ततःश्वेतैर्हयैर्युक्तेमहतिस्यन्दनेस्थितौ माधवःपाण्डवश्चैवदिव्यौशङ्खौप्रदध्मतुः १४
पाञ्चजन्यंहृषीकेशोदेवदत्तंधनञ्जयः पौण्ड्रंदध्मौमहाशङ्खंभीमकर्म्मावृकोदरः१५
अनन्तविजयंराजाकुन्तीपुत्त्रोयुधिष्ठिरः नकुलःसहदेवश्चसुघोषमणिपुष्पकौ१६
काश्यश्चपरमेष्वासःशिखण्डीचमहारथः धृष्टद्युम्नोविराटश्चसात्यकिश्चापराजितः१७

## आनन्दगिरिकृतटीका

एवंदुर्य्योधनपक्षेप्रवृत्तिमालक्ष्यपरिसरवर्त्तिनौकेशवार्जुनौश्वेतैर्हयैरतिवलप
राक्रमैर्युक्तेमहत्यप्रधृष्येरथेव्यवस्थितावप्राकृतौशङ्खौपूरितवन्तावित्याह ततःश्वेतैर्ह
यैरिति॥१४॥तयोःशङ्खयोर्दिव्यत्वमेवापादयतिपाञ्चजन्यमितिकेशवार्जुनयोर्युद्धा
भिमुख्यंदृष्ट्वासंहृष्टःसारस्येनसमररसिकोभीमसेनोपियुद्धाभिमुखोऽभूदित्याहपौ
ण्ड्रमिति॥१५॥ एतेषांदृष्टौप्रवृत्तिंप्रतीत्यपरिपालनावकाशमासाद्यराज्ञोयुधि
ष्ठिरस्यापिप्रवृत्तिंदर्शयतिअनन्तेति ज्यायसांभ्रातॄणामनुसरणमावश्यकमितिम
त्वातयोर्यवीयसोर्भ्रात्रोरपिप्रवृत्तिमाहनकुलइति॥१६॥अन्येषामपितत्पक्षीयाणां
राज्ञामैकमत्यंविज्ञापयन्धृतराष्ट्रस्यदुराशांसञ्जयोव्युदस्यतिकाश्यश्चेत्यादिना १७

## स्वामिकृतटीका

ततःपाण्डवसैन्येप्रवृत्तंयुद्धोत्सवमाहततइत्यादिपञ्चभिःस्यन्दनेरथेस्थितौसन्तौ
कृष्णार्जुनौशङ्खौप्रकर्षेणदध्मतुर्वादयामासतुः॥१४॥तदेवविभागेनदर्शयन्नाह पा
ञ्चजन्यमितिपाञ्चजन्यादीनिनामानिश्रीकृष्णादिशङ्खानांभीमंघोरंकर्म्मयस्यसः।
अनन्तेति नकुलःसुघोषंनामशङ्खंदध्मौसहदेवोमणिपुष्पकंनाम॥१६॥ काश्यश्चेति
काश्यःकाशीराजःकथम्भूतःपरमःश्रेष्ठइष्वासोधनुर्यस्यसः॥१७॥

## भाषाअनुवाद।

तिसकेबादिपाण्डवोंकीसेनामेयुद्धकीतयारीपांचश्लोकसेकहतेहैं किइधरहंस
ऐसेश्वेतवरनचारहयसंयुक्तसूर्यसेप्रकाशमानरथपरविराजमानश्रीकृष्णऔअर्जु
ननेभीअतिउत्तसंअपनेदोनोंशङ्खधुधुकारे१४अवकिसनेकौनशङ्खवजायासोकह
तेहैं किपाञ्चजन्यनामकश्रीभगवानऔअर्जुनदेवदत्तनामशङ्खवजायाफेरभीमक
र्म्माभीमसेनभयानकमहशङ्खपौण्ड्रनामवजाया॥१५॥अनन्तविजयनामशङ्खकुन्ती
नन्दनयुधिष्ठिरनेवजाया औरसुघोषनामशङ्खनकुलऔमणिपुष्पनामसहदेवनेव
जाया॥१६॥ औरधनुर्धारीकाशीराजशिखण्डीऔधृष्टद्युम्नतथाविराटराजाऔर
युद्धमेअपराजितजोसात्यकी॥१७॥

द्रुपदोद्रौपदेयाश्चसर्वशःपृथिवीपते सौभद्रश्चमहाबाहुःशङ्खान्दध्मुःपृथक्पृथक् १८
सघोषोधार्त्तराष्ट्राणांहृदयानिव्यदारयत् नभश्चपृथिवींचैवतुमुलोऽभ्यनुनादयन्१९
अथव्यवस्थितान्दृष्ट्वाधार्त्तराष्ट्रान्कपिध्वजः प्रवृत्तेशस्त्रसम्पातेधनुरुद्यम्यपाव हृषी
केशंतदावाक्यमिदमाहमहीपते ॥२०॥

आनगिरिकृतटीका।

द्रुपदइति परमेष्वासादिविशेषणचतुष्टयंप्रत्येकंसम्बध्यते ॥१८॥ तैस्तैरा
जभिःशङ्खानापूरयद्भिरापादितोमहान्घोषस्तुमुलोऽतिभैरवोनभश्चान्तरीक्षंपृथि
वींचभूवनंलोकत्रयंसर्व्वमेव विशेषानुक्रमेणनादयन्नादयुक्तंकुर्व्वन्धार्त्तराष्ट्राणांदु
र्य्योधनादीनांहृदयान्यन्तःकरणानिव्यदारयत्विदारितवान्युज्यतेहितत्प्रेरितश
ङ्खघोषश्रवणात्त्रैलोक्याक्रोशेतमुपप्लवतांतेषांहृदयेषुदोधूयमानत्वंतदाहसघोष
इति॥१९॥दुर्य्योधनादीनांधार्त्तराष्ट्राणामेवंभयप्राप्तिंप्रदर्श्यपार्थादीनांपाण्डवानां
तद्वैपरीत्यमिदानीमुदाहरति अथेत्यादिना भीतिप्रत्युपस्थितेरनन्तरंपलायनेप्रा
प्तेपि धैर्य्यमुत्पाद्यव्यवस्थितानप्रचलितानेवपरान्प्रत्यक्षेणोपलभ्यहनूमन्तंवानरवरं
ध्वजलक्षणत्वेनादायावस्थितोऽर्जुनोभगवन्तमाह इतिसम्बन्धः किमाहेत्यपेक्षाया
मिदंवक्ष्यमाणंहेतुमद्वचनमित्याह वाक्यमिति कस्यामवस्थायामिदमुक्तवानिति

स्वामिकृतटीका।

द्रुपदइति हेपृथिवीपतेधृतराष्ट्र॥१८॥ सचशङ्खानांनादस्त्वदीयानांमहाभयं
जनयामासेत्याह सघोषइत्यादि धार्त्तराष्ट्राणांत्वदीयानांहृदयादिविदारितवान्
किंकुर्वन्नभश्चपृथिवींचाभ्यनुनादयन्प्रतिध्वनिभिरापूरयन्१९ एतस्मिन्समये
श्रीकृष्णमर्जुनोविज्ञापयामासेत्याह अथेत्यादिचतुर्भिःश्लोकैःअथेति अथानन्तरं
महाशब्दानन्तरंव्यवस्थितान्युद्धोद्योगेऽवस्थितान्कपिध्वजोऽर्जुनः ॥२०॥

भाषा अनुवाद।

औरद्रुपदराजःतथाद्रौपदीकेपांचपुत्त्रप्रतिविन्दादिऔरसुभद्राकेपुत्त्रमहाबा
हुअभिमन्युजीहेपृथ्वीनाथधृतराष्ट्रयेसबकेसबभिन्नभिन्नशङ्खध्वनिकरनेलगे १८
वहीउनसबोंकीशङ्खध्वनिनेआकाशऔपृथिवीतलमेंव्याप्तहोतीहुई प्रतिध्वनिरूप
सेतुमारेपुत्त्रऔपक्षपातियोंकेहृदयकोविदीर्णकरदिया ॥१९॥ इससमयमेंअर्जु
ननेश्रीकृष्णजीकोजोजनायासोचारश्लोकसेसञ्जयप्रगटकरतेहैं किहेमहाराज
धृतराष्ट्रइसप्रकारशङ्खध्वनिहोनेपरभीतुमारेपुत्त्रलोगोंकीउत्साहयुद्धमेंदेखिकर
कपिध्वजअर्जुननेधनुषचढ़ायउसकालभगवानसेयहबातकहीसोआगेकहतेहैं २०

अर्जुनउवाच।

सेनयोरुभयोर्मध्येरथंस्थापयमेऽच्युत २१ यावदेतान्निरीक्षेऽहंयोद्धुकामानवस्थितान्
कैर्मयासहयोद्धव्यमस्मिन्रणसमुद्यमे २२

आनन्दगिरिकृतटीका।

तत्राह प्रवृत्तइति शस्त्राणामिषुप्रासप्रभृतीनांसम्पातःसमुदायस्तस्मिन्प्रवृत्तेप्रयो गाभिमुखेसतीतियावत् किंकृत्वाभगवन्तंप्रत्युक्तवानिति तदाहधनुरितिमहीपति शब्देनराजाप्रज्ञाचक्षुःसञ्जयेनसंबोध्यते ॥२०॥

तदेवगाण्डीवधन्विनोवाक्यमनुक्रामति सेनयोरितिउभयोरपिसेनयोःसन्निहि तयोर्मध्येमदीयंरथंस्थापयेत्यर्जुनेनसारथ्येसर्वेश्वरोनियुज्यते।किंहिभक्तानामशक्यं यद्भगवानपितन्नियोगं अनुतिष्ठतियुक्तंहिभगवतोभक्तपारवश्यंअच्युतेतिसम्बोधन तयाभगवतःस्वरूपंनकदाचिदपिप्रच्युतिंप्राप्नोतीत्युच्यते२१ मध्येरथंस्थापयेत्युक्तं तदेवरथस्थापनस्थानंनिर्धारयतियावदितिएतान्प्रतिपक्षत्वेनप्रतिष्ठितान्भीष्मद्रो णादीनस्माभिःसार्द्धंयोद्धुमपेक्षावतोयावद्गत्वा निरीक्षितुमहंक्षमःस्यांतावतिप्रदेशे रथस्यस्थापनंकर्त्तव्यमित्यर्थःकिञ्चप्रवृत्तेयुद्धप्रारम्भेवहवोराजानोऽमुष्यांयुद्धभूमावु पलभ्यन्तेतेषांमध्येकैःसहमयायोद्धव्यंनहिकश्चिदपिसमगतिप्रतिहतिरस्तीत्याहकै र्मयेति॥२२॥ प्रतियोगिनामभावेकथंतवयुद्धौत्सुक्यंफलवद्भवेदितितत्राहयोत्स्यमा नानिति येकेचिदेतेराजानोनानादेशेभ्योऽत्रकुरुक्षेत्रेसमवेतास्तानाहं योत्स्यमा नान्परिगृहीतप्रहरणोपायानतितरांसंग्रामसमुत्सुकानुपलभे तेनप्रतियोगिनां बाहुल्यमित्यर्थः तेषाभस्माभिःसहपूर्ववैराभावेकथंप्रतियोगित्वं कल्प्यतेतत्राह धार्त्तराष्ट्रस्येति धृतराष्ट्रपुत्रस्यदुर्योधनस्यदुर्बुद्धेःस्वरक्षणोपायमप्रतिपद्यमानस्य

स्वामिकृतटीका।

तदेववाक्यमाहसेनयोरित्यर्द्ध॥२१॥ ननुत्वंयोद्धानतुयुद्धप्रेक्षकस्तत्राहकैर्मये त्यादि कैःसहमयायोद्धव्यं॥२२॥

भाषा अनुवाद।

श्रीकृष्णसेअर्जुनद्रुतनेयहीवातकहीकिहेअच्युतदोनोदलकेवीचमेरेरथकोख ड़ाकरो॥२१॥ जोकहोकिक्यातमासगीरहोतुमतोआपयोद्धालड़नेवालेहोइससे सेनाकेमध्यरथकिसलियेखड़ाकियाजायगाइसवातपरकहतेहैं किउतनीदेररथ खड़ाकरोजवतकहमदेखेंकियुद्धकीकामनाकरिकेखड़ीभईसेनाकेवीचकिसकेसाथ लड़नाहमैंउचितहैं औरकिसकेसाथनहीं॥२२॥

योत्स्यमानानवेक्षेऽहंयएतेऽत्रसमागताः धार्त्तराष्ट्रस्यदुर्बुद्धेर्युद्धेप्रियचिकीर्षवः २३

सञ्जयउवाच।

एवमुक्तोहृषीकेशोगुडाकेशेनभारत सेनयोरुभयोर्मध्येस्थापयित्वारथोत्तमं २४
भीष्मद्रोणप्रमुखतःसर्व्वेषाञ्चमहीक्षितां उवाचपार्थपश्यैतान्समवेतान्कुरूनिति२५

आनन्दगिरिकृतटीका।

युद्धायसंरम्भंकुर्व्वतोयुद्धेयुद्धभूमौस्थित्वाप्रियंकर्त्तुमिच्छवोराजानःसमागताःदृश्यन्ते तेनतेषामौपाधिकमस्मत्प्रतियोगित्वमुपपन्नमित्यर्थः२३ एवमर्जुनेनप्रेरितोभगवान हिंसारूपंधर्ममाश्रित्यप्रायशोयुद्धात्तंनिवर्त्तयिष्यतीति धृतराष्ट्रस्यमनीषांदूषयिषुःसञ्जयोराजानंप्रत्युक्तवानित्याह सञ्जयइति भगवतोहिभूभारापहारार्थंप्रवृत्तस्यार्जुनाभिप्रायप्रतिपत्तिद्वारेणस्वाभिसन्धिप्रतिलभमानस्यपरोक्तिमनुसृत्यस्वाभिप्रायानुकूलमनुष्ठानमादर्शयति एवमिति॥२४॥भीष्मद्रोणादीनामन्येषाञ्चराज्ञामन्तिकेरथंस्थापयित्वाभगवान्किंकृतवानितितदाह उवाचेति एतानस्यामेवर्त्तमानान्कुरून्कुरुवंशप्रसूतान्भवद्भिःसार्द्धंयुद्धार्थंसङ्गतान्पश्यदृष्ट्वाचयैःसहात्वयुयुत्सातवोपावर्त्ततेतैःसाकंयुद्धंकुरूनोखल्वेतेपांशस्त्रास्त्रशिक्षावतांसहोक्षितामुपेक्षोपपद्यतेसारथ्येतुनमनःखेदनीयमित्यर्थः॥२५॥

स्वामिकृतटीका।

योत्स्यमानानिति धार्त्तराष्ट्रस्यदुर्य्योधनस्यप्रियंकर्त्तुमिच्छन्तोयइहसमागतास्तानहंद्रक्ष्यामियावत्तावदुभयोःसेनयोर्मध्येमेरथंस्थापयेत्यन्वयः॥२३॥ ततःकिंवृत्तंइत्यपेक्षायांसञ्जयउवाचएवमुक्तइत्यादि गुडाकानिद्रातस्याईशेनजितनिद्रेणार्जुनेनएवमुक्तःसन्हेभारतहेधृतराष्ट्र॥२४॥भीष्मेति महीक्षितांराज्ञाञ्चप्रमुखतःसम्मुखेरथंस्थापयित्वाहेपार्थएतान्कुरून्पश्येति श्रीभगवानुवाच॥२५॥

भाषा अनुवाद।

दुर्बुद्धिदुर्योधनकामनोरथसिद्धकरनेकेअर्थजोराजालोगइसयुद्धभूमिपरआयइकठ्ठेभयेहैं उनकोजवतकहमदेखैंतवलोंरथदोनोसेनाकेमध्यमेस्थापनकरो२३ तिसकेवादक्याभयायहकहतेहुये सञ्जयबोलेकिहेमहाराजधृतराष्ट्रअर्जुनकीयहप्रार्थनासुनिश्रीकृष्णदोनोसेनाकेवीचमेउत्तमरथकोलेजायकरखड़ाकिया॥२४॥ भीष्मद्रोणतथाऔरऔरराजावोंकेसामनेरथकोखड़ाकरिश्रीभगवाननेकहाकियुद्धकरनेकेहेतुएकट्ठीहुयेयहकुरुवंशीयोंकीसेनाकोदेखोऔरजिनकेसाथयुद्धअनुचितभानिसनमतोनभयातिनकेसाथयुद्धकरनाहीपडेगा क्योंकि संग्रामसेशस्त्रधारीराजोंकेसामनेसेहटजानायहउमहासज्जनोकेयोग्यकामनहीं है॥२५॥

तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् आचार्य्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि २६ तान्समीक्ष्य स कौन्तेयः सर्व्वान्बन्धूनवस्थितान् कृपया परयाविष्टो विषीदन्निदमब्रवीत् २७ अर्जुन उवाच दृष्ट्वेमान्स्वजनान्कृष्ण युयुत्सून्समवस्थितान् सीदन्ति मम गात्राणि मुखञ्च परिशुष्यति ॥२८॥

## आनन्दगिरिकृतटीका।

एवंस्थिते महानधर्म्मो हिंसेति विपरीतबुद्ध्या युद्धादुपरिरंसा पार्थस्य संप्रवृत्तेति कथयति अत्रेत्यादिना सम्बन्ध्या भगवदभ्यनुज्ञाने समरसमारम्भाय संवृत्ते सतीत्येतदुच्यते सेनयोरुभयोरपि स्थितान्पार्थोऽपश्यदिति सम्बन्धः अथशब्दस्तथाशब्दपर्य्यायः श्वशुराः भार्य्याणां जनयितारः सुहृदो मित्राणि कृतवर्म्मप्रभृतयः ॥२६॥ सेनाद्वयेऽव्यवस्थितान्यथोक्तान्पितृपितामहादीनालोक्य परमकृपापरवशः सन्नर्जुनो भगवन्तमुक्तवानित्याह तानिति विषीदन्यथोक्तानां पित्रादीनां हिंसासंरम्भनिबन्धनविषादमुपतापं कुर्व्वन्नित्यर्थः ॥२७॥ तदेवेदंशब्दवाच्यं वचनमुदाहरति दृष्ट्वेति आत्मीयं बन्धुवर्गं युद्धेच्छया युद्धभूमावुपस्थितमुपलभ्य शोकप्रवृत्तिं दर्शयति सीदन्तीति देवांशस्यैवार्जुनस्याज्ञानात्मविदः स्वपरदेहेष्वात्मात्मीयाभिमानवतस्तत्प्रियस्य युद्धारम्भे तन्मृत्युप्रसङ्गदर्शिनः शोको महानासीदित्यर्थः ॥२८॥

## स्वामिकृतटीका।

ततः किं वृत्तमित्याह तत्रेत्यादि पितॄन्पितृव्यानित्यर्थः पुत्रान्पौत्रानिति दुर्य्योधनादीनां ये पुत्राः पौत्राश्च तानीत्यर्थः सखीन्मित्राणि सुहृदः कृतोपकारांश्चापश्यत् २६ ततः किं कृतवानित्याह तानिति सेनयोरुभयोरेवं समीक्ष्य कृपया महत्या गृहीतो विषण्णः सन्निदमर्जुनोऽब्रवीदित्युत्तरस्यार्द्धश्लोकवाक्यार्थः आविष्टो व्याप्तः ॥२७॥ किमब्रवीदित्यपेक्षायामाह दृष्ट्वेमानित्यादि यावदध्यायसमाप्ति हे कृष्ण योद्धुमिच्छतः पुरतः सम्यगवस्थितान्स्वजनान् बन्धुजनान्दृष्ट्वा मदीयानि गात्राणि करचरणादीनि सीदन्ति विशीर्य्यन्ते ॥२८॥

## भाषा अनुवाद।

तहांखडेहुयेचचादादाआचार्य्यमामाभाईभतीजेपोतेनातीऔमित्रबन्धुससुरसुहृदोंकोदोनोंतरफअर्जुननेदेखा॥२६॥ सोकुन्तीपुत्रअर्जुनउनसबबंधुवोंकोलड़नेकेलियेसंग्राममेंखडेदेखिपरमकृपासेयुक्तअतिकातरस्वभावहो विषादकरतेभयेयह्वचनबोले॥२७॥उससमयअर्जुननेजोकहासोसञ्जयकहतेहैं कितबअर्जुन

वेपथुश्चशरीरेमेरोमहर्षश्चजायते गाण्डीवंस्रंसतेहस्तात्त्वक्चैवपरिदह्यते २९
नचशक्नोम्यवस्थातुंभ्रमतीवचमेमनः निमित्तानिचपश्यामिविपरीतानिकेशव ३०
नचश्रेयोनुपश्यामिहत्वास्वजनमाहवे नकांक्षेविजयंकृष्णनचराज्यंसुखानिच ३१
किंनोराज्येनगोविन्दकिंभोगैर्जीवितेनवा येषामर्थेकांक्षितंनोराज्यंभोगाःसुखा

## आनन्दगिरिकृतटीका।

अङ्गेषुव्यथासुखेपरिशोषश्चेत्युभयंशोकलिङ्गमुक्त्वासंप्रतिवेपथुप्रभृतीनिभीतिलि ङ्गान्युपन्यस्यति वेपथुश्चेति रोमहर्षोरोम्णांगात्रेषुपुलकितत्वं॥२९॥ किञ्चाधैर्य्य मपिसंवृत्तमित्याह नचेति मोहोपिमहान्भवतीत्याह भ्रमतीवेति विपरीतनिमि त्तप्रतीतेरपि मोहोभवतीत्याह निमित्तानीति तानिविपरीतानिनिमित्तानियानि वामनेत्रस्फुरणादीनि॥३०॥ युद्धेस्वजनहिंसयाफलानुपलम्भादपितस्मादुपरिरंसा जायतइत्याह नचेति प्राप्तानांयुयुत्सूनांहिंसयाविजयोराज्यंसुखानिचलब्धुंशक्या नीतिकुतोयुद्धादुपरतिरित्याशङ्क्याह नकांक्षइति॥३१॥

## स्वामिकृतटीका।

किञ्चवेपथुश्चेत्यादि वेपथुःकम्पःरोमहर्षोरोमाञ्चःस्रंसतेनिपततिपरिदह्यते सर्व्वतःसन्तप्यते॥२९॥ अपिचनचशक्नोमित्यादि विपरीतानिनिमित्तानिअनिष्टसू चकानिशकुनादीनिपश्यामि॥३०॥ किञ्चनचेत्यादि आहवेयुद्धेस्वजनंहत्वाश्रेयः फलंनपश्यामि विजयादिकंफलंकिंनपश्यसीतिचेत्तत्राह नकाङ्क्षइति॥३१॥

## भाषा अनुवाद।

कृष्णसेबोलेकिहेश्रीकृष्णयुद्धकीइच्छाकरिसंग्रामभूमिमेखडेहुयेइनस्वजनबंधुवों कोदेखिमेरेहाथपांवढीलेहोगयेऔर सारीशरीरमेपसीनाहोआयामुखभीसूख ताजाताहै२८ औरदेहकांपतीहैरोंवांखडेहोहोउठतेहाथसेगांडीवधन्वाभीगि रापड़ताहैसर्व्वांगकीखालजलीसीजातीहै॥२९॥औरमेरेअबखडेहोनेकीसामर्थ्य भीनहींरहीमेरामनभ्रमताहै औरनिमित्तअसगुनउलटेदेखताहूंबाईंआंखऔर हाथभीफरकतेहैं॥३०॥ मैकल्याननहींदेखताहूंस्वजनबन्धुवोंकोसंग्राममेंमारके हेकृष्णनहींचहियेहमैविजयऔरनराज्यतथासुखकीभीइच्छानहींहै॥३१॥
क्याकरनाहै हमैराज्यलेकरहेगोविन्दऔरभोगसेंक्याहैं औरजीनेसेभीहमै क्याप्रयोजनहै किजिनकेवास्तेहमराज्यभोगसुखकीआकांक्षाकरतेहैं वेईपाण्डव

निच ३२ तइमेऽवस्थितायुद्धेप्राणांस्त्यक्त्वाधनानिच आचार्य्याःपितरःपुत्रास्तथैवच पितामहाः ३३ मातुलाःश्वशुराःपौत्राःश्यालाःसम्बन्धिनस्तथा एतान्नहन्तुमिच्छा मिघ्नतोपिमधुसूदन ३४ अपित्रैलोक्यराजस्यहेतोःकिन्नुमहीकृते निहत्यधार्त्तरा ष्ट्रान्नःकाप्रीतिःस्याज्जनार्दन ॥ ३५॥

## आनन्दगिरिकृतटीका।

किमितिराज्यादिकंसर्व्वाकांक्षितत्वात्नकांक्षेतेनहिपुत्रभ्रात्रादीनांस्वास्थ्य साधनतंशक्यमित्याशङ्क्याह किमिति राज्यादीनामाक्षेपेहेतुमाह येषामिति ३२ तानेवविशिनष्टिआचार्य्याइति॥ ३३ ॥मातुलाइति श्यालाभार्य्याणांभ्रातरोष्टद्यु म्नप्रभृतयः वध्येष्वपिस्वराज्यपरिपन्थिष्वाततायिषुकृपावुद्ध्यास्वधर्म्मातयुद्धात्पूर्व्वो क्तमोहादिवशात्प्रच्युतिंप्रदर्शयति एतानिति जिघांसन्तंजिघांसीयादितिन्याया देतेषांहिंसानदोषायेत्याशङ्क्याह घ्नतोपीति॥ ३४ ॥पृथिवीप्राप्त्यर्थंहिहननमेतेषा मिष्यतेनचतत्प्राप्तिःसमीहितेतिकैमुतिकन्यायेनदर्शयतिअपीति नहिसहृदपित्रै लोक्यलक्षणंराज्यंलब्धुंस्वजनहिंसायैमनोमदीयंस्पृहयति पृथिवीप्राप्त्यर्थंपुनर्व्वन्धु वधंनश्रद्दधामीति किंवक्तव्यमित्यर्थः दुर्य्योधनादीनांशत्रूणांनिग्रहेप्रीतिप्राप्तिसम्भ वाद्युद्धंकर्त्तव्यमित्याशङ्क्याह निहत्येति॥ ३५॥

## स्वामिकृतटीका।

एतदेवप्रपञ्चयति किंनोराज्येनइत्यादिसार्द्धद्वयेन॥ ३२ ॥इमेइतियदर्थमस्मा कंराज्यादिकमपेक्षितंतेएतेप्राणधनादित्यागमङ्गीकृत्ययुद्धार्थमवस्थिताःअतःकिम स्माकंराज्यादिभिःकृत्यमित्यर्थः ॥३३॥ ननुयदिकृपयात्वमेतान्नहंसितर्हित्वामेते राज्यलोभेनहनिष्यन्त्येवअतस्त्वमेवैतान्हत्वाराज्यंभुङ्क्ष्वेति तत्राह एतानित्या दिसार्द्धेन घ्नतोपिअस्मान्मारयतोपिएतान् ॥ ३४॥ अपीति त्रैलोक्यराज्यस्यापि हेतोःतत्प्राप्त्यर्थमपिहन्तुनेच्छामिकिंपुनर्महीमात्रप्राप्तयेइत्यर्थः॥ ३५ ॥

## भाषा अनुवाद।

प्राणधनछोड़करमेरेसामनेसंग्राममेखड़ेहैं औरआचार्य्यपितापितामहपुत्रपौत्र सकलदेखपड़ैहैं॥ ३२॥ ३३॥

जोकहोकिकृपाकरिकेचाहोतुमउन्हेंछोड़ोपरवेसवसंग्राममेअवतुम्हैमारें हींगेविनमारेकिसीतरहनछोड़ेंगेइससेतुमइनसवकोसंहारकरिराज्यभोगक्यों नकरोतोहेमधुसूदनयेलोगचाहेंहमैंमारेंपरन्तुमारतेज्ञ्ये भीमामानातीपोतेभ तीजेससुरेसम्बन्धीइनकोहममारनेकीइच्छानहीं करतेहैं ॥ ३४॥ जिनकोहम तीनलोककीराज्यसम्पदाकेवास्तेभीमारनेकीइच्छानहींरखतेतोहेजनार्दनकेवल

पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः तस्मान्नार्हावयंहन्तुंधार्त्तराष्ट्रान्सबान्धवान् स्वजनंहिकथंहत्वासुखिनःस्याममाधव ३६

## आनन्दगिरिकृतटीका ।

यदिपुनरमीदुर्य्योधनादयोननिगृह्येरन्भवन्तस्तर्हितैर्निगृहीतादुःखिताःस्युरित्याशंक्याह पापमेवेति यदिमेदुर्य्योधनादयोनिर्दोषानेवास्मान्युद्धभूमौहन्युस्तदैतानग्निदोगरदश्चेत्यादिलक्षणोपेतानाततायिनोनिर्दोषस्वजनहिंसाप्रयुक्तं पापंपूर्वमेवप्रापिनःसमाश्रयेदित्यर्थः अथवायद्यप्येतेभवन्त्याततायिनस्तथाप्येतानतिशोच्यान्दुर्य्योधनादीन्हिंसित्वातत्कृतंपापमस्मानेवाश्रयेदतोनास्माभिरेतेहन्तव्याइत्यर्थः अथवागुरुभ्रातृसुहृत्प्रभृतीनेतान्हत्वावयमाततायिनःस्यामःततश्चैतान्हत्वातत्कृतंपापमाततायिनोऽस्मानेवसमाश्रयेदिति युद्धादुपरमणमस्माकंश्रेयस्करमित्यर्थः फलाभावादनर्थसम्भवाच्चपरहिंसानकर्त्तव्याइत्युपसंहरति तस्मादिति किञ्चराज्यसुखसुहृत्स्वयुद्धमुपक्रम्यतेनचस्वजनपरिक्षयेसुखमुपपद्यतेतेन नकर्त्तव्यंयुद्धमित्याह स्वजनंहीति॥३६॥

## स्वामिकृतटीका ।

ननुचअग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः क्षेत्रदारापहारीचषडेतेआततायिनः इतिस्मरणादग्निदाहादिभिःषड्भिर्हेतुभिरेतेतावदाततायिनःआततायिनाञ्चवधोयुक्तएवआततायिनमायान्तंहन्यादेवाविचारयन्नाततायिवधेदोषोहन्तुर्भवतिकश्चनेतिवचनात्तत्राह पापमेवेत्यादिसार्द्धेन आततायिनमायान्तमित्यादिकामर्थशास्त्रंतच्चधर्मशास्त्रात्तुदुर्बलंयथोक्तंयाज्ञवल्क्येन स्मृत्योर्विरोधेन्यायस्तुबलवान्व्यवहारतः अर्थशास्त्रात्तुबलवद्धर्मशास्त्रमितिस्मृतिःइतितस्मादाततायिनामप्येतेषामाचार्य्यादीनांबधेऽस्माकंपापमेवभवेत्अन्याय्यत्वात् अधर्मत्वाच्चैतद्वधस्यअसुतवेहवानसुखंस्यात्इत्याह स्वजनंहीति॥३६॥

## भाषा अनुवाद ।

पृथिवीभरकीराज्यकेहेतुदुर्य्योधनआदिकोनाशकरिकेहमारीक्याप्रीति अर्थात् कौनवड़ाकार्य्यसिद्धहोगातात्पर्य्य यहकिकुटुम्बकोनाशकरिहमकोसंसारकासुख नहींहै३५जोकहोकिघरमेआगलगावेयाविषपिलायमारेअथवावधकरनेकोखड्ग उठावे औरधनहरनकरेयाभूमिछीनलेऔरस्त्रीहरिलेनेवालायेछवोआततायी कहातेहैंइनकेमारनेमेदोषनहींहै ऐसाशास्त्रअर्थात्नीतिमेलिखाहै इसवातपर अर्जुनउत्तरदेतेहैंकियहआपकीअभिप्रायकेवलनीतियुक्तहै परधर्मशास्त्रकीअपे

यद्यप्येतेनपश्यन्तिलोभोपहतचेतसः कुलक्षयकृतंदोषंमित्रद्रोहेचपातकम् ३७
कथंनज्ञेयमस्माभिःपापादस्मान्निवर्त्तितुं कुलक्षयकृतंदोषंप्रपश्यद्भिर्जनार्दन ३८

## आनन्दगिरिकृतटीका।

कथंतर्हिपरेषांकुलक्षयेस्वजनहिंसायाम्प्रवृत्तिस्तत्राह यद्यपीति लोभोपहतबुद्धित्वात्तेषांकुलक्षयादिप्रयुक्तदोषप्रतीत्यभावात्प्रवृत्तिविस्रम्भःसम्भवतीत्यर्थः ॥३७॥परेषामिवास्माकमपिप्रवृत्तिविस्रम्भःसम्भवेदितिचेन्नेत्याह कथमिति कुलक्षयेतिकुलक्षयेमित्रद्रोहेचदोषंप्रपश्यद्भिरस्माभिस्तद्दोषप्रयुक्तं पापंकथंनज्ञातव्यं तदज्ञानेतत्परिहारासम्भवादतोस्मात्पापान्निवृत्त्यर्थंतज्ज्ञानमपेक्षितमिति पापपरिहारार्थिनामस्माकंनयुक्तायुद्धेप्रवृत्तिरित्यर्थः॥ ३८॥

## स्वामिकृतटीका।

ननुचैतेषामपिबन्धुवधोदोषेसमानेयथैवैतेबन्धुवधमङ्गीकृत्यापियुद्धेप्रवर्त्तन्तेतथैवभवानपिप्रवर्त्ततांकिमनेनविषादेनेत्याह तद्यपीतिद्वाभ्यां राजलोभेनोपहतंभ्रष्टविवेकंचेतोयेषांतेएतेदुर्य्योधनादयोयद्यपिदोषंनपश्यन्ति॥३७॥कथमिति तथाप्यस्माभिर्दोषंप्रपश्यद्भिरस्मात्पापान्निवर्त्तितुंकथंनज्ञेयनिवृत्तावेवबुद्धिःकर्त्तव्येत्यर्थः ३८

## भाषा अनुवाद।

चायहनीतिपक्षदुर्बलहै याज्ञवल्क्यनेकहाहै किनीतिश्रौधर्मकाजहांविरोधहोतहांस्मृतिमूलकयुक्तिबलवतीहै श्रौरश्रर्थशास्त्रसेधर्मशास्त्रप्रबलहै इससेश्राततायिस्वरूपश्राचार्य्यश्रादिककोनाशकरनेसेहमकोश्रवश्यमहापापहोगाश्रौरइनलोगोंकावधश्रयोग्यश्रौश्रधर्मतथालोकपरलोकमेंश्रयशश्रौदुःखकामूलहै तोकहोहेमाधवहमश्रपनेस्वजनकोविनाशकरिकेकैसेसुखीहोंगेइससेबन्धुसमेतधृतराष्ट्रकेपुत्रोंकोमारनेकोमेरीसामर्थनहींहै॥३६॥जोकहोकियहबाततोदोनोश्रोरसमानहैपरन्तुवेलोगइसकोनमानिकेजैसेयुद्धकरनेकोतयारखड़ेहैं तैसेतुमभीसंग्रामइनकेसाथकरोइसबातमेंपेंदकरनेकाक्याप्रयोजनहै इसपरकहतेहैं किराज्यलोभसेविचाररहितदुर्य्योधनश्रादिकुलक्षयकृतदोषश्रौमित्रद्रोहसेजोपातकश्रशुभरूपतिसेनहीदेखतेश्रौरनहींगिनतेहैं ॥३७॥ तौभीहेजनार्दनहमलोगकुलक्षयकृतदोषकोजानिबुझकेइसमहापापसेक्योनशान्तहोंय श्रर्थात्हमकोयुद्धसेनिवृत्तहोनाहीउचितहै ॥३८॥

कुलक्षयेप्रणश्यन्तिकुलधर्माःसनातनाः धर्मेनष्टेकुलंकृत्स्नमधर्मोऽभिभवत्युत ३९
अधर्माभिभवात्कृष्णप्रदुष्यन्तिकुलस्त्रियः स्त्रीषुदुष्टासुवार्ष्णेयजायतेवर्णसङ्करः ४०
सङ्करोनरकायैवकुलघ्नानांकुलस्यच पतन्तिपितरोह्येषांलुप्तपिण्डोदकक्रियाः ४१

## आनन्दगिरिकृतटीका ।

कोसौकुलक्षयेदोषोयद्दर्शनाद्युष्माकंयुद्धादुपरतिरपेक्ष्यतेतत्राह कुलेतिकुलस्यहिक्षयेकुलसम्बन्धिनश्चिरन्तनाधर्मास्तत्तदग्निहोत्रादिक्रियासाध्यानाशमुपयान्तिकर्तुरभावादित्यर्थः धर्मनाशेपिकिंस्यादितिचेत्तत्राह धर्मइति कुलप्रयुक्तेधर्मेकुलनाशादेवनष्टेकुलक्षयकारस्यकुलपरिशिष्टमखिलमपितदीयोऽधर्मोऽभिभवत्यधर्मेभूयिष्ठंतस्यकुलंभवतीत्यर्थः॥३९॥ कुलक्षयकृतेऽवशिष्टकुलस्याधर्मप्रवणत्वेकोदोषःस्यादितितत्राह अधर्मेति पापप्रचुरेकुलेप्रसूतानांस्त्रीणांप्रदुष्टत्वेकिंप्रदुष्यतितत्राह स्त्रीष्विति॥४०॥वर्णसङ्करस्यदोषपर्य्यवसायितामादर्शयति सङ्करइति कुलक्षयकारिणांदोषान्तरंसञ्चिनोतिपतन्तीति कुलक्षयकृतांपितरोनिरयगामिनःसम्भवन्तीत्यत्रहेतुमाह लुप्तेति पुत्रादीनांकर्तॄणामभावात्लुप्तापिण्डस्योदकस्यचक्रियायेषां तेतथातत्रप्रेतत्वपरावृत्तिकारणाभावान्नरकपतनमेवावश्यकमापद्येदित्यर्थः॥४१॥

## स्वामिकृतटीका ।

तमेवदोषंदर्शयतिकुलक्षयइत्यादि सनातनाःपरम्पराप्राप्ताः उतअपिचअवशिष्टंकृत्स्नमपिकुलंअधर्मोभिभवति प्राप्नोतीत्यर्थः॥३९॥ततश्चअधर्माभिभवादित्यादि॥४०॥एवंसतिसङ्करइत्यादि एषांकुलघ्नानांपितरःपतन्तिहियस्मात्लुप्ताःपिण्डोदकक्रियाःयेषांतेतथा॥४१॥

## भाषा अनुवाद ।

सोईकुलक्षयकृतदोषकहतेहैं किकुलक्षयकरनेसेसनातनजोकुलधर्मसोनष्टहोताहैऔरधर्महानिहोनेसेबाकीजोकुलउसेअधर्मग्रसिलेताहै ३९ अधर्मकेजोरसेकुलकामिनीसबभ्रष्टआचारनीहोतीहैं औरस्त्रियोंकेदुष्टआचरनकरनेसेवरनसङ्करपैदाहोतेहैं ४० तोफिरवरनसङ्करकुलघातियोंकेकुलकोनरककाहेतुहोतेहैं औरउससेकुलनाशकोंकेपितरपिण्डापानीसेरहितहोनरकमेंपड़तेहैं ४१

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ४२
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन नरके नियतं वासो भवतीत्यनुशुश्रुम ४३
अहो बत महत्पापं कर्तुं व्यवसिता वयं यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ४४

## आनन्दगिरिकृतटीका।

कुलक्षयकृतामेतैरुदाहृतैर्दोषैः वर्णसङ्करहेतुभिर्जातिप्रयुक्ताश्च धर्माः सर्वे समुत्साद्यन्ते तेन कुलक्षयकारणाद्युद्धादुपरतिरेव श्रेयसीत्याह दोषैरिति॥ ४२॥ किञ्च जातिधर्मेषु कुलधर्मेषु च उत्सन्नेषु तत्तद्धर्मवर्जितानां मनुष्याणामनधिकृतानां नरकपतनध्रौव्यादनर्थकरमिदमेव हेयमित्याह उत्सन्नेति यथोक्तानां मनुष्याणां नरकपातस्यावश्यकत्वे प्रमाणमाह इत्यनुशुश्रुमेति ॥४३॥ राज्यप्राप्तिप्रयुक्तसुखोपभोगलब्धतया स्वजनहिंसायां प्रवृत्तिरस्माकं गुणदोषविभागविज्ञानवतामतिकष्टेति परिभ्रष्टहृदयः सन्नाह अहो बतेति ॥४४॥

## स्वामिकृतटीका।

उक्तं दोषमुपसंहरति दोषैरित्यादिद्वाभ्यां उत्साद्यन्ते लुप्यन्ते जातिधर्मा वर्णधर्माः कुलधर्माश्चेति चकारादाश्रमधर्मादयोपि गृह्यन्ते॥४२॥ उत्सन्नेति उत्सन्नाः कुलधर्मा येषामिति उत्सन्नजातिधर्मादीनामप्युपलक्षणं अनुशुश्रुम श्रुतवन्तो वयं प्रायश्चित्तमकुर्वाणाः पापेष्वभिरता नराः अपश्चात्तापिनः पापान्निरयान्यान्ति दारुणानित्यादिवचनेभ्यः॥ ४३॥ बन्धुवधाध्यवसायेन सन्तापमानआह अहो बतेत्यादि स्वजनं हन्तुमुद्यता इति यत् एतन्महत्पापं कर्तुमध्यवसायात् कृतवन्तो वयं अहो बत इहत्कष्टमित्यर्थः ॥४४॥

## भाषाअनुवाद।

कुलघातियों के वरनसङ्करकरनेवाले इन दोषों से सनातनी जातिधर्म औ कुलधर्म आश्रमधर्म सब उच्छिन्न होजाते हैं इससे कुलनाशकारी युद्ध से निवृत्त होनाही परमकल्यान है ४२ और हे जनार्दन जिनमनुष्यों के कुलधर्म औ जातिधर्म उच्छिन्न होगये उनको निरन्तर घोर नरकमें वास करनी होती है यह मैंने पुराण इतिहास और धर्मशास्त्र में सुना है॥ ४३॥ देखो गुणदोष के विशेषज्ञानवान होके भी जो हम राज्यसुख के लोभ से स्वजन बन्धु लोगों को संग्राम में मारने को तयार होगये कि ऐसे महापापकर्म करने का उद्योग किया है यह बड़ा कष्ट और विषाद भया बन्धुबध से महापापको छोड़ और कहो क्या होगा लगना है ॥४४॥

यदिमामप्रतीकारमशस्त्रंशस्त्रपाणयः धार्त्तराष्ट्रारणेहन्युस्तन्मेक्षेमतरम्भवेत् ४५

सञ्जयउवाच ।

एवमुक्त्वार्जुन.संख्येरथोपस्थउपाविशत् विसृज्यसशरंचापंशोकसंविग्नमानसः ४६

इतिश्रीभगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रे श्रीकृष्णार्जुनसंवादेसैन्य दर्शनोनामप्रथमोऽध्यायः ॥१॥

आनन्दगिरिकृतटीका ।

तदेवंयुद्धेविमुखःसन्परपरिभवप्रतीकाररहितोवर्त्तेथास्तर्हित्वांशस्त्र परिग्रहरहितंशत्रुशस्त्रपाणयोधार्त्तराष्ट्रानिभीयुरित्याशङ्क्याह यदीति प्राणत्राणादपि प्रकृष्टोधर्मःप्राणभृतामहिंसेतिभावः॥४५॥यथोक्तमर्जुनस्यवृत्तान्तंसञ्जयोधृतराष्ट्रं राजानंप्रतिप्रवेदितवान्तमेवप्रवेदनप्रकारंदर्शयति एवमिति प्रदर्शितेनप्रकारेणभगवन्तंप्रतिविज्ञापनंकृत्वाशोकमोहाभ्यांपरिभूतमानसःसन्नर्जुनःसंख्येयुद्धमध्येशरेणसहितंगाण्डीवंत्यक्त्वानयोत्स्येहमिति ब्रुवन्मध्येरथस्यसन्नासमेवस्थेयस्करंमत्वोपर्युपविष्टवानित्यर्थः ॥४६॥ इतिआनन्दगिरिटीकायांप्रथमोऽध्यायः ॥१॥

स्वामिकृतटीका ।

एवंसन्तप्तःसन्स्वलुमेवाग्रंसमानआह यदिमामित्यादि अकृतप्रतीकारंदृष्ट्वा तुष्णीमुपविष्टंमांयदिहनिष्यन्तितर्हितद्धननंमम क्षेमतरं अत्यन्तहितंभवेत्पापान्निष्पत्तेः॥४५॥ततःकिंवृत्तमित्यपेक्षायांसञ्जयउवाच एवमुक्त्वेत्यादि संख्येसंग्रामेरथोपस्थे रथस्योपरिउपाविशत्उपविवेश शोकेनसंविग्नंप्रकम्पितंमानसं चित्तंयस्यस तथा ॥४६॥ इतिश्रीधरस्वामिकृतायांप्रथमोऽध्यायः ॥१॥

भाषा अनुवाद ।

औरजोकहोकियुद्धसेविमुखवेहथियारतुमकोसंग्राममेंधृतराष्ट्रकेपुत्रसिकारसापीटलेंगेतोवहमारनाउनकाऔरमेरामरनामेरेवास्तेकल्यानकरहोगाकिजिसमेपापकासञ्चारभीनहींहैं॥४५॥ अर्जुनकावृत्तान्तसञ्जयधृतराष्ट्रसेकहतेभयेकिहेराजन्धृतराष्ट्रफेरतोअर्जुनश्रीभगवानसेऐसीबातैंकहिकरकेऔरशोकसन्तापसेव्याकुलऔरपीड़ितमनसहाउदासजयकीआससेनिराशहोहाथसेधन्वाबानकोभीत्यागकररथकेउपरबैठगये ॥४६॥

इतिश्रीभगवद्गीतायांकात्यकुब्जजगन्नाथशुक्लविरचितायांमनभावनीनामटीकायांश्रीकृष्णार्जुनसंवादेसैन्यदर्शनोनामप्रथमोऽध्यायः ॥१॥ सम्वत् १९२६ ॥

## श्रीमद्भगवद्गीता।

### द्वितीयोऽध्यायः।

सञ्जयउवाच।

तन्तथाकृपयाविष्टमश्रुपूर्णाकुलेक्षणं विषीदन्तमिदंवाक्यमुवाचमधुसूदनः॥१॥

आनन्दगिरिकृतटीका।

अहिंसापरमोधर्मोभिक्षाशनञ्चेत्येवंलक्षणयाबुद्धयायुद्धवैमुख्यमर्जुनस्यश्रुत्वास्वपुत्राणांराज्यैश्वर्य्यमप्रचलितमवधार्य्यस्वस्थहृदयंधृतराष्ट्रंदृष्ट्वातस्यदुराशामपनेष्यामीतिमनीषयासञ्जयस्तंप्रत्युक्तवानित्याह सञ्जयइति परमेश्वरेणस्यार्य्यमाणोपिकृत्याकृत्येसहसानार्जुनः सस्मारविपर्य्ययप्रयुक्तस्यशोकस्यदृढतरमोहहेतुत्वात्तथापितंभगवान्नोपेक्षितवानित्याह तन्तथेति तंप्रकृतंपार्थंतथास्वजनमरणप्रसङ्गदर्शनेनकृपयाकरुणयाविष्टमधिष्ठितमश्रुभिः पूर्णेसमाकुलेचेक्षणेयस्यतं अश्रुव्याप्ततरलाक्षंविषीदन्तंशोचन्तमिदंवक्ष्यमाणंवाक्यं सोपपत्तिकंवचनंमधुनामानमसुरंसूदितवानितिमधुसूदनोभगवानुक्तवान्नतुयथोक्तमर्जुनमुपेक्षितवानित्यर्थः॥१॥

स्वामिकृतटीका।

द्वितीयेशोकसन्तप्तमर्जुनंब्रह्मविद्यया प्रतिबोध्यहरिश्चक्रेस्थितप्रज्ञस्यलक्षणं ततःकिंवृत्तमित्यपेक्षायां सञ्जयउवाच तंतथेति अश्रुभिःपूर्णेआकुलेईक्षणेयस्यतं तथाउक्तप्रकारेणविषीदन्तमर्जुनम्प्रतिमधुसूदनइदंवाक्यमुवाच॥१॥

भाषा अनुवाद।

अहिंसापरमधर्म्महै इससेभिक्षाकरिनिर्वाहकरनाउचितहै सञ्जकेमुखसे ऐसीबातेंअर्जुनकीकहीसुनिऔरयुद्धसेविमुखजानिअपनेपुत्रोंकाअचलराज्यमानिमनप्रसन्नस्वस्थहृदयराजधृतराष्ट्रकोदेखिफेरिसञ्जयधृतराष्ट्रकीउसदुष्टआशाकोदूरकरतेयहबोलेहेराजनइसप्रकारकृपायुक्तअश्रुधारापूर्णलोचनविषादकरतेहुयेअर्जुनसेदुःखमोचनश्रीभवानब्रह्मविद्याजोज्ञानतिससेंप्रबोधकरतयहवचनकहतेभये॥१॥

श्रीभगवानुवाच ।

कुतस्त्वाकश्मलमिदंविषमेसमुपस्थितं अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन २
माक्लैव्यंगच्छकौन्तेयनैतत्त्वय्युपपद्यते क्षुद्रंहृदयदौर्बल्यंत्यक्त्वोत्तिष्ठपरन्तप ३

आनन्दगिरिकृतटीका ।

किन्तद्वाक्यमित्यपेक्षायामाह श्रीभगवानिति कुतोहेतोस्त्वात्वांसर्वंक्षत्रियप्रवरं कश्मलंमलिनंशिष्टगर्हितंयुद्धात्पराङ्मुखत्वंविषमेसभयस्थानेसमुपस्थितंप्राप्तमनार्यैःशास्त्रार्थमविद्भिर्जुष्टंसेवितमस्वर्ग्यंस्वर्गानर्हंप्रत्यवायकारणमिहचाकीर्त्तिकरमयशस्करमर्जुननाम्नाप्रख्यातस्यतवनैतत्युक्तमित्यर्थः॥२॥ पुनरपिभगवानर्जुनंप्रत्याह क्लैव्यमिति क्लैव्यंक्लीवभावमधैर्यंमास्मगमःमागाः हेपार्थपृथातनयनहित्वयिमहेश्वरेणापिकृताहवेप्रख्यातपौरुषेमहामहिमन्येतदुपपद्यते क्षुद्रंक्षुद्रत्वकारणंहृदयदौर्बल्यंमनसोदुर्बलत्वमधैर्यंत्यक्त्वोत्तिष्ठयुद्धायोपक्रमंकुरु हेपरन्तपपरंशत्रुन्तापयतीतितथासम्बोध्यते ॥३॥

स्वामिकृतटीका

तदेववाक्यमाह कुतइति कुतोहेतोस्त्वात्वांविषमेसङ्कटेइदंकश्मलमुपस्थितसयंमोहःप्राप्तोयतआर्यैरसेवितमस्वर्ग्यमधर्म्यमयशस्करञ्च २ माक्लैव्यमिति तस्मात् हेपार्थक्लैव्यंकातर्यंमागच्छनप्राप्नुहियतस्त्वय्येतन्नोपपद्यतेयोग्यंनभवतिक्षुद्रंतुच्छंहृदयदौर्बल्यंकातर्यंत्यक्त्वायुद्धायोत्तिष्ठ हेपरन्तपशत्रुतापन् ॥३॥

भाषाअनुवाद ।

अर्जुनकोकातरदेखियहवचनश्रीकृष्णवोलेकिहेअर्जुनऐसेअसमयमेलड़ाइकेवीच मूरखकायरशास्त्रहीनमनुष्योंकेयोग्यजोलोकमेदुर्यशकरनेवालाकर्महै औरअस्वर्ग्यजिससेस्वर्गजायऔरनरकमिलैऐसाकश्मलकहेमोह अर्जुनइसनामसेभूतलप्रसिद्धवीरतुमऐसेकोआयकरप्राप्तऊआयहवड़ाहीआचरजहै॥२॥फेरभीभगवान अर्जुनसेकहतेहैं किहेपरन्तपशत्रुसंहारकरनेवालेअर्जुनहेकौन्तेयकुन्तीपुत्त्रवीरभावछोड़इसक्लीवकहेनपुंसककेभावकोनगहोयहतुमारेयोग्यनहींहै इसआचरनमेतुमारीशोभाजगतमेकुछनहींइससेइसक्षुद्रकहे तुच्छहृदयकीदुर्बलताकहेकादरपनकोछोड़करउठोऔरधीरजधरिसमैकेअनुसारकार्यकरो कुन्तीपुत्त्रसम्बोधनभेजनायाकिमातृस्वभावकन्याकोहोतापुत्त्रकोपितृस्वभावहीउचितहैऔपरन्तपसेसोचायाकिउठकरशत्रुवोंकोमारलोतुमअनेकवारसंग्राममेजयपायेहो॥३॥

अर्जुनउवाच।

कथंभीष्ममहंसंख्येद्रोणञ्चमधुसूदन इषुभिःप्रतियोत्स्यामिपूजार्हावरिसूदन ४

## आनन्दगिरिकृतटीका।

एवंभगवताप्रतिबोध्यमानोपिशोकाभिभूतचेतस्त्वादप्रतिबुध्यमानःसन्नर्जुनःस्वाभि
प्रायमेवप्रकृतंभगवन्तंप्रत्युक्तवान्कथमित्यादिनाभीष्मंपितामहंद्रोणञ्चाचार्य्यंसंख्येर
णेहेमधुसूदनइषुभिःयत्रवाचापियोत्स्यामीतिवक्तुमनुचितंतत्रकथंबाणैर्योत्स्यइति
भावः सायकैस्तेकथंप्रतियोत्स्येतौहिपूजार्हौकुसुमादिभिरर्चनयोग्यौहेअरिसूदन
सर्व्वानेवारीन्यत्नेनसूदितवानितिभगवानेवंसम्बोध्यते ४ राज्ञाधर्म्मेपियुद्धेगुर्व्वादिव
धेदृष्टमात्रफलत्वंगृहीत्वापापमारोप्यब्रूतेगुरूनितिगुरून्भीष्मद्रोणादीन्श्रावादीं
श्चात्रप्राप्तान्अहिंसित्वामहानुभावान्महामाहात्म्यान्श्रुताध्ययनसम्पन्नान्श्रेयःप्र
शस्यतरंयुक्तंभोक्तुमभ्यवहर्तुंभैक्ष्यंभिक्षाणांसमूहंभिक्षाशनंनृपादीनांनिषिद्धमपिइह

## स्वामिकृतटीका।

नाहंकातरत्वेनयुद्धादुपरतोऽस्मिकिन्तुयुद्धस्यान्याय्यत्वादधर्मत्वाच्चेत्याह अर्जुन
उवाच कथमिति भीष्मद्रोणौपूजार्हौपूजायाम्हौयोग्यौतौप्रतिकथमहंयोत्स्या
मितत्रापीषुभिर्यत्रवाचापियोत्स्यामीतिवक्तुमनुचितंतत्रबाणैः कथंयोत्स्यामीत्यर्थः
हेअरिसूदनशत्रुविमर्दन ४ नहितानहत्वातवदेहयात्रापिनस्यादितिचेत्तत्राहगुरू
निति गुरून्द्रोणाचार्य्यादीनहत्वापरलोकविरुद्धगुरुवधमकृत्वेहलोकेभिक्षान्नम
पिभोक्तुंश्रेयउचितंविपक्षेतुनकेवलंपरत्रदुःखंकिन्त्विहैवच नरकदुःखमनुभवेयमि
त्याह हत्वेति गुरून्हत्वेहैवरुधिरेणप्रदिग्धान्प्रकर्षेणलिप्तान्अर्थकामात्मकान्

## भाषा अनुवाद।

इसप्रकारभगवतसेप्रबोधकरायेभीगयेअर्जुनतौभीशोकग्रस्तअपनेमनकाम
नोरथप्रकाशकरतेभये कृष्णभगवानसेफेरकहनेलगेकिहेमधुसूदनपूजाकरने
केयोग्यजोभीष्मपितामहऔरद्रोणाचार्य्यतिनसेसंग्राममेबाणोंसेकैसेयुद्धकरेंऔउ
नकोमारैंजिनसेवचनसेभीसंग्रामकरनेकीबातनहींकरसकतेहैं हेअरिसूदनक
हेशत्रुनाशनअभिप्राययहकियतकहेंउपायसेशत्रुनाशकरनेवाले॥ ४ ॥ फेरभीअर्जु
नकहतेहैं कियद्यपियुद्धकरनाराजोंकाधर्महै तौभीलोभसेजीविकाहीकेअर्थवे
अनर्थरूपपापकरतेहैं औरजोकहोकिइनलोगोंकोविनामारेतुमारीदेहयात्रा
कहेजीवनवृत्तिभोजनवस्त्रभीनचलेगानिर्व्वाहकहोकैसेसंसारमेहोगाइसबातपर

गुरूनहत्वाहिमहानुभावान्श्रेयोभोक्तुंभैक्ष्यमपीहलोके हत्वार्थकामांस्तुगुरूनिहैव भुञ्जीयभोगान्रुधिरप्रदिग्धान्५

## आनन्दगिरिकृतटीका।

लोकेव्यवहारभूमौनहिगुर्वादिहिंसयाराज्यभोगोऽपेक्ष्यतेकिञ्चहत्वागुर्वादीनर्थ कामानेवभुञ्जीयनमोक्षमनुभवेयमिहैवभोगोनस्वर्गे अर्थकामानेवविशिनष्टिभो गानितिभुज्यन्तइतिभोगास्तान्रुधिरप्रदिग्धान्लोहितलिप्तानिवात्यन्तगर्हितानतो भोगान्गुरुवधादिसाध्यान्परित्यज्यभिक्षासनमेवयुक्तमित्यर्थः५॥क्षत्रियाणांस्वधर्म त्वाद्युद्धमेवश्रेयस्करमित्याशङ्क्याह नचैतदिति एतदपिनजानीमोभैक्ष्ययुद्धयोःक तरन्नोऽस्माकंगरीयःश्रेष्ठंकिंभैक्ष्यंहिंसाशून्यत्वादुतयुद्धंस्वष्टत्तित्वादितिसन्दिग्धाच जयस्थितिःकिंसाम्यमेवोभयेषांयद्वावयंजयेमातिशयेमहियद्विवानोऽस्मान्धार्त्तरा ष्ट्राद्दुर्य्योधनादयोजयेयुःजातोपिजयोनफलवान्यतोयान्बन्धून्हत्वानजिजीविषा मोजीवितुंनेच्छामस्तेएवावस्थिताःप्रमुखेसम्मुखेधार्त्तराष्ट्राधृतराष्ट्रस्यापत्यानितस्मा

## स्वामिकृतटीका।

भोगानभुञ्जीयाशीयांयद्वाअर्थकामानितिगुरूणांविशेषणंअर्थतृष्णाकुलत्वादेतेताव द्युद्धान्ननिवर्त्तेरंस्तस्मादेतद्वधःप्रसज्येतैवेत्यर्थः तथाचयुधिष्ठिरंप्रतिभीष्मेणोक्तं अर्थ स्यपुरुषोदासोदासस्त्वर्थोनकस्यचित् इतिसत्यंमहाराजबद्धोस्म्यर्थेनकौरवैरिति॥५॥

किञ्चयद्यधर्ममङ्गीकरिष्यामस्तथापिकिमस्माकंजयःपराजयोवागरीयान्भवे दितिनज्ञायतइत्याहनचैतदितिद्वयोर्मध्येनोऽस्माकंकतरत्किन्नामगरीयोऽधिकतरंभ विष्यतीतिनविद्मःतदेवद्वयंदर्शयतियद्वेतियद्वाएतान्वयंजयेमजेष्यामःयदिवानोऽस्मा

## भाषा अनुवाद।

कहतेहैंकिजिसलियेमहानुभावमहात्मागुरुलोगोंकोनमारकेभीषमांगखानाभीमे रेजानलोकमेंश्रेयकहेअतिउत्तमकल्यानरूपहै औरनहींगुरुआदिवडेलोगोंको मारिउनकेलोहूसेलपेटेभोगहमचाहतेक्योंकिजोकहोकिपरलोकमेंजोहोगासोहो गाकिसनेदेखातोपरलोकहीमेंदुःखनहींहैयहांभीदुर्यशओसन्तापरूपदुःखहैऔर जोकहोकिलोकमेंतोसुखमिलेगातोतुच्छसुखकेहेतुमुक्तिऔरस्वर्गलोकमेंयशकौन छोड़ेगा॥५॥औरजोहमअधर्मअङ्गीकारकरैंतौभीतोहमारीजययापराजयहोगो यहभीहमनहींजानतेहैंकिदोनोंमेंसेक्याहोगासोईकहतेहैंकिहोयहमीरणमेंउन कोजीतलेंनतुवावेहीसवहमेंजीतैंपरन्तुहमारीजीतहोनेसेभीविचारदेखोकिवहह

नचैतद्विद्मःकरतन्नोगरीयोयद्वाजयेमयदिवानोजयेयुः यानेवहत्वानजिजीविषामस्तेऽवस्थिताः प्रमुखेधार्त्तराष्ट्राः ६ कार्पण्यदोषोपहतस्वभावःपृच्छामित्वांधर्मसम्मूढचेताः यच्छ्रेयःस्यान्निश्चितंब्रूहितन्मेशिष्यस्तेऽहंशाधिमांत्वांप्रपन्नं ७

## आनन्दगिरिकृतटीका।

नैच्याद्युद्धस्यश्रेष्ठत्वंनसिद्धमित्यर्थः ॥६॥ समधिगतसंसारदोषजातस्यातितरांनिर्विण्णस्यमुमुक्षोरुपसन्नस्यात्मोपदेशसंग्रहणेऽधिकारंसूचयति कार्पण्येति योऽल्पांस्वल्पामपिस्वक्षतिंनक्षमतेसकृपणस्तद्विधत्वादखिलोऽनात्मविदप्राप्तपरमपुरुषार्थतयाकृपणोभवतियोवाएतदक्षरंगार्ग्यविदित्वास्माल्लोकात्प्रैतिसकृपणइतिश्रुतेः तस्यभावःकार्पण्यंदैन्यंतेनदोषेणापहतोदूषितःस्वभावश्चित्तमस्येतिविग्रहः सोऽहंपृच्छाम्यनुयुञ्जेत्वात्वांधर्मसंमूढचेताःधर्मोधारयतीतिपरंब्रह्मतस्मिन्संमूढमविवेकतांगतंचेतोयस्यसमेतितथाहमुक्तःकिंपृच्छसियन्निश्चितमैकान्तिकमनापेक्षिकंश्रेयःस्यान्नरोगनिवृत्तिवदनैकान्तिकमनात्यन्तिकं स्वर्गवदापेक्षिकंवातन्निःश्रेयसंमेमह्यंप्रब्रूहिनापुत्रायाशिष्यायेतिनिषेधात्नप्रवक्तव्यमिति मामंस्थाःयतःशिष्यस्तेऽहं

## स्वामिकृतटीका।

नैतेजयेयुर्जेष्यन्तीति किन्त्वस्माकंजयोऽपिफलतःपराजयएवेत्याह यानिति यानेवहत्वाजीवितुंनेच्छामस्तएवैतेसम्मुखेऽवस्थिताः ॥६॥ कार्पण्येत्यादि तस्मादेतान्हत्वाकथंजीविष्यामइतिकार्पण्यंदोषःकुलक्षयकृतः ताभ्यामुपहतोऽभिभूतःस्वभावःशौर्य्यलक्षणोयस्यसोऽहंत्वांपृच्छामितथाधर्मेसंमूढंचेतोयस्यसःयुद्धंत्यक्त्वाभिक्षाटनमपिक्षत्रियस्यधर्मोऽधर्मोवेतिसन्दिग्धचित्तःसन्नित्यर्थःअतोमेयन्निश्चितंश्रेयःस्यात्तद्ब्रूहिकिञ्चतेऽहंशिष्यःशासनार्होऽतस्त्वांप्रपन्नंशरणागतंमांशाधिशिक्षय ॥७॥

## भाषा अनुवाद।

मारीहारहीहैक्योंकिजिनकोनाशकरिकेहमऔरसंसारमेप्राणधारणकरनानहींचाहतेसोईधृतराष्ट्रकेपुत्रसबरणभूमिमेंहमारेसामनेयुद्धकेअर्थखडेहैंइनकुटुम्बकेलोगोंकावधकरिकेअपनेप्राणकैसेकरिराखैंगेइसचिन्ताकोकार्पण्यकहतेऔरदोषजोकुलक्षयकृतपापहै यहीदोनोवातोंसेहमारीशूरतानष्टहोगईइससेधर्मविचारमेंहमारीबुद्धिभ्रष्टहैं किसंग्रामछोड़भिक्षान्नभोजनकरनाक्षत्रियकोउचितकिअनुचितइससन्देहसेव्याकुलहोहमआपसेपूछतेहैं किजिससेअत्यन्तपरमकल्याणहमाराहोसोआपकृपाकरिकहोक्योंकिहमआपकेशिष्यऔशरणागतहैं शरणागतपरदयाकरनामहात्माकोउचितहै ॥७॥

नहिप्रपश्यामिममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणां अवाप्यभूमावसपत्नमृद्धं राज्यंसुराणामपिचाधिपत्यं॥८॥ सञ्जयउवाचएवमुक्त्वाहृषीकेशंगुडाकेशःपरन्तपः नयोत्स्यइतिगोविन्दमुक्त्वातूष्णींबभूवह ॥९॥

## आनन्दगिरिकृतटीका ।

भवाभिशाध्यनुशाधिमांनिःश्रेयसंत्वामहंप्रपन्नोस्मि॥७॥कुतोनिःश्रेयसमवेच्छसितत्राह नहीति तस्मान्नप्रपश्यामिकिंनप्रपश्यसिसमापनुद्यादपनयेत्यच्छोकमुच्छोषणंप्रतपनमिन्द्रियाणांतन्नपश्यामि ननुशत्रून्निहत्यराज्येप्राप्तेशोकनिवृत्तिस्तेभविष्यतिनेत्याह अवाप्येति अविद्यमानःसपत्नःशत्रुर्यस्यतदृद्धंराज्यंराज्ञःकर्मप्रजारक्षणप्रशासनादितदिदमस्यांभूमाववाप्यापिशोकापनयकारणंनपश्यामीत्यर्थःतर्हिदेवेन्द्रत्वादिप्राप्तौशोकापनयस्तेभविष्यतिनेत्याह सुराणामपीति तेषामाधिपत्यं अधिपतित्वंस्वाम्यमिन्द्रत्वंब्रह्मत्वंवातदवाप्यापिममशोकोनापगच्छेदित्यर्थः॥८॥

एवमर्ज्जुनेनस्वाभिप्रायंभगवन्तंप्रतिप्रकाशितंसञ्जयोराजानमावेदितवानित्याह सञ्जयइति एवम्प्रागुक्तप्रकारेणभगवन्तंप्रत्युक्त्वापरन्तपोऽर्ज्जुनेनयोत्स्येनसम्प्रहरिष्येअत्यन्तासक्त्याशोकप्रसङ्गादितिगोविन्दमुक्त्वातूष्णीमब्रुवन्बभूवकिलेत्यर्थः॥९॥

## स्वामिकृतटीका ।

त्वमेवविचार्य्ययद्युक्तंतत्कुर्व्वितिचेत्तत्राह नहिप्रपश्यामीति इन्द्रियाणामुच्छोषणमतिशोषकरंमदीयंशोकंयत्कर्म्मअपनुद्यापनयेत्तदहंनपश्यामीतियद्यपिभूमौनिष्कण्टकंसमृद्धंराज्यंप्राप्स्यामितथासुरेन्द्रत्वमपियदिप्राप्स्यामि एवमभीष्टंतत्सर्व्वमवाप्यापिशोकापनोदनोपायंनप्रपश्यामीत्यर्थः॥८॥ एवमुक्त्वार्ज्जुनःकिंकृतवानित्यपेक्षायां सञ्जयउवाच एवमिति ॥९॥

## भाषा अनुवाद ।

जोकहोकितुमीविचारकरकेजोकरनेयोग्यहोसोकरोतिसपरकहतेहैं कि इन्द्रियोंकीचैतन्यशक्तिकानाशकरनेवालाजोयहशोकहमैंआयकेप्राप्तभयाहै सो किसीउपायसेदूरहोगायहहमकिसीभांतिनहींदेखतेहैं औरयद्यपिहमनिष्कण्टकपृथिवीभरकाराज्यकरैंयादेवाधिपत्यकहेस्वर्गराज्यइन्द्रपदप्राप्तकरैं तौभीइसशोकसागरकेपारजानेकीउपायहमनहींदेखतेहैं॥८॥इसप्राकारकीवातेंभगवानसेकहकरअर्ज्जुननेफेरक्याकियासोसञ्जयधृतराष्ट्रसेकहतेहैंकिनिद्राविजयीशत्रुनाशनधनंजयअर्ज्जुनभगवानसेकहाकिहेगोविन्दहमयुद्धनकरेंगेजोहोयसोहोययहकहिकरमौनहीरहे॥९॥

तमुवाचहृषीकेशःप्रहसन्निवभारत सेनयोरुभयोर्मध्येविषीदन्तमिदंवचः १०

श्रीभगवानुवाच।

शाङ्करभाष्यम्।

दृष्ट्वातुपाण्डवानीकमित्यारभ्यनयोत्स्यइतिगोविन्दमुक्त्वातूष्णींबभूवहेत्येतदन्तः प्राणिनां शोकमोहादिसंसारदुःखबीजभूतदोषोद्भवकारणहेतुप्रदर्शनार्थत्वेनव्याख्येयोग्रन्थस्तथाह्यर्जुनेनराज्यगुरुपुत्त्रमित्रसुहृत्स्वजनसम्बन्धिबान्धवेष्वहमेषांममैतेइत्येवंभ्रान्तिप्रत्ययनिमित्तस्नेहविच्छेदादिनिमित्तावात्मनःशोकमोहौप्रदर्शितौ कथंभीष्ममहंसङ्ख्येइत्यादिना शोकमोहाभ्यांह्यभिभूतविवेकविज्ञानःस्वतएवक्षात्रधर्मेयुद्धेप्रवृत्तोपि तस्माद्युद्धादुपरराम परधर्मञ्चभिक्षाजीवनादिकंकर्तुंप्रववृते

आनन्दगिरिकृतटीका।

तमर्जुनंसेनयोर्व्रीहिन्योरुभयोर्मध्येविषीदन्तंविषादंकुर्वन्तमतिदुःखितंशोकमोहाभ्यांअभिभूतंस्वधर्मात् प्रच्युतप्रायंप्रतीत्यप्रहसन्निवोपहासंकुर्वन्निव तदाश्वासार्थंहेभारतभारतान्वयइत्येवंसम्बोध्यभगवानिदंप्रश्नोत्तरंनिःश्रेयसाधिगमसाधनंवचनमूचिवानित्याह तमुवाचेति ॥१०॥

तदेववचनमुदाहरतिश्रीभगवानितिअतीतसन्दर्भस्येत्थमक्षरोत्थमर्थंविवक्षित्वातस्मिन्नेववाक्यविभागमवगमयतिदृष्ट्वात्विति धर्मक्षेत्रेकुरुक्षेत्रेइत्यादिराद्यश्लोकस्तावदेकंवाक्यंशास्त्रस्यकथासम्बन्धपरत्वेनपर्य्यवसानात्दृष्ट्वेत्यारभ्ययावत्तूष्णींबभूवहेतितावच्चैकंवाक्यंइतआरभ्यइदंवचइत्येतदन्तोग्रन्थोभवत्यपरंवाक्यमितिविभागः नन्वाद्यश्लोकस्ययुक्तमेकवाक्यत्वंप्रकृतशास्त्रस्यमहाभारतेऽवतारावद्योतितत्वादन्ति

स्वामिकृतटीका।

ततःकिंवृत्तमित्यतआह तमुवाचेति प्रसन्नमुखःसन्नित्यर्थः ॥१०॥

भाषा अनुवाद।

तिसकेअनन्तरक्याभयासोकहतेहैं किदोनोसेनाकेवीचमेविषादकोप्राप्तभयेअर्जुनकोसम्बोधनकरिभगवानहंसतेहुयेवक्ष्यमाणयेवचनकहनेलगेहेभारतधृतराष्ट्र॥ १०॥ यहग्रन्थप्रथमअध्यायकेप्रथमश्लोकसेलेकरऔरद्वितीयअध्यायकेदशवेंश्लोकतकजोतीनवाक्यहैं तिसकेमध्यसेप्रथमअध्यायकेदूसरेश्लोकसेलेकेद्वितीयअध्यायकेनववेंश्लोकपर्य्यन्तवाक्यव्याख्याकरनेकेयोग्यहै क्योंकिउसमेप्राणियोंकासंसारिकदुःखकाकारणभूतशोकमोहादिरूपदोषकीउत्पत्तिकाहेतुअहङ्कारकाकारणरूपअविद्यावर्णनकीहै औरराज्यआदिमेममतारूपभ्रान्तिज्ञाननिमित्तस्नेह

## शाङ्करभाष्यम्।

तथाचसर्व्वप्राणिनां शोकमोहादिदोषाविष्टचेतसांस्वभावतएवस्वधर्मपरित्यागःप्रतिषिद्धसेवाचस्यात् स्वधर्मेप्रवृत्तानामपितेषांवाङ्मनःकायादीनांप्रवृत्तिःफलाभिसन्धिपूर्व्विकैवसाहङ्काराचभवतितत्रैवंसतिधर्माधर्मोपचयादिष्टानिष्टजन्मसुखदुःखादिप्राप्तिलक्षणःसंसारोऽनुपरतोभवतीतिअतःसंसारवीजभूतौशोकमोहौतयोश्च सर्व्वकर्मसंन्यासपूर्व्वकादात्मज्ञानात्नान्यतोनिवृत्तिरिति तदुपदिदिक्षुःसर्व्वलोकानुग्रहार्थंअर्जुनंनिमित्तीकृत्याह भगवान्वासुदेवःअशोच्यानित्यादि।

## आनन्दगिरिकृतटीका।

मध्यापिसम्भवत्येकवाक्यत्वमर्जुनम्वासार्थतयाप्रवृत्तत्वादित्याहप्राणिनामिति शोकोमानसस्तापोमोहोविवेकाभावआदिशब्दस्तदवान्तरभेदार्थःसएवसंसारस्य दुःखात्मनोवीजभूतोदोषस्तस्योद्भावेकारणमहङ्कारोममकारस्तद्धेतुरविद्याचतत्प्रदर्शनार्थत्वेनेतियोजना संगृहीतमर्थंविवृणोतितथाहीति राज्यंराज्ञःकर्मपरिपालनादिपूजार्हागुरवोद्रोणादयःपुत्राःस्वेनोत्पादिताःसौभद्रादयःसम्बन्धान्तरमन्तरेणस्नेहगोचरागुरुपुत्रप्रभृतयोमित्रशब्देनोच्यन्तेउपकारनिरपेक्षतया स्वयमुपकारिणोहृदयानुरागभाजोभगवत्प्रमुखाःसुहृदःस्वजनाज्ञातयोदुर्य्योधनादयः सम्बन्धिनःश्वशुरश्यालप्रभृतयोद्रुपदधृष्टद्युम्नादयःपरम्परयापितृपितामहादिष्वनुरागभाजोराजानोबान्धवास्तेषुयथोक्तंप्रत्ययंनिमित्तीकृत्ययः स्नेहोयश्चतैःसहविच्छेदेचक्रे तेषामुपावातेपातकंयाचलोकगर्हासर्व्वंतन्निमित्तंययोरात्मनःशोकमोहयोस्तावेतौसंसारवीजभूतौकथमित्यादिनादर्शितावित्यर्थःकथंपुनरनयोःसंसारवीजयोरर्ज्जुनेसम्भा

## भाषा अनुवाद।

औउसकेवियोगसेउत्पन्नस्नेहमोहभीदेखायाहै अर्जुनअपनाक्षत्रियकाजोधर्मयुद्ध करनातिसमेआपहीप्रवृत्तहोकेभीजिसशोकमोहकेद्वारा विवेकज्ञानसेरहितहोकरयुद्धसेविरतऔरपरधर्मभिक्षामेप्रवृत्तभयेथे ठीकहैशोकमोहयुक्तप्राणीसावकृधास्वधर्मछोड़परधर्मअङ्गीकारकरलेतेहैं जोस्वधर्ममेंप्रवृत्तहैं वेभीफलकीकामनासेअहङ्कारपूर्व्वकप्रवृत्तहोतेहैं ॥ उससेधर्मअधर्मकीप्रबलताकेहेतुउत्तमअधमजोनिमेजन्मऔरसुखदुःखआदिप्राप्तिरूपसंसारकिसीप्रकारछूटतानहींइससेशोकमोहयेदोनोसंसारकेकारणहैंकेवलसंन्यासपूर्व्वकआत्मज्ञाननिष्ठाकेविनाशोकमोहकेनिवारनकीऔर उपायनदेखिभगवानवासुदेवलोककेउपरअनुग्र

शाङ्करभाष्यम्।

तत्रकेचिदाहुः सर्व्वकर्मसंन्यासपूर्व्वकादात्मज्ञाननिष्ठामात्रादेवकेवलात्कैव ल्यंनप्राप्यतएवकिंतर्ह्यग्निहोत्रादिश्रौतस्मार्त्तकर्मसहितात् ज्ञानात्कैवल्यप्राप्तिरि

आनन्दगिरिकृतटीका।

वनाउपपद्यतेनहिप्रथितमहामहिम्नोविवेकविज्ञानवतः स्वधर्मप्रवृत्तस्यतस्यशोक मोहावनर्थहेतूसम्भावितावित्याशङ्क्याविवेकतिरस्कारेणतयोर्व्विहिताकरणप्रतिषि द्धाचरणकारणत्वादनर्थाधायकयोरस्तितस्मिन्सम्भावनेत्याह शोकमोहाभ्यामिति भिक्षयाजीवनंप्राणधारणमादिशब्दाद्भेषकर्मसन्नासलक्षणंपरिव्राज्यमात्माभिध्य नमित्यादिगृह्यतेकिञ्चार्ज्जुनेदृश्यमानौशोकमोहौसंसारवीजंशोकमोहत्वादस्मदा दिनिष्ठशोकमोहवदित्युपलब्धौशोकमोहौप्रत्येकंपञ्चीकृत्यानुमातव्यमित्याहतथाचेति शोकमोहादीत्यादिशब्देनमिथ्याभिमानस्नेहगर्हादयो गृह्यन्तेस्वभावतश्चित्तदोष सामर्थ्यादित्यर्थः अस्मदादीनामपिस्वधर्मप्रवृत्तानांविहिताकरणत्वाद्यभावान्नशो कादेःसंसारवीजत्वंतद्दृष्टान्तस्यसाध्यविकलतेतिचेत्तत्राह स्वधर्मइति कामादीना मित्यादिशब्दादविशिष्टानीन्द्रियाण्यादीयन्तेफलाभिसन्धिस्तद्विषयेऽभिलाषःकर्तृ त्वभोक्तृत्वाभिमानोऽहङ्कारः प्रागुक्तप्रकारेणवागादिव्यापारेसतिकिंसिध्यतितत्रा हतत्रेति शुभकर्म्मानुष्ठानेनधर्म्मोपचयादिष्टंदेवादिजन्मततःसुखप्राप्तिःअशुभकर्मा नुष्ठानेनाधर्म्मोपचयादनिष्टंतिर्य्यगादिजन्मततोदुःखप्राप्तिःव्यामिश्रकर्म्मानुष्ठानादु भाभ्यांधर्म्माधर्म्माभ्यांमनुष्यजन्मततःसुखदुःखेभवतः एवमात्मकःसंसारसन्ततोवर्त्त तइत्यर्थः अर्ज्जुनस्यान्येषाञ्चशोकमोहयोःसंसारवीजत्वमुपपादितमुपसंहरति इत्य तइति तदेवंप्रथमाध्यायस्यद्वितीयाध्यायैकदेशसहितस्यात्मज्ञानोत्थनिवर्त्तनीयशो कमोहाख्यसंसारवीजप्रदर्शनपरत्वंदर्शयित्वावक्ष्यमाणसन्दर्भस्यसहेतुसंसारनिव र्त्तकसम्यक्ज्ञानोपदेशेतात्पर्य्यंदर्शयति तयोश्चेति तद्यथोक्तंज्ञानमुपदिदिक्षुरूपदे ष्टुमिच्छन्भगवानाहेति सम्बन्धः सर्व्वलोकानुग्रहार्थंयथोक्तंज्ञानंभगवानुपदिदि

भाषा अनुवाद।

हकरिअर्ज्जुनकोउपलक्षकरिकेइसगीताशास्त्रमेंसोईज्ञाननिष्ठाकाउपदेशकरतेहैं

इसविषयमेंकोईकहतेहैंकिसर्व्वकर्मपरित्यागकरिकेकेवलआत्मज्ञानसेमुक्ति नहींहोतीपरन्तुश्रुतिस्मृतिविहितकर्मनिष्ठाकेसहितजोतत्त्वज्ञाननिष्ठाउससेकैव ल्यप्राप्तिहोतीहै इसमेंप्रमाणइसीगीताकेदूसरेअध्यायमें ३३।४७ आदिश्लोकोंसे कहाहैऔरयुद्धआदिकर्मभीक्षत्रीकोअधर्मनहींवल्कउसकेनकरनेसेदोषहैयहभी

शाङ्करभाष्यम्।

तिसर्वासुगीतासुनिश्चितोऽर्थइति ज्ञापकञ्चाङ्करस्यार्थस्य अथचेत्त्वमिमंधर्म्यंसंग्रा
मंनकरिष्यसि कर्मण्येवाधिकारस्तेकुरुकर्मैवतस्मात्त्वमित्यादि हिंसादियुक्तत्वाद्दै
दिकंकर्मअधर्मायेतीयमप्याशङ्कानकार्य्याकथंचलंकर्मयुद्धलक्षणं गुरुभ्रातृपुत्रादि

आनन्दगिरिकृतटीका।

क्षतीत्ययुक्तंअर्ज्जुनंप्रत्येवोपदेशादित्याशङ्क्याह अर्जुनमिति नहितस्यामवस्थायाम
र्जुनस्यभगवतोयथोक्तज्ञानमुपदेष्टुमिष्टंकिन्तुस्वधर्मानुष्ठानाद्बुद्धिशुद्ध्युत्तरकालमित्य
भिप्रेत्योक्तंनिमित्तोक्त्येति।

सर्व्वकर्मसन्न्यासपूर्व्वकादात्मज्ञानादेवकेवलात्कैवल्यप्राप्तिरिति गीताशास्त्रार्थः
स्वाभिप्रेतोव्याख्यातःसम्प्रतिवृत्तिकृतामभिप्रेतंनिरसितुमनुवदति तत्रेति निर्द्धा
रितशास्त्रार्थःसतिसप्तम्यापराम्‌ष्यतेतेषामुक्तिमेवविवृण्वन्नादौसैद्धान्तिकमभ्युप
गमंप्रत्यादिशतिसर्व्वकर्मेति वैदिकेनकर्मणासमुच्चयंव्युदसितुंसावपदंस्मार्त्तेनकर्म
णासमुच्चयंनिरसितुमवधारणं अध्यासस्सम्बन्धंधुनीतेकेवलादिति नैवेत्येवकारःस
म्बध्यते केनतर्हिप्रकारेणज्ञानंकैवल्यप्राप्तिकारणमित्याशङ्क्याह किंतर्हीति किं
तत्रप्रमापकमित्याशङ्क्यइदमेवशास्त्रमित्याह इतिसर्व्वास्विति यथाप्रयाजानुयाजा
द्युपकृतमेवदर्शपूर्णमासादिस्वर्गसाधनंतथाश्रौतस्मार्त्तकर्मोपकृतमेवब्रह्मज्ञानंकैव
ल्यंसाधयतिविमतंसेतिकर्त्तव्यताकमेवस्वफलसाधकंकारणत्वाद्दर्शपौर्णमासादिवत्
तदेवंज्ञानकर्मसमुच्चयपरंशास्त्रमित्यर्थःइतिपदमाङ्करित्यनेनपूर्व्वेणसम्बध्यते पौ
र्व्वापर्य्यपर्य्यालोचनायांशास्त्रस्यसमुच्चयपरत्वंननिर्द्धारितमित्याशङ्क्याह ज्ञापक
ञ्चेति नकेवलंज्ञानंमुक्तिहेतुरपितुसमुच्चितमित्यस्यार्थस्यस्वधर्माननुष्ठानेपापप्रा
प्तिवचनसामर्थ्यलक्षणंलिङ्गंगमकमित्यर्थःशास्त्रस्यसमुच्चयपरत्वेलिङ्गवद्वाक्यमपिप्र
माणमित्याह कर्मण्येवेति तत्रैववाक्यान्तरमुदाहरति कुरुकर्मेति ननुनहिंस्यात्

भाषा अनुवाद।

इसीद्वितीयअध्यायके२२श्लोकमेंनिश्चयकरिकेकहाहै।

तोऊमरकीउक्तअभिप्रायअत्यन्तअसत्है जिसहेतुज्ञाननिष्ठाऔकर्मनिष्ठा
दोनोपृथक्पृथक्कहाहै अर्थात्इसीद्वितीयाध्यायके११श्लोकसेलेकर३१श्लोकतक
जोपरमार्थतत्त्वनिरूपणकियागयाहै तद्विषकबुद्धिकानामसांख्यबुद्धिऔरसोईबुद्धि
युक्तज्ञानीकोभीसांख्यकहतेहैं औरयहीसांख्यबुद्धिउत्पन्नहोनेकेपूर्व्वदेहादिव्यति
रिक्तकहेभिन्नजोआत्माउसकोकर्तृत्वआदिअपेक्षाकरिकेधर्मअधर्मविचारपूर्व्वक

## शाङ्करभाष्यं

हिंसादिलक्षणमत्यन्तक्रूरमपिस्वधर्म्मइतिकृत्वानाधर्म्मायतदकरणेचततःस्वधर्म्मंकीर्त्तिञ्चहित्वापापमेवाप्स्यसीतिब्रुवतायावज्जीवादिश्रुतिचोदितानांस्वकर्म्मणांपश्वादिहिंसालक्षणानाञ्चकर्मणांप्रागेवनाधर्मत्वमिति सुनिश्चितमुक्तंभवतीति।

## आनन्दगिरिकृतटीका।

सर्व्वभूतानिइत्यादिनाप्रतिसिद्धत्वेनहिंसादेरनर्थहेतुत्वावगमात्तदुपेतंवैदिकंकर्म्माधर्म्मायेतिनानुष्ठातुंशक्यतेतथाचतस्यसापेक्षज्ञानेनसमुच्चयोनसिध्यतीतिसांख्यमतमाशङ्क्यपरिहरतिहिंसादीति आदिशब्दादुच्छिष्टभक्षणंगृह्यतेयथोक्ताशङ्कानकर्त्तव्येत्यवाकांक्षापूर्व्वकंहेतुमाहकथमित्यादिना स्वशब्देनक्षत्रियोविवक्ष्यतेयुद्धाकरणेक्षत्रियस्यप्रत्यवायश्रवणात्तस्यतंप्रतिनित्यत्वेनावश्यकर्त्तव्यत्वंप्रतीतेर्गुर्व्वादिहिंसायुक्तमतिक्रूरमपिकर्मनाधर्मायेतिहेत्वन्तरमाहतदकरणेचेति आचार्य्यादिहिंसायुक्तमतिक्रूरमपियुद्धंनाधर्मायेतिब्रुवताभगवताश्रौतानांहिंसादियुक्तानामपिकर्मणांदूरतोनाधर्मत्वमितिस्पष्टमुपदिष्टंभवतिसामान्यशास्त्रस्यव्यर्थहिंसानिषेधार्थत्वात्क्रतुविषयेचोदितंहिंसायास्तदविषयत्वात्कुतोवैदिककर्मानुष्ठानानुपपत्तिरित्यर्थः ज्ञानकर्मसमुच्चयात्कैवल्यसिद्धिरित्युपसंहर्त्तुमितिशब्दः यत्तावद्ब्रह्मज्ञानंसेतिकर्त्तव्यताकंस्वफलसाधकंकरणत्वादितिअनुमानंतद्दूषयतितदसदितिनहिशुक्तिकादिज्ञानमज्ञाननिवृत्तौस्वफलेसहकारिकिञ्चिदपेक्षतेतथाचव्यभिचारादसाधकंकरणत्वमित्यर्थः यत्तुगीताशास्त्रेसमुच्चयस्यैवप्रतिपाद्यतेतिप्रतिज्ञातंतदपिविभागवचनविरुद्धमित्याहज्ञानेति सांख्यबुद्धिर्योगबुद्धिश्चेतिबुद्धिद्वयं तत्रसांख्यबुद्ध्याश्रयाज्ञाननिष्ठांव्याख्यातुंसांख्यशब्दार्थमाह अशोच्यानित्यादिनाइति अशोच्यानित्यादिनास्वधर्ममपिचावेक्ष्येत्येतदन्तंवाक्यंयावन्नविष्यतितावताग्रन्थेनयत्परमार्थभूतमात्मत

## भाषाअनुवाद।

बुद्धिहैसोईबुद्धियुक्तकर्मीपुरुषकोनामयोगीहैइसप्रकारउभयनिष्ठादिखाईहैंउनकेबीचसांख्यनामज्ञाननिष्ठाऔजोगरूपकर्मनिष्ठायेदोनोभीआगेपृथक२कहीजायंगीइसीमेंसांख्यंबुद्धिकाआश्रयज्ञाननिष्ठाऔयोगबुद्धिकाआश्रयकर्म्मनिष्ठायेदोनोनिष्ठाएककालमेंएकपुरुषकरकेअनुष्ठानकरनाकिसीप्रकारसंभवनहीं होतायहीशतपथब्राह्मणमेकहाहैं योंज्ञानऔकर्मसमुच्चयअभिप्रेतहोतोयेसबविभागवचनऔरकिसीप्रकारसंभवनहींहैं औरइसप्रकारअर्जुनकोप्रश्नभोठीकनहीं होतीहै

शाङ्करभाष्यं

तदसत्ज्ञानकर्मनिष्ठयोर्विभागवचनात्बुद्धिद्वयाश्रययोर्योच्यानित्यादिना ग्रन्थेनभगवतायावत्स्वधर्ममपिचावेक्ष्यत्येतदन्तेनग्रन्थेनयत्परमार्थात्मतत्त्वनिरूपणंकृतंतत्सांख्यंतद्विषयाबुद्धिरात्मनोजन्मादिषड्विक्रियाभावादकर्त्तात्मेतिप्रकरणार्थनिरूपणात्याजायतेसासांख्यबुद्धिः सायेषांज्ञानिनामुचिताभवतितेसांख्याः एतस्याबुद्धेर्जन्मनःप्रागात्मनोदेहादिव्यतिरिक्तत्वकर्त्तृत्वभोक्तृत्वाद्यपेक्षोधर्माधर्मविवेकपूर्वकोमोक्षसाधनानुष्ठाननिरूपणलक्षणोयोगः तद्विषयाबुद्धियोगबुद्धिःसायेषांकर्म्मिणामुचिताभवतितेयोगिनः तथाचभगवताविभक्तेद्वेबुद्धीनिर्दिष्टेएषातेऽभिहितासांख्येबुद्धिर्योगेत्विमांशृणुइति तयोश्चसांख्यबुद्ध्याश्रयांज्ञानयोगेननि

आनन्दगिरिकृतटीका ।

त्त्वंभगवतानिरूपितंतद्यथासम्यक्व्याख्यायतेप्रकाश्यतेसावैदिकीसम्यक्बुद्धिःसंख्यातयाप्रकाश्यत्वेनसम्बन्धिप्रमाणतंतत्त्वंसांख्यमित्यर्थः सांख्यशब्दार्थमुक्त्वातत्प्रकाशिकांबुद्धिंतद्वतश्चसांख्यान्व्याकरोति तद्विषयेति तद्विषयाबुद्धिःसांख्येबुद्धिरितिसम्बन्धःतामेवप्रकटयति आत्मनइति नजायतेम्रियतेवेत्यादिप्रकरणार्थनिरूपणद्वारेणात्मनःषड्भावविक्रियासम्बन्धवान्कूटस्थोसावितिसाबुद्धिरुत्पद्यतेसासांख्यबुद्धिःतत्परा सन्न्यासिनःसांख्याइत्यर्थः सम्प्रतियोगबुद्ध्याश्रयांकर्मनिष्ठांव्याख्यातुकामोयोगशब्दार्थमाह एतस्यादिति यथोक्तबुद्धेरुत्पत्तौविरोधादेवानुष्ठानायोगात्तस्यास्तन्निवर्त्तकत्वात्पूर्वमेवतदुत्पत्तेरात्मनश्चदेहादिव्यतिरिक्तत्वाद्यपेक्षयाधर्माधर्मविवेकपूर्वकस्तेनेश्वराराधनरूपेणकर्मणापुरुषोमोक्षाययुज्यतेयोग्यःसम्पद्यतेतेनमोक्षसिद्धये

स्वामिकृतटीका ।

देहात्मनोरविवेकात्अस्यैवंशोकोभवतीतितद्विवेकप्रदर्शनार्थंश्रीभगवानुवाच

भाषाअनुवाद ।

क्योंकिज्ञानऔ कर्म्मएककालएकपुरुषकोनितान्तअसंगतहैयहपूर्व्वंनकहनेसेअर्जुन किसप्रकारकर्म्मसेज्ञानकोश्रेष्ठजानिभगवान्सेमिथ्याआक्षेपकरेंगेऔरसर्व्वउपदेशमेंज्ञानऔकर्म्मदोनोंकेमध्यमेंजोश्रेयहोसोहमकोकहो इसप्रकारएकविषयकप्रश्नहीनहींबनसकताहै औरभगवतकेउक्तवचनकाअर्थनसमझकेअर्जुनऐसेप्रश्नकियेहोंतोभीभगवानकेऐसेप्रतिवचनसंभवहोतेनहीं चलोकास्वधर्म्म जोयुद्धरूपस्मृतिविहितकर्मंतिसकेसहितज्ञानसंपादनकरनाविहितकर्मनहीं क्योंकिसो

## शाङ्करभाष्यं

छांसांख्यानां विभक्तांवच्यतिपुरावेदात्मनामयाप्रोक्तेतितथाचयोगबुद्ध्याश्रयांकर्म योगेननिष्ठांविभक्तांञ्चवच्यतिकर्मयोगेनयोगिनामित्येवंसांख्यबुद्धिं योगबुद्धिञ्चा श्रित्यद्वेनिष्ठेविभक्तेभगवतैवोक्तेज्ञानकर्मणोः कर्तृत्वाकर्तृत्वैकत्वानेकत्वबुद्ध्याश्रय योरेकपुरुषाश्रयत्वासम्भवंपश्यता यथैतद्विभागवचनंतथैवदर्शितंशातपथीयेब्रा ह्मणेएतमेवप्रव्राजिनोलोकमिच्छन्तोब्राह्मणाःप्रव्रजन्तीतीसर्व्वकर्मसंन्यासंविधाय तच्छेषेणकिंप्रजयाकरिष्यामोयेषांनोऽयमात्मायंलोकइति तत्रैवचप्राग्दारपरि ग्रहात्पुरुषस्यात्माप्राकृतोधर्मजिज्ञासोत्तरकालंलोकत्रयसाधनंपुत्रं द्विप्रकारञ्च वित्तंमानुष्यंदैवञ्चतत्रमानुष्यंवित्तंकर्मरूपंपितृलोकप्राप्तिसाधनंविद्याञ्च दैवंवि

## आनन्दगिरिकृतटीका।

परम्परयासाधनीभूतप्रागुक्तधर्मानुष्ठानात्मकोयोगइत्यर्थः अथयोगबुद्धिंविसजन् योगिनोविसजतेतद्विपर्येति उक्तेबुद्धिद्वयेभगवतोऽभिमतंदर्शयति तथाचेति सांख्य बुद्ध्याश्रयाज्ज्ञाननिष्ठेत्येदपि भगवतोभिमतमित्याह तयोश्चेति ज्ञानमेवयोगोज्ञान योगस्तेनहिब्रह्मणायुज्यतेतादात्म्यमापद्यतेतेनसन्न्यासिनांनिष्ठानिश्चयेनस्थिति स्तात्पर्य्येणपरिसमाप्तिस्तांकर्मनिष्ठातोव्यतिरिक्तांनिष्ठयोर्मध्येनिष्कृष्यभगवान्वच्य तीति योजना लोकेस्मिन्द्विविधानिष्ठापुराप्रोक्तामयानघज्ञानयोगेनसांख्याना मित्येतद्वाक्यमुक्तार्थविषयमर्थतोनुवदति पुरेति योगबुद्ध्याश्रयाकर्मनिष्ठेत्यत्रापिभग वदनुमतिमादर्शयति तथाचेति कर्मैवयोगःकर्मयोगस्तेनहिबुद्धिशुद्धिद्वारामोक्ष हेतुज्ञानायपुमान्युज्यतेतेननिष्ठांकर्मिणांज्ञाननिष्ठातोविलक्षणां कर्मयोगेनेत्या दिनावच्यति भगवानितियोजना निष्ठाद्वयंबुद्धिद्वयाश्रयंभगवताविभज्योक्तमुपसं हरति एवमिति कयापुनरनुपपत्त्याभगवतानिष्ठाद्वयंविभज्योक्तमित्याशङ्क्याह

## भाषा अनुवाद।

होनेसेश्रीकृष्णकेप्रतिअर्जुनकाइसप्रकारकाअनुयोगकरनाकभीसंभवहोतानहीं इसीसेगीताशास्त्रमेलेशमात्रभीश्रौतयास्मार्तकर्मकेसहितज्ञानकेसंपादनका प्रति पादनकरनेकोकोईभीसमर्थनहोगे अज्ञानकिंवारागआदिदोषवशतेकर्ममेप्रवृ त्तमनुष्यकीयज्ञदानतपआदिके द्वारासत्त्वशुद्धिपूर्व्वकपरमार्थतत्त्वज्ञानहोनेसेप रलोकसंग्रहकेअर्थजोफेरिकर्ममे प्रवृत्तिहोयतोउसकर्मकोकर्मनहींकहतेहैंसुत रांतिसकेसहितज्ञानकासंपादननहींहोताहै जैसेभगवानश्रीकृष्णकेसकलकर्म

शाङ्करभाष्यं

त्तं देवलोकप्राप्तिसाधनं सोऽकामयतेति अविद्याकामवत एव सर्व्वाणि कर्म्माणि श्रौतादीनि दर्शितानि तेभ्यो व्युत्थाय प्रव्रजन्तीति व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्य विहितं तदेतद्विभागवचनमनुपपन्नं स्यात् यदि श्रौतकर्मज्ञानयोः समुच्चयोभिप्रेतः स्याद्भगवतः

नच अर्जुनस्य प्रश्न उपपन्नो भवति ज्यायसी चेत् कर्मणस्ते इत्यादि एकपुरुषानुष्ठेयत्वासम्भवं बुद्धिकर्मणोर्भगवता पूर्व्वमनुक्तं कथमर्ज्जुनोऽश्रुतं बुद्धेश्च कर्मणो ज्यायस्त्वं भगवत्यध्यारोपयेत् मृषैव ज्यायसी चेत् कर्मणस्ते मता बुद्धिरिति किञ्च यदि बुद्धिकर्मणोः सर्व्वेषां समुच्चय उक्तः स्यात् अर्जुनस्यापि स उक्त एवेति यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितमिति कथमुभयोरुपदेशे सत्यन्यतरविषय एव प्रश्नः स्यात् नहि पित्तप्रशमनार्थिनो

ज्ञानगिरिकृतटीका।

ज्ञानकर्मणोरिति कर्म हि कर्त्तृत्वाद्यनेकत्वबुद्ध्याश्रयं ज्ञानं कर्त्तृत्वैकत्वबुद्ध्याश्रयं तदुभयमित्थं विरुद्धसाधनसाध्यत्वान्नैकावस्थस्यैव पुरुषस्य सम्भवत्यतो युक्तमेव तयोर्व्विभागवचनमित्यर्थः भगवदुक्तविभागवचनस्य मूलत्वेन श्रुतिमुदाहरति तथेति तत्र ज्ञाननिष्ठाविषयं वाक्यं पठति एतमेवेति प्रकृतमात्मानं नित्यविज्ञप्तिस्वभावं वेदितुमिच्छन्तः त्रिविधेपि कर्मफले वैतृष्ण्यभाजः सर्व्वाणि कर्माणि परित्यज्य ज्ञाननिष्ठाः भवन्तीति पञ्चमलकारस्य कारेण सन्न्यासविधिं विवक्षित्वात्तस्यैव विधेः विशेषेणार्थवादेन किंप्रजयेत्यादिना मोक्षफलं ज्ञानमुक्तमित्यर्थः ननु फलाभावात् प्रजाक्षेपो नोपपद्यते पुत्रेणैतल्लोकजयस्य वाक्यान्तरसिद्धत्वादित्याशङ्क्याविदुषां प्रजासाध्यमनुष्यलोकस्यात्मव्यतिरेकेणाभावादात्मनश्चासाध्यत्वादाक्षेपो युक्तिमानिति विवक्षित्वाह येषामिति

भाषा अनुवाद।

समुचित नहीं और जैसे काम्य कर्म में कामना न रहने से सो और काम्य कर्म नहीं हो सकता जिसके हेतु उसमें फलाभिसन्धि नहीं है

तो फिर जो जनकआदि राजा कर्म के द्वारा मुक्त उ ये यह वर्णन किया है सो केवल लोकसंग्रह के अर्थ मात्र है अर्थात् सब कर्म का परित्याग होने से भी गुण और गुणी ज्ञान व्यतेकर्म आभास के साथ उनकी मुक्ति भई थी अर्थात् कर्म के त्याग में अधिकार होने से भी कर्मत्याग न करि के उसके सहित निर्व्वाणपद प्राप्त किया और जो कहो कि जनकादि राजा पूर्व्व में तत्त्वज्ञानी नहीं थे तौ भी ज्ञान के साधनभूत सकल कर्म ईश्वर को अर्पण करने

शाङ्करभाष्यं

वैद्येनमधुरंशीतलञ्चभोक्तव्यमित्युपदिष्टेतयोरन्यतरत्पित्तप्रशमनकारणंब्रूहीति प्रश्नःसम्भवति अथार्जुनस्यभगवदुक्तवचनार्थविवेकानवधारणनिमित्तःप्रश्नःकल्प्येततथापिभगवताप्रश्नानुरूपंप्रतिवचनंदेयंमयाबुद्धिकर्मणोः समुच्चयउक्तःकिमर्थमित्थंत्वंभ्रान्तोसीतिनतुपुनःप्रतिवचनमनुरूपंपृष्ठादन्यदेवद्वेनिष्ठेमयापुराप्रोक्तेइतिवक्तुंयुक्तं नापिस्मार्त्तेनैवकर्मणाबुद्धेःसमुच्चयेऽभिप्रेतेविभागवचनादिसर्व्वमुपपन्नंकिञ्चक्षत्रियस्ययुद्धंस्मार्त्तंकर्मस्वधर्मइतिजानतस्तत्किंकर्मणिघोरेमां नियोजयसीत्युपालम्भोऽनुपपन्नस्तस्मात् गीताशास्त्रेईषन्मात्रेणापिश्रौतेनस्मार्त्तेनवाकर्मणात्मज्ञानस्यसमुच्चयोनकेनचिद्दर्शयितुंशक्यः

यस्यत्वज्ञानाद्रागादिदोषतोवा कर्मणिप्रवृत्तस्ययज्ञेनदानेनतपसावाविशुद्धसत्त्वस्यज्ञानमुत्पन्नंपरमार्थतत्त्वविषयमेकमेवेदंसर्व्वं ब्रह्माकर्त्तृ चेतितस्यकर्मणिकर्मप्रयोजनेचनिवृत्तेपिलोकसंग्रहार्थंयत्नपूर्व्वंयथाप्रवृत्तिस्तथैवकर्मणिप्रवृत्तस्ययत्प्रवृत्तिरूपंदृश्यतेनतत्कर्मयेनबुद्धेःसमुच्चयः स्यात्यथाभगवतोवासुदेवस्यक्षत्रधर्मचेष्टितंनज्ञानेनसमुच्चीयतेपुरुषार्थसिद्धयेतद्वत्तत्फलाभिसन्ध्यहङ्काराभावस्यतुल्यत्वात्विदुषःतत्त्ववित्नाहं करोमीतिमन्यतेनचतत्फलमभिसन्धत्तेयथाचस्वर्गादि

आनन्दगिरिकृतटीका।

इतिज्ञानंदर्शितमितिशेषः तस्मिन्नेवब्राह्मणेकर्मनिष्ठावाक्यंदर्शयति तत्रैवेतिप्राकृतत्वमतत्वदर्शित्वेनाज्ञत्वंसचब्रह्मचारीसन्गुरुसमीपेयथाविधिवेदमधीत्यार्थज्ञानार्थंधर्मजिज्ञासोत्तरकालंलोकत्रयप्राप्तिसाधनंपुत्त्रादित्रयंसोकामयतजायामेस्यादित्यादिनाकामितवानितिश्रुतमित्यर्थः वित्तंविभजतेद्विप्रकारमिति तदेव

भाषा अनुवाद।

सेउनकीसत्त्वशुद्धिअथवाज्ञानकी उत्पत्तिभईश्रीभगवानइसगीताशास्त्रमेयहीप्रतिपादनकरिकेपीछेसोईप्रकारशुद्धसत्वगुणमनुष्यकोज्ञाननिष्ठानिरूपणकियाहैइससेकेवलतत्त्वज्ञानसेजोमुक्तिहोतीऔरउसमेजोकर्मकी सहायताकीअपेक्षानकरेयहीइसगीताशास्त्रकानिश्चितअर्थहैयहअर्थआगेप्रकरणपायकेदेखायाजायगाइसप्रकारगीताशास्त्रकातात्पर्यअर्थनिर्णयकियागयापरन्तुस्वधर्ममेव्यग्रमिथ्याभ्रमविशिष्टकहेयुक्तमहत्शोकसागरमेडूबे अर्जुनकोआत्मज्ञानकेविनाउद्धारहोनेकीऔरउपायनदेखिभगवानश्रीकृष्णअर्जुनकेप्रतितत्वज्ञानकाउपदेशकरतेहैंकि

शाङ्करभाष्यं

कामार्थिनोऽग्निहोत्रादिकर्मलक्षणधर्मानुष्ठानायाहिताग्नेः काम्यएवाग्निहोत्रादौप्रवृत्तस्यसामिकृतेविनष्टेपिकामेतदेवाग्निहोत्राद्यनुतिष्ठतोपिनतत्काम्यमग्निहोत्रादिभवतितथाचदर्शयतिभगवान्कुर्वन्नपिनकरोतिनलिप्यतेइति अन्यत्र पूर्वैः पूर्वतरंकृतंकर्मणैवहिसंसिद्धिमास्थिताजनकादयइतितत्तुप्रविभज्यविज्ञेयं तत्कथंयदितावत्पूर्वेजनकादयः तत्त्वविदोपिप्रवृत्तकर्माणः स्युस्तेलोकसंग्रहार्थं गुणागुणेषुवर्त्तन्तइतिज्ञानेनैवसंसिद्धिमास्थिताः कर्मसन्न्यासेप्राप्तेपिकर्मणासहैवसंसिद्धिमास्थितानकर्मसन्न्यासंकृतवन्तइत्येषोऽर्थः अथनतेतत्त्वविदईश्वरसमर्पितेनकर्मणासाधनभूतेनसंसिद्धिंसत्त्वशुद्धिंज्ञानोत्पत्तिलक्षणांवासंसिद्धिमास्थिताजनकादयइतिव्याख्येयं एतमेवार्थंवक्ष्यतिभगवान्सत्त्वशुद्धयेकर्मकुर्वन्तीतिस्वकर्मणातमभ्यर्च्यसिद्धिंविन्दति मानवइत्युक्त्वासिद्धिप्राप्तस्यचपुनर्ज्ञाननिष्ठांवक्ष्यति सिद्धिंप्राप्तोयथाब्रह्मेत्यादिनातस्माद्गीतासुकेवलादेवतत्त्वज्ञानान्मोक्षप्राप्तिःनकर्मसमुच्चितादितिनिश्चितोऽर्थःयथाचायमर्थस्तथाप्रकरणशोविभज्यतत्रतत्रदर्शयिष्यामः

तत्रैवन्धर्मसंमूढचेतसोमिथ्याज्ञानवतोमहतिशोकसागरे निमग्नस्यार्जुनस्यान्यत्रात्मज्ञानादुद्धरणमपश्यन्भगवान्वासुदेवस्ततःकृपयार्जुनमुद्दिधारयिषुरात्मज्ञानायावतारयन्नाह

आनन्दगिरिकृतटीका।

प्रकारद्वैरूप्यमाहमानुष्यमिति मानुष्यंवित्तंव्याचष्टेकर्मरूपमिति तस्यफलपर्य्यवसायित्वमाहपितृलोकेति दैवंवित्तंविभजतेविद्ययेति तस्यापिफलनिष्ठत्वमाहदेवेति कर्मनिष्ठाविषयत्वेनोदाहृतयुतेस्तात्पर्य्यमाहअविद्येति अज्ञस्यकामनाविशिष्टस्यैवकर्माणिसोकामयतेत्यादिनादर्शितानीत्यर्थः ज्ञाननिष्ठाविषयत्वेनदर्शितश्रुतेरपितात्पर्य्यंदर्शयतितेभ्यइति कर्मसुविरक्तस्यैवसन्न्यासपूर्विकाज्ञाननिष्ठाप्रागुदाहृतश्रुत्यादर्शितेत्यर्थः अवस्थाभेदेनज्ञानकर्मणोर्भिन्नाधिकारत्वस्य श्रुतत्वात्तन्मूलेनभगवतोविभागवचनेनशास्त्रस्यसमुच्चयंपरत्वप्रतिज्ञातमपवाधितमितिसाधितंकिञ्चसमुच्चयोज्ञानस्यश्रौतेनस्मार्त्तेनवाकर्मणाविवक्ष्यतेयदिप्रथमंतत्राहतदेतदिति

समुच्चयेऽभिप्रेतेप्रश्नानुपपत्तिंदोषान्तरमाहनचेति तामेवानुपपत्तिंप्रकटयतिएकपुरुषेति यदिसमुच्चयःशास्त्रार्थोभगवताविवक्षितस्तदाज्ञानकर्मणोरेकेनपुरुषेणानुष्ठेयत्वमेवतेनोक्तमर्जुनेनचश्रुतं ततकथंतदसम्भवमनुक्तमश्रुतञ्चमिथ्यैव

आनन्दगिरिकृतटीका।

श्रोताभगवत्यारोपयन्नचतदारोपादृतेकिमितिमां कर्मण्येवातिक्रूरेयुद्धलक्षणेनि
योजयसिइतिप्रश्नोऽवकल्पतेतथाचप्रश्नालोचनयाप्रष्टृप्रतिवक्त्रोः शास्त्रार्थतयास
मुच्चयोभिप्रेतोनभवतीतिप्रतिभातीत्यर्थः किञ्चसमुच्चयपक्षेकर्मापेक्षयाबुद्धेर्ज्या
यस्त्वंभगवतापूर्व्वमनुक्तमर्जुनेनचाश्रुतंकथमसौतस्मिन्नारोपयितुमर्हतिततश्चानुवा
दवचनंश्रोतुरनुचितमित्याहबुद्धेश्चेति इतश्चसमुच्चयःशास्त्रार्थोनसम्भवत्यन्यथाप
ञ्चमादावर्जुनस्यप्रश्नानुपपत्तेरित्याहकिञ्चेति ननुसर्वान्प्रत्युक्तोपिसमुच्चयेनार्जुनं
प्रत्युक्तोसावितितदीयप्रश्नोपपत्तिरित्याशङ्क्याहयदीति एतयोः कर्मतत्त्यागयो
रितियावत् ननुकर्मापेक्षयाकर्मत्यागपूर्व्वकस्यज्ञानस्यप्राधान्यात्तस्यश्रेयस्त्वात्तद्वि
षयप्रश्नोपपत्तिरितिचेन्नेत्याहनहीति तथैवसमुच्चयेपुरुषार्थसाधनेभगवतादर्शि
तेसत्यन्यतरगोचरोनप्रश्नोभवतीतिशेषः समुच्चयेभगवतोक्तेपितदज्ञानादर्जुनस्य
प्रश्नोपपत्तिरितिशङ्कतेअथेति अज्ञाननिमित्तंप्रश्नमङ्गीकृत्यापिप्रत्याचष्टेतथापीति
भगवतोभ्रान्त्यभावेनपूर्व्वापरानुसन्धानसम्भवादित्यर्थः प्रश्नानुरूपत्वमेवप्रतिव
चनस्यप्रकटयतिमयेति व्यावर्त्त्यमसंशमादर्शयतिनत्विति प्रतिवचनस्यप्रश्नाननु
रूपत्वमेवस्पष्टयतिदृष्टादिति श्रौतेनकर्मणासमुच्चयोज्ञानस्येतिपक्षंप्रतिक्षिप्यप
क्षान्तरंप्रतिक्षिपतिनापीतिश्रुतिस्मृत्योर्ज्ञानकर्मणोर्व्विभागवचनमादिशब्दगृहीतं
बुद्धेर्ज्यायस्त्वंपञ्चमादौप्रश्नोभगवत्प्रतिवचनंसर्व्वमिदंश्रौतेनेवस्मार्त्तेनापिकर्मणाबु
द्धेःसमुच्चयेविरुद्धंस्यादित्यर्थः द्वितीयपक्षासम्भवेहेत्वन्तरमाहकिञ्चेतिसमुच्चयपक्षे
प्रश्नप्रतिवचनयोरसम्भवान्नेदंगीताशास्त्रंतत्परमित्युपसंहरतितस्मादितिविशुद्ध
ज्ञानात्मज्ञानंस्वफलसिद्धौनसहकारिसापेक्षमज्ञाननिवृत्तिफलत्वाद्रज्ज्वादितत्त्वज्ञान
वत्अथवाबन्धःसहायानपेक्षेणज्ञानेननिवर्त्त्यते अज्ञानात्मकत्वात्रज्जुसर्पादिव
दितिभावः

ननुकुर्य्याद्विद्वांस्तथासक्तश्चिकीर्पुर्लोकसंग्रहमितिवक्ष्यमाणत्वात्कथंगीताशा
स्त्रेसमुच्चयोनास्तितत्राहयस्त्विति चोदनासूत्रानुसारेणविहितोऽनुष्ठेयस्यकर्मणो
धर्मत्वाद्वृथापारमार्थ्यतथात्वाभावात्तत्त्वविदश्च वर्णाश्रमाभिमानशून्यस्याधिकार
प्रतिपत्त्यभावाद्रागादिप्रवृत्तीनामविद्यालेशतोजायमानानां कर्माभासत्वात्कुर्य्या
द्विद्वानित्यादिवाक्येनसमुच्चयप्रापकमितिभावः वाशब्दश्चार्थेद्वितीयस्तुविविदिषावा
क्यस्यसाधनान्तरसंग्रहार्थः सांसारिकंज्ञानंव्यावर्त्तयतिपरमार्थेति तदेवाभि
नयतिएकमितप्रवृत्तिरूपमितिरूपग्रहणमाभासत्वप्रदर्शनार्थंकर्माभाससमुच्चयस्तु

## आनन्दगिरिकृतटीका ।

याद्दच्छिकत्वान्नमोक्षंफलयतीतिशेषः किञ्च ज्ञानिनोरागादिप्रवृत्तिर्नज्ञानेनतत्फ लेनसमुच्चीयतेफलाभिसन्धिविकलप्रवृत्तित्वादहङ्कारविधुरप्रवृत्तित्वाद्वाभगवत्प्रवृ त्तिवदित्याहयथेतिहेतुद्वयस्यासिद्धिमाशङ्क्यपरिहरतितत्त्वविदितिकूटस्थंब्रह्मैवा हमितिमन्वानोविद्वान्प्रवृत्तिंतत्फलंवानैव स्वगतत्वेनपश्यतिरूपादिवद्दृश्यदृष्टृधर्म त्वायोगात्किन्तुकार्य्यकारणसंघातत्वेनैवप्रवृत्त्यादिप्रतिपद्यतेततस्तत्त्वविदोव्याख्या नभिव्याटनादौअहङ्कारस्यप्रवृत्त्यादिफलाभिसन्धेश्चाभासत्वान्नासिद्धंहेतुद्वयमित्यर्थः ननुज्ञानोदयात्प्रागवस्थायामिवोत्तरकालेपिप्रतिनियतप्रवृत्त्यादर्शनान्नतत्त्वदर्शी निष्ठप्रवृत्त्यादेराभासत्वमितितत्राहयथाचेतिस्वर्गादिरेवकाम्यमानत्वात्कामस्तद र्थिनःस्वर्गादिकामस्याग्निहोत्रादेरपेक्षितस्वर्गादिसाधनस्यानुष्ठानार्थमग्निमाधाय व्यवस्थितस्यतस्मिन्नेवकाम्येकर्मणिप्रवृत्तस्याईकृतेकेनापि हेतुनाकामेविनष्टेतदेवा ग्निहोत्रादिनिर्व्वर्त्तयतोनतत्काम्यंभवतिनित्यकाम्यविभागस्यस्वाभाविकत्वाभावात् कामोपबन्धानुपबन्धकृतत्वात्तथाविदुषोपिविध्यधिकाराभावाद्वागादिप्रवृत्तीनांक र्माभासतेत्यर्थःविद्वत्प्रवृत्तीनांकर्माभासत्वमित्यत्रभगवदनुमतिमुपन्यस्यतितथाचेति ननुविद्वद्व्यापारेपिकर्मशब्दप्रयोगदर्शनात्सद्व्यापारस्यकर्माभासत्वानुपपत्तेःसमुच्च यसिद्धिरितितत्राहयश्चेति ज्ञानकर्मणोःसमुच्चित्यैवसंसिद्धिहेतुत्वेप्रतिपन्नेकुतो विभज्यार्थंज्ञानमितिपृच्छतितत्कथमिति तत्रकिंजनकादयोपितत्त्वविदःप्रवृत्तक र्माणःस्युराहोस्विदतत्त्वविद इतिविकल्प्यप्रथमंप्रत्याहयदीति तत्त्वाविस्त्वेकथंप्र वृत्तकर्मत्वंकर्मणामकिञ्चित्करत्वादित्याशङ्क्याहतेलोकेति तेषामुक्तप्रयोजना र्थमपिनप्रवृत्तिर्युक्तासर्व्वत्राप्युदासीनत्वादित्याशङ्क्याहगुणाइति इन्द्रियाणांविष येषुप्रवृत्तिद्वारातत्वविदांप्रवृत्तकर्मत्वेपिज्ञानेनैवतेषांमुक्तिरित्याहज्ञानेनेति उ क्तमेवार्थंसंक्षिप्यदर्शयतिकर्मेति कर्मणेत्यादौबाधितानुवृत्त्याभावोगृह्यते द्विती यमनुवदतिअथेति तत्रवाक्यार्थंकथयतिईश्वरेति विभज्यविज्ञेयत्वंवाक्यार्थस्यो क्तमुपसंहरतिइतिव्याख्येयमितिकर्मणांचित्तशुद्धिद्वाराज्ञानहेतुत्वमित्युक्तेर्थेवाक्य शेषंप्रमाणयतिएतमेवेति योगिनःकर्मकुर्व्वन्तीत्यादिवाक्यमर्थतोनुवदतिसत्त्वे तिस्वकर्मणाइत्यादौसाक्षादेवमोक्षहेतुत्वंकर्मणांवक्ष्यतीत्याशङ्क्याहस्वकर्मणेति स्व कर्मानुष्ठानादीश्वरप्रसादद्वाराज्ञाननिष्ठायोग्यतालभ्यते ततोज्ञाननिष्ठयामुक्ति स्तेननसाक्षात्कर्मणां मुक्तिहेतुतेत्यग्रेस्फुटीभविष्यतीत्यर्थः तत्वज्ञानोत्तरकालं कर्मासम्भवेफलितमुपसंहरतितस्मादिति ननुयद्यपिगीताशास्त्रंतत्वज्ञानप्रधान

आनन्दगिरिकृतटीका।

मेकंवाक्यंतथापितन्मध्येश्रूयमाणंकर्मतदङ्गमङ्गीकर्त्तव्यंप्रकरणप्रामाण्यादितिसमु
च्चयसिद्धिस्तत्राहयथाचेति अर्थशब्देनात्मज्ञानमेवकेवलंकैवल्यहेतुरितिगृह्यते
इत्तिकृतामभिप्रायंप्रत्याख्यायस्वाभिप्रेतःशास्त्रार्थःसमर्थितःसंप्रत्यशोच्यानित्य
स्मात्प्राक्तनग्रन्थसन्दर्भस्य प्रागुक्तंतात्पर्य्यार्थमनूद्याशोच्यानित्यादेः स्वधर्ममपि
चावेक्ष्येत्येतदन्तस्य समुदायस्यतात्पर्य्यमाहतत्रेति अवच्छियात्रीणिकाण्डा
न्यष्टादशसंख्याकानामध्यायानांषट्कत्रितयमुपादाय त्रैविध्यात्तत्रपूर्व्वषट्कात्म
कंपूर्व्वकाण्डंत्वम्पदार्थंविषयीकरोतिमध्यमषट्करूपं मध्यमकाण्डंतत्पदार्थंगोच
रयतिअन्तिमषट्कलक्षणमन्तिमंकाण्डंतत्त्वंपदार्थयोरैक्यं वाक्यार्थमधिकरोति
तत्रज्ञानसाधनानितत्रतत्रप्रसङ्गादुपन्यस्यन्तेतज्ज्ञानस्य तदधीनत्वात्तत्त्वज्ञानमे
वकेवलंकैवल्यसाधनमितिचसर्व्वत्रविगीतं एवंपूर्व्वोक्तरीत्यागीताशास्त्रार्थेपरिनि
श्चितेसतीतियावत्धर्मेसंमूढंकर्त्तव्याकर्त्तव्यविवेकविकलंचेतोयस्यतस्यमिथ्याज्ञान
वतोऽहङ्कारममकारवतः शोकाख्यसागरेदुरुत्तरेप्रविश्यक्लिश्यतोब्रह्मात्मैक्यलक्ष
णवाक्यार्थज्ञानमात्मज्ञानंतदतिरेकेणोद्धरणासिद्धेःतम्,तमत्यन्तमतिस्निग्धं शोका
दुद्धर्त्तुमिच्छन्भगवान्यथोक्तज्ञानार्थं तंअर्जुनमवतारयन्पदार्थपरिशोधनेप्रवर्त्त
यन्नादौत्वम्पदार्थंशोधयितुमशोच्यानित्यादिवाक्यमाहेतियोजना

यस्याज्ञानं तस्यभ्रमोयस्यभ्रमस्तस्यपदार्थपरिशोधनपूर्व्वकंसम्यक्ज्ञानंवाक्या
दुदेतीतिज्ञानाधिकारिणमभिप्रेत्याहअशोच्यानित्यादीति यत्तुकैश्चिदात्मावाअ
रेद्रष्टव्यइत्याद्यात्मयाथात्म्यदर्शनविधिवाक्यार्थमनेन श्लोकेनव्याचष्टेस्वयंहरिरित्यु
क्तंतदयुक्तंज्ञप्तियोग्यतैकार्थसमवेतश्रेयःसाधनतायाः पराभिमतनियोगस्यवावि
ध्यर्थस्यात्माप्रतीयमानस्यकल्पनाहेत्वभावात्नचदर्शनेपुरुषतन्त्रत्वरहितेविधेयया
गादिविलक्षणे विधिरुपपद्यतेऽत्यान्तर्भूतस्याहार्यत्वात्तत्रोनविधिमधिकरोती
त्यभिप्रेत्यव्याचष्टेनशोच्याइति कथंतेषामशोच्यत्वमित्युक्तेभीष्मादिशब्दवाच्यानां
शोच्यत्वंतत्पदलक्ष्याणांवेतिविकल्प्याद्यंदूषयतिसद्वृत्तत्वादिति येभीष्मादिशब्दै
रुच्यन्तेतेश्रुतिस्मृत्युदीरिताविगीताचारवत्त्वान्नशोच्यताम्अर्हन्तीत्यर्थः द्वितीयं
प्रत्याहपरमार्थेति अरजतेरजतवुद्धिवदशोच्येषुशोच्यवुद्ध्याभ्रान्तोसीत्याहता
निति अनुशोचनप्रकारमभिनयन्भ्रान्तिमेवप्रकटयतितेम्रियन्तइति पुत्त्रभा
र्य्यादिप्रयुक्तंसुखमादिशब्देनगृह्यतेइत्यनुशोचितवानसीतिसम्बन्धः विरुद्धार्थाभि
धायित्वेनापिभ्रान्तत्वमर्जुनस्यसाधयतित्वंप्रज्ञावतामिति उत्सन्नकुलधर्माणा

अशोच्यानन्वशोचस्त्वंप्रज्ञावादांश्चभाषसे गतासूनगतासूंश्चनानुशोचन्तिपण्डिताः

## शाङ्करभाष्यम्।

अशोच्यानित्यादि नशोच्याअशोच्याभीष्मद्रोणादयःसद्वृत्तत्वात्परमार्थरूपेण चनित्यत्वात्तानशोच्यानन्वशोचोऽनुशोचितवानसि तेम्रियन्तेऽमन्निमित्तमहंतैर्विनाभूतःकिंकरिष्यामिराज्यसुखादिनेति त्वंप्रज्ञावतांबुद्धिमतांवादांश्चवचनानिच भाषसेतदेतन्मौढ्यंपाण्डित्यविरुद्धमात्मनिदर्शयसुन्मत्तइवेत्यभिप्रायः यस्माद्गतासून् गतप्राणान्मृतान्अगतासूनगतप्राणान्जीवतश्चनअनुशोचन्तिपण्डिताः आत्मज्ञाःपण्डाआत्मविषयाबुद्धिर्येषांतेहिपण्डिताःपाण्डित्यंनिर्विद्येतिश्रुतेः परमार्थतस्तुनित्यानशोच्याननुशोचसितोमूढोसीत्यभिप्रायः॥११॥

## आनन्दगिरिकृतटीका।

सित्यादीनिवचनानि किमेतावताफलितंमितितदाहतदेतदितितन्मौढ्यमशोच्येषुशोच्यदृष्टित्वमेतत्पाण्डित्यंबुद्धिमतांवचनभाषित्वमितियावत् अर्जुनस्यपूर्वोक्तभ्रान्तिभाक्त्वेनिमित्तमात्माज्ञानमित्याहयस्मादिति ननुस्वल्पबुद्धिभाक्त्वमेवपाण्डित्यंनत्वात्मज्ञत्वंहेत्वभावादित्याशङ्क्याहतेहीति पाण्डित्यंपण्डितभावमात्मज्ञानंनिर्विद्यनिश्चयेनलब्ध्वाबाल्येनतिष्ठासेदिति बृहदारण्यकश्रुतिमुक्तार्थामुदाहरतिपाण्डित्यमिति यथोक्तंपाण्डित्यराहित्यंकथंसमावगतमित्याशङ्क्यकार्य्यदर्शनादित्याहपरमार्थतस्त्विति यस्मादित्यस्यापेक्षितंदर्शयतिअतइति॥११॥

## स्वामिकृतटीका।

अशोच्यानित्यादि शोकस्याविषयीभूतानेवबन्धूनन्वशोचोऽनुशोचितवानसि दृष्ट्वेमान्स्वजनान्कृष्णेत्यादिनातत्कुतस्त्वाकश्मलमिदंविषमेसमुपस्थितमित्यादिना मयाबोधितोऽपिपुनश्चप्रज्ञावतांपण्डितानांवादान्शब्दान् कथंभीष्ममहंसंख्ये

## भाषा अनुवाद।

प्रथमअध्यायके२८श्लोकसेलेकरतुमजोकुटुम्बकेजनोंका शोककरतेहोसोवेसवतुमारेशोचनेकेयोग्यनहींहैंऔरद्वितीयअध्यायके२श्लोकसेलेकेहमसेप्रबोधकरायेअर्थात्समझायेभीगयेतुमजोपण्डितमानी केसमानयेवचनउच्चारनकरतेअर्थात्कहतेहो किंभीष्मकोसंग्राममेकैसेमारें इससेयहप्रतीतिहोतीहैकितुमयथार्थपण्डितनहींहो जिसहेतुबुद्धिमानपण्डितजोहैं वेगतप्राणअगतप्राणअर्थात्मरेऔरजीवतेकोनहींशोचतेहैंकिबन्धुविहीनहमकैसेजियेंगे॥११॥

नत्वेवाहंजातुनासंनत्वंनेमेजनाधिपाः नचैवनभविष्यामःसर्व्वेवयमतःपरं ॥१२॥

## शाङ्करभाष्यम्।

कुतस्ते अशोच्याः यतोनित्याःकथंनतुएवजातुकदाचिदहंनासंकिन्त्वासमेवअतीतेषुदेहोत्पत्तिविनाशेषुघटादिषुवियदिवनित्यमेवाहमासमित्यभिप्रायः तथान त्वंनासीः किन्त्वासीरेवतथानेमेजनाधिपाःनासन् किंत्वासन्नेवतथानचैवनभविष्यामः किन्तुभविष्यामएवसर्व्वेवयमतोस्माद्देहविनाशादुत्तरकालेपित्रिष्वपिकालेषुनित्याआत्मस्वरूपेणेत्यर्थःदेहभेदानुवृत्त्याबहुवचनंनात्मभेदाभिप्रायेण ॥१२॥

## आनन्दगिरिकृतटीका।

नित्यत्वमशोच्यत्वेकारणमितिसूचितंविवेचयितुंप्रश्नपूर्व्वकंप्रतिजानीतेकुतइत्यादिना नित्यत्वमसिद्धंप्रमाणाभावादितिचोदयतिकथमिति आत्मानजायते प्रागभावशून्यत्वान्नरविषाणवदितिपरिहरतिनत्वेवेति किन्त्वात्मानित्योभावत्वे

## स्वामिकृतटीका।

इत्यादीन् केवलंभाषसेनतुपण्डितोऽसियतःपण्डितागतासून् गतप्राणान् बन्धून गतासूंश्चजीवतोपिबन्धुहीनाएतेकथं जीविष्यन्तोतिनानुशोचन्ति पण्डिताः विवेकिनः ॥ ११ ॥

अशोच्यत्वेहेतुमाह नत्वेवाहमिति यथाहंपरमेश्वरोजातुकदाचिल्लीलाविग्रहस्याविर्भावतिरोभावतोनासमितितुनैवापित्वासमेवानादित्वात् नचत्वंनासीर्नाभूःअपित्वासीरेवइमेचजनाधिपानृपानासन्नितितुनापित्वासन्नेवमदंशत्वात्तथातःपरमितउपरिनभविष्यामोनस्थास्यामइतिचनैवापितुस्थास्याम एवेतिजन्ममरणशून्यत्वादशोच्या इत्यर्थः ॥ १२ ॥

## भाषा अनुवाद।

भीष्मआदिकेप्रतिशोचकरनाअनुचितहै इसमेंश्रीभगवानकारणकहतेहैंकिदेखोहमपरमेश्वरहसाराशरीरधारण करनाकेवललीलाकेअर्थहै इससेइसदेहकेहोनेजानेवशतेहमकभूपूर्व्वमेनहींरहेथेयहसम्भवनहींहोताजिसहेतुहमअनादिऔरहमारेअंशतेउत्पन्नतुमऔरयेसबराजालोगभीकभीनहींरहेथेयहभीसम्भवनहींहैइससेहमसबजैसेपहलेथेतैसेअबभीहैं फेरिआगेभीहमसबहोंयगेइससेआत्मस्वरूपकेजन्मऔमरणकास्वभावहैतौफिरिस्वजनविनाशकाशोककाविषयकैसेहैनहींहैं ॥१२॥

देहिनोऽस्मिन्यथादेहेकौमारंयौवनंजरा तथादेहान्तरप्राप्तिर्धीरस्तत्रनमुह्यति१३

## आनन्दगिरिकृतटीका।

सत्यजातत्वाद्व्यतिरेकेघटवदित्यनुमानान्तरमाहनचैवेति यत्तुकैश्चिदात्मयाथात्म्यं जिज्ञासितंभगवानुपदिशतिनत्वित्यादिनाश्लोकचतुष्टयेनेत्यादिष्टं तदसद्विशेषवच नेहेत्वभावात्सर्व्वत्रैवात्मयाथात्म्यप्रतिपादनाविशेषादित्याशयेनपदच्छेदः पदार्थो क्तिर्व्विग्रहोवाक्ययोजनेतिनियतमपिव्याख्यानाङ्गंप्रतिपादयतिनत्वित्यादिना नन्वा त्मनोदेहोत्पत्तिविनाशयोरुत्पत्तिविनाशप्रसिद्धेरुक्तमनुमानद्वयं प्रसिद्धिविरुद्ध तयाकालात्ययापदिष्टमिष्टमितिनेत्याहअतीतेष्विति चराचरव्यपाश्रयस्तुस्यादि तिन्यायेनात्मनोजन्मविनाशप्रसिद्धेरौपाधिकजन्मविनाशविषयत्वान्निरुपाधिकस्य तस्यजन्मादिराहित्यमितिभावः यद्यपितवेश्वरस्यजन्मराहित्यं तथापिकथंममे त्याशङ्क्याहतथेति तथापिभीष्मादीनांकथंजन्माभावस्तत्राहतथानेमइति द्विती यमनुमानंप्रपञ्चयन्नुत्तरार्द्धंव्याचष्टेतथेत्यादिना ननुदेहोत्पत्तिविनाशयोरात्म नोजन्मनाशाभावेपिमहासर्गमहाप्रलययोस्तस्याग्निविस्फुलिङ्गदृष्टान्तश्रुत्याजन्म विनाशावेष्टव्यावित्याशङ्क्यनात्माश्रुतेरितिन्यायेनपरिहरतित्त्वमपीति यावद्वि कारन्तुविभागोलोकवदितिन्यायेनभिन्नत्वाद्विकारित्वमात्मनामनुमीयतेभिन्नत्व ञ्चबहुवचनप्रयोगप्रमितमित्याशङ्क्याहदेहेति ॥१२॥

ननुपूर्व्वंदेहंविहायापूर्व्वंदेहमुपाददानस्य विक्रियावत्त्वेनोत्पत्तिविनाशवत्त्वा विभ्रमःसंभवेदितिशङ्कतेतत्रेति अशोच्यत्वप्रतिज्ञायांनित्यत्वेहेतूक्तेसतीति

## भाषा अनुवाद।

लोकहोकितुमईश्वरतुमाराजन्मऔरविनाशनहोनासम्भवहै परन्तुहमलो गजीवहैंइससेहमाराजन्ममरणप्रसिद्धहै इसविषयमेभगवानकहतेहैंकिदेखोदे हाभिमानीजीवकोइसस्थूलशरीरमेजैसेकौमारयौवन औरवृद्धाअवस्थाप्राप्तहोतीहैं परन्तुजीवस्वरूपकोनहीं औरयहीसवअवस्थोंकेमध्यमेपूर्व्वअवस्थाकेगयेऔरऔर अवस्थाप्राप्तभयेभीसंस्कारवशतेसोइहमहैं यहज्ञानरहताहैतैसेहीजीवकीस्थूल देहनाशहोलिङ्गशरीरकेद्वारादेहान्तरप्राप्तिहोनेसेभीआत्माकानाशनहीं देखो तुर्तकेभयेवालककोपूर्व्वसंस्कारवशतेजन्महोतेमात्र दूधपीनेमेप्रवृत्तिदेखपडतीहै इसीसेस्थूलदेहकेजन्मनाशभयेधीरपुरुषमूढ़नहीं होते अर्थात्आत्माकाजन्ममर णअङ्गीकारनहींकरतेहैं ॥१३॥

शाङ्करभाष्यम्।

तत्र कथमिव नित्य आत्मेति दृष्टान्तमाह देहिनः देहोऽस्यास्तीति देही तस्य देहि नो देहवतः आत्मनः अस्मिन् वर्त्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था यौवनं यूनो भावो मध्यमावस्था जरा वयोहानि र्जीर्णावस्था इत्येताः तिस्रोऽवस्था अन्योन्यविलक्षणास्तासां प्रथमावस्थानाशेन नाशो द्वितीयावस्थोपजननेनोपजननमात्मनः किं तर्ह्यविक्रियस्यैव द्वितीयात्तृतीयावस्थाप्राप्तिरात्मनो दृष्टा यथा तद्वदेव देहादन्यो देहो देहान्तरं तस्य प्राप्तिर्देहान्तरप्राप्तिरविक्रियस्यैवात्मन इत्यर्थः धीरो धीमांस्तत्रैवं सति न मुह्यति न मोहमापद्यते ॥ १३ ॥

आनन्दगिरिकृतटीका।

यावत् अवस्थाभेदे सत्यपि वस्तुतो विक्रियाभावादात्मनो नित्यत्वमुपपन्नमित्युत्तरश्लोकेन दृष्टान्तावष्टम्भेन प्रतिपादयतीत्याह दृष्टान्तमिति नकेवलमागमादेवात्मनो नित्यत्वं किन्त्ववस्थान्तरवज्जन्मान्तरे पूर्व्वसंस्कारानुवृत्तेश्चेत्याह देहिन इति देहवत्त्वं तस्मिन्नहं ममाभिमानभावत्वं तामामिति निर्धारणे षष्ठी आत्मनः श्रुतिस्मृत्युपपत्तिभिर्नित्यत्वज्ञानं धीमानित्यत्र धीर्विवक्ष्यते एवं सतीति तत्त्वतो विक्रियाभावान्नित्यत्वे समधिगते सतीत्यर्थः ॥ १३ ॥

आत्मनः श्रुत्यादिप्रमिते नित्यत्वे तदुत्पत्तिविनाशप्रयुक्तशोकमोहाभावेऽपि प्रकारान्तरेण शोकमोहौ स्यातामित्याशङ्कामनूद्योत्तरत्वेन श्लोकमवतारयति यदीत्यादिना शीतोष्णयोस्ताभ्यां सुखदुःखयोश्च प्राप्तिं निमित्तीकृत्य योमोहादिर्दृश्यते तस्यान्वयव्यतिरेकाभ्यां दृश्यमानत्वमाश्रित्य लौकिकविशेषणसशोच्यानित्यत्वयोविद्याधिकारी सूचितस्तस्य तितिक्षुः समाहितो भूत्वेति श्रुतेः तितिक्षुत्वं विशेषणमिहोपदिश्यते व्याख्येयं पदमुपादाय करणव्युत्पत्त्या तस्येन्द्रियविषयत्वं दर्शयति मात्रा इत्यादिना

स्वामिकृतटीका।

नन्वीश्वरस्य तव जन्ममरणशून्यत्वं सत्यमेव जीवानान्तु जन्ममरणे प्रसिद्धे तत्राह देहिन इति देहिनो देहाभिमानिनो जीवस्य यथास्मिन् स्थूलदेहे कौमाराद्यवस्थास्तद्देहनिबन्धना एवात्मनः पूर्वावस्थानाशेऽवस्थान्तरोत्पत्तावपि स एवाहमिति प्रत्यभिज्ञानात्तथैव तद्देहनाशे देहान्तरप्राप्तिरपि लिङ्गदेहनिबन्धनैव न तु तावतात्मनो नाशो जातमात्रस्य पूर्व्वसंस्कारेण स्तन्यपानादौ प्रवृत्तिदर्शनात् अतो धीरो धीमांस्तत्र तयोर्देहनाशोत्पत्त्योः न मुह्यति आत्मैव मृतो जातश्चेति न मन्यत इति ॥ १३ ॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः आगमापायिनोऽनित्यास्तांस्तिति
क्षस्वभारत ॥१४॥

## शाङ्करभाष्यम् ।

यद्यप्यात्मविनाशनिमित्तोमोहोनसम्भवतिनित्यआत्मेतिविजानतस्तथापिशी
तोष्णसुखदुःखप्राप्तिनिमित्तोमोहोलौकिकोदृश्यतेसुखवियोगनिमित्तोमोहोदुःख
संयोगादिनिमित्तश्चशोकइत्येतदर्जुनस्यवचनमाशङ्क्याहमात्रास्पर्शाइति मात्रा
आभिर्मीयन्तेशब्दादयइतिश्रोत्रादीनीन्द्रियाणिमात्राणांस्पर्शाशब्दादिभिः संयो
गास्तेशीतोष्णसुखदुःखदाःशीतसुष्णंसुखंदुःखञ्चप्रयच्छन्तीति अथवा स्पृश्यन्ते
इतिस्पर्शाविषयाः शब्दादयःमात्राश्चस्पर्शाश्चशीतोष्णसुखदुःखदाःशीतंकदाचित्
सुखंकदाचिद्दुःखंतथोष्णमप्यनियतस्वरूपं सुखदुःखेपुनर्नियतरूपेयतोनव्यभिचर
तोऽतस्ताभ्यांपृथक्शीतोष्णयोर्ग्रहणंयस्मात्तेमात्राःस्पर्शादयः आगमापायिनःआ
गमापायशीलाःतस्मादनित्याउत्पत्तिविलयरूपत्वात्अतस्तान् शीतोष्णादींस्तिति
क्षस्वप्रसहस्वतेषुहर्षविषादंमाकार्षीरित्यर्थः ॥ १४ ॥

## आनन्दगिरिकृतटीका ।

षष्ठीसमासंदर्शयन्भावव्युत्पत्त्यास्पर्शशब्दार्थमाहमात्राणामिति तेषामर्थक्रियामा
दर्शयतितेशीतेति संप्रतिशब्दद्वयस्यकर्मव्युत्पत्त्याशब्दादिविषयपरत्वमुपेत्यस
मासान्तरंदर्शयन्विषयाणांकार्य्यंकथयतिअथवेति ननुशीतोष्णप्रवृत्तेःसुखदुःख
प्रदत्वस्यसिद्धत्वात्किमितिशीतोष्णयोःसुखदुःखाभ्यां पृथक्ग्रहणमितितत्राहशीत
मिति विषयेभ्यस्तुपृथक्कथनंतदन्तर्भूतयोरेवतयोःसुखदुःखहेत्वोरानुकूल्यप्राति

## भाषाअनुवाद ।

जोकहोकिहमभीष्मआदिकेप्रतिशोकनहींकरतेहैं परन्तुउनकेवियोगमेंह
मैंदुःखभोगकरनाहोगाइसलियेहमअपनेकोशोचतेहैं इसवातपरकहतेहैंकिस
कलवस्तुजिमकेद्वारापरिमानकीजांयऐसीजोसवइन्द्रियवृत्तिकहेसंयोगऔरउन
केद्वाराजोविषयोंकास्पर्शहोनायहीशीतउष्णादिद्वारासुखदुःखदेताहै किन्तुवेअ
नित्यहैं इससेउनकोसहोजैसेजलवर्षआदिसंयोगसेकालस्वभाववशतेशीतउष्ण
होनेसेसुखदुःखसूलहोताहैतैसेइष्टऔअनिष्टप्राप्तहोनेसेसुखदुःखहोताहीहैपर
न्तुवहअनित्यऔरमिथ्याहैइससेतुमकोउनकासहनाउचितहै तुमधीरपुरुषको
उनमेंहर्षविषादकरनावड़ाहीअयोग्यहै ॥१४॥

यंहिनव्यथयन्त्येतेपुरुषंपुरुषर्षभ समदुःखसुखंधीरंसोऽमृतत्वायकल्पते ॥१५॥

## शाङ्करभाष्यं

शीतोष्णादीन्सहतःकिंस्यादितिशृणुयंहीतियंहिपुरुषंसमेदुःखसुखेयस्यतंस मदुःखसुखंसुखदुःखप्राप्तौहर्षविषादरहितंधीरंधीमन्तं नव्यथयन्तिनचालयन्ति नित्यात्मदर्शनादेतेयथोक्ताःशीतोष्णादयःसनित्यानित्यस्वरूपदर्शननिष्ठाद्वन्द्वसहि ष्णुरमृतत्वायअमृतभावायमोक्षायेत्यर्थःकल्पतेसमर्थोभवति १५

## आनन्दगिरिकृतटीका।

कूल्ययोरुपलक्षणार्थंअध्यात्मंहिशीतमुष्णंवानुकूल्यंप्रातिकूल्यंवासम्पाद्यवाह्याविष याःसुखादिजनयन्ति ननुविषयेन्द्रियसंयोगस्यात्मनिसदासत्त्वात्तत्प्रयुक्ताशीतादेर पितथात्वात्तन्निमित्तौहर्षविषादौतस्मिन्नापन्नावित्याशङ्क्योत्तराद्धं व्याचष्टेयस्मा दित्यादिना अत्रचकौन्तेयभारतेतिसम्बोधनाभ्यामुभयकुलशुद्धस्यैवविद्याधिकारि त्वमितिएतदेवद्योत्यते १४

अविकारिविशेषणंतितिक्षुत्वंनोपयुक्तंकेवलस्यतस्यपुमर्थाहेतुत्वादितिशङ्कते शीतेति विवेकवैराग्यादिसहितंतन्मोक्षहेतुज्ञानद्वारातदर्थमितिपरिहरतिश्रृ णोति तितिक्षमाणस्यविवक्षितंलोभमुपलम्भयतियंहीति हर्षविषादरहितमि त्यनशमादिसाधनसम्पन्नत्वमुच्यतेधीमन्तमिति नित्यानित्यविवेकभागित्वमेतच्चो

## स्वामिकृतटका।

ननुतानहंनशोचामिकिन्तुतद्वियोगादिदुःखभाजंमामेवेतिचेत्तत्राहमात्रास्प र्शाइति मीयन्तेज्ञायन्तेविषयाआभिरितिमात्राइन्द्रियवृत्तयस्तासांस्पर्शाविषयैः सहसम्बन्धास्तेशीतोष्णादिप्रदाभवन्तितेत्वागमापायवत्त्वादनित्याअस्थिराअतस्तां स्तितिक्षस्वसहस्वयथाजलातपादिसंसर्गास्ततत्कालकृताःस्वभावतः शीतोष्णादि प्रयच्छन्तिएवंस्विष्टसंयोगवियोगाअपि सुखदुःखादिप्रयच्छन्तितेषाञ्चास्थिरत्वात् सहनंतवधीरस्योचितंनतुतन्निमित्तहर्षविषादपारवश्यमित्यर्थः ॥१४॥

## भाषाअनुवाद।

किसहेतुसेउपायअवलम्बनकरिशीतउष्णवारनकरनेसेउनकासहनाउचि तहैउसमेवडाफलहैवहकहतेहैंकिहेपुरुषश्रेष्ठअर्जुनजिनधीरपुरुषोंकोसुखदुख समानभावअर्थात् शीतउष्णामेक्लेशनहीहोतासोईविक्षेपरहितपुरुषधर्मज्ञानके द्वारामोक्षप्राप्तिकेअधिकारीहैं ॥१५॥

## शाङ्करभाष्यं

इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं यस्मात् नासत इति नासतोऽविद्यमानस्य शीतोष्णादेः सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता नहि शीतोष्णादि सकारणं प्रमाणैर्निरूप्यमाणं वस्तु सम्भवति विकारो हि सः विकारश्च व्यभिचरति यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकारः कारणव्यतिरेकेणानुपलब्धेरसज्जन्मप्रध्वंसाभ्यां प्रागूर्ध्वञ्चानुपलब्धेः कार्य्यस्य घटादेर्मृदादिकारणस्य तत्कारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वं तदसत्त्वे सर्वाभावप्रसङ्ग इति चेन्न सर्वत्र बुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिरिति यद्विषया बुद्धिर्न व्यभिचरति तत् सत् यद्विषया व्यभिचरति तदसत् इति सदसद्विभागे बुद्धितन्त्रे स्थिते सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते समानाधिकरणे न नीलोत्पलवत् सन् घटः सन् पटः सन् हस्तीत्येवं सर्वत्र तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति तथा च दर्शितं नतु सद्बुद्धिः तस्मात् घटादिबुद्धिविषये सन् व्यभिचारात् नतु सद्बुद्धिविषयोऽव्यभिचारात् पटे विनष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति चेत् न पटादावपि सद्बुद्धिदर्शनात् विशेषणविषयैव सद्बुद्धिरपि न विनश्यति अथ सद्बुद्धिवत् घटबुद्धिरपि घटान्तरे दृश्यते इति चेन्न पटादावदर्शनात् सद्बुद्धिरपि नष्टे घटे न दृश्यत इति चेत् न विशेष्याभावात् सद्बुद्धिः विशेषणविषया सती विशेष्याभावे विशेषणानुपपत्तौ किं विषया स्यान्नतु पुनः सद्बुद्धेर्विषयाभावात् एकाधिकरणत्वं घटादिविशेष्याभावेन युक्तं इति चेत् न सदिदमुदकमिति मरीच्यादावन्यतराभावेऽपि सामानाधिकरण्यदर्शनात् तस्माद्देहादेर्द्वन्द्वस्य च सकारणस्यासतो न विद्यते भाव इति तथा सतश्च आत्मनः अभावोऽविद्यमानता न विद्यते सर्वत्राव्यभिचारादित्यवोचाम एवमात्मानात्मनोः सदसतोरुभयोरपि दृष्टः उपलब्धोऽन्तो निर्णयः सत् सदेवासदसदेवेति तु अनयोर्यथोक्तयोस्तत्त्वदर्शिभिः तदिति सर्व

## आनन्दगिरिकृतटीका ।

अथ वैराग्यादेरुपलक्षणं नित्यात्मदर्शनं त्वमर्थज्ञानं साधनचतुष्टयवन्तमधिकारिणमनूद्य त्वंपदार्थज्ञानवतस्तस्य मोक्षौपयिकवाक्यार्थज्ञानयोग्यतामाह सनित्येति १५

## स्वामिकृतटीका ।

तत्प्रतीकारप्रयत्नादपि तत्सहनमेवोचितं महाफलत्वादित्याह यं हीति एते मात्रास्पर्शा यं पुरुषं न व्यथयन्ति नाभिभवन्ति समे दुःखसुखे यस्य तं सतैरविक्षिप्यमाणो धर्मज्ञानद्वारामृतत्वाय मोक्षाय कल्प्यते योग्यो भवति ॥ १५ ॥

नासतोविद्यतेभावोनाभावोविद्यतेसतः उभयोरपिदृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः १६

## शाङ्करभाष्यं

नामसर्व्वम्ब्रह्मतस्यनामतदितितद्भावस्तत्त्वंब्रह्मणोयाथात्म्यंतद्द्रष्टुंशीलंयेषांतेतत्त्वदर्शिनस्तैस्तत्त्वदर्शिभिस्त्वमपितत्त्वदर्शिनांदृष्टिमाश्रित्यशोकंमोहञ्चहित्वा शीतोष्णादीनिनियतानियतरूपाणिद्वन्द्वानि विकारोयमसन्नेवमरीचिजलवन्मिथ्यावभासतेतिमनसिव्यवस्थतितितिक्षस्वेत्यभिप्रायः १६

## आनन्दगिरिकृतटीका।

अधिकारिविशेषणेतितितिक्षुत्वे हेत्वन्तरपरत्वेनोत्तरश्लोकमवतारयतिइतश्चेति इतःशब्दार्थमेवस्फुटयतियस्मादिति यतःशीतादेःशोकादिहेतोरनात्मनोनास्तिवस्तुत्वंवस्तुनआत्मनोनिर्व्विकारत्वेनैकरूपत्वंअतोमुमुक्षोर्विशेषणंतितिक्षुत्वंयुक्तमित्याहनेत्यादिना कार्य्यस्यासत्त्वेपिकारणस्यसत्त्वेनात्यन्तसत्त्वासिद्धिरित्याशङ्क्यविशिनष्टिसकारणस्येति नासतइत्युपादायपुनर्नकारानुकर्षणमन्वयार्थं असतःशून्यस्यास्तित्वप्रसङ्गाभावादप्रसक्तप्रतिषेधप्रसक्तिरित्याशङ्क्याहनहीति विमतमतात्त्विकमप्रामाणिकत्वात्रज्जुसर्पवत्नहिधर्म्मिग्राहकस्यप्रत्यक्षादेस्तत्त्वावेदकंप्रामाण्यंकल्प्यतेविषयस्यदुर्निरूपत्वादतोऽनिर्व्वाच्यंद्वैतमित्यर्थः कथंपुनरध्यक्षादिविषयस्यशीतोष्णादिद्वैतस्यदुर्निरूपत्वेनानिर्व्वाच्यत्वंतत्राहविकारोहीति ततश्चविमतंमिथ्याआगमापायित्वात्सम्प्रतिपन्नवदितिफलितमाहविकारश्चेति वाचारम्भणश्रुतेःद्वैतमिथ्यात्वेअनुग्राहकत्वंदर्शयितुंचकारः किञ्चकार्य्यंकारणाद्भिन्नमभिन्नस्वेतिविकल्प्याद्यंदूषयतियथेति निरूप्यमाणमन्त्यंहिश्चेतिशेषःविमतंकारणान्नतत्त्वतोभिद्यतेकार्य्यत्वाद्घटवदित्यर्थः इतोपिकारणाद्भेदेननास्तिकार्य्यंआदावन्तेचयन्नास्तिवर्त्तमानेपितत्तथेतिन्यायादित्याहजन्मेति यदिकार्य्यंकार

## भाषा अनुवाद।

औरजोकहोकितोभीअतिदुःसहशीतउष्णाकैसेकरसहैं औरजोवडाशोककरिसहैंतोकदाचितआत्माकानाशहोसकताहैंयहशङ्काकरिकहतेहैं किविचारसेतोवेसहेजायसकतेहैं जैसेअतितुच्छऔअनात्मधर्मअर्थात्शरीरकेधर्मजोशीतउष्णप्रभृतिउनकाआत्मासेकुछसम्बन्धनहींहै औरसत्स्वभावजोआत्माउसकाकभूविनाशहोतानहीं यथार्थदर्शीतत्वज्ञानीइसीप्रकारसतऔअसतदोनोंपदार्थकीनिर्णयकियाहै इससेविवेकज्ञानकेद्वाराशीतउष्णआदिकोतुमसह्यकरो॥१६॥

## आनन्दगिरिकृतटीका ।

णादभिन्नं तदात्मभेदेनामत्त्वेपूर्वस्मादविशेषःतादात्म्येनावस्थानन्तुनयुक्तंतस्या
पिकारणव्यतिरेकेणाभावात् कार्य्यकारणविभागविधुरेवस्तुनिकार्य्यकारणपर
म्परायाविभ्रमत्वादित्यभिप्रेत्याहमृदादिति कार्य्यकारणविभागहीनं वस्त्वेवना
स्तीतिमन्वानश्चोदयति तदसत्त्वइति अनुवृत्तव्यावृत्तबुद्धिद्वयदर्शनादनुवृत्तेचव्या
वृत्तानांकल्पितं सर्वंभेदकल्पनाधिष्ठानमकार्य्यकारणंवस्तुसिध्यतीतिपरिहरति
नसर्व्वत्रेति सम्प्रतिसतोवस्तुत्वेप्रमाणमनुमानमुपन्यस्यतियद्विषयेति यद्व्यावृत्ते
ष्वनुवृत्तंतत्तदर्थंसत्यथासर्पधारादिष्वनुगतोरज्ज्वादेरिदमंशःविमतंसत्यमव्यभि
चारित्वात्संप्रतिपन्नवदित्यर्थः व्यावृत्तस्यकल्पितत्वेप्रमाणमाह यद्विषयेत्यादि
ना यद्व्यावृत्तंतन्मिथ्यायथासर्पधारादिविमतंमिथ्याव्यभिचारित्वात्संप्रतिपन्नवदि
त्यर्थइत्यनुमानद्वयमनुसृत्यसतोकल्पितत्वंअसतश्चकल्पितत्वंस्थितमितिशेषः ननु
नेदमनुमानद्वयमुपपद्यते समस्तद्वैतवैतथ्यवादिनोविभागाभावादनुमानादिव्यव
हारानुपपत्तेस्तत्राहसदसदिति उक्तेविभागेबुद्धिद्वयाधीनेस्थितेसत्यनुमानादिव्य
वहारोनिर्व्वहतिप्रातिभासिकविभागेनवियोगात्परमार्थस्येव तद्धेतुत्वेकेवलव्यति
रेकाभावादित्यर्थः कुतःसदसद्विभागस्यबुद्धिद्वयाधीनत्वंबुद्धिविभागस्यापितथाभा
वात्तत्राहसर्व्वत्रेति व्यवहारभूमिःसप्तम्यर्थः बुद्धिभागस्यापिकल्पितस्यैवबोध्यवि
भागप्रतिभासहेतुतेतिभावः बुद्धिद्वयमनुरुध्यसदसद्विभागेसतःसामान्यरूपतया
विशेषाकाङ्क्षायांसामान्यविशेषेद्वेवस्तुनीवस्तुभूतेस्यातामितिचेत्तत्राहसमानाधि
करणइति पदयोःसामानाधिकरण्यंबुद्ध्योरुपचर्य्यतेसोयमितिसामानाधिकरण्यव
द्घटःसन्नित्यादिसामानाधिकरण्यमेकवस्तुनिष्ठंवस्तुभेदेघटपटयोरिव तदयोगादि
त्यर्थः नीलमुत्पलमितिवद्धर्म्मधर्म्मिविषयतयासामानाधिकरण्यस्योपचलत्वान्नवस्त्वै
क्यविषयत्वमितिचेन्नेत्याहननीलेति नहिसामान्यविशेषयोर्भेदेचतद्भावोभेदाभे
देचतद्भावोभेदाभेदौचविरुद्धावतोजातिव्यक्त्योःसामानाधिकरण्यंनीलोत्पलयोरि
वनगौणंकिन्तुव्यावृत्तमनुवृत्तेकल्पितमित्येकनिष्ठमित्यर्थः सामान्यविशेषयोरुक्त
न्यायंगुणगुण्यादावतिदिशत्येवमिति तुल्यौहितत्रापिविकल्पदोषावितिभावः सा
मानाधिकरण्यानुपपत्त्याद्वेवस्तुनीसामान्यविशेषावितिपक्षं प्रतिक्षिप्यविशेषावेवव
स्तुनीतिपक्षंप्रतिक्षिपतितयोरिति बुद्धिव्यभिचाराद्बोध्यव्यभिचारेपिकथंव्यावृत्ता
नांविशेषाणामवस्तुत्वमित्याशङ्क्याहतथाचेति विकारोहिसदित्यादावितिशेषः न

## आनन्दगिरिकृतटीका ।

चैकंवस्तु सामान्यविशेषात्मकमेकस्यद्वैरूप्यविरोधादित्यभिप्रेत्य सामान्यमेकमेवव स्तुतद्बुद्धेरव्यभिचारात्बोध्यस्यापिसतस्तथात्वादित्याहनत्विति व्यभिचरतीतिपूर्व्वे णसम्बन्धः विशेषाणांव्यभिचारित्वेसतश्चाव्यभिचारित्वेफलितमुपसंहरतितस्मा दिति असत्त्वंकल्पितत्वं तच्छब्दार्थमेवस्फोरयतिव्यभिचारादिति सद्बुद्धिवि षयस्यसतोऽकल्पितत्वेतच्छब्दोपात्तमेवहेतुमाहअव्यभिचारादिति सद्बुद्धिव्यभि चारद्वाराबोध्यस्यापिव्यभिचारात्तदव्यभिचारित्वहेतोरसिद्धिरितिशङ्कते घटेवि नष्टइति सद्बुद्धेर्घटमात्रबुद्धिवद्घटविषयत्वाभावान्नघटनाशेव्यभिचारोस्तीतिपरि हरतिनपटादाविति सद्बुद्धेरघटविषयत्वेनिरालम्बत्वायोगात्विषयान्तरंवक्तव्य मित्याशङ्क्याहविशेषणेति सतोऽकल्पितत्वहेतोरव्यभिचारित्वस्यासिद्धिमुक्त्वावि शेषाणांकल्पितत्वहेतोर्व्यभिचारित्वस्यासिद्धिंशङ्कतेसदिति यथासद्बुद्धिर्घटेनष्टे पटादौदृष्टत्वात्अव्यभिचारिणी अव्यभिचारःसतोदर्शितस्तथाघटबुद्धिरपिघटे नष्टेघटान्तरे दृष्टत्वव्यभिचारात्घटेव्यभिचारासिद्धौविशेषान्तरेष्वपिकल्पितत्व हेतोःव्यभिचारोनसिध्यतीत्यर्थः घटबुद्धेर्घटान्तरेदृष्टत्वेपिपटादावदृष्टत्वेनव्यभि चारात्पटादिविशेषेष्वपिव्यभिचारित्वसिद्धिरित्युत्तरमाहनपटादाविति विशेषा णामेवंव्यभिचारित्वेसतोपि तदुपपत्तेरव्यभिचारित्वहेत्वसिद्धितादवस्थ्यमितिश ङ्कतेसद्बुद्धिरिति घटादिनाशदेशेतदुपरक्ताकारेणसत्त्वाभानेपिनासत्त्वंघटाद्यभा वाधिष्ठानतयाभानादित्याहनविशेष्येति यथासर्व्वगताजातिरित्यत्रखण्डमुण्डादि व्यक्त्यभावदेशेगोत्वं व्यञ्जकाभावान्नव्यज्यतेनगोत्वाभावात्तथासत्त्वमपिघटादिना शेव्यञ्जकाभावान्नभातिनस्वरूपाभावादित्युक्तमेवप्रपञ्चयतिसदित्यादिना सम्प्रति योगिकविशेषणत्वव्यभिचारेपिस्वरूपाव्यभिचाराद्युक्तंसतःसत्यत्वमितिभावः द्व योःसतोरेवविशेषणविशेष्यत्वदर्शनात्घटसतोरपिविशेषणविशेष्यत्वेद्वयोःसत्त्वध्रौ व्यात्घटादिविकल्पितत्वानुमानंसामानाधिकरण्यधीबाधितमितिचोदयति एके ति अनुभवमनुसृत्यबाधितविषयत्वमुक्त्वानुमानस्यनिरस्यतिनेत्यादिना घटादेःस तिकल्पितत्वानुमानस्यदोषराहित्येफलितमुपसंहरतितस्मादिति प्रथमपादव्या ख्यानपरिसमाप्तावितिशब्दः ननुनेदंव्याख्यानंभाष्यकाराभिप्रेतंसर्व्वद्वैतशून्यत्ववि वक्षायांशास्त्रतद्वाक्यविरोधात्केनापिपुनर्दुर्व्विदग्धेन स्वमनीषिकयोत्प्रेक्षितमेत दितिचेत्मैवंकिमिदंद्वैतप्रपञ्चस्यशून्यत्वंकिन्तुच्छत्वंकिंसद्विलक्षणत्वं नाद्योऽनभ्यु

अविनाशितुतद्विद्धियेनसर्वमिदंततं विनाशमव्ययस्यास्यनकश्चित्कर्तुमर्हति १७

आनन्दगिरिकृतटीका।

पगमात् द्वितीयानभ्युपगमेतुतत्रैवशास्त्रविरोधोभाष्यविरोधश्चसर्वंहिशास्त्रंतद्भाष्यं चद्वैतस्य सत्यत्वानधिकरणत्वसाधनेनाद्वैतसत्यत्वेपर्य्यवसितमितिनैविद्यद्भिस्तन्नत त्प्रतिष्ठापितंतथाचप्रक्षेपाशङ्कासंप्रदायपरिचयाभावादितिद्रष्टव्यं अनात्मजात स्यकल्पितत्वेनावस्तुत्वप्रतिपादनपरतया प्रथमपादव्याख्यायद्वितीयपादमात्मनःस र्वकल्पनाधिष्ठानस्याकल्पितत्वेनवस्तुत्वप्रसाधनपरतयाव्याकरोतितथेति नन्वा त्मनःसदात्मनोविशेषेषुविनाशिषुतद्द्वारकस्यविनाशः स्यादित्याशङ्क्यविशिष्टनाशे पिस्वरूपानाशस्योक्तत्वान्मैवमित्याहसर्व्वेति ननुकदाचिदसदेवपुनःसत्त्वमाप द्यतेप्रागसतोघटस्यजन्मनासत्त्वाभ्युपगमात्सच्चकदाचिदसत्त्वं प्रतिपद्यतेस्थिति कालेसतोघटस्यपुनर्नाशेनासत्त्वाङ्गीकारादेवं सदसतोरव्यवस्थितत्वाविशेषादुभयो रपिहेयत्वमुपादेयत्वंवातुल्यंस्यादितितत्राहएवमिति तुशब्दोदृष्टशब्देनसम्बध्य मानोदृष्टिमवधारयतिनहिप्रागसतोघटस्यसत्त्वमसत्त्वेस्थिते सत्त्वप्राप्तिविरोधाद् सत्त्वनिवृत्तिश्चसत्त्वप्राप्तप्राचेत् प्राप्तमितरेतराश्रयत्वमन्तरेणैवसत्त्वापत्तिमसत्व निवृत्तावसत्त्वमनवकाशिमवेत्एतेनसतोऽसत्त्वापत्तिरपिप्रतिनीतेतिभावः कथं तर्हिसतोऽसत्त्वमसतश्चसत्त्वंप्रतिभातिइत्याशङ्क्य तत्त्वदर्शनाभावादित्याहतत्वेति तस्यभावस्तत्वंनचतच्छब्देनपरामर्शयोग्यंकिञ्चिदस्ति प्रकृतंप्रतिनियतमित्याशङ्क्य

स्वामिकृतटीका।

ननुतथापिशीतोष्णादिकमतिदुःसहंकथंसोढव्यंअत्यन्तं तत्सहनेचकदाचिदा त्मनोनाशः स्यादित्याशङ्क्यतत्त्वविचारतः सर्व्वंसोढुंशक्यमित्याशयेनाहनासतोवि द्यतइति असतोऽनात्मधर्मत्वादविद्यमानस्यशीतोष्णादेरात्मनिभावःसत्तानविद्य तेतथासतःसत्स्वभावस्यात्मनोऽभावोविनाशोनविद्यतेएवमुभयोः सदसतोरन्तो निर्णयोदृष्टःकैःतत्त्वदर्शिभिर्व्वस्तुयाथार्थ्यवेदिभिःएवम्भूतविवेकेनसहस्वेत्यर्थः ॥१६॥

भाषा अनुवाद।

अविनाशीसतवस्तुकास्वरूपसामान्यसेवर्णन करिकेफेरिविशेषरूपसेकहते हैंजोइसअनित्यदेहमेसाक्षीरूपव्याप्तहोकररहाहै वहीआत्माकोअविनाशीजा नोजिसहेतुइसअव्ययआत्माकेविनाशकरनेकोकिसीकीसामर्थ्यनहींहै ॥१७॥

## शाङ्करभाष्यं

किंपुनस्तत्यत्सदेवसर्व्वदास्तीत्युच्यतेअविनाशीति अविनाशिनविनष्टुं शीलं यस्येतितुशब्दःसतोविशेषणार्थः तद्विद्धिविजानीहिकिंयेनसर्व्वमिदंजगत्ततंव्याप्तंसदाख्येनब्रह्मणासाकाशमाकाशेनेवघटादयः विनाशमदर्शनमभावमव्ययस्यनव्येति उपचयापचयौनयातिइत्यव्ययं तस्याव्ययस्यनैतत्सदाख्यं ब्रह्मस्वेनरूपेणव्येतिनव्यभिचरतिनिरवयवत्वाद्देहादिवत् नाप्यात्मीयेनात्मीयाभावात्यथादेवदत्तोधनहान्याव्येतिनत्वेवंब्रह्मव्येत्यतोऽव्ययस्यास्यब्रह्मणोविनाशंनकश्चित्कर्त्तुमर्हतिनकश्चित् आत्मानंविनाशयितुंशक्नोतिईश्वरोप्यात्माहिब्रह्मस्वात्मनिचक्रियाविरोधात् ॥१७॥

## आनन्दगिरिकृतटीका।

व्याचष्टेतदित्यादिना ननुसदसतोरन्यथात्वंकेचित्प्रतिपद्यन्तेकेचित्तुतयोरुक्तनिर्णयमनुसृत्यतथात्वमेवाभिगच्छन्तितत्रकेषांमतमेपितव्यमितितत्राहत्वमपीति १६

ननुसदितिसामान्यंस्वरूपंवाप्रथमेतस्यविशेषसापेक्षतयाप्रलयदशायामशेषविशेषविनाशेविनाशःस्यान्नचात्मादयोविशेषास्तदापिसन्तीतिवाच्यं आत्मातिरिक्तानांविशेषाणांकार्य्यत्वाङ्गीकारात् प्रलयावस्थायामनवस्थानादात्मनस्तुसामान्यात्मनोधर्म्मित्वादुक्तदोषाद्द्वितीयेतुस्वरूपस्यव्यावृत्तत्वेकल्पितत्वाद्विनाशित्वमनुवृत्तत्वेनतस्यैवसामान्यतयाप्रागुक्तदोषानुशक्तिरितिमन्वानश्चोदयतिकिंपुनरिति सामान्यविशेषभावशून्यमखण्डैकरसंसदेवेत्यादिश्रुतिप्रमितं सर्व्वविक्रियारहितंवस्तुप्रकृतंसद्विवक्षितमित्युत्तरमाहउच्यतइति आत्मनःसदात्मनोविनाशराहित्यविज्ञानेसर्व्वंजगद्व्यापकत्वंहेतुमाहयेनेतिआत्मनोविनाशाभावेयुक्तिमाहविनाशमिति आत्मनोविनाशमिच्छतास्वतोवापरतोवानाशस्तस्यैष्यतेनाद्यइत्याह अविनाशीति देहादिद्वैतमसदुच्यतेतत सतोविशेषणंस्वतोनाशराहित्यं तस्यद्योतकोनिपातइत्याहतुशब्दइति आकांक्षापूर्व्वकंविशेष्यंदर्शयतिकिमित्यादिना विमतमविनाशिव्यापकत्वादाकाशवत्नहिप्रमितमेवोदाहरणंकिन्तुप्रसिद्धमपीतिभावः नद्वितीयइत्याहविनाशमिति नखल्वस्यविनाशंकर्त्तुंकश्चिदर्हतीतिसम्बन्धः विनाशस्यसावशेषत्वनिरवशेषत्वाभ्यांद्वैराश्यमाश्रित्य व्याकरोतिअदर्शनमितिनकश्चिदस्याभावंकर्त्तुंशक्नोतीत्यत्रहेतुमाहअव्ययस्येतिब्रह्महिस्वरूपेणव्येति स्वसम्बन्धिनावेतिविकल्प्याद्यंदूषयतिनैतदिति नहि निरवयवस्य सावयवापचयरूपव्ययःसम्भवतीत्यत्रवैधर्म्यंदृष्टान्तमाहदेहादिवदिति द्वितीयंनिरस्यतिनापीति तदेवव्यति

अन्तवन्तइमेदेहानित्यस्योक्ताःशरीरिणः अनाशिनोऽप्रमेयस्यतस्माद्युध्यस्वभारत १८

## शाङ्करभाष्यम्।

किंपुनस्तद्सत्यत्स्वात्मसत्तांव्यभिचरतीत्युच्यतेअन्तवन्तइति अन्तोविनाशो विद्यतेयेषांतेअन्तवन्तोयथामृगतृष्णिकादौसद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्तेवि च्छिद्यतेसतस्याअन्तस्तथेमेदेहाःस्वप्नमायादेहादिवच्चान्तवन्तोनित्यस्यशरीरिणः शरीरवतोऽनाशिनोऽप्रमेयस्यात्मनोऽन्तवन्तइत्युक्ताविवेकिभिरित्यर्थः नित्यस्याना शिनइतिनपुनरुक्तंनित्यस्यद्विविधत्वाल्लोकेनाशस्यचयथादेहोभस्मीभूतोऽदर्शनंगतो नष्टउच्यतेविद्यमानोपियथाअन्यथापरिणतोव्याध्यादियुक्तोजातो नष्टउच्यतेतत्रा नाशिनोनित्यस्येतिद्विविधेनापिनाशेनासम्बन्धोऽस्येत्यर्थःअन्यथा पृथिव्यादिवदपि नित्यत्वंस्यादात्मनस्तन्माभूदिति नित्यस्यानाशिनोनेत्याह अप्रमेयस्यनप्रमेयस्यप्रत्य क्षादिप्रमाणैरपरिच्छेद्यस्येत्यर्थः नन्वागमेनात्मापरिच्छिद्यतेप्रत्यक्षादिनाचपूर्वं नात्मनःस्वतःसिद्धत्वात्सिद्धेह्यात्मनिप्रमातरिप्रमित्सोः प्रमाणान्वेषणाभवतिनहि

## आनन्दगिरिकृतटीका।

रेकदृष्टान्तेनस्पष्टयतियथेति द्विविधेपिव्ययायोगेफलितमाहअतइति किञ्चन ह्यपरतो नलक्ष्यत्वात्मत्वाद्घटवदित्याहनकश्चिदिति आत्मत्वहेतोरसिद्धिमुद्धरति आत्माहीतितदात्मश्रुतिरत्नहीतिहेतूक्रियते अस्तुतर्हिस्वयमेवब्रह्मस्वात्मनोना शकस्तद्वन्वनादिदर्शनान्तेत्याहस्वात्मनीति १७

## स्वामिकृतटीका।

तत्रसत्स्वभावमविनाशिवस्तुसामान्येनोक्तंविशेषतोदर्शयत्यविनाशित्वितियेन सर्वमिदमागमापायधर्मात्मकंदेहादिततंसाक्षित्वेनव्याप्तंतत्त्वात्मस्वरूपमविनाशि विनाशशून्यंविद्धिजानीहितत्रहेतुमाहविनाशमिति ॥१७॥

## भाषा अनुवाद।

उत्पत्तिविनाशधर्मविशिष्टदेहादिकीअनित्यतादिखावतेहैं किनित्यअर्थात्स दाएकरूपसेस्थितऔरइसीसेअविनाशीऔअपरिमेयकहेजानवेजोगनहींऐसादे हीअर्थात्आत्माहै औरसुखदुखआदिधर्म विशिष्टनश्वरविनाशीयहदेहहैऐसातत्त्व ज्ञानीकहतेहैं इसीसेजोस्वरूपसेआत्माकाविनाशयासुखदुख आदिकासम्बन्ध नहींहैतोमोहजनितशोकको परित्यागकरिकेयुद्धमेंप्रवृत्तहोउऔरअपनाक्षत्रीका परमधर्मजोयुद्धसोकभूं छोडनानहीं ॥१८॥

## शाङ्करभाष्यम्।

पूर्व्वमित्यसहमित्यात्मानंअप्रमायपश्चात्प्रमेयपरिच्छेदाय प्रवर्त्ततेनह्यात्मानामक
श्चिदप्रसिद्धोभवतिशास्त्रन्त्वन्त्यंप्रमाणंअतद्धर्म्माध्यारोपणमात्रनिवर्त्तकत्वेन प्रमाण
त्वमात्मनःप्रतिपद्यतेनत्वज्ञातार्थज्ञापकत्वेनतथाचश्रुतिःयत्साक्षादपरोक्षाद्ब्रह्म
यआत्मासर्व्वान्तरइतियस्मादेवंनित्योऽविक्रियश्चआत्मातस्मात् युध्यस्वयुद्धादुपरमं
माकार्षीरित्यर्थःनह्यत्रयुद्धकर्त्तव्यताविधीयतेयुद्धेप्रवृत्तएवह्यसौ शोकमोहप्रतिबद्ध
स्तूष्णीमास्तेऽतस्तस्यकर्त्तव्यप्रतिबन्धापनयनमात्रंभगवताक्रियतेतस्माद्युध्यस्वेत्यनु
वादमात्रंनविधिः १८

## आनन्दगिरिकृतटीका।

सदसतोरनन्तरप्रकृतयोःस्वरूपाव्यभिचारित्वेनपरमार्थतयासन्निर्धारित
मिदानीमसन्निर्द्दिधारयिषयापृच्छतिकिंपुनरिति असदेवेति निर्द्धारितत्वात्
प्रश्नस्यनिरवकाशत्वमाशङ्क्यशून्यंव्यावर्त्तयविवक्षितमसन्निर्धारयितुं तस्यसावका
शत्वमाह यत्स्थात्मेति देहादेरनात्मवर्गस्यप्रकृतासच्छब्दविषयतेत्याह उच्यतइति
तेषांस्वातन्त्र्यंव्युदस्यतिनित्यस्येति आकाशादिव्यावृत्त्यर्थंविशिनष्टिशरीरिणइति
परिणामनित्यत्वंव्यवच्छिनत्तिअनाशिनइति तस्यप्रत्यक्षाद्यविषयत्वमाहअप्रमेय
स्येति देहादेरवस्तुत्वादात्मनश्चैकरूपत्वाद्युद्धे स्वधर्म्मप्रवृत्तस्यापितवनहिंसादि
दोषसम्भावनेत्याहतस्मादिति ननुदेहादिषुसद्बुद्धेरनुवृत्तेस्तस्याविच्छेदाभावात्
कथमन्तवत्त्वंतेषामिष्यतेतत्राहयथेति तथेमेदेहाःसद्बुद्धिभाजोपिप्रमाणतोनिरू
पणायामवसानेविच्छेदादन्तवन्तोभवन्तीतिशेषः देहत्वादिनाचजाग्रद्देहादेरन्त
वत्त्वंसम्प्रतिपन्नवदनुमातुंशक्यमित्याहस्वप्नेति शरीरादेरन्तवन्तत्वेपिप्रवाहरू
पेणात्मनस्तत्सम्बन्धस्यानन्तत्वमाशङ्क्याहनित्यस्येति प्रवाहस्यप्रवाहिव्यतिरेकेण
निरूपणान्नतदात्मनादेहाद्यभावेसम्बन्धसिद्धिरित्यभिसन्धायोक्तं विवेकिभिरिति
पदद्वयस्यैकार्थत्वमाशङ्क्यनिरस्यतिनित्यस्येत्यादिना नित्यत्वस्यद्वैविध्यसिद्ध्यर्थंना
शद्वैविध्यंप्रतिज्ञातंप्रकटयति यथेत्यादिना नाशस्यनिरवशेषत्वेनसावशेषत्वेनच
सिद्धेद्वैविध्येफलितमाहतवेति विशेषणाभ्यांकूटस्थनित्यत्वमात्मनोविवक्षितमि
त्यर्थःअन्यतरविशेषणस्योपादानेपरिणामिनित्यत्वमात्मनःशङ्क्यतेत्यनिष्टापत्ति
माशङ्क्याहअन्यथेति औपनिषदत्वविशेषणमाश्रित्याप्रमेयत्वमाक्षिप्यतिनन्विति
इतश्चात्मतोनाप्रमेयत्वमित्याहप्रत्यक्षादिनेतितेनचागमप्रवृत्तेःपेक्षयापूर्व्वावस्थाया

## आनन्दगिरिकृतटीका।

मात्मैवपरिच्छिद्यतेतस्मिन्नेवाज्ञातत्वसंभवादज्ञातज्ञापकं प्रमाणमितिचप्रमाण
लक्षणादित्यर्थः एतदप्रमेयमित्यादिश्रुतिमनुसृत्यपरिहरतिनेत्यादिना कथंमा
नमनपेक्ष्यात्मनःसिद्धत्वमित्याशङ्क्योक्तंविवृणोतिसिद्धेहीति प्रमित्सोःप्रमेयमिति
शेषः तदेवव्यतिरेकमुखेनविशदयतिनहीति आत्मनःसर्व्वलोकप्रसिद्धत्वाच्चत
स्मिन्नप्रमाणमन्वेषणीयमित्याहनह्यात्मेति प्रत्यक्षादेरनात्मविषयत्वात्तत्रचाज्ञा
तज्ञाततायाव्यवहारसम्भवात्तत्प्रामाण्यस्यचव्यावहारिकत्वाद्विशिष्टे तत्प्रवृत्तावपि
केवलेतदप्रवृत्तेर्यद्यपिनात्मनितत्प्रामाण्यं तथापितद्धितश्रुत्याशास्त्रस्यतत्रप्रवृत्तिर
वश्यम्भाविनीत्याशङ्क्याहशास्त्रन्त्विति शास्त्रेणप्रत्यग्भूतेब्रह्मणिप्रतिपादितेप्रमात्रा
दिविभागस्यव्यावृत्तत्वाद्युक्तमस्यान्तत्वमपौरुषेयतया निर्दोषत्वाच्चागमस्यप्रामाण्य
मित्यर्थः तथापिकथमस्यप्रत्यगात्मनिप्रामाण्यंतस्यस्वतःसिद्धत्वेनाविषयत्वादज्ञात
ज्ञापनायोगादित्याशङ्क्यस्वतोभासमानोपिप्रतीचोमनुष्योहं कर्त्ताहमित्यादिनाम
नुष्यत्वकर्त्तृत्वादीनामतद्धर्म्माणामध्यारोपणेनात्मनिप्रतीयमानत्वात् तन्मात्रनिव
र्त्तकत्वेनात्मनोविषयत्वमनापाद्यैवशास्त्रंप्रामाण्यंप्रतिपद्यतेसिद्धन्तुनिवर्त्तकत्वादि
तिन्यायादित्याहअतद्धर्म्मेति घटादाविवस्फुरणातिशयजनकत्वेनकिमित्यात्मनिशा
स्त्रप्रामाण्यं नेष्टमित्याशङ्क्यजड़त्वाजड़त्वाभ्यांविशेषादितिमत्वाह नत्विति आत्मा
त्मनोमनापेक्षासन्तरेणस्वतः स्फुरणेप्रमाणमाहतथाचेतिसाक्षादन्यापेक्षामन्तरे
णापरोक्षदपरोक्षस्फुरणात्मकंयद्ब्रह्मनचतस्यात्मनोर्थान्तरत्वंसर्व्वाभ्यन्तरत्वेनसर्व्व
वस्तुसारत्वात्तमात्मनंव्याचक्ष्वेतियोजनाअप्रमेयत्वनाविनाशित्वप्रतिपाद्यफलितंनि
गमयतियस्मादिति स्वधर्म्मनिवृत्तिहेतुनिषेधेतात्पर्य्यंदर्शयतियुद्धादिति आत्मनो
नित्यत्वादिस्वरूपमुपपाद्ययुद्धकर्त्तव्यत्वविधानात् ज्ञानकर्म्मसमुच्चयोत्रभातीत्याश
ङ्क्याहनहीति युद्धस्वेतिवचनात्तत्प्रवर्त्तकत्वविधिरस्तीत्याशङ्क्याहयुद्धइति कथं
तर्हिकथंभीष्ममहमित्याद्यर्ज्जुनस्ययुद्धोपरमपरंवचनमितितत्राहशोकेति यदि
स्वतोयुद्धेप्रवृत्तिःतर्हिभगवद्वचनस्यकागतिरित्याशङ्क्याहतस्येति भगवद्वचनस्य
प्रतिवन्धनिवर्त्तकत्वे सत्यर्जुनप्रवृत्तेःस्वाभाविकत्वफलितमाहतस्मादिति ॥१८॥

अविनाशित्वतद्विद्वीत्यत्रपूर्व्वार्द्धेनतत्पदार्थसमर्थनमुत्तरार्द्धेननिरीश्वरवादस्यप
रिणामवादस्यवानिराकरणमात्मनि जन्मादिप्रतिभानस्यौपचारिकत्वप्रदर्श्यमन्त
वन्तइत्यादिवचनमितिकेचित्अस्तुनामायमपिपन्थाःपूर्व्वोक्तस्यगीताशास्त्रार्थस्योत्

यएनंवेत्तिहन्तारंयश्चैनंमन्यतेहतम् उभौतौनविजानीतोनायंहन्तिनहन्यते १९

## शाङ्करभाष्यम्।

शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रंनप्रवर्त्तकमित्येतत्पार्थस्य साक्षीभूतेऋचावानिनायभगवान्यत्तुमन्यसेयुद्धेभीष्मादयोमयाहन्यन्तेऽहमेवतेषां हन्तेत्येषाबुद्धिर्मृषैवतेकथंयएनमिति यएनंप्रकृतंदेहिनंवेत्तिविजानातिहन्तारंह ननक्रियायाःकर्त्तारंयश्चैनमन्योमन्यतेहतंदेहहननेनहतोऽहमितिहननक्रियायाः कर्मभूतंतावुभौनविजानीतोनज्ञातवन्तौ अविवेकेनात्मानमहंप्रत्ययविषयंहन्ताऽहं हतोऽस्म्यहमितिदेहहननेनआत्मानंयौविजानीतस्तावात्मस्वरूपानभिज्ञावित्यर्थःय स्मादयमात्माहन्तिनहननक्रियायाःकर्त्ताभवतिनचहन्यते नचकर्मभवतीत्यर्थअवि क्रियत्वात् १९

## आनन्दगिरिकृतटीका।

प्रेक्षामात्रमूलत्वंनिराकर्तुंमन्त्रद्वयंभगवानानीतवानितिश्लोकद्वयस्यसङ्गतिंदर्शयति शोकमोहादीति तत्रप्रथममन्त्रस्यसङ्गतिमाहयत्त्विति प्रत्यक्षनिबन्धनत्वाद्ब प्याबुद्धेर्मृषात्वमयुक्तमित्याक्षिपतिकथमिति प्रत्यक्षस्याज्ञानप्रसूतत्वेनाभासत्वात् तत्कृताबुद्धिर्नप्रमेतिपरिहरतियएनमिति हन्ताचेन्मन्यतेहन्तुंइत्याद्यास्यचसर्थ तोदर्शयित्वाव्याचष्टेयएनमिति हन्तारंहतञ्चात्मानंमन्यमानस्यकथमज्ञानमित्या शङ्क्याहहन्ताहमिति हन्तृत्वादिज्ञानमज्ञानमित्यत्रहेतुमाहयस्मादिति आ त्मनोहननंप्रतिकर्तृत्वकर्मत्वयोरभावेहेतुंदर्शयतिअविक्रियत्वादिति १९

## स्वामिकृतटीका।

तदेवंभीष्मादिमृत्युनिमित्तः शोकोनिवारितोयच्चात्मनोहन्तृत्वनिमित्तंदुःख मुक्तं एतान्नहन्तुमिच्छामीत्यादिना तदपितद्वदेवनिर्निमित्तमित्याह यएनमति

## भाषाअनुवाद।

भगवानकोइसबातसेमहात्माभीष्मपितामहादिकके मृत्युहेतकजोअर्जुनको शोकआयकेप्राप्तभयाथासोदूरभयाअवक्तादुखकेवधकरनेहारेहमहैं यहदुखप्रथम अध्यायके ३४ श्लोकमेंकहाहै सोउसदुखकेउत्पन्नहोनेमेकोईहेतुनहींहै यहप्र तीतिकरावतेहैं कियहआत्मानकिसीसेमरताऔरनकिसीकोमारताहै औरजो इसकोहन्ताजानताऔरइसकोहतमानतावेदोनोकुछभीनहींजानतेहैं १९

नजायतेम्रियतेवाकदाचिन्नायंभूत्वाभविताबानभूयः अजोनित्यःशाश्वतोऽयंपुराणोनहन्यतेहन्यमानेशरीरे २०

शाङ्करभाष्यं

कथमविक्रियःआत्मेतिद्वितीयोमन्त्रः नजायतेनोत्पद्यतेजनिलक्षणावस्तुविक्रियानात्मनोविद्यतइत्यर्थःतथानम्रियतेवा तत्रवाशब्दश्चार्थेनम्रियतेचेत्यन्त्याविनाशलक्षणाविक्रियाप्रतिषिध्यतेकदाचिच्छब्दःसर्व्वविक्रियाप्रतिषेधैःसंबध्यते नकदाचिज्जायतेनकदाचिन्म्रियतइत्येवं यस्मादयमात्माभूत्वाभवनक्रियामनुभूयपश्चादभविताअभावंगन्तानभूयःपुनस्तस्मान्नम्रियतेयोहिभूत्वानभवितासम्रियतइत्युच्यते लोकेवाशब्दान्नशब्दाच्चायमात्माभूत्वा वाभवितादेहवन्नभूयःपुनस्तस्मान्नजायतेयोह्यभूत्वाभवितासजायतइत्युच्यतेनैवमात्माऽतोनजायते यस्मादेवंतस्मादजोयस्मा

स्वामिकृतटीका।

एनमात्मानमात्मनोहननक्रियायाकर्मत्ववत् कर्तृत्वमपिनास्तीत्यर्थः तत्रहेतुर्नायमिति १९

भाषा अनुवाद ।

आत्माकानाशनहीं यहबातषडभावविक्रियाकहेविकारकाअभावकथनकेद्वाराद्दढकरतेहैं किआत्माकाजन्महोतानहीं अर्थात्उसकाजन्मरूपविकारनहीं औरकभीमरताभीनहीं अर्थात्विनाशरूपविकारनहींऔरआत्माउत्पन्नहोकेविद्यमानहैयहभीनहीं अर्थात्वर्त्तमानरूपविकारनहींजोजन्मसेपीछेवर्त्तमानहोतायहतोअजन्मापूर्व्वसेसदासर्व्वदाविराजमानहै इसकाफेरिजन्मलेविद्यमानहोनाअसम्भवहै औरयहनित्यसदाएकरूपअर्थात्इसकावृद्धिरूपविकारनहींऔरयहशाश्वतअर्थात्क्षयरहितऔपुराणअर्थात्इसकापरिणामनहीं परिणामकहतेरूपान्तरहोनेकोआत्मापुरातनहोकेभीनयासाहोता देखोपरिपक्वहोकेभीरूपान्तरकोप्राप्तनहींहोताहै ज्योंकात्योंहीरहताऔरभीकहतेकिपहलेनहींथाअवभयाऔरवढ़ताहैयहकुछवातआत्मामेनहींहै इसअर्थसेभीवुद्धिरूपविकाररहितहोताहै इसविषयमेअजऔनित्ययेदोनोशब्दोंकेरहनेसे औरकुछकहनेकाप्रयोजननहींइसीप्रकारआत्माकाजन्मविद्यमानतावुद्धिपरिणामक्षयक्षय औविनाशयेछविकारोंकाअभावसांख्यशास्त्रसेनिर्णयकियाहैअवजोवाकीसोकहतेहैंकिशरीरहतहोनेसेभीआत्माहतहोतानहींजिससेवहअविनाशीहै २०

शाङ्करभाष्यं

न म्रियते तस्मान्नित्य आद्यन्तयोर्विक्रिययोः प्रतिषेधे सर्वा विक्रियाः प्रतिषिद्धा भवन्ति तथापि मध्यभाविनीनां विक्रियाणां तदर्थैः स्वशब्दैरेव प्रतिषेधः कर्त्तव्य इत्यनुक्तानामपि यौवनादि समस्तविक्रियाणां प्रतिषेधो यथा स्यादित्याह शाश्वत इत्यादिना शाश्वत इत्यपक्षयलक्षणा विक्रिया प्रतिषिध्यते शश्वद्भवः शाश्वती नापक्षीयते स्वरूपेण निरवयवत्वान्निर्गुणत्वाच्च नापि गुणक्षयेनापक्षयः अपक्षयविपरीतापि वृद्धिलक्षणा विक्रिया प्रतिषिध्यते पुराण इति यो ह्यवयवागमेनोपचीयते स वर्द्धते अभिनव इति चोच्यते अयं त्वात्मा निरवयवत्वात् पुरापि नव एवेति पुराणो न वर्द्धत इत्यर्थः तथा न हन्यते न विपरिणम्यते हन्यमाने विपरिणम्यमानेपि शरीरे हन्तिरत्र विपरिणामार्थे द्रष्टव्योऽपुनरुक्ततायै न विपरिणमत इत्यर्थः अस्मिन् मन्त्रे षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः यस्मादेवं तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य सम्बन्धः २०

आनन्दगिरिकृतटीका।

तदेव साधयितुं न जायते म्रियते वा विपश्चिदित्यादि मन्त्रान्तरमवतारयति कथमिति सर्वविक्रियाराहित्यप्रदर्शनेन हेतुं विशदयन् मन्त्रमेव पठति न जायत इति जन्ममरणविक्रियाद्वयप्रतिषेधं साधयति नायमिति अयमात्मा भूत्वा न भविता न चाभूत्वा भूयो भवितेति योजना न केवलं विक्रियाद्वयमेवात्र निषिध्यते किन्तु सर्वमेव विक्रियाजातमित्याह अज इति वाच्यमर्थमुक्त्वा विवक्षितमर्थमाह जनिलक्षणेति विकल्पार्थत्वं व्यावर्त्तयति वेति निष्पन्नमर्थं निर्दिशति नेत्यादिना सम्बन्धमेवाभिनयति न कदाचिदिति अन्त्यविक्रियाभावे हेतुत्वेन नायमित्यादि व्याचष्टे यस्मादिति उक्तमेव व्यनक्ति यो हीति आत्मनि तु भूत्वा पुनरभवनाभावान्नास्ति मृत्युरित्यर्थः आत्मनो जन्माभावेपि हेतुरिष्टैव विवक्षित इत्याह वाशब्दादिति अभूत्वेतिच्छेदं देहवदिति व्यतिरेकोदाहरणं उक्तमेवार्थं साधयति यो हीति जन्माभावे तत्पूर्विकास्तित्वविक्रियापि नात्मनोस्तीत्याह यस्मादिति प्राणवियोगादात्मनोऽस्तेरभावे सावशेषनाशाभाववन्निरवशेषनाशाभावोपि सिध्यतीत्याह यस्मादिति ननु जन्मनाशयोर्निषेधे तदन्तर्गतानां विक्रियान्तराणामपि निषेधसिद्धेस्तन्निषेधार्थं न पृथक् यतितव्यमिति तत्राह यद्यपीति स्वशब्दैर्मध्यवर्त्तिविक्रियानिषेधवाचकैरिति यावत् आर्थिकेपि निषेधे निषेधस्य सिद्धतया शाब्दो निषेधो न पृथगर्थवानित्याशङ्क्याह अनुक्ता

## शाङ्करभाष्यं

यएनंवेत्तिहन्तारमित्यनेनमन्त्रेणहननक्रियायाः कर्त्ताकर्मचनभवतीतिप्रति ज्ञायनजायतइत्यनेनाविक्रियत्वेहेतुमुक्त्वाप्रतिज्ञातार्थमुपसंहरति वेदाविनाशिन मितिवेदविजानाति अविनाशिनमन्त्यभावविकाररहितंनित्यंविपरिणामरहितं

## आनन्दगिरिकृतटीका।

नामिति नित्यशब्देनशाश्वतशब्दस्यपौनरुक्त्यंपरिहरन् व्याकरोतिशाश्वतइत्या दिना अपक्षयोहिस्वरूपेणवास्याद्गुणापचयतोवेति विकल्पक्रमेणद्रूपयति नेत्या दिना पुराणपदस्यागतार्थत्वंकथयतिअपक्षयेतितदेवस्फुटयतियोहीति नम्रि यतेवेत्यनेनचतुर्थपादस्यपौनरुक्त्यमाशङ्क्यव्याचष्टे तथेत्यादिना ननुहिंसार्थोह न्तिःश्रूयतेतत्कथंविपरिणामोनिषिध्यतेतत्राहहन्तिरिति हिंसार्थत्वसम्भवेकि मित्यर्थान्तरंहन्तेरिष्यतेतत्राहअपुनरुक्ततायाइति हिंसार्थत्वेहतिनिषेधेनपौन रुक्त्यंस्यात्तन्निषेधार्थंविपरिणामार्थत्वमेष्टव्यमित्यर्थः पूर्वावस्थात्यागेनावस्थान्त रापत्तिर्विपरिणामःनदर्थश्चेदवहन्तिरिष्यतेतदानिष्पन्नमर्थमाहनेति नजाय तेइत्यादिमन्त्रार्थमुपसंहरतिअस्मिन्निति षण्णांविकाराणामात्मनिप्रतिषेधेफ लितमाहसर्वेति आत्मनःसर्वविक्रियाराहित्येपिकिमायातमित्याशङ्क्याहयस्मा दिति २०

## स्वामिकृतटीका।

नहन्यतइत्येतदेवषड्भावविकारशून्यत्वेनद्रढयतिनेति नजायतइतिजन्मप्र तिषेधःनम्रियतइतिविनाशप्रतिषेधःवाशब्दौचार्थेनचायंभूत्वाउत्पद्यभविताभवति अस्तित्वंभजतेकिन्तुप्रागेवस्वतःसद्रूपइतिजन्मानन्तरास्तित्वलक्षणद्वितीयविकार प्रतिषेधस्तत्रहेतुःयस्मादजः योहिजायतेसजन्मानन्तरमस्तित्वंभजते नतुयःस्वत एवास्तिसभूयोप्यन्यदस्तित्वंभजतइत्यर्थः नित्यःसर्वदैकरूपइतिवृद्धिप्रतिषेधःशाश्व तःशश्वद्भवइत्यपक्षयप्रतिषेधः पुराणइतिविपरिणामप्रतिषेधःपुरापिनवएवनतुप रिणामतोरूपान्तरंप्राप्यनवोभवतीत्यर्थः यद्वाभवितेत्यस्यानुषङ्गंकृत्वाभूयोऽधिकं यथाभवतितथानभवितेतिवृद्धिप्रतिषेधःअजोनित्यइतिचोभयंवृद्धयाद्यभावेहेतुरिति नपौनरुक्त्यं तदेवंजायतेअस्तिवर्द्धतेविपरिणमते अपक्षीयतेनश्यतीत्येवंसांख्या दिभिरुक्ताःषड्भावविकारानिरस्ताःयदर्थमेते विकारानिरस्तास्तंप्रस्तुतंविनाशा भावमुपसंहरतिनहन्यतेहन्यमानेशरीरइति २०

वेदाविनाशिनंनित्यंयएनमजमव्ययं कथंसपुरुषःपार्थकंघातयतिहन्तिकं॥२१॥

## शाङ्करभाष्यं

योवेदेतिसम्बन्धः एनंपूर्वेणमन्त्रेणोक्तलक्षणमजंअव्ययंउपजननापक्षयरहितंकथं केनप्रकारेणसविद्वान् पुरुषोऽधिकृतोहन्तिहननक्रियांकरोतिकथंवाघातयतिह न्तारंप्रयोजयति नकथञ्चित्कञ्चित्हन्तिनकथञ्चित्कञ्चित्घातयतीत्युभयत्रा क्षेपएवार्थः प्रश्नार्थासम्भवात्हेत्वर्थस्यअविक्रियत्वस्यचतुल्यत्वाद्विदुषः सर्वकर्म्म प्रतिषेधएवप्रकरणार्थोऽभिप्रेतोभगवताहन्तेस्त्वाक्षेपउपाहरणार्थत्वेन विदुषःकि ञ्चित्कर्म्मासम्भवेहेतुविशेषंपश्यन्कर्म्माण्याक्षिपतिभगवान् कथंसपुरुषइति ननू क्तमेवआत्मनोऽविक्रियत्वंसर्व्वकर्म्मासम्भवकारणविशेषः सत्यमुक्तोनतुसकारण विशेषेऽन्यत्वाद्विदुषोऽविक्रियत्वादात्मनइति नन्वविक्रियंस्थाणुं विदितवतःक र्मनसम्भवतीतिचेन्नविदुषआत्मत्वान्नदेहादिसंघातस्यविद्वत्ता अतःपारिशेष्याद संहतआत्माविद्वानविक्रयइतितस्यविदुषःकर्म्मासम्भवादाक्षेपोयुक्तः कथंसपुरुषइ तियथाबुद्ध्याद्याहृतस्यशब्दाद्यर्थस्याविक्रिय एवसन्बुद्धिवृत्त्यविवेकविज्ञानेनावि द्ययोपलब्धआत्माकल्प्यते एवमेवात्मानात्मविवेकज्ञानेनबुद्धिवृत्त्याविद्ययाअसत्य रूपयैवपरमार्थतोऽविक्रियएवात्माविद्वानुच्यते विदुषःकर्म्मासंभववचनाद्यानि कर्म्माणि शास्त्रेणविधीयन्तेतान्यविदुषोविहितानीति भगवतानिश्चयोऽवगम्यते ननु विद्याप्यविदुष एवविधीयते विदितविद्यस्यपिष्टपेषणवद्विद्याविधाना नर्थक्यात् तत्राविदुषः कर्म्माणिविधीयन्तेनविदुषइति विशेषोनोपपद्यतेइति चेन्नानुष्ठेयस्य भावाभावविशेषोपपत्तेरग्निहोत्रादि विध्यर्थज्ञानोत्तरकालम

## भाषा अनुवाद।

पूर्वश्लोकमेंआत्माकोषड्विकाररहितकहाइसमेंआत्माहननक्रियाजोमार नाइसकाकर्त्ताकहेकरनेवालानहींहै यहबातअच्छीप्रकारसेसिद्धभईसोईकह तेहैं किजोकोईइसआत्माकोघटनेबढनेसेरहिततथाजन्महीनऔ अविनाशीजा नतेहैं हेअर्जुनवेकिसतरहसेकिसीकोमारेंगे कारणयहकिआत्माअविनाशीकेव धकीउपायनहींहै औआपप्रेरणाकरिऔरकिमीसेकिसीकोभीकिसलियेघात करावेगा इसमेंयोहप्रमाणजोकीयहअभिप्रायजानीगईकिभीष्मआदिकेवधमेंप्रयोज नरूपदोषहमैंकभीदीनोनहींअर्थात्तुमारेकहनेसेयहकामहमनेकियाहैऐसाक हियोनहीं २१

## शाङ्करभाष्यं

ग्निहोत्रादिकर्म्मानेकसाधनोपसंहारपूर्व्वकमनुष्ठेयकर्त्ताहं ममकर्त्तव्यमित्येवंप्र
कारविज्ञानवतोऽविदुषोयथानुष्ठेयंभवति नतुतथानजायत इत्यात्मस्वरूपविषयं
ज्ञानोत्तरकालभाविकिञ्चिदनुष्ठेयंभवति किन्तुनाहंकर्त्तानभोक्तेत्याद्यात्मैकत्वाक
र्त्तृत्वादिविषयज्ञानादन्यन्नोत्पद्यतइत्येषविशेषउपपद्यते यःपुनःकर्त्ताहमिति
वेत्त्यात्मानंतस्यममेदं कर्त्तव्यमितिअवश्यम्भाविनीबुद्धिःस्यात्तदपेक्षयासोऽधिक्रियत
इतितंप्रतिकर्म्माणिसम्भवन्तिसचाविद्वान् उभौतौनविजानीतइतिवचनात्विशे
षितस्यचविदुषः कर्म्माक्षेपवचनात्कथंसपुरुषइतितस्माद्विशेषितस्याविक्रियात्म
दर्शिनोविदुषोमुमुक्षोश्च सर्व्वकर्म्मसन्न्यासएवाधिकारोऽतएवभगवान्नारायणःसां
ख्यान्विदुषोऽविदुषश्चकर्मिणः प्रविभज्यद्वेनिष्ठेग्राहयतिज्ञानयोगेन सांख्यानां
कर्म्मयोगेनयोगिनामितितथाचपुत्रायाहभगवान् व्यासोद्वाविमावथपन्थानावित्या
दितथाचक्रियापथश्चैवपुरस्तात्पश्चात्संन्यासश्चेत्येतमेवविभागं पुनःपुनर्दर्शयिष्य
तिभगवान्अतत्त्वविदहंकारविमूढात्मा कर्त्ताहमितिमन्यतेतत्त्ववित्तुनाहंकरो
मीतितथाचसर्व्वकर्म्माणिमनसासंन्यस्यास्तइत्यादितत्रकेचित् पण्डितम्मन्यावदन्ति
जन्मादिषड्भावविक्रियारहितोऽविक्रियोऽकर्त्तैकोहमात्मेतिनकस्यचित् ज्ञानमुत्
पद्यतेयस्मिन्सतिसर्व्वकर्म्मसन्न्यासउपदिश्यतेतन्न नजायतइत्यादिशास्त्रोपदेशान
र्थक्यप्रसङ्गात्यथाचशास्त्रोपदेशसामर्थ्याद्धर्म्मास्तित्वविज्ञानंकर्त्तुश्चदेहादिसम्बन्धि
ज्ञानञ्चोत्पद्यतेतथाचशास्त्रात् तस्यैवात्मनोऽविक्रियत्वाकर्त्तृत्वैकत्वादिविज्ञानं
कस्मान्नोपपद्यतेइतिप्रष्टव्यास्ते करणागोचरत्वादितिचेन्न मनसैवानुद्रष्टव्यमिति
श्रुतेःशास्त्राचार्य्योपदेशजनितशमदमादिसंस्कृतं मनआत्मदर्शनेकरणंतथाचतद
धिगमायअनुमानेआगमेचसतिज्ञानंनोत्पद्यतइति साहसमात्रमेतत्ज्ञानञ्चोत्पद्य
मानंतद्विपरीतमज्ञानंअवश्यंबाधतइत्यभ्युपगन्तव्यं तच्चाज्ञानंदर्शितंहन्ताहंहतो
स्मीत्युभौतौनविजानीतइत्यत्रचात्मनोहननक्रियायाः कर्त्तृत्वं कर्म्मत्वंहेतुकर्त्तृत्व
ञ्चाज्ञानकृतंदर्शितंतच्चसर्व्वक्रियास्वपिसमानं कर्त्तृत्वादेरविद्याकृतत्वमविक्रिय
त्वादात्मनःविक्रियावान्हिकर्त्तात्मनःकर्म्मभूतमन्यं प्रयोजयतिकुर्व्वितितदेतदविशे
षेणविदुषःसर्व्वक्रियासुकर्त्तृत्वंहेतुकर्त्तृत्वञ्चप्रतिषेधतिभगवान्विदुषः कर्म्माधिका
राभावप्रदर्शनार्थंवेदाविनाशिनं कथंसपुरुषइत्यादिनाक्वपुनर्विदुषोधिकारइत्येत
दुक्तंपूर्व्वमेवज्ञानयोगेनसांख्यानामितितथाचसर्व्वकर्म्मसंन्यासं वक्ष्यतिसर्व्वकर्म्माणि

## शाङ्करभाष्यम्।

मनसेत्यादिना ननुमनसेतिवचनान्नवाचिकानांकायिकानाञ्चसन्न्यासइतिचेत्न
सर्व्वकर्म्माणीतिविशेषितत्वात्मानसानामेव सर्व्वकर्मणामितिचेन्नमनोव्यापारपूर्व्व
कत्वाद्वाक्कायव्यापाराणांमनोव्यापाराभावेकर्म्मानुपपत्तेः शास्त्रीयाणांवाक्कायकर्म
णांकारणानिमानसानिमनोव्यापाराणिवर्ज्जयित्वान्यानिसर्व्वकर्म्माणिमनसासन्न्य
स्यास्तइतिचेन्ननैवकुर्व्वन्नकारयन्इति विशेषणात्सर्व्वकर्मसंन्यासोऽयंभगवतोक्तम
्रियतोनजीवतइतिचेन्ननवद्वारेपुरेदेहीआस्तेइति विशेषणानुपपत्तेः नहिसर्व्व
कर्मसंन्यासेनम्रियतस्तद्देहे आसनंसम्भवत्यकुर्व्वतोऽकारयतश्चदेहे संन्यस्येतिसम्ब
न्धोनदेहेआस्तइतिचेन्नसर्व्वत्रात्मनोऽविक्रियत्वावधारणात् आसनक्रियायाश्चाधि
करणापेक्षत्वात्तदनपेक्षत्वाच्चसंन्यासस्यसंपूर्व्वस्तुन्यासशब्दोऽत्रत्यागार्थोननिक्षेपार्थः
तस्माद्गीताशास्त्रेआत्मज्ञानवतःसन्न्यासएवाधिकारोनकर्मणीतितत्रतत्रोपरिष्टादा
त्मज्ञानप्रकरणेदर्शयिष्यामः २१

## आनन्दगिरिकृतटीका।

पूर्व्वश्लोकार्थस्यैवोत्तरत्रापिप्रतिभानात् पौनरुक्त्यमाशंक्यवृत्तानुवादपूर्व्वक
मुत्तरश्लोकमवतारयति यएनमित्यादिना कर्त्तृत्वाद्यभिमानविरोधादद्वैतकू
टस्थात्मनिश्चयसामर्थ्यात्प्राप्तंविदुषःसंन्यासंविद्यापरिपाकार्थमभ्यनुजानाति वेदे
ति पदद्वयस्यपूर्व्वमेवपौनरुक्त्यमाह अविनाशिनमित्यादिना प्रश्नोपिसम्भवतीति कि
मितितत्रउल्लेखेनव्याख्यायतेतदाह उभयत्रेतिउत्तरत्रप्रतिवचनादर्शनान्नात्र
प्रश्नःसम्भवतीत्यर्थः विवक्षितंप्रकरणार्थंनिगमयति हेत्वर्थस्येति अविक्रियत्वंहेत्व
र्थःकस्यविदुषःसर्वकर्मनिषेधसमानत्वादितियावत्यदिविदुषःसर्वकर्मनिषेधोभिम
तस्तर्हिकिमितिहन्त्यर्थएवाक्षिप्यतेतदाह हन्तेरिति उक्तंहेतुमाक्षेप्तुंपृच्छति
विदुषइति अभिप्रायमप्रतिपद्यमानोहेतुविशेषंपूर्व्वोक्तंस्मारयति नन्वितिउक्त
मङ्गीकृत्याक्षिपति सत्यमितिविदुषोविज्ञानात्मनोब्रह्मणश्चवेद्यस्यविरुद्धधर्मत्वे
नदहनतुहिनवद्भिन्नत्वाद्विदुषःसर्वकर्मत्यागेनअसौकारणविशेषःस्यादित्याह अन्य
त्वादिति अविक्रियत्वादितिच्छेदः तथापिकूटस्थमविक्रियंब्रह्मप्रतिपद्यमानस्य
कुतोविक्रियासम्भवेत्ब्रह्मप्रतिपत्तिविरोधादित्याशंक्याह नन्वितिअयमात्माब्रह्मे
त्यादिश्रुत्यासमाधत्तेनविदुषइतिकिञ्चविद्वत्ताविशिष्टस्यवाकेवलस्यवा नाद्योविशि
ष्टस्यविद्वत्तायांविशेषणस्यापितद्ब्रह्मणआज्ञानंचविशेषणीभूतसंघातस्याचेतनत्वाद्विद्व

## आनन्दगिरिकृतटीका।

त्तायुक्तेत्याह नदेहादीति द्वितीयेतुजीवब्रह्मविभागासिद्धिरित्याह अतइतिकि ञ्चप्रामाणिकविरुद्धधर्मवत्त्वस्यासिद्धत्वात्प्रातिभासिकस्यच विम्बप्रतिविम्बयोरनै कान्त्याद्भेदानुमानायोगात् जीवब्रह्मणोरभेदसिद्धिरित्यभिप्रेत्यफलितमाह इतित स्येति नन्वविक्रियस्यब्रह्मरूपतयासर्व्वकर्मासम्भवेविदुषोनिवृत्तापिकथंसम्भवति नहिब्रह्मणोऽविक्रियस्यविद्यालक्षणाविक्रियास्वीक्रियाभवितुमर्हतितत्राह यथेति अदृष्टेन्द्रियादिसहकृतमन्तःकरणंप्रदीपप्रभावद्विषयपर्य्यन्तंपरिगतंबुद्धिवृत्तिरुच्य तेतत्प्रतिविम्बितंचैतन्यंअभिव्यञ्जकबुद्धिवृत्त्यविवेकाद्विषयज्ञानमितिव्यवह्रियते तेनात्मोपलब्धाकल्प्यतेतस्याविद्याप्रयुक्तमिथ्यासम्बन्धनिबन्धनं तथैवाध्यासिकस म्बन्धेनब्रह्मात्मैक्याभिव्यञ्जकत्वाच्चोत्थवुद्धिवृत्तिद्वाराविद्वानात्माव्यपदिश्यते नचमि थ्यासम्बन्धेनपारमार्थिकाविक्रियत्वविहतिरस्तीत्यर्थः अहंब्रह्मेतिबुद्धिवृत्तेश्चोच्चा वस्थायामपिभावादात्मनःसविशेषत्वमाशंक्य तस्यायावदुपाधिसत्त्वमेवेत्याह अस त्येतिननुकूटस्थस्यात्मनोमिथ्याविद्यावत्त्वेपितस्यकर्माधिकारनिवृत्तौकस्यकर्माणिवि धीयन्ते नहिनिरधिकाराणांतेषांविधिरित्याशंक्याह विदुषइति कर्माण्यविदुषो विहितानीतिविशेषसाद्यिपति ननितिकर्मविधानस्यविदुषोविदुषश्चविद्याविधा नस्येतिविभागेकाहानिरित्याशंक्याह विदितेति विद्यायाविदितत्वंलब्धत्वंकर्म विधिःअविदुषोविद्याविधिरितिविभागासम्भवेफलितमाह तच्चेतिधर्मज्ञानानन्त रमनुष्ठेयस्याभावात्ब्रह्मज्ञानोत्तरकालञ्चतदभावात्ब्रह्मज्ञानहीनस्यैवकर्मविधि रितिसमाधत्ते नानुष्ठेयस्येतिविशेषोपपत्तिमेवप्रपञ्चयति अग्निहोत्रादीतिननुदे हादिव्यतिरिक्तात्मज्ञानंविनापारलौकिकेषुकर्मसुप्रवृत्तेरनुपपत्तेस्तथाविधज्ञानव ताकर्मानुष्ठेयमितिचेत्तत्राह कर्त्ताहमितिआत्मनिकर्त्ताभोक्तेत्येवंविज्ञानवत्त्वेपिब्र ह्मज्ञानविहीनत्वेनाविदुषोनुष्ठेयंकर्मेत्यर्थः देहादिव्यतिरिक्तात्मज्ञानवद्ब्रह्मज्ञान मपिज्ञानत्वाविशेषात् कर्मप्रवृत्तावुपकरिष्यतीत्याशंक्याह नत्विति अनुष्ठेयविरो धित्वादविक्रियात्मज्ञानस्येतिशेषः ननुब्रह्मात्मैकत्वज्ञानादुत्तरकालमपिकर्त्ताहमि त्यादिज्ञानोत्पत्तौकर्मविधिःसावकाशःस्यादितिनेत्याह नाहमिति कारणाभावा दितिशेषःकर्तृत्वादिज्ञानमन्यदित्युक्तं अनुष्ठानाननुष्ठानयोरुक्तविशेषादविदुषो नुष्ठानंविदुषोनेत्युपसंहरतिइत्येषइति नन्वात्मविदोनचेदनुष्ठेयंकिञ्चिदस्तिकथं तर्हिविद्वान्यजेतेत्यादिशास्त्रात्तंप्रतिकर्माणिविधीयन्तेतत्राह यःपुनरिति आत्म

## आनन्दगिरिकृतटीका।

निकर्त्तृत्वादिज्ञानापेक्षयाकर्मस्वधिकृतत्वज्ञानेतथाविधंपुरुषं प्रतिकर्माणिविधीय
न्तेसर्वं प्राचीनवचनादविद्वानेवेतिनिश्चीयतेनखल्वकर्त्तृत्वादिज्ञानवतस्तद्विपरीत
कर्त्तृत्वादिज्ञानद्वाराकर्मसुप्रवृत्तिरित्यर्थः कर्मासम्भवेब्रह्मविदोहेत्वन्तरमाह
विशेषितस्येति वेदाविनाशिनमित्यादिनेतिशेषः यद्यपिविदुषोनास्तिकर्मतथा
पिविविदिषोःस्यादित्याशंक्याह तस्मादिति विद्ययाविरुद्धत्वादिप्रमाणमोक्षप्रति
पक्षत्वाच्चकर्मणामित्यर्थःयद्यपिमुमुक्षोराश्रमकर्माण्यपेक्षितानितथापिविद्ययातत्
फलाभ्यामविरुद्धान्येवतान्यभ्युपगतान्यन्यथाविविदिषासंन्यासविधिविरोधादित्यभि
प्रेत्योक्तेर्थेभगवतोनुमतिमाह अतएवेति विदुषोविविदिषोश्चसंन्यासेऽधिकारोवि
दुषस्तुकर्मणीतिविभागस्येष्टत्वादित्यर्थः अधिकारिभेदेननिष्ठाद्वयंभगवतावेदव्या
सेनापिदर्शितमित्याह तथाचेति अध्ययनविधिनास्वाध्यायपाठेनैवर्णिकस्यप्रवृत्तावन
न्तरंतत्रक्रियामार्गोज्ञानमार्गश्चेतिद्वौमार्गावधिकारिभेदेनावेदितावित्यर्थःचादि
शब्दाद्यत्रवेदाःप्रतिष्ठिताइत्यादिगृह्यतेउक्तयोर्मार्गयोस्तुल्यतांपरिहर्त्तुमुदाहर
णान्तरमाह तयेतिबुद्धिशुद्धिद्वाराकर्मतत्फलयोर्वैराग्योदयात्पूर्व्वंकर्ममार्गोवि
हितोविरक्तस्यपुनःसन्यासपूर्व्वकोज्ञानमार्गोदर्शितःसचेतरस्मादतिशयशालीति
श्रुतमित्यर्थः उक्तविभागेपुनरपिवाक्यशेषानुकूल्यमादर्शयति एनमेवेति अहङ्का
रविमूढात्मेत्यस्यव्याख्यानंअतत्त्वविदिति तत्त्ववित्त्वितिश्लोकमवतार्य्यतात्पर्य्यार्थं
संगृह्णाति नाहमिति पूर्व्वणक्रियापदेनेतिशब्दःसम्बध्यते विरक्तमधिकृत्यवाक्या
न्तरंपठति तथाचेति आदिशब्दस्तस्यैवश्लोकस्यशेषसंग्रहार्थः अविक्रियात्मज्ञा
नात्कर्मसंन्यासेदर्शितेमीमांसकामतमुत्थापयति तवेतिआत्मनोज्ञानक्रियाश्रयत्वा
धारत्वेनाक्रियत्वाभावादक्रियात्मज्ञानंसंन्यासकारणीभूतंनसम्भवतीत्यर्थः यथो
क्तज्ञानाभावोविषयाभावाद्वामानाभावाद्वेतिविकल्पाद्यंदूषयति नेत्यादिना नता
वदविक्रियात्माभावोनजायतेम्रियतेवेत्यादिशास्त्रस्याप्तवाक्यतयाप्रमाणस्यान्तरेण
कारणमानर्थक्यायोगादित्यर्थःद्वितीयंप्रत्याह यथाचेतिपारलौकिककर्मविधिसाम
र्थ्यसिद्धंविज्ञानमुदाहरति कर्त्तुश्चेतिकर्मकाण्डादज्ञातेधर्मादौविज्ञानोत्पत्तिवत्
ज्ञानकाण्डादज्ञातेब्रह्मात्मनिविज्ञानोत्पत्तिरविरुद्धाप्रमात्वाविशेषादित्यर्थःज्ञान
स्यमनःसंयोगजन्यत्वादात्मनश्चश्रुत्यामनोगोचरत्वनिरासान्नात्मज्ञानेसाधनमस्ती
तिशङ्कते करणेति श्रुतिमाश्रित्यपरिहरतिनमनसेतितत्त्वमस्यादिवाक्योत्थमनो

आनन्दगिरिकृतटीका।

इत्यैवशास्त्राचार्योपदेशमनुसृत्यद्रष्टव्यं तत्त्वमितिश्रूयतेस्वरूपेणस्वप्रकाशमपिब्र ह्मात्मवस्तुवाक्योत्थबुद्धिवृत्त्यभिव्यक्तं सविकल्पकव्यवहारावलम्बनंभवतीतिमनोगो चरत्वोपचारादसिद्धंकरणागोचरत्वमित्यर्थः कथंतर्हिब्रह्मात्मनोमनोविषयत्वनि षेधश्रुतिरित्याशंक्यासंस्कृतमनोवृत्त्यविषयात्सेतिमन्वानःसन्नाह शास्त्रेति सत्यपि श्रुत्यादौतदनुग्राहकाभावान्नात्माकमविक्रियात्मकज्ञानमुत्पत्तुमर्हतीत्याशंक्याह तथेति तस्याविक्रियस्यात्मनोऽधिगत्यर्थम् विमतोविकारोनात्मधर्मोविकारत्वादु भयाभिमतविकारवदित्यनुमाने पूर्वोक्तश्रुतिस्मृतिरूपागमेचसत्येवतस्मिन्नोत्पद्य तेज्ञानमितिवचःसाहसमात्रं सत्येरसानेमेयंनभातीतिवदित्यर्थः ननुयथोक्तंज्ञा नमुत्पन्नमपिहानायोपादानायवानभवतीतिकुतोऽस्यफलवत्त्वंतत्राह ज्ञानञ्चेतिश्र वणमिति प्रकाशप्रवृत्तेस्तमोनिवृत्तिव्यतिरेकेणानुपपत्तिवदात्माज्ञाननिवृत्तिमन्त रेणात्मज्ञानोत्पत्तेरनुपपत्तेरित्यर्थः नन्वज्ञानस्यज्ञानप्रागभावत्वात्तन्निवृत्तिरेव ज्ञानंनतुतन्निवर्त्तकमिति तत्राह तथेति कथंपुनर्भगवतापिज्ञानाभावातिरिक्तम ज्ञानंदर्शितमित्याशंक्याह अत्रचेति विमतंज्ञानाभावोनभवत्युपादानत्वान्मृदादिव दितिभावः ननुहननक्रियायाश्चनहिंस्यादितिनिषिद्धत्वात्तत्कर्त्तृत्वादेरज्ञान कृतत्वेपिविहितक्रियाकर्त्तृत्वादेर्नतथात्वमितिनेत्याह तत्रेति नतावदात्मनिकर्त्तृ त्वादिनित्यत्वं अमुक्तिप्रसङ्गान्नचानित्यमपिनिरूपादानंभावकार्य्यस्योपादाननिय मात्तचानात्मातदुपादानमात्मनितत्प्रतिभानान्नचात्मैवतदुपादानं कूटस्थत्वतस्या विद्यांविनातद्योगादित्याह अविक्रियत्वादिति कर्तृत्वाभावेपिकारयितृत्वंस्या दित्याशंक्याह विक्रियावानिति आत्मनिकर्त्तृत्वादिप्रतिभानस्यानाद्यनिर्वाच्यम ज्ञानमुपादानंतन्निवृत्तिश्चतत्त्वज्ञानादित्युक्तमिदानींकर्त्तृत्वकारयितृत्वयोरविद्या कृतत्वेभगवतोनुमतिंदर्शयति तद्धेतदिति विदुषोयदिकर्माधिकाराभावोभग वतोभिमतःतर्हिकुत्रतस्यजीवतोविकारःस्यादितिपृच्छति क्वपुनरिति ज्ञाननि ष्ठायामित्युक्तंस्मारयति उक्तमिति तदङ्गभूतेसर्व्वकर्मसंन्यासेचतस्याधिकारोस्ती त्याह तथेति वक्ष्यमाणेवाक्येसर्व्वकर्मसंन्यासोनप्रतिभातिमानसानामेवकर्मणांवि शेषणवशात्त्यागावगमादितिशङ्कते नन्विति विशेषणान्तरमाश्रित्यदूषयति नस र्व्वेति मनसेतिविशेषणान्मानसेष्वेवकर्मसुसर्व्वशब्दः सङ्कुचितःस्यादितिशङ्कते

आनन्दगिरिकृतटीका।

मानसानामिति सर्व्वात्मनामनोव्यापारत्यागेव्यापारान्तराणामनुपपत्तेःसर्व्वकर्म संन्यासःसिध्यतीतिपरिहरति नेत्यादिना मानसेष्वपिकर्मसुसंन्यासेसङ्कोचान्न वागादिव्यापारानुपपत्तिरितिशङ्कते शास्त्रीयाणामिति अन्यानीत्यशास्त्रीयवाक्का यकर्मकारणान्यशास्त्रीयाणिमानसानितानिचसर्व्वाणिकर्माणीत्यर्थः वाक्यशेष मादायदूषयति नैवेति नहिविवेकबुद्ध्यासर्व्वाणिकर्माणिअशास्त्रीयाणिसंन्यस्य तिष्ठतीतियुक्तं नैवकुर्व्वन्नित्यादिविशेषणस्यविवेकबुद्धेःसर्व्वत्यागहेतोस्तुल्यत्वादि त्यर्थः भगवदभिमतसर्व्वकर्मसंन्यासस्यावस्थाविशेषेसङ्कोचंदर्शयन्नाशङ्कते मरि ष्यतइति संन्यासोजीवदवस्थायामेवात्रविवक्षितइत्यत्रलिङ्गंदर्शयन्नुत्तरमाह न नयेति अनुपपत्तिमेवस्फोरयति नहीति अन्वयविशेषाव्याख्यानेनलिङ्गासिद्धिं चोदयति अकुर्व्वतइति विवेकवशाद्विशेषाणयपिकर्माणिदेहेयथोचितंनिःक्षिप्या कुर्व्वन्नकारयंश्चविद्वानवतिष्ठते तथाचदेहेकर्माणिसंन्यस्याकुर्व्वतोऽकारयतश्चसुख मासनमितिसम्बन्धसम्भवात्विशेषणस्यसतिदेहेकर्मत्यागविषयत्वाभावाज्जीवतःस र्व्वकर्मत्यागोनास्तीत्यर्थःअथवाकुर्व्वतइत्यादिपूर्व्ववैवसम्बन्धनीयंलिङ्गासिद्धिचोद्यन्तु देहेसंन्यस्येत्यारभ्योन्नेयंआत्मनःसर्व्वाविक्रियत्वनिर्द्धारणाद्देहसम्बन्धमन्तरेणकर्तृ त्वकारयितृत्वाप्राप्तेरप्राप्तप्रतिषेधप्रसङ्गपरिहारार्थमस्मादुक्तएवसम्बन्धः साधीया निति समाधत्ते नसर्व्वेति श्रुतिपुरुषतिपुचेत्यर्थःकिञ्चसम्बन्धस्याकाङ्क्षासन्निधि [illegible]म्यताधीनत्वादाकांक्षाववादस्मदभिमतसम्बन्धसिद्धिरित्याह आसनेति भव दिष्टस्तसम्बन्धोननिष्ध्यत्याकाङ्क्षाभावादित्याह तदनपेक्षत्वाच्चेति संन्यासशब्दस्य विक्षेपार्थत्वात्तस्यचाधिकरणसापेक्षत्वादस्मदिष्टसम्बन्धसिद्धिरित्याशंक्याह संपूर्व्व स्त्विति अन्यथोपसर्गवैयर्थ्यादित्यर्थः मनसाविवेकविज्ञानेनसर्व्वकर्माणिपरित्यज्यास्ते देहेविद्वानित्यस्यैवसम्बन्धस्यसाधुत्वंमत्वोपसंहरति तस्मादितिसर्व्वव्यापारोपरमा त्मनःसर्व्वकर्मसंन्यासस्याविक्रियात्मज्ञानाविरोधित्वात्प्रयोजकज्ञानवतोविधेसंन्या

स्वामिकृतटीका।

अतएवहन्तृत्वाभावोऽपिपूर्व्वोक्तःसिद्धइत्याह वेदाविनाशिनमिति नित्यंवृद्धिशून्यंअ व्ययंमपक्षयशून्यंअजंअविनाशिनञ्चयोवेदसपुरुषःकंहन्तिकथंवाहन्तिएवम्भूतस्य वधेसाधनाभावात्तथास्वयंप्रयोजकोभूत्वान्यनकंघातयतिकथंवाघातयतिनकञ्चि दपिकथञ्चिदपीत्यर्थःअनेनमय्यपिप्रयोजकत्वदोषदृष्टिमाकार्षीरित्युक्तंभवति २१

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही २२

## शाङ्करभाष्यं

प्रकृतन्तु वक्ष्यामः तत्रात्मनोऽविनाशित्वंप्रतिज्ञातंतत्किमिवेत्युच्यते वासांसीति वासांसिवस्त्राणिजीर्णानिदुर्बलतां गतानि यथा लोकेविहायपरित्यज्यनवान्यानिनवानिगृह्णात्युपादत्तेनरःपुरुषोऽपराण्यन्यानितथा तद्वदेवशरीराणिविहायजीर्णान्यन्यानिसंयातिसंगच्छति नवानिदेहीआत्मापुरुषवदविक्रिय एवेत्यर्थः २२

## आनन्दगिरिकृतटीका।

सेऽधिकारः सम्यग्ज्ञानवतस्त्ववैधेस्वाभाविकेफलात्मनीतिविभागमभ्युपेत्योक्तेर्थे वाक्यशेषानुगुण्यंदर्शयति इतितत्रतत्रेति २१ आत्मनोऽविक्रियत्वेनकर्मासम्भवं प्रतिपाद्याविक्रियत्वहेतुसमर्थनार्थमेवोत्तरग्रन्थमवतारयति प्रकृतंत्विति किंतत्प्रकृतमितिशङ्कमानंप्रत्याह तत्रेति अविनाशित्वमित्युपलक्षणमविक्रियत्वमित्यर्थः तदेवदृष्टान्तेनस्पष्टयितुमुत्तरश्लोकमुत्थापयति तदित्यादिना आत्मनः स्वतोविक्रियाभावेपिपुरातनदेहत्यागेनूतनदेहोपादानेचविक्रियावत्त्वध्रौव्यादविक्रियत्वमसिद्धमितिचेत्तत्राह वासांसीति शरीराणिजीर्णानिवयोहानिंगतानित्वग्वलीपलितादिसङ्गतानीत्यर्थः वाससांपुरातनानांपरित्यागे नवानाञ्चोपादाने त्यागोपादानकर्तृभूतलौकिकपुरुषस्यापिअविकारित्वेनैकरूपत्ववदात्मनोदेहत्यागोपादानयोरविरुद्धमविक्रियत्वमिति वाक्यार्थमाह पुरुषवदिति २२

## स्वामिकृतटीका।

नन्वात्मनोऽविनाशेऽपितदीयशरीरनाशंपर्य्यालोच्यशोचामीतिचेत्तत्राह वासांसीतिकर्मनिबन्धनानांदेहानामवश्यम्भावित्वाज्जीर्णदेहनाशेनशोकावकाशइत्यर्थः

## भाषा अनुवाद।

जोकहोकिआत्माअविनाशीहैपरतौभीउसकीस्थूलइसदेहकानाशदेखकरहमशोचकरतेहैं तोदेखोजैसेमनुष्यजीर्णकहेपुरानेवस्त्रपरित्यागकहेउतारकरऔरनयेकपडेधारणकरतेअर्थात्पहिरतेहैं तैसेहीआत्मापूर्वप्राचीनशरीरकहेदेहछोडकरऔरनूतनकहेनईदेहग्रहणकरताहै इससेकर्मकेअनुसारदेहकाअवश्यहोनहारजोजन्मऔनाशतिससेशोचकरनातुमसेऐसोंकोउचितनहींहै २२

नैनंछिन्दन्तिशस्त्राणिनैनंदहतिपावकः नचैनंक्लेदयन्त्यापोनशोषयतिमारुतः२३
अच्छेद्योऽयमदाह्योयमक्लेद्योऽशोष्यएवच नित्यःसर्व्वगतःस्थाणुरचलोऽयंसनातनः २४

## शाङ्करभाष्यम्।

कस्मादविक्रियएवेत्याह नैनंछिन्दन्तीति एनंप्रकृतंदेहिनंनछिन्दन्तिशस्त्राणिनिरवयवत्वान्नावयवविभागंकुर्व्वन्तिशस्त्राण्यस्यादीनितथानैनं दहतिपावकोऽग्निरपिनभस्मीकरोति तथानचैनंक्लेदयन्त्यापोऽपांहिसावयवस्यवस्तुनःआर्द्रीभावकरणेनअवयवविश्लेषापादनेसामर्थ्यं तन्ननिरवयवआत्मनिसम्भवतितथास्नेहवत्द्रव्यंस्नेहशोषणेननाशयतिवायुरेनंत्वात्मानंनशोषयतिमारुतोपि २३

यतएवंतस्मात्अच्छेद्योयमिति यस्मादन्योन्यनाशहेतूनिभूतानिएनंआत्मानंनाशयितुंनोत्सहन्तेतस्मात्नित्योनित्यत्वात्सर्व्वगतःसर्व्वगतत्वात्स्थाणुरित्येतत्स्थिरत्वादचलोऽयमात्माऽतःसनातनश्चिरन्तनोनकारणात्कुतश्चिन्निष्पन्नोऽभिनवइत्यर्थः

## आनन्दगिरिकृतटीका।

पृथिव्यादिभूतचतुष्टयप्रयुक्तविक्रियाभावादात्मनोऽसिद्धमविक्रियत्वमितिशङ्कते कस्मादिति यतोनभूतान्यात्मानंगोचरयितुमर्हन्त्यतोयुक्तमाकाशवत्तस्याविक्रियत्वमित्याह अच्छेद्यइत्यादिना २३

## स्वामिकृतटीका।

कथंहन्तीत्यनेनोक्तंवधसाधनाभावंदर्शयन्नविनाशित्वमात्मनःस्फुटीकरोति नैनमिति आपोनक्लेदयन्तिमृदुकरणेनशिथिलंनकुर्व्वन्ति २३

## भाषाअनुवाद।

२१ श्लोकमेंकहाजोआत्माकेवधकासाधनाभावकहैनिरूपायअर्थात्किसीप्रकारसेआत्माकावधनहींहोसक्ताहैंयहदेखायकरकेअवधअविनाशीहैइसकोदृढकरतेहैंकिसकलअस्त्रशस्त्रइसआत्माकोछेदननहींकरिसकतेऔरअग्निभीइसकोदग्धकरनेकोसमर्थनहीं जलइसकोआर्द्रकहेगीलानहींकरिसकताऔरवायुभीइसकोसुखायनहींसक्तीहैक्योंकियहअवयवरहितहैं औइनसबकीसामर्थ्यअवयवसहितमेंहैअर्थात्भौतिकवस्तुकहेपञ्चभूतनिर्मितवस्तुमेंइनकीसामर्थ्यहै २३

इसकाकारणयहकिआत्माअस्त्रशस्त्रसेछिन्नभिन्नकिंवाआगसेदग्धऔरजलसेआर्द्रऔरवायुसेशुष्कभीनहींसक्ताहैइसीसेआत्मानित्यऔअविनाशीतथासर्व्वत्रविद्यमानहैंऔरस्थिरस्वभावकहेअचलअनादिहै २४

## शाङ्करभाष्यं

नतेषांश्लोकानांपौनरुक्त्यंचोदनीयं यतएकेनैवश्लोकेनात्मनोनित्यत्वमविक्रियत्वंचोक्तंनजायतेम्रियतेवाइत्यादिना तत्रयदेवाविक्रियंकिञ्चिदुच्यते तदेतस्मात्श्लोकार्थान्नातिरिच्यतेकिञ्चिच्छब्दत:पुनरुक्तंकिञ्चिदर्थतइतिदुर्बोधत्वादात्मवस्तुन: पुन: पुन: प्रसङ्गमापाद्यशब्दान्तरेणतदेववस्तुनिरूपयतिभगवान्वासुदेव: कथंनुनाम संसारिणामसंसारित्वंबुद्धिगोचरतामापन्नंसदव्यक्तंतत्त्वंसंसारनिवृत्तयेस्यादिति किञ्च अव्यक्तोयमिति अव्यक्त:सर्वकरणाविषयत्वान्नव्यज्यतेइतिअव्यक्तोयमात्मा अतएवाचिन्त्योऽयंयद्धीन्द्रियगोचरंवस्तुतच्चिन्ताविषयत्वमापद्यते अयं त्वात्माऽनिन्द्रियगोचरत्वादचिन्त्योऽतएवाविकार्य्योयथाक्षीरंदध्यादिनाविकारिनतथायमात्मानिरवयवत्वाच्चाविक्रियो नहिनिरवयवंकिञ्चिद्विक्रियात्मकंदृष्टमविक्रियत्वाद विकार्य्योयमात्मोच्यते २४

## आनन्दगिरिकृतटीका।

पृथिव्यादिभूतप्रयुक्तच्छेदनाद्यविक्रियाभावेयोग्यताभावं कारणमाह यत इति पूर्व्वार्द्धमुत्तरार्द्धेहेतुत्वेनयोजयति यस्मादिति नित्यत्वादीनामन्योन्यंहेतुहेतुमद्भावंसूचयतिनित्यत्वादिना नचनित्यत्वंपरमाणुषुव्यभिचारादसाधकंसर्व्वगतत्वस्येतिवाच्यं तेषामेवाप्रामाणिकत्वेनव्यभिचारानवतारान्नचसर्वगतत्वेपिविक्रियाशक्तिमत्त्वमात्मनोऽस्तीतियुक्तं विभुत्वेनाभिमतेनभसितदनुपलम्भान्नविक्रियाशक्तिमत्त्वे स्थैर्य्यमास्थातुंशक्यं तथविभवस्यदादेरस्थिरत्वदर्शनादित्याशयेनाह स्थिरत्वादिति स्वतोनित्यत्वेपिकारणान्नाशसम्भवादुत्पत्तिरपिसम्भवितेतिकुतस्थिरत्वमित्याशंक्याह नकारणादिति आत्मनोऽविक्रियत्वस्यनजायतेम्रियते वेत्यादिनासाधितत्वात्तस्यैवपुनरभिधानेपुनरुक्तिरित्याशंक्याह्नतेषामिति अनाशङ्कनीयस्यचोद्यस्यप्रसङ्गंदर्शयति यतइति अतोवेदाविनाशिनमित्यादौनशंक्यते पौनरुक्त्यमितिशेष: कथंतत्रपौनरुक्त्याशङ्कासमुन्मिपतितत्राह तत्रेति वेदाविनाशिनमित्यादिश्लोक: सप्तम्यापरामृश्यतेश्लोकशब्देननजायतेम्रियतेवेत्यादिरुच्यते नव्विह्श्लोकेजन्ममरणाद्यभावोभिलप्यतेवेदेत्यादौपुनरपक्षयाद्यभावोविवक्ष्यते तत्रकथमर्थातिरेकाभावमादायपौनरुक्त्यञ्चोद्यतेतत्राह किञ्चिदितिकथंतर्हिपौनरुक्त्यंनचोदनीयमितिमन्यमेतत्राह दुर्ब्बोधत्वादितिपुन:पुनर्विधानभेदेनवस्तुनिरूपयतोभगवतोभिप्रायमाह कथंन्विति त्वंपदार्थपरिशोधनस्यप्रकृतत्वात्तमेवह

अव्यक्तोऽयमचिंत्योऽयमविकार्योऽयमुच्यते तस्मादेवंविदित्वैनंनानुशोचितुमर्हसि

शाङ्करभाष्यं

तस्मादेवंयथोक्तप्रकारेणैनमात्मानंविदित्वात्वंनानुशोचितुमर्हसिहन्ताहमेषां मयैतेहन्यन्तेइति २५

आनन्दगिरिकृतटीका।

त्वन्तरमाह किञ्चेति आत्मनोनित्यत्वादिलक्षणस्तथैवप्रथाकिमितिनभवतित नाह अव्यक्तइतिमातर्हिप्रत्यक्षत्वंभूदनुमेयत्वंतस्यकिंनस्यादित्याशंक्याह अतएवेति तदेवप्रपञ्चयति यद्धीति अतीन्द्रियत्वेपिसामान्यतोदृष्टविषयत्वंभविष्यतीत्याशं क्यकूटस्थेनात्मनाव्याप्तिलिङ्गाभावान्मैवमित्याह अविकार्य्यइति अविकार्य्यत्वेव्य तिरेकदृष्टान्तमाह यथेति किञ्चात्मानविक्रियतेनिरवयवद्रव्यत्वात्घटवदितिव्य तिरेकानुमानमाह निरवयत्वाच्चेति निरवयवत्वेपिविक्रियावत्त्वेकाक्षतिरित्या शंत्याह नहीति सावयवस्यैवविक्रियावत्त्वेनिरवयवत्वानुपपत्तिरित्यर्थः यद्धिसा वयवंसक्रियंक्षीरादितद्दध्यादिनाविकारमापद्यते नचआत्मनःश्रुतिप्रमितनिरवय वत्वस्यसावयवत्वमतोऽविक्रियत्वान्नायं विकार्योभवितुमलमितिफलितमाह अवि क्रियत्वादिति २४ आत्मयाथात्म्योपदेशमशोच्यानन्वशोचस्त्वमित्युपक्रम्यव्या ख्यानमुपसंहरति तस्मादिति अव्यक्तत्वाचिन्त्यत्वाविकार्य्यत्वनित्यत्वसर्वगतत्वादि रूपोयस्मादात्मानिर्द्धारितस्तस्मात्तथैव ज्ञातुमुचितस्तज्ज्ञानस्यफलवत्त्वादित्यर्थः प्रतिषेध्यमनुशोकमेवाभिनयति हन्ताहमिति २५

स्वामिकृतटीका।

तदहेतुमाह अच्छेद्यइतिसार्द्धेन निरवयवत्वादच्छेद्योऽदाह्यअमूर्त्तत्वाददा ह्यःद्रवत्वाभावादशोष्यइति इतश्चछेदादियोग्योनभवतियतोनित्योऽविनाशीसर्वगतः स्थाणुःस्थिरस्वभावोरूपान्तरापत्तिशून्यः अचलःपूर्वरूपापरित्यागीसनातनोऽना

भाषा अनुवाद।

यहआत्माअव्यक्तअर्थात्चक्षुआदिकसंइन्द्रियोंकाविषयनहींयहकहचुकेहैं औरअचिन्त्यअर्थात्मनयाभीअगम्यध्यानसेबाहरहैऔरअविकारीअर्थात्जन्मना शअथवाछोटावड़ानयापुरानाहोकिसीरूपमेवदलतानहीं ऐसेहीतत्त्वज्ञानीलोग कहतेहैंइससेजानवूझकरतुमजन्मनाशशून्यकहेरहितआत्माकेस्वरूपको अच्छी तरहजानकरतुइसझूठेशोकमोहकोपरित्यागकरो २५

अथचैनंनित्यजातंनित्यंवामन्यसेमृतं तथापित्वंमहावाहोनैवंशोचितुमर्हसि २६

शाङ्करभाष्यं

आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते अथचैनमिति अथचेत्यभ्युपगमार्थःएनं प्रकृतमात्मानंनित्यजातं लोकप्रसिद्धाप्रत्यनेकशरीरोत्पत्तिंजातोजातइतिवामन्य सेतथाप्रतितत्तद्विनाशं नित्यंवामन्यसेमृतंमृतोऽमृतइतितथापिभाविन्यपिआत्मनि त्वंमहावाहोनैवं शोचितुमर्हसिजन्मवतोनाशोनाशवतो जन्मचेत्येतावश्यम्भावि नाविति २६

आनन्दगिरिकृतटीका ।

आत्मनोनित्यत्वस्यप्रागेवसिद्धत्वादुत्तरश्लोकानुपपत्तिरित्याशंक्याह आत्मनइति अनित्यत्वमितिच्छेदःशक्यानांलोकायतानांवासतमिदमापरामृश्यते श्रोतुरर्जु नस्यपूर्वोक्तमात्मयाथात्म्यं श्रुत्वापितस्मिन्निर्द्धारणासिद्धेर्द्वयोर्मतयोरन्यतरमताभ्यु पगमःशङ्कितस्तद्योतिनिपातद्वयप्रयोगइत्याह अथचेति प्रकृतस्यात्मनोनित्यत्वादिल क्षणस्यपुनःपुनर्जातत्वाभिमानामानाभावादसम्भावीत्याह लोकेति नित्यजातत्वा भिनिवेशेपौनःपुन्येनमृतत्वाभिनिवेशोव्याहतःस्यादित्याशंक्याह तथेतिपरकीयमत मनुभाषितमभ्युपेत्याहोवतमहत्पापंकर्त्तुं व्यवसितावयमित्यादेस्तदीयशोकस्यनिरव काशत्वमित्याह तथापीति एवमर्जुनस्यदृश्यमानमनुशोकप्रकारंदर्शयित्वातस्यकर्त्तु

स्वामिकृतटीका ।

दिःअव्यक्तश्चक्षुराद्यविषयः अचिन्त्योमनसोऽप्यविषयः अविकार्य्यः कर्मेन्द्रियाणा मप्यगोचरइत्यर्थः उच्यतइतिनित्यत्वादभियुक्तोक्तिंप्रमाणयति २४ उपसंह रतितस्मादेवमिति तदेवमात्मनोजन्मविनाशाभावान्नशोकःकार्य्यइत्युक्तं २५

भाषा अनुवाद ।

औविचारकरिदेखोजवकिआत्माकेजन्मतथानाशकाअभावहैतौफेरिआत्माकेअर्थ शोककरनाउचितनहींहैयहवातनिर्धारकरठहराईगई अवजोदेहकेजन्मऔना शसेआत्माकाजन्मनाशहैऐसाअङ्गीकारकरिमानोतौभीशोचकरनाअनुचितहैय हकहतेहैं किपुण्यऔपापतथातत्फलसुखदुखऔजन्मनाशइनकासर्वदाआत्माको साथसम्बन्धरहनेसेयद्यपिदेहकेजन्महोनेसे आत्माकाजन्मऔरदेहकेनाशसेआ त्माकानाशइशरीतिसेजन्मनाशकोनित्यमानोतौभीजोजन्मनाशअवश्यंभावीअर्थात् निश्चयहोनेवालाहैटरनेकानहींफेरितौभीउसकेअर्थतुमकोशोचनायोग्यनहींहै

जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि २७

## शाङ्करभाष्यं

तथा च सति जातस्येति जातस्य हि लब्धजन्मनो ध्रुवोऽव्यभिचारी मृत्युर्मरणं ध्रुवं जन्म मृतस्य च तस्मादपरिहार्योऽयं जन्ममरणलक्षणोऽर्थस्तस्मिन्नपरिहार्येऽर्थे न त्वं शोचितुमर्हसि २७

## आनन्दगिरिकृतटीका।

मयोभ्यत्वे हेतुमाह जन्मवतइति जन्मवतो नाशो नाशवतश्च जन्मेत्येतावयं आविनौ मिथोव्याप्तावितियोजना।२६। तयोरवश्यकतावित्वेसत्यनुशोकस्याकर्त्तव्यत्वे हेत्वन्तरमाह तथाचेति।२७।

कुतइत्यतआह जातस्येति हियस्माज्जातस्यारम्भककर्मक्षयेमृत्युर्ध्रुवो निश्चितः मृतस्य च तद्देहकृतेन कर्मणा जन्मापि ध्रुवमेव तस्मादेवमपरिहार्येऽर्थे आत्मानमुद्दिश्यानुशोकस्य कर्त्तुमयोग्यत्वेपि भूतसंघातात्मकानि भूतान्युद्दिश्यतस्य कर्त्तव्यत्वमाशंक्याह कार्येति समनन्तरश्लोकस्तत्र हेतुरित्याह यतइति चाक्षुपदर्शनसाद्दृत्तिं व्यावर्त्तयति अनुपलब्धिरिति नहियथोक्तिसंघातरूपाणि भूतानि पूर्वमुत्पत्तेरुपलभ्यन्ते तेन तानि तथा व्यपदेशभाञ्जि भवन्तीत्यर्थः किंतन्मध्यं यदेषां व्यक्तमिष्यते

## स्वामिकृतटीका।

इदानीं देहेन सहात्मनो जन्म तद्विनाशे च विनाशमङ्गीकृत्यापि शोको न कार्यइत्याह अथ चैनमिति अथ यद्यपि एनमात्मानं नित्यं सर्वदा तत्तद्देहे जाते जातं मन्यसे तथा तत्तद्देहे मृते मृतञ्च मन्यसे पुण्यपापयोस्तत्फलभूतयोश्च जन्ममरणयोरात्मगामित्वात्तथापि त्वं शोचितुं नार्हसि२६ सर्वथाविनिजन्ममरणलक्षणेऽर्थेत्वं विद्वान् शोचितुं योग्यो न भवसि

## भाषा अनुवाद।

काहेसे शोचना योग्य नहीं है इसका हेतु कहते हैं कि जिसलिये जो वस्तु जन्म ग्रहण करती है उसके आरब्ध कर्म के क्षय होनेसे निश्चय उसकी मृत्यु अर्थात् नाश होता है ऐसे ही मरे का भी पूर्व देहकृत कर्म वशते फेर अवश्य ही जन्म होता है इसोसे एवंभूत अनिवार्य अवश्यम्भावी कहे होनेवाले जन्म औ मरणके विषयमें तुसको शोच करना योग्य होता नहीं क्योंकि तुम विद्वान कहे पण्डित हो * पण्डितका अर्थ यह है कि सत असत की विवेकिनी कहे विचार करनेवाली बुद्धिको पण्डा कहते हैं सो जिसको होय सो पण्डित है आत्मासे भिन्न जो कुछ सो असत् सत एक आत्मा ही है यह तुम जानो २७

अव्यक्तादीनिभूतानिव्यक्तमध्यानिभारत अव्यक्तनिधनान्येवतत्रकापरिदेवना २८

भाष्यम् ।

कार्य्यकारणसंघातात्मकान्यपिभूतान्युद्दिश्यशोकोनयुक्तःकर्त्तुं यतअव्यक्तादीनीति अव्यक्तादीन्यव्यक्तमदर्शनमनुपलब्धिरादिर्येषांभूतानांपुत्रमित्रादिकार्य्यकारणसंघातात्मकानांतानिअव्यक्तादीनिभूतानिप्रागुत्पत्तेःउत्पन्नानिचप्राक्मरणात् व्यक्तमध्यान्यव्यक्तनिधनान्येवपुनरव्यक्तमदर्शनंनिधनंमरणंयेषांतानिअव्यक्तनिधनानिमरणादूर्द्ध्वमव्यक्ततामेवप्रतिपद्यन्ते इत्यर्थः तथाचोक्तं अदर्शनादापतितःपुनश्चादर्शनंगतःनासौतवनतस्यत्वंदृथाकापरिदेवनेति तत्रकापरिदेवनाकोवाप्रलापः अदृष्टदृष्टप्रनष्टभ्रान्तिभूतेष्वित्यर्थः २८

आनन्दगिरिकृतटीका ।

तदाह उत्पन्नानीति उत्पत्तेरूर्द्ध्वंमरणाच्चपूर्व्वंव्यावहारिकंसत्त्वंमध्यमेषांव्यक्तमितितथोच्यतेजन्मानुसारित्वविलयस्ययुक्तमितिमत्वातात्पर्य्यार्थमाह मरणादिति उक्तेऽर्थेपौराणिकसम्मतिमाह तथाचेतितत्रेत्यस्यार्थमाह अदृष्टेति पूर्व्वमदृष्टानिसन्तिपुनर्दृष्टानितान्येवपुनर्नष्टानितदेवंभ्रान्तिविषयतया घटिकायन्त्रवच्चक्रीभूतेषुभूतेषुशोकनिमित्तस्यप्रलापस्यनावकाशोस्तीत्यर्थः २८

स्वामिकृतटीका ।

किञ्चदेहादीनांस्वभावं पर्य्यालोच्यतदुपाधिकेआत्मनोजन्ममरणेशोकोनकार्यइत्याह अव्यक्तादीनीति अव्यक्तंप्रधानंतदेवादिरुत्पत्तेःपूर्व्वरूपंयेषांतानिअव्य

भाषा अनुवाद ।

औरजोकहोकिदेहादिकास्वभावजोजन्ममरणआदिहैतदुपाधिक आत्माका जन्ममरणविचारिकरिशोचतेहैं तोभीशोचकरनानचाहियेइसपर कहतेहैं कि अव्यक्तादिअर्थात्अव्यक्तकहेप्राणियोंकीउत्पत्तिका मूलकारणजोप्रकृतिमाया सो प्राणियों कीउत्पत्तिकेपूर्व्वकारणरूपसबजीवों कोअपनेभीतरलीनकरके अव्यक्त कहे अप्रकटरहतीहैऔरव्यक्तमध्यअर्थात्जन्ममरणकेमध्यमे सकलप्राणीवर्त्तमान अवस्थामेविराजमानरहतेहैंऔरअव्यक्तनिधन अर्थात्अन्तमेंस्वकारणजोमाया तिसमेंसबप्राणीलीनहोकेरहते इससेहेअर्ज्जुनऐसे रहनेवालेप्राणीयों कीमृत्युमें किसीतरहशोचकरनानचाहिये जैसेजगेहुयेमनुष्यकोस्वप्नमेदेखीभईवस्तुकेअर्थ शोककरनाअयोग्यहैतैसेयहसीजानो २८

आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद नचैव कश्चित् २९

## शाङ्करभाष्यम्।

दुर्विज्ञेयोयंप्रकृतआत्माकिंत्वामेवैकंउपालभेत्साधारणे भ्रान्तिनिमित्तेकथंदुर्वि ज्ञेयोयमात्मेत्यतआह आश्चर्यवदिति आश्चर्यंवदाश्चर्यं अदृष्टपूर्वमद्भुतमकस्मा द्दृश्यमानंतेनतुल्यमाश्चर्यवदाश्चर्यमिवैनमात्मानंपश्यति कश्चिदाश्चर्यवदेनंवदतित थैवचान्यःआश्चर्यवच्चैनमन्यःशृणोतिश्रुत्वाद्दृष्टोक्त्वाप्यात्मानंवेदनचैवकश्चिदथवायो यंआत्मानंपश्यतिसआश्चर्यतुल्योयोवदतियश्चशृणोतिसोऽनेकसहस्रेषुकश्चिदेवभ वत्यतोदुर्बोधआत्मेत्यभिप्रायः २९

## आनन्दगिरिकृतटीका

अर्जुनंप्रत्युपालम्भंदर्शयित्वा प्रकृतस्यात्मनोदुर्विज्ञेयत्वात्तं प्रत्युपालम्भोनसम्भवती तिभगवानःसन्नाह दुर्विज्ञेयइति तथाचात्माज्ञाननिमित्तविभ्रमस्यसाधारणत्वा दसाधारणोपालम्भस्यनिरवकाशतेत्याह किंत्वामेवेति अहम्प्रत्ययवेद्यत्वादात्मनो दुर्विज्ञेयत्वमसिद्धमितिशङ्कते कथमिति विशिष्टस्यात्मनोऽहंप्रत्ययस्यदृष्टत्वेपिके

## स्वामिकृतटीका।

ह्रादीनिभूतानिशरीराणिकारणात्मनास्थितानामेवोत्पत्तेःतथाव्यक्तमभिव्यक्तमध्यं जन्ममरणान्तरालंस्थितिलक्षणंयेषांतानिव्यक्तमध्यानिअव्यक्तेनिधनंलयोयेषांतानी मान्येवम्भूतान्येवतत्रतेषुकापरिदेवनाकःशोकनिमित्तोविलापःप्रतिबुद्धस्य स्वप्नदृष्ट वस्तुष्विवशोकोनयुज्यतइत्यर्थः २८

## भाषा अनुवाद।

तौफेरिबड़ेनिद्वानलोगजोशोककरतेचलेआतेहैंसोकेवलआत्माविषयकअ ज्ञानताहीसेहोताइसअभिप्रासेआत्माकीदुर्ज्ञेयता कहेज्ञानकठिनतानिरूपणक रतेहैंकिकोईतोशास्त्रआलोचनाकरिकेइसआत्माकोजानिकेभीआश्चर्यऐसाजान ते अर्थात्सर्व्वगतनित्यज्ञानऔआनन्दस्वरूपआत्माकेअलौकिकत्वसेअसंभवजोइ न्द्रजालिककौतुकातिसकेसमानदेखिआश्चर्यसेघवड़ायकरविस्मययुक्तहोतेहैं और कोईआश्चर्यकेनांईकहतेकोईआश्चर्यकेतुल्यसुनतेऔरकोई आत्मज्ञानरूपविपरी तकहेउलटीभावनासेअभिभूतहोकेइसआत्माकातत्त्वसुनिकेभीजानिसकते नहीं अर्थात्बहुतदेखिसुनिकेभीबहुतेतरहसेआत्माकाजाननाअतिकठिनहै २९

देहीनित्यमवध्योऽयंदेहेसर्व्वस्यभारत तस्मात्सर्व्वाणिभूतानिनत्वंशोचितुमर्हसि ३०

## शाङ्करभाष्यं

अथेदानींप्रकरणार्थमुपसंहरन्ब्रूते देहीति यस्माद्देहीशरीरीनित्यंसर्व्वावस्थास्ववध्योनिरवयवत्वान्नित्यत्वाच्चतत्रावध्योयं देहेशरीरेसर्व्वस्यसर्व्वगतत्वात्स्थावरादिषुस्थितोपिसर्व्वस्यप्राणिजातस्यदेहेवध्यमानेपि अयंदेहीनवध्योयस्मात्तस्माद्भीष्मादीनिसर्व्वाणिभूतान्युद्दिश्य नत्वंशोचितुमर्हसि ३०

## आनन्दगिरिकृतटीका।

वत्स्यतदभावादस्तिदुर्व्विज्ञेयतेतिश्लोकमवतारयति आहेति आश्चर्य्यवदितिआद्येनपादेनात्मविषयदर्शनस्यदुर्लभत्वंदर्शयता द्रष्टुर्दौर्लभ्यमुच्यते द्वितीयेनच तद्विषयवदन्यस्यदुर्लभत्वोक्तेस्तदुपदेष्टुस्तथात्वं कथ्यतेटतीयेनतदीयश्रवणस्यदुर्लभत्वद्वाराश्रोतुर्व्विरलताविवक्षिताश्रवणदर्शनोक्तीनां भावेपितद्विषयसाक्षात्कारस्यात्यन्तायासलभ्यत्वंचतुर्थेनाभिमतमितिविभागः आत्मगोचरदर्शनादिदुर्लभत्वद्वाराद्दुर्व्वोधत्वमात्मनःसाधयति आश्चर्यवदिति संप्रत्यात्मनिद्रष्टुर्व्वक्तुःश्रोतुःसाक्षात्कर्त्तुश्चदुर्लभत्वाभिधानेनतदीयंदुर्व्वोधत्वंकथयति अथवेति व्याख्यानद्वयेपिफलितमाह अतइति२९ श्लोकान्तरमुत्थापयति अथेतिचात्मनोदुर्ज्ञानत्वप्रदर्शना

## स्वामिकृतटीका।

कुतस्तर्हिविद्वांसोऽपिलोके शोचन्तिआत्माज्ञानादेवेत्याशयेनात्मनोदुर्ज्ञेयतामाह आश्चर्य्यवदिति कश्चिदेनमात्मानं शास्त्राचार्य्योपदेशाभ्यांपश्यन्नाश्चर्य्यवत्पश्यति सर्व्वगतस्यनित्यज्ञानानन्दस्वभावस्यात्मनोऽलौकिकत्वादैन्द्रजालिकवद्घटमानंपश्यन्निवविस्मयेनपश्यतिअसम्भावनाभिभूतत्वात्तथाश्चर्य्यवदेवान्योवदतिशृणोतिचान्यःकश्चित्पुनर्व्विपरीतभावनाभिभूतःश्रुत्वापि नवेदचशब्दादुक्त्वापिदृष्ट्वापिनसम्यग्वेदेतिद्रष्टव्यं २९

## भाषा अनुवाद।

इसप्रकारआत्माकादुर्व्विज्ञेयस्वभावअर्थात्बडेकष्टसेभीउसका जाननाकठिनहै यहसंक्षेपसेउपदेशकरिकेअवशोकनकरनाइसविषयमेकहतेहैंकिजैसे सवप्राणियोंकीनस्वरकहेनाशहोनेवालीदेहमेवर्त्तमानयहदेहीकहेआत्मा देहनाशहोनेसेभीइसकानाशनहींहोताक्योंकिसोआत्मानित्यऔअवध्यहैइसीसेभूत जोप्राणीतिनकीदेहनाशकेअर्थतुमकोशोककरनाउचितहोतानहीं ३०

स्वधर्ममपिचावेक्ष्यनविकम्पितुमर्हसि धर्म्याद्धियुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्यनविद्यते३१

## शाङ्करभाष्यं

इहपरमार्थतत्त्वापेक्षायांशोकोवामोहोवानसम्भवतीत्युक्तं नकेवलंपरमार्थत त्त्वापेक्षायामेवकिन्तुस्वधर्ममिति स्वधर्ममपिस्वोधर्मःक्षत्रियस्यधर्मःयुद्धंतमप्यवे क्ष्यत्वंनविकम्पितुंप्रचलितुंअर्हसि क्षत्रियस्यस्वाभाविकाद्धर्मादात्मस्वाभाव्यादित्य भिप्रायः तच्चयुद्धंपृथिवीजयद्वारेणधर्मार्थंप्रजारक्षणार्थञ्चेति धर्मादनपेतंपरंधर्म्यं तस्मात्धर्मात्युद्धात्श्रेयोऽन्यत्क्षत्रियस्य नविद्यतेहियस्मात् ३१

## आनन्दगिरिकृतटीका।

नन्तरमितियावत् वस्तुवृत्तापेक्षयाशोकमोहयोरकर्त्तव्यत्वंप्रकरणार्थः देहेवध्य मानेपि देहिनोवध्यत्वाभावेफलितमाह यस्मादिति हेतुभागंविभजते सर्व्वस्येति फलितप्रदर्शनपरंश्लोकार्द्धं व्याचष्टे तस्माद्भीष्मादीनीति ३०

श्लोकान्तरमवतारयन्वृत्तंकीर्त्तयति इहेति पूर्व्वश्लोकःसप्तम्यर्थःयत्पारमा र्थिकंतत्त्वंतदपेक्षायामेवकेवलंशोकमोहयोरसम्भवोनभवतिकिन्तुस्वधर्ममपिचावे क्ष्येतिसम्बन्धःस्वकीयंक्षात्रधर्ममनुसन्धायतत्चलनंपरिहर्त्तव्यमित्यर्थःयद्धिक्षत्रिय स्यधर्मादनपेतंश्रेयःसाधनंतदेवमयानुवर्त्तितव्यमित्याशङ्क्याह धर्म्यादिति जाति प्रयुक्तंस्वाभाविकंस्वधर्ममेवविशिनष्टि क्षत्रियस्येति पुनर्नकारोपादानमन्वयार्थंप्र चलितुमयोग्यत्वेप्रतियोगिनंदर्शयति स्वाभाविकादिति स्वाभाविकत्वमशास्त्रीय त्वमितिशङ्कांवारयितुं तात्पर्यमाह आत्मेति आत्मनःस्वस्यार्जुनस्यस्वाभाव्यंक्षत्रिय

## स्वामिकृतटीका।

तदेवमवध्यत्वमात्मनःसंक्षेपेणोपदिशन्नशोच्यत्वमुपसंहरति देहीतिस्पष्टार्थं३०

## भाषा अनुवाद।

प्रथमअध्यायके२८ श्लोकमेंअर्जुननेकहाहै किहमारीशरीरकांपतीऔररो मखडेहोते हाथसेधनुषबाणगिरेपडतेहैं सोयहभीअयोग्यअसंभवहै जिसहेतु स्वधर्मजोसंग्रामतिसमेंप्रवृत्तहोके भीष्मपितामहआदिकेहननकरनेसे अविना शीआत्माकाविनाशमानि तुमाराडरनाशोकापना यहयुक्तिसेसिद्धहोतानहीं और ३१ श्लोकमेंकहाहै कियेअपनेजनोंकोनाशकरि हमश्रेयकहेकल्यान नहीं देखतेउसपरकहतेहैं किधर्मयुक्तजोन्याययुद्ध तिसकीअपेक्षाअर्थात्उससेबढि कर क्षत्रियोंकोऔरकोनकल्याणकारनेवालाकर्महै अर्थात्कोईभीनहीं ३१

यदृच्छयाचोपपन्नंस्वर्गद्वारमपावृतं सुखिनःक्षत्रियाःपार्थलभन्तेयुद्धमीदृशं ३२

## शाङ्करभाष्यं।

कुतश्चतद्युद्धंकर्त्तव्यं इत्युच्यते यदृच्छयेति यदृच्छयाचाप्रार्थितमागतमुपप न्नं स्वर्गद्वारमपावृतमुद्घाटितं येएतदीदृशंयुद्धं लभन्तेक्षत्रियाःहेपार्थकिन्नसुखि नस्ते ३२

## आनन्दगिरिकृतटीका।

स्वभावप्रयुक्तंवर्णाश्रमोचितंकर्मतस्मादित्यर्थः धर्मार्थंप्रजापरिपालनार्थञ्चप्रयत मानस्ययुद्धादुपरिरंसायुक्तातव्येत्याशंक्याह तत्रेति ततोपिश्रेयस्करंकिञ्चिदनु ष्ठातुंयुद्धादुपरतिरुचितेत्याशंक्याह तस्मादिति तस्माद्युद्धात्प्रचलनमनुचित मितिशेषः ३१

युद्धस्यगुर्वाद्यनेकप्राणिहिंसात्मकस्याहिंसाशास्त्रविरोधान्नास्तिकर्त्तव्यतेति शङ्कते कुतश्चेति अग्नीषोमीयहिंसावद्युद्धमपिक्षत्रियस्यविहितत्वादनुष्ठेयंसामा

## स्वामिकृतटीका।

यत्रोक्तमर्जुनेनवेपथुश्चशरीरेमइत्यादि तदप्ययुक्तमित्याह स्वधर्ममपीति आत्म नोनाशाभावादेवैतेषांहननेपिविकम्पितुंनार्हसि किञ्चस्वधर्ममप्यवेक्ष्यविकम्पितुं नार्हसीतिसम्बन्धःयत्रोक्तंनचश्रेयोऽनुपश्यामिहत्वास्वजनमाहवइति तत्राह धर्म्या दिति धर्मादनपेतान्न्याय्याद्युद्धादन्यत् ३१

## भाषा अनुवाद।

औरजोकहो किगुरुआदिअनेकप्राणियोंकीहिंसायुद्धमेहोयगी औरशास्त्रमे अहिंसापरमधर्मकहाहै इससेयुद्धकरनाअतिअनुचितहै इसपरकहतेकिजैसेवेद विहितजोयज्ञमेहिंसा सोहिंसानहींहैतैसेशास्त्रसंमतजोक्षत्रीकापरमधर्मयुद्ध ति समेहिंसाऔपापकीकल्पनावृथाकरतेहो औरपरमश्रेयरूपमहाफलआपसेआय तुमकोउपस्थितकहेप्राप्तभयाहै इससेअवतुमकिसकारणकम्पमानहोते यहकह तेहैं किहेअर्जुनवेभागेवेयतनकियेआपसेप्राप्तपरमश्रेय कहेकल्याणकासाधनयु द्धजिससेपरमकल्याणसिद्धहोय ऐसा युद्धअतिभाग्यवानक्षत्रीलोगपावतेहैं क्योंकि इससेस्वर्गकाद्वारवेरोकटोकखुलारहताहै अथवाजोइसप्रकारकायुद्धपावेसोई सुखीहैं इसश्लोकसेप्रथमअध्यायकाछत्तीसवांश्लोक कहागया किकिसतरहआत्ती यजनोंकोनाशकरिसुखीहोंयगे इसीबातकाभगवाननेउत्तरदियाहै ३२

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ततः स्वधर्म्यं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि ३३

शाङ्करभाष्यं

एवंकर्त्तव्यताप्राप्तमपि अथेति अथत्वमिमंधर्म्यंधर्मादनपेतंविहितंसंग्रामंयुद्धं नकरिष्यसिचेत् ततस्तदकरणात्स्वधर्म्यं कीर्त्तिञ्चमहादेवादिसमागमनिमित्तां हित्वा केवलं पापमवाप्स्यसि ३३

आनन्दगिरिकृतटीका।

न्यशास्त्रतोविशेषशास्त्रस्यबलीयस्त्वादित्याह उच्यतइति तथापियुद्धेप्रवृत्तानामै हिकामुष्मिकस्वापिसुखाभावादुपरतिरेवततोयुक्ताप्रतिभातीत्याशंक्याह यदृच्छये ति चिरेणचिरतरेणकालेनचयागाद्यनुष्ठायिनःस्वर्गादिभाजोभवन्तियुद्धमाना स्तुचविद्यावहिर्मुखताविहीनाः सहसैवस्वर्गादिसुखभोक्तारस्तेनतवकर्त्तव्यमेवयुद्ध मितिव्याख्यानेनस्फुटयति यदृच्छयेत्यादिना इहामुत्रचभाविसुखवतामेवक्षत्रि याणांस्वधर्मभूतयुद्धसिद्धेस्तादर्थ्येनोत्थानंशोकमोहौहित्वाकर्त्तव्यमित्यर्थः ३२

स्वधर्मस्ययुद्धस्यश्रद्धयाकरणेस्वर्गादिमहाफलप्राप्तिंप्रदर्श्य तदकरणेप्रत्यवाय प्राप्तिंप्रदर्शयन्नुत्तरश्लोकगतार्थंशब्दार्थंकथयति एवमिति विहितत्वंफलवत्त्वमित्य नेनप्रकारेणेत्यर्थःअन्वयार्थं पुनश्चेदित्यनूद्यते महादेवादीत्यादिशब्देनमहेन्द्रादयो गृह्यन्ते ३३

स्वामिकृतटीका।

किञ्चमहतिश्रेयसिस्वयमेवोपस्थितेसतिकुतोविकम्पसेइत्याह यदृच्छयेति यदृच्छयाअप्रार्थितमेवोपपन्नंप्राप्तमीदृशंयुद्धंसुखिनःसुभाग्याएवलभन्तेयतोऽनिवा रणंस्वर्गद्वारमेवैतत्यद्वायएवम्बिधंयुद्धंलभ्यन्तेतएवसुखिनइत्यर्थः एतेनस्वजनंहि कथंहत्वासुखिनःस्याममाधवेतियदुक्तंतन्निरस्तं ३२ विपक्षेदोषमाहअथचेदिति३३

भाषा अनुवाद।

औरजोयहस्वधर्मरूपसंग्राम नकरोगे तोकेवलफलप्राप्तिनहोगीयहीनहीं है औरउलटाप्रत्यवाय कहेअधर्मभीहोगा सोईदोषकहतेहैं किजोतुमइसधर्मजन कउपस्थित कहेप्राप्तभयेयुद्धकरनेमे प्रवृत्तनहोउगे तोतुमअपनेधर्मऔकीर्त्तिके त्यागकरनेसे अवश्यपापकेभागीहोउगे इसमेसन्देहनहींहै ३३

अकीर्त्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययां सम्भावितस्यचाकी
र्त्तिर्मरणादतिरिच्यते ३४

## शाङ्करभाष्यं

नकेवलंस्वधर्मकीर्त्तिपरित्यागः अकीर्त्तिमिति अकीर्त्तिञ्चापियुद्धेभूतानिक थयिष्यन्ति तेतवाव्ययांदीर्घकालाधर्मात्माशूरइत्येवमादिभिर्गुणैः सम्भावितस्यचा कीर्त्तिर्मरणादतिरिच्यते सम्भावितस्यचाकीर्त्तेर्वरंमरणमित्यर्थः ३४

किञ्चभयादिति भयात्कर्णादिभ्योरणात्युद्धादुपरतंनिवृत्तंमंस्यन्तेचिन्तयिष्य न्तिनकृपयेतित्वांमहारथादुर्योधनप्रभृतयः केमंस्यन्तेइत्याहयेषाञ्चत्वंदुर्योधना दीनांबहुमतोबहुभिर्गुणैर्युक्तइत्येवंबहुमतोभूत्वापुनस्त्वंयास्यसिलाघवंलघुभावं

## आनन्दगिरिकृतटीका।

युद्धाकरणेचनियस्यप्रत्यवायमामुष्मिकमापाद्य शिष्टगर्हालक्षणंदीर्घकालभा विनमैहिकमपिप्रत्यवायंप्रतिलम्भयति नकेवलमिति युद्धेस्वमरणसन्देहात्तत्परि हारार्थमकीर्त्तिरपिसोढव्या स्वात्मसंरक्षणस्यश्रेयस्करत्वादित्याशंक्याह धर्मात्मेति मान्यानामकीर्त्तिर्भवतिमरणादपिदुःसहेतितात्पर्य्यार्थमाह सम्भावितस्येति ३४

इतश्चत्वयायुद्धंकर्त्तव्यमित्याह किञ्चेति प्राणिषुकृपयानाहंयुद्धंकरिष्यामी त्याशंक्याह भयादिति महारथानेवविशिनष्टि येषाञ्चेति दुर्य्योधनादिभिस्तवो पहास्यतानिरसनार्थंसंग्रामेप्रवृत्तिरवश्यम्भाविनीत्यर्थः ३५

## स्वामिकृतटीका।

किञ्च अकीर्त्तिमिति अव्ययांशाश्वतींसम्भावितस्यबहुमतस्यअतिरिच्य तेऽधिकाभवति ३४

## भाषाअनुवाद।

औरजोकहो किस्वधर्मऔकीर्त्तिजाय हमहिंसानकरैंगे तौयुद्धनकरनेसे केवलस्वधर्मऔकीर्त्तिहीकात्यागनहींहै औरभीहै सोकहतेहैंकियुद्धछोडनेसे लोगतुमारोअयशकहैंगेऔनिन्दाकरैंगे औरवहअयशचिरकाल कहेबहुतदि नोंतकसंसारमेरहैगा औरतुम क्षत्रियोंकेबीचयुद्धकरनेमेंप्रसिद्धवीरहो देखोजो जिसवातमेख्यात कहेनामीहै औलोगउसकोप्रतिष्ठितवडाकरिजानतेहैं तोफे रिउसकाउसीवातमेअयश यहमरनेसेभीअधिकहै औरसवपापऔदोषोंका दा दाहैइसकोअच्छीतरहविचारकरदेखो ३४

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः येषाञ्च त्वं बहुमतो भूत्वा यास्यसि लाघवं ३५
अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किं ३६

## शाङ्करभाष्यं

किञ्च अवाच्यवादानिति अवाच्यवादान् अवक्तव्यवादान् च बहूननेकप्रकारान् वदिष्यन्ति तवाहिताः शत्रवः निन्दन्तः कुत्सयन्तस्तव त्वदीयं सामर्थ्यं निभृतकवचादिषु इनिमित्तं तस्मात्ततो निन्दाप्राप्तेर्दुःखात् दुःखतरं नु किं ततः कष्टतरं दुःखं नास्तीत्यर्थः

## आनन्दगिरिकृतटीका।

इतश्च त्वं युद्धादुपरमं माकार्षीरित्याह किञ्चेति ननु भीष्मद्रोणादिवधप्रयुक्तं कष्टतरं दुःखमसहमानो युद्धान्निवृत्तः स्वसामर्थ्यनिन्दादिप्रयुक्तं सोढुं शक्ष्यामीत्याशंक्याह तत इति ३६

तर्हि युद्धे गुर्व्वादिवधवशान्मध्यस्थानिन्दा ततो निवृत्तौ शत्रुनिन्देत्युभयतः पाशरज्जुरित्याशंक्याह युद्धे पुनरिति जये पराजये च लाभध्रौव्याद् युद्धार्थमुत्थानमावश्य

## स्वामिकृतटीका।

किञ्च भयादिति येषां बहुगुणत्वेन त्वं पूर्व्वं संमतोऽभूस्त एव भयात् संग्रामान्निवृत्तं त्वां मन्येरन् ततश्च पूर्व्वं बहुमतो भूत्वा लाघवं लघुतां यास्यसि ३५ किञ्चावाच्यवादानिति अवाच्यान् वादान् वचनानर्हान् शब्दांस्तवाहितास्त्वच्छत्रवो वदिष्यन्ति ३६

## भाषा अनुवाद।

भगवान कहते हैं कि अर्जुन तुमको अब युद्ध करना नहीं उचित है क्योंकि तुम तो यह जानते हो कि प्राणियों के जमराजमाका रिकम संग्राम छोडते पर महारथी वीर तुमको भय से युद्ध विमुख जानेंगे जो तुमको पूर्व्व कहेमहिले सकल गुणसंपन्न कहे युक्त जानते थे वे लोग अब तुमको करण आदिक योद्धों के भय से युद्ध विमुख मानेंगे देखो जिनदुर्य्योधन आदिकों की तुम बहुमत कहे मान्य रहे उनके निकट अब तुम कैसे लघुक हे हलके होउगे तो इससे सीके डर से युद्ध करना अवश्य है ३५ इससे अब तुम युद्ध से निवृत्त न होउ जो कहो कि भीष्म तथा द्रोण आदिकों का वध बडा कष्ट है तो देखो तुमारे शत्रु गण तुमारी सामर्थ की निन्दा करते हुये तुमारे प्रति अनेक अनेक अयोग्य दुर्व्वचन कहेंगे तो इससे और दुख कौन है यह कष्ट से भी महा कष्ट है ३६

हतोवाप्राप्स्यसिस्वर्गंजित्वावाभोक्ष्यसेमहीं। तस्मादुत्तिष्ठकौन्तेययु
द्धायकृतनिश्चयः ३७ सुखदुःखेसमेकृत्वालाभालाभौजयाजयौ
ततोयुद्धाययुज्यस्वनैवंपापमवाप्स्यसि ३८

## शाङ्करभाष्यं

युद्धेपुनःक्रियमाणेकर्णादिभिःकिंहतोवेति हतोवाप्राप्स्यसिस्वर्गंहतःसन् स्वर्गंप्राप्स्यसिजित्वाकर्णादीन्शूरान्भोक्ष्यसेमहीं उभयथापितवलाभएवेत्यभिप्रायःयतएवं तस्मादुत्तिष्ठकौन्तेययुद्धायकृतनिश्चयः जेष्यामिशत्रून्मरिष्यामिवेतिनिश्चयंकृत्वेत्यर्थः ३७

## आनन्दगिरिकृतटीका।

कथमित्याह तस्मादिति नहिपरिशुद्धकुलस्यक्षत्रियस्ययुद्धायोद्युक्तस्यतस्मादुपरमः साधीयानित्याह कौन्तेयेति जयेपराजयेचेत्येतदुभययेत्युच्यतेजयादिनियमाभावेपिलाभनियमेफलितमाह यतइति कृतनिश्चयत्वमेवविषदयतिजेष्यामीति ३७

## स्वामिकृततीका।

यच्चोक्तंनचैतद्विद्मइतितत्राह हतोवेति पक्षद्वयेपितवलाभएवेत्यर्थः ३७

## भाषाअनुवाद

तोयुद्धकरिगुरुआदिकेवधसेनिन्दाऔरसंग्रामछोडनेसेशत्रुनिन्दाकरैंगे इसदुविधाचिन्ताकेऊपरकहतेहैं औरदूसरेअध्यायकेछठयेंश्लोकमेजोअर्जुननेकहाकिइनकोहममारैंयायेहमैजयकरिलेंय इसकाभी उत्तरश्रीकृष्णकरतेहैं किजयकरैंगेयापराजयपावैंगेइसकीनिश्चयकरिकेउठो जोकहोकिइसदैवआधीनजयपराजयकाक्यानिश्चयहै तोइसयुद्धमेजोतुमारीमृत्युहोयगीतोस्वर्गपावोगे औरजोशत्रुवोंकोजीतोगेतोपृथिवीकाराज्यऔरभोगकरोगे तिससेहेकौन्तेयअर्जुनयुद्धकरनेकीनिश्चयकरिकेउठो तुमारेदोनोहाथलडुआहैं ३७

जोकदाचित् वधहेतुक पापहोकीनिश्चयकरिउसकेडरसेयुद्धमेनिश्चयकरिकेनहींउठिसकते यहकहोतोसुहृदमित्रोंकेजीवनऔरमरणनिमित्तकसुखऔरदुखकीसमताकहतेहैं किप्रथमसुखऔदुखतथालाभऔहानिजयपराजयइनकोसमानकरि औरप्रीतिविरोधकोभीत्यागकरिके तवयुद्धमेप्रवृत्तहोउ इसप्रकारसेयुद्धकरनेमेपापनप्राप्तहोयगा अर्थात्नलगेगा ३८

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ३९

शाङ्करभाष्यं।

तत्रयुद्धंस्वधर्मइत्येवंयुध्यमानस्यउपदेशमिमंशृणु सुखदुःखेइति सुखदुःखे समेतुल्येकृत्वारागद्वेषावपकृत्वेत्येतत् तथाचलाभालाभौजयाजयौचसमौकृत्वात तोयुद्धाययुज्यस्वघटस्वनैवंयुद्धंकुर्वन्पापफलमवाप्स्यसिइत्येषउपदेशःप्रासङ्गिकः

आनन्दगिरिकृतटीका।

पापभीरुतयायुद्धायनिश्चयंकृत्वानोत्थातुंशक्नोमीत्याशंक्याह तत्रेति युद्धस्य स्वधर्मतयाकर्त्तव्यत्वेसतीतियावत् सुहृज्जीवनमरणादिनिमित्तयोःसुखदुःखयोः समताकरणंकथमिति तत्राह रागद्वेषाविति लाभःतत्कोषादिप्राप्तिः अलाभ स्तद्विपर्ययःन्यायेनयुद्धेनापरिभूतेनपरस्यपरिभवोजयस्तद्विपर्ययस्त्वजयः तयोःला भालाभयोर्जयाजययोश्चसमताकरणं समानमेवरागद्वेषावकृत्वेत्येतद्दर्शयितुंतथेत्यु क्तंयथोक्तोपदेशवशात्परमार्थदर्शनप्रकरणेयुद्धकर्त्तव्यतोक्तेः ससुच्चयपरत्वंशास्त्र स्यप्राप्तमित्याशंक्याह एषइति क्षत्रियस्यतत्वधर्मभूतयुद्धकर्त्तव्यतानुवादप्रसङ्गा गतत्वादस्योपदेशस्यनानेनमिषेणसमुच्चयः सिध्यतीत्यर्थः ३८

स्वामिकृतटीका।

यदप्युक्तंपापमेवाश्रयेदस्मानिति तत्राह सुखदुःखेइति सुखदुःखेसमेकृ त्वातथातयोश्चकारणभूतौ लाभालाभावपितयोरपिकारणभूतौजयाजयावपिस मौकृत्वाएतेषांसमत्वेकारणंहर्षविषादराहित्यंयुज्यस्व सन्नद्धोभव सुखदुःखाद्य भिलाषंहित्वास्वधर्मबुद्ध्यायुध्यमानःपापंनप्राप्स्यसीत्यर्थः ३८

भाषा अनुवाद।

पूर्व्वकथितजोज्ञानयोगउसकोकहिकरिअबउसकासाधन जोकर्मयोगसो कहतेहैं किवस्तुऔतत्त्वकोप्रकाशकरनेवालासांख्यनामकतत्त्वज्ञान तुमसेकहाग याअर्थात्तत्त्वज्ञानकेविषयमेंजोबुद्धिसोमैंनेतुमकोकहाहै इससेजोतुमारेतत्त्वज्ञा नकावोधनहोय तौफिरचित्तसुद्धिकेद्वारातत्त्वज्ञानउत्पन्नहोनेकेअर्थअवयहकर्म योगअर्थात्कर्मयोगकेविषयकीबुद्धिहमकहतेहैं सोसावधानहोसुनो किहेअर्जुन जिससेईश्वरार्पितकर्मकेद्वाराचित्तकीशुद्धिहोकर ईश्वरकेप्रसादसेप्रत्यक्षज्ञानको प्राप्तकरिअर्थात्पायकरि इसबन्धसेअनायासअर्थात्सहजमेंछूटिजाजगे ३९

## शाङ्करभाष्यं

शोकमोहापनयनाय लौकिको न्यायः स्वधर्ममपि चावेक्ष्येत्याद्यैः श्लोकैरुक्तो नतु तात्पर्येण परमार्थदर्शनं त्विह तच्चोक्तमुपसंह्रियते एषा तेऽभिहितेति शास्त्रविषयविभागप्रदर्शनाय इह हि दर्शिते पुनः शास्त्रविषयविभागे उपरिष्टात् ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनामिति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्त्स्यति श्रोतारश्च विषयविभागेन सुखं ग्रहिष्यन्तीत्यत आह एषा ते इति एषा ते तुभ्यमभिहितोक्ता सांख्ये परमार्थवस्तुविवेकविषये बुद्धिः ज्ञानं साक्षात् शोकमोहादिसंसारहेतुदोषनिवृत्तिकारणं योगे तु तत्प्राप्त्युपाये निःसङ्गतया द्वन्द्वप्रहाणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च इमामनन्तरमेवोच्यमानां बुद्धिं शृणु तां च बुद्धिं स्तौति प्ररोचनार्थं बुद्ध्या यया योगविषयया युक्तो हे पार्थ कर्मबन्धं कर्मैव धर्माधर्माख्यो बन्धः कर्मबन्धः तं प्रहास्यसि ईश्वरप्रसादनिमित्तज्ञानप्राप्तेरित्यभिप्रायः ३९

### आनन्दगिरिकृतटीका ।

ननु स्वधर्ममपि चावेक्ष्येत्यादिश्लोकैर्न्यायावष्टम्भेण शोकमोहापनयस्य तात्पर्येणोक्तत्वात्तस्मिन्नुपसंहर्त्तव्ये किमिति परमार्थदर्शनमुपसंह्रियते तत्राह शोकेति स्वधर्ममपीत्यादिभिरतीतश्लोकैः शोकमोहयोः स्वजनमरणगुर्वादिवधशङ्कानिमित्तयोः सम्यग्ज्ञानप्रतिबन्धकयोरपनयार्थं वर्णाश्रमवतं धर्ममनुतिष्ठतः स्वर्गादि सिध्यति नान्यथेत्यन्वयव्यतिरेकात्मको लोकप्रसिद्धो न्यायो यद्यपि दर्शितस्तथापि नासौ तात्पर्येणोक्त इत्यर्थः किं तर्हि तात्पर्येणोक्तं तदाह परमार्थेति नत्वेवाहं जातु नासमित्यादिसन्दर्भापरामृश्यते उक्तं न जायते म्रियते वा कदाचिन्नेत्यादिनोपपादितमित्यर्थः उपसंहारप्रयोजनमाह शास्त्रेति तस्य वस्तुद्वाराविषयो निष्ठाद्वयं तस्य विभक्तस्य तेनैव विभागेन प्रदर्शनार्थं परमार्थदर्शनोपसंहार इत्यर्थः ननु किमित्यनया शास्त्रस्य

### स्वामिकृतटीका ।

उपदिष्टं ज्ञानयोगमुपसंहरंस्तत्साधनं कर्मयोगं प्रस्तौति एषेति सम्यक् ख्यायते प्रकाश्यते वस्तु तत्त्वमनयेति संख्या सम्यग्ज्ञानं तस्यां प्रकाशमानमात्मतत्त्वं सांख्यं तस्मिन् करणीया बुद्धिरेषा तवाभिहिता एवमभिहितायामपि तव चेदात्मतत्त्वमपरोक्षं न भवति तर्ह्यन्तःकरणशुद्धिद्वारा आत्मतत्त्वापरोक्षार्थं कर्मयोगे त्विमां बुद्धिं शृणु यया बुद्ध्या युक्तः परमेश्वरार्पितकर्मयोगेन शुद्धान्तःकरणः सन् तत्प्रसादलब्धापरोक्षज्ञानेन कर्मात्मकं बन्धं प्रकर्षेण हास्यसि त्यक्ष्यसि ३९

## आनन्दगिरिकृतटीका।

विषयविभागः प्रदर्श्यते उत्तरत्रैवतद्विभागप्रवृत्तिप्रतिपत्त्योःसम्भवादिति तत्राह
इहहीति शास्त्रप्रवृत्तेः श्रोतृप्रतिपत्तेश्चसौकर्यार्थमादौविषयविभागसूचनमि
त्यर्थः उपसंहारस्यफलवत्त्वमेवमुक्तातमेवोपसंहारमवतारयति अतश्चाहेति पर
मार्थात्मतत्त्वविषयांज्ञाननिष्ठामुक्तामुपसंहृत्यवक्ष्यमाणांसंगृह्णाति योगेत्विति ता
मेववुद्धिं विशिष्टफलवत्त्वेनाभिष्टौति वुद्ध्येति तत्रोपसंहारभागंविभजते एषेत्या
दिना वुद्धिशब्दस्यान्तःकरणविषयत्वं व्यावर्त्तयति ज्ञानमिति तस्यसहकारि
निरपेक्षस्यविशिष्टफलवत्त्वमाचष्टे साक्षादिति शोकमोहौरागद्वेषौकर्त्तृत्वंभोक्तृ
त्वमित्यादिरनर्थःसंसारस्तस्यहेतुर्दोषःस्वाज्ञानंतस्यनिवृत्तौनिरपेक्षंकारणंज्ञान
मज्ञाननिवृत्तौज्ञानस्यान्वयव्यतिरेकसमधिगतसाधनत्वादित्यर्थः योगेत्विमामि
त्यादिव्याकुर्वन् योगशब्दस्यप्रकृतेचित्तवृत्तिनिरोधविषयत्वं व्यवच्छिनत्ति तत्सा
धीति प्रकृतमुक्तप्रयत्नंज्ञानंतत्पदेनपरामृश्यते ज्ञानोदयोपायमेवप्रकटयति
निःसङ्गतयेति फलाभिसन्धिवैधुर्येनिःसङ्गत्वं वुद्धिस्तुतिप्रयोजनमाह प्ररोच
नार्थमिति अभिष्टुताहिवुद्धिःश्रद्धातव्यासत्यनुष्ठातारमधिकरोति तेनस्तुतिरर्थव
तीत्यर्थः कर्मानुष्ठानविषयवुद्ध्याकर्मवन्धस्यकुतोनिवृत्तिर्नहितत्त्वज्ञानमन्तरेण
समूलंकर्महातुंशक्यमित्याशंक्याह ईश्वरइति ३९

ननुकर्मानुष्ठानस्यानैकान्तिकफलत्वेनाकिञ्चित्करत्वादनेकानर्थकलुषित
त्वेनदोषवत्त्वाच्चयोगवुद्धिरपिनश्रद्धेयेतितत्राह किञ्चेति अन्यच्चकिञ्चिदुच्यते
कर्मानुष्ठानस्यावश्यकत्वेतत्कारणमितियावत् कर्मणासह समाधेरनुष्ठातुमश
क्यत्वादनेकान्तरायसम्भवात्तत्फलस्यचसाक्षात्कारस्य दीर्घकालाभ्याससाध्यस्यैक
स्मिन्जन्मन्यसम्भवादर्थाद्योगीमंश्येतानर्थेचनिपतेदित्याशंक्याह नेहेति प्रतीक
त्वेनोपात्तस्यनकारस्यपुनरन्वयानुगुणत्वेननास्तीत्यनुवादः यत्तुकर्मानुष्ठानस्यानै
कान्तिकफलत्वेनाकिञ्चित्करत्वमुक्तंतद्दूषयति यथेति कृषिवाणिज्यादेरारम्भ
स्यानियतफलंसम्भावनामात्रोपनीतत्वान्नतथाकर्मणिवैदिकेप्रारम्भस्यफलमनियतं
युज्यतेशास्त्रविरोधादित्यर्थः यत्तूक्तमनेकानर्थकलुषितत्वेनदोषवदनुष्ठानमिति
तत्राह किञ्चेति इतोपिकर्मानुष्ठानमावश्यकमितिप्रतिज्ञायहेत्वन्तरमेवस्फुटय
ति नापीति चिकित्सायांहिक्रियमाणायांव्याध्यतिरेकोवामरणं वाप्रत्यवायोपि
सम्भाव्यतेकर्मपरिपाकस्य दुर्विवेकत्वान्नतथाकर्मानुष्ठाने दोषोस्तिविहितत्वादि

नेहाभिक्रमनाशोस्तिप्रत्यवायोनविद्यते स्वल्पमप्यस्यधर्मस्यत्रायतेमहतोभयात् ४०

## शाङ्करभाष्यम् ।

किञ्चान्यत् नेहाभीति नेहमोक्षमार्गेकर्मयोगेअभिक्रमनाशोऽभिक्रमणम भिक्रमःप्रारम्भःतस्यनाशोनास्ति यथाकृष्यादेर्योगविषयेप्रारम्भस्यनानैकान्तिकफ लत्वमित्यर्थः किञ्चनापिचिकित्सावत्प्रत्यवायोविद्यतेकिन्तुभवतिस्वल्पमप्यस्ययो गधर्मस्यानुष्ठितंत्रायतेरक्षतिमहतःसंसारभयात् जन्ममरणादिलक्षणात् ४०

## आनन्दगिरिकृतटीका

त्यर्थः संप्रतिकर्मानुष्ठानस्यफलंपृच्छति किंत्विति उत्तरार्द्धंव्याकुर्वन्निवक्षितं फलंकथयति स्वल्पमपीति सम्यग्ज्ञानोत्पादनद्वारेणरक्षणंविवक्षितंसर्वपापप्र सक्तोपिध्यायन्निमिषच्युतंभूयस्तपस्वीभवति पंक्तिपावन इतिस्मृतेरित्यर्थः ४०

## स्वामिकृतटीका ।

ननुकृष्यादिवत्कर्मणांकदाचिद्विघ्नबाहुल्येनफलेव्यभिचारान्मन्त्राद्यङ्गवैगु ण्येनचप्रत्यवायसम्भवात्कुतःकर्मबन्धप्रहाणंतत्राह नेहेति इहनिष्कामकर्मयो गेऽभिक्रमस्यप्रारम्भस्यनाशोनिष्फलत्वंनास्ति प्रत्यवायश्चनविद्यतेईश्वरोद्देश्येनैववि

## भाषा अनुवाद ।

औरजोकहोकिजैसेखेतीऔवनिजवैपारआदिकर्मोंमेकदाचित्कहेकभूं कभूंविघ्नोंकीबाहुल्यकहेबहुतायतसे फलकेहानिकीभीसम्भावनाहै अर्थात्नि स्फलपरिश्रमभीहोताहै औरमन्त्रअनुष्ठान कहेजपयज्ञआदिकमेभीविघ्न अथवा अङ्गविकलहोनेसे प्रत्यवायकहेदोषऔकर्मनिस्फलहोताहै तैसेहीजोयहकर्मजो विघ्नोंकेमारेपूरानहोउठैतौकैसेकर्मबन्धकीहानिकहेनाश होगीऔरउलटे दोष लगनेकाडरहै इसवास्तेभगवान कहतेहैं कियहनिष्कामकर्मयोगकाआरम्भकर नेसेजोपूराभीनहोउठैतौभीनिष्कामकर्मनिःफलहोतानहीं औरइसमेदोषपाप भीनहींलगताहैं जिसहेतु ईश्वरको उद्देश्यकरि अर्थात्ईश्वरके अर्थकियेकर्ममे विघ्नहोतेहीनहींऔरईश्वराराधनके अर्थइस धर्मकेथोडे आचरनसे भीवडेभ यानकसंसारसे रक्षाहोतीहै अर्थात्ईश्वरार्पित कर्मरक्षाकरताहै इससेयहका म्यकर्मकीतरहकुछअङ्गविकलहोनेमेभीनिस्फलनहींहोताहै तात्पर्ययहकिईश्व रार्थकर्मकरनेमेजोदोषनलगेऔरमहत्फलहै तोसाक्षात् ईश्वरकीआज्ञाकर नेसेक्याकहनाहै ४०

भाष्यम्।

येयंसांख्येबुद्धिरुक्तायोगेचवक्ष्यमाणलक्षणा साव्यवसायेति व्यवसायात्मिकानिश्चयस्वभावाएकैवबुद्धिरितरविपरीतबुद्धिशाखाभेदस्यबाधिकासम्यक्प्रमाणजनितत्वादिहश्रेयोमार्गे हेकुरुनन्दनयाःपुनरितराबुद्धयोयासांशाखाभेदप्रचार

आनन्दगिरिकृतटीका।

ननुबुद्धिद्वयातिरिक्तानिबुद्ध्यन्तराण्यपिकणादादिशास्त्रप्रसिद्धानिविद्यन्ते तथाचकथंबुद्धिद्वयमेवभगवतोपदिष्टमितितत्राह येयमिति सैवैकाप्रमाणभूताबुद्धिरित्याह व्यवसायात्मिकेति बुद्ध्यन्तराण्यविवेकमूलान्यप्रमाणानीत्याह बहुशाखाहीति व्यवसायात्मिकायाबुद्धेःश्रेयोमार्गेप्रवृत्तायाविवक्षितंफलमाह इतरेति प्रकृतबुद्धिद्वयापेक्षयाइतराविपरीताश्चाप्रमाणजनिताःस्वकपोलकल्पिताचाबुद्धयस्तासांशाखाभेदःसंसारहेतुस्तस्यबाधिकेतियावत् तत्रहेतुःसम्यगितिनिर्दोषवेदवाक्यसमुत्पत्वादुक्तमुपायोपेयभूतंबुद्धिद्वयंसाक्षात् पारम्पर्याभ्यांसंसारहेतुबाधकमित्यर्थः उत्तरार्द्धंव्याचष्टे याःपुनरिति प्रकृतबुद्धिद्वयापेक्षयार्थान्तरत्वमितरत्वं तासामनर्थहेतुत्वंदर्शयति यासामिति अप्रमाणिकबुद्धीनांप्रसक्तानुपसक्त्या जायमानानामतीवबुद्धिपरिणामविशेषःशाखाभेदास्तेषांप्रचारःप्रवृत्तिःतद्वशादित्येतत् अनन्तत्वंसम्यग्ज्ञानमन्तरेणनिवृत्तिविरहितत्वं अपरत्वंकार्यस्यैवसतोवस्तुभूतकारणविरहित्वं अनुपरतत्वं स्फोरयति नित्येति कथंतर्हितन्निवृत्त्यापुरुषार्थपरिसमाप्तिस्तत्राह प्रमाणेति अन्वयव्यतिरेकाख्येनानुमानेनागमेनचपदार्थपरिशोधनपरेणपरिनिष्पन्ना विवेकात्मिकायाबुद्धिस्तां निमित्तीकृत्यसमुत्पन्नसम्यग्बोधानुरोधात् प्रकृताविपरीतबुद्धयोव्यावर्त्तन्ते तास्वसंख्यातासुव्यावृत्तासुसतीपुनिरालम्बनतयासंसारोपिस्वातुमशक्नुवन्नुपरतोभवतीत्यर्थः याःपुनरित्युपक्रान्तातत्त्वज्ञानापनोद्यासंसारास्पदीभूताविपरीतबुद्धिरनुक्रामति ताबुद्धयइति बुद्धीनांबहुत्वमेवकुतोबहुशाखित्वं तत्राह बहुभेदाइत्येतदिति एकैकांबुद्धिंप्रतिशाखाभेदोऽवान्तरविशेषस्तेनबुद्धीनामसंख्यत्वंप्रख्यातमित्याह प्रतिशाखेति बुद्धीना

स्वामिकृतटीका।

वैगुण्याद्यसम्भवात् किञ्चास्यधर्मस्येश्वराराधनार्थकर्मयोगस्यस्वल्पमपिकृतंमहतोभयात्संसारलक्षणात्त्रायतेरक्षति नतुकाम्यकर्मवत् किञ्चिदङ्गवैगुण्यादिनानैष्फल्यमस्येत्यर्थः ४०






व्यवसायात्मिकाबुद्धिरेकेहकुरुनन्दन बहुशाखाह्यनन्ताश्चबुद्धयोऽव्यवसायिनां॥४१

### शाङ्करभाष्यं

यस्मादनन्तोऽपरोनुपरतः संसारोपिनित्यप्रततोविस्तीर्णोभवति प्रमाणजनितविवेकबुद्धिर्निमित्तवशाच्चोपरताखनन्तभेदबुद्धिपुसंसारोप्युपरमतेताबुद्धयोबहुशाखा बह्व्यःशाखायासां तावहुशाखाबहुभेदाइत्येतत्प्रतिशाखाभेदेनह्यनन्ताश्चबुद्धयः केषामव्यवसायिनांप्रमाणजनितविवेकबुद्धिरहितानां इत्यर्थः ४१

### आनन्दगिरिकृतटीका।

मानन्त्यप्रसिद्धिप्रद्योतनार्थो हिशब्दः सम्यग्ज्ञानवतां यथोक्तबुद्धिभेदभाक्त्वमप्रसिद्धमित्याशंक्यप्रत्याह केषामित्यादिना ४१

### स्वामिकृतटीका।

कुतइत्यपेक्षायामुभयोर्वैषम्यमाह व्यवसायात्मिकेति इहईश्वराराधनलक्षणे

### भाषा अनुवाद।

जोकहोकि कणादआचार्य्योंकेमतमेंज्ञानकर्मउपासनारूपअनेकप्रकारकी बुद्धिकहीहैं औरआपयहांज्ञानयोगरूपऔकर्मरूपदोहीप्रकारबुद्धिकेकहा सो कैसेसंभवहोय इसअभिप्रायपरजइनदोनोकेभीविपरीतकहेजउटाभिन्नप्रकार कहतेहैं किहेकुरुनन्दनअर्जुनयहईश्वरआराधनरूपकर्मयोगमेंव्यवसायात्मिकाअर्थात् भगवद्भक्तिकेद्वाराअवश्यहीउद्धारहोगाऐसीनिश्चयात्मिकाकहेनिश्चयरूपबुद्धिकीनिष्ठाएकहीहै औरअव्यवसायीअर्थात्आराधनकेवहिर्मुखकामीकहेसकामकर्मकरनेवालोंकीअनन्तवासनासेअनेकप्रकारकीबुद्धिहोतीहैं और उसमेंभी कर्मकाफलऔरअश्वमेधराजसूयआदियज्ञकाअङ्गदिग्विजयकीभांति गुणकलाआदिनानाप्रकारबहुतशाखाप्रशाखाविशिष्टबुद्धिउत्पन्नहोतीहैं परन्तु भगवत्आराधनकेअर्थनित्यकर्म तथानैमित्तिककर्मकुछअङ्गविकलकहेअधूराभी होनेसेनष्टनहींजाताहै यथासाध्यकहेजितना या जैसाअपनेसेहोसकेउतनाहीं औरवैसाहीकरो यहीउसधर्मकीविधिहै ईश्वरार्पितकर्मविघ्नऔदोषकोशान्त करिदेता इससेउसकेकरनेमेंकदाचित्वैगुण्यनहींहोतीअर्थात्उसकोविगुण नहींकहसकतेहैं औरकाम्यकर्मतैसानहींहै इससेदोनोंकेबीचबड़ाअन्तरहैसो तुमएकबुद्धिहोकेरहोकहाहैदुविधामेंदोनोंगएमायामिलीनराम ४१

यामिमांपुष्पितांवाचंप्रवदन्त्यविपश्चितः वेदवादरताःपार्थनान्यदस्तीतिवादिनः४२

## शाङ्करभाष्यम्।

येषांव्यवसायात्मिकाबुद्धिर्नास्तितेषांयामिमामिति यामिमांवक्ष्यमाणांपु ष्पितांपुष्पितइववृक्षःशोभमानांश्रूयमाणरमणीयांवाचंवाक्यलक्षणांप्रवदन्तिकेंश्र विपश्चितः अल्पमेधसोऽविवेकिनइत्यर्थः वेदवादरताइतिवेदवादरताःवह्वर्थवाद

## स्वामिकृतटीका।

कर्मयोगेव्यवसायात्मिका परमेश्वरभक्त्यैवध्रुवंतरिष्यामीति निश्चयात्मिकाएकैव एकनिष्ठैवबुद्धिर्भवतिअव्यवसायिनान्तुईश्वराराधनवहिर्मुखाणां कामिनांकामा नामानन्त्यादनन्तास्तत्रापि कर्मफलगुणफलत्वादिप्रकारभेदादनन्तशाखाश्चबुद्धयो भवन्तिईश्वराराधनार्थंहिनित्यंनैमित्तिकञ्चकर्म किञ्चिदङ्गवैगुण्येपि ननश्यतिय थाशक्नुयात्तथाकुर्य्यादितिहितद्विधीयते नचवैगुण्यमपीश्वरोद्देशेनैववैगुण्योपश मात्नतुतथाकाम्यंकर्मअतोमहद्वैषम्यमितिभावः ४१

## भाषा अनुवाद।

जोकहोकिसांख्ययोगरूपबुद्धिएकहीप्रमाणभूतहै तोफेरिवही सबकेचित्तमे क्योंनहीस्थिरहोती अर्थात्जोसकाममनुष्यहैंवेभी येकष्टरूपसकलकामनात्यागक रिभगवद्भक्तिहोसेमुक्तहोंयगे ऐसीनिश्चयरूप बुद्धि काहेसेनहीं करतेहैं तिसप रकहतेहैं किविपलताइन्द्रारूनकीतरहअतिसुन्दरयहजोउत्तम स्वर्गआदि हैं फलसुनावने वाली श्रुति कहेवेदवाक्यजिसकोकामी कहेसकाममनुष्यसबकह तेसोईस्वर्गआदिफलश्रुतिरूपवेदवाक्यसेविचारशून्य मनुष्योंको अर्थात् उसपर विश्वासकरनेवालोंको भगवद्भक्तिसे निश्चय मुक्तहोंयगे ऐसी बुद्धिउत्पन्ननहीं हो तीहै इसश्लोककेआगेवालेतीन श्लोकोंकेसाथ इसश्लोककी अन्वयहै जोकहोकि वेमनुष्यऐसेकाहेलिये कहतेहैं तोउनका सिद्धान्त कहतेहैं किजिसलियेवेसब लोगअतिमूढअज्ञानीहैं उनकेअज्ञानमे हेतुकहतेहैं किवेदकेवीचमेजोसब वाक्यहैंसोकेवलप्रसंसापरकहै अर्थात्चतुर्मासयाजीयोंको अक्षयस्वर्गहोताऔर ज्ञगेपमेसोमलतापीनारिअमरहोतेहैं इत्यादिजोपलासपुष्पकेसमान पुष्पितवेद वाक्यहै निर्गन्धफूलकेतुल्यइन्हीवेदवाक्योंसेकाम्यकर्ममेवेलोगनिरतहैं इससेकह तेहैं कि यहवेदोक्तस्वर्ग आदिफलको छोडकरऔरईश्वरतत्त्वप्राप्तकरने योग्यव स्तुकुछनहींहै इसीमतकोवेकहतेहैं ४२

## शाङ्करभाष्यं

फलसाधनप्रकाशकेषुवेदवाक्येषुरताः हेपार्थनान्यत्स्वर्गपश्वादिफलसाधनेभ्यः कर्म्म-भ्योऽस्तीत्येवंवादिनोवदनशीलाः ४२

## आनन्दगिरिकृतटीका।

यदिसांख्ययोगरूपैकैवप्रमाणभूताबुद्धिस्तर्हिसैवचित्तेकिमितिस्थिरानभवति तत्राह येषामिति तेषामिमांपुष्पितांवाचंप्रवदन्ति तयापहृतचेतसांकामिनां का मवशान्निश्चयात्मिकाबुद्धिर्नप्रायःस्थिराभवतीत्याह यामिति इमामित्यध्ययनविध्यु पात्तत्वेनप्रसिद्धत्वंकर्मकाण्डरूपायावाचोविवच्यतेवच्यमाणत्वंक्रियाविशेषवहुला मित्यादौद्रष्टव्यं किंशुकोहिपुष्पशालीशोभमानोऽनुभूयते नपुनःरूपभोग्यफलभा गीलच्यतेतथेयमपिकर्मकाण्डात्मिकाश्रूयमाणदशायांरमणीया वागुपलभ्यते सा ध्यसाधनसम्बन्धप्रतिभानान्नत्वेषांनिरतिशयफलभागिनीभवति कर्म्मानुष्ठानफल स्यानित्यत्वादितिमत्वाह पुष्पितामिति वाक्यत्वेनलच्यतेअर्थवत्वप्रतिभानाद्वस्तुत स्तुनवाक्यमर्थाभासत्वादित्याह वाक्यलक्षणामिति प्रवक्तॄणांवेदवाक्यतात्पर्यपरि ज्ञानाभावंसूचयति अविपश्चितइति वेदवादावेदवाक्यानितानिचबहूनामर्थवादा नांफलानांसाधनानाञ्चविधिविशेषाणां प्रकाशकानि तेषुरतिराशक्तिस्तन्निष्ठत्वंतद्द त्त्वमपितेषांविशेषणमित्याह वेदवादेति कर्मकाण्डनिष्ठत्वंफलंकथयति नान्यदि ति ईश्वरोवामोचोवानास्तीत्येवंवदन्तो नास्तिकाःसम्यग्ज्ञानवन्तोनभवन्तीत्यर्थः४२

प्रकृतान्प्रवक्तॄनविवेकिनोव्यवसायात्मिकाबुद्धिभाक्त्वासम्भवसिद्धर्थं विधान्त रेणविशिनष्टि तेचेति तेषांसंसारपरिवर्त्तमानपरिदर्शनार्थंप्रस्तुतांवाचमेवविशिन ष्टि जन्मेति ननुपुंसांकामस्वभावत्वमयुक्तं चेतनस्येच्छावतस्तदात्मत्वानुपपत्तेरि

## स्वामिकृतटीका।

ननुकामिनोऽपिकष्टान्कामान्विहायव्यवसायात्मिकामेवबुद्धिंकिमितिनकुर्व्व न्तितत्राह यामिमामिति यामिमांपुष्पितांविषलतावदापाततोरमणीयांप्रकृष्टां परमार्थफलपरामेववदन्तिवाचंस्वर्गादिफलश्रुतिं तेषांतयावाचापहृतचेतसांव्य वसायात्मिकाबुद्धिर्नसमाधौविधीयतइतितृतीयेनान्वयः किमितितथावदन्तिय तोऽविपश्चितोमूढ़ाः तत्रहेतुर्वेदवादरताइति वेदेयेवादाअर्थवादाःअक्षय्यंहि वैचातुर्मास्ययाजिनःसुकृतंभवति तथाअपामसोममृताअभूमेत्याद्याःतेष्वेवरताः प्रीता अतएवातःपरमन्यदीश्वरतत्त्वंप्राप्यंनास्तीतिवदनशीलाः ४२

कामात्मानःस्वर्गपराजन्मकर्मफलप्रदां क्रियाविशेषबहुलांभोगैश्वर्यगतिंप्रति ४३

### शाङ्करभाष्यं।

तेचकामात्मेति कामात्मानःकामस्वभावाःकामपराइत्यर्थः. स्वर्गेतिस्वर्गपराः स्वर्गःपरःपुरुषार्थोयेषांतेस्वर्गपराःस्वर्गप्रधानाःजन्मकर्मफलप्रदां कर्मणःफलंकर्म फलंजन्मैवकर्मणःफलं तत्प्रददातीतिजन्मकर्मफलप्रदातांवाचं प्रवदन्तीत्यनुषज्य तेक्रियाविशेषबहुलांक्रियाणांविशेषाःक्रियाविशेषाः तेबहुलायस्यांवाचितांस्वर्ग पशुपुत्राद्यर्थाःययावाचाबाहुल्येनप्रकाश्यन्तेभोगैश्वर्यगतिंप्रति भोगश्चऐश्वर्यञ्चभो गैश्वर्येतयोर्गतिःप्राप्तिः भोगैश्वर्यगतिः तांप्रतिसाधनभूतास्तेक्रियाविशेषाः तद्ब हुलां तांवाचं प्रवदन्तोमूढाःसंसारेपरिवर्त्तन्तइत्यभिप्रायः ४३

### आनन्दगिरिकृतटीका।

तितत्वाह कामपराइति तत्परत्वंतत्तत्फलार्थित्वेनतत्तदुपायेषुकर्मस्वेवप्रवृत्ततया कर्मसंन्यासपूर्वकात्ज्ञानाद्बहिर्मुखत्वं ननुकर्मनिष्ठानामपिपरमपुरुषार्थापेक्षया मोक्षोपायेज्ञानेभवत्याभिमुख्यमितिनेत्याह स्वर्गेति तत्परत्वंतस्मिन्नेवासक्ततया तदतिरिक्तपुरुषार्थराहित्यंनिश्चयवत्त्वं उच्चावचमध्यमदेहप्रभेदग्रहणंजन्मवाचो यथोक्तंफलप्रदत्वमप्रामाणिकमित्याशंक्यानुष्ठानद्वारातदुपपत्तिरित्याह क्रियेति क्रियाणामनुष्ठानानांयागदानादीनांविशेषादेशकालाधिकारिप्रयुक्ताः सत्राहा नेकाहलक्षणास्ते बहुलयस्यांवाचिप्राचुर्येणप्रतिभान्तीत्यर्थः कथंयथोक्तायांवाचि क्रियाविशेषाणांबाहुल्येनावस्थानमित्याशंक्य प्रकाश्यत्वेनैतद्विशदयति स्वर्गेति तथापितेषांमोक्षोपायत्वोपपत्तेस्तन्निष्ठानांमोक्षाभिमुख्यंभविष्यति नेत्याह भोगे ति यथोक्तांवाचमभिवदतांपर्यवसानंदर्शयति तद्बहुलामिति ४३

### स्वामिकृतटीका।

अतएवकामात्मानइति कामात्मानः कामाकुलितचित्ताअतः स्वर्गएवपरः

### भाषा अनुवाद।

अतएवकामात्मा कहेकर्मबुद्धीस्वर्गादिफलप्राप्तिरूपकामनाकीहै परमपुरु षार्थजिनकेसतमे ऐसेजोमूढहैं तेई जन्मकर्मतथास्वर्गआदिफलदेनेवालीजोवेद वाक्यसवहैं औरभोगऐश्वर्यप्राप्तहोनेकेअर्थसाधनभूतजोवेदोक्त कहेवेदविहित अनेकअनेकक्रियोंकीआधिक्यकहेवहुतायतहैं जिनसेमूढजनऐसेवचनवोलतेहैं अर्थात्जन्महीहैंकर्मकाफल तिसकेदेनेवालीवाक्योंकोकहतेहैं ४३

भोगैश्वर्यप्रसक्तानांतयापहृतचेतसां व्यवसायात्मिकाबुद्धिःसमाधौनविधीयते ४४

शाङ्करभाष्यं

तेषाञ्चभोगेति भोगैश्वर्य्यप्रसक्तानांभोगःकर्त्तव्यऐश्वर्य्यञ्चेति भोगैश्वर्य्ययोरेवप्रवणवतां तदात्मभूतानांतयाक्रियाविशेषवक्कलयावाचाऽपहृतचेतसामाच्छादितविवेकप्रज्ञानांव्यवसायात्मिकासांख्येयोगेवायाबुद्धिःसमाधौसमाधीयतेऽस्मिन्पुरुषोपभोगायसर्व्वमिति समाधिरन्तःकरणंबुद्धिःतस्मिन्समाधौनविधीयतेनस्थितिर्भवतीत्यर्थः ४४

आनन्दगिरिकृतटीका।

ननुकर्मकाण्डनिष्ठानांकर्मानुष्ठायिनामपिबुद्धिसुद्धिद्वारेणान्तःकरणेसाध्यसाधनभूतबुद्धिद्वयसमुदायसम्भवादचतोमोक्षोभविष्यति नेत्याह तेषाञ्चेति तदात्मभूतानांतयोरेव भोगैश्वर्य्ययोरात्मकर्त्तव्यत्वेनारोपितयोरभिनिविष्टचेतसि तादात्म्याध्यासवतांवहिर्मुखाणामित्यर्थःतथापिशास्त्रानुसारिण्याविवेकप्रज्ञयाव्यवसायात्मिकाबुद्धिस्तेषासुदेष्यतीत्याशंक्याह तयेति ननुसमाधिःसंप्रज्ञातासंप्रज्ञातभेदेन द्विधोच्यते तत्रबुद्धिद्वयविधिरप्रसक्तःसन्कथंनिषिध्यतेतत्राह समाधीयतइति४४

स्वामिकृतटिका।

पुरुषार्थोयेषां ते जन्मचतत्रकर्माणिचतत्फलानिचप्रददातीति तथातांभोगैश्वर्य्ययोर्गतिंप्राप्तिंप्रति साधनभूता येक्रियाविशेषास्ते वक्कलायस्यांतां प्रवदन्तीत्यनुसङ्गः ४३ ततश्चभोगैश्वर्येति भोगैश्वर्य्ययोःप्रसक्तानामभिनिविष्टानां तयापुष्पितयावाचापहृतमाकृष्टंचेतोयेषांसमाधिश्चित्तैकाग्र्यं परमेश्वराभिमुखत्वमिति यावत् तस्मिन्निश्चयात्मिकाबुद्धिर्नविधीयते कर्मकर्त्तरिप्रयोगःसानोत्पद्यत इत्यर्थः ४४

भाषा अनुवाद।

भोगऔऐश्वर्य्यमेआसक्त तथाऊपरलिखीविषलताकेतुल्यसुन्दरवेदवाक्योंसे आकृष्टकहेहरिगयाहैचित्तजिनका उनकोसमाधिअर्थात् चित्तकीएकाग्रतारूप परमेश्वरमेजोएकनिष्ठा तिसमेनिश्चयात्मिकाबुद्धिहोतीनहीं इससेकर्मरूपजो बुद्धि उसमेंकर्त्तृत्वरूपअहङ्कारअर्थात्हमकर्ताहैं इसवासनकेमारे उनविचारों को ऐसीएकनिष्ठानिश्चयात्मिकाबुद्धि आपसेउत्पन्नकैसेहोय यहकहा ४४

त्रैगुण्यविषयावेदानिस्त्रैगुण्योभवार्जुन निर्द्वन्द्वोनित्यसत्त्वस्थोनिर्योगक्षेमआत्मवान् ४५

## शाङ्करभाष्यं

येएवंविवेकबुद्धिरहिताःतेषांकामात्मनांयत्फलंतदाह त्रैगुण्येति त्रैगुण्य
विषयाःत्रैगुण्यंसंसारोविषयःप्रकाशयितव्योयेषांतेवेदास्त्रैगुण्यविषयास्त्वन्तुनिस्त्रै
गुण्योभवार्जुननिष्कामोभवेत्यर्थःनिर्द्वन्द्वःसुखदुःखहेतूसप्रतिपक्षौपदार्थौद्वन्द्वशब्द
वाच्यौततोनिर्गतोनिर्द्वन्द्वोभवत्वंनित्यसत्त्वस्थःसत्त्वगुणाश्रितोभव तथानिर्योगक्षे
मोऽनुपात्तस्योपार्जनंयोगउपात्तस्यरक्षणंक्षेमः योगक्षेमप्रधानस्यश्रेयसिप्रवृत्तिर्दु
ष्कराइत्यतोनिर्योगक्षेमोभवात्मवानप्रमत्तश्चभव एषतवोपदेशःस्वधर्ममनुतिष्ठतः ४५

## आनन्दगिरिकृतटीका ।

अविवेकिनामपिवेदाभ्यासवतां विवेकबुद्धिरुदेष्यतीत्याशंक्याह यएवमिति
तर्हिवेदार्थतयाकामात्मता प्रशस्तेत्याशंक्याह निस्त्रैगुण्यइति भवेति पदंनिर्द्वन्द्वा
दिविशेषणेष्वपिप्रत्येकंसम्बध्यते त्रयाणांसत्त्वादीनांगुणानांपुण्यपापव्यामिश्रकर्म
तत्फलसम्बन्धलक्षणःसमाहारस्त्रैगुण्यमित्यङ्गीकृत्यव्याचष्टेसंसारइति वेदशब्देना
त्रकर्मकाण्डमेवगृह्यतेतदभ्यासवतां तदर्थानुष्ठानद्वारासंसारध्रौव्यान्नविवेकावस
रोऽस्तीत्यर्थः तर्हि संसारपरिवर्जनार्थंविवेकासिद्धयेकिंकर्त्तव्यमित्याशंक्याह त्वं
त्विति कथंनिस्त्रैगुण्योभवेति गुणत्रयस्यराहित्यंविधीयते नित्यसत्त्वस्थोभवेति
वाक्यशेषविरोधादित्याशंक्याह निष्कामइति सप्रतिपक्षत्वंपरस्परविरोधित्वंप



## भाषा अनुवाद ।

स्वर्गआदिफलजोपरमफलनहींहैतौफेरिवेदोंनेकिसलियेस्वर्गआदिफलके
साधननानाप्रकारकेकर्मोंकाविधानकियाहै तोकहतेहैं किसकामअधिकारीजनो
केअर्थ वेदकर्मफलकाप्रतिपादनअर्थात्कहतेहैं परन्तुतुमनिष्कामहोउनिष्काम
होनेकोउपाययहहै किनिर्द्वन्द्वअर्थात्सुखदुःखशीतउष्णहानिलाभजन्ममरणआ
दिसेरहितहोउअर्थात्येसवसहो औरजोकहोकिकैसेइनकोसहैंतोकहतेहैं किधै
र्यअवलम्बनकरिकेसहोऔरअप्राप्तवस्तुकेप्राप्तिकीइच्छाजोयोगहै औप्राप्तभईव
स्तुकीरक्षाकरनाक्षेमहै इनदूनोंकोपरित्यागकरिसावधानहोउक्योंकिसुखदुख
मेंआसक्तऔअप्राप्तवस्तुकीइच्छाप्राप्तकारक्षणइसमेंव्याकुलचित्तअसावधानजोहैं
वेनिष्कामकैसेहोसकेंगेत्रैगुण्यजोत्रिगुणात्मकसंसार सोहैविषयकहेकथनीय
जिनकोऐसेतोवेदहैं परतुमनिस्त्रैगुण्यकहेसांसारिकभावसुखदुःखादिसेरहित

यावानर्थउदपानेसर्वतःसंप्लुतोदके तावान्सर्वेषुवेदेषुब्राह्मणस्यविजानतः ४६

## आनन्दगिरिकृतटीका।

द्वौर्थौशीतोष्णादिलक्षणौ · निष्कामत्वेद्वन्द्वान्निर्गतत्वंशीतोष्णादिसहिष्णुत्वंहेतुमु क्त्वातत्रापिहेत्वपेक्षायांसदासद् गुणाश्रितत्वंहेतुमाह नित्येति योगक्षेमव्यावृत्तचे तसोरजस्तमोभ्यामसंस्पृष्टेसत्त्वमात्रेसमाश्रितत्वमाशंक्यमित्याशंक्याह तथेति योग क्षेमयोर्जीवनहेतुतयापुरुषार्थसाधनत्वान्नियोगक्षेमोभवेति कुतोविधिरित्याह योगेति योगक्षेमप्रधानत्वंसर्वस्यस्वारसिकमिति ततोनिर्गमनमशक्यमित्याह आ त्मवानितिअप्रमादोमनसोविषयपारवश्यशून्यत्वं अथयथोक्तोपदेशस्यमुमुक्षुविषय त्वादर्जुनस्यमुमुक्षुत्वमिह विवक्षितमिति नेत्याह एपइति४५ ईश्वरार्पणधिया

## स्वामिकृतटीका।

ननुस्वर्गादिकंपरमंफलंयदिनभवतितर्हिकिमिति वेदैस्तत्साधनतयाकर्माणि विधीयन्तेतत्राह त्रैगुण्यविषयाइति त्रिगुणात्मकाःसकामायेऽधिकारिणस्तद्विष याःकर्मफलसम्बन्धप्रतिपादकावेदाः त्वन्तुनिस्त्रैगुण्योनिष्कामोभव तत्रोपायमा हनिर्द्वन्द्वःसुखदुःखशीतोष्णादियुगलानिद्वन्द्वानितद्रहितोभव तानिसहस्वेत्यर्थः क थमित्यतआह नित्यसत्त्वस्थःसन्धैर्य्यमवलंब्येत्यर्थः तथानिर्योगक्षेमःअप्राप्तस्वीका रोयोगःप्राप्तपालनंक्षेमस्तद्रहितःआत्मवानप्रमत्तः नहिद्वन्द्वाकुलस्ययोगक्षेमव्यावृ तस्यचप्रमादिनस्त्रैगुण्यातिक्रमःसम्भवतीति ४५ ननुवेदोक्तनानाफलत्यागेननि

## भाषा अनुवाद।

होउ ४५ जोकहोकिवेदोक्तकर्मश्रौतसत्कामनाकेफलसकलत्यागकरिनिष्काम ईश्वराराधनकेअर्थजोव्यवसायात्मिकाबुद्धिसोकुबुद्धिहैइसशङ्काकोनिवारनकरते हुयेकहतेहैं किजिसमेंजलपानकियाजायसोउदपानअर्थात्बावडीकुआंतालाति नमेंजोअल्पजलहोतोसबकामसाधनकेअर्थ अर्थात्स्नानपानआदिकरनेकेअर्थत होतहांभ्रमणकरिकेसबकामसिद्धहोयंगेपरन्तुसंप्लुतोदककहे एकमहाकुण्डजि समेंअगाधजलभराहै उसएकहीसेसबनिर्व्वाहहोसकतेहैंतैसेहीवेदोक्तजोकर्मके फलसोसबभगवद्भक्तियुक्तब्रह्मपरायणपुरुषकोभक्तिहीसेमिलतेहैं देखोयेस्वर्गआ दिसम्पूर्णउच्चसुखब्रह्मानन्दकेभीतरहीअन्तरभूतहैं इसब्रह्मानन्दकेकणमात्र आनन्दकोप्राप्तहोकेसर्व्वप्राणीजीतेरहतेहैं यहश्रुतिमेंकहाहै इससेनिश्चयात्मि काजोबुद्धिसोईसुबुद्धिहै ४६

## शाङ्करभाष्यं

सर्व्वेषुवेदोक्तेषुकर्मसुयान्युक्तान्यनन्तानिफलानितानिनापेक्षन्तेचेत्किमर्थंतानीश्वरायेत्यनुष्ठीयन्तइत्युच्यतेशृणु यावानिति यथालोकेकूपतडागाद्यनेकस्मिन्नुदपानेपरिच्छिन्नोदकेयावान्यावत्परिमाणः स्नानपानादिरर्थःफलंप्रयोजनंससर्व्वोर्थःसर्व्वतःसं प्लुतोदकेपियोऽर्थःतावानेवसंपद्यतेतत्रान्तर्भवतीत्यर्थः एवंतावांस्तावत्परिमाणएवसंपद्यतेसर्व्वेषुवेदेषुवेदोक्तेषुकर्म्मसुयोर्थोयत्कर्मफलंसोर्थोब्राह्मणस्यसन्यासिनःपरमार्थतत्त्वंविजानतोयोर्थोयत्विज्ञानफलं सर्व्वतःसंप्लुतोदकस्थानीयंतस्मिंस्तावानेवसम्पद्यतेतत्रैवान्तर्भवतीत्यर्थः यथाकृतायविजितायाधरेयाःसंयन्त्येवमेनंसर्व्वंतदभिसमेतियत्किञ्चित्प्रजाः साधुकुर्व्वन्तियस्तद्वेदयत्सवेदेतिश्रुतेःसर्व्वंकर्माखिलमितिचवक्ष्यति तस्मात्प्राक्ज्ञाननिष्ठाधिकारप्राप्तेःकर्मण्यधिकृतेनकूपतडागाद्यर्थस्थानीयमपिकर्मकर्त्तव्यं ४६

## आनन्दगिरिकृतटीका ।

स्वधर्मानुष्ठानेपिफलकामनाभावाद्वैफल्यं योगमार्गस्येति मन्वानःशङ्कते सर्व्वेष्विति कर्ममार्गस्यफलवत्त्वंप्रतिजानीते उच्यतइति किंतत्फलमित्युक्तेतद्विषयंश्लोकमवतारयति शृण्विति यथोदपानेकूपादौपरिच्छिन्नोदकेस्नानाचमनादिर्योयावानुत्पद्यते सतावानपरिच्छिन्नेसर्व्वतःसंप्लुतोदकेसमुद्रेन्तर्भवतिपरिच्छिन्नोदकानामपरिच्छिन्नोदकांशत्वात्तथासर्व्वेषुवेदोक्तेषुकर्मसुयावानर्थोविषयविशेषोपरक्तःसुखविशेषोजायते सतावानात्मविदःस्वरूपभूतसुखेन्तर्भवति परिच्छिन्नानन्दानामपरिच्छिन्नानन्दान्तर्भावाभ्युपगमादेतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः तथाचापरिच्छिन्नात्मानन्दप्राप्तिपर्यवसायिनोयोगस्यमार्गस्यनास्तिवैफल्यमित्याह यावानिति उक्तमर्थमक्षरयोजनयाप्रकटयति यथेति उदकंपीयतेस्मिन्नितिव्युत्पत्त्या कूपादिपरिच्छिन्नोदकविषयत्वमुदपानशब्दस्यदर्शयति कूपेति कूपादिगतस्याभिधेयस्यसमुद्रेऽन्तर्भावासम्भावात् कथमिदमित्यमित्याशंक्यार्थशब्दस्यप्रयोजनविषयत्वं व्युत्पादयति फलमितियत्फलत्वेनलीयते तत्फलमित्युच्यते तत् कथंतडागादिकृतं स्नानपानादितथेत्याशंक्य तस्याल्पीयसोनाशोपपत्तेरित्याह प्रयोजनमिति तडागादिप्रयुक्तप्रयोजनस्यसमुद्रनिमित्तप्रयोजनमात्रत्वमयुक्तमन्यस्यान्यात्मत्वानुपपत्तेरित्याशंक्याह तत्रेति घटाकाशादेरिवमहाकाशेपरिच्छिन्नोदककार्यस्यापरिच्छिन्नोदककार्यान्तर्भावःसम्भवति तत्प्राप्तावित

## शाङ्करभाष्यं

तवच्चकर्मणीति कर्मण्येवाधिकारोनज्ञाननिष्ठायांतेनतवतत्रचकर्मकुर्वतो माफलेऽधिकारोऽस्तुकर्मफलतृष्णामाभूत् कदाचनकस्यांञ्चिदप्यवस्थायामित्यर्थः यदाकर्मफलेतृष्णाते स्यात् तदाकर्मफलप्राप्तेर्हेतुःस्याः एवंमाकर्मफलहेतुर्भूःयदा हिकर्मफलतृष्णाप्रयुक्तः कर्मणिप्रवर्त्ततेतदाकर्मफलस्यैवजन्मनोहेतुर्भवेत्यदिक र्मफलंनेष्यतेकिंकर्मणा दुःखरूपेणेति माते नवसङ्गोऽस्त्वकर्मण्यकरणेप्रीतिर्मा भूत् ४७

## आनन्दगिरिकृतटीका।

रापेक्षाभावादित्यर्थः पूर्व्वार्द्धंदृष्टान्तभूतमेवंव्याख्यायदार्ष्टान्तिकमुत्तरार्द्धंव्याक रोति एवमित्यादिना कर्मसुयोऽर्थइत्युक्तंव्यनक्ति यत्कर्मफलमिति सोर्थोविजा नतोब्राह्मणस्ययोर्थस्तावानेवसंपद्यतइति सम्बन्धः तदेवस्पष्टयति विज्ञानेति तस्मिन्नन्तर्भवतीतिशेषः कथंकर्मफलंज्ञानफलेऽन्तर्भवतीत्यत्रप्रमाणमाह सर्व्व मिति यत् किसपिप्रजाःसाधुकर्मकुर्व्वन्तितत् सर्व्वंसपुरुषोभिसमेति प्राप्नोतियः पुरुषस्तद्वेदविजानाति यद्वस्तुसहैक्योवेदतद्वेद्यमिति श्रुतेरर्थःकर्मफलस्यसगुणज्ञा नफलेन्तर्भावःसम्भवतीत्याशंक्याह सर्व्वमिति तर्हिज्ञाननिष्ठैवकर्त्तव्या तावतैवकर्म फलस्यलब्धतयाकर्मानुष्ठानानपेक्षणादित्याशंक्याह तस्मादिति योगमार्गस्यनिष्फ लत्वाभावस्तच्छब्दार्थः ४६ तर्हिपरम्परयापुरुषार्थसाधनंयोगमार्गंपरित्यज्यसा क्षादेवपुरुषार्थकारणमात्मज्ञानंतदर्थमुपदेष्टव्यंतस्मैहि स्पृहयतिमनोमदीयमित्या शङ्क्याह तवचेति तर्हितत्फलाभिलाषोपिस्यादितिनेत्याह माफलेष्विति पूर्व्वा न्तमेवार्थं प्रपञ्चयति माकर्मेति फलाभिसन्धसम्भवेकर्माकरणमेवश्रद्दध्यामी

## स्वामिकृतटीका।

व्कामतयेश्वराराधनविषयाव्यवसायात्मिकाबुद्धिःकुबुद्धिरेवेत्याशंक्याह यावानिति उदकंपीयतेयस्मिंस्तदुदपानंवापीकूपतडागादि तस्मिन्स्वल्पोदकेएकत्रकृत्स्नार्थ स्यासम्भवात्तत्परिभ्रमणेनविभागशो यावान्स्नानपानादिरर्थःप्रयोजनंभवतिता वान्सर्व्वोऽप्यर्थःसर्व्वतःसंप्लुतोदकेमहाह्रदेएकत्रैवयथाभवति एवंयावान्सर्व्वेषुवेदे षुतत्तत् कर्मफलरूपोऽर्थस्तावान्सर्व्वोऽपिविजानतोव्यवसायात्मिकाबुद्धियुक्तस्यब्रा ह्मणस्यब्रह्मनिष्ठस्यभवत्येव ब्रह्मानन्देक्षुद्रानन्दानामन्तर्भावात् एतस्यैवानन्दस्यान्या निभूतानिमात्रामुपजीवन्तीतिश्रुतेः तस्मादियमेवबुद्धिःसुबुद्धिरित्यर्थः ४६

कर्मण्येवाधिकारस्ते माफलेषुकदाचन माकर्मफलहेतुर्भूर्मातेसङ्गोस्त्वकर्मणि ४७

## आनन्दगिरिकृतटीका।

त्याग्रङ्कांग्राह मातइति ज्ञानानधिकारिणोपिकर्मत्यागप्रसक्तिंनिवारयतिकर्म्म ण्येवेति कर्म्मण्येवेत्येवकारार्थमाह नज्ञानेति नहितत्राग्राह्मणस्यापरिपक्वक पायस्यमुख्योधिकारःसिद्धतीत्यर्थः फलेस्तर्हिसम्बन्धोदुर्व्वारःस्यादित्याह तत्रेति कर्मण्येवाधिकारेसतीति सप्तम्यर्थः फलेष्वधिकाराभावंस्फोरयति कर्मेति कर्मा नुष्ठानात्प्रागूर्द्धंतत्कालेचेत्येतत् कदाचनेति विवक्षितमित्याह कस्याञ्चिदिति फलाभिसन्धानेदोषमाह यदेति एवंकर्मफलतृष्णाद्वारेणेत्यर्थः कर्मफलहेतुत्वंवि दृणोतियदाहीति तर्हिविफलक्लेशात्मकंकर्मनकर्त्तव्यमिति शङ्कामनुभाव्यदूषय ति यदीत्यादिना अकर्मणितेसङ्गोमाभूदित्युक्तमेवस्पष्टयति अकरणइति ४७

## स्वामिकृतटीका।

तर्हि सर्व्वाणिकर्मफलानिपरमेश्वराराधनादेवभविष्यन्तीत्यभिसन्धायप्रवर्त्ते तकिंकर्मणेत्याशंक्यतद्वारयन्नाह कर्मण्येवेति तेतवतत्त्वज्ञानार्थिनःकर्मण्येवाधि कारस्तत्फलेषुवन्धहेतुषुअधिकारःकामोमास्तु ननुकर्मणिकृतेतत्फलंस्यादेव

## भाषा अनुवाद।

जोऐसाकहतेहोकिसमस्तकर्मकाफलपरमेश्वरकीआराधनाकरनेहीसे होगा तोहमभगवतकाआराधनहीसवछोड़करकरैं औरकर्मकरनेसेक्याप्रयोज नहै इसशङ्काकोनिवारनकरतेहुयेसिद्धान्तकहतेहैं तत्त्वज्ञानकेअर्थीजोतुमसोतु मकोकर्ममात्र करनेकाअधिकारहै औरवन्धनकाहेतुभूत कर्मकेफलकीअभिला षकरि येअनेकप्रकारकीकामनाकरनेमेकभीतुमाराअधिकारनहीहै जोकहो किकर्मकरनेसेउसकाफलअवश्यहीहोगा जैसेकिआहारकरनेसेतृप्ति होतीहीहै कहतेहैंकिसोहोय परउसकापुन्यपापनहीलगता जैसेअज्ञानबालकजोनीचकाअ न्नखायतोउसकाधर्मनजायक्योंकिधर्म्मनाशकेअर्थनहीं खाया सोतुमफलकेअर्थक र्ममे प्रवृत्तनहोउ निष्कामकर्म्मकरोजोकर्म्मफलकीतृष्णासेकर्म्मकरोगे तोकर्म्मफल प्राप्तिकेहेतु होउगेजवफलकीइच्छासेकर्म्ममेप्रवृत्तहोताहै तवफलऔजन्मदोनो काहेतुहोजाताहै नीचऊंचयोनिमेजनमिफलभोगताहै औरजोकर्म्मफलकोनचा हे तोदुखरूपकर्म्मकरनेसेक्याप्रयोजनहै ऐसीमतिभीतुमकोमति होय अर्थात् न करनेमेभीरुचिनहोय तात्पर्ययहकिसकामकर्म्मनकरोनिस्कामतोअवश्यहीकरो४७

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ४८

### शाङ्करभाष्यम्।

यदि कर्मफलप्रयुक्तेन न कर्त्तव्यं कर्म कथं तर्हि कर्त्तव्यमित्युच्यते योगस्थेति योगस्थः सन् कुरु कर्माणि केवलमीश्वरार्थं तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वा धनञ्जय फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिजा ज्ञानप्राप्तिलक्षणा सिद्धिः तद्विपर्य्ययजा असिद्धिस्तयोः सिद्ध्यसिद्ध्योरपि समस्तुल्यो भूत्वा कुरु कर्माणि कोऽसौ योगो यत्रस्थः कुर्वित्युक्तमिदमेव तत् सिद्ध्यसिद्ध्योः समत्वं योग उच्यते ४८

### आनन्दगिरिकृतटीका

आसक्तिकरणेन युक्ता चेत्तर्हि क्लेशात्मकं कर्म किमुद्दिश्य कर्त्तव्यमित्याशङ्कामनूद्य श्लोकान्तरमवतारयति यदीत्यादिना वक्ष्यमाणयोगमुद्दिश्य तन्निष्ठो भूत्वा कर्माणि क्लेशात्मकान्यपि विहितत्वादनुष्ठेयानीत्याह योगस्थः सन्निति कर्मानुष्ठानस्थो

### स्वामिकृतटीका।

भोजने कृते तृप्तिवदित्याशंक्याह मेति मा कर्मफलहेतुर्भूः कर्मफलं प्रवृत्तिहेतुर्यस्य स तथाभूतो मा भूः काम्यमानस्यैव स्वर्गादेर्नियोज्यविशेषणत्वेन फलत्वादकामितं फलं न स्यादिति भावः अत एव फलं बन्धकं भविष्यतीति तस्मात् भयादकर्मणि कर्माकरणेऽपि तव सङ्गो निष्ठा मास्तु ४७

### भाषा अनुवाद।

तो फेरि क्या करना चाहिये सो कहते हैं कि हे धनञ्जय अर्जुन योग कहे ईश्वर में जो एकनिष्ठा उसी में स्थित होय कर्म करो और हमी इस के कर्त्ता हैं ऐसा अभिमान त्याग करि केवल ईश्वरार्पण बुद्धि से कर्म करो अर्थात् निष्काम कर्म का फलरूप तत्त्वज्ञान की प्राप्ति अप्राप्ति में समता पूर्व्वक कहे समचित्त हो केवल ईश्वरार्पण जानि कर्म अनुष्ठान करो जिस हेतु ऐसी ही समता को साधु लोग योग कहते हैं क्योंकि इसी में चित्त स्थिर होता है यह सुबोधिनी का अर्थ है ईश्वरार्पण शब्द का भाव अर्थ यह है कि हम अपने हृदय में टिके अन्तर्यामीरूप परमेश्वर के आधीन हैं यही अन्तर्यामी हमारी वासना के अनुसार शुभ अशुभ जिस कर्म में हम को लगावते उसी को हम उन की प्रेरणा से करते हैं ऐसे विचारते किये ज्ञये सब कर्मों को भगवत अर्पण कहते हैं सोई पञ्चदशी में कहा है जानामि धर्मं न च मे प्रवृत्तिर्जानाम्यधर्मं न च मे निवृत्तिः त्वया हृषीकेश हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ४८

दूरेणह्यवरंकर्मबुद्धियोगाद्धनञ्जय । बुद्धौशरणमन्विच्छकृपणाःफलहेतवः ४९

## शाङ्करभाष्यम्।

यत्पुनःसमत्वबुद्धियुक्तमीश्वराराधनार्थंकर्मोक्तं एतस्मात् कर्मणःदूरेणेति दूरेणातिविप्रकर्षेणअत्यन्तमेवह्यवरमधमं निकृष्टंकर्मफलार्थिनाक्रियमाणंबुद्धियोगात् समत्वबुद्धियुक्तात् कर्मणोजन्ममरणादिहेतुत्वात् हेधनञ्जय यतएवंततः योगविषयायांबुद्धौतत्परिपाकजायां वा सांख्यबुद्धौशरणमाश्रयमभयप्राप्तिकारणमन्विच्छप्रार्थयस्वपरमार्थज्ञानशरणोभवेत्यर्थः यतोवरंकर्मकुर्व्वाणाःकृपणाःदी

## आनन्दगिरिकृतटीका।

हेश्यंदर्शयति केवलमिति फलान्तरापेक्षामन्तरेणेश्वरार्थंतत्प्रसादनार्थमनुष्ठानमित्यर्थःतर्हिईश्वरसन्तोषोभिलाषगोचरीभूतो भावष्यति नेत्याह तत्रापीति ईश्वरप्रसादनार्थेकर्मानुष्ठानेस्थितेपीत्यर्थः सङ्गंत्यक्त्वाकुर्व्वितिपूर्व्वेणसम्बन्धः आकाङ्क्षितं पूरयित्वासिद्ध्यसिद्ध्योःशब्दार्थमाहफलेति तद्विमर्थ्यजासत्त्वशुद्धिजन्याज्ञानाप्राप्तिलक्षणेति यावत् कर्मानुतिष्ठतो योगशुद्धिस्थशेषतयाप्रकृतमाकाङ्क्षापूर्व्वकंप्रकटयति कोसावित्यादिना ४८

## स्वामिकृतटीका।

किंतर्हियोगस्तद्इति योगःपरमेश्वरैकपरतातत्रस्थितःकर्माणिकुरुतया सङ्गंकर्तृत्वाभिनिवेशं त्यक्त्वाकेवलमीश्वराश्रयेणैवकुरुततत्फलस्यज्ञानस्यापिसिद्ध्यसिद्ध्योःसमोभूत्वाकेवलमीश्वरार्पणेनैवकुरुयतएवम्भूतं समत्वमेवयोगउच्यतेसद्भिश्चित्तसमाधानरूपत्वात् ४८

## भाषाअनुवाद

जितनेकाम्यकर्महैं सबकोनिकृष्ट कहेनकारेकहतेहैं व्यवसायात्मिकाबुद्धिकेद्वाराकियेजोकर्मयोगउनकानामबुद्धियोगऔरवहज्ञानसाधनकाउपायहै निष्कामबुद्धियोगकीअपेक्षासबकाम्यकर्मअत्यन्तअपकृष्टजोकाम्यकर्मऐसातुच्छठहरातो हे धनञ्जयबुद्धिशब्दवाच्यकहेज्ञान तिसकोआश्रयकरिनिष्कामकर्मयोगरूपभक्तियोगकाअनुष्ठानकरोचिन्तनीयपालनकरनेवालेईश्वरही कोबुद्धिकाआश्रयकरोकर्मफलकेअभिलाषीजोनरसोकृपणऔदीनहैं श्रुतिमेंकहाहैं कि हेगार्गि इसअक्षरस्वरूपब्रह्मकोनजानि जोसंसारसेलोकान्तरगामीहोतेहैं वेईकृपणअर्थात् निकृष्टहैं इससेबुद्धिकहेज्ञानउसमेंआश्रयलेउ यह भगवानअर्जुनसेकहा ४९

शाङ्करभाष्यं

नाःफलहेतवःफलतृष्णाप्रयुक्ताःसन्तः योवाएतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैतिसकृपणइतिश्रुतेः ४९ समत्वबुद्धियुक्तःसन्स्वधर्ममनुतिष्ठन्यत् फलंप्राप्नोतितच्छृणु बुद्धीति बुद्धियुक्तःसमत्वकर्मविषययाबुद्ध्यायुक्तोबुद्धियुक्तःसज हाति परित्यजतिइहास्मिन्लोकेउभेसुकृतदुष्कृतेपुण्यपापेसत्त्वशुद्धिज्ञानप्राप्ति द्वारेणयतःतस्मात्समत्वबुद्धियोगाययुज्यस्वघटस्वयोगोहिकर्मसुकौशलंस्वधर्माख्येषु

आनन्दगिरिकृतटीका।

किमितियोगस्थेनतत्त्वज्ञानमुद्दिश्यकर्मकर्त्तव्यंफलाभिलाषेमितदनुष्ठानस्यसु लभत्वादित्याशङ्क्यथोक्तयोगयुक्तंकर्मस्तुवन्ननन्तरश्लोकमुत्थापयति यत्पुनरिति अवरंकर्मबुद्धिसम्बन्धविरुद्धमिति शेषः बुद्धियुक्तस्यबुद्धियोगाधीनंप्रकर्षंसूचयति बुद्धीतिबु द्धिसम्बन्धसम्बन्धाभ्यांकर्मणःप्रकर्षनिकर्षयोर्भावेकरणीयंनियच्छति बुद्धा विति यत्तुफलेच्छयापिकर्मानुष्ठानंसुकरमिति तत्राह कृपणेति निकृष्टंकर्मैवविं शिनष्टि फलार्थिनेनि कस्मात्प्रतियोगिनःसकाशादिदंनिकृष्टमित्याशङ्क्यप्रतीक मुपादायव्याचष्टे बुद्धीत्यादिना फलाभिलाषेणक्रियमाणस्यकर्मणोनिकृष्टत्वेहेतु माह जन्मेति समत्वबुद्धियुक्तात् कर्मणःतद्धीनस्यकर्मणोजन्मादिहेतुत्वेननिकृ ष्टत्वेफलितमाह यतइति योगविषयाबुद्धिःसमत्वबुद्धिः बुद्धिशब्दस्यार्थान्तरमाह तत्परिपाकेति तच्छब्देनसमत्वबुद्धिसमन्वितंकर्मगृह्यतेतस्यपरिपाकस्तत्फल भृताबुद्धिशुद्धिः शरणशब्दस्यपर्यायंगृहीत्वाविवक्षितमर्थमाह अभयेतिसप्तमी मविवक्षित्वाद्वितीयंपक्षंगृहीत्वावाक्यार्थमाह परमार्थेति तथाविधज्ञानशरणत्वे हेतुमाह यतइति फलहेतुत्वंविवृणोति फलेति तेनपरमार्थज्ञानशरणतैवयुक्ते ति शेषः परमार्थज्ञानवहिर्मुखानांकृपणत्वेश्रुतिंप्रमाणयति योवाइति अस्य लादिविशेषणमेतदित्युच्यते ४९

स्वामिकृतटीका।

काम्यन्तुकर्मातिनिकृष्टमित्याह दूरेणेति बुद्ध्याव्यवसायात्मिकयाकृतः कर्मयोगोबुद्धियोगबुद्धिसाधनभूतोवा तस्मात्सकाशादन्यत् साधनभूतंकाम्यंकर्म दूरेणावरमत्यन्तमपकृष्टं हि यस्मादेवंतस्माद्बुद्धौज्ञानेशरणमाश्रयंकर्मयोगमन्वि च्छअनुतिष्ठ यद्वाबुद्धौशरणंत्रातारमीश्वरमाश्रयेत्यर्थःफलहेतवस्तु सकामाःनराः कृपणादीनाःयोवाएतदक्षरमविदित्वागार्ग्यस्माल्लोकात्प्रैतिसकृपणइतिश्रुतेः ४९

बुद्धियुक्तोजहातीहउभेसुकृतदुष्कृतेतस्मात् योगाययुज्यस्वयोगःकर्मसुकौशलं५०

## शाङ्करभाष्यं।

कर्मसुवर्त्तमानस्त्वयासिद्ध्यसिद्ध्योः समत्वबुद्धिरीश्वरार्पितचेतस्तया तत् कौशलं कुशलभावस्तद्धिकौशलंयद्बन्धनस्वभावान्यपिकर्माणिसमत्वबुद्ध्यास्वभावात् निवर्त्त न्तेतस्मात्समत्वबुद्धियुक्तोभवत्वं ५०

## आनन्दगिरिकृतटीका।

पूर्व्वोक्तसमत्वबुद्धियुक्तस्यस्वधर्मानुष्ठाने प्रवृत्तस्यकिंस्यादित्याशंक्याह समत्वे ति बुद्धियुक्तःस्वधर्माख्यंकर्मानुतिष्ठन्निति शेषः बुद्धियोगस्यफलवत्त्वे फलितमा ह तस्मादिति पूर्व्वार्द्धंव्याचष्टेबुद्धीत्यादिना ननुसमत्वबुद्धिमात्रान्न पुण्यपापनि वृत्तिर्युक्ता परमार्थदर्शनवतस्तन्निवृत्तिप्रसिद्धेरिति तत्राह सत्त्वेति उत्तरार्द्धंव्या चष्टे तस्मादिति स्वधर्ममनुतिष्ठतो यथोक्तयोगार्थं किमर्थंमनोयोजनीयमित्याशं क्याह योगोहीति तर्हियथोक्तयोगसामर्थ्यादेवदर्शितफलसिद्धेरनास्था स्वधर्मानु ष्ठाने प्राप्तेत्याशंक्याह स्वधर्माख्येष्विति ईश्वरार्पितचेतस्तयाकर्मसु वर्त्तमानस्या नुष्ठाननिष्ठस्य यायथोक्ता बुद्धिस्तत्तेषुकौशलमिति योजना कर्मणांबन्धस्वभाव त्वात् तदनुष्ठाने बन्धावहः स्यादित्याशंक्यकौशलमेव विशदयति तद्धीति समत्व

## स्वामिकृतटीका।

बुद्धियोगयुक्तस्तुश्रेष्ठइत्याह बुद्धियुक्तइति सुकृतं स्वर्गादिप्रापकंदुष्कृतं निर यादिप्रापकंते उभेइहैवजन्मनिपरमेश्वरप्रसादेनत्यजति तस्मात्तदर्थायकर्मयोगा ययुज्यस्वघटस्वयतःकर्मसुयत् कौशलंबन्धकानामपि तेषामीश्वराराधनेनमोक्षपर त्वसम्पादकचातुर्य्यंसएवयोग ५०

## भाषा अनुवाद।

पूर्व्वजोकहाकिसुखदुखआदिमेंसमानबुद्धि होकरस्वधर्मकोकरैतोबुद्धियोग युक्त होनेसेक्याहोता है सोईबुद्धियोगकीश्रेष्ठताकहतेहैं किसुकृत जोपुण्यस्वर्ग आदिकादेनहारऔदुःकृतजोपापनरकवासप्राप्तिकरनेकासाधनइनदोनोंकोबुद्धि योगयुक्त पुरुषइसीजन्ममेंभगवत् कीकृपासेपरित्यागकरतेहैं तिससेअर्जुनतु मबुद्धियोगरूप निष्कामकर्मकरोजिससेयोगकर्मकेबीचमेंकौशलकहे चातुर्य्यहै अर्थात्सकलकर्मबन्धनहोनेकेकारणहैं तौभीईश्वरकीआराधनासे मुक्तिप्राप्ति करनाचातुर्यहै इसीकोयोगकहते सोबुद्धियोगयुक्त होउ ५०

कर्मजंबुद्धियुक्ताहिफलंत्यक्त्वामनीषिण: जन्मबन्धविनिर्मुक्ता:पदंगच्छन्त्यनामयं ५१

### शाङ्करभाष्यं

यस्मात् कर्मजमिति कर्मजंफलंत्यक्त्वेति व्यवहितेनसम्बन्ध:इष्टानिष्टदेह प्राप्ति:कर्मजंफलंकर्मभ्योजातं बुद्धियुक्ता: समत्वबुद्धियुक्ता: सन्तोहि यस्मात् फलं त्यक्त्वापरित्यज्यमनीषिणो ज्ञानिनोभूत्वाजन्मबन्धविनिर्मुक्ता: जन्मैवबन्धोजन्मबन्ध स्तेनविनिर्मुक्ता:जीवन्त एवजन्मबन्धात् विनिर्मुक्ता:सन्त: पदंपरमंविष्णोर्मोक्षाख्यं गच्छन्त्यनामयंसर्व्वोपद्रवरहितमित्यर्थ: अथवाबुद्धियोगाद्धनञ्जयेत्यारभ्यपरमार्थ दर्शनलक्षणैवसर्व्वत: संप्लुतोदकस्थानीया कर्मयोगजासत्त्वशुद्धिर्दर्शिता साक्षात् सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात् ५१

### आनन्दगिरिकृतटीका।

बुद्धेरेवंफलत्वेस्थिते फलितमुपसंहरति तस्मादिति ५०

समत्वबुद्धियुक्तस्यसुकृतदुष्कृततत्फलपरित्यागेपिकथंमोक्ष:स्यादित्याशंक्या ह्यस्मादिति समत्वबुद्ध्यायस्मात् कर्मानुष्ठीयमानं दुरितादित्याजयति तस्मा त्परम्परयाऽसौमुक्तिहेतुरित्यर्थ: मनीषिणोहि ज्ञानातिशयवन्तोबुद्धियुक्ता:स न्त: स्वधर्माख्यंकर्मानुतिष्ठन्तस्ततोजातं फलंदेहप्रदंते हित्वाजन्मलक्षणाद्बन्धाद्वि निर्मुक्तावैष्णवंपदंसर्व्वसंसारसंस्पर्शशून्यं प्राप्नुवन्तीति श्लोकोक्तमर्थं श्लोकयोजन यादर्शयति कर्मजमित्यादिना इष्टोदेहोदेवादिलक्षणोऽनिष्टोदेहस्तिर्य्यगादिल क्षणस्तत्प्राप्तिरेवकर्मणोजातं फलंतद्यथोक्तं बुद्धियुक्ताज्ञानिनोभूत्वा तद्बलादेवपरि

### स्वामिकृतटीका।

कर्मणांमोक्षसाधनत्वप्रकारमाह कर्मजमिति कर्मजंफलंत्यक्त्वा केवलमी श्वराराधनार्थं कर्मकुर्व्वाणामनीषिणोज्ञानिनोभूत्वा जन्मरूपेणबन्धेनविनिर्मुक्ता: सन्तोऽनामयंसर्व्वोपद्रवरहितं विष्णो:पदंमोक्षाख्यंगच्छन्ति ५१

### भाषा अनुवाद।

सुखदुखआदिमेसमतायुक्तभीभयेऔरसुकृत दुःकृत कर्मकेफलकोपरित्या गकियेभीअर्थात् निःकामकर्मकियेसेभीफेरिमोक्षकैसेहोगीइसशङ्कापरकर्मको मोक्षकोसाधनताहै यहकहतेकिकर्मकेफलकीअभिलाषाछोडिकरिकेवलईश्व राराधनार्थकर्मकरतेऊयेबुद्धिमानमनुष्यज्ञानीहोकेजन्मरूपबन्धनसे छूटिकरि सकलउपद्रवसेरहितजोविष्णुपदजिसकोमोक्षकहते तिसकोसहजमेपावतेहैं ५१

यदातेमोहकलिलंबुद्धिर्व्यतितरिष्यति तदागन्तासिनिर्वेदंश्रोतव्यस्यश्रुतस्यच ५२

## शाङ्करभाष्यम्।

योगानुष्ठानजनितसत्त्वशुद्धिजाबुद्धिःकदाप्राप्स्यतइत्युच्यते यदेति यदा यस्मिन्कालेतेतवमोहकलिलंमोहात्मकमविवेकरूपं कालुष्यंयेनात्मानात्मविवेकं बोधंकलुषीकृत्य विषयंप्रत्यन्तःकरणंप्रवर्त्ततेतत्तेतवबुद्धिर्व्यतितरिष्यति व्यतिक्र मिष्यति अतिशुद्धभावमापत्स्यतइत्यर्थःतदातस्मिन्कालेगन्तासिप्राप्स्यसिनिर्व्वे

## आनन्दगिरिकृतटीका।

त्यज्यबन्धविनिर्मुक्तिपूर्वकंजीवन्मुक्ताः सन्तोविदेहकैवल्यभाजोभवन्तीत्यर्थः बुद्धियो गादित्यादौबुद्धिशब्दस्यसमत्वबुद्धिरर्थोव्याख्यातःसम्प्रति परम्परां परिहृत्यसुकृत दुष्कृतप्रहाणहेतुत्वस्यसमत्वबुद्धावसिद्धेः बुद्धिशब्दस्ययोग्यमर्थान्तरंकथयतिअथवे ति अनवच्छिन्नवस्तुगोचरत्वेनानवच्छिन्नत्वं तस्याःसूचयन्बुद्ध्यन्तराद्विशेषंदर्शय ति सर्व्वत इति असाधारणंनिमित्तं तस्यानिर्दिशति कर्म्मेति यथोक्तबुद्धिशब्दार्थत्वे हेतुमाह साक्षादिति जन्मबन्धविनिर्मोकादिरादिशब्दार्थः ५१

## स्वामिकृतटीका।

कदाहं तत् पदंप्राप्स्यामीत्यपेक्षायामाह यदेति द्वाभ्यां मोहोदेहादिष्वा त्मबुद्धिस्तदेवकलिलंगहनंविदुरित्यभिधानकोषस्मृतेः ततश्चायमर्थःएवंपरमेश्वरा राधनेक्रियमाणेयदातत्प्रसादेनतवबुद्धिर्देहाभिमानलक्षणं मोहमयंगहनंदुर्गंवि शेषेणातितरिष्यतितदाश्रोतव्यस्यश्रुतस्यचार्थस्यनिर्व्वेदंवैराग्यं गन्तासिप्राप्स्यसि तयोरनुपादेयत्वेनजिज्ञासांनकरिष्यसीत्यर्थः ५२

## भाषा अनुवाद।

जोकहोकिकबहमउसविष्णुपदकोपावेंगेतोदोस्लोकसेकहतेहैं किमोहजोदेहा दिकमेआत्मबुद्धिअर्थात् आत्मास्वरूपजोकुछहै सोदेहहै ऐसाजोदृढ़विश्वाससोई दुरवगाह अज्ञानगहनवनहै सोजबइसपूर्व्वकथितरूपपरमेश्वरकीआराधना करनेसेभगवतकीकृपासेतुमारीबुद्धिदेह अभिमानरूपमोहमयअगम्यकाननकहे वनकेअच्छीतरहसेपारहोगीअर्थात् देहाभिमानछूटैगातवविष्णुपदरूपमुक्ति प्राप्तहोगीऔरजोअर्थसुनाचाहतेहो औरसुनिचुकेहौतिससबमेवैराग्यउत्पन्न होगीअर्थात् यहसबतुच्छकहेकिसीकामकानहीयहजानिसकोगेफेरिऔरउस बातकोनपूछोगे ५२

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ५३

## शाङ्करभाष्यं

दवैराग्यं श्रोतव्यस्य श्रुतस्य च तदा श्रोतव्यं श्रुतञ्च ते निष्फलं प्रतिभात इत्यभिप्रायः ५२
मोहकलिलात्ययद्वारेण लब्धात्मविवेकजप्रज्ञः कदा कर्मयोगजं फलं परमार्थ
योगमवाप्स्यामीति चेत् तच्छृणु श्रुतिविप्रतिपन्नेति श्रुतिविप्रतिपन्ना अनेकसाध्य
साधनसम्बन्धप्रकाशनश्रुतिभिः श्रवणैर्विप्रतिपन्ना नानाप्रतिपन्ना अध्यात्मशास्त्रा
तिरिक्तस्वस्वेत्यर्थः श्रुतिविप्रतिपन्ना विक्षिप्ता सती ते तव बुद्धिर्यदा यस्मिन्काले
स्थास्यति स्थिरीभूता भविष्यति निश्चला विक्षेपचलनवर्जिता सती समाधौ समाधी
यते चित्तमस्मिन्निति समाधिरात्मा तस्मिन्नात्मनीत्येतत् अचला तत्रापि विकल्पवर्जिते
त्येतद्बुद्धिरन्तःकरणं तदा तस्मिन्काले योगमवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि

## आनन्दगिरिकृतटीका ।

यस्मिन्कर्मणि क्रियमाणे परमार्थलक्षणा बुद्धिरुद्देश्यतया युज्यते तस्मात् कर्मणः
सकाशादितरत् कर्म तथाविधोद्देश्यभूतबुद्धिसम्बन्धविधुरमतिशयेन निकृष्यते तत
श्च परमार्थबुद्धिमुद्देश्यत्वेनाश्रित्य कर्मानुष्ठातव्यं परिच्छिन्नफलान्तरमुद्दिश्य तद
नुष्ठाने कार्पण्यप्रसङ्गात् किन्तु परमार्थबुद्धिमुद्देश्यतामाश्रित्य कर्मानुतिष्ठतः कर
णशुद्धिद्वारा परमार्थदर्शनसिद्धौ जीवत्येव देहे सुकृतादि हित्वा मोक्षमधिगच्छति

## स्वामिकृतटीका ।

ततश्च श्रुतीति श्रुतिभिर्नानालौकिकवैदिकार्थश्रवणैर्विप्रतिपन्नाइतः
पूर्वं विक्षिप्ता सती तव बुद्धिर्यदा समाधौ स्थास्यति समधीयते चित्तमस्मिन्निति समाधिः
परमेश्वरस्तस्मिन्निश्चला विषयान्तरैरनाकृष्टा अतएवाचला अभ्यासपाटवेन तत्रैव
स्थिरा च सती तदा योगं योगफलं तत्त्वज्ञानमवाप्स्यसि ५३

## भाषा अनुवाद ।

इसीप्रकार लौकिक कहे लोककी वार्त्ता औ वैदिक कहे वेदकी वातैं अनेकप्र
कारकी श्रवण करते करते पूर्व्वसे विक्षिप्त कहे भ्रमित जो तुमारी बुद्धि सो जब समाधि
मेंस्थिर होगी अर्थात् अच्छीतरह लगाया जाय चित जिसमे सो समाधि कहे परमे
श्वर तिस ईश्वरमे और विषयोंको छोड़ि अभ्यास करते करते निपुण होय जब अचल
रूपसे स्थिर होगी तव तुम योगका फल जो तत्त्वज्ञान सो पावोगे ५३

श्रीभगवानुवाच प्रजहाति यदा कामान् सर्व्वान् पार्थ मनोगतान्
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ५५

## शाङ्करभाष्यं

प्रश्नबीजंप्रतिलभ्यार्जुनउवाचलब्धसमाधिप्रज्ञस्यलक्षणबुभुत्सयास्थितप्रज्ञस्येति स्थितप्रज्ञस्यस्थिताप्रतिष्ठिताहमस्मिपरंब्रह्मेतिप्रज्ञायस्यसस्थितप्रज्ञस्तस्य स्थितप्रज्ञस्यकाभाषाकिंभाषणंवचनं कथमसौपरैर्भाष्यते समाधिस्थस्यसमाधौ स्थितस्यकेशवस्थितधीःस्थितप्रज्ञस्स्वयंवाकिंप्रभाषेतकिमासीत व्रजेतकिंकिंभाषणंव्रजनंवातस्यकिंकथमित्यर्थः ५४

## आनन्दगिरिकृतटीका ।

संन्यासिनोज्ञाननिष्ठातत्प्राप्तिवचनंप्रश्नबीजंदृष्ट्वातोऽर्जुनस्याभिप्रायमाह लब्धेति लब्धासमाधावात्मनिसमाधानेनवाप्रज्ञापरमार्थदर्शनलक्षणायेनतस्येति यावत् ननुतस्यभाषातत्कार्य्यानुरोधिनीभविष्यतिकिमित्यसौविजिज्ञास्यतेतत्राह कथमिति ज्ञाननिष्ठस्यलक्षणविवक्षयाप्रश्नमवतारयन्तन्निष्ठासाधनबुभुत्सया विभिनष्टिसमाधिस्थस्येति तस्यैवार्थक्रियांपृच्छतिस्थितधीरिति ५४

प्रश्नाक्षराणिव्याख्यायवाक्यार्थमाहस्थितप्रज्ञस्येति प्रतिवचनमवतारयितुं

## स्वामिकृतटीका ।

पूर्व्वश्लोकोक्तस्यात्मतत्त्वज्ञस्यलक्षणंजिज्ञासुरर्जुनउवाचस्थितप्रज्ञस्यकाभाषेति स्वाभाविकेसमाधौस्थितस्यअतएवस्थिता निश्चलाप्रज्ञाबुद्धिर्यस्यतस्यभाषाकाभाष्यतेऽनयेतिभाषालक्षणमितियावत् सकेनलक्षणेनस्थितप्रज्ञउच्यत इत्यर्थःतथा स्थितधीःकिंकथंभाषणमासनंव्रजनञ्चकुर्य्यादित्यर्थः ५४

## भाषाअनुवाद ।

श्रीभगवानबोलेकिहेअर्जुनसुनोजिनकोसाधकलोगज्ञानसाधनकेनिमित्त यत्नपूर्व्वकसाधनाकरतेहैं वेईसिद्धकेस्वाभाविकहैस्वभावसिद्धलक्षणहैंइसमें अवसिद्धकेलक्षणकहनेकेअनन्तरज्ञानकेसाधनअध्यायकीसमाप्तिपर्य्यन्तकहतेहैं तिनमेंसेप्रथमदोश्लोकसेपहिलीप्रश्नकाउत्तरकरतेहैं किहेअर्जुनकुनिजनमनोगतसकलकामनाजबअच्छीतरहसेत्यागकरतेहैं किअपनेपरमआनन्दस्वरूपआत्मामेजोरमैसोआत्मारामअर्थात् आपअपनेआत्मसुखमेसन्तुष्टहोतेहैं तिससेअवक्षुद्रविषयअभिलाषछोड़तेहैं तबउसीलक्षणसेमुनिस्थितप्रज्ञकहेजातेहैं ११

शाङ्करभाष्यं

स्थितप्रज्ञस्य लक्षणमनेन श्लोकेनपृच्छतियोह्यादितएवसंन्यस्यकर्माणिज्ञानयोगनिष्ठायांप्रवृत्तोयश्चकर्मयोगेनतयोः स्थितप्रज्ञस्येतिप्रजहातीत्यारभ्याध्यायपरिसमाप्तिपर्य्यन्तंस्थितप्रज्ञलक्षणं साधनञ्चोपदिश्यतेसर्व्वत्रैवह्यध्यात्मशास्त्रेकृतार्थलक्षणानियानितान्येवसाधनान्युपदिश्यन्तेयत्नसाध्यत्वात् यानियत्नसाध्यानिसाधनानिलक्षणानिभवन्तितानिश्रीभगवानुवाचप्रजहातीति प्रजहातिप्रकर्षेणजहातिपरित्यजतियदायस्मिन्काले सर्व्वान् समस्तान्कामानिच्छाभेदान्हेपार्थमनोगतान्मनसिप्रविष्टान्हृदिप्रविष्टान्सर्व्वकामपरित्यागेतुष्टिकारणाभावाच्छरीरधारणनिमित्तशेषेचसत्युन्मत्तप्रमत्तस्येवप्रवृत्तिः प्राप्तेत्यतउच्यते आत्मनिएवप्रत्यगात्मस्वरूपएवात्मनास्वेनैववाह्यलाभनिरपेक्षस्तुष्टः परमार्थदर्शनामृतरसलाभेनान्यस्मादलंप्रत्ययवान्स्थितप्रज्ञः स्थिताप्रतिष्ठितात्मानात्मविवेकजाप्रज्ञायस्यसस्थितप्रज्ञोविद्वांस्तदोच्यतेत्यक्तपुत्रवित्तलोकैषणः संन्यासी आत्मारामःआत्मक्रीडः स्थितप्रज्ञइत्यर्थः ५५

आनन्दगिरिकृतटीका।

पातनिकांकरोति योहीति हियत्नेनकर्मसंन्यासकारणीभूतविरागतासम्पत्तिः सूच्यते आदितोब्रह्मचर्य्यावस्थायामितियावत् ज्ञानमेवयोगीब्रह्मात्मभावप्रापकत्वात्तस्मिन्निष्ठापरिसमाप्तिस्तस्यामित्यर्थः कर्म्मैवयोगस्तेनकर्माण्यसंन्यस्यतन्निष्ठायामेवप्रवृत्तइति शेषः ननुतत्कथमेकेनवाक्येनार्थद्वयमुपदिश्यतेद्वैधार्थेवाक्यभेदान्नचलक्षणमेवसाधनंकृतार्थलक्षणस्यतत्स्वरूपत्वेनफलत्वे साधनत्वानुपपत्तेरिति तत्राह सर्व्वत्रैवेति यद्यपिप्रकृतार्थस्यज्ञानिनोज्ञानलक्षणंतद्रूपेणफलत्वान्नसाधनत्वमधिगच्छति तथापिजिज्ञासोस्तदेवप्रयत्नसाध्यतयासाधनंसम्पद्यतेलक्षणञ्चात्मज्ञानसामर्थ्यलब्धमनूद्यतेनविधीयतेविदुषोः विधिनिषेधागोचरत्वात्तेनजिज्ञासोःसाधनानुष्ठानायलक्षणानुवादादेकस्मिन्नेवसाधनानुष्ठानेतात्पर्य्यमित्यर्थः उक्तेर्थेभगवद्वाक्यमुत्थापयतियानीति लक्षणानिचज्ञानसामर्थ्यलभ्यान्ययत्नसाध्यानीतिशेषः स्थितप्रज्ञस्यकाभाषेतिप्रथमप्रश्नस्योत्तरमाह प्रजहातीति कामत्यागस्यप्रकर्षोवासनाराहित्यंकामानामात्मनिष्ठत्वं केचिदिष्यतेतदयुक्तंतेषांमनोनिष्ठत्वश्रुतेरित्याशयवानाह मनोगतानिति आत्मन्येवात्मनेत्याद्युत्तरभागनिरस्यञ्चोद्यमनुवदतिसर्व्वकामेति तर्हिप्रवर्त्तकाभावाद्विदुषःसर्व्वप्रवृत्तेरुपशान्तिरिति

दुःखेष्वनुद्विग्नमनाःसुखेषुविगतस्पृहः वीतरागभयक्रोधःस्थितधीर्मुनिरुच्यते ५६

## शाङ्करभाष्यं

किञ्चदुःखेष्विति दुःखेष्वाध्यात्मिकादिषुप्राप्तेषुनोद्विग्नंनप्रक्षुभितंदुःखप्राप्तौमनोयस्यसोयमनुद्विग्नमनाः तथासुखेषुप्राप्तेषुविगतास्पृहातृष्णायस्यनाग्निरिवेन्धनाद्याधानेसुखान्यनुवर्द्धतेसविगतस्पृहः वीतरागभयक्रोधःरागश्चभयञ्चक्रोधश्चवीताविगतारागभयक्रोधायस्मात्सवीतरागभयक्रोधःस्थितधीःस्थितप्रज्ञोमुनिःसंन्यासीतदुच्यते ५६

## आनन्दगिरिकृतटीका

नेत्याहशरीरेति उन्मादवानुन्मत्तोविवेकविरहितबुद्धिभ्रमभागीप्रकर्षेणमदमनुभवन्विद्यमानमपिविवेकंनिरस्यन्भ्रान्तवद्व्यवहरन्प्रमत्तइतिविभागः उत्तरार्द्धमवतार्य्यव्याकरोतिउच्यतइति आत्मन्येवेत्येवकारस्यात्मनेत्यत्रापिसम्बन्धंद्योतयतिस्वेनैवेति वाह्यलाभनिरपेक्षत्वेनतुष्टिमेवस्पष्टयतिपरमार्थेति स्थितप्रज्ञपदंविभजतेस्थितेति प्रज्ञाप्रतिबन्धकसर्व्वकामविरामावस्थातदेतिनिर्दिश्यते उक्तमेवप्रपञ्चयतित्यक्तेति आत्मानंजिज्ञासमानोवैराग्यद्वारासर्व्वैषणात्यागात्मकंसंन्यासमासाद्यश्रवणाद्यावृत्त्याप्रातज्ज्ञानं प्राप्यतस्मिन्नेवासक्त्याविषयवैमुख्येनतत्फलभूतांपरितुष्टिंतत्रैवप्रतिलभमानःस्थितप्रज्ञव्यपदेशभागीत्यर्थः ५५

## स्वामिकृतटीका।

अतःयानिसाधकस्यज्ञानसाधनानितान्येवस्वाभाविकानिसिद्धस्यलक्षणानिअतःसिद्धस्यलक्षणस्यलक्षणानिकथयन्नेवान्तरङ्गानिज्ञानसाधनान्याहयावदध्यायसमाप्तितत्रप्रथमप्रश्नस्योत्तरमाह प्रजहातीतिद्वाभ्यां मनसिस्थितान्कामान्यदाप्रकर्षेणजहाति त्यागेहेतुमाह आत्मनीति आत्मन्येवस्वस्मिन्येवपरमानन्दस्वरूपआत्मनास्वयमेवतुष्टइत्यात्मारामः सन्यदाक्षुद्रविषयाभिलाषांस्त्यजतितदातेनलक्षणेनमुनिःस्थितप्रज्ञउच्यते ५५

## भाषा अनुवाद।

लक्षणकहनेकेवहानेसेजिज्ञासुअर्जुनकोऔरजोकरनाचाहियेसोउपदेशकरतेहैं किजिनकामनदुखपडनेसेउद्विग्नअर्थात्घवडायनऔरसकलसुखकीस्पृहाकहेइच्छानकरैंसुखदुखमेसमानरहैं सोवीतरागअर्थात्विषयप्रीतिरहितएवंभयऔक्रोधशून्यस्थितप्रज्ञकहेस्थिरबुद्धिमुनिकहावतेहैं ५६

यःसर्वत्रानभिस्नेहस्तत्तत्प्राप्यशुभाशुभं नाभिनन्दतिनद्वेष्टितस्यप्रज्ञाप्रतिष्ठिता ५७

## आनन्दगिरिकृतटीका।

लक्षणभेदानुवादद्वाराविविदिषोरेवकर्त्तव्यान्तरमुपदिशतिकिञ्चेति ज्वर शिरोरोगादिकृतानि दुःखान्याध्यात्मिकानि आदिशब्देनाधिभौतिकानिव्याघ्रसर्पादिप्रयुक्तान्याधिदैविकानिचातिवातवर्षादिनिमित्तानिदुःखानिगृह्यन्तेतेषुप्रलब्धेष्वपिनोद्विग्नंमनोयस्यसतथेतिसम्बन्धः नोद्विग्नमित्येतद्व्याचष्टेनप्रक्षुभितमिति दुःखानामुक्तानांप्राप्तौपरिहाराक्षमस्यतदनुभवपरिभावितं दुःखमुद्वेगस्तेनसङ्कितंमनोयस्यनभवति सतथेत्याहदुःखप्राप्ताविति मनोयस्यनोद्विग्नमितिपूर्वेणसम्बन्धः सुखान्यपिदुःखवत् त्रिविधानीतिमत्वातथेत्युक्तंतेषुप्राप्तेषुसत्सु तेभ्योविगता स्पृहातृष्णायस्यसविगतस्पृहइतियोजना अज्ञस्यहिप्राप्तानिसुखान्यनुविवर्द्धते तृष्णाविदुषस्तुनैवमित्यत्रवैधर्म्यदृष्टान्तमाहनाग्निरिवेति यथाहिदाह्यस्येन्धनादेरभ्याधानेवह्निर्विवर्द्धतेतथाज्ञस्यसुखान्युपगतान्यनुविवर्द्धमानापितृष्णाविदुषोन तान्यनुविवर्द्धते नहिवह्निरदाह्यमुपगतमपिदग्धुं विवृद्धमधिगच्छतितेनजिज्ञासुनासुखदुःखयोस्तृष्णोद्वेगौनकर्त्तव्यावित्यर्थः रागादयस्तुतेनकर्त्तव्यानभवन्तीत्याह वीतेति अनुभूताभिनिवेशविषयेषुरञ्जनात्मकस्तृष्णाभेदोरागःपरेणापकृतस्यमात्मनेत्रादिविकारकारणंभयंक्रोधस्तुपरवशीकृत्यात्मानं स्वपरापकारप्रवृत्तिहेतुर्बुद्धिवृत्तिविशेषः ननुतेइतिमुनिरात्मविदित्यङ्गीकृत्याहसंन्यासीति सुखदुःखादिविषयतृष्णादेरागादेश्चाभावावस्थातदेत्युच्यते ५६

## स्वामिकृतटीका।

किञ्चदुःखेष्विति दुःखेषुप्राप्तेष्वपिअनुद्विग्नमक्षुभितंमनोयस्यसःसुखेषु विगतास्पृहायस्यसः ततश्चवीताअपगतारागभयक्रोधायस्मात्तत्रराग प्रीतिः समुनिःस्थितधीरुच्यते ५६

## भाषा अनुवाद।

अर्जुननेपूछाथाकितत्त्वज्ञानीकिसप्रकारसेवातकहतेहैं उसप्रश्नकाउत्तर कहतेहैं किसमस्तपुत्रमित्रधनधामआदिकमेजिसकोस्नेहकहेप्रीतिनहींहै औरशुभप्राप्तिहोनेसेसुखीऔरअशुभलाभहोनेसेदुःखितभीनहोयहै अर्थात्स्तुतिऔनिन्दामेरागद्वेषकहेप्रीतिविरोधहीनहै केवलउदासकेसमानअर्थात्उदासीनऐसेहोवातकरतेहैं उन्हीकीप्रज्ञाप्रतिष्टितहै वेईस्थिरबुद्धिमुनिहैं ५७

यदा संहरते चायं कूर्मोऽङ्गानीव सर्व्वशः इन्द्रियाणीन्द्रियार्थेभ्य स्तस्य प्रज्ञा प्रतिष्ठिता ५८

## शाङ्करभाष्यम्।

किञ्च यःसर्व्वेति योमुनिःसर्व्वत्रदेहजीवितादिष्वप्यनभिस्नेहःस्नेहवर्जितः तत्तत्प्राप्यशुभाशुभंतत्तच्छुभमशुभंवालव्धानाभिनन्दतिनद्वेष्टिशुभंप्राप्यनतुष्यति नहृष्यत्यशुभञ्चप्राप्यनद्वेष्टिइत्यर्थःतस्यैवंहर्षविषादवर्जितस्यविवेकजाप्रज्ञाप्रतिष्ठिताभवति ५७

## आनन्दगिरिकृतटीका।

लक्षभेदानुवादद्वाराविविदिषोरेवकर्त्तव्यान्तरमुपदिशतिकिञ्चेति विवेकवतोविदुषोविवेकजन्याप्रज्ञाकथंप्रतिष्ठांप्रतिपद्यतामित्याशंक्याहयःसर्व्वेति ननुदेहजीवनादौस्पृहाशुभाशुभप्राप्तौ हर्षविषादौविदुषोविविदिषोश्चावर्जनीयौइति प्रज्ञास्थैर्य्यासिद्धिस्तत्राहयोमुनिरिति तत्तदितिशोभनवत्त्वेनाशोभनवत्त्वेनवाप्रसिद्धत्वंप्रतिनिर्दिश्यते तदेवविभजतेशुभमिति विषयेष्वभिष्वङ्गाभावःशुभादिप्राप्तौहर्षाद्यभावश्चप्रज्ञास्थैर्य्यकारणमित्याह तस्येति ५७

जिज्ञासोरेवकर्त्तव्यान्तरंसूचयति किञ्चेतिइन्द्रियानांविषयेभ्योवैमुख्यस्य प्रज्ञास्थैर्य्यकारणत्वादादौजिज्ञासुनातदनुष्ठेयमित्याहयदेति मुमुक्षुणासोऽयहेतुंप्रज्ञांप्रार्थयमानेनसर्व्वेभ्योविषयेभ्यः सर्व्वाणीन्द्रियाणिविमुखानिकर्त्तव्यानीति

## स्वामिकृतटीका।

कथंभाषेतेत्यस्योत्तरमाहयइति यःसर्व्वत्रपुत्रमित्रादिष्वपिअनभिस्नेहःस्नेहशून्यःअतएववाधितानुवृत्त्यातत्तच्छुभमनुकूलंप्राप्यनाभिनन्दतिनप्रशंसतिअशुभंप्रतिकूलंप्राप्यनद्वेष्टिननिन्दतिकिन्तुकेवलमुदासीनएवभाषतेतस्यप्रज्ञाप्रतिष्ठितेत्यर्थः ५७

## भाषा अनुवाद।

जिज्ञासुकोऔरक्याकरनायोग्यहै सोसूचनकरावतेहैं किऔरपूर्व्वकथितयोगीजवइन्द्रियार्थजोनानाप्रकारविषयतिनसेसर्वइन्द्रियों कोअनायासकहेसहजमेंलौटारैअर्थात्फेरलेयइसमेंदृष्टान्तकहतेकिजैसेकूर्मकच्छे कछुआअपनेमुखकरचरणअनायाससमेटिलेतातैसेहीयोगीविषयोंसेइन्द्रियों कोजवबटोरलेसकै तवउसज्ञानीकीवुद्धिस्थिरहै ५८

विषया विनिवर्त्तन्ते निराहारस्य देहिनः रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ५६

शाङ्करभाष्यं।

किञ्चयदासंहरतइति यदासंहरतेसम्यक्उपसंहरतेचायंज्ञाननिष्ठायां प्रवृत्तोयतिः कूर्मोऽङ्गानीवसर्वशः यथाकूर्मोभयात्स्वान्यङ्गान्युपसंहरतिसर्वतःएवं ज्ञाननिष्ठइन्द्रियाणीन्द्रियार्थेभ्यःसर्व्वविषयेभ्यउपसंहरतेतस्यप्रज्ञाप्रतिष्ठितेत्युक्तार्थं वाक्यं ५८

आनन्दगिरिकृतटीका।

श्लोकव्याख्यानेनकथयतियदेत्यादिना उपसंहारःस्ववशत्वमादनंतस्यचसम्यक्त्वमतिदृढत्वं अयमितिप्रकृतस्थितप्रज्ञग्रहणंव्यावर्त्तयतिज्ञाननिष्ठायामिति इन्द्रियोपसंहारस्यप्रलयरूपत्वंव्यावर्त्तप्रसङ्कोचात्मकत्वंदृष्टान्तेनदर्शयतिकूर्मइति दृष्टान्तंव्याकरोतियथेति दार्ष्टान्तिकेयोजयन्ज्ञाननिष्ठापदन्तत्प्रवर्त्तयति एवमिति इन्द्रियाणांविषयेभ्योवैमुखकरणंप्रज्ञास्थैर्यहेतुरित्युक्तमुपसंहरतितस्येति ५८

स्वामिकृतटीका।

किञ्चयदेति यदाचायंयोगीइन्द्रियार्थेभ्यःशब्दादिभ्यःसकाशादिन्द्रियाणि संहरतेप्रत्याहरतिअनायासेन संहारेदृष्टान्तमाहकूर्मइति अङ्गानिकरचरणादीनिकूर्मोयथास्वभावेनैवाकर्षतितद्वत् ५८

भाषाअनुवाद

लोकहोकिइन्द्रियोंकीविषयमेंअप्रवृत्तिहोनायहस्थितप्रज्ञकालक्षणहोसकेगाक्योंकिजडआतुरऔउपवासकरनेवालेमनुष्योंकीइन्द्रीभीविषयमेंनहीं प्रवृत्त होतीहै तोइनसेऔज्ञानीसेफेरिक्याविशेषकहेअन्तरहै इनकोभीस्थिरबुद्धि मुनिकहनाउचितहै तिसपरकहतेहैं किहांआहारनकरनेसेनिराहारपुरुष कोयद्यपिविषययोंकाइन्द्रियद्वाराज्ञाननहींहोतासत्यहै परंतौभीउसकीविषयों सेअभिलाषानहींजातीअर्थात्विषयकीवासनामनमेंबनीरहतीहैं औरस्थितप्रज्ञपुरुषकेपरमात्मदर्शनहेतुसेविषयकीलालसानिवृत्तहोजातीअच्छीतरहसेअभिलाषसहितविषयवासनानाशहोतीहै औरजडआतुरजैसेविषयोंकेअज्ञतैसेआत्माकोभीनहींजानतेतौवेस्थिरबुद्धिकैसेहोसकतेहैं औररसकहेरागजोप्रीतिसो स्थितप्रज्ञाकीप्रापसेआपनिवृत्तहोतीहै ५६

शाङ्करभाष्यं

तत्रविषयाननाहरतआतुरस्यापिइन्द्रियाणिनिवर्त्तन्तेकूर्म्मोङ्गानीवसंह्रियते नतुतद्विषयोरागः सकथंसंह्रियतइत्युच्यतेविषयाइति यद्यपिविषयोपलक्षितानि विषयशब्दवाच्यानीन्द्रियाण्यथवाविषयाएवनिराहारस्य अनाह्रियमाणविषयस्य देहिनःकष्टेनतपसिस्थितस्यमूर्खस्यापिनिवर्त्तन्तेदेहिनोदेहवतःरसवर्ज्जंरसोरागो विषयेषुयःतंवर्जयित्वारसशब्दोरागेप्रसिद्धःस्वच्छन्दतः स्वरसेनप्रवृत्तौरसिको रसज्ञइत्यादिदर्शनात् सोपिरसोरञ्जनरूपःसूक्ष्मोऽस्ययतःपरंपरमार्थतत्त्वंब्रह्मदृ ष्ट्वोपलभ्याहमेवतदितिवर्त्तमानस्यनिवर्त्ततेनिर्वीजंविषयविज्ञानंसंपद्यतइत्यर्थः ना सतिसम्यग्दर्शनेरसस्योच्छेदस्तस्मात्सम्यग्दर्शनात्मिकायाः स्थैर्यंकर्त्तव्यमित्यभि प्रायः ५९

आनन्दगिरिकृतटीका।

इन्द्रियाणांविषयेभ्योवैमुख्येपितद्विषयारागानुवृत्तौकथंप्रज्ञालाभःस्यादिति शङ्कतेतत्रेति व्यवहारभूमिःसप्तम्यर्थःविषयाननाहरतस्तदुपभोगविमुखस्येत्यर्थः रागश्चेन्नोपसंह्रियतेनतर्हिप्रज्ञालाभःसम्भवतिरागस्यतत्परिपान्थत्वादिति मत्वा हसकथमिति रागनिवृत्त्युपायमुपदिशन्नुत्तरमाह उच्यतइति विषयोपभोग पराङ्मुखस्यकुतोविषयपरावृत्तिस्तत्परावृत्तिश्चाप्रस्तुतेत्याशङ्क्याहयद्यपीति नि राहारस्येत्यस्यव्याख्यानमनाह्रियमाणविषयस्येति योहिविषयप्रवणोनभवतितस्या त्यान्तिकेतपसिक्लेशात्मकेव्यवस्थितस्याविद्याहीनस्यापीन्द्रियाणिविषयेभ्यः सकाशा द्यद्यपिसंह्रियन्ते तथापिरागोवशिष्यतेसचतत्त्वज्ञानादृच्छिद्यतइत्यर्थः रसशब्द स्यमाधुर्य्यादिषड्विधरसविषयत्वंनिषेधतिरसशब्दइति वृद्धप्रयोगमन्तरेणकथं प्रसिद्धिरित्याशंक्याह स्वरसेनेति स्वेच्छयेतियावत्रसिकःस्वेच्छावत्रवर्त्तीरस ज्ञोविवक्षितार्थेक्षितज्ञातेत्यर्थः कथंतर्हितस्यनिवृत्तिस्तत्राहसोपीति दृष्ट्विवो पलब्धिमथ्यार्थोस्पष्टयतिअहमेवेति रागापगमेसिद्धमर्थमाह निर्वीजमिति ननु सम्यग्ज्ञानमन्तरेणरागोनापगच्छतिचेत्तदपगमादृतेरागवतः सम्यग्ज्ञानोदया योगादितरेतराश्रयतेतिनेत्याहनासतीति इन्द्रियाणांविषयपारवश्यविवेकद्वारा परिहृतेस्थूलोरागोव्यावर्त्ततेततश्चसम्यग्ज्ञानोत्पत्त्यासूक्ष्मस्यापिरागस्यसर्वात्म नानिवृत्त्युपपत्तेनेतरेतराश्रयतेत्यर्थः प्रज्ञास्थैर्यस्यसफलत्वेस्थितेफलितमाह त स्मादिति ५९

यततोह्यपिकौन्तेयपुरुषस्यविपश्चितः इन्द्रियाणिप्रमाथीनिहरन्तिप्रसभंमनः ६०

## शाङ्करभाष्यम्।

सम्यग्दर्शनलक्षणंप्रज्ञास्थैर्यंचिकीर्षतात्र्यादाविन्द्रियाणिस्ववशेस्थापयित व्यानियस्मात्तदनवस्थापनेदोषमाहयततइति यततःप्रयत्नंकुर्वतोपिहियस्मात् अपिकौन्तेयपुरुषस्यविपश्चितोमेधाविनोपीतिव्यवहितेनसम्बन्धः इन्द्रियाणिप्रमाथीनिप्रमथनशीलानिविषयाभिमुखं हिपुरुषंविक्षोभयन्त्याकुलीकुर्वन्त्याकुलीकृत्यचहरन्तिप्रसभंप्रसह्यप्रकाशमेवपश्यतोविवेकविज्ञानयुक्तंमनोयतस्तस्मात् ६०

तानीति तानिसर्वाणिसंयम्यसंयमनंवशीकरणंकृत्वायुक्तंसमाहितसन्नासी

## स्वामिकृतटीका।

ननुनेन्द्रियाणांविषयेप्रवृत्तिःस्थितप्रज्ञस्यलक्षणंभवितुमर्हतिजडानामातुराणामुपवासपराणाञ्चविषयेष्वप्रवृत्तेरविशेषात्तत्राहविषयाइति इन्द्रियैर्विषयाणामाहरणंग्रहणमाहारः निराहारस्यइन्द्रियैर्विषयग्रहणमकुर्वतोदेहिनोदेहाभिमानिनोऽज्ञस्यविषयाःप्रायशोविनिवर्त्तन्तेतदनुभवोनिवर्त्ततइत्यर्थः किन्तु रसोरागोऽभिलापस्तद्वर्जंअभिलापश्चननिवर्त्ततइत्यर्थः रसोऽपिरागोऽपिपरंपरमात्मानंदृष्ट्वाअस्यस्थितप्रज्ञस्यतोनिवर्त्ततेनश्यतीत्यर्थः यद्वानिराहारस्यउपवासपरस्यविषयाःप्रायशोनिवर्त्तन्तेक्षुधासन्तप्तस्यशब्दस्पर्शाद्यपेक्षाभावात् किन्तुरसवर्जंरसापेक्षातुननिवर्त्ततइत्यर्थःशेषंसमानं ५९

इन्द्रियसंयमंविनास्थितप्रज्ञतानसम्भवतिअतःसाधकावस्थायातत्रमहानप्रयत्नःकर्त्तव्यइत्याहयततोऽपीतिद्वाभ्यां यततोमोक्षार्थंप्रयतमानस्यविपश्चितोविवेकिनोऽपिमनइन्द्रियाणिप्रसभंबलाद्धरन्तियतः प्रमाथीनिप्रमथनशीलानिक्षोभकाणीत्यर्थः ६०

## भाषा अनुवाद।

इन्द्रियोंकासंयमकियेविनाअर्थात्विषयोंसेरोकनेकेविनास्थितप्रज्ञकहे परमात्मामेअचलबुद्धिहोतीनहीं इससेप्रथमसाधनकीअवस्थामेइन्द्रीयोंकोस्वाधीनकरनेकेअर्थबड़ायत्नकरनाचहियेयहकहतेहैं किहेकौन्तेयकुन्तीनन्दनअर्जुन मोक्षकेहेतुप्रयत्नकरतेहुये विवेकीविचारवानज्ञानीपुरुषकेभीमनकोयेप्रबलप्रमाथीकहेक्षोभकरनेवालीइन्द्रीहरणकरलेतीहैं ६०

तानि सर्व्वाणि संयम्य युक्त आसीत मत्परः वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ६१

## शाङ्करभाष्यं

मत्परोऽहं वासुदेवः सर्व्वप्रत्यगात्मा परो यस्य स मत्परः नान्योऽहं तस्मादित्यासीतेत्यर्थः एवमासीनस्य यतेर्व्वशे हि यस्येन्द्रियाणि वर्त्तन्ते अभ्यासवशात् तस्य प्रज्ञा प्रतिष्ठिता ६१

## आनन्दगिरिकृतटीका।

श्लोकान्तरमवतारयति सम्यगदर्शनेति मनसः स्ववशत्वादेव प्रज्ञास्थैर्यसम्भवे किमर्थमिन्द्रियाणां स्ववशत्वापादनमित्याशंक्याह ननु विवेकवतो विषयदोषदर्शिनो विषयेभ्यः स्वयमेवेन्द्रियाणि व्यावर्त्तन्ते किं तत्र प्रज्ञास्थैर्य्यं चिकीर्षता कर्त्तव्यमिति तत्राह यततोहीति विषयेषु भूयो दोषदर्शनमेव प्रयत्नः हिशब्दस्य यस्मादर्थस्य समासेन संबध्यति अपिशब्दस्य प्रयत्नं कुर्व्वतोपोति सम्बन्धं गृहीत्वा सम्बन्धान्तरमाह पुरुषस्येति प्रमथनशीलत्वं प्रकटयति विषयेति विक्षोभस्याकुलीकरणस्य फलमाह आकुलीकृत्येति प्रकाशमेवेत्युक्तं विशदयति पश्यत इति विपश्चितो विदुषोपि प्रकाशमेव प्रकाशशब्दितविवेकाख्यविज्ञानं युक्तमेव मनो हरन्तीन्द्रियाणीति सम्बन्धः हिशब्दार्थमनुद्यतस्मादिन्द्रियाणि स्ववशे स्थापयितव्यानीति पूर्व्वेण सम्बन्धमभिसन्धायाह यतस्तस्मादिति ६०

इन्द्रियाणां स्ववशत्वसम्पादनानन्तरं कर्त्तव्यमर्थमाह तानीति एवमासीनस्य किं स्यादिति तदाह वशेहीति समाहितस्य चित्ते अविकलस्य कथमासनमित्यपेक्षायामाह मत्पर इति परापरभेदशङ्कामपाकृत्यासनमेव स्फोरयति नान्योहमिति

## स्वामिकृतटीका।

यस्मादेवं तस्मात् तानीति युक्तो योगी तानीन्द्रियाणि संयम्य मत्परः सन्नासीत यस्य वशे वशवर्त्तीनीन्द्रियाणि एतेन च कथमासीतेति प्रश्नस्य वशीकृतेन्द्रियः संन्यासीतेत्युत्तरं भवति ६१

## भाषा अनुवाद।

इन्द्रियोंको स्वाधीनकरना यह कहिकरिफेरि क्याकरना उचितहै सो कहतेहैं कि तो सव इन्द्रियोंका संयमकरिके युक्तयोगी मेरे मे तत्पर होरहे अर्थात् आत्मामे निष्ठाकरि वैठै यह कहि ज्ञानीकैसे स्थितिकरते इस प्रश्नका उत्तर दिया अर्थात् जिसके इन्द्रीगण वश हैं उसकी प्रज्ञा कहे बुद्धि प्रतिष्ठित है ६१

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते सङ्गात् संजायते कामः कामात् क्रोधोऽभिजायते ६२

### शाङ्करभाष्यम्।

अथेदानींपराभविष्यतसर्व्वानर्थमूलमिदमुच्यतेध्यायतइति ध्यायतश्चिन्तयतोविषयान्शब्दादिविषयविशेषान्आलोचयतःपुंसः पुरुषस्यसङ्गआसक्तिःप्रीतिःतेषुविषयेषूपजायतेउत्पद्यतेसङ्गात् प्रीतेःसंजायतेसमुत्पद्यतेकामःतृष्णातस्मात्कामात्कुतश्चित्प्रतिहतात्क्रोधोभिजायते ६२

### आनन्दगिरिकृतटीका।

उत्तरार्द्धंव्याकरोतिएवमिति हिशब्दार्थंस्फुटयतिअभ्यासेति परस्मादात्मनोनाहमन्योस्मीतिप्रागुक्तानुसन्धानस्यादरेण नैरन्तर्य्यदीर्घकालानुष्ठानसामर्थ्यादित्यर्थःअथवाविषयेषुदोषदर्शनाभ्याससामर्थ्यादिन्द्रियाणिसंयतानीत्यर्थः ६१

समनन्तरश्लोकद्वयतात्पर्यमाहअथेति पुरुषार्थोपायोपदेशानन्तर्यमथशब्दार्थं तन्निष्ठत्वराहित्यावस्थांदर्शयतिइदानोमिति पराभविष्यतोमहान्तमनर्थंगमिष्यतोविवेकविज्ञानविहीनस्येतियावत् सर्व्वानर्थमूलंविषयाभिध्यानंतस्यतात्वमनुभवसिद्धमितिवक्तुमिदमित्युक्तं विषयेषुविशेषत्वमारोपितरमणीयत्वंप्रीतिरासक्तिरितिसाधारणासक्तिमात्रंगृह्यते तृष्णोत्युद्रिक्ताशक्तिस्तत्प्रतिबन्धेनप्रणाशेनवाप्रतिहतिः ६२

### स्वामिकृतटीका।

वाह्येन्द्रियसंयमाभावेदोषमुक्त्वामनःसंयमाभावेदोषमाहध्यायतीति द्वाभ्यां गुणवुद्ध्याविषयान्ध्यायतः पुंसस्तेषुसङ्गासक्तिर्भवतिआसत्याचतेष्वधिकःकामोभवतिकामाच्चकेनचित्प्रतिहतात्क्रोधोभवति ६२

### भाषा अनुवाद।

वाह्यइन्द्रियकहेवाहरकोइन्द्रियोंकेनवशकरनेमेजोदोषसोदेखायअववशीभूतजोमनतिसकादोषदेखावतेहैंकिवुद्धिकेद्वारारूपादिकविषयोंकोध्यानकरतेहुयेपुरुषकामनउनविषयोंमेआसक्तहोताअर्थात्विषयसङ्गहोताहै औरसङ्गसेअधिकअधिककामनाउत्पन्नहोतीहैं फेरिजोकामनाकिसीप्रकारसेनष्टहोंयतोक्रोधप्रगटहोताहै अर्थात्कामसेक्रोधहोयहै ६२

क्रोधाद्भवतिसंमोहःसम्मोहात्स्मृतिविभ्रमःस्मृतिभ्रंशाद्बुद्धिनाशोबुद्धिनाशात्प्रणश्यति॥

## शाङ्करभाष्यं

क्रोधाद्भवतिसंमोहःसंमोहोऽविवेकःकार्य्याकार्य्यविषयविभ्रमोभवतीतिसं बध्यतेक्रुद्धोहिसंमूढः सन्गुरुमप्याक्रोशतिसंमोहात्स्मृतिविभ्रमःशास्त्राचार्य्योपदे शाहितसंस्कारजनितायाःस्मृतेःस्याद्विभ्रमोभ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तौअनुत्प त्तिस्ततःस्मृतिभ्रंशात्तुबुद्धेर्नाशः कार्य्याकार्यविषयविवेकायोग्यताअन्तःकरणस्यबुद्धे र्नाशउच्यतेबुद्धिनाशात्प्रणश्यतितावदेवहिपुरुषोयावदन्तःकरणंतदीयंकार्य्याका र्यविषयविवेकयोग्यंतदयोग्यत्वेनष्टएवपुरुषोभवत्यतः तस्यान्तःकरणस्यबुद्धेर्नाशात् प्रणश्यतिपुरुषार्थायोग्योभवतीत्यर्थः ६३

## आनन्दगिरिकृतटीका।

क्रोधस्यसंमोहहेतुमनुभवेनद्रढयतिक्रुद्धोहीति आक्रोशत्यविज्ञिप्ततिदयो ग्यत्वमपेरर्थः संमोहकार्यंकथयतिसंमोहादिति स्मृतेर्निमित्तनिवेदनद्वारास्व रूपंनिरूपयतिशास्त्रेति चणिकत्वादेवतस्याःस्वतोनाशसम्भवान्नसंमोहाधीनत्वं तस्येत्याशङ्काहस्मृतीति स्मृतिभ्रंशेपिकथंबुद्धिनाशःस्वरूपतःसिध्यतितत्राहकार्ये ति ननुपुरुषस्यनित्यसिद्धस्यबुद्धिनाशेपिप्रणाशोनप्रकल्पतेतत्राह तावदेवेति कार्य्याकार्यविवेचनयोग्यान्तःकारणाभावेसतोपि पुरुषस्यकरणाभावादुपागतत त्त्वविवेकविवक्षयानष्टत्वव्यपदेशः तदेतदाहपुरुषार्थेति ६३

## स्वामिकृतटीका।

किञ्चक्रोधादिति क्रोधात्सम्मोहः कार्य्याकार्य्यविवेकाभावःततःशास्त्रा चार्य्योपदिष्टार्थस्मृतेर्विभ्रंशोविचलनंभ्रंशः ततोबुद्धेश्चेतनायनाशःइच्छादिभ्विवा भिभवःततःप्रणश्यतिमृततुल्योभवति ६३

## भाषा अनुवाद।

औरक्रोधमोहकाहेतुहै इसकोदृढ़करतेहैं किक्रोधसेअर्थात्उसकेद्वारा मोहहोताहै अर्थात्काजअकाजकाविचारनहींरहताफेरिसंमोहहोनेसेशास्त्र औआचार्य्यतथागुरुकादियाजोउपदेशकहे शिक्षाअर्थसोविचलितअर्थात्भूलजा यहै औरस्मृतिभ्रंसहोनेसेकहेउपदेशभूलजानेसेबुद्धिकोचेतनाचलीजातीहै अ र्थात्बुद्धिनष्टहोतीहै बुद्धिनाशहोनेसेजड़केसमानहोयफेरिवहमनुष्यमुर्देकीतु ल्यहोकरनष्टहोताहै ६३

रागद्वेषविमुक्तैस्तुविषयानीन्द्रियैश्चरन् आत्मवश्यैर्विधेयात्माप्रसादमधिगच्छति ६४

## शाङ्करभाष्यं

सर्व्वानर्थस्यमूलमुक्तंविषयाभिध्यानमथेदानींमोक्षकारणमिदमुच्यतेरागद्वेषेति रागद्वेषविमुक्तैः रागश्चद्वेषश्चरागद्वेषौतत्पुरःसराहीन्द्रियाणांप्रवृत्तिःस्वाभाविकीतत्रयोमुमुक्षुर्भवतिसताभ्यांविमुक्तैः श्रोत्रादिभिरिन्द्रियैर्व्विषयानवर्ज्जनीयांश्चरन्नुपलभमानः आत्मवश्यैरात्मनोवश्यानिवशीभूतानितैरात्मवश्यैर्व्विधेयात्मेच्छातो विधेयआत्मान्तःकरणंयस्यसोयं प्रसादमधिगच्छतिप्रसादःप्रसन्नतास्वास्थ्यं ६४

## आनन्दगिरिकृतटीका।

विषयाणांस्मरणमपिचेदनर्थकारणंसुतरांतर्हिभोगस्तेनजीवनार्थंभुञ्जानोविषयाननर्थंकथंनप्रतिपद्यतइत्याशंक्य वृत्तानुवादपूर्व्वकमुत्तरश्लोकतात्पर्य्यमाहसर्व्वानर्थस्येति अनर्थमूलकथनानन्तर्य्यमथशब्दार्थः परिहर्त्तव्येनिर्णीतेसतितत्परिहारोपायजिज्ञासांदर्शयतिइदानीमिति रागद्वेषपूर्व्विकाप्रवृत्तिरित्यत्रानुभवदर्शनार्थोहिशब्दःशास्त्रीयप्रवृत्तिव्यासेधार्थंस्वाभाविकीत्युक्तंतत्रेत्यधिकृतानधिकृत्यप्रयोगोवर्ज्जनीयानशनपानादीन्देहस्थितिहेतूनितियावत् इन्द्रियाणांविषयेषुप्रवृत्तिश्चेन्नियमानुपपत्त्यावर्ज्जनीयेष्वपिसास्यादित्याशंक्याह आत्मेति अन्तः

## भाषा अनुवाद।

जोकहोकिचिरकालसेविषयमेनिमग्नस्वभावकहेविषयमेआसक्तइन्द्रिगणकाविषयसेरोकनाजोअसाध्यअतिकठिनहै तोपूर्व्वउक्तदोषनिवारणकैसेहोसकैगाइससेस्थितप्रज्ञाहोनाभीअसम्भवअतिदुर्घटहै इसशङ्कापरकहतेहैं किरागकहेप्रीतिऔद्वेषजोविरोधतिनसेरहितहोकेअर्थात् इनकोछोड़केऔअभिमानत्यागकरिकेसवइन्द्रीयोंकेद्वाराविषयोंकाभोगकरनेसेभीशान्तिप्राप्तिहोतीहै तोरागद्वेषरहितकैसेहोयसोकहतेहैं किमनकेआधीनकहेवशीभूतसवइन्द्रियहैं औरइन्द्रियवशकारीमनकोजोमनुष्यअपनेवशकरराखैहै उसकेफेरिऔररागद्वेषादिकरहतेनहींइसकहनेसेअर्जुनकोचौथीप्रश्नजोहै किस्थितप्रज्ञकैसेगमनकरैहै उसकाउत्तरदियाकिस्वाधीनइन्द्रियगणराखिविषयोंमेगमनकरैअर्थात् इन्द्रीजित्होविषयभोगकरैजिसकहेतुआत्मवशइन्द्रियद्वाराविषयभोगकरताहुआआत्मासुखीरहताहै ६४

प्रसादे सर्वदुःखानां हानिरस्योपजायते प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ६५

## शाङ्करभाष्यं

प्रसादे सति किं स्यादित्युच्यते प्रसाद इति प्रसादे सर्वदुःखानां आध्यात्मिकादीनां हानिर्विनाशोऽस्य यतेरुपजायते किञ्च प्रसन्नचेतसः स्वच्छान्तःकरणस्य हि यस्मादाशु शीघ्रं बुद्धिः पर्यवतिष्ठते आकाशमिव परिसमन्तात् अवतिष्ठते आत्मस्वरूपेणैव निश्चलो भवतीत्यर्थः एवं प्रसन्नचेतसोऽवस्थितबुद्धेः कृतकृत्यता यतस्तस्माद्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्ववर्जनीयेषु युक्तः समाचरेदिति वाक्यार्थः ६५

## आनन्दगिरिकृतटीका।

करणाधीनत्वेपीन्द्रियाणां तदनियमात्तेषामपिनियमानुपपत्तिरित्याशंक्याहविधेयात्मेति ६४

तथापिनानाविधदुःखाभिभूतत्वान्नस्वास्थ्यमास्थातुंशक्यमित्याशयेनपृच्छति प्रसादइति श्लोकार्द्धेनोत्तरमाह उच्यतइति सर्वदुःखहान्यावुद्धिस्थैर्येपिप्रकृतंप्रज्ञास्थैर्यंकथंसिद्धमित्याशंक्याह प्रसन्नेति वुद्धिप्रसादस्यैवफलान्तरमाहकिञ्चेति तस्मात्वुद्धिप्रसादार्थंप्रयतितव्यमितिशेषः श्लोकद्वयस्याक्षरोत्थमर्थमुक्तातात्पर्यार्थमुपसंहरतिएवमिति युक्तःसक्ताद्दितोविषयपारवश्यशून्यःसन्निति यावत् ६५

## स्वामिकृतटीका।

नन्विन्द्रियाणांविषयप्रवणस्वभावानांनिरोद्धुमशक्यत्वादयंदोषोदुष्परिहरइतिस्थितप्रज्ञत्वंकथंस्यादित्याशंक्याहरागद्वेषइतिद्वाभ्यां रागद्वेषरहितैर्विंगतदर्पैरिन्द्रियैर्विषयांश्चरन्नुपभुञ्जानोऽपिप्रसादंशान्तिंप्राप्नोति रागद्वेषराहित्यमेवाहआत्मेति आत्मनोमनसोवश्यैरिन्द्रियैर्विधेयोवशवर्तीआत्मामनोयस्येति अनेनैवकथंव्रजेतेत्यस्यचतुर्थप्रश्नस्याधीनैरिन्द्रियैर्विषयान् गच्छतीत्युत्तरमुक्तंभवति ६४

प्रसादे सति किं स्यादित्यत्राह प्रसादइति प्रसादे सति सर्वदुःखनाशस्ततश्चप्रसन्नचेतसोवुद्धिःप्रतिष्ठिता भवतीत्यर्थः ६५

## भाषा अनुवाद।

इसप्रकार शान्तिप्राप्त होनेपर फिर क्या होता है सो कहते हैं कि शान्तिलाभ होनेसे सब दुखनाश होजाते हैं और इस शान्तचित्त पुरुषके सुन्दर बुद्धि स्थिर होती है ६५

नास्तिबुद्धिरयुक्तस्यनचायुक्तस्यभावना नचाभावयतःशान्तिरशान्तस्यकुतःसुखं ६६

## शाङ्करभाष्यं

सेयंप्रसन्नतास्तूयतेनास्तीति नास्तिनविद्यतेनभवतीत्यर्थःबुद्धिरात्मस्वरूप विषयाअयुक्तस्यासमाहितान्तःकरणस्यनचायुक्तस्येति नचास्यअयुक्तस्यभावनाआ त्मज्ञानाभिनिवेशःतथाचनास्यभावयतः आत्मज्ञानाभिनिवेशमकुर्वतःशान्तिरूप शमोनविद्यतेअशान्तस्यकुतः सुखंइन्द्रियाणांहिविषयसेवातृष्णातोनिवृत्तिर्यातत् सुखंनविषयविषयातृष्णादुःखमेवहिसानतृष्णायां सत्यांसुखस्यगन्धमात्रमतिउत्प द्यतइत्यर्थः ६६

## आनन्दगिरिकृतटीका

किंपुनःसत्त्वशुद्धेरवयथोक्तबुद्धिःसिध्यतिनेत्याहसेयमिति असमाहितस्यापि बुद्धिमात्रमुत्पद्यमानंप्रतिभातीत्याशंक्यविशिनष्टिआत्मस्वरूपेति नहिविक्षिप्तचि त्तस्यात्मस्वरूपविषयाबुद्धिरुदेतुमर्हतीत्यत्रहेतुमाहनचेति आत्मज्ञानेशब्दादा पाततोजातेस्मृतिसन्तानानुकरणं साक्षात्कारार्थमभिनिवेशोभावनेति चोच्यते नचासौविक्षिप्तबुद्धेःसिध्यतीतिहेत्वर्थंविवक्षित्वाहआत्मज्ञानेति भावनाद्वारासा क्षात्काराभावेपिकाक्षतिरित्याशंक्याहतथेति असमाहितस्यभावनाभावादिति यावत् आत्मन्यापाततोज्ञातेश्रवणाद्यावृत्तिरूपांस्मृतिमनातन्वानोस्यापरोक्षबु द्ध्यभावेनानर्थनिवृत्तिःसिद्धतीत्याहउपशमइति अनिवृत्तानर्थस्यपरमानन्दसाग राद्विभक्तस्यसंसारवारिधौनिमग्नस्यसुखाविर्भावोनसम्भवतीत्याह अशान्तस्येति तस्यापिविषयसेविनोवैषयिकंसुखंसम्भवतीत्याशंक्याहइन्द्रियाणांहीति तृष्णाञ्च यस्यशास्त्रप्रसिद्धमानुभविकञ्चसुखत्वमितिवक्तुंहिशब्दः विषयसेवातृष्णयापि

## भाषा अनुवाद।

इन्द्रियोंकानिग्रहकहेकावूरखनाजोस्थितप्रज्ञपुरुषकासाधनसोविपरीत कहेउलटोरीतिसेकहतेहैं किअवशीकृतइन्द्रियमनुष्यकेशास्त्रऔआचार्यकेउ पदेशसेआत्मज्ञानहोनेकेयोग्यबुद्धिउत्पन्ननहींहोतीहै तोस्थितप्रज्ञहोनादूरवा तहै इहांभावनाकाअर्थध्यानहैसोध्यानकेद्वाराबुद्धिआत्मामेप्रतिष्ठितकहेस्थित होतीहैपरन्तुजोइन्द्रियगणवशनकरिसकेउसकोयहध्यानकहांहै इसीसेवहआ त्माकेध्यानकाअनधिकारीहैतौफिरिउसकोशान्तिनहींहोतीअर्थातआत्मामेंचित्त युक्तनहीं होताऔरअशान्तपुरुषकोसुखकहेपरमआनन्दकहांसेहोसकेगा ६६

इन्द्रियाणांहिचरतांयन्मनोऽनुविधीयते तदस्यहरतिप्रज्ञांवायुर्नावमिवाम्भसि ६७

## शाङ्करभाष्यं

अयुक्तस्यकस्माद्बुद्धिर्नास्तीत्युच्यतेइन्द्रियाणामिति इन्द्रियाणांहियस्मात्च रतांस्वविषयेषुप्रवर्त्तमानानां यन्मनोनुविधीयतेअनुप्रवर्त्ततेतदिन्द्रियविषयविक ल्पनेनप्रवृत्तंमनोऽस्ययतेर्हरतिप्रज्ञामात्मानात्मविवेकजांनाशयतिकथंवायुर्नावमि वाम्भस्युदकेजिगमिषतां मार्गादुद्धृत्योन्मार्गेयथावायुर्नावंप्रवर्त्तयत्येवमात्मविषयांप्र ज्ञांहृत्वामनोविषयांकल्पनांकरोति ६७

## आनन्दगिरिकृतटीका।

विषयोपभोगद्वारासुखमुपलब्धमित्याशंक्याहदुःखमेवेति तत्रापिहिशब्दोनुभवा वद्योतितदेवस्पष्टयतिनेत्यादिना ६६

आकाङ्क्षाद्वारा श्लोकात्तरमुत्थापयतिअयुक्तस्येति विक्षिप्तचेतसोभावना भावेसाक्षात्कारलक्षणाबुद्धिर्नभवतीतिहेत्वन्तरेणसाधयतिइन्द्रियाणामिति यत्त दोपात्तंमनस्तत्पदेनापिगृह्यतेइन्द्रियाणांश्रोतादीनांविषयाः शब्दादयस्तेषांविक ल्पनंमिथोविभज्यग्रहणंतेनेतियावत् दृष्टान्तंव्याकरोतिउदकइति यस्मात्तस्मा दयुक्तस्यनोत्पद्यतेबुद्धिरितियोजना ६७

## स्वामिकृतटीका।

इन्द्रियनिग्रहस्यस्थितप्रज्ञतासाधनत्वंव्यतिरेकमुखेनोपपादयतिनास्तीति अयुक्तस्यावशीकृतेन्द्रियस्यनास्तिबुद्धिः शास्त्राचार्य्योपदेशाभ्यामात्मविषयाबुद्धिःप्र ज्ञैवनोत्पद्यतेकुतस्तस्याःप्रतिष्ठावार्त्तेत्यत्राहनचेति नचायुक्तस्यभावनाध्यानं भावनयाहिबुद्धेरात्मनिप्रतिष्ठाभवतिसाचायुक्तस्ययतोनास्ति नचासावयतआत्म ध्यानमकुर्वतःशान्तिरात्मनिचित्तोपरमःअशान्तस्यकुतःसुखंमोक्षानन्दःइत्यर्थः ६६

## भाषा अनुवाद।

इन्द्रीवशकियेविनातत्त्वज्ञाननहींहोताइसकाकारणकहतेहैं किअवशीकृतइ न्द्रियविषयाधीनभोगीपुरुषकीइन्द्रियोंकेवीचजबएकइन्द्रीकेसाथमनधावताहैअर्था त्उसकेआधीनहोविषयपरचलातोफिरवहमनपुरुषकीबुद्धिहरिकैउसकोविषय मेंविक्षिप्तकरताहैतबसबइन्द्रीइकट्ठेहोप्रज्ञाकोहरनकरतीहैं तोऔरक्याकहैंफे रिवायुजैसेजलमेंनावकोइधरउधरनचावतीहै तैसेयहमनइन्द्रियोंकेसाथविक्षि प्तहोजहांतहांमारामाराभ्रमताफिरताइसपुरुषकोखराबकरताहै ६७

तस्माद्यस्यमहावाहोनिगृहीतानिसर्व्वशः इन्द्रियाणीन्द्रियार्थेभ्यस्तस्यप्रज्ञाप्रतिष्ठिता ६८

शाङ्करभाष्यं।

यतोह्रीत्युपन्यस्तस्यार्थस्यानेकधोपपत्तिमुक्त्वातञ्चार्थमुपपाद्योपसंहरति तस्मादिति इन्द्रियाणांप्रवृत्तौदोषउपपादितोयस्मात्तस्मात्यतेः यस्ययतेःहेमहावाहो निगृहीतानिसर्व्वशः सर्व्वप्रकारैर्मानसादिभेदैरिन्द्रियाणीन्द्रियार्थेभ्यःशब्दादिभ्यस्तस्यप्रज्ञाप्रतिष्ठिता ६८

आनन्दगिरिकृतटीका।

यततोह्यीत्यादिश्लोकाभ्यामुक्तस्यैवार्थस्यप्रकृतश्लोकाभ्यामपिकथ्यमानत्वादस्तिपुनरुक्तिरित्याशङ्क्यपरिहरति यततोह्यीत्यादिना ध्यायतोविषयानित्यादीनामुपपत्तिवचनमुन्नेयं तच्छब्दापेक्षितार्थोक्तिद्वाराश्लोकमवतारयति इन्द्रियाणामिति असमाहितेनमनसायस्मादनुविधीयमानानीन्द्रियाणिप्रसह्यप्रज्ञामपहरन्ति तस्मादितियोजना ६८

स्वामिकृतटीका।

नास्तिबुद्धिरयुक्तस्येत्यत्रहेतुमाह इन्द्रियाणामिति इन्द्रियाणामवशीकृतानांस्वैरंविषयेषुचरतांमध्येयदेवैकमिन्द्रियं मनोऽनुविधीयतेऽवशीकृतंसदिन्द्रियेणसहगच्छतितदेवैकमिन्द्रियमस्यमनसः पुरुषस्यवाप्रज्ञांहरतिविषयविक्षिप्तांकरोतिकिमुवक्तव्यंबहूनिप्रज्ञांहरन्तीति यथाप्रमत्तस्यकर्णधारस्यनावंवायुःसमुद्रेसर्व्वतःपरिभ्रामयतितद्वदिति ६७ इन्द्रियसंयमस्यस्थितप्रज्ञत्वेसाधनत्वंलक्षणत्वञ्चोक्तमुपसंहरति तस्मादिति साधनत्वोपसंहारेतस्यप्रज्ञाप्रतिष्ठिताभवतीत्यर्थः लक्षणत्वोपसंहारेतस्यप्रज्ञाप्रतिष्ठिताज्ञातव्येत्यर्थः महावाहइतिसम्बोधयन्वैरिनिग्रहेसमर्थस्यतवात्रापिसामर्थ्यंभवेदितिसूचयति ६८

भाषाअनुवाद

इन्द्रियोंकासंयमकरना स्थिरप्रज्ञपुरुषकासाधनऔयहीउसकालक्षणहै यहजोपूर्व्वकहिचुकेसोईअवफेरिकहतेहैं किहेमहावहोअर्जुन जोइनसवइन्द्रियोंकोविषयोंसेशान्तराखिसकैउसकीप्रज्ञाप्रतिष्ठितहोतीहै महावाहुसम्बोधनसे यहजानायाकितुमवैरियोंकेनिग्रहकरनेमेसमर्थहो इससेअवश्यइन्द्रियोंकोवशकरिसकोगे येइन्द्रीपुरुषकीपरमशत्रुहैं इनकोजयकरनेविनावड़ीहानिहैयहइसकाभावार्थहै इससेतुमइन्द्रियगणअपनेवशकरो ६८

यानिशासर्व्वभूतानांतस्यांजागर्त्तिसंयमी यस्यांजाग्रतिभूतानिसानिशापश्यतोमुनेः ६९

## शाङ्करभाष्यं

योयंलौकिकोवैदिकश्चव्यवहारःसमुत्पन्नविवेकज्ञानस्यस्थितप्रज्ञस्याविद्याकार्यत्वादविद्यानिवृत्तौ निवर्त्ततेऽविद्यायाश्चविद्याविरोधान्निवृत्तिरित्येतमर्थंस्फुटीकुर्व्वन्नाह यानिशेति यानिशारात्रिःसर्व्वपदार्थानामविवेककरीतमःस्वभावत्वात् निशासर्व्वेषांभूतानांसर्व्वभूतानांकिंतत्परमार्थतत्त्वं स्थितप्रज्ञस्यविषयोयथानक्तञ्चराणामहरेवसदन्येषांनिशाभवति तद्वन्नक्तञ्चरस्थानीयानामज्ञानिनांसर्व्वभूतानांनिशेवनिशापरमार्थतत्त्वागोचरत्वादतद्बुद्धीनांतस्यांपरमार्थतत्त्वलक्षणायां अज्ञाननिद्रायांप्रबुद्धोजागर्त्तिसंयमीसंयमवान् जितेन्द्रियोयोगीत्यर्थः यस्यांग्राह्यग्राहकभे

## भाषाअनुवाद ।

जोसन्देहकरोकिनिद्रागतकहेसोयेमनुष्यकेसमानदेखनासुननाबोलनाचलना याप्रसकरनाआदिइन्द्रियोंकेव्यापारसेरहितकहेइन्द्री जततोकोईभीमुक्तपुरुषसंसारमेंनहींदेखपड़ताहै तोस्थितप्रज्ञकालक्षणजोकहासोअसम्भव अर्थातकोईभीस्थिरबुद्धिनहींहैं इसपरश्रीभगवानकहतेहैं किअज्ञानरूपअन्धकारसेआवृत्तकहेघेरेसकलमनुष्योंकोआत्मनिष्ठाकहे आत्मज्ञानतत्त्वज्ञानरूपविषयमेंदर्शनआदिकोईव्यापारनरहनेसेजन्तुवोंको जोनिशाकहेरात्रिअर्थातदर्शनादिव्यापारशून्यअवस्थातद्रूपआत्मनिष्ठाकहेतत्त्वज्ञानअवस्थारात्रिहै जिसमेंविषयीविचारोंकोकुछनहींसूझताजोयेजड़येपुरुषकेसमानशिथिलपड़ेहैं कोईइन्द्रीभीकुछकामनहींहैयहीआत्मनिष्ठारूपनिशासवजीवोंकोजानोइससेसंयमीकहेइन्द्रीजितजागतेहैं अर्थातत्त्वज्ञानकाअनुभवकरतेओस्वस्वरूपकोदेखतेआनन्दपावतेहैं औरजोविषयनिष्ठाकहेविषयोंकाज्ञानजिसमेंसर्वप्राणीजागतेअर्थातविषयीजनविषयोंमेंबोधयुक्तहोदर्शनादिव्यापारकरते स्वप्नकीऐसीसंपतमेंमगनहैं सोईमुनिजोतत्त्वज्ञानीहैं उनकोरात्रितुल्यहैं अर्थातइसत्रिगुणमोहरूपरातिमेंउनकोकुछनहींसूझतासोयेनरकेसमानअचेतहैं अर्थातब्रह्ममेंदृष्टिहैओविषयदेखतेनहींसोईकहाकिजोनिशासवभूतकहेप्राणियोंकीहै उसमेंमुनिजनजागते औजोज्ञानियोंकीरातिउससेप्राणीसवजागतेहैं जैसेउल्लुआपक्षीऔचमगादुरछुछुन्दरआदिजीवऔरजीवोंकीरातिऔउनकादिनहै अपनासवव्यापारकरतेखुसीसेरातभरघूमतेतैसेहीजानो ६९

## शाङ्करभाष्यं

दलक्षणायामविद्यानिद्रायांप्रसुप्तान्येवभूतानिजाग्रतीत्युच्यते यस्यां निशायांप्रसुप्ता
इवस्वप्नदृशःसानिशाऽविद्यारूपत्वात्परमार्थतत्त्वंपश्यतोमुनेःअतःकर्माण्यविद्याव
स्थायामेवचोद्यन्तेनविद्यावस्थायांविद्यायांहिसत्यामुदितेसवितरिशार्वरमिवतमः
प्रणाशमुपगच्छत्यविद्याप्राग्विद्योत्पत्तेरविद्याप्रमाणबुद्ध्यागृह्यमाणाक्रियाकारकफ
लभेदरूपासतीसर्वकर्महेतुत्वंप्रतिपद्यते नाप्रमाणबुद्ध्यागृह्यमाणायाःकर्महेतुत्वो
पपत्तिःप्रमाणभूतेनवेदेनममचोदितंकर्त्तव्यंकर्मेतिहिकर्मणिकर्त्ताप्रवर्त्ततेनाविद्या
मात्रमिदंसर्वंनिशेवेतियस्यतुपुनर्निशेवाविद्यामात्रमिदंसर्वं भेदजातमितिज्ञानं
तस्यात्मज्ञस्यसर्वकर्मसंन्यासएवाधिकारोनप्रवृत्तौतथाचदर्शयिष्यति तद्बुद्धयस्तदा
त्मानइत्यादिनाज्ञाननिष्ठायामेवतस्याधिकारः तत्रापिप्रवर्त्तकप्रमाणाभावेप्रवृत्तेर
नुपपत्तिरितिचेत्न स्वात्मविषयत्वादात्मविज्ञानस्य नह्यात्मनःस्वात्मनिप्रवर्त्तकप्रमा
णापेक्षता आत्मत्वादेवतदन्तत्वाच्चसर्वप्रमाणानांप्रमाणत्वस्य नह्यात्मस्वरूपाधिग
मेसतिपुनःप्रमाणप्रमेयव्यवहारःसम्भवति प्रमातृत्वंह्यात्मनोनिवर्त्तयत्यन्त्यंप्रमाणं
निवर्त्तयदेवचाप्रमाणीभवति स्वप्नकालप्रमाणमिवप्रबोधेलोकेचवस्त्वधिगमेप्रवृ
त्तिहेत्वदर्शनात्प्रमाणस्यतस्मान्नात्मविदःकर्मण्यधिकारइतिसिद्धं ६९

## आनन्दगिरिकृतटीका ।

आत्मविदःस्थितप्रज्ञस्यसर्वकर्मपरित्यागेऽधिकारस्ततोविपरीतस्याज्ञस्यकर्मणी
त्येतस्मिन्नर्थेसमनन्तरश्लोकमवतारयति योऽयमिति अविद्यानिवृत्तौसर्वकर्मनिवृ
त्तिश्चेत्तन्निवृत्तिरेवकथमित्याशङ्क्याह अविद्यायाञ्चेति स्फुटीकुर्वन्नुवाच बाह्याभ्यन्त
रकरणानांपराक्प्रत्यक्प्रवृत्तिवत्तथाविवेकदर्शनेचमिथोविरुध्यतेपराग्दर्शनस्याना
त्मावरणाविद्याकार्यत्वादात्मदर्शनस्यचतन्निवर्त्तकत्वात्तत आत्मदर्शनार्थमिन्द्रि
याण्यर्थेभ्योनिगृह्णीयादित्याहेतियोजना सर्वप्राणिनांनिशापदार्थाविवेककरीत्य
त्रहेतुमाह तमःस्वभावत्वादिति सर्वप्राणिसाधारणींप्रसिद्धांनिशांदर्शयित्वातामे
वप्रकृतानुगुणत्वेनप्रश्नपूर्वकंविशदयति किंतदित्यादिना स्थितप्रज्ञविषयस्यपर
मार्थतत्त्वस्यप्रकाशैकस्वभावस्यकथमज्ञानंप्रतिनिशात्वमित्याशङ्क्याह यथेति तत्र
हेतुमाह अगोचरत्वादिति अतद्बुद्धीनांपरमार्थतत्त्वातिरिक्तद्वैतप्रपञ्चेप्रवृत्तबुद्धी
नामप्रतिपन्नत्वात्परमार्थतत्त्वंनिशेवाविदुषामित्यर्थः तस्यामित्यादिव्याचष्टेतस्या
मिति निशावदुक्तायामवस्थायांस्थितिमान्योगीतिज्ञानीकथ्यते द्वितीयार्द्धं

## आनन्दगिरिकृतटीका।

विभजतेयस्यामिति प्रसुप्तानांजागरणंविरुद्धमित्याशंक्याह प्रसुप्ताइवेति परमा
र्थतत्त्वमनुभवतोनिवृत्ताविद्यस्यसंन्यासिनोद्वैतावस्थानिशेत्यत्रहेतुमाह अविद्यारूप
त्वादिति परमार्थावस्थानिशेत्यविदुषांविदुषान्तुद्वैतावस्थातथेतिस्थितेफलितमाह
अतइति अविद्यावस्थायामेवक्रियाकारकफलभेदप्रतिभानादित्यर्थं विद्योदयेपितत्प्र
तिभानाविशेषात्पूर्वमिवकर्माणिविधीयेरन्नित्याशंक्याह विद्यायामिति अविद्या
निवृत्तौबाधितानुवृत्त्याविभागमानेपिनास्तिकर्मविधिर्विभागा भिनिवेशाभावादि
त्यर्थः अविद्यावस्थायामेवकर्माणीत्युक्तंव्यक्तीकरोतिप्रागिति विद्योदयात्पूर्वंबाधका
भावादबाधिताविद्याक्रियादिभेदमापाद्यप्रमाणरूपयाबुद्ध्याग्राह्यतांप्राप्यकर्महेतु
र्भवतिक्रियादिभेदाभिमानस्यतद्धेतुत्वादित्यर्थः नविद्यावस्थायामित्युक्तंप्रपञ्चयति ना
प्रमाणेति उत्पन्नायाञ्चविद्यायांअविद्यायाः निवृत्तत्वात्क्रियादिभेदभानमप्रमा
णमिति बुद्धिरुत्पद्यतेतयागृह्यमाणायथोक्तविभागभागिन्यप्यविद्यानकर्महेतुत्वंप्र
तिपद्यतेबाधितत्वेनाभासतयातद्धेतुत्वायोगादित्यर्थः विद्याविद्याविभागेनोक्तमेववि
शेषंविवृणोति प्रमाणभूतेनेति यथोक्तेनवेदेनकामनाजीवनादिमतोममकर्मविहितं
तेनमयातत्कर्त्तव्यमितिमन्वानः सन्कर्मण्यज्ञोधिक्रियतेतंप्रतिसाधनविशेषवादिनो
वेदस्यप्रवर्त्तकत्वादित्यर्थःसर्वमेवेदमविद्यामात्रंद्वैतंनिशेवेतिमन्वानस्तुनप्रवर्त्ततेकर्म
णीतिव्यावर्त्त्यमाह नाविद्येति विदुषोनकर्मण्यधिकारश्चेत्तस्याधिकारस्तर्हिंक्वे
त्याशंक्याह यस्येति तस्यआत्मज्ञस्यफलभूतसंन्यासाधिकारेवाक्यशेषंप्रमाणयति त
थाचेति प्रवर्त्तकंप्रमाणंविधिस्तदभावेकर्मस्विवविदुषोज्ञाननिष्ठायामपिप्रवृत्तेरनु
पपत्तेराश्रयणीयोज्ञानवतोपिविधिरितिशङ्कते तत्रापीति किमात्मज्ञानंविधिमपे
क्षतेकिमात्मा नाद्यः तस्यस्वरूपविषयस्यवथाप्रमाणप्रमेयमुत्पत्तौविध्यनपेक्षत्वादि
त्याह नस्वात्मेति नद्वितीयइत्याह नहीति प्रवर्त्तकप्रमाणशब्दितस्यविधेःसाध्यविषय
त्वादात्मनश्चासाध्यत्वादितिहेतुमाह आत्मत्वादेवेति आत्मतज्ज्ञानयोर्विध्यनपेक्ष
त्वेपिज्ञानिनोमानमेयव्यवहारंप्रतिनियमार्थंविध्यपेक्षास्यादित्याशंक्याह तदन्तत्वाच्चे
ति सर्वेषांप्रमाणानांप्रमाणस्यात्मज्ञानोदयावसानत्वात्तस्मिन्नुत्पन्नेव्यवहारस्य
निरवकाशत्वान्नतत्प्रतिनियमायज्ञानिनोविधिरित्यर्थः उक्तमेवव्यक्तीकरोति नही
ति धर्माधिगमवदात्माधिगमेपिकिमितियथोक्तोव्यवहारोनभवतीत्याशंक्याह प्रमा
तृत्वंहीति तन्निवृत्तौकथमद्वैतज्ञानस्यप्रमाण्यमित्याशंक्याह निवर्त्तयदेवेति निवर्त्तं

आनन्दगिरिकृतटीका।

यदद्वैतज्ञानं स्वयंनिष्टत्तेर्नप्रमाणमित्यत्रदृष्टान्तमाह स्वप्नेति आत्मज्ञानस्यविध्य नपेक्षत्वेहेत्वन्तरमाहलोकेचेति व्यवहारभूमौहिप्रमाणस्यवस्तुनिश्चयफलपर्य्यन्तत्वेसति प्रवर्त्तकविधिसापेक्षत्वानुपलम्भादद्वैतज्ञानमपिप्रमाणत्वान्नविधिमपेक्षतेरज्ज्वादिज्ञानवदित्यर्थः आत्मज्ञानवतस्तन्निष्ठाविधिमन्तरेणज्ञानमाहात्म्येनैवसिद्धत्वात्तंस्यकर्मसंन्यासेधिकारोनकर्मणीत्युपसंहरतितस्मादिति ६९

नन्वसंन्यासिनापिविद्यावतविद्याफलस्यमोक्षस्यलभ्युं शक्यत्वात्किमितिविदुषःसंन्यासोनियम्यतेतत्राहविदुषइति आपातज्ञानवतोविवेकवैराग्यादिविशिष्टस्येषणाभ्यःसर्व्वाभ्योव्युत्थितस्यश्रवणादिद्वारासमुत्पन्नसाक्षात्कारवतोमुख्यस्यसंन्यासिनोमोक्षोनान्यस्यविषयतृष्णापरिभूतस्येत्येतद्दृष्टान्तेनप्रतिपादयितुमिच्छन् रागद्वेषविमुक्तैस्त्वितिश्लोकोक्तमेवार्थंपुनराहेतियोजना अद्भिःसमुद्रस्यसमन्तात् पूर्य्यमाणत्वेदृद्धिह्रासवतीतदीयास्थितिरापतेदित्याशंक्याहअचलेति नहिसमुद्रस्योदकात्मकंप्रतिनियतंरूपंकदाचिद्विवर्द्धते ह्रसतेवातेनतदीयास्थितिरेकरूपैवेत्यर्थः तत्तन्नादेयाश्चेदापःसमुद्रान्तर्गच्छन्तितर्हितस्यविक्रियावत्त्वादप्रतिष्ठास्यादित्याशंक्याहस्वात्मस्थमिति इच्छाविशेषाःविषयाणामसन्निधौविदुषिनिर्व्विकारेप्रविशन्तोपिसन्निधानेतस्मिन् प्रविशन्तोविकारमापादयेयुरित्याशंक्याहविषयेति प्रवेशंविपदयतिसर्व्वइति योऽकामइत्यादिश्रुतेर्व्विषयविमुखस्यनिष्कामस्यमोक्षोनकामकामुकस्येत्याहसशान्तिमिति ७०

स्वामिकृतटीका।

ननुकश्चिदपिप्रसुप्तइवदर्शनादिव्यापारशून्यःसर्व्वात्मनानिगृहीतेन्द्रियोलोकेदृश्यतेअतोऽसम्भावितमिदंलक्षणमित्याशंक्याहयानिशेति सर्व्वेषांभूतानांयानिशानिशेवनिशाआत्मनिष्ठाअज्ञानध्वान्तावृतमतीनांतस्यांदर्शनादिव्यापाराभावात्तस्यामात्मनिष्ठायांसंयमीनिगृहीतेन्द्रियोजागर्त्तिप्रबुध्यते यस्यान्तुविषयनिष्ठायांभूतानिजाग्रतिप्रबुध्यन्तेसाआत्मतत्त्वंपश्यतोमुनेर्निशातस्यांदर्शनादिव्यापारस्तस्यनास्तीत्यर्थः एतदुक्तंभवतियथादिवान्धानामुलूकादीनांरात्रावेवदर्शनंनतुदिवसेएवंब्रह्मज्ञस्योन्मीलिताक्षस्यापिब्रह्मण्येवदृष्टिर्नतुविषयेष्वतोनासम्भावितमिदंलक्षणमिति ६९

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् तद्वत् कामा यं प्रविशन्ति सर्वे सशान्तिमाप्नोति न कामकामी ७०

## शाङ्करभाष्यं

विदुषस्त्यक्तैषणस्यस्थितप्रज्ञस्ययतेरेवमोक्षप्राप्तिर्नत्वसंन्यासिनःकामकामि नइत्येतमर्थंदृष्टान्तेनप्रतिपादयिष्यन्नाह आपूर्य्येति आपूर्यमाणमद्भिरचलप्रति ष्ठंअचलतयाप्रतिष्ठाअवस्थितिर्यस्य तमचलप्रतिष्ठंसमुद्रमापःसर्वतोगताः प्रवि शन्तिस्वात्मस्थमविक्रियमेवसन्तंयद्वत्तद्वत् कामाविषयसन्निधावपिसर्वतइच्छावि शेषायंमुनिंसमुद्रमिवापोऽविकुर्वन्तः प्रविशन्तिसर्वेआत्मन्येवप्रलीयन्तेनस्वात्मव शंकुर्वन्तिसशान्तिंमोक्षंप्राप्नोतिनेतरःकामकामीकाम्यन्तइति कामाःविषयास्ता न्कामयितुंशीलंयस्यसकामकामीनैवप्राप्नोतीत्यर्थः ७०

## आनन्दगिरिकृतटीका।

यदिगृहस्थेनापिमनसासमस्ताभिमानंहित्वाकूटस्थंब्रह्मात्मानंपरिभावयता ब्रह्मनिर्वाणमाप्यतेप्राप्तंतर्हिमौण्ड्यादिविडम्बनमेवेत्याशंक्याहयस्मादिति शब्दा दिविषयप्रवणस्यतत्तदिच्छाभेदभागिनोनमुक्तिरितिव्यतिरेकस्य सिद्धत्वात्पुर्वो क्तमन्वयंनिगमयितुमनन्तरंवाक्यमित्यर्थः अशेषविषयत्यागेजीवनमपिकथमित्या

## स्वामिकृतटीका।

ननुविषयेषुदृष्टप्रभावेकथमसौतान्मुक्तइत्यपेक्षायामाह आपूर्य्यमाणमिति नानानदनदीभिरापूर्यमाणमप्यचलप्रतिष्ठमनतिक्रान्तमर्य्यादमेव समुद्रंपुनरप्य न्याआपोयथाप्रविशन्तितथाकामाविषयाः यंमुनिमन्तर्दृष्टिंभोगैरविक्रियमाणमे वप्रारब्धकर्मभिराक्षिप्ताःसन्तःप्रविशन्तिसशान्तिंकैवल्यंप्राप्नोतिनतुकामकामीभो गकामनाशीलः ७०

## भाषा अनुवाद।

जोकहोकिविषयमेदृष्टिविनाकैसेरिवेज्ञानीविषयभोगकैसेकरतेहैं इसआ शयमेकहतेहैं किजैसेनदनदीनारोंकेजलप्रवाहजोरसेअचलसमुद्रमेजायप्रवे शकरतेपरसमुद्रकोइच्छानहीतैसेहीविषयसबअदृष्टकहेपूर्वकर्मकेअनुसारभोग इच्छाहीनमुनिकेअन्तःकरणमेअदृष्टकेजोरसेकर्मकेद्वाराविषयप्रवेशकरतेपरन्तु तिनकेद्वाराहीअर्थातविषयभोगकरतेभीवेकैवल्यमुक्तिपावतेहैं औरकामकेका मीभोगकामनाशीलकहेविषयस्वभावनहीहोतेहैं ७०

विहाय कामान् यः सर्व्वान् पुमांश्चरति निस्पृहः निर्ममो निरह
ङ्कारः स शान्ति मधिगच्छति ७१

शाङ्करभाष्यं।

यस्मादेवंतस्मात्विहायेति विहायपरित्यज्यकामान्यःसंन्यासीसर्व्वानशेष
तःकार्त्स्न्येनचरतिजीवनमात्रचेष्टाशेषः पर्यटतीत्यर्थःनिस्पृहःशरीरजीवनमात्रे
पिनिर्गतास्पृहायस्यसनिस्पृहःसन्निर्म्ममइतिममत्ववर्जितःशरीरजीवनमात्राच्चि
प्तपरिग्रहेपिममेदमित्यभिनिवेशवर्जितः निरहङ्कारोविद्यावत्त्वादिनिमित्तात्मस
म्भावनारहितइत्यर्थःसएवम्भूतः स्थितप्रज्ञोब्रह्मविच्छान्तिंसर्व्वसंसारदुःखोपरमल
क्षणांनिर्व्वाणाख्यामधिगच्छतिप्राप्नोतिब्रह्मभूतोभवतीत्यर्थः ७१

आनन्दगिरिकृतटीका।

शंक्याह जीवनेति स्वभावद्रागद्वेषादिकेदेशेनिवासव्यावृत्त्यर्थंचरतीत्येतद्व्याचष्टे
पर्य्यटतीति विहायकामानित्यनेनपुनरुक्तिंपरिहरतिशरीरेति निस्पृहत्वमुक्त्वा
निर्ममत्वात्पुनर्वदन्कथंपुनरुक्तिमार्थिकींनपश्यसीत्याशंक्याह शरीरजीवनेति स
त्यहङ्कारेममकारस्यावश्यकत्वान्निरहङ्कारत्वंव्याकरोति विद्यावत्त्वादीति सशा
न्तिमाप्नोतिइत्युक्तमुपसंहरतिसएवम्भूतइति संन्यासिनोमोक्षमपेक्ष्यमाणस्यस
र्व्वकामपरित्यागादीनिश्लोकोक्तानिविशेषणानियत्नसाध्यानितत्सम्पत्तिफलस्तु कैव
ल्यमित्यर्थः ७१

स्वामिकृतटीका।

यस्मादेवंतस्मात्विहायेति प्राप्तान्कामान्विहायत्यक्त्वाउपेक्ष्यअप्राप्तेषुच
निस्पृहःयतोनिरहङ्कारःअतएवतद्भोगसाधनेपुनिर्ममःसन्नन्तर्दृष्टिर्भूत्वा यश्चर
ति प्रारब्धवशेनभोगान्भुङ्क्तेयत्रकुत्रापिगच्छतिवासशान्तिंप्राप्नोति ७१

भाषा अनुवाद।

जबऐसीव्यवस्थाहै तोजोप्राप्तविषयकोत्यागकरतेवाअनादरसेग्रहणक
रतेऔरअप्राप्तमेइच्छारहितकहेकिसीकोअभिलाषनहींरखतेइससेउनकेअह
ङ्कारनहींहै इसोसेभोगअभोगसाधनमेममतातथास्नेहशून्यहोकरआत्मामेदृ
ष्टिराखिअदृष्टवशतेविषयभोगकरतेहैं औरकहींभोजांयपरशान्तिकोप्राप्तहोते
हैं अर्थात्जोसबकामनाछोडिबेपरवाहअहंममताहीनपुरुषभोगकरैंयाकहीं
जांय परशान्तितोपावतेहीहैं ७१

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति। स्थित्वास्याम न्तकालेऽपि ब्रह्मनिर्व्वाण मृच्छति ७२

इति श्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यांभीष्मपर्व्वणिश्रीभग वद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रे श्रीकृष्णार्ज्जुनसंवादेसांख्ययोगोनाम द्वितीयोऽध्यायः ॥ २ ॥

शाङ्करभाष्यं

सैषाज्ञाननिष्ठास्तूयते एषाब्राह्मीति एषायथोक्ताब्राह्मीब्रह्मणिभवेयंस्थितिः सर्व्वकर्मसंन्यस्यब्रह्मरूपेणैवावस्थानमित्येतत् हेपार्थनैनांस्थितिंप्राप्यलब्ध्वाविमुह्य तिनमोहंप्राप्नोतिस्थित्वास्यांस्थितौब्राह्म्यांयथोक्तायामन्तकालेपिअन्तेवयस्यपिब्रह्म निर्व्वाणंब्रह्मनिर्वृतिंमोक्षमृच्छतिकिमुवक्तव्यं ब्रह्मचर्य्यादेवसन्न्यस्ययावज्जीवंयोब्र ह्मण्येवावतिष्ठतेसब्रह्मनिर्व्वाणमृच्छतीति ७२

इति श्रीभगवद्गीताभाष्येद्वितीयोध्यायः॥ २ ॥

आनन्दगिरिकृतटीका।

तत्रतत्रसंक्षेपविस्तराभ्यांप्रदर्शितांज्ञाननिष्ठांअधिकारिप्रवृत्त्यर्थत्वेनस्तोतुमु त्तरश्लोकमवतारयतिसैषेति गृहस्थःसंन्यासीत्युभावपिचेन्मुक्तिभागिनौकिंतर्हि कष्टेनसर्वथैवसंन्यासेनेत्याशंक्य संन्यासिव्यतिरिक्तानामन्तरायसम्भवादपेक्षितःसं न्यासोमुमुक्षोरित्याहएषेति स्थितिमेवव्याचष्टेसर्वमिति नविमुह्यतीतिपुनर्नञो नुकर्षणमन्वयार्थंसंन्यासिनोविमोहाभावेपिगृहस्थोधनहान्यादिनिमित्तंप्रायेणवि मुह्यतिविच्छिन्नःसन्परमार्थविवेकरहितोभवतीत्यर्थः यथोक्ताब्राह्मीस्थितिःसर्व कर्मसंन्यासपूर्विकाब्रह्मनिष्ठातस्यां स्थित्वातामिमामायुषश्चतुर्थेपिभागेक्षित्वेत्यर्थः अपिशब्दसूचितंकैमुतिकन्यायमाह किमुवक्तव्यमिति तदेवंतत्त्वंपदार्थौतदैक्यं वाक्यार्थस्तज्ज्ञानादेकाकिनोमुक्तिस्तदुपायश्चेत्येतेपासेकैकत्रश्लोकेप्राधान्येन प्रद र्शितमितिनिष्ठाद्वयमुपायोपेयभूतमध्यायेनसिद्धं ७२

इति आनन्दगिरिकृतटीकायां द्वितीयोध्यायः ॥२॥

स्वामिकृतटीका।

उक्तांज्ञाननिष्ठांस्तुवन्नुपसंहरतिएषेति ब्राह्मीस्थितिर्ब्रह्मज्ञानेनिष्ठाएषा एवम्विधाएनांपरमेश्वराराधनेनविशुद्धान्तःकरणः पुमान्प्राप्यनमुह्यतिपुनःसंसा रमोहंनप्राप्नोति यतोऽन्तकालेमृत्युसमयेऽपिअस्यांक्षणमात्रंस्थित्वाब्रह्मनिर्व्वाण

स्वामिकृतटीका।

अप्युपैति लयमृच्छति प्राप्नोति किंपुनर्वक्तव्यं बाल्यमारभ्य स्थित्वा प्राप्नोतीति। शोकपङ्कनिमग्नं यः सांख्ययोगोपदेशतः उज्जहारार्जुनं भक्तं सकृष्णः शरणं मम ७२

इति श्रीधरस्वामिकृतटीकायां द्वितीयोध्यायः॥ २॥

भाषा अनुवाद।

पूर्व्वकहीहुई ज्ञाननिष्ठाकी प्रसंसाकरिकेकहते हैं कि हे अर्जुनउक्तब्रह्मज्ञानकीनिष्ठाऐसीहै इससे भगवतके आराधनसे शुद्धचित्तपुरुषयह ब्रह्मज्ञाननिष्ठापायकरि औरसंसारसागरमें मूढ़नहींहोता देखोमरतीवारभी एकक्षणभरजो ब्रह्मज्ञाननिष्ठामें मनस्थिरकरते वे ब्रह्ममें लीनहोतेहैं तोबालपनसे या बहुतदिनोंसे इस ब्रह्मज्ञाननिष्ठाको अभ्याससे इसमें मनस्थिरकरि अन्तमें मुक्तिमिलैगी इसमें फिरिकुछ सन्देहवाकीहै सोहे पार्थ यहब्राह्मीस्थिति है इसको प्राप्तहोकेफेरिमोहनहीं पाते अन्तकालमेंभी इसमें क्षणभरमनथिरकरिके मनुष्यनिश्चयब्रह्मनिर्वाणपदपावतेहैं ७२

इति श्रीभगवद्गीतायाः पण्डितजगन्नाथसुक्लविरचितायांमनभावनीटीकायां श्रीकृष्णार्जुनसंवादे सांख्ययोगोनामद्वितीयोऽध्यायः २ सम्वत् १९२६

## श्रीमद्भगवद्गीता

### तृतीयोध्यायः

अर्जुन उवाच ज्यायसी चेत कर्मणस्ते मता बुद्धिर्जनार्दन तत
किं कर्मणि घोरे मां नियोजयसि केशव १

### शाङ्करभाष्यं

शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे सांख्ये बुद्धिर्योगे बुद्धिश्च
तत्र प्रकृ [illegible] सांख्यबुद्ध्याश्रितानां संन्यासक

### भाषा अनुवाद।

गीताशास्त्रमेंप्रथमप्रवृत्तिऔनिवृत्तिकीहेतुरूपसांख्यतथायोगयेदोप्रकारकीबुद्धिदेखावतेहुयेश्रीजगदीश्वरनेअशोच्यानन्वशोचस्त्वं इत्यादिश्लोकसेयहिलेमुक्तिसाधनकेविषयमे देहऔआत्माकाभेदकहा तिसकेअनन्तरएषातेऽभिहितासांख्येइत्यादिश्लोककेद्वारानिष्कामकर्मकरनेकोकहा परन्तुतिसमेंकौनप्रधानमुख्यकहेश्रेष्ठऔकौनगौणकहेसाधारणहै यहकुछभावकहेभगवतकोअभिप्रायजानीनहींगई औरतिसकेबीचमेज्ञानीपुरुषकोकर्मरहितहोना तथाइन्द्रीवशकरनाऔनिरहङ्काररहनाकहिकर एषाब्राह्मीस्थितिःपार्थइसश्लोकसेप्रसंसापूर्वकभगवतकीकहावतसेतत्वज्ञानऔनिष्कामकर्मयोगरूपभक्तियोग इनदोनोकेमध्यज्ञानहीकीश्रेष्ठताभगवानकोअभिमतहै यहजानिकरअर्जुनकहतेहैं किहेकेशवजोनिष्कामकर्मयोगरूपभक्तियोगकीअपेक्षाशीघ्रमुक्तिकादेनहारतत्वज्ञानहीश्रेष्ठआपकोअभिमतहै तोफेरिकिसवास्ते तस्माद्युध्यस्वतस्मादुत्तिष्ठयेवातेंकहिकहिकरहेजनार्दनघोरहिंसारूपकर्ममेंहमैंप्रवृत्तकरतेहौ जनार्दनसंबोधनदेनेसेयहआशयकिजनकहेभक्तजनजोमैतिसकोअर्दनकहेपीड़ादेनेवालेकाहेहोतेहौ यहअर्जुनकातात्पर्य्यहै सोईपूछतेहैं किज्यायसीचेत्कर्मणस्तेमताबुद्धिरिति १

## शाङ्करभाष्यं

र्त्तव्यतामुक्त्वा, तेषां तन्निष्ठतयैव च कृतार्थतोक्ता एषा ब्राह्मी स्थितिरित्यर्जुनाय च कर्मण्येवाधिकारस्ते मा ते सङ्गोऽस्त्वकर्मणीति कर्मैव कर्त्तव्यमुक्तवान् योगबुद्धिमाश्रित्य न तत एव श्रेयःप्राप्तिमुक्तवान् तदेतदालक्ष्य पर्याकुलीभूतबुद्धिरर्जुन उवाच कथं भक्ताय श्रेयोऽर्थिने यत्साक्षात् श्रेयःप्राप्तिसाधनं सांख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टानेकानर्थयुक्ते पारम्पर्येणाप्यनैकान्तिकश्रेयःप्राप्तिफले नियुञ्ज्यादिति युक्तः पर्याकुलीभावोऽर्जुनस्य तदनुरूपश्च प्रश्नो ज्यायसी चेदित्यादिः प्रश्नापाकरणवाक्यञ्च भगवतो युक्तं यथोक्तविभागविषये शास्त्रे केचित्त्वर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत्प्रतिकूलं भगवतः प्रतिवचनं वर्णयन्ति यथा चात्मना सम्बन्धग्रन्थे गीतार्थो निरूपितः तत्प्रतिकूलञ्चेह पुनः प्रश्नप्रतिवचनयोरर्थं निरूपयन्ति कथं तत्र सम्बन्धग्रन्थे तावत् सर्वेषामाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निरूपितोऽर्थ इत्युक्तं पुनर्विशेषितञ्च यावज्जीवश्रुतिचोदितानि कर्माणि परित्यज्य केवलादेव ज्ञानान्मोक्षः प्राप्यत इत्येतदेकान्तेनैव प्रतिषिद्धमिति इह त्वाश्रमविकल्पं दर्शयता यावज्जीवश्रुतिचोदितानामेव कर्मणां परित्याग उक्तः तत्कथमीदृशं विरुद्धमर्थमर्जुनाय ब्रूयाद्भगवान् श्रोता वा कथं विरुद्धमर्थमवधारयेत् तत्रैतत् स्यात् गृहस्थानामेव श्रौतकर्मपरित्यागेन केवलादेव ज्ञानान्मोक्षः प्रतिषिध्यते न त्वाश्रमान्तराणामित्येतदपि पूर्वोत्तरविरुद्धमेव कथं सर्वाश्रमिणां ज्ञानकर्मणोः समुच्चयो गीताशास्त्रे निश्चितोऽर्थ इति प्रतिज्ञाय इह कथं तद्विरुद्धं केवलादेव ज्ञानान्मोक्षं ब्रूयात् आश्रमान्तराणाम् अथ मतं श्रौतकर्मापेक्षयैतद्वचनं केवलादेव ज्ञानात् श्रौतकर्मरहितात् गृहस्थानां मोक्षः प्रतिषिध्यत इति तत्र गृहस्थानां विद्यमानमपि स्मार्त्तं कर्माविद्यमानवदुपेक्ष्य ज्ञानादेव केवलादित्युच्यत इत्येतदपि विरुद्धं कथं गृहस्थस्यैव स्मार्त्तकर्मणा समुच्चितात् ज्ञानान्मोक्षः प्रतिषिध्यते न त्वाश्रमान्तराणामिति कथं विवेकिभिः शक्यमवधारयितुं किञ्च यदि मोक्षसाधनत्वेन स्मार्त्तानि कर्माण्यूर्द्ध्वरेतसां समुच्चीयन्ते तथा गृहस्थस्यापीष्यतां स्मार्त्तैरेव समुच्चयो न श्रौतैः अथ श्रौतैः स्मार्त्तैश्च गृहस्थस्यैव समुच्चयो मोक्षायोर्द्ध्वरेतसां तु स्मार्त्तकर्ममात्रसमुच्चितात् ज्ञानान्मोक्ष इति तत्रैवं सति गृहस्थस्यायासबाहुल्यात् श्रौतं स्मार्त्तञ्च बहुदुःखरूपं कर्म शिरस्यारोपितं स्यात् अथ गृहस्थस्यैवायासबाहुल्यात् तत्कारणान्मोक्षः स्यान्नाश्रमान्तराणां श्रौतनित्यकर्मरहितत्वादिति तदप्यसत् सर्वोपनिषदितिहासपुराणयोगशास्त्रेषु ज्ञानाङ्गत्वेन मुमुक्षोः सर्वकर्मसंन्यासविधानादाश्रमविकल्पसमुच्चयविधा

## शाङ्करभाष्यम् ।

नाच श्रुतिस्मृत्योःसिद्धस्तर्हिसर्व्वाश्रमिणांज्ञानकर्मणोःसमुच्चयोनमुमुक्षोःसर्व्वकर्म
संन्यासविधानात्पुत्रैषणायावित्तैषणायाश्चलोकैषणायाश्च व्युत्थायाथभिक्षाचर्यंच
रन्तितस्मात्संन्यासमेषांतपसामतिरिक्तमाहुःन्यासएवात्यरेचयदितिनकर्मणा
नप्रजयाधनेनत्यागेनैकेऽमृतत्वमानशुरितिचब्रह्मचर्यादेवप्रव्रजेदित्याद्याः श्रुतयः
त्यजधर्ममधर्मञ्चउभेसत्यानृतेत्यजयेनत्यजसितंत्यजसंसारमेवनिःसारंदृष्ट्वासारदि
दृक्षया प्रव्रजन्त्यकृतोद्वाहाःपरंवैराग्यमाश्रिता इतिवृहस्पतिः परमात्मनियोर
क्तोऽपरमात्मनिसर्व्वैषणाविनिर्मुक्तः सभैक्ष्यंभोक्तुमर्हतिकर्मणावध्यतेजन्तुर्विद्यया
चविमुच्यते तस्मात्कर्मनकुर्वन्तियतयःपारदर्शिनइतिशुकानुशासनं इहापिच
सर्व्वकर्माणिमनसासंन्यस्येत्यादिमोक्षस्यचाकार्यत्वान्मुमुक्षोः कर्मानर्थक्यंनित्यानि
प्रत्यवायपरिहारार्थानीतिचेत् नासंन्यासिविषयत्वात्प्रत्यवायप्राप्तेर्नह्यग्निकार्य्या
द्यकरणात्संन्यासिनःप्रत्यवायःकल्पयितुंशक्योयथाब्रह्मचारिणां असंन्यासिनाम
पिनतावन्नित्यानांकर्मणामभावादेवभावरूपस्यप्रत्यवायस्योत्पत्तिः कल्पयितुंशक्या
कथमसतःसज्जायेतेत्यसतःसज्जन्मासंभवश्रुतेः यदिविहिताकरणादसम्भाव्यम
पिप्रत्यवायंब्रूयाद्वेदस्तदानर्थकरोवेदोऽप्रमाणमित्युक्तं स्यात्विहितस्यकरणयोःदुः
खमात्रफलत्वात् तथाचकारकंशास्त्रंनज्ञापकमित्यनुपपन्नार्थंकल्पितंस्यान्नचैतदि
ष्टंतस्मान्नसंन्यासिनांकर्माण्यतोज्ञानकर्मणोःसमुच्चयानुपपत्तिःज्यायसीचेत् कर्म
णस्तेमताबुद्धिरित्यर्जुनस्य प्रश्नानुपपत्तेश्चयदिहिभगवताद्वितीयेऽध्यायेज्ञानंकर्मचस
मुच्चयेनत्वयाऽनुष्ठेयमित्युक्तंस्यात् ततोऽर्जुनस्यप्रश्नोऽनुपपन्नोज्यायसीचेत्कर्म
णस्तेमताबुद्धिरित्यर्जुनायचेत्बुद्धिकर्मणीत्वयानुष्ठेयेइत्युक्तेयाचकर्मणोज्यायसीबुद्धिः
साप्युक्तैवेतितत्किंकर्मणिघोरे मांनियोजयसिकेशवेतिउपालम्भोवाप्रश्नोवानकथ
ञ्चनोपपद्यतेनचार्जुनस्यैवज्यायसीबुद्धिर्नानुष्ठेयेतिभगवतोक्तं पूर्व्वमितिकल्पयितुं
युक्तंयेनज्यायसीचेदितिविवेकतःप्रश्नः स्यात्यदिपुनरेकस्यपुरुषस्यज्ञानकर्मणो
र्व्विरोधात्युगपदनुष्ठानंनसम्भवतीतिभिन्नपुरुषानुष्ठेयत्वंभगवतापुर्व्वमुक्तंस्यात् त
तोऽयंप्रश्नउपपन्नोज्यायसीचेदित्यादिरविवेकतःप्रश्नकल्पनायामपिभिन्नपुरुषानु
ष्ठेयत्वेनभगवतःप्रतिवचनंनोपपद्यतेनचाज्ञाननिमित्तंभगवत्प्रतिवचनं कल्पनीयंअ
स्माच्चभिन्नपुरुषानुष्ठेयत्वेनज्ञानकर्मनिष्ठयोर्भगवतःप्रतिवचनदर्शनात् ज्ञानकर्म
णोःसमुच्चयानुपपत्तिः तस्मात्केवलादेवज्ञानान्मोक्षइत्येषोऽर्थोनिश्चितोगीतासु

## शाङ्करभाष्यं।

सर्व्वोपनिषत्सु च ज्ञानकर्म्मणोरेकं वदन्निश्चित्यैतच्चैकविषयैव प्रार्थनानुपपन्नोभयोः समुच्चयसम्भवे कुरु कर्म्मैव तस्मात्त्वमिति चज्ञाननिष्ठासम्भवमर्ज्जुनस्यावधारणेनदर्शयिष्यति ज्यायसीचेदिति ज्यायसी श्रेयसी चेद् यदि कर्म्मणः सकाशात्ते तव मता अभिप्रेता बुद्धिर्ज्ञानं हे जनार्द्दन यदि बुद्धिकर्म्मणी समुच्चिते इष्टे तदैकं श्रेयःसाधनमिति कर्म्मणो ज्यायसी बुद्धिरिति कर्म्मणोतिरिक्तांकरणं बुद्धेरनुपपन्नं अर्ज्जुनेन कृतं स्यान्नहि तदेव तस्मात् फलतोतिरिक्तं स्यात् तथा च कर्म्मणः श्रेयस्करी भगवतोक्ता बुद्धिरश्रेयस्करञ्च कर्म्म कुर्व्विति मां प्रतिपादयतीति तत् किन्नुकारणमिति भगवत उपालम्भमिव कुर्व्वन् तत् किंकस्मात् कर्म्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशवेति च यदाह तच्च नोपपद्यते १

## आनन्दगिरिकृतटीका।

पूर्व्वोत्तराध्याययोः सम्बन्धं पूर्व्वस्मिन्नध्याये वृत्तमर्थं संक्षिप्यानुवदति शास्त्रस्येति गीताशास्त्रप्रारम्भामेलितं हेतुफलभूतं बुद्धिद्वयं भगवतोपदिष्टमित्यर्थः प्रष्टुरर्ज्जुनस्याभिप्रायं निर्द्दिष्ट वृत्तमर्थान्तरं कथयति तत्रेति अध्याययोर्व्बुद्धियनिर्भीरणंवास म्बन्धः पारमार्थिकतत्त्वेतज्ज्ञानं तन्निष्ठानामशेषकामत्यागिनां कामम्लानांकर्म्मणामप्रिप्रतिपत्तिकर्म्म वत्तत्रागं कर्त्तव्यत्वेनभगवानुक्तवानित्यर्थः तथापि मोक्षसाधनेविकल्पसमुच्चययोरन्यतरस्यविवक्षितत्वबुद्ध्या समनन्तरप्रश्नप्रवृत्तिरित्याशंक्याह उक्तेति अर्ज्जुनस्य मनसि व्याकुलत्वं प्रश्नवीजं दर्शयितुमुक्तमर्थान्तरमनुभाषते अर्ज्जुनायचेति सांख्यबुद्धिमाश्रित्य कर्म्मत्यागमुक्त्वापुनस्तस्यैवकर्त्तव्यत्वं कथंमिथोविरुद्धं ब्रवीतीत्याशंक्याह योगेति यथा सांख्यबुद्धिमाश्रितानां सन्यासद्वारा तन्निष्ठानां कृतार्थतोक्ता तथा योगबुद्धिमाश्रित्य कर्म्म कुर्व्वतोपि कृतार्थत्वमुक्तमित्याशंक्याह नतत एवेति दूरेणह्यवरं कर्म्म बुद्धियोगादिति दर्शनादितिशेषः बुद्धिव्याकुलत्वं प्रश्नवीजं प्रतिलभ्य प्रश्नं करोतीत्याह तदेतदिति साक्षादेव श्रेयःसाधनं ज्ञानमन्येभ्यो दर्शितं तदित्युच्यते तद्विपरीतं कर्म्म स्वस्यानुष्ठेयत्वेनोक्तमेतदिति निर्द्दिश्यते भगवदुक्तेर्थे संदिह्यमानस्य निर्णयाकाङ्क्षया प्रश्नप्रवृत्तेरस्ति पुर्व्वोत्तराध्याययोरध्यायोत्थापकलक्षणासङ्गतिरित्यर्थः अर्ज्जुनस्य प्रश्ननिमित्तं पर्य्याकुलत्वं प्रश्नपूर्व्वकं प्रपञ्चयति कथमित्यादिना यद्धि साक्षादेव श्रेयःसाधनं सांख्यशब्दितं परमार्थतत्त्वविषयबुद्धौ निष्ठारूपं तदन्यस्मै श्रेयोर्थिने भक्ताय श्रावयित्वा मां पुनरभक्तमश्रेयोर्थिनमिव कर्म्मणि मु

## आनन्दगिरिकृतटीका।

व्योक्तविपरीते कथं भगवान्नियोक्तुमर्हति इत्यर्जुनस्य पर्याकुलीभावो युक्त इति सम्बन्धः ज्ञाननिष्ठातो वैपरीत्यं स्फोरयितुं कर्म विशिनष्टि दृष्टेति युद्धे हि चलकर्मणि दृष्टो नैकोऽनर्थो गुरुभ्रात्रादिहिंसादिस्तेन सम्बन्धेन बुद्धिशुद्धिद्वारापि वर्त्तमाने जन्मन्येव फलमित्यनियतेमम भक्तस्य श्रेयोऽर्थिनो नियोगो भगवता युक्तो न भवतीति शेषः यथोक्तं निमित्तं प्रश्नस्य युक्तं तदनुगुणत्वात्तस्येति द्योतकमाह तदनुरूपश्चेति ज्ञाननिष्ठानां कृतार्थता कर्मनिष्ठानान्तु न तथेत्युक्तो विभागभागी शास्त्रमित्यत्र लोकेऽस्मिन्नित्यादि वाक्यस्यापि द्योतकत्वं दर्शयति प्रश्नेति साक्षादेव श्रेयःसाधनमन्येभ्यो भगवतोक्तं न तु मह्यमिति मत्वा व्याकुलीभूतः सन् पृच्छतीति स्वाभिप्रायेण सम्बन्धमुक्त्वा वृत्तिकाराभिप्रायं दूषयति केचित्त्विति ज्ञानकर्मणोः समुच्चयमवधारयितुं प्रश्नाङ्गीकारे समुच्चयावधारणेनैव प्रतिवचनमुचितं न तथा भगवता प्रतिवचनमुक्तं तथा च प्रश्नस्य समुच्चयविषयत्वावगमात् प्रत्युक्तेश्चासमुच्चयविषयत्वात्तयोर्मिथो विरोधो वृत्तिकारमते स्यादित्यर्थः किञ्च केवलं प्रश्नप्रतिवचनयोरेव परमते परस्परविरोधो न भवत्यपि तु परेषां स्वग्रन्थेऽपि पूर्व्वापरविरोधोऽस्तीत्याह यथा चेति आत्मना वृत्तिकारैरिति यावत् सम्बन्धग्रन्थो गीताशास्त्रारम्भोपोद्घातः इहेति तृतीयाध्यायारम्भं परामृशति तदेवं विरुद्धत्वन्नाकाङ्क्षामाह कथमिति पूर्व्वापरविरोधं स्फोरयितुं सम्बन्धग्रन्थोक्तमर्थमनुवदति तत्रेति परकीया वृत्तिः सप्तम्यासमुल्लिख्यते सम्बन्धग्रन्थे तावदयमर्थ उक्त इति सम्बन्धः तमेवार्थं विशदयति सर्व्वेषामिति सर्व्वकर्मसंन्यासपूर्व्वकज्ञानादेव केवलात् कैवल्यमित्यस्मिन्नर्थे शास्त्रस्य पर्य्यवसानान्न समुच्चयो विवक्षितस्तत्रेत्याशङ्क्याह पुनरिति उक्तो गीतार्थो वृत्तिकारैरेव कर्मत्यागायोगेन विशेषितत्वान्नाविवक्षितो भवितुमुत्सहते तथा च श्रौतानि कर्माणि त्यक्त्वा ज्ञानादेव केवलान्मुक्तिर्भवतीत्येतन्मतं नियमेनैव यावज्जीवश्रुतिभिर्व्विप्रतिषिद्धत्वान्नाभ्युपगन्तुमुचितमित्यर्थः तथापि कथं मिथो विरोधधीरित्याशङ्क्याह इह त्विति प्रथमतो हि सम्बन्धग्रन्थे समुच्चयो गीतार्थः प्रतिपाद्यत्वेन वृत्तिकृता प्रतिज्ञातः श्रौतकर्मपरित्यागश्च श्रुतिविरोधादेव न सम्भवतीत्युक्तं तृतीयाध्यायारम्भे पुनः संन्यासिनां ज्ञाननिष्ठा कर्मिणां कर्मनिष्ठेत्याश्रमविभागमभिदधता पूर्व्वं प्रतिषिद्धकर्मत्यागाभ्युपगमान्मिथो विरोधो दर्शितः स्यादित्यर्थः ननु यथा भगवता प्रतिपादितं तथैव वृत्तिकृता व्याख्यातमिति न तस्याप[illegible]शङ्क्याह तत्कथमिति नहि इह भगवान् विरुद्धमर्थमभिवक्तुं सर्व्वज्ञस्य

## आनन्दगिरिकृतटीका।

परमार्थस्य विरुद्धार्थवादित्वायोगात् किन्तु तदभिप्रायापरिज्ञानादेव व्याख्यातुर्विरुद्धार्थवादित्वेत्यर्थः। भगवतो विरुद्धार्थवादित्वाभावेपि श्रोतुर्विरुद्धार्थप्रतिपत्तिं प्रतीत्य व्याचक्षाणोवृत्तिकारोनापराध्यतीत्याशंक्याह श्रुतावेति अर्जुनोहि श्रोता सोपिबुद्धिपूर्वकारी भगवदुक्तमेवावधारयन्नविरुद्धमर्थमवधारयितुमर्हति तथाच परस्यैवविरुद्धार्थवादितेत्यर्थः विरोधंपरिहरन्नाशङ्कते तत्रेति सम्बन्धग्रन्थे हिवृत्तिकारस्यैतदभिप्रेतंगृहस्थानामेवसतां परिपक्वज्ञानमन्तरेणयावज्जीवश्रुतिचोदिताग्निहोत्रादित्यागेन केवलादेवापातिकादात्मज्ञानान्मोक्षमवेक्षमाणानां यावज्जीवादिशास्त्रैरसौनिषिध्यते नतु स्वरूपेणैवकर्मत्यागीज्ञानान्मोक्षोवानिषेद्धुमिष्यते तृतीयेपुनरध्यायेकर्मत्यागिनांगृहस्थेभ्योव्यतिरिक्तानामेव केवलादात्मज्ञानान्मोक्षोविवक्षते अतोभिन्नविषयत्वान्निषेधाभ्यनुज्ञानयोर्नविरोधाशङ्केत्यर्थः विधान्तरेणविरोधंदर्शयन्नुत्तरमाह एतदपीति विरोधमेवाकाङ्क्षाद्वारासाधयति कथमित्यादिना श्रौतंकर्मगृहस्थानामवश्यमनुष्ठेयमित्यनेनाभिप्रायेणतेषां केवलादात्मज्ञानान्मोक्षोनिषिध्यते नतुगृहस्थानांज्ञानमात्रायत्तंमोक्षंप्रतिषिद्धान्येषांकेवलज्ञानाधीनोमोक्षोविवक्ष्यते आश्रमान्तराणामपिस्मार्त्तेनकर्मणासमुच्चयाभ्युपगमादितिचोदयति अथेति एतत्पदपरामृष्टंवचनमेवाभिनयति केवलादिति ननुगृहस्थानांश्रौतकर्मराहित्येऽपिसति स्मार्त्तकर्मणिकृतोज्ञानस्यकेवलत्वंलभ्यते येननिषेधोक्तिरर्थवती तत्राह तत्रेति प्रकृतवचनमेवसम्प्रत्यर्थःप्रधानंहि श्रौतंकर्मतद्राहित्येसति स्मार्त्तस्यकर्मणःसतोऽप्यसद्भावमभिप्रेत्य ज्ञानस्यकेवलत्वमुक्तमितियुक्तानिषेधोक्तिरित्यर्थः गृहस्थानामेवश्रौतकर्मसमुच्चयोनान्येषांअन्येषान्तुस्मार्त्तेनेतिपक्षपातेहेत्वभावंमन्वानःसन्परिहरति एतदपीति तमेवहेत्वभावंप्रश्नद्वाराविवृणोति कथमित्यादिना गृहस्थानांश्रौतस्मार्त्तकर्मसमुच्चितंज्ञानंमुक्तिहेतुरित्यभ्युपगमात् केवलस्मार्त्तकर्मसमुच्चितात्ततोनमुक्तिरितिनिषेधोयुज्यते ऊर्द्ध्वरेतसान्तुस्मार्त्तकर्ममात्रसमुच्चितात् ज्ञानान्मुक्तिरितिविभागेनास्तिहेतुरित्यर्थः पक्षपातेकारणंनास्तीत्युक्त्वापक्षपातपरित्यागेकारणमस्तीत्याह किञ्चेति गृहस्थानामपिब्रह्मज्ञानंस्मार्त्तैरेवकर्मभिःसमुच्चितंमोक्षसाधनंब्रह्मज्ञानत्वादूर्द्ध्वरेतःसुव्यवस्थितब्रह्मज्ञानवदितिपक्षपातत्यागेहेतुंस्फुटयति यदीत्यादिना यदिगृहस्थानांब्रह्मज्ञानंस्मार्त्तैरेवकर्मभिःसमुच्चितंतदीयं ज्ञानंमोक्षस्यहेतुरिति

आनन्दगिरिकृतटीका।

विवक्षितं तदा तान् प्रति यावज्जीवश्रुतिर्विरुध्येत यदि स्मार्त्तैरपि कर्मभिः समुच्चितं तदीयं ज्ञानं मोक्षसाधनं विवक्षितं तदा सिद्धसाध्यतेति प्रागुक्तमभिप्रेत्य चोदयति अथेति आश्रमान्तराणां तर्हि केवलादेव ज्ञानान्मुक्तिरिति प्रागुक्तविरोधतादवस्थ्यमित्याशंक्याह ऊर्द्ध्वरेतसान्त्विति यथोक्तविभागे गार्हस्थ्यं क्लेशात्मकं कर्मबाहुल्यात् अनुपादेयमापद्येतेति दूषयति तन्नेति साधनभूयस्त्वमिति न्यायमाश्रित्य शङ्कते अथेति क्लेशबाहुल्योपेतं श्रौतं स्मार्त्तञ्च बहु कर्म तस्यानुष्ठानात् गृहस्थस्य मोक्षः स्यादेवेत्यर्थः एवकारार्थनिरस्यं दर्शयति नाश्रमान्तराणामिति तेषां नास्ति मुक्तिरित्यत्र यावज्जीवादिश्रुतिविहितावश्यानुष्ठेयकर्मराहित्यं हेतुं सूचयति श्रौतेति शास्त्रविरोधिन्यायस्य निरवकाशत्वमभिप्रेत्य दूषयति तदपीति ऐकाश्रम्यस्मृत्या गार्हस्थ्यस्यैव प्राधान्यादनधिकृतान्धादिविषयं कर्मसंन्यासविधानमित्याशङ्क्याह ज्ञानाङ्गत्वेनेति न खल्वनधिकृतानामन्धादीनां संन्यासः श्रवणाद्यावृत्तिद्वारा ज्ञानाङ्गं भवितुमलं तेषां श्रवणाद्यभ्याससामर्थ्यादतः श्रुत्यादीनामविरोधेनास्ति गार्हस्थ्यस्याप्राधान्यमित्यर्थः तस्य प्राधान्याभावे हेत्वन्तरमाह आश्रमेति ब्रह्मचर्यं समाप्य गृही भवेत् गृहाद्वनी भूत्वा प्रव्रजेत् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वेति श्रुतौ तस्याश्रमविकल्पमेके ब्रुवते इति यमिच्छेत्तमावसेदित्यादिस्मृतौ चाश्रमाणां समुच्चयेन विकल्पेन चाश्रमान्तरमिच्छन्तं प्रति विधानाद्गार्हस्थ्यस्याप्रधानत्वमित्यर्थः यदि सर्वेषामाश्रमाणां श्रुतिस्मृतिमूलत्वं तर्हि तत्तदाश्रमविहितकर्मणा ज्ञानेन समुच्चयः सिध्यतीति शङ्कते सिद्धस्तर्हीति यद्यपि ज्ञानोत्पत्तावाश्रमकर्मणां साधनत्वं तथापि ज्ञानमुत्पन्नं नैव फले सहकारित्वेन तान्यपेक्षते अन्यथा संन्यासविध्यनुपपत्तेरिति दूषयति न मुमुक्षोरिति संन्यासविधानमेवानुक्रामति व्युत्थायेत्यादिना एषणाभ्यो वैमुख्येनोत्थानं तत्परित्यागः आश्रमसम्पत्त्यनन्तरं तत्र विहितं कर्मकलापानुष्ठानमपि कर्त्तव्यमित्याह अथेति प्रागुक्तानां सत्यादीनामल्पफलत्वान्न्यासस्य च ज्ञानद्वारा मोक्षफलत्वादित्याह तस्मादिति अतिरिक्तमतिशयत्वं महाफलमिति यावत् प्रकृतकर्मभ्यः सकाशान्न्यास एवातिशयवानासीदित्युक्तोऽर्थे वाक्यान्तरं पठति न्यास एवेति लोकत्रयहेतु साधनत्रयं परित्यज्य संसाराद्विरक्ताः संन्यासपूर्वकादात्मज्ञानादेव प्राप्नुवन्तो मोक्षमित्याह न कर्मणेति सति वैराग्ये नास्ति कर्मापेक्षा सत्यां सामग्र्यां कार्य्योपेक्षानुपपत्तेरित्याह ब्रह्मचर्यादेवेति इत्याद्याः सर्व

आनन्दगिरिकृतटीका।

कर्मसंन्यासविधायिन्यः श्रुतयोभवन्तीतित्र्यर्थः आत्मानमेवलोकमिच्छन्तः प्रव्रजन्ती त्यादिवाक्यसंग्रहार्थमादिपदं तत्रैवस्मृतिमुदाहरति त्यजेति धर्माधर्मयोःसत्या नृतयोश्चसंसारारम्भकत्वान्मुमुक्षूणातत्त्यागेप्रयतितव्यमित्यर्थः त्यक्तत्वाभिमान स्यापितत्त्वतःस्वरूपसम्बन्धाभावात्त्यज्यत्वमविशिष्टमित्याह येनेति अनुभवानु सारेणप्रमातृताप्रमुखस्यसंसारस्यदुःखफलत्वमालच्य मोक्षहेतुसम्यक्ज्ञानसिद्ध येब्रह्मचर्य्यादेवपारिव्राज्यमनुष्ठेयमित्युत्पत्तिविधिमुपन्यस्यति संसारमिति तत्त्व ज्ञानमुद्दिश्यब्रह्मचर्य्यादेवकर्मसंन्यासेसामग्रीमभिदधानोविनियोगविधिंसूचयति परमिति ज्ञानकर्मणोरसमुच्चयार्थंफलविभागंकथयति कर्मणेति उक्तंफलवि भागमनूद्यज्ञाननिष्ठानांकर्मसंन्यासस्यकर्त्तव्यत्वमाह तस्मादिति वाक्यशेषेऽपिस र्वकर्मसंन्यासोविवक्षितोऽस्तीत्याह द्रक्ष्यामीति ज्ञानार्थिनोमुमुक्षोःसंन्यासविध्य नुपपत्तिबाधितंसमुच्चयविधिवचनमित्युक्तमिदानीं मोक्षस्वभावालोचनयापिसमु च्चयवचनमनुचितमित्याह मोक्षस्येति अकुर्वन्विहितंकर्मनिन्दितञ्चसमाच रन् प्रसज्जंश्चेन्द्रियार्थेषुनरःपतनमृच्छतीतिस्मृतेःमुमुक्षूणामपिप्रत्यवायनिवृत्त येकर्त्तव्यंनित्यकर्मेतिशङ्कते नित्यानीति योयस्मिन्कर्मण्यधिकृतस्तस्यतदकरणा त्प्रत्यवायोभवतिनतुकर्मानधिकारिणःसंन्यासिनस्तदकरणात्प्रत्यवायःसम्भवती तिदूषयति नासंन्यासीति तदेवस्पष्टयति नहीति समिद्धोमाध्ययनाद्यकरणात् प्रत्यवायःसंन्यासिनोनास्तीत्यर्थः तत्रव्यतिरेकोदाहरणमाह यथेति अकरणात्प्र त्यवायोत्पत्तिमभ्युपेत्योक्तं सम्प्रतिप्रतिषिद्धकरणादेवप्रत्यवायोनत्वकरणादभावात् भावोत्पत्तिर्लोकवेदविरुद्धत्वादित्याह नतावदिति ननुनित्यकर्मविधायीवेदस्तदक रणात्प्रत्यवायोभवतीतिब्रवीतितत्कथमकरणात्प्रत्यवायोनभवतीतिश्रुतिमाश्रित्यो च्यतेश्रुत्यन्तरविरोधादितितत्राह यदीति विहितस्याकरणेसत्यनर्थप्राप्तेर्नित्यक र्मविधायीवेदोनर्थकरत्वेनाप्रमाणमित्याशंक्याह विहितस्येति नहिविहितस्यकरणे पितृलोकप्राप्तिलक्षणंफलंभवतेष्यतेधूमादिनानयनपीड़ादिदुःखंतु प्रत्यक्षमेवाकर णेचप्रत्यवायोत्पत्तिरुभयथापिपुरुषस्यानर्थकरोवेदोऽप्रमाणमेवस्यादित्यर्थः नन्वभा वस्यापिभावोत्पादनसामर्थ्यंवेदः सम्पादयिष्यतितथाचविहिताकरणप्रत्यवायपरि हारोविहितकरणेफलिष्यतीतिनेत्याह तथाचेति लोकप्रसिद्धपदार्थशक्त्याश्रयणे नशास्त्रप्रवृत्तग्रङ्गीकारादपूर्वशक्त्याधानायोगात् ज्ञापकमेवशास्त्रमित्यर्थः कारकत्वे

## आनन्दगिरिकृतटीका।

चतस्याप्रमाण्यमप्रत्याहंस्यादित्याह कारकमिति भवतुशास्त्रस्याप्रामाण्यमित्या
शंक्यापौरुषेयतयाऽशेषदोषानागन्धितत्वान्नैवमित्याह नचेति अनिर्व्वाच्यानुप
लम्भस्यसम्वेदनसभावज्ञानेकारणसमीहितसाधनज्ञानंतुचरणन्यासादिप्रवृत्तिका
रणमित्यङ्गीकृत्वोपसंहरति तस्मादिति अकरणात्प्रत्यवायोत्पत्त्यसम्भवस्तच्छ
ब्दार्थः संन्यासिनांज्ञाननिष्ठानांकर्मसंन्यासित्वादेवकर्मासम्भवेफलितमाह अत
इति समुच्चयानुपपत्तौहेत्वन्तरमाह ज्यायसीति प्रश्नानुपपत्तिमेवप्रपञ्चयति
यदिहीति समुच्चयोपदेशेप्रश्नैकदेशानुपपत्तेश्चनतदुपदेशोपपत्तिरित्याह अर्जुना
येति कर्मण्येवाधिकारस्तेमाफलेषुकदाचनेति अर्जुनंप्रत्युपदेशात्तंप्रतिज्यायसी
बुद्धिर्नोक्तेतियुक्तं तत्किमित्याद्युपालम्भवचनमित्याशंक्याह नचेति येनकल्पनेन
ज्यायसीचेदित्यारभ्यतत्किंकर्मणीत्युपालम्भात्माप्रश्नः स्यात्तथानयुक्तंकल्पयितुंए
षातेऽभिहितासांख्येबुद्धिरितिवचनविरोधादितियोजनाकस्मिन्पक्षेतर्हिप्रश्नस्योप
पत्तिरित्याशंक्याहयदीति भगवदुक्तेऽर्थेप्रष्टुर्व्विवेकाभावात्प्रश्नःस्यादित्याशंक्यपूर्व्वो
क्तमेवाधिकंविवक्षयास्मारयति अविवेकतइति भगवतोऽपिप्रतिवचनमज्ञाननिमि
त्तंप्रश्नाननुरूपत्वादित्याशंक्याधिकंदर्शयति नचेति भगवतःसर्व्वज्ञत्वप्रसिद्धिविरो
धादज्ञानाधीनप्रतिवचनायोगादित्यर्थः इतश्चसमुच्चयःशास्त्रार्थोनभवतीत्याह अ
स्माच्चेति कस्तर्हिशास्त्रार्थोविवक्षितस्तत्राह केवलादिति ज्ञानकर्मणोःसमुच्चयानु
पपत्तौकारणान्तरमाह ज्ञानेति वाक्यशेषवशादपिसमुच्चयस्याशास्त्रार्थतेत्याह कु
रुकर्म्मैवेति प्राथमिकेनसम्बन्धग्रन्थेनसमस्तशास्त्रार्थसंग्राहकेणतद्विवरणात्मनोऽस्य
सन्दर्भस्यनास्तिपौनरुक्त्यमितिमत्वाप्रतिपदंव्याख्यातुंप्रश्नैकदेशंसमुत्थापयति ज्या
यसीचेदिति वेदाश्चेत्प्रमाणमितिवच्चेदित्यस्यनिश्चयार्थत्वंव्यावर्त्तयति यदिति बुद्धि
शब्दस्यान्तःकरणविषयत्वंव्यवच्छिनत्ति ज्ञानमिति पूर्व्वार्द्धस्याक्षरयोजनांकृत्वास
मुच्चयाभावेतात्पर्य्यमाह यदीति इष्टेभगवतेतिशेषःएकंज्ञानंकर्मासमुच्चितमितिया
वत् ज्ञानकर्मणोरभीष्टेसमुच्चयेसमुच्चितस्यश्रेयःसाधनस्यैकत्वात्कर्मणः सकाशात्
ज्ञानस्यपृथक्करणमयुक्तमित्यर्थः एकमपिसाधनंफलतोऽतिरिक्तंकिंनस्यादित्याशंक्या
ह नहीति नचकेवलात्कर्मणोज्ञानस्यकेवलस्यफलतोऽतिरिक्तत्वंविवक्षित्वापृथक्क
रणंसमुच्चयपक्षेप्रत्येकंश्रेयःसाधनत्वानभ्युपगमादितिभावः पूर्व्वार्द्धस्येवोत्तरार्द्धस्या
पिसमुच्चयपक्षेतुल्यानुपपत्तिरित्याह तथेति दूरेणह्यवरंकर्मेत्यत्रकर्मणःसकाशा
त्बुद्धिःश्रेयस्करीभगवतोक्ताकर्मचबुद्धेःसकाशादश्रेयस्करमुक्तं तथापितदेवकर्मक

व्यामिश्रेणेववाक्येनबुद्धिंमोहयसीवमे तदेकंवदनिश्चित्ययेनश्रेयोऽहमाप्नुयां २

आनन्दगिरिकृतटीका।

मध्येवाधिकारस्तेमाफलेष्वितिविरोधंमिथ्यंभक्तञ्चमांप्रतिकुर्व्वितिभगवान् प्रतिपा दयति तत्रकारणानुपलम्भादयुक्तमतिक्रूरेकर्मणिभगवतोमन्नियोजनमितियदर्जु नोब्रवीति तच्चसमुच्चयपक्षेऽनुपपन्नंस्यादित्यर्थः १

यत्तुवृत्तिकारैरुक्तंश्रौतेनस्मार्त्तेनचकर्मणासमुच्चयोगृहस्थानांश्रेयःसाधनमि तरेषांस्मार्त्तेनैवेतिभगवतोक्तमर्जुनेनचनिर्द्धारितमितितदेतदनुवदति अथेति।

भाषा अनुवाद।

हेअनघनिःपापअर्जुन यहबातकहिचुकाहूंतहांजोमोक्षकेहेतुरूपज्ञानत थाकर्मयेदोनोनिष्ठामेंपृथकपृथककहेअलग२कहेहोता याअभीजोतुमसेकहादूसी मेंपृथककरिकहाहोता तोअलबत्तादोनोकेबीचजोउचितहो सोनिश्चयकरकहो य हतुमाराकहनाठीकथा परन्तुमैनेतोऐसाकहानहींकेवलदोनोहींपक्षसेएकब्रह्म निष्ठाहीकोकहा क्योंकिगौणऔमुख्यफलदायककर्मयोगऔज्ञानयोगसेभिन्नभिन्न ऐसीएकज्ञाननिष्ठाईकोकहा सोभीअधिकारीकेभेदसेजैसाअधिकारीहोवैसाआ चणकरै औरदोनोकाअधिकारीएककैसेहोगाजोतुमकहतेहो किदोनोमेंसेएक कहो सोशुद्धअन्तःकरणहोनेसेअधिकारीदोप्रकारकेहैं इससेदोमतकहेगये हैं सोईदोप्रकारब्रह्मनिष्ठामोक्षप्राप्तिकीउपायपूर्वअध्यायमेंहमनेस्पष्टकहाहै अबउक्तदोनोमतकानिर्णयकरतेहैं किसांख्यकहेशुद्धअन्तःकरणज्ञानमार्गमें आरूढ़पुरुषकोज्ञानपरिपाकरूपकारणसेज्ञानयोगकेद्वाराआत्माकीनिश्चयकर नेवालीध्यानआदिनिष्ठा औरधर्म्याद्धियुद्धाच्छ्रेयोऽन्यत्क्षत्रियस्यनविद्यतेइत्यादिश्लो कोंसे भगवानकर्मकोप्रधानकहाहै इसीशंकापरअर्जुनकहतेहैं किकहींतो कर्मकोप्रशंसाऔरकहींज्ञानकीवड़ाईकरतेहुयेआपको येसन्देहकेउत्पन्नकरने वालीबातोंसेहमारीबुद्धिज्ञानऔकर्मइनदोनोपक्षमेंभीठहरतीनहींअर्थात् येमि लीजुलीबातोंसेमेरीबुद्धिकोमोहसाकरतेआपक्याकहतेहो यद्यपिपरमकरुणा मयजोआप तिनकेमोहकहांहै तौभीभ्रान्तिसेहमकोमोहकीऐसीबातैंसम झपड़तीहैं सोज्ञानऔकर्मदोनोकेबीचमें जोकल्याणकारीहोयवहीएकपक्षनि श्चयकरकेहमकोकहो याजोहमाराकल्याण इसयुद्धकर्महीसेनिश्चितकियेहौ तो इसीकोनिर्धारकरिठीकठीककहो २

## शाङ्करभाष्यम् ।

अथस्यात्तेनैवकर्मणासमुच्चयःसर्वेषांभगवतोक्तःअर्जुनेनचावधारितश्चेत् तत् किंकर्मणिघोरेमांनियोजयसीत्यादिकथंयुक्तं वचनंकिञ्चव्यामिश्रेणेतिव्यामिश्रेणेव यद्यपिविविक्ताभिधायीभगवान् तथापिममन्दबुद्धेर्व्यामिश्रमिवभगवद्वाक्यंप्रतिभाति तेनममबुद्धिंमोहयसीवेतिममन्दबुद्धेर्व्यामोहापनयायहिप्रवृत्तस्त्वन्तु कथंमोहयस्यतोब्रवीमिबुद्धिंमोहयसीवेतिममेतित्वंतु भिन्नकर्तृकयोर्ज्ञानकर्मणोरेकपुरुषानुष्ठानासम्भवंयदिमन्यसेतत्रैवंसतितत्तयोरेकं बुद्धिंकर्मवाइदमेवार्जुनस्ययोग्यंबुद्धिशक्त्यवस्थानुरूपमितिनिश्चित्यवदब्रूहियेनज्ञानेनकर्मणावान्यतरेणश्रेयोहमाप्नुयां इतियदुक्तंतदपिनोपपद्यतेयदिहिकर्मनिष्ठायांगुणभूतमपिज्ञानंभगवतोक्तंस्यात्तत् कथंतयोरेकंवदेतिएकविषयैवार्जुनस्यशुश्रूषास्यान्नहिभगवतोक्तमन्यतरदेव ज्ञान कर्मणोर्वच्यामिनैवद्वयमितियेनोभयप्राप्त्यसम्भवमात्मनोमन्यमानएकमेवप्रार्थयेत्

## आनन्दगिरिकृतटीका ।

तत्रापितत्किमित्याद्युपालम्भवचनमनुपपन्नं कर्ममात्रसमुच्चयवादिनोभगवतोनियोजनाभावादिति दूषयति तत्किमिति इतश्चप्रश्नसमुच्चयानुसारीनभवतीत्याह किञ्चेति भगवतोविविक्तार्थवादित्वादयुक्तं व्यामिश्रेणेत्यादिवचनमित्याशङ्क्याह यद्यपीति यदिभगवद्वचनंसंकीर्णमिवतेभाति तर्हितेनत्वदीयबुद्धिव्यामोहनमेवतस्यविवक्षितमिति किमिति मोहयसीवेत्युच्यते तत्राह ममेति ज्ञानकर्मणोमिथोविरोधात्युगपदेकपुरुषाननुष्ठेयतयाभिन्नकर्तृकेकथ्येते तथाचतयोरन्यतरस्मिन्नेवत्वंनियुक्तोनतु तेबुद्धिव्यामोहनमभिमतमितिभगवतोमतमनुवदति त्वमि

## स्वामिकृतटीका ।

एवंतावदशोच्यानन्वशोचस्त्वमित्यादिनाप्रथमंमोक्षसाधनत्वेनदेहात्मविवेकबुद्धिरुक्तातदनन्तरमेषातेऽभिहितासांख्येबुद्धिर्योगेत्विमांशृणुइत्यादिनाकर्मचोक्तंनचतयोर्गुणप्रधानभावःस्पष्टंदर्शितः तत्रबुद्धियुक्तस्यस्थितप्रज्ञस्य निष्क्रियत्वनियतेन्द्रियत्वनिरहङ्कारत्वाद्यभिधानादेषाब्राह्मीस्थितिःपार्थेति सप्रशंसमुपसंहाराच्चबुद्धिकर्मणोर्मध्ये बुद्धेःश्रेष्ठत्वंभगवतोऽभिप्रेतंमन्वानोऽर्जुनउवाच ज्यायसीचेदिति कर्मणःसकाशान्मोक्षेऽन्तरङ्गत्वेनबुद्धिर्ज्यायसीअधिकतराश्रेष्ठाचेत्तवसम्मता तर्हिकिमर्थंतस्माद्युद्ध्यस्वेतितस्मादुत्तिष्ठेतिचवारंवारंवदन् घोरेहिंसात्मकेकर्मणिमांप्रवर्त्तयसि १

श्रीभगवानुवाच लोकेऽस्मिन्द्विविधानिष्ठा पुराप्रोक्तामयानघ
ज्ञानयोगेनसांख्यानां कर्मयोगेनयोगिनां ३

आनन्दगिरिकृतटीका।

ति तदेकमित्यादिश्लोकाद्ध नोत्तरमाह तवेति उक्तंभागतमतंसम्प्रव्यापरा मृश्यते एकमित्यक्तप्रकारोक्तिः एकमित्युक्तमेवस्फटयति बुद्धिमिति निश्चयप्र कारंप्रकटयति इदमिति योग्यत्वंस्फटयति बुद्धीति अस्यहिक्षत्रियस्यसतोऽ न्तःकरणस्यदेहभक्तेःसमरसमारम्भावस्थायास्त्वेदमेवज्ञानंकर्मवानुगुणमिति नि र्द्धार्य्यब्रूहि इत्यर्थः निश्चित्यान्यतरोक्तौ तेनश्रोतुःश्रेयोवाप्तिफलमाह येनेति तदेकमित्यादिवाक्यस्यान्तरोत्थमर्थमुक्त्वासमुच्चयस्यशास्त्रार्थत्वाभावेतात्पर्य्यमाह

स्वामिकृतटीका।

ननुधर्म्याद्धियुद्धाच्छ्रेयोन्यत्क्षत्रियस्यनविद्यतइत्यादिनाकर्मणोऽपिश्रेष्ठत्वमुक्तमेवे त्याशंक्याह व्यामिश्रेणेति क्वचित्कर्मप्रशंसाक्वचित्ज्ञानप्रशंसेत्येवंव्यामिश्रंसन्देहो त्पादकमिवयद्वाक्यंतेनमेमतिमुभयतदोलायितांकुर्वन्मोहयसीवपरमकारुणिक स्यतवमोहकत्वंनास्त्येव तथापिभ्रान्त्याममैवंभाति इतीवशब्देनोक्तं अतउभयोर्मध्ये यद्भद्रं तदेकंनिश्चित्यवदेति यद्वाअहंइदमेवश्रेयःसाधनमिति निश्चित्ययेनानुष्ठि तेनश्रेयोमोक्षमहमाप्नुयांप्राप्स्यामि तदेवैकंनिश्चित्यवदेत्यर्थः २

भाषा अनुवाद।

अर्जुनकीप्रश्नकेअनुरूपउत्तरकरतेहुयेश्रीभगवानकहतेहैं किइसलोकमे शास्त्रकेअर्थअनुसारचलनेवालेब्राह्मणक्षत्रीवैश्य इनतीनिवर्णोंकेअर्थदोप्रकारकी निष्ठापूर्व्वहीअर्थात् सृष्टिकेप्रथमही उनकाश्रेयसाधनकहेहे मुक्तिकादेनहारवेदा र्थसंप्रदायप्रगटकरतेहुयेमैनेइसरूपब्रह्मपरताकहीहै यथातानिसर्वाणिसंयम्य युक्तआसीतमत्परः इसश्लोकसेऔरजोज्ञानमार्गमेनहींप्राप्तहैं उनलोगोंकोचित्त शुद्धिकेद्वाराज्ञानमार्गपरआरूढ़होनेकेअर्थ उसकीउपायरूप कर्म्मयोगके अधि कारियोंकोकर्म्मयोगसेनिष्ठाअर्थात् ब्रह्मपरता कहीगईहै यथाधर्म्याद्धियुद्धाच्छ्रे योऽन्यत्क्षत्रियस्यनविद्यते इत्यादिश्लोकोंसेकहाहै अतएवचित्तशुद्धिअशुद्धिदोअ वस्थाभेदसेदोप्रकारब्रह्मपरता कथित भईहै परतौभीतुमसेप्रकाशकरि कहेखुल सासेकहिदिया किएषातेऽभिहितासांख्येबुद्धिर्योगेत्विमांशृणु इसश्लोकसेफिरि भीसन्देहकरतेहो तोवडाआश्चर्य्यहै यहअनघसंबोधनसेजनायाभगवानने ३

शाङ्करभाष्यं

प्रश्नानुरूपमेव प्रतिवचनं श्रीभगवानुवाच लोकेऽस्मिन्निति या स्त्रार्थानुष्ठानाधिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिरनुष्ठेयतात्पर्यं पुरापूर्वं सर्गादौ प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसंप्रदायमाविष्कुर्वता प्रोक्ता मया सर्वज्ञेन ईश्वरेण हे अनघ अपापतत्र का सा द्विधा निष्ठेत्याह ज्ञानेति तत्र ज्ञानयोगेन ज्ञानमेव योगस्तेन सांख्यानामात्मानात्मविषयविवेकज्ञानवतां ब्रह्मचर्य्याश्रमादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येवावस्थितानां निष्ठा प्रोक्ता कर्म्मयोगेन कर्म्मैव योगः कर्मयोगस्तेन कर्मयोगेन योगिनां कर्मिणां निष्ठा प्रोक्तेत्यर्थः यदि चैकेन पुरुषेणैकस्मै पुरुषार्थाय ज्ञानं कर्म्म च समुच्चित्यानुष्ठेयं भगवतेष्टमुक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तं कथमिहार्ज्जुनायोपसन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके एव ज्ञानकर्मनिष्ठे ब्रूयात् यदि पुनरर्ज्जुनो ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यति अन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामीति मतं भगवतः कल्प्येत तदा रागद्वेषवानप्रमाणभूत भगवान् कल्पितः स्यात्तच्चायुक्तं तस्मात् कयापि युक्त्या न समुच्चयो ज्ञानकर्मणोः ३

आनन्दगिरिकृतटीका।

यदि हीति गुणभूतमपि इत्यादिना प्रधानभूतमपि चेति विवक्षितं न तूभयप्राप्तिः सम्भवस्तनो मन्यमानस्यार्जुनस्यान्यतरविषयशुश्रूषा भविष्यति नेत्याह नहीति यथोक्तभगवद्वचनाभावे द्वयप्राप्तिसम्भवबुद्ध्या नान्यतरप्रार्थना सम्भवतीत्याह येनेति न हि तथाविधं भगवद्वचनं भवतेष्टं भगवतः समुच्चयवादित्वाङ्गीकारादतस्तदभावादुक्तबुद्ध्या नयुक्तान्यतरप्रार्थनेत्यर्थः २

समुच्चयविरोधितया प्रश्नं व्याख्याय तद्विरोधित्वेनैव प्रतिवचनमुत्थापयति प्रश्नेति येयं व्यवहारमभिरूपलभ्यते तत्र त्रैवर्णिकाः ज्ञानं कर्म्म वा शास्त्रीयमनुष्ठातुमधिक्रियन्ते तेषां द्विधा स्थितिर्म्मया प्रोक्तेति पूर्व्वार्द्धं योजयति लोकेऽस्मिन्निति स्थितिमेव व्याकरोति अनुष्ठेयेति पूर्वं प्रवचनप्रसङ्गं प्रदर्शयन् प्रवक्तारं विशिनष्टि सर्गादाविति प्रवचनस्यायथार्थत्वशङ्कां सूवारयति सर्व्वज्ञेनेति अर्ज्जुनस्य भगवदुपदेशश्रवणयोग्यत्वं सूचयति अनघेति निर्द्धारणार्थं तत्रेति सम्यग्ज्ञानं परमार्थवस्तुविषयं तदेव योगशब्दितं युज्यते अनेन ब्रह्मणेति व्युत्पत्तेस्तेन निष्ठेत्यनुवर्त्तते उक्तज्ञानोपायमुपदिदिक्षुः सांख्यशब्दार्थमाह आत्मेति तेषामेव कर्म्मनिष्ठत्वं व्यावर्त्तयति ब्रह्मचर्य्येति

आनन्दगिरिकृतटीका

तेषांजपादिपारवश्येनश्रवणादिपराङ्मुखत्वंपराकरोति वेदान्तेति उक्तविशेषणवतांमुख्यसंन्यासित्वेनफलावस्थत्वंदर्शयति परमहंसेति कर्म्मवर्णाश्रमविहितंधर्म्माख्यंतदेवयुज्यते तेनाभ्युदयेनेति योगस्तेननिष्ठाकर्म्मिणांप्रोक्तेत्यनुषङ्गंदर्शयन्नाह कर्म्मैवेत्यादिना एवंप्रतिवचनवाक्यस्यान्येवाक्षराणिव्याख्याय तस्यैवतात्पर्य्यार्थंकथयति यदिचेति दृष्टस्यापिदुर्ब्बोधत्वमाशंक्याह उक्तमिति ज्ञानस्यापिमूलविकलतयाविभ्रमत्वमाशंक्याह वेदेष्विति तस्याशिष्यत्वबुद्ध्यान्यथाकथनमित्याशंक्याह उपसन्नायेति तथापितस्मिन्नौदासीन्यादन्यथोक्तिरित्याशंक्याह प्रियायेति प्रवीतिचभिन्नपुरुषकर्त्तृकंनिष्ठाद्वयंतेनसमुच्चयोभगवदभीष्टः शास्त्रार्थोनभवतीति शेषः नन्वर्जुनस्यप्रेक्षापूर्व्वकारित्वाज्ज्ञानकर्म्मश्रवणानन्तरमुभयनिर्द्देशानुपपत्त्यासमुच्चयानुष्ठानंसम्पत्स्यतेतद्व्यतिरिक्तानान्तु ज्ञानकर्म्मणोर्भिन्नपुरुषानुष्ठेयत्वंश्रुत्वाप्रत्येकंतदनुष्ठानंभविष्यतीति भगवतोमतं कल्पते तस्यार्जुनेऽनुरागातिरेकादितरेषुचतदभावादिति तत्राह यदिपुनरिति अप्रमाणभूतत्वमनाप्तत्वं नचभगवतोरागादिमत्त्वेनानाप्तत्वंयुक्तं समंसर्व्वेषुभूतेषु तिष्ठन्तमित्यादिविरोधादित्याह तच्चेति निष्ठाद्वयस्यभिन्नपुरुषानुष्ठेयत्वनिर्द्देशफलमुपसंहरति तस्मादिति ३

स्वामिकृतटीका।

अत्रोत्तरंश्रीभगवानुवाच लोकेऽस्मिन्निति अयमर्थः यदिमयापरस्परनिरपेक्षंमोक्षसाधनत्वेनकर्मज्ञानयोगरूपंनिष्ठाद्वयमुक्तंस्यात्तर्हिद्वयोर्मध्येयद्भद्रंस्यात्तदेकंवदेति त्वदीयःप्रश्नःसङ्गच्छते नतुमयातथोक्तं किन्तुद्वाभ्यामेकैवब्रह्मनिष्ठोक्ता गुणप्रधानभूतयोस्तयोःस्वातन्त्र्यानुपपत्तेः एकस्याएवतुप्रकारभेदमात्रमधिकारिभेदेनोक्तमिति अस्मिन्शुद्धाशुद्धान्तःकरणतया द्विविधेलोकेऽधिकारिजनेद्विविधप्रकारौयस्याःसाद्विविधानिष्ठामोक्षपरता पुरापूर्व्वाध्यायेमयासर्व्वज्ञेनप्रोक्तास्पष्टमेवोक्ताप्रकारद्वयमेवनिर्द्दिशति सांख्यानांशुद्धान्तःकरणानांज्ञानभूमिकामारूढानांज्ञानपरिपाकार्थंज्ञानयोगेनध्यानादिनानिष्ठाब्रह्मपरतोक्ता तानिसर्व्वाणिसंयम्ययुक्तआसीत मत्परइत्यादिनासांख्यभूमिकामारूढानान्तुअन्तःकरणशुद्धिद्वारातदारोहार्थन्तदुपायभूतंकर्मयोगाधिकारिणांयोगिनां कर्मयोगेननिष्ठोक्ता धर्म्याद्धियुद्धाच्छ्रेयोन्यत्क्षत्रियस्यनविद्यतइत्यादिना अतएवतवचित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनद्विविधापिनिष्ठोक्ता एषातेऽभिहितासांख्येबुद्धिर्योगेत्विमांशृण्विति ३

नकर्मणामनारम्भान्नैष्कर्म्यंपुरुषोऽश्नुते नचसन्न्यसनादेवसिद्धिंसमधिगच्छति ४

## शाङ्करभाष्य।

यदर्जुनेनोक्तं कर्मणोज्यायस्त्वंबुद्धेः तत्रस्थितमनिराकरणात्तस्याश्चज्ञाननिष्ठायाः संन्यासिनामेवानुष्ठेयत्वंभिन्नपुरुषानुष्ठेयत्ववचनाच्चभगवत एवमेवानुमतमिति गम्यते माञ्चबन्धकारणेकर्मण्येवनियोजयसीति विषण्णमनसंअर्जुनंकर्मणामनारम्भेइत्येवमन्वानसालक्ष्याह भगवान् नकर्मणामनारम्भादिति अथवाज्ञानकर्मनिष्ठयोः परस्परविरोधादेकेनपुरुषेणयुगपदनुष्ठातुमशक्यत्वेसतीतरेतरानपेक्षयोरेवपुरुषार्थहेतुत्वेप्राप्तेकर्मनिष्ठायाः ज्ञाननिष्ठाप्राप्तिहेतुत्वेनपुरुषार्थहेतुत्वंनस्वातन्त्र्येण ज्ञाननिष्ठातुकर्मनिष्ठोपायलब्धात्मिकासतीस्वातन्त्र्येणपुरुषार्थहेतुरन्यानपेक्षेत्येतमर्थंदर्शयिष्यन्नाह भगवान् नकर्मणेति नकर्मणामनारम्भादप्रारम्भात्कर्मणांक्रियाणांयज्ञादीनामिहजन्मनिजन्मान्तरेवानुष्ठितानामुपात्तदुरितक्षयहेतुत्वेनसत्त्वशुद्धिकारणानांतत्कारणत्वेनचज्ञानोत्पत्तिद्वारेणज्ञाननिष्ठाहेतूनां ज्ञानमुत्पद्यतेपुंसांक्षयात्पापस्यकर्मणः यथादर्शतलप्रख्येपश्यत्यात्मानमात्मनीत्यादिस्मरणादनारम्भादननुष्ठानात् नैष्कर्म्यंनिःकर्मभावंकर्मशून्यतांज्ञानयोगेननिष्ठांनिष्क्रियात्मस्वरूपेणैवावस्थानमितियावत् पुरुषोनाश्नुतेनप्राप्नोतीत्यर्थःकर्मणामनारम्भान्नैष्कर्म्यंनाश्नुतइतिवचनात्तद्विपर्ययात् तेषामारम्भात् नैष्कर्म्यमश्नुतइतिगम्यते कस्मात् पुनःकारणात् कर्मणामनारम्भान्नैष्कर्म्यंनाश्नुतइत्युच्यते कर्मारम्भस्यैवनैष्कर्म्योपायत्वात् नह्युपायमन्तरेणोपेयोत्पत्तिरस्तिकर्मयोगोपायत्वञ्च

## भाषाअनुवाद।

इससेयहआया किसम्पूर्णचित्तशुद्धिकेद्वारा जबतकज्ञानउत्पन्ननहोय तबतकवर्णकहेजाति औआश्रमकहेब्रह्मचर्यगार्हस्थ्यवानप्रस्थसंन्यासइनमेविहितजोजोकर्मसोसबकरनाउचितहै नहींतोचित्तशुद्धिकेविनाज्ञानकैसेहोसकेगा यहीभगवानकहतेहैं किकर्मकियेविनापुरुषनैष्कर्म्यजोतत्त्वज्ञानसोपावतानहीं जोकहोकिसंन्यासीफेरिसर्वकर्मपरित्यागकरितत्त्वज्ञानकैसेपावतेहैं औरवेदकीश्रुतिकहतीहैं किसंन्यासधारनकरनेहीसेमुक्तिमिलतीहै फेरिकर्मकरनेसेक्याप्रयोजनहै इसशङ्कापरकहतेहैं किसोनहीं क्योंकिनिःकामकर्मकरिचित्तशुद्धिकियेविनाज्ञानकाअभावहै औरज्ञानकेविनामुक्तिप्राप्तिनहींहोती यहनिश्चयहै कुछसंन्यासहीलेनेसेपुरुषसिद्धिनहींपायजाताहै यहजानो ४

## शाङ्करभाष्यं।

नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य श्रुताविहचप्रतिपादनात् श्रुतौतावत् प्रकृतस्यात्म लोकस्यवेद्यस्यवेदनोपायत्वेनतमेतं वेदानुवचनेनब्राह्मणाविविदिषन्ति यज्ञेनेत्या दिनाकर्मयोगस्यज्ञानयोगोपायत्वं प्रतिपादितमिहापिसंन्यासस्तुमहाबाहो दुःख माप्तुमयोगतःयोगिनःकर्मकुर्वन्तिसङ्गंत्यक्त्वात्मशुद्धयेयज्ञोदानंतपश्चैवपावनानिमनी षिणामित्यादिप्रतिपादयिष्यति ननुचाभयंसर्व्वभूतेभ्योदत्वानैष्कर्म्यमाचरेदित्या दौकर्तव्यकर्मसंन्यासादपिनैष्कर्म्यप्राप्तिं दर्शयति लोकेचकर्मणामनारम्भान्नैष्कर्म्य मिति प्रसिद्धतरमतश्चनैष्कर्म्यार्थिनः किंकर्मारम्भेनेति प्राप्तमतआह नचसंन्यस नादेवेति नापिसंन्यसनादेवकेवलात्कर्मपरित्यागमात्रादेवज्ञानरहितात् सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेननिष्ठांसमधिगच्छति नप्राप्नोति ४

## आनन्दगिरिकृतटीका।

किमितिभगवता बुद्धेर्ज्यायस्त्वंज्यायसीचेदित्युक्तमुपेक्षितमिति तत्राह यदर्जुने नेति किञ्चज्ञाननिष्ठायांसंन्यासिनामेवाधिकारोभगवतोऽभिप्रेतोऽन्यथातदीयं विभागवचनविरोधादिति विभागवचनसामर्थ्यसिद्धमर्थमाह तस्यश्चेति तर्हि विभागवचनानुरोधादर्जुनस्यापि संन्यासपूर्व्विकायां ज्ञाननिष्ठायामेवाधिकारोभ विष्यतिनेत्याह माञ्चेति बुद्धेर्ज्यायस्त्वमुपेत्यापीतिचकारार्थःअर्जुनमालक्ष्यभगवाना हेतिसम्बन्धः अन्तरेणापिकर्माणिश्रवणादिभिर्ज्ञानावाप्तिर्नभविष्यतीतिपरबुद्धि मनुरुध्यविधिनष्टि कर्मेति विभागवचनवशादसमुच्चयश्चेदुभयोरपिज्ञानकर्मणोः स्वातन्त्र्येणपुरुषार्थहेतुत्वमन्यथाकर्मवत्ज्ञानमपिन स्वातन्त्र्येणपुरुषार्थंसाधयेदि त्याशंक्यसम्बन्धान्तरमाह अथवेति तर्हिज्ञाननिष्ठापिकर्मनिष्ठावत् निष्ठात्वाविशे षान्नस्वातन्त्र्येणपुरुषार्थहेतुरितिसमुच्चयसिद्धिरित्याशंक्याह ज्ञाननिष्ठात्विति न हिरज्जुतत्त्वज्ञानमुत्पन्नंफलसिद्धौसहकारिसापेक्ष्यमालक्ष्यते तथेदमपिचोत्पन्नं मोक्षायनान्यदपेक्ष्यतेतदाह अन्येति यस्यचैतत्कर्मेतिश्रुताविवकर्मशब्दस्यक्रिय माणवस्तुविषयत्वमाशंक्यव्याचष्टे क्रियाणामिति ताश्चनित्यनैमित्तिकत्वेनविभज्य ते यज्ञादीनामिति अस्मिन्नेवजन्मन्यनुष्ठितानांकर्मणांबुद्धिशुद्धिद्वाराज्ञानकारण त्वेब्रह्मचारिणांकुतोज्ञानोत्पत्तिर्जन्मान्तरकृतानांकर्मणांवातथात्वेगृहस्थादीनामै हिकानिकर्माणिनज्ञानहेतवःस्युरित्याशंक्यानियमंदर्शयति इहेति नेमानिसत्त्वशु द्धिकारणान्युपात्तदुरितप्रतिबन्धादित्याशंक्याह उपात्तेति तर्हितावतैवकृतार्था

आनन्दगिरिकृतटीका।

नांकुतोज्ञाननिष्ठाहेतुत्वंतत्राहतत्कारणत्वेनेतिकर्मणांचित्तशुद्धिद्वाराज्ञानहेतुत्वे मानमाहज्ञानमिति अनारम्भशब्दस्योपक्रमविपरीतविषयत्वंव्यावर्त्तयतिअननुष्ठानादिति निष्कर्मणःसंन्यासिनःकर्मज्ञानंनैष्कर्म्यमितिव्याचष्टेनैष्कर्म्यमितिकर्माभावावस्थां व्यवच्छिनत्तिज्ञानयोगेनेति तस्याःसाधनपक्षपातित्वंव्यावर्त्तयति निष्क्रियेति कर्मानुष्ठानोपायलभ्याज्ञाननिष्ठाखतन्त्रापुमर्थहेतुरितिप्रकृतार्थसमर्थव्यतिरेकवचनस्यान्वयेपर्य्यवसानंमत्वाव्याचष्टे कर्मणामिति उक्तोऽर्थेहेतुं पृच्छति कस्मादिति जिज्ञासितंहेतुमाह उच्यतइति उपायत्वेऽपितदभावेकुतोननैष्कर्म्यसिद्धिरित्याशंक्याह नहीति ज्ञानंयोगंप्रतिकर्मयोगस्यउपायत्वेश्रुतिस्मृतीप्रमाणयति कर्मयोगेति श्रौतमुपायोपेयत्वप्रतिपादनंप्रकटयति श्रुताविति यत्तुगीताशास्त्रेकर्मयोगस्यज्ञानयोगंप्रत्युपायत्वोपपादनंतदिदानीमुदाहरति इहापिचेति नकर्मणामित्यादिनापूर्व्वार्द्धंव्याख्यायोत्तरार्द्धंव्याख्यातुमाशङ्कयति नन्विति आदिशब्देनशान्तोदान्तउपरतस्तितिक्षुः संन्यासयोगाद्यतयः शुद्धसत्त्वाइत्यादि गृह्यते तत्रैवलोकप्रसिद्धिमनुकूलयति लोकेचेति प्रसिद्धतरं यतोयतोनिवर्त्तते ततस्ततोविमुच्यतेनिवर्त्तनाद्धिसर्व्वतोनवेत्तिदुःखमणावपीत्यादिदर्शनादिति शेषः लौकिकवैदिकप्रसिद्धिभ्यांसिद्धमर्थमाह अतश्चेति तत्रोत्तरत्वेनोत्तरार्द्धमवतार्य्यव्याकरोति अतश्चाहेत्यादिना एवकारार्थमाह केवलादिति तदेवस्फुटयति कर्मेति उक्तमेवनञमनुकृष्यक्रियापदेनसङ्गतिंदर्शयति नप्राप्नोतीति ४

उक्तोऽर्थेवुभुत्सितं हेतुं वक्तुमुत्तरश्लोकमुत्थापयति कस्मादिति कस्मान्न कर्मसंन्यासादेवसिद्धिमधिगच्छतीतिपूर्व्वेणसम्बन्धः कदाचित्क्षणमात्रमपिनकश्चिदकर्मकृत्तिष्ठतीत्यत्र हेतुत्वेनोत्तरार्द्धंव्याचष्टे कस्मादिति सर्व्वशब्दात्ज्ञानवा

स्वामिकृतटीका।

अतःसम्यक्चित्तशुद्ध्यर्थंज्ञानोत्पत्तिपर्य्यन्तंवर्णाश्रमोचितानिकर्माणिकर्त्तव्यानिअन्यथाचित्तशुद्ध्यभावेनज्ञानानुत्पत्तेरित्याह नकर्मणामिति कर्मणांअनारम्भात् अननुष्ठानान्नैष्कर्म्यंज्ञानंनाश्नुतेनप्राप्नोति ननुचैतमेवप्रव्राजिनोलोकमिच्छन्तःप्रव्रजन्तीतिश्रुत्यासंन्यासस्यमोक्षाङ्गत्वश्रुतेःसंन्यासादेवमोक्षोभविष्यतिकिंकर्मभिरित्याशंक्योक्तं नचेति नचचित्तशुद्धिंविनाकृतात्संन्यसनादेवज्ञानशून्यात् सिद्धिंमोक्षंसमधिगच्छति प्राप्नोति ४

नहिकश्चित् क्षणमपिजातुतिष्ठत्यकर्मकृत् कार्य्यतेह्यवशःकर्मसर्व्वःप्रकृतिजैर्गुणैः ५

### शाङ्करभाष्यं

कस्मात् पुनःकारणात्कर्मसंन्यासमात्रादेवकेवलात् ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणांपुरुषोनाधिगच्छतीतिहेत्वाकाङ्क्षायामाह नहीति नहियस्मात् क्षणमपिकिञ्चित् कालंजातुकदाचिदपिकश्चित्तिष्ठत्यकर्मकृत्सन्कस्मात्कार्य्यतेहियस्मादवशएवकर्मसर्व्वप्राणीप्रकृतिजैःप्रकृतितोजातैः सत्त्वरजस्तमोभिर्गुणैः अज्ञइति वाक्यशेषोयतोवक्ष्यतिगुणैर्योनविचाल्यतइति सांख्यानांपृथक्करणाद्

### आनन्दगिरिकृतटीका।

नपिगुणैरवशः सन्कर्मकार्य्यतेततश्च ज्ञानवतःसंन्यासवचनमनवकाशंस्यादित्याशंक्याह अज्ञइतीति तमेववाक्यशेषंवाक्यशेषावष्टम्भेनस्पष्टयति यतइति आत्मज्ञानवतोगुणैरविचाल्यतयागुणातीतत्ववचनादज्ञस्यैवसत्त्वादिगुणैरिच्छाभेदेनकार्य्यकरणसंघातंप्रवर्त्तयितुमशक्तस्याजितकार्य्यकरणसंघातस्यक्रियासुप्रवर्त्तमानत्वमित्यर्थः ज्ञानयोगेनेत्यादिनाउक्तन्यायाच्चवाक्यशेषोपपत्तिरित्याह सांख्यानामिति ज्ञानिनोगुणप्रयुक्तचलनाभावेऽपिस्वाभाविकचलनवलात्कर्मयोगोभविष्यतीत्याशंक्याह ज्ञानिनांत्विति प्रत्यगात्मनिस्वारसिकचलनासम्भवेप्रागुक्तंन्यायंस्मारयति तथाचेति ५

### स्वामिकृतटीका।

कर्मणाञ्चसन्न्यासस्तेच्छनासक्तिमात्रंनतुस्वरूपेणाशक्यत्वादित्याह नहिकश्चिदिति कश्चिदपिजातुकस्याञ्चिदप्यवस्थायांक्षणमात्रमपि ज्ञानीअज्ञानीवाअकर्मकृत्कर्माण्यकुर्व्वाणोनतिष्ठति अत्रहेतुः प्रकृतिजैःस्वभावप्रभवैरागद्वेषादिभिर्गुणैःसर्व्वोऽपिजनःकर्मकार्य्यतेकर्मणिप्रवर्त्ततेअवशोऽस्वतन्त्रःसन् ५

### भाषा अनुवाद।

कर्मसंन्यासइसकायहअर्थहैकिसर्व्वकर्ममेआसक्तिरहितहोनामात्र नकिए काएकसबकर्मोकात्यागकरनाऔरशरीररहते कर्मकात्यागभीअसाध्यहै सोईकहतेहैं कदाचितकहेकिसीअवस्थामेभीक्याज्ञानीऔरक्याअज्ञानीक्षणमात्रभीमानसिकवाचिककायिककर्मकियेविनारहनहींसकताहै कारणयहकिप्रकृतिजोस्वभावतिसकेप्रभावसेरागद्वेषकहेप्रीतिविरोधआदिगुणोंमेसवमनुष्यपरतन्त्रकहेपरवशपराधीनहोकर्मकरतेहीहैं ५

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ६

शाङ्करभाष्यं

ज्ञानामेवह्निकर्मसंयोगो नज्ञानिनांज्ञानिनान्तुगुणैश्चाल्यमानानांस्वतश्चलनाभा वात्कर्मयोगोनोपपद्यते तथाचव्याख्यातंवेदाविनाशिनमित्यत्र ५

यस्त्वनात्मज्ञचोदितं कर्मनारभतइति तदसदेवेत्याह कर्मेन्द्रियाणीति कर्मे न्द्रियाणिहस्तादीनिसंयम्यसंहृत्ययआस्तेतिष्ठति मनसास्मरन्निन्द्रियार्थान्विषयान् विमूढात्माविमूढान्तःकरणोमिथ्याचारोमृषाचारः पापाचारः स उच्यते ६

आनन्दगिरिकृतटीका।

आत्मज्ञवदनात्मज्ञस्यापि तर्हिकर्माकुर्वतोनप्रत्यवायः शरीरेन्द्रियसंघातं नि यन्तुमसमर्थस्यमूर्खस्यापिसंन्याससम्भवादित्याशंक्याह यस्त्विति तस्यचोदिताकर णंतच्छद्मनेमरात्मज्ञते तदसदिति मिथ्याचारत्वादितिभावः मिथ्याचरतामे ववर्णयति कर्मेन्द्रियाणीति ६

अनात्मज्ञस्यचोदितमकुर्वतोजाग्रतोविषयान्तरदर्शनध्रौव्यात्मिथ्याचारस्ते नप्रत्यवायित्वमुक्त्वा विहितमनुतिष्ठतस्तस्यैवफलाभिलाषविकलस्यसदाचारत्वेनवै शिष्ट्यमाचष्टे यस्त्विन्द्रियाणीति विहितमनुतिष्ठतोमौर्ख्यात्कर्मत्यजतोवैशिष्ट्यमक्ष रयोजनयास्पष्टयति यस्तुपुनरिति ७

स्वामिकृतटीका।

अतोऽज्ञकर्मत्यागिनंनिन्दति कर्मेन्द्रियाणीति वाक्पाण्यादीनिकर्मे न्द्रियाणिसंयम्यनिगृह्ययोमनसाभगवद्ध्यानच्छलेनइन्द्रियार्थान् विषयान्स्मरन्ना स्तेऽविशुद्धतयामनसाआत्मनिस्थैर्याभावात्समिथ्याचारः कपटाचारोदाम्भिकउ च्यतइत्यर्थः ६

भाषा अनुवाद।

इसीसेअज्ञानकर्मत्यागीकीनिन्दाकरतेहैं किजोआत्मस्वरूपकोस्थिरनकरि केवाकपाणिपादआदिकर्मइन्द्रियोंकोवशीभूतअर्थात् कावूकरिभगवतकेध्यानकेव हानेसेमनकोअशुद्धताकेकारणसेइन्द्रीगणकाअर्थरूपविषयोंकास्मरणमनसेकर ताहै सोई मूढ़ मिथ्याचार अर्थात् नास्तिक कपटआचारकहावताहै ६

यस्त्विन्द्रियाणिमनसानियम्यारभतेऽर्जुन कर्मेन्द्रियैःकर्मयोगमसक्तःसविशिष्यते ७
नियतंकुरुकर्मत्वंकर्मज्यायोह्यकर्मणः शरीरयात्रापिचते नप्रसिध्येदकर्मणः ८

शाङ्करभाष्यम्।

यस्त्विति यस्तुपुनःकर्मण्यधिकृतोऽज्ञोबुद्धीन्द्रियाणिमनसानियम्यारभतेऽर्जुनकर्मेन्द्रियैर्वाक्पाण्यादिभिःकिमारभतेइत्याह कर्मयोगमसक्तःसन् फलाभिसन्धिवर्जितःसविशिष्यते इतरस्मान्मिथ्याचारात् ७

यतएवमतोनियतंनित्यंशास्त्रोपदिष्टंयोयस्मिन्कर्मण्यधिकृतःफलायचाश्रुतं तन्नियतं कर्मतत्कुरुत्वं हेअर्जुन यतःकर्मज्यायोधिकतरंफलतोहियस्मादकर्मणोऽकरणादनारम्भात् कथंशरीरयात्राशरीरस्थितिरपिच तेतवनप्रसिध्येत् प्रसिद्धिंनगच्छेदकर्मणोऽकरणात् अतोदृष्टःकर्माकर्मणोर्विशेषोलोके ८

स्वामिकृतटीका।

एतद्विपरीतः कर्मकर्त्तातुश्रेष्ठइत्याह यस्त्विन्द्रियाणीति यस्तुज्ञानेन्द्रियाणिमनसानियम्य ईश्वरपराणिकृत्वा कर्मेन्द्रियैः कर्मरूपंयोगमुपायमारभतेऽनुतिष्ठतिअसक्तःफलाभिलाषरहितः स विशिष्यते विशिष्टोभवति चित्तशुद्ध्याज्ञानवान्भवतीत्यर्थः ७

नियतमिति यस्मादेवंतस्मान्नियतंनित्यंकर्मसन्ध्योपासनादिकुरु हियस्मादकर्मणःसर्व्वकर्मणोऽकरणात्सकाशात् कर्मकरणंज्यायोऽधिकतरं अन्यथाअकर्मणःसर्व्वकर्मशून्यस्यतव शरीरनिर्व्वाहोऽपिनभवेत् ८

भाषा अनुवाद।

अबइसकेविपरीतकहेउलटाकहतेअर्थात् कर्मकारीपुरुषकोश्रेष्ठकहते हैं किजोफलकीअभिलाषरहित मनुष्यचक्षुश्रोत्रघ्राणआदिज्ञानइन्द्रियोंकोमनकेद्वारावशीभूतकरिके अर्थात्ईश्वरमेतत्परहोसकलकर्ममेअपनेकोअन्तर्यामीभगवानकेअधीनजानिकर्मइन्द्रियोंसेकर्मरूपयोगआरम्भकरतेहैं वेई फलाभिलाषरहितचित्तशुद्धिकेद्वाराज्ञानवानहोतेहैं औरकर्मदोषरहितहोमुक्तिलाभकरते हैं ७ जिसहेतुऐसीव्यवस्थाहै इससेतुमकर्मकरोसोईकहतेहैं किनियतकहेनित्यकर्मसंध्याउपासनआदिकर्मअनुष्ठानकरो जिसलियेकर्मनकरनेसेकर्मकरनाहीभलाहै नहींतोसबकर्मछोड़नेसेएकवारगीकर्मशून्यअचेतनकीभांतिरहनेसे हेअर्जुनतुमारीशरीरयात्राभीकैसेनिवहैगी अर्थात्नचलैगी तोइससेअवश्यमारतुमकोकर्मकर्नाहीपडेगाताहै ८

यज्ञार्थात्कर्मणोऽन्यत्रलोकोऽयंकर्मबन्धनःतदर्थंकर्मकौन्तेयमुक्तसङ्गःसमाचर ९

### शाङ्करभाष्यं

यज्ञमन्वसेवन्धार्थत्वात् कर्मनकर्त्तव्यमितितदृयसत्कथं यज्ञार्थादिति यज्ञो वैविष्णुरितिश्रुतेर्यज्ञईश्वरस्तदर्थंयत्क्रियते तद्यज्ञार्थंकर्मतस्मात्कर्मणोऽन्यत्रान्ये नकर्मणालोकोयमधिकृतः कर्मकृतकर्मबन्धनःकर्मबन्धनंयस्यसोयंकर्मबन्धनोलो कोनतुयज्ञार्थादतस्तदर्थंयज्ञार्थंकर्मकौन्तेयमुक्तसङ्गः कर्मफलसङ्गवर्ज्जितःसन्स माचरनिर्व्वर्त्तय ९

### आनन्दगिरिकृतटीका।

कर्मानुष्ठायिनोवैशिष्ट्यमुपदिष्टमनूद्यतदनुष्ठानमधिकृतेनकर्त्तव्यमिति निग मयति यतइति उक्तमेवहेतुंभगवदनुमतिकथनेनस्फुटयति कर्मेति इतश्चत्व याकर्त्तव्यंकर्मेत्याह शरीरेति तन्नियतंतस्याधिकृतस्येति सम्बन्धः स्वर्गादिफले दर्शपौर्णमासादावधिकृतस्यतस्यतदपिनित्यंस्यादित्याशङ्क्यविशिनष्टि फलायेति नित्यंकर्मेतिनियमेनकर्त्तव्यमित्यत्रहेतुमाह यतइति हिशब्दोप्रात्तमुक्तमेवहेतुम नुवदति यस्मादिति करणस्याकरणाज्ज्यायस्त्वं प्रश्नपूर्व्वकंप्रकटयति कथमित्या दिना सत्येवकर्मणिदेहादिचेष्टाद्वाराशरीरंस्यात्‌ पारयति तदभावेजीवनमेव दुर्लभंभवेदितिफलितमाह अतइति ८

### स्वामिकृतटीका।

सांख्यास्तुसर्व्वमपिकर्म्मबन्धकत्वान्नकार्य्यमित्याहुस्तन्निराकुर्व्वन्नाह यज्ञार्था दिति यज्ञोवैविष्णुरितिश्रुतेः तदाराधनार्थात्कर्म्मणोऽन्यत्र तदेकंविनालोकोऽ यंकर्मबन्धनःकर्म्मभिर्व्वध्यते नत्वीश्वराराधनार्थेनकर्म्मणा अतस्तदर्थंविष्णुप्रीत्यर्थं मुक्तसङ्गोनिष्कामःसन्कर्म्मसम्यगाचर ९

### भाषा अनुवाद।

सांख्यमतवालेकहतेहैं किवन्धनकेकारणभूतकर्म्महैं इससेसम्पूर्णकर्म्मन करनाहीं भलाहै उसीकोनिर्णयकरिकेकहतेहैं कियज्ञशब्दकाअर्थविष्णुहै यहश्रुतिमेकहाहै सोयज्ञजोविष्णुभगवान तिनकेआराधनार्थजोकर्म्मतिसको छाड़िकरि औरसवकर्म्मअलवत्तालोगोंकोसंसारबन्धनकरतेहैं परन्तुईश्वरआ राधनरूपकर्म्मतैसेनहीहैं इससेविष्णुप्रीत्यर्थनिःकामसानसहो सवकर्म्मअच्छी तरहसेकरोक्याडरहै कौन्तयसम्बोधनदेकरमाटस्वभावडरनेकाहेतुकहा ९

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् १०

## शाङ्करभाष्यं

इतश्चाधिकृतेनकर्मकर्त्तव्यं सहेति सहयज्ञायज्ञसहिताः प्रजास्त्रयोवर्णा स्ताःसृष्ट्वोत्पाद्य पुरापूर्व्वंसर्गादावुवाचोक्तवान्प्रजापतिः प्रजानांस्रष्टा अनेनयज्ञेन प्रसविष्यध्वं प्रसवोवृद्धिरुत्पत्तिस्तांकुरुध्वमेषवोयज्ञः युष्माकमस्तुभवतु इष्टकामधुकृइष्टानभिप्रेतान्कामान्फलविशेषान्दोग्धीतीष्टकामधुक् १०

## आनन्दगिरिकृतटीका।

कर्मणावध्यतेजन्तुरिति स्मृतेर्व्वन्धार्थंकर्मतत्नश्रेयोऽर्थिनाकर्त्तव्यमित्याशङ्का मनूद्यदूषयति यज्ञेत्यादिना कर्माधिकृतस्यतदकरणमयुक्तमिति प्रतिज्ञातंप्रश्न पूर्व्वकंविवृणोति कथमित्यादिना फलाभिसन्धिमन्तरेणयज्ञार्थंकर्मकुर्व्वाणस्यव न्धाभावात् तादर्थ्येनकर्मकर्त्तव्यमित्याह तदर्थमिति यज्ञार्थंकर्मेत्ययुक्तं नहि कर्मा र्थमेवकर्मेत्याशङ्क्यव्याचष्टे यज्ञोवैविष्णुरिति कथंतर्हिकर्मणावध्यते जन्तुरितिस्मृ तिस्तत्राह तस्मादिति ईश्वरार्पणवुद्ध्याकृतस्यकर्मणोवन्धार्थत्वाभावेफलितमाह अतइति ९

नित्यस्यकर्मणोनैमित्तिकसहितस्याधिकृतेनकर्त्तव्यत्वेहेत्वन्तरपरत्वेनानन्त रश्लोकमवतारयति इतश्चेति कथंपुनरनेनयज्ञेनवृद्धिरस्माभिःशक्याकर्त्तुमित्याशं क्याह एषइति १०

## भाषा अनुवाद।

ब्रह्माकीवाक्यसेभीकर्मकीकर्त्तव्यताहोश्रेष्ठआवतीहै सोईचारिश्लोकसेकह तेहैं कियज्ञकेसाथसहयज्ञअर्थात्यज्ञकेअधिकारीब्राह्मणआदिसवप्रजोंकोसृष्टि केआदिमेउत्पन्नकरनेकेवादि ब्रह्मानेयहीवातकहीकिइसीयज्ञकेद्वारातुमारी वृद्धिहोय इहांप्रसवशब्दकाअर्थवृद्धिहै अर्थात्उत्तरोत्तरवृद्धिहोतीजाय कारणयह कियज्ञतुमारीइष्टकामनाकीदाताहैं इसजगहयज्ञशब्दनित्यकर्मकाउपलक्षणहै अर्थात्यज्ञकहनेसेनित्यकर्मभीसवआवतेहैं औरइहांकाम्यकर्मकीप्रशंसाकरना असङ्गतभीहै तौभीस्वाभाविककोईकर्मनकरनेसे काम्यकर्मकरनाहींउत्तमहै इ सीसेंकहा किउसकाम्यकर्मकेकरनेमेकोईदोपनहींहै १०

देवान्भावयतानेनत्तेदेवाभावयन्तुवः परस्परंभावयन्तः श्रेयःपरमवाप्स्यथ ११

## शाङ्करभाष्यं

कथंदेवानिति देवानिन्द्रादीन्भावयत वर्द्धयतानेनयज्ञेन तेदेवाभावयन्तुआप्याययन्तु वृष्ट्यादिनावोयुष्मानेवंपरस्परमन्योन्यंभावयन्तः श्रेयः परमपिमोक्षलक्षणंज्ञानप्राप्तिं क्रमेणावाप्स्यथ स्वर्गंवापरंश्रेयोवावाप्स्यथ ११

## आनन्दगिरिकृतटीका।

कथंपुनरभीष्टफलविशेषहेतुत्वंयज्ञेऽस्यविज्ञायते नहि देवताप्रसादादृतेस्वर्गादिरभ्युदयोलभ्यते नापिसम्यग्दर्शनमन्तरेण निःश्रेयसंहेतुं मारयतीति शङ्कते कथमिति ततःश्लोकेनोत्तरमाह देवानिति मुमुक्षुत्वबुभुक्षुत्वविभागेन श्रेयसि विकल्पः ११

## स्वामिकृतटीका।

प्रजापतिवचनादपिकर्मकर्त्तव्यमेवेत्याह सहयज्ञाइति चतुर्भिः यज्ञेनसंहवर्त्तन्तइतिसहयज्ञा यज्ञाधिकृताब्राह्मणाद्याःप्रजाः पुरासर्गादौसृष्ट्वेदमुवाचब्रह्मा अनेनयज्ञेनप्रसविष्यध्वं प्रसवोवृद्धिरुत्तरोत्तरामतिवृद्धिंलभध्वमित्यर्थःतत्रहेतुःएषयज्ञःवोयुष्माकमिष्टकामधुक् इष्टान्कामान्दोग्धीतितथाअभीष्टभोगप्रदोऽस्त्वित्यर्थःअत्रचयज्ञग्रहणमावश्यककर्मोपलक्षणार्थं काम्यकर्मप्रशंसात्प्रकरणेऽसङ्गतापिसामान्यतोऽकर्मणः कर्मश्रेष्ठमित्येतदर्थमित्यदोषः १०

कथमिष्टकामदोग्धायज्ञोभवेदित्यत्राह देवानिति अनेनयज्ञेनयूयंदेवान्भावयत हविर्भागैः संवर्द्धयत तेचदेवावोयुष्मान्संवर्द्धयन्तुवृष्ट्यादिनाऽन्नोत्पत्तिद्वारेण एवमन्योन्यंसंवर्द्धयन्तो देवाश्चयूयञ्चपरस्परंश्रेयोऽभीष्टमर्थंप्राप्स्यथ ११

एतदेवस्पष्टीकुर्व्वन्कर्माकरणेदोषमाह इष्टानिति यज्ञैर्भावितादेवावृष्ट्यादिद्वारेणवोयुष्मभ्यंभोगान्दास्यन्ते हिअतोदेवैर्दत्तानन्नादीनेभ्योदेवेभ्यःपञ्चयज्ञादिभिरदत्त्वा योभुङ्क्ते सतु चौर एव ज्ञेयः १२

## भाषा अनुवाद।

यज्ञइष्टकामनाकोदाताकैसेहोगी सोकहतेहैं किइसीयज्ञकेद्वारा तुमसबदेवतावोंकोघृतआहुति देकरबढ़ावो औरवेदेवतासबभीतुमारीवृद्धिकरैंअर्थात् जलबरसायअन्नउपजायतुमकोसन्तुष्टकरैं इसीतरह तुमारादोनोका परस्पर कहेएकसेएककाअभीष्टअर्थसिद्धहोय ११

इष्टान् भोगान्हि वोदेवा दास्यन्ते यज्ञभाविताः
तैर्दत्ता नप्रदायैभ्यो योभुङ्क्ते स्तेन एव सः १२

शाङ्करभाष्यम्।

किञ्चइष्टान्भोगानिति इष्टानभिप्रेतान्भोगान्हिवोयुष्मभ्यंदेवादास्यन्ते वितरिष्यन्तिस्त्रीपशुपुत्रादीन्यज्ञभाविताःयज्ञैर्वर्द्धितास्तोषिताइत्यर्थः तैर्देवैर्दत्तान् भोगानप्रदायादत्वाअनृणमकृत्वेत्यर्थःएभ्योदेवेभ्योयोभुङ्क्तेस्वदेहेन्द्रियाण्येवतर्पय ति स्तेन एव तस्कर एव स देवादिस्वापहारी १२

आनन्दगिरिकृतटीका।

इतश्चाधिकृतेनकर्मकर्त्तव्यमित्याह किञ्चेति कथमस्माभिर्भाविताःसन्तोदेवा भावयिष्यन्तिअस्मानिति तदाह इष्टानिति यज्ञानुष्ठानेनपूर्व्वोक्तरीत्यास्वर्गापवर्ग योर्भावेपिकर्यंस्त्रीपशुपुत्रादिसिद्धिरित्याशंक्यपूर्व्वार्द्धंव्याकरोति इष्टानभिप्रेतानिति पश्वादिसिद्धयेयज्ञानुष्ठानद्वारा भोगोनिवर्त्तनीयोऽन्यथाप्रत्यवायप्रसङ्गादित्युत्तरार्द्धं व्याचष्टे तैरिति आनृण्यमकृत्वेत्ययमर्थः देवानामृषीणांपितॄणाञ्चयज्ञेनब्रह्मचर्य्ये णप्रजयाच सन्तोषमनापाद्य स्वकीयंकार्य्यकारणसंघातमेव पोष्टुंभुञ्जानस्तस्क रोभवतीति १२

देवादिभ्यःसम्विभागमकृत्वा भुञ्जानानांप्रत्यवायित्वमुक्त्वा तदन्येषांसर्व्वदोष राहित्यंदर्शयति येपुनरिति यज्ञशिष्टाशिनोयेपुनस्तेतादृशाःसन्तःसर्व्वकिल्बिषै र्मुच्यन्तइतियोजना तैर्दत्तानित्यादिनोक्तंनिगमयति भुञ्जतइति देवयज्ञादीनि

स्वामिकृतटीका।

इतश्चयजन्तएवश्रेष्ठानेतरइत्याह यज्ञशिष्टाशिनइति वैश्वदेवादियज्ञाव शिष्टंयेऽश्नन्ति तेपञ्चसूनादिकृतैःसर्व्वैःकिल्बिषैर्मुच्यन्ते पञ्चसूनाश्चस्मृतावुक्ताःक ण्डनीपेषणीचुल्लीउदकुम्भीचमार्जनी पञ्चसूनागृहस्थस्यताभिःस्वर्गंनगच्छति ये त्वात्मनोभोजनार्थमेवपचन्ति नतुवैश्वदेवाद्यर्थंतेपापादुराचाराअघमेवभुञ्जते १३

भाषाअनुवाद।

इसकोअच्छीतरहविचारकरिकहतेहैं किकर्मनकरनेसेदोषहोताहै देखो यज्ञसेसन्तुष्टदेवताजलवृष्टिकरिकेतुमसबकेअर्थअन्नआदिनानाप्रकारकेभोगदेय गे तोजोपञ्चयज्ञकेद्वारादेवदत्तअन्नादिवस्तु उनकोनदेकरआपहीभोगकरिलेय सोचोरऔकृतघ्नहैं अग्निअतिथिगऊकोदेनाऔबलिवैश्वदेवकरनापञ्चयज्ञहैं१२

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्व्वकिल्विषैः
भुञ्जते तेत्वघं पापा ये पचन्त्यात्मकारणात् १३

शाङ्करभाष्यं

येपुनः देवयज्ञादीन्निर्व्वर्त्त्य तच्छिष्टमशनममृताख्यमशितुं शीलंयेषांतेयज्ञशिष्टाशिनःसन्तोमुच्यन्तेसर्व्वकिल्विषैःसर्व्वैःपापैश्चुल्ल्यादिपञ्चशूनाकृतैःप्रमादकृतहिंसादिजनितैश्चान्यैर्येत्वात्मम्भरयोभुञ्जते तेत्वघंपापंस्वयमपिपापाः येपचन्तिपाकं निर्व्वर्त्तयन्ति आत्मकारणादात्महेतोः १३

आनन्दगिरिकृतटीका

त्यादिशब्देनपितृयज्ञोमनुष्ययज्ञोभूतयज्ञोब्रह्मयज्ञश्चेति चत्वारोयज्ञाःगृह्यन्तेचुल्लीशब्देनपिठरधारणाद्यर्थक्रियांकुर्व्वतोविन्यासविशेषवन्तस्त्रयोग्रावाणोविवक्षन्ते आदिशब्देनकण्डनीपेषणीसार्जन्युदकुम्भश्चेत्येते हिंसाहेतवोगृहीतास्तान्येतानिपञ्चप्राणिनांशूनास्थानानिहिंसाकारणानितत्प्रयुक्तैः सर्व्वैरपिबुद्धिपूर्व्वकैर्दुरितैर्मुच्यन्तइति सम्बन्धःप्रमादोविचारव्यतिरेकेणाबुद्धिपूर्व्वकमुपनतंपादपातादिकार्य्यंतेनप्राणिनांहिंसासम्भाव्यते आदिशब्देनाशुचिसंस्पर्शादिगृहीतंतदुत्थैश्चपापैर्महायज्ञकारिणोमुच्यन्ते उक्तंहिकण्डनंपेषणंचुल्लीउदकुम्भश्चसार्जनं पञ्चशूनागृहस्थस्यपञ्चयज्ञात्प्रणश्यतीति पञ्चशूनागृहस्थस्यचुल्लीपेषण्यवस्करःकण्डनीचैवकुम्भश्चवध्यतेयास्तुवाहयन्निति च अस्यायमर्थःयायथोक्ताःपञ्चसंख्यकागृहस्थस्यशूनास्तायोवाहयन्नामादयन्वर्त्ततेतेनप्राणिनोबुद्धिपूर्व्वकञ्चवध्यन्तेतत्प्रयुक्तंसर्व्वमपिपापंमहायज्ञानुष्ठानात्प्रणश्यतीतिमहायज्ञानुष्ठानस्तुत्यर्थं तदनुष्ठानविमुखान्निन्दति येत्विति आत्मम्भरित्वमेवस्फोरयति येपचन्तीति स्वदेहेन्द्रियपो

भाषा अनुवाद ।

इसहेतुसेयज्ञकरनेवालेमनुष्यश्रेष्ठहैं औरजोदेवअतिथिअग्निगोग्रासबलिवैश्वदेवयेपञ्चयज्ञनहींकरतेकेवलअपनेवास्तेपाककरकेखातेहैं वेईलोभीपापाचारीहैं सोईकहतेहैं किजोदेवादिकोंकोदेकरआपभोजनकरतेउनकोपञ्चसूनाकापापनहींलगताहै सूनाकहेहत्याकेस्थानगृहस्थोंकेघरमेरोजरोजहत्याहोनेकीपांचजगहहैं घरझारतेचल्हेमेआगबारतेजलकेपात्रसेउखलमेकूटतेचक्कीपीसतेअनेकजीवहिंसाहोतीहै सोपापपञ्चयज्ञनकरनेवालेकोलगतेहैं औरवेस्वर्गवासनहींपावते इससेपञ्चयज्ञअवश्यकरनाचाहियेगृहस्थको १३

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः
यज्ञाद्भवति पर्जन्यो यज्ञः कर्म्मसमुद्भवः १४

शाङ्करभाष्य।

इतश्चाधिकृतेनकर्म्म कर्त्तव्यंजगच्चक्रप्रवृत्तिहेतुर्हि कर्म्मकथमित्युच्यते अन्नाद्भ वन्तीति अन्नाद्भुक्तात्लोहितरेतःपरिणतात् प्रत्यक्षंभवन्तिजायन्तेभूतानिपर्ज्जन्या द्वृष्टेरन्नस्यसम्भवःअन्नसम्भवःयज्ञाद्भवतिपर्जन्यः अग्नौप्रास्ताहुतिःसम्यगादित्य मुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजाइति यज्ञोऽपूर्व्वं सचयज्ञःकर्म्मस मुद्भवः ऋत्विग्यजमानयोश्चव्यापारः कर्म्म ततः समुद्भवोयस्ययज्ञस्यापूर्व्वस्य सय ज्ञःकर्म्मसमुद्भवः १४

आनन्दगिरिकृतटीका।

प्रणार्थमेवप्राकंकुर्व्वतादैवयज्ञादिपराङ्मुखानांपापभूयस्त्वंदर्शयति भुञ्जतइति पाठक्रमस्त्वर्थक्रमादपबाधनीयः १३

दैवयज्ञादिकंकर्म्माधिकृतेनकर्त्तव्यमित्यत्रहेत्वन्तरमितःशब्दोपात्तमेवदर्शयति जगदिति ननुभुक्तमन्नंरेतोलोहितपरिणतिक्रमेणप्रजारूपेणजायतेतच्चान्नंवृष्टि सम्भवं प्रत्यक्षदृष्टं तत् कथंकर्म्मणोजगच्चक्रप्रवर्त्तकत्वमितिशङ्कते कथमितिपार

स्वामिकृतटीका।

जगच्चक्रप्रवृत्तिहेतुत्वादपिकर्म्मकर्त्तव्यमित्याह अन्नादितित्रिभिः अन्नाच्छुक्र शोणितरूपेणपरिणताभूतान्युत्पद्यन्ते अन्नस्यचसम्भवः पर्ज्जन्याद्वृष्टेःसचपर्ज्जन्योय ज्ञाद्भवतिसचयज्ञःकर्म्मसमुद्भवःकर्म्मणायजमानादिव्यापारेणसम्यक्संपद्यतइत्यर्थः अग्नौप्रास्ताहुतिःसम्यगादित्यमुपतिष्ठते आदित्याज्जायतेवृष्टिर्वृष्टेरन्नंततःप्रजा इतिश्रुतेः १४

भाषा अनुवाद।

संसारचक्रमेंप्रवृत्तहोनेकाहेतुजोकर्म्मसोकर्त्तव्यहै यहतीनश्लोकसेकहतेहैं किअन्नहींउदरमेंजायकररसरूपहोशुक्रकहेबीज औशोणितकहेरूधिरहोता जिससेभूत कहेप्राणीउत्पन्नहोते हैं औरसोअन्नमेंवबरसनेसेहोताहै और मेंवयज्ञधूमसेहोते औरवहयज्ञफेरियज्ञकरनेवालोंकेव्यापारसेपूरीहोतीहै यहीबात श्रुतिकहतीहै किअग्निमेंदीहुईआहुति सूर्यलोकमेंरहतीइसीसे सूर्य्यसेवृष्टिहोती औरवृष्टिसेअन्नहोता फेरिउसअन्नसेसबप्रजाजन्मलेतीहै १४

कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवं
तस्मात् सर्व्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितं १५

## शाङ्करभाष्यं

तच्च एवम्विधं कर्म कुतोजातमित्याह कर्मेति तच्चकर्मब्रह्मोद्भवंब्रह्मवेदः सउद्भवोयस्यतत् कर्मब्रह्मोद्भवंविद्धिविजानीहिब्रह्मपुनर्व्वेदाख्यमक्षरसमुद्भवंअक्षरंब्रह्मपरमात्मासमुद्भवोयस्यतदक्षरसमुद्भवंब्रह्मवेदइत्यर्थःयस्मात् साक्षात्परमात्माख्यादक्षरात्तत्पुरुषनिश्वासवत् समुद्भवंब्रह्मतस्मात् सर्व्वार्थप्रकाशकत्वात् सर्व्वगतमपिसत् नित्यंसदायज्ञविधिप्रधानत्वाद्यज्ञेप्रतिष्ठितं १५

## आनन्दगिरिकृतटीका ।

न्यर्थेणकर्म्मणस्तद्धेतुत्वंसाधयति उच्यतइति उक्तेऽर्थेस्मृत्यन्तरंसंवादयति अग्नाविति तत्रहिदेवताभिध्यानपूर्व्वकंतदुद्देशेनप्रहिताहुतिरपूर्व्वतांगता रश्मिद्वारेणादित्यमारुह्यवृष्ट्यात्मनापृथिवींप्राप्यव्रीहियवाद्यन्नभावमापद्यसंस्कृतोभूत्वाशुक्लशोणितरूपेणपरिणता प्रजाभावंप्राप्नोतीत्यर्थः यज्ञःकर्म्मसमुद्भवइत्ययुक्तंस्वस्यैवस्वोद्भवेकारणत्वायोगादित्याशंक्याह ऋत्विगितिद्रव्यदेवतयोःसंग्राहकाश्चकारः१४

यदपूर्व्वहेतुत्वेनकर्मोक्तंतत् किंचैत्यवन्दनादिकिम्वाग्निहोत्रादिइतिसन्दिहानंप्रत्याह कर्मेति किमितिकर्मणोब्रह्मोद्भवत्वमुच्यते सर्व्वस्यतदुद्भवत्वाविशेषादित्याशंक्याह ब्रह्मवेदइति ब्रह्मतर्हिवेदाख्यमनादिनिधनमितितत्राह ब्रह्मपुनरिति अक्षरात्मनोवेदस्यपुनरक्षरेभ्यःसकाशादेवसमुद्भवोनसम्भवतीत्याशंक्याह अक्षरमितिब्रह्मेत्यक्षरमेवोक्तंतत्कथंतस्मादेवोद्भवतीत्याशङ्क्यब्रह्मशब्दार्थमुक्तमेवस्मर

## भाषा अनुवाद

ऐसेअपूर्वहेतुवोंसे कर्म कीश्रेष्ठताऔकर्त्तव्यता किसलियेकहा औकर्म क्यावस्तुहैं सोईविवरनकरतेहैं कियज्ञकारीपुरुषोंकाव्यापाररूपजोकर्म सोब्रह्म कहे वेदसेउत्पन्नभयाऔब्रह्मजो वेदसोअक्षरजो परब्रह्मतिससेप्रगटभयाहै यहजानो औरश्रुतिने भीकहाहैंकिपरब्रह्मकीनिःश्वाससेऋक्यजुरऔरसाम वेदप्रगटेहैं इससेसर्वव्यापीपरब्रह्मसर्वदायज्ञमेंप्रतीतहैं अर्थात्यज्ञरूपउपाय सेब्रह्मप्राप्तिहोतीहै जैसेउद्योगकरनेसेलक्ष्मीकालाभहोताहै अथवाजगतमें मूलकर्महै इससेमन्त्रऔरअर्थकेद्वारा सबमनुष्योंमेंप्राप्तअनादिकालसेस्थित जोवेदब्रह्म सोतात्पर्यकेद्वाराप्रतिष्ठितहै इससेयज्ञादिकर्म अवश्य कर्त्तव्यहै १५

शाङ्करभाष्यं

एवमिति एवमीश्वरेणवेदयज्ञपूर्व्वकंजगच्चक्रंप्रवर्त्तितंनानुवर्त्तयतीहलोकेयःकर्मण्यधिकृतःसन्नघायुरघंपापमायुर्जीवनंयस्यसोऽघायुःपापजीवनइतियावत् इन्द्रियारामइन्द्रियैरारमणमाक्रीडाविषयेषुयस्यसइन्द्रियारामोमोघंवृथाहेपार्थसजीवति तस्मादज्ञेनाधिकृतेनकर्त्तव्यमेवकर्मेतिप्रकरणार्थःप्रागात्मज्ञाननिष्ठायोग्यताप्राप्तेस्तादर्थ्येनकर्मयोगानुष्ठानमधिकृतेनानात्मज्ञेनकर्त्तव्यमित्येतत् नकर्मणामनारम्भादित्यतआरभ्यशरीरयात्रापिचतेनप्रसिध्येदकर्मणइत्येवमन्तेनप्रतिपाद्ययज्ञार्थात्कर्मणोऽन्यत्रेत्यादिनामोघंपार्थसजीवतीत्येवमन्तेनापिग्रन्थेनप्रासङ्गिकमधिकृतस्यानात्मविदःकर्म्मानुष्ठानेबहुकारणमुक्तंतदकरणेचदोषसंकीर्त्तनंकृतं १६

आनन्दगिरिकृतटीका।

ति ब्रह्मवेदइति ननुब्रह्मशब्दितस्यवेदस्यापिपौरुषेयत्वात् प्रामाण्यसन्देहात्कथं तदुक्तमग्निहोत्रादिकं कर्मनिर्द्धारयितुंशक्यते तत्राह यस्मादिति कथंतर्हितस्य यज्ञे प्रतिष्ठितत्वं सर्व्वगतत्वेविशेषायोगादित्याशङ्क्याह सर्व्वगतमपीति १५

अधिकृतेनाध्ययनादिद्वाराजगच्चक्रमनुवर्त्तनीयमन्यथेश्वराज्ञातिलङ्घिनस्तस्यप्रत्यवायःस्यादित्याह एवमिति नकर्मणामनारम्भादित्यादिनोक्तमुपसंहरति तस्मादिति जगच्चक्रस्यप्रागुक्तप्रकारेणाननुवर्त्तनेवृथाजीवनमघसाधनंयस्मात्तस्माज्जीवतानियतंकर्मकर्त्तव्यमित्यर्थः यद्यधिकृतेनकर्त्तव्यमेवकर्मतर्हिकिमित्यज्ञेनेतिविशिष्यतेज्ञाननिष्ठेनापितत्कर्त्तव्यमेवाधिकृतत्वाविशेषादित्याशङ्क्यपूर्व्वोक्तमनुवदति प्रागिति नहिज्ञानकर्मणोर्व्विरोधात्ज्ञाननिष्ठेनकर्मकर्त्तुंशक्यतेतथाचाना

स्वामिकृतटीका।

तथाकर्मेति तच्चयजमानादिव्यापाररूपकर्मब्रह्मोद्भवंविद्धि ब्रह्मवेदस्तस्मात् प्रवृत्तं जानीहि तच्चवेदाख्यंब्रह्मअक्षरात् परब्रह्मणःसमुद्भूतं जानीहि अस्यमहतोभूतस्यनिश्वसितमेतदृग्वेदोयजुर्वेदःसामवेदइतिश्रुतेः यतएवमक्षरादेवयज्ञप्रवृत्तेरत्यन्तमभिप्रेतोयज्ञस्तस्मात् सर्व्वगतमप्यक्षरंब्रह्मनित्यंसर्व्वदा यज्ञेप्रतिष्ठितंयज्ञेनोपायभूतेनप्राप्यतइति यज्ञेप्रतिष्ठितमुच्यतइतिउद्यमस्थासदालक्ष्मीरितिवत् यद्वायस्माज्जगच्चक्रस्य मूलंकर्मतस्मात्सर्व्वगतमन्त्रार्थवादैःसर्व्वेषुभूतार्थाख्यानादिषु गतंस्थितमपि वेदाख्यंब्रह्मसर्वदा यज्ञेतात्पर्य्येण प्रतिष्ठितंअतो यज्ञादिकर्मकर्त्तव्यमित्यर्थः १५

एवंप्रवर्त्तितंचक्रंनानुवर्त्तयतीहयः अघायुरिन्द्रियारामोमोघंपार्थसजीवति १६

## शाङ्करभाष्यं

एवंस्थितेकिमेवंप्रवर्त्तितंचक्रंसर्व्वेणानुवर्त्तनीयमाहोस्वित् पूर्व्वोक्तकर्मयोगानुष्ठानोपायप्राप्यामात्मविदोज्ञानयोगेनैवनिष्ठामात्मविद्भिः सांख्यैरनुष्ठेयामप्राप्तैनैवेत्येवमर्थमर्जुनस्यप्रश्नमाशंक्य स्वयमेवशास्त्रार्थस्यविवेकप्रतिपत्त्यर्थमेवचैतमात्मानंविदित्वानिवृत्तमिथ्याज्ञानाः सन्तोब्राह्मणामिथ्याज्ञानवद्भिरवश्यंकर्त्तव्येभ्यःपुत्रैषणादिभ्योव्युत्थायाथभिक्षाचर्य्यंशरीरस्थितिमात्रप्रयुक्तंचरन्तिनतेषामात्मज्ञाननिष्ठाव्यतिरेकेणान्यकार्य्यमस्तीत्येवंश्रुत्यर्थमिहगीताशास्त्रेप्रतिपादयिषितमाविष्कुर्व्वन्नाहभगवान् यस्त्विति यस्तुसांख्यआत्मज्ञाननिष्ठआत्मरतिःआत्मनिएवर

## आनन्दगिरिकृतटीका।

तत्त्वज्ञेनैवचित्तशुद्ध्यादिपरम्परयाज्ञानार्थंमर्मानुष्ठेयमितिप्रतिपादितमित्यर्थः तर्हियज्ञार्थादित्य ादिकिमर्थंनहितत्त्वज्ञाननिष्ठाप्रतिपाद्यते कर्म्मनिष्ठातुपूर्व्वमेवोक्तत्वान्नात्रवक्तव्येत्याशङ्क्यप्रवृत्तमर्थान्तरमनुवदति प्रतिपाद्येतिप्रासङ्गिकमज्ञस्यकर्म्मकर्त्तव्यतोक्तिप्रसङ्गागतमितियावत् वक्तुकारणमीश्वरप्रसादोदेवताप्रीतिश्चैत्यादिदोषसंकीर्त्तनंतैर्दत्तानप्रदायेत्यादि १६

## स्वामिकृतटीका।

यस्मादेवंपरमेश्वरेणैवभूतानांपुरुषार्थसिद्ध्येकर्म्मादिचक्रंप्रवर्त्तितंतस्मात्तदनुवर्त्तितोवृथैवजीवितमित्याह एवमिति परमेश्वरवाक्यभूताद्वेदाख्यब्रह्मणःपुरुषाणांकर्म्मणिप्रवृत्तिस्ततःकर्म्मनिष्पत्तिस्ततःपर्ज्जन्यस्ततोऽन्नंततोभूतानिभूतानांपुनस्तथैवकर्म्मप्रवृत्तिरित्येवंप्रवर्त्तितंचक्रंयोनानुवर्त्तयतिनानुतिष्ठतिअघंपापरूपमायुर्यस्यसःयतइन्द्रियैर्विषयेष्वेवारमतिनत्वीश्वराराधनार्थेकर्म्मणिअतोमोघंव्यर्थंसजीवति १६

## भाषा अनुवाद।

जिसहेतुईश्वरकीप्रेरणासेमनुष्यसकलपुरुषार्थसिद्धहोनेकेअर्थइससंसारचक्रमेंआयउक्तकर्म्मरूपचक्रमेंप्रवृत्तहैं इससेकर्म्मनकरनेसेमनुष्यकाजन्महींव्यर्थहै यहकहतेहैं किईश्वरकीआज्ञारूपवेदसेपुरुषयज्ञकर्ममेंप्रवृत्तहोतेहैं तिससेमेघऔरमेघसेअन्नअन्नसेप्राणीऔरप्राणीयोंसेफेरिकर्म्मकीप्रवृत्तिहोतीयहचक्रहै अतएवजोईश्वराराधनकर्म्मनहींकरते केवलइन्द्रियोंसेविषयभोगमात्रकरते उनकावृथाजीवनहैं १६

यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवः आत्मन्येवचसन्तुष्टस्तस्यकार्यंनविद्यते१७

शाङ्करभाष्यं

तिर्नविषयेषुयस्यसआत्मरतिरेवस्याद्भवेत् आत्मतृप्तश्चआत्मनैवतृप्तोनान्नरसादि नासमानवोमनुष्यःसंन्यासीआत्मन्येवचसन्तुष्टः सन्तोषोहिबाह्यार्थलाभेनसर्वस्य भवतितमनपेक्ष्यात्मन्येवचसन्तुष्टःसर्वतोविगततृष्णइत्येतत् यईदृशआत्मवित्तस्य कार्यंकरणीयंनविद्यतेनास्तीत्यर्थः १७

आनन्दगिरिकृतटीका।

उक्तमर्थमेवंविभज्यानुद्यानन्तरश्लोकमाशङ्कोत्तरत्वेनावतारयति एवमिति अर्जुनस्यप्रश्नमित्येवमर्थमाशंक्याह भगवानितिसम्बन्धः नन्वेषाशङ्कानावकाशमासादयत्यनात्मज्ञेनकर्त्तव्यंकर्मेतिवक्तुर्शोविशेषितत्वादित्याशंक्याह स्वयमेवेति किमर्थंश्रुत्यर्थंस्वयमेवभगवानत्रप्रतिपादयतिइत्याशंक्याह शास्त्रार्थस्येति गीताशास्त्रस्यसंन्यासज्ञानमेवमुक्तिसाधनमर्थोनार्थान्तरमिति विवेकार्थमिहश्रुत्यर्थंसंक्षिपतिकीर्त्तयतीत्यर्थः तमेवश्रुत्यर्थंसंक्षिपति एतमिति सिद्धञ्चेदात्मवेदनमनर्थकंतर्हिव्युत्थानादीत्याशंक्यापातिकविज्ञानफलमाह निवृत्तेति ब्राह्मणग्रहणंतेषामेवव्युत्थानेमुख्यमधिकारित्वमितिज्ञापनार्थं लोकात्मकत्वादेषणानांताभ्योव्युत्थानंसर्वेषांस्वाभाविकत्वादविधित्सितमित्याशंक्याह भिक्षेति भिक्षाचर्यंचरन्तीतिवचनंव्युत्थानविरुद्धमित्याशंक्याह शरीरेतितर्हितद्वदेवतेषामग्निहोत्राद्यपिकर्त्तव्यमापद्येतेत्याशंक्यव्युत्थायिनामाश्रमधर्मवदग्निहोत्रादेरनुष्ठापकभावान्नैवमित्याहनतेषा

स्वामिकृतटीका

तदेवंनकर्मणामनारम्भादित्यादिनाअज्ञस्यान्तःकरणशुद्ध्यर्थंकर्मयोगमुक्त्वा ज्ञानिनःकर्मानुपयोगमाह यस्त्विति द्वाभ्यां आत्मन्येवरतिःप्रीतिर्यस्यसःततश्चात्मन्येवतृप्तः स्वानन्दानुभवेननिर्वृतःअतएवात्मन्येवसंतुष्टोभोगापेक्षारहितोयस्तस्य कर्त्तव्यंकर्मनास्तीति १७

भाषाअनुवाद

कर्मणामनारम्भादित्यादिश्लोकसे अज्ञानीपुरुषकेअन्तःकरणशुद्धिकेहेतुकर्म योगकहिकरअबज्ञानीकोकर्मनकरना दोश्लोकसेकहतेहैं किजिसकीआत्मामे रतिकहेप्रीतिऔआत्मआनन्दमेमगनतथाआत्मामेसन्तुष्टहैं औरभोगादिसेरहित हैंऐसेजोतत्त्वज्ञानीउनकोकोईकर्मकरनानहींहै औरसबकोतोकरनाहीहै१७

## शाङ्करभाष्यं।

किञ्चनैवेति नैवतस्य परमात्मरतेः कृतेनकर्मणार्थः प्रयोजनमस्ति अस्तुतर्ह्यकृतेनअकरणेनप्रत्यवायाख्योनर्थोनाकृतेनेहलोकेकश्चनकश्चिदपिप्रत्यवायप्राप्तिरूपः आत्महानिलक्षणोवानैवास्ति नचास्यसर्वभूतेषुब्रह्मादिस्थावरान्तेषुकश्चिदर्थव्यपाश्रयःप्रयोजननिमित्तक्रियासाध्योव्यपाश्रयः व्यपाश्रयणंआलम्बनंकञ्चिद्भूतविशेषमाश्रित्यनसाध्यःकश्चिदर्थोऽस्तियेनतदर्थाक्रियानुष्ठेयास्यान्नत्वंएतस्मिन्सर्वतःसंप्लुतोदकस्थानीयेसम्यग्दर्शनेवर्त्तसे १८

## आनन्दगिरिकृतटीका।

मिति यथोक्तंश्रुत्यर्थमस्मिन्गीताशास्त्रेपौर्व्वापर्येणपर्य्यालोच्यमानेप्रतिपादयितुमिष्टंप्रकटीकुर्व्वन्कर्त्तव्यमेवकर्म्मजीवतेतिनियमेज्ञानयोगेनसांख्यानामिति चोद्यपरिहारमुपदर्शयति इत्येवमिति आत्मनिष्ठस्यविषयसङ्गराहित्यंदृष्टंतदनात्मज्ञेनजिज्ञासुनाकर्त्तव्यमितिमत्वाह यस्तुसांख्यइति किञ्चआत्मज्ञस्यज्ञानेनात्मनैवपरितृप्तत्वान्नान्नपानादिनासाध्यातृप्तिरिष्टा तेनविद्यार्थिनासंन्यासिनापिनान्नरसादावासक्तिर्युक्ताकर्त्तुमित्याह आत्मतृप्तइति किञ्चआत्मविदःसर्व्वतोवैतृष्ण्यंदृष्टंतदनात्मविदाविद्यार्थिनाकर्त्तव्यमित्याह आत्मन्येवेति रतितृप्तिसन्तोषाणांमोदप्रमोदानन्दवदवान्तरभेदः अथवारतिर्व्विषयासक्तिःतृप्तिर्विषयविशेषसम्पर्कजंसुखंसन्तोषोऽभीष्टविषयमात्रलाभाधीनंसुखसामान्यमितिभेदःनन्वात्मरतेरात्मतृप्तस्यात्मन्येवसन्तुष्टस्यापिकिञ्चित्कर्त्तव्यंसुक्तयेभविष्यतीतिनेत्याह यस्त्विति १७

इतश्चात्मविदोनकिञ्चित् कर्त्तव्यमित्याह किञ्चेति अभ्युदयनिःश्रेयसयोरन्यतरत्प्रयोजनंकृतेनसुकृतेनात्मविदोभविष्यतीत्याशंक्याह नैवेति प्रत्यवायनिवृत्तयेस्वरूपप्रच्युतिप्रत्याख्यानायवाकर्मस्यादित्याशंक्याह नेत्यादिना ब्रह्मादिषुस्थावरान्तेषुभूतेषुकञ्चिद्भूतविशेषमाश्रित्यकश्चिदर्थोविदुषःसाध्योभविष्यति तदर्थंतेनकर्त्तव्यंकर्मेत्याशंक्याह नचेति तत्राद्यंपदमादत्ते नैवेति तंव्याचष्टे तस्येति आत्मविदःस्वर्गाद्यभ्युदयानर्थित्वं निःश्रेयसस्यचप्राप्तत्वान्नकृतंकर्मार्थवदित्यर्थः आत्मविदाचेत्कर्मनक्रियतेतर्हितेनाकृतेनतस्यानर्थोभविष्यतीति ततप्रत्याख्यानार्थंतस्यकर्त्तव्यंकर्मेतिशङ्कते तर्हीति द्वितीयपादेनोत्तरमाह नेत्यादिना अतोनतन्निवृत्त्यर्थंकृतमर्थवदितिशेषः द्वितीयंभागंविभजते नचास्येति व्यपाश्रयणमालम्बनंनेतिसम्बन्धः पदार्थमुक्त्वावाक्यार्थमाह भूकिञ्चिदिति तविशेषस्याश्रित

नैवतस्यकृतेनार्थोनाकृतेनेहकश्चन नचास्यसर्वभूतेषुकश्चिदर्थव्यपाश्रयः १८

आनन्दगिरिकृतटीका।

स्वापिक्रियाद्वाराप्रयोजनप्रसवहेतुत्वमिति तर्हिमयापियथोक्तंतत्वमाश्रित्यत्या
ज्यमेवकर्मेत्यर्जुनस्यमतमाशंक्याह नत्वमिति १८

सम्यग्ज्ञाननिष्ठत्वाभावेकर्मानुष्ठानमावश्यकमित्याह यतइति तस्मात्ज्ञान
निष्ठाराहित्यादितियावत् मोक्षमेवापेक्षमाणस्यकथंकर्मणिफलान्तरवतिनियो
गःस्यादित्याशंक्याह असक्तोहीति १९

स्वामिकृतटीका।

तत्रहेतुमाह नैवेति कृतेनकर्मणातस्यार्थःपुण्यंनैवास्तिनचाकृतेनकश्चनकोऽपिप्र
त्यवायोऽस्तिनिरहङ्कारत्वेनविधिनिषेधातीतत्वात् तथापितद्वेषांनप्रियंयदेत
न्मनुष्याविद्वरिति श्रुतेर्मोक्षेदेवकृतविघ्नसम्भवात्तत्परिहारार्थंकर्मभिर्देवाः सेव्या
इत्याशंक्योक्तसर्वभूतेषुब्रह्मादिस्थावरान्तेषुकश्चिदप्यर्थव्यपाश्रयःआश्रयएवव्यपाश्र
यःअर्थेमोक्षेआश्रयणीयोऽस्यनास्तीत्यर्थः विघ्नभावस्यश्रुत्यैवोक्तत्वात् तथाचश्रुतिः
तस्यहनदेवाश्चनाभूत्याईशतेआत्माह्येषांसम्भवतीति नेत्यव्ययमप्यर्थेदेवाअपित
स्यात्मतत्त्वज्ञस्यअभूत्यैब्रह्मर प्रतिबन्धायनेशतेनशक्नुवन्तीतिश्रुतेरर्थः देवकृता
स्तुविघ्नाःसम्यग्ज्ञानोत्पत्तेःप्रागेवयदेतद्ब्रह्ममनुष्याविदुस्तदेषांदेवानांनप्रियमिति
श्रुत्याब्रह्मज्ञानस्यैवाप्रियत्वोक्त्यातत्रैवविघ्नकर्तृत्वस्यसूचितत्वात् १८

भाषा अनुवाद।

जोतत्त्वज्ञानीकहेआत्मज्ञानीपुरुषहै उसकोकोईभीकर्मकरनानहीं सो
ईकहतेहैं किनज्ञानीकोकर्मकरनेसेपुन्यहै औरकर्मनकरनेसेप्रत्यवायकहे
पापभीनहींहै क्योंकिज्ञानीतोनिरहङ्कारहै इससेउसकोकिसीकर्मकाविधि
औनिषेधनहींहै वहसबसेअलगहै जोकहोकि श्रुतिकहतीहै किदेवतोंकोइ
च्छानहींहै किमनुष्यब्रह्मकोजानेऔब्रह्मज्ञानीहोमोक्षपावे तोनिश्चयहै किमो
क्षहोनेमेदेवताविघ्नकरैंगे इसवास्तेविघ्नवारणकेअर्थदेवतोंकीसेवारूपकर्मजरूर
हीकरनापडैगाइसपरकहतेहैं किब्रह्मसेलेकरऔअस्थावरपर्य्यन्तकिसीकीस
हायज्ञानीकोदरकारनहींहै क्योंकिज्ञानमार्गमेविघ्नकाअभावहै यहश्रुतिसे
कहिचुकेहैं इससेआत्मदर्शीकोप्राणीमात्रकाआश्रयकहे अवलम्बकाकुछकाम
नहींहै १८

तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः १९

## शाङ्करभाष्यं।

यत एवं तस्मादिति तस्मादसक्तः संसर्गवर्जितः सततं सर्व्वदा कार्य्यं कर्त्तव्यं नित्यं कर्म समाचर निर्व्वर्त्तय असक्तो हि यस्मात् समाचरन्नीश्वरार्थं कर्म कुर्व्वन् परमाप्नोति पुरुषः मोक्षमाप्नोति पुरुषः सत्त्वशुद्धिद्वारेणेत्यर्थः १९

यस्माच्च कर्म्मणैवेति कर्म्मणैव हि तस्मात्पूर्व्वे क्षत्रियाः विद्वांसः संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ता जनकादयो जनकाश्वपतिप्रभृतयो यदि ते प्राप्तसम्यग्दर्शनास्ततो लोकसंग्रहार्थं प्रारब्धकर्मत्वात् कर्मणा सहैवासंन्यस्यैव कर्म संसिद्धिमास्थिता इत्यर्थः अथाप्राप्तसम्यग्दर्शना जनकादयस्तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिमास्थिता इति व्याख्येयः श्लोकोऽयं मन्यते पूर्व्वैरपि जनकादिभिरप्यजानद्भिरेव कर्त्तव्यं कृतं कर्म तावता नावश्यमन्येन कर्त्तव्यं सम्यग्दर्शनवता कृतार्थेनेति तथापि प्रारब्धकर्मायत्तस्त्वं लोकसंग्रहमेवापि लोकस्योन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहस्तमेवापि प्रयोजनं सम्पश्यन्कर्त्तुमर्हसि २०

## स्वामिकृतटीका।

यस्मादेवंभूतस्य ज्ञानिन एव कर्मानुपयोगो नान्यस्य तस्मात्त्वं कर्म कुर्व्वित्याह तस्मादिति असक्तः फलसङ्गरहितः सन्कार्य्यमवश्यकर्त्तव्यतया विहितं नित्यनैमित्तिकं कर्म सम्यगाचर हि यस्मादसक्तः कर्माचरन्पुरुषः परं मोक्षं चित्तशुद्धिद्वारा प्राप्नोति १९

अत्र सदाचारं प्रमाणयति कर्म्मणैवेति कर्म्मणैव शुद्धसत्त्वाः सन्तः संसिद्धिं सम्यग्ज्ञानं प्राप्ता इत्यर्थः यद्यपि त्वं सम्यग्ज्ञानिनमेवात्मानं मन्यसे तथापि कर्माचरणं भद्र

## भाषाअनुवाद।

इससे हे अर्जुन ज्ञानी पुरुषही को कर्म कर्त्तव्य नहीं है और मनुष्य को तो कर्म करनाही उचित है सो तुम कर्म करो यही कहते हैं कि तस्मात् कहे तिससे असक्त हो कर्त्तव्य कर्म निरन्तर समाचर कहे करो असक्त हो पुरुष कर्म करते हुये परजो मुक्ति उसको प्राप्त होते हैं अर्थात् फलकामनारहित होकर अवश्य कर्म जो नित्यनैमित्तिक हैं सो सब करो जिस हेतु आशक्तिरहित कर्मकारी मनुष्य परम जो मुक्ति उसको चित्तशुद्धि के द्वारा पावता है नित्यकर्म सन्ध्यावन्दनादिक हैं और नैमित्तिक जो निमित्त पायकर किये जाय जैसे पुत्रजन्म मे जातकर्मादिक हैं इससे यह जनाया कि तुमको युद्धभी नैमित्तिक कर्म करना आवश्यक है १९

कर्मणैवहिसंसिद्धिमास्थिताजनकादयः लोकसंग्रहमेवापिसंपश्यन्कर्त्तुमर्हसि २०

## आनन्दगिरिकृतटीका।

यद्यपिजितेन्द्रियोऽपिविवेकीश्रवणादिभिरजस्रंब्रह्मणिनिष्ठातुंशक्नोतितथा पिज्ञानयेण्वयाविहितंकर्मनत्याज्यमित्याह यस्मादिति तस्मात्त्वमपिकर्मकर्त्तुमर्ह सीतिसम्बन्धः इतोपित्वयाविहितंकर्मकर्त्तव्यमित्याह लोकेति पूर्वार्द्धंविभजते कर्मणैवेति कथंजनकादीनांकर्मणासंसिद्धिप्राप्तिरुच्यतेकर्मत्यजांहिसम्यग्दर्शनव तांप्रसिद्धासंसिद्धिरिति तत्किंजनकादयोपिप्राप्तसम्यग्दर्शनाःस्युःउतअप्राप्तसम्यग्द र्शनाभवेयुरिति विकल्प्यप्रथमंप्रत्याह यदीति लोकसंग्रहार्थंकर्मणासहैवसंसिद्धि मास्थिताइतिसम्बन्धः कर्मणासहैवेत्येतत्व्याकरोति असंन्यस्यैवकर्मेतितत्रहेतु माह प्रारब्धेति जनकादीनांसत्यपिज्ञानित्वेप्रारब्धकर्मवशात्कर्मापरित्यज्यैवलो कसंग्रहार्थंप्रवर्त्तमानानांज्ञानमाहात्म्यप्रादुपपन्नासंसिद्धिरित्यर्थः द्वितीयमनूद्यपूर्वा र्द्धेनोत्तरमाह अथेत्यादिना द्वितीयार्द्धव्यावर्त्त्यांशङ्कामुत्थापयति अथेति अज्ञेना कृतार्थेनकृतंकर्मेत्येतावताज्ञानवताकृतकृत्येननतत् कर्त्तव्यमित्युक्तमङ्गीकरोतित थापीति तर्हिमयापिज्ञानवताकृतार्थेनकर्मनकर्त्तव्यमित्याशंक्यार्जुनस्यकर्त्तव्यमेव कर्मेत्युत्तरार्द्धव्याख्यानेनकथयति प्रारब्धेति २०

## स्वामिकृतटीका।

सेवेत्याह लोकसंग्रहमित्यादि लोकस्यसंग्रहःस्वधर्मेप्रवर्त्तनंमयाकर्माणिकृतेजनः सर्वोऽपिकरिष्यति अन्यथाज्ञानिदृष्टान्तेनाज्ञोनिजधर्मंनित्यंकर्मत्यजन्पतेदित्येवं लोकरक्षणमपितावत्प्रयोजनंपश्यन्कर्म्मकर्त्तुमेवार्हसिनत्यक्तुमित्यर्थः २०

## भाषा अनुवाद।

अवइसविषयमेंज्ञानीयोंकेआचरणकोप्रमाणदेतेहैं किदेखोपरमज्ञानीजन कराजाकर्मकेआचरणकरनेसेशुद्धसत्त्वहोकरअच्छीतरह ज्ञानकोप्राप्तभयेथेऔर जोतुमसम्पूर्णज्ञानीअपनेकोजानोतौभीकर्मकरनाही श्रेयकहेकल्याणहै यहक हतेहैंकिसवमनुष्योंकोकर्ममेंप्रवृत्तिकेअर्थअर्थात्हमारेकर्मकरनेसेसवलोगकर्म करैंगेनहींतोज्ञानीकाव्यवहारदेखिअज्ञानीलोगभीव्यवहारछोड़िवैठैंगे इसहेतु लोककीरक्षाकेअर्थकर्मकरनाप्रयोजनहै यहविचारिकर्मकरनायोग्यहै सोतु मभूलकेभीकर्मनत्यागकरना २०

यद्यदाचरतिश्रेष्ठस्तत्तदेवेतरोजनः सयत्प्रमाणंकुरुतेलोकस्तदनुवर्त्तते २१

शाङ्करभाष्यं।

लोकसंग्रहःकिमर्थंउच्यते यद्यदिति यद्यत्कर्मआचरतिश्रेष्ठःप्रधानस्तत्त देवकर्माचरति इतरोजनस्तदनुगतःकिञ्चश्रेष्ठोयत्प्रमाणंकुरुतेलौकिकंवैदिकं वालोकस्तदनुवर्त्तते तदेवप्रमाणीकरोतीत्यर्थः २१

आनन्दगिरिकृतटीका।

ज्ञानवताकृतार्थेनलोकसंग्रहार्थमपिनप्रवर्त्तितव्यमित्याशङ्कामुत्थाप्यपरिहरति लोकेत्यादिना श्रुताध्ययनसम्पन्नत्वेनाभिमतोयद्यद्विहितंप्रतिषिद्धंवाकर्मानुति ष्ठतितत्तदेव प्राकृतोजनोऽनुवर्त्तते तेनविद्यावताऽपिलोकमर्य्यादास्थापनार्थंविहितं कर्त्तव्यमित्यर्थः श्रेष्ठानुसारित्वमितरेषामाचारेदर्शयित्वाप्रतिपत्तावपिदर्शय ति किञ्चेति २१

कृतार्थस्यापिलोकसंग्रहार्थंविहितंकर्मकर्त्तव्यमित्युक्त्वातत्रैवभागवतमतमुदा हरणत्वेनोपन्यस्यतियदित्यादिना अप्राप्तस्यप्राप्तयेतवापिकर्त्तृत्वसम्भवात्नकिञ्चि दपिविद्यतेकर्त्तव्यमिति कथमुक्तमित्याशंक्याह नानवाप्तमिति प्रतीकमुपादाय व्याख्यानद्वाराविद्यावतोऽपिकर्म्मप्रवृत्तिंसम्भावयति नेत्यादिना अन्वयार्थंपुनर्नञो नुवादः भगवतोमेनास्तिकर्त्तव्यमित्येतदाकाङ्क्षाद्वारास्फोरयति कस्मादित्या दिना प्रयोजनाभावेत्वयापिनानुष्ठेयंकर्मेत्याशङ्क्यलोकसंग्रहार्थंममापिकर्मानु ष्ठानमितिमत्वाह तथापीति २२

स्वामिकृतटीका।

कर्म्मकरणेलोकसंग्रहोयथास्यात्तदाह यद्यदिति इतरःप्राकृतोऽपिजनस्तत्त देवाचरतिसश्रेष्ठोजनःकर्म्मशास्त्रंतन्निवृत्तिशास्त्रंवायत्प्रमाणंमन्यते तदेवलोकोऽ प्यनुसरति २१

भाषा अनुवाद।

औरतुमारेकर्म्मकरनेसे सबलोगोंकीकर्ममेरुचिहोयगीयहकहतेहैं किश्रे ष्ठकहेबडेलोगनिवृत्तियाप्रवृत्तिकर्मजोप्रमाणमानतेऔकरतेहैं सोईसाधारण मनुष्यभीआचरणकरतेहैं अर्थात् उनकेअनुसारहीसबव्यवहारके अनुगा मीहोतेहैं २१

नमेपार्थास्तिकर्त्तव्यंत्रिषुलोकेषुकिञ्चन नानवाप्तमवाप्तव्यंवर्त्तएवचकर्मणि २२
यदिह्यहंनवर्त्तेयंजातुकर्म्मण्यतन्द्रितः ममवर्त्मानुवर्त्तन्तेमनुष्याःपार्थसर्व्वशः २३

## शाङ्करभाष्यं

यद्यवलोकसंग्रहकर्त्तव्यतयांविप्रतिपत्तिस्तर्हिमांकिंनपश्यसि नेति नमेमम पार्थनास्तिनविद्यतेकर्त्तव्यंत्रिष्वपिलोकेषुकिञ्चनकिञ्चिदपिकस्मात्अनवाप्तमप्राप्तमवाप्तव्यं प्रापणीयंतथापिवर्त्तएवचकर्म्मण्यहं २२

यदिहिपुनरहंनवर्त्तेयंजातुकदाचित् कर्म्मण्यतन्द्रितोऽनलसःसन्ममश्रेष्ठस्य सतोवर्त्ममार्गमनुवर्त्तन्तेमनुष्याःहेपार्थसर्व्वशःसर्व्वप्रकारैः २३

## आनन्दगिरिकृतटीका।

लोकसंग्रहोपिनतेकर्त्तव्योविफलत्वादित्याशंक्याह यदिहीति २३

श्रेष्ठस्यतवमार्गानुवर्त्तित्वं मनुष्याणामुचितमेवेत्याशंक्यदूषयति तथाचेत्यादिना ईश्वरस्यकर्मण्यप्रवृत्तौतदनुवर्त्तिनामपिकर्म्मानुपपत्तिरिति हेतुमाह लोकस्थितीति इतश्चेश्वरेणकर्मकर्तव्यमित्याह किञ्चेति यदिकर्मनकुर्यामिति शेषः सङ्करकरणस्यकार्यंकथयति तेनेति प्रजोपहतिरपिप्राप्यते चेत् किंतयातवस्यादितितत्राह प्रजानामिति त्वामनाचरन्तमनुवर्त्ततां सर्व्वेषांकोदोषःस्यादित्यपे

## स्वामिकृतटीका।

अत्रचाहमेवदृष्टान्तइत्याह नमेइतित्रिभिः हेपार्थमेकर्त्तव्यंनास्तियतस्त्रिष्वपि लोकेष्वनवाप्तमप्राप्तंअवाप्तव्यंप्राप्यंनास्तितथापिकर्मणिवर्त्तएवकर्मकरोम्येवेत्यर्थः२२

अकरणेलोकस्यनाशंदर्शयति यदिह्यहमिति जातुकदाचिदतन्द्रितोऽनलसः सन्यदिकर्मणिनवर्तेयंकर्मनानुतिष्ठेयंतर्हिममैववर्त्ममार्गंमनुष्याअनुवर्त्तन्तेऽनुवर्त्तरन्नित्यर्थः २३

## भाषा अनुवाद।

इसविषयमेभगवानअपनेकोदृष्टान्तकहतेहैं किहेपार्थअर्ज्जुनदेखोत्रैलोक्यमेभीहमकोकर्त्तव्यकर्मकुछनहींहै तौभीहमकर्मकर्त्तेहीरहतेहैं औरहमकोत्रिभुवनमेअलभ्यतयाकिसीवस्तुमेअभिलाषनहींहै यहजानो २२

तौफिरिजोहमकर्मनकरैंतोकर्मनकरनेसेजोलोगोंकीहानिहोयगीसोदेखावतेहैं किजोसावधानहोकर्ममेहमकभीनवर्त्तमानहोंय तोसबलोगहमारीहीराहचलेंअर्थात्हमारीनाईंकरैं २३

उत्सीदेयुरिमेलोकानकुर्य्यांकर्म्मचेदहं सङ्करस्यचकर्त्तास्यामुपहन्यामिमाःप्रजाः२४

## शाङ्करभाष्यम्।

तथाचकोदोषइत्याह उत्सीदेयुर्व्विनश्येयुरिमे सर्व्वलोकाः लोकस्थितिनिमित्तस्यकर्म्मणोऽभावात् नकुर्य्यांकर्मचेदहं किञ्चसङ्करस्यचकर्त्तास्यां तेनकारणेनोपहन्यामिमाः प्रजाःप्रजानामनुग्रहायप्रवृत्तस्तदुपहतिं उपहननंकुर्य्यामित्यर्थः ममेश्वरस्यानतुरूपमापद्येत यदिपुनरहमिवत्वं कृतार्थबुद्धिरात्मविदन्योवातस्याप्यात्मनः कर्त्तव्याभावेपिपरानुग्रहएव कर्त्तव्यइति २४

## आनन्दगिरिकृतटीका।

व्याख्यासीश्वरस्यकृतार्थतया कर्म्मानुष्ठानाभावेतदनुवर्त्तिनामपितदभावादेवस्थितिहेत्वभावात् पृथिव्यादिभूतानांविनाशप्रसङ्गादर्णाश्रमधर्म्मव्यवस्थानुपपत्तेश्चाधिकृतानांप्राणभृतां पापोपहतत्वप्रसङ्गात् परानुग्रहार्थप्रवृत्तिरीश्वरस्येत्युक्तंसम्प्रति लोकसंग्रहायकर्म्मकुर्व्वाणस्यकर्तृत्वाभिमानेनज्ञानाभिभवेप्राप्तेप्रत्याह यदिपुनरिति कृतार्थबुद्धित्वेहेतुमाह आत्मविदिति यथावदात्मानमवगच्छन्कर्तृत्वाद्यभिमानाभावात् कृतार्थोभवत्येवेत्यर्थः अर्ज्जुनादन्यत्रापिज्ञानवति कृतार्थबुद्धित्वकर्तव्यत्वाद्यभिमानहीने तुल्यमित्याह अन्योवेति तस्यतर्हिकर्मानुष्ठानमफलत्वादनर्थकमित्याशंक्याह तस्यापीति कर्तव्यइत्यात्मविदामपिपरानुग्रहायकर्तव्यमेवकर्मत्याहेति शेषः २४

दृष्टान्तदार्ष्टान्तिकरूपं श्लोकंव्याकरोति सक्ताइत्यादिना असक्ताः सन्कर्तृत्वाभिमानं फलाभिसन्धिंवाऽकुर्व्वन्निति यावत् २५

## स्वामिकृतटीका।

ततः किमतआह उत्सीदेयुरिति उत्सीदेयुःधर्म्मलोपेननश्येयुः ततश्चयोवर्णसङ्करोभवेत्तस्याप्यहमेव कर्त्ता स्यांभवेयं एवमहमेव प्रजाउपहन्यांमलिनीकुर्य्यामिति २४

## भाषा अनुवाद।

तौ उसमेंजोहोगासोकहतेहैं किजोहमकर्म्मन करैं तोधर्मलोपहो जाय औरधर्मलोपसेप्रजानष्टहोयगीऔवेमर्जादहो राहछोड़जोजिसकेमनमानै सोईकरैतो संसारमेंदुराचार सेवर्णसङ्करजन्मैगेफेरिइसअनुचितकेकर्त्ताभीहमीठहरेअपनीप्रजाआपहीनष्टकिया यहीहोगा २४

सक्ताः कर्म्मण्यविद्वांसो यथा कुर्वन्ति भारत
कुर्य्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहं २५
नबुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनां
योजयेत् सर्वकर्म्माणि विद्वान्युक्तः समाचरन् २६

शाङ्करभाष्यं

सक्ताइति सक्ताः कर्मण्यकर्मणः फलंममभविष्यतीति केचिदविद्वांसोयथा कुर्वन्ति भारत कुर्य्याद्विद्वानात्मवित्तथाअसक्तः सन्तद्वत् किमर्थंकरोति तच्छृणु चिकीर्षुर्यथा कर्तुमिच्छुः लोकसंग्रहं २५

आनन्दगिरिकृतटीका।

उक्तमनूद्योत्तरश्लोकमवतारयति एवमिति कर्तव्यंकर्मेति शेषः पूर्वार्द्धमेव व्याख्यायउत्तरार्द्धं प्रश्नपूर्वकं अवतार्य्यव्याचष्टे किन्तु कुर्य्यादिति सर्वकर्माणिकारयेत्तेषु प्रीतिं कुर्वन्निति शेषः कथंकारयेदित्याकाङ्क्षायामाह तदेवेति २६

स्वामिकृतटीका।

तस्मादात्मविदापिलोकसंग्रहार्थंतत्कृपया कर्मकार्य्यमेवेत्युपसंहरति सक्ताइति कर्मणिसक्ताः अभिनिविष्टाःसन्तो यथाऽज्ञाःकर्म्माणि कुर्वन्ति असक्तः सन् विद्वानपितथैव कुर्य्याल्लोकसंग्रहं कर्तुमिच्छुः २५

भाषा अनुवाद।

इसवास्तेआत्मज्ञानी कोभी लोगोंपरकृपाकरि शिक्षादेनेकेअर्थकर्मकरना चाहिये इसीको कहते हैं किहेभारत अर्जुन कर्ममेंआसक्त होकरजैसेअज्ञानी लोगकर्मकरते हैं तैसेलोगोंके उपदेशकी इच्छा करि विद्वानकहे ज्ञानीभीकर्म करैतो धर्मकोमार्ग वनीरहैगी २५

तोफेरिसवकोतत्त्वज्ञानहीकाउपदेशकरनाचाहियेऐसाकहोसोनहींयह कहतेहैं किअज्ञजोकर्ममेंआसक्तहैं तिनकोआत्मउपदेशदेकरवुद्धिकाभेदउत्पन्न कभीनकरैअर्थात् कर्मसेउनकोनछुड़ावै वलुउनसेंऔरभीकर्मकरावै तोफेरउन सेंकिसतरहकर्मकरावैसोकहतेहैं किआपसावधानहोकर्मकाआचरणकरतउ नसेंकरवावै नहींतोउनकीवुद्धिचलविचलकरावनेसेफेरिकर्ममेंउनकी श्रद्धाचली जायगीऔरजोज्ञानकीभीउत्पत्तिनभईतोउनकीदोनोराहनष्टगईविचारेअज्ञानी उधरकेभीनभयेऔरइधरसेभीचलेगयेयहीहोगा २६

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते २७

शाङ्करभाष्यं

एवंलोकसंग्रहंचिकीर्षोर्ममात्मविदःकर्त्तव्यमस्त्यन्यस्यवालोकसंग्रहमुक्तात्ततस्स्वात्मविदिदमुपदिश्यते नेति बुद्धेर्भेदोबुद्धिभेदःमयाइदंकर्त्तव्यंभोक्तव्यञ्चास्यकर्मणःफलमितिनिश्चयरूपायांबुद्धेर्भेदनंचालनंबुद्धिभेदस्तन्नजनयेन्नोत्पादयेदज्ञानामविवेकिनांकर्मसङ्गिनांकर्मण्यासक्तानांआसक्तवतां किन्तुकुर्य्याजोजयेत् कारयेत् सर्वकर्माणि विद्वान्स्वयंतदेवाविदुषांकर्मयुक्तोऽभियुक्तःसमाचरन् २६

अविद्वान्अज्ञःकथंकर्मसुसज्जतइत्याह प्रकृतेरिति प्रकृतेःप्रकृतिःप्रधानंसत्त्वरजस्तमसांगुणानांसाम्यावस्थातस्याःप्रकृतेर्गुणैर्विकारैः कार्य्यकरणरूपैःक्रियमाणानिकर्माणिलौकिकानिशास्त्रीयाणिचसर्वशःसर्वप्रकारैरहङ्कारविमूढात्माका

आनन्दगिरिकृतटीका।

अज्ञानांकर्मसङ्गिनामित्युक्तं तेनोत्तरश्लोकस्यसङ्गतिमाह अविद्वानिति कर्तृत्वमात्मनोवास्तवमित्यभ्युपगमाद्विद्वान्कथंकुर्व्वन्नेवतस्याभावंपश्यतीत्याशंक्याहप्रकृतेरिति कर्मस्वविदुषःसक्तिप्रकारंप्रकटयन्व्याकरोति प्रकृतेरित्यादिना प्रधानशब्देनमायाशक्तिरुच्यते अविद्ययेत्युभयतः संवध्यते २७

स्वामिकृतटीका।

ननुकृपयातत्त्वज्ञानमेवोपदेष्टुंयुक्तंनेत्याह नबुद्धिभेदमिति अज्ञातएवकर्मसङ्गिनाकर्मासक्तानामकर्त्रात्मोपदेशेन बुद्धेर्भेदमन्यथात्वंनजनयेत् कर्मणःसकाशाद्बुद्धिविचालनंनकुर्य्यात् अपितु योजयेत्सेवयेत् अज्ञानकर्माणिकारयेदित्यर्थःकथंयुक्तोऽमहितोभूत्वा स्वयमाचरन्सन्बुद्धिविचालनेकृतेसतिकर्मसुश्रद्धानिवृत्तेर्ज्ञानस्यचानुत्पत्तेस्तेषामुभयभ्रंशःस्यादिति भावः २६

भाषा अनुवाद।

जोकहोकिइसप्रकारजोज्ञानीकर्मकरैतोअज्ञानीऔज्ञानीकेवीचक्याविशेषरहा इसीअभिप्रायपरदोश्लोकसेदोनोंकाअन्तरदेखावतेहैं किदेखोमूढ़लोगप्रकृतिजोमायासोइन्द्रियोंकेद्वाराजोसवकर्मकरतीहै उनकर्मोंकोहमकरतेहैंऐसामानिलेतेहैं मानिलेनेकाकारणयहहै किअहङ्कारसेइन्द्रियोंमेंआत्माकाअध्यासअर्थात्इन्द्रियोंकोआत्माजानिकरउनकीबुद्धिमूढ़होगईहै २७

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः गुणागुणेषु वर्तन्त इति मत्वा न सज्जते २८

शाङ्करभाष्यं।

र्य्यकरणसंघातात्मप्रत्ययोऽहङ्कारस्तेन विविधं नानाविधं मूढः आत्मान्तःकरणं यस्य सोऽयं कार्य्यकरणधर्मा कार्य्यकरणाभिमान्यविद्यया कर्म्माण्यात्मनि मन्यमानस्तत्तत् कर्मणामहं कर्त्तेति मन्यते २७

यः पुनर्मन्यते विद्वान् तत्त्वविदिति तत्त्ववित्तु महाबाहो कस्य तत्त्ववित् गुणकर्मविभागयोर्गुणविभागस्य कर्मविभागस्य च तत्त्वविदित्यर्थः गुणाः करणात्मकाः गुणेषु विषयात्मकेषु वर्त्तन्ते नात्मेति मत्वा न सज्जते सक्तिं न करोति २८

आनन्दगिरिकृतटीका।

अज्ञस्य कर्मसु सक्तिमुक्त्वा विदुषस्तदभावमभिदधाति यः पुनरिति तत्त्वं याथात्म्यं वेत्त्येति व्युत्पत्त्या तत्त्वविदिति तुशब्देनाज्ञाद्विशिष्टो निर्द्दिष्टः अस्यपूर्वकं द्वितीयपादमवतार्य्य व्याचष्टे कस्येत्यादिना गुणानामेव गुणेषु वर्तमानत्वमयुक्तं निर्गुणत्वात्तेषामित्याशंक्य विभजते गुणा इति कार्य्यकरणानामेव विषयेषु प्रवृत्तिरात्मनस्तु कूटस्थत्वान्नैवमिति ज्ञात्वा तत्त्ववित् कर्मसु दृढतरं कर्त्तव्याभिमानं न करोतीत्यर्थः २८

स्वामिकृतटीका

ननु विदुषामपि चेत् कर्म कर्तव्यं तर्हि विद्वदविदुषोः को विशेष इत्याशंक्योभयोर्विशेषं दर्शयति प्रकृतेरिति द्वाभ्यां प्रकृतेर्गुणैः प्रकृतिकार्य्यैरिन्द्रियैः सर्व्वप्रकारेण क्रियमाणानि कर्म्माणि तान्यहमेव कर्त्ता करोमीति मन्यते तत्र हेतुः अहमिति अहङ्कारेणेन्द्रियादिष्वात्माध्यासेन विमूढबुद्धिः सन् २७

भाषा अनुवाद।

और ज्ञानी ऐसा नहीं मानते हैं सो ईकहते हैं कि तत्त्वज्ञानी तो हम इन्द्रियरूप नहीं हैं ऐसे विचार करि इन्द्रियों से आत्मा को जुदा जानते हैं और हमारे कोई भी कर्म नहीं हैं ऐसे विचार कर कर्मों से अपने को पृथक मानते हैं अर्थात् इस प्रकार इन्द्री औ कर्म से पृथक बुद्धि होकर जो तत्त्व वस्तु सो जानते हैं हे अर्जुन वे और फेरि कर्म मे आसक्त नहीं होते अर्थात् हम कर्म करते हैं यह विचार नहीं करते इसका हेतु यह कि माया के द्वारा सब इन्द्री विषयों मे प्रवृत्त हैं हम सब से अलग हैं यह उनका भलीभांति जाना है २८

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु
तानकृत्स्नविदोमन्दान्कृत्स्नविन्नविचालयेत् २९

## शाङ्करभाष्यं

येपुनःप्रकृतेरिति प्रकृतेर्गुणैःसम्यक्मूढाःसंमोहिताः सन्तःसज्जन्तेगुणानां कर्मसुगुणकर्मसुवयंकर्मकुर्मःफलायेति तान्कर्मसङ्गिनोऽकृत्स्नविदःकर्मफलमात्रदर्शिनोमन्दान्मन्दप्रज्ञान्कृत्स्नविदात्मवित् स्वयंनविचालयेत् बुद्धिभेदकरणमेवचालनंतन्नकुर्य्यादित्यर्थः २९

## आनन्दगिरिकृतटीका।

विद्वानविद्वानित्युभावपिप्रकृत्यविद्वान्ताविदुषोबुद्धिभेदं कुर्य्यादित्युपसंहरति ये पुनरिति प्रकृतेर्मायायागुणैर्देहादिभिर्विकारैःसंमूढास्तानेवात्मत्वेनमन्यमानाये तेगुणानांतेषामेवदेहादीनांकर्मसुव्यापारेषुसज्जन्ते सक्तिंदृढतरामात्मीयबुद्धिंकुर्वन्तीत्याह प्रकृतेरित्यादिना तेषामनात्मविदांस्वयमात्मविद्बुद्धिभेदंनापादयेदित्याह तानित्यादिना २९

## स्वामिकृतटीका।

विद्वांस्तुतथानमन्यतइत्याह तत्त्वविदिति नाहंगुणात्मकइतिगुणेभ्यःआत्मनो विभागःनमेकर्माणीतिकर्मभ्योऽप्यात्मनोविभागःतयोर्गुणकर्मविभागयोर्यस्तत्त्वंवेत्ति सतु नसज्जतेकर्तृत्वाभिनिवेशंनकरोति तत्रहेतुःगुणाइति गुणाइन्द्रियाणिगुणेषुविषयेषुवर्त्तन्तेनाहमितिमत्वा २८

नबुद्धिभेदमित्युपसंहरति प्रकृतेरिति येःप्रकृतेर्गुणैःसत्त्वादिभिःसंमूढाःसन्तो गुणेषुइन्द्रियेषुतत्कर्मसुचसज्जन्ते तानकृत्स्नविदोमन्दमतान्कृत्स्नवित्सर्वज्ञोन विचालयेत् २९

## भाषा अनुवाद।

सोकहतेहैं किप्रकृतिजो मायातिसकेगुणजोसत्त्वरजतम तिन से सम्यक मूढ कहे मोह कोप्राप्तजोजन है तेईगुणोकेकर्मसे अर्थात् सात्त्विकराजस तामसत्रिगुणकर्ममेआसक्तहोय कर्मकासङ्गकरते हैं तिनअसंपूर्णज्ञानीमन्द मति मनुष्योंको उसकर्मके आनन्दमेमगनमनजनोंको कर्मकरनेसे उनकोकृत्स्न वित कहे सम्पूर्णज्ञानी सोनचलावेअर्थात् उनको कर्मरहित नकरै २९

मयिसर्व्वाणिकर्म्माणि संन्यस्याध्यात्मचेतसा
निराशीर्निर्ममोभूत्वा युध्यस्वविगतज्वरः ३०

शाङ्करभाष्यं

कथंपुनःकर्मण्यधिकृतेनाज्ञेनमुमुक्षुणाकर्मकर्त्तव्यमित्युच्यते मयीति मयिवासुदेवे परमेश्वरेसर्वज्ञेसर्व्वात्मनिसर्व्वाणिकर्म्माणिसंन्यस्यनिक्षिप्याध्यात्मचेतसाविवेकबुद्ध्याहं कर्तेश्वराय भृत्यवत् करोमीत्यनयाबुद्ध्या किञ्चनिराशीःत्यक्ताशीःनिर्ममो ममभावश्च निर्गतो यस्तवरुत्वं निर्ममोभूत्वायुध्यस्व विगतज्वरोविगतसन्तापोविगतशोकःसन्नित्यर्थः ३०

आनन्दगिरिकृतटीका।

यद्यपिकर्मण्यज्ञोऽधिक्रियते तथापिमोक्ष्यमाणेनतेनकर्मत्यक्तव्यंमोक्षस्यकर्म्मासाध्यत्वान्नतुतेनकर्मकर्त्तुंशक्यंकर्मणः सापेक्षितविरोधित्वादितिशङ्कते कथमितिश्लोकेनोत्तरमाह उच्यतइति यथोक्तेपरस्मिन्नात्मनिसर्वकर्मणांसमर्पणेकारणमाह अध्यात्मेति विवेकबुद्धिमेवव्याकरोति अहमिति दर्शितरीत्याकर्मसुप्रवृत्तस्यकर्त्तव्यान्तरमाह किञ्चेति त्यक्ताशीःफलप्रार्थनाहीनःसन्नित्यर्थःनिर्ममोभूत्वापुत्रभ्रात्रादिष्वितिशेषः ननुयुद्धेनियोगोनोपपद्यतेपुत्रभ्रात्रादिहिंसात्मनस्तस्यसन्तापहेतोःनियोगविषयत्त्वायोगादिततिनाह विगतेति ३०

स्वामिकृतटीका

तदेवंतत्त्वविदापिकर्म्मकर्त्तव्यंत्वन्तु नाद्यापितत्त्वविदतः कर्मैवकुर्व्वित्याह मयीति सर्व्वाणिकर्म्माणिमयिसंन्यस्यसमर्प्याध्यात्मचेतसाऽन्तर्यामीनोऽहंकर्म्मकरोमीतिदृष्ट्यानिराशीर्निस्कामोऽतएव मत्फलसाधनं मदर्थमिदंकर्म्मेत्येवं ममताशून्यश्चभूत्वाविगतज्वरस्त्यक्तशोकश्चभूत्वायुध्यस्व ३०

भाषा अनुवाद

सोदेखोनतत्त्वज्ञानीकोभीकर्मकरनाउचितहै ,औरकहतेआयेहैं और तुमतोअभीऐसेकुछतत्त्वज्ञानीभयेभीनहींहो इससेअज्ञीतरहकर्मकरोकर्मकरनेमेंतोतुमाराअधिकारहीहै यहभगवानकहतेहैं किआत्मामेंचित्तदेसवकर्म हमारेमेंअर्पणकरकेअर्थात् हमअन्तर्यामीभगवानकेआधीनहोय कर्मकरतेहैं औरयहहमाराकामहै हमकरतेहैं इसविचारओफलकीआशाछोड़करतथाशोकदूरकरितुमवेखटकयुद्धकरोयहकहा ३०

येमेमतमिदंनित्यमनुतिष्ठन्तिमानवाः श्रद्धावन्तोऽनसूयन्तोमुच्यन्तेतेपिकर्मभिः ३१
येत्वेतदभ्यसूयन्तोनानुतिष्ठन्तिमेमतं सर्व्वज्ञानविमूढांस्तान्विद्धिनष्टानचेतसः ३२

## शाङ्करभाष्यम्।

यदेतन्ममतंकर्मकर्तव्यमिति सप्रमाणमुक्तंतत्तथायेमइति येमदीयमिदंमत मनुतिष्ठन्तिअनुवर्त्तन्तेमानवामनुष्याःश्रद्धावन्तःश्रद्दधानाः अनसूयवन्तोऽसूयाम यिपरमगुरौवासुदेवेऽकुर्व्वन्तोमुच्यन्तेतेऽप्येवम्भूताःकर्मभिर्धर्माधर्माख्यैः ३१
येत्विति येतुतद्विपरीताएतत् ममतंअभ्यसूयन्तोनिन्दन्तोनानुतिष्ठन्तिनानुवर्त्तन्तेमेमतंसर्व्वेषुज्ञानेषु विविधंमूढास्तेसर्व्वज्ञानविढांस्तान्विनष्टान्नाशंगतानचेतसोऽविवेकिनः ३२

## आनन्दगिरिकृतटीका।

प्रकृतंभगवतोमतमुक्तप्रकारमनुसृत्यैवानुतिष्ठतांक्रममुक्तिफलंकथयति यदेतदिति. शास्त्राचार्य्योपदिष्टेअदृष्टार्थेविश्वासवत्त्वंश्रद्दधानत्वंगुणेषुदोषाविष्करणमसूयाअपियथोक्तायामुक्तेरमुख्यत्वद्योतनार्थः ३१

## स्वामिकृतटीका।

एवंकर्मानुष्ठानेगुणमाह येमइति मद्वाक्येश्रद्धावन्तोऽनसूयन्तोदुःखात्मके कर्मणिप्रवर्त्तयतीति दोषदृष्टिमकुर्व्वन्तश्चयेमदीयमिदंमतमनुतिष्ठन्तितेऽपिशनैः कर्मकुर्व्वाणाःसम्यग्ज्ञानिवत्कर्मभिर्मुच्यते ३१
विपक्षेदोषमाह येत्वेतदिति येतुनानुतिष्ठन्तितानचेतसोविवेकशून्यान्अत एवसर्व्वस्मिन्कर्मणिब्रह्मविषयेचयज्ज्ञानंतत्रविमूढान्नष्टान्विद्धि ३२

## भाषाअनुवाद।

इसप्रकारकर्मकरनेमेउपकारकहतेहैं किजोइसहमारेमतमेश्रद्धायुक्तहो औरअसूयारहितअर्थानिन्दानकरिके किदुखदाईकर्ममेहमकोप्रवृत्तकरतेअर्थात्लगावतेहैं ऐसीदोषदृष्टिनकरकेजोकोई यहमेरामतअङ्गीकारकरकेकरैसो कर्मकेद्वाराक्रमक्रमसेज्ञानीकीतरहकर्मसेमुक्तहोयपरहोय ३१
अबइसकेविरीतआचरणमेजोदोषसोकहतेहैं किजोलोगइसतरहकर्मन करैंतेविचाररहितहैं औरकर्मतथाब्रह्मज्ञानमेभ्रष्टविवेकजानोसोईकहतेहैं किजोइसमेरेमतकीनिन्दाकरतेऊयेइसमतमेनहींप्रवृत्तहोतेहैं उनकोसकलज्ञानकेमूढ़ात्मानष्टबुद्धिजानो ३२

सदृशंचेष्टतेस्वस्याःप्रकृतेर्ज्ञानवानपि प्रकृतिंयान्तिभूतानिनिग्रहःकिंकरिष्यति३३

## शाङ्करभाष्यं

कस्मात्पुनःकारणात्त्वदीयंमतंनानुतिष्ठन्तःपरधर्माननुतिष्ठन्तिस्वधर्मञ्च नानुवर्त्तन्तेतत्प्रतिकूलाः कथंनबिभ्यतितच्छासनातिक्रमदोषात्तत्राह सदृशमिति सदृशमनुरूपंचेष्टतेचेष्टांकरोतिकस्याःस्वस्याःस्वकीयायाःप्रकृतेःप्रकृतिर्नामपूर्व्वकृ तधर्माधर्मादिसंस्कारोवर्त्तमानजन्मादावभिव्यक्तः साप्रकृतिस्तस्याःसदृशमेवसर्व्वो जन्तुर्ज्ञानवानपिचेष्टतेकिंपुनर्मूर्खस्तस्मात् प्रकृतिंयान्तिअनुगच्छन्तिभूतानिनिग्र हःनिषेधरूपःकिंकरिष्यतिममचान्यस्यवा ३३

## आनन्दगिरिकृतटीका।

भगवन्मताननुवर्त्तिनांप्रत्यवायित्वं प्रत्याययति येत्वितितद्विपरीतत्वंभगवन्मता नुवर्त्तिभ्योवैपरीत्यंतदेवदर्शयति एतदित्यादिना अभ्यसूयन्तस्तत्रासन्तमपिदोषमु द्भावयन्तइत्यर्थः सर्व्वज्ञानानि सगुणनिर्गुणविषयाणि प्रमाणप्रमेयप्रयोजनविभाग तोविविधत्वं ३२

भगवन्मतानुवर्त्तनमन्तरेणपरधर्मानुष्ठानेस्वधर्मानुष्ठानेचकारणंपृच्छति कस्मा दिति भगवत्प्रतिकूलत्वमेवतत्रकारणमित्याशंक्याह तत्प्रतिकूलाइति राजानुशा सनातिक्रमेदोषदर्शनात्भगवदनुशासनातिक्रमेऽपिदोषसम्भवात्तत्प्रतिकूलत्वंभय कारणमित्यर्थः उत्तरत्वेनश्लोकमवतारयति सदृशमिति सर्व्वस्यप्राणिवर्गस्यप्रकृ तिवशवर्त्तित्वेकैमुतिकन्यायंसूचयति ज्ञानवानपीति सर्व्वाण्यपिभूतान्यनिच्छन्त्य पिप्रकृतिसदृशीं चेष्टांगच्छन्तीतिनिगमयति प्रकृतिमिति भूतानांप्रकृतेरधीनत्वे पिप्रकृतिर्भगवतानिग्राह्येत्याशंक्याह निग्रहइति कापुनरियंप्रकृतिर्यदनुसारि णीभूतानांचेष्टेतिपृच्छति प्रकृतिर्नामेति भगवदभिप्रेतांप्रकृतिंप्रकटयति पूर्व्वेति

## भाषा अनुवाद।

जोकहोकितौफेरिमहाफलकेअर्थइन्द्रियोंकोनिग्रहकरकेऔरकामनाकोत्यागि सभीलोगक्योंनहींइसतरहस्वधर्म्मकाअनुष्ठानकरतेहैं तोइसपरकहतेहैं किपूर्व्व कर्म्मकेसंस्कारकेअधीनजोस्वभाव तिसकेअनुसारगुणदोषकेज्ञानवानभीचेष्टाकर तेहैं तोफेरअज्ञविचारेजोस्वभावअनुरूपचेष्टाकरतेइसमेंऔरक्याकहनाहै जव किस्वभाववलवानहै तवकिऔरइन्द्रियनिग्रहकोईकरसकैहै तोस्वभावकेअनुरूप चलनांहींपडताहै देखोजोस्वभावप्रवलहै तोइन्द्रिनिग्रहसेक्याफलहोगा ३३

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ३४

## आनन्दगिरिकृतटीका।

आदिशब्देन ज्ञानेच्छादि संगृह्यते यथोक्तः संस्कारः स्वसत्तया प्रवर्त्तकश्चेत्प्रलयेऽपि प्रवृत्तिः स्यादित्याशंक्य विशिनष्टि वर्त्तमानेति सर्वो जन्तुरित्युक्तं विवेकिप्रवृत्तेरतथात्वादिति चाविशेषादिति न्यायमनुस्मरन्नाह ज्ञानवानिति ज्ञानवतामज्ञानवताञ्च प्रकृत्यधीनत्वाविशेषे फलितमाह तस्मादिति प्रकृतिं यान्ति प्रकृतिसदृशीं चेष्टां गच्छन्त्यनिच्छन्त्यपि सर्वाणि भूतानीत्यर्थः प्रकृतेर्भगवता तत्तुल्येन वा केनचित्तन्निग्रहमाशङ्क्यावतारितचतुर्थपादस्यार्थापेक्षितं पूरयति ममचेति ३३

## स्वामिकृतटीका।

ननु तर्हि महाफलत्वादिन्द्रियाणि निगृह्य निष्कामाः सन्तः सर्वेऽपि स्वधर्ममेव किं नानुतिष्ठन्ति तत्राह सदृशमिति प्रकृतिः प्राचीनकर्मसंस्काराधीनस्वभावः स्वस्य स्वकीयायाः प्रकृतेः स्वभावस्य सदृशमनुरूपमेव गुणदोषज्ञानवानपि चेष्टते किं पुनर्वक्तव्यमज्ञश्चेष्टत इति यस्माद्भूतानि सर्वेऽपि प्राणिनः प्रकृतिं यान्ति अनुवर्त्तन्ते एवञ्च सतीन्द्रियनिग्रहः किं करिष्यति प्रकृतेर्बलीयस्त्वादित्यर्थः ३३

## भाषा अनुवाद।

जो ज्ञानवान स्वभावहीके अनुसार कर्ममें सबकी प्रवृत्ति है तौ यह कर्म करना औ यह न करना जो शास्त्र विधि औ निषेध करता सो व्यर्थ है इस शङ्कापर कहते हैं कि इन्द्रियस्य इन्द्रियस्य दुइबार कहनेसे हरएक इन्द्रियको अपनी अपनी विषयके अनुकूल वस्तुमें प्रीति औ प्रतिकूल विषयमें वैर निश्चय कहे विरक्तता रूप रागद्वेषादि अवश्य होगा सो इसीसे रागद्वेषके अनुरूप कर्ममें प्रवृत्ति होना यह यद्यपि सबको स्वभाव सिद्ध है परतौभी रागद्वेषके वशीभूत होना न चाहिये यही शास्त्रोंमें नियम कर राखा है क्योंकि मुमुक्षु पुरुषके वेई विघ्नकारी औ विपक्ष हैं तात्पर्य यह कि विषयोंके स्मरणके द्वारा रागद्वेष प्रगट करवाय वह स्वभाव असावधान पुरुषोंको अपने बलसे अति जोर धाराप्रवाहकी नाईं अनर्थमें प्रवृत्त करावता है परन्तु शास्त्र तो उस अनर्थ प्रवृत्तिके पहिलेही विषयोंमें रागद्वेषका प्रतिबन्धकरूप कहे रोकनेवाला जो भगवत आराधनादि समें प्रवृत्ति करवाते हैं इससे देखो कि प्रवाहसे परनेके पूर्वही नौका प्राप्त पुरुषके समान उस अनर्थसे शास्त्रद्वारा मनुष्य बचिजाते हैं इससे स्वभाव विघ्नप्राप्त कर्म त्याग करके धर्ममें प्रवृत्त होना अवश्य कर्त्तव्य है तात्पर्य्य यह कि अर्जुन तुम स्वभाव प्राप्त करुणाको छोड़ि युद्ध करो ३४

शाङ्करभाष्यं

यदि सर्व्वो जन्तुरात्मनः प्रकृतिसदृशमेव चेष्टते नच प्रकृतिशून्यः कश्चिदस्ति ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्ताविदमुच्यते इन्द्रियस्येति इन्द्रियस्येन्द्रियस्यार्थे सर्व्वेन्द्रियाणामर्थे शब्दादिविषये इष्टे शब्दादौ रागोऽनिष्टे द्वेष इत्येवं प्रतीन्द्रियार्थे रागद्वेषाववश्यम्भाविनौ तत्रायं पुरुषकारस्य शास्त्रार्थस्य विषय उच्यते शास्त्रार्थे प्रवृत्तः पूर्व्वमेव रागद्वेषयोर्व्वशं नागच्छेत् याहि पुरुषस्य प्रकृतिः सा रागद्वेषपुरःसरैव स्वकार्य्ये पुरुषं प्रवर्त्तयति यदा तदा स्वधर्म्मपरित्यागः परधर्म्मानुष्ठानञ्च भवति यदा पुनः रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशस्तस्मात्तयो रागद्वेषयोर्व्वशं नागच्छेद्यतस्तौ ह्यस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्त्तारौ तस्कराविवेत्यर्थः ३४

आनन्दगिरिकृतटीका

सर्व्वस्य भूतवर्गस्य प्रकृतिवशवर्त्तित्वे लौकिकवैदिकपुरुषकारविषयाभावाद्विधिनिषेधानर्थक्यमिति शङ्कते यदीति ननु यस्य न प्रकृतिरस्ति तस्य पुरुषकारसम्भवादर्थवत्त्वं तद्विषये विधिनिषेधयोर्भविष्यति नेत्याह नचेति शङ्कितदोषं श्लोकेन परिहरति इदमित्यादिना वीप्सायाः सर्व्वकरणगोचरत्वं दर्शयति सर्व्वेति प्रत्यर्थं रागद्वेषयोरव्यवस्थायां प्राप्तौ प्रत्यादिशति इष्ट इति प्रतिविषयं विभागेन तयोरन्यतरस्यावश्यकत्वेऽपि पुरुषकारविषयाभावप्रयुक्ता प्रागुक्तं दूषणं कथं समाधेयमित्याशंक्याह तत्रेति तयोरित्याद्यातारितं भागं विभजते शास्त्रार्थस्येति प्रकृतिवश

स्वामिकृतटीका।

नन्वेवं प्रकृत्यधीनैव चेत् पुरुषस्य प्रवृत्तिस्तर्हि विधिनिषेधशास्त्रस्य वैयर्थ्यं प्राप्तमित्याशंक्याह इन्द्रियस्येन्द्रियस्येति वीप्सया सर्व्वेषामिन्द्रियाणां प्रत्येकमित्युक्तं अर्थे स्वस्वविषये अनुकूले रागः प्रतिकूले द्वेष इत्येवं रागद्वेषौ व्यवस्थितौ अवश्यम्भाविनौ ततश्च तदनुरूपा प्रवृत्तिरिति भूतानां प्रकृतिः तथापि तयोर्व्वशवर्त्ती न भवेदिति शास्त्रेण नियम्यते हि यस्माद्स्य मुमुक्षोस्तौ परिपन्थिनौ प्रतिपक्षौ अयं भावः विषयस्मरणादिना रागद्वेषानुत्पाद्यानर्थकृतं पुरुषमनर्थेऽतिगम्भीरे स्रोतसीव प्रकृतेर्व्वलात् प्रवर्त्तयति शास्त्रं तु ततः प्रागेव विषयेषु रागद्वेषप्रतिबन्धके परमेश्वरभजनादौ तं प्रवर्तयति ततश्च गम्भीरस्रोतःपातात् पूर्व्वमेव नावमाश्रित इवानर्थं प्राप्नोति तदेवं स्वाभाविकीं पश्वादिसदृशीं प्रवृत्तिं त्यक्त्वा धर्म्मे प्रवर्तितव्यमित्युक्तं ३४

श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठितात्स्वधर्मेनिधनंश्रेयःपरधर्मोभयावहः ३५

## शाङ्करभाष्यं।

तत्ररागद्वेषप्रयुक्तोमन्यतेशास्त्रार्थमप्यन्यथापरधर्मोपिधर्मत्वादनुष्ठेयएवेतित दसत्श्रेयानितिश्रेयान्प्रशस्यतरःस्वधर्मस्वकीयधर्मोविगुणोपिविगतगुणोपिअनु ष्ठीयमानः परधर्मात्स्वनुष्ठितात्साङ्गुण्येनसम्पादितादपिस्वधर्मेस्थितस्यनिधनंम रणमपिश्रेयःपरधर्मेस्थितस्यजीवितात् कस्मात् परधर्मोभयावहः नरकादिल क्षणंभयमावहतियतः ३५

## आनन्दगिरिकृतटीका।

त्वाद्यन्तोनैवनियोज्यत्वमित्याशङ्क्याह याहीति रागद्वेषद्वाराप्रकृतिवशवर्त्तित्वे स्वधर्मत्यागादिदुर्वारमित्युक्तमिदानींविवेकविज्ञानेन रागादिनिवारणे शास्त्रीय दृष्ट्याप्रकृतिपारवश्यंपरिहर्त्तुं शक्यमित्याह यदेति मिथ्याज्ञाननिबन्धनौहि राग द्वेषौतत्प्रतिपक्षत्वंविवेकविज्ञानस्यमिथ्याज्ञानविरोधित्वादवश्रेयं रागद्वेषयोर्मूलनि वृत्त्यानिवृत्तौ प्रतिबन्धध्वंसेकार्यसिद्धिमभिसन्धायोक्तं तदेति एवकारस्यान्ययोग व्यवच्छेदकत्वंदर्शयति नेति पूर्वोक्तं नियोगमुपसंहरति तस्मादिति तत्रहेतुमाह यतइति हिशब्दोप्रात्तोहेतुर्यतइति प्रकटितः सचपूर्वेणतच्छब्देनसम्बन्धनीयः पुरुषपरिपन्थित्वमेवतयोःसोदाहरणंस्फोरयति श्रेयोमार्गस्येति ३४

रागद्वेषयोःश्रेयोमार्गप्रतिपक्षत्वंप्रकटयितुंपरमतोपन्यासद्वारासमनन्तरश्लो कमवतारयति तत्रेत्यादिना व्यवहारभूमिः सप्तम्यर्थः शास्त्रार्थस्यान्यथाप्रतिप त्तिमेवप्रत्याययति परधर्मोपीति स्वधर्मादित्यपेरर्थः अनुमानंदूषयन्नुत्तरत्वेन

## भाषाअनुवाद

स्वाभाविकप्रवृत्तित्यागकरिधर्ममेप्रवृत्तहोनाअवश्यकर्त्तव्यहै किन्तुनिजधर्म दुःखदायकयुद्धरूपकेकरनेमेअसमर्थऔपरधर्मशुभकरनेवालाअहिंसारूप येदो नोभीधर्मपक्षमेसमानहैं तोइनदोनोकेमध्यमे परधर्महीमेप्रवृत्तहोनेकीइच्छा करतेहुयेअर्जुनकेप्रतिभगवानकहतेहैं किसाङ्गोपाङ्ग सम्पूर्णकियेहुयेपरधर्म कीअपेक्षा अङ्गहीनहोनेसेभीस्वधर्मश्रेयकहेसुन्दरहै अर्थात्स्वधर्मयुद्धआदिमे प्रवृत्तपुरुषका मरणभीश्रेयकहेश्रेष्ठलाभहै क्योंकिउससेस्वर्गादिप्राप्तहोताहै परन्तुपरधर्मभयदायकअर्थात्निषिद्धहै इससेनरकप्राप्तिकाकारणहोताहै सो ईकहाकिस्वधर्मेनिधनंश्रेयःपरधर्मोभयावहः ३५

अर्जुनउवाच अथ केनप्रयुक्तोऽयं पापञ्चरतिपूरुषः
अनिच्छन्नपि वार्ष्णेय वलादिव नियोजितः ३६

## शाङ्करभाष्यं।

यद्यप्यनर्थमूलंध्यायतोविषयान्पुंसोरागद्वेषौत्वस्यपरिपन्थिनाविति चोक्तं विक्षिप्तमनवधारितंचयदुक्तंतत्संक्षिप्तंनिश्चितञ्चेदमेवेति ज्ञातुमिच्छन्नर्जुनउवाच ज्ञातेहितस्मिन्तदुच्छेदाययत्नंकुर्यामिति अथेति अथकेनहेतुभूतेनप्रयुक्तःसन्राज्ञेवभृत्योऽयंपापंकर्मचरत्याचरतिपुरुषःस्वयमनिच्छन्नपि हेवार्ष्णेयवृष्णिकुलप्रसूतवलादिवनियोजितोराज्ञेवेत्युक्तोदृष्टान्तः ३६

## आनन्दगिरिकृतटीका।

श्लोकमुत्थापयति तदसदिति चलधर्मोयुद्धादिरनुष्ठानात् परिव्राट्धर्मस्यभिक्षाशनादिलक्षणस्यस्वानुष्ठेयतयामयापिकर्त्तव्यत्वंप्राप्तमित्यार्थंव्याचष्टे श्रेयानितिउक्तेऽर्थेप्रश्नपूर्वकंहेतुमाह कस्मादित्यादिना स्वधर्ममवधूयपरधर्ममनुतिष्ठतः स्वधर्मातिक्रमकृतदोषस्यदुष्परिहरत्वान्नतत्त्यागः साधीयानित्यर्थः ३५

## स्वामिकृतटीका

तर्हिस्वधर्मस्ययुद्धादेर्दुःखरूपस्ययथावत्कर्त्तुमशक्यत्वात्परधर्मस्यचाहिंसादेःसुकरत्वाद्धर्मत्वाविशेषाच्चतत्रप्रवर्त्तितुमिच्छन्तंप्रत्याह श्रेयानिति किञ्चिदङ्गहीनोऽपिस्वधर्मःश्रेयान्प्रशस्यतरःस्वनुष्ठितात्सकलाङ्गसंपूर्त्त्यानुष्ठितादपिपरधर्मात्सकाशात् तत्रहेतुः स्वधर्मेयुद्धादौप्रवर्त्तमानस्यनिधनंमरणमपिश्रेष्ठंस्वर्गादिप्रापकत्वात् परधर्मस्तुपरस्यभयावहनिषिद्धत्वेननरकप्रापकत्वात् ३५

## भाषाअनुवाद।

तयोर्नवशमागच्छेत्इसश्लोककेकहाकिरागद्वेषकेवशनहोनाक्योंकिविरोधहेतुकयुद्धकोस्वधर्मकहिआच्छादेतेहैं इसपरअर्जुनकहतेहैं किहेवृष्णिवंशमेअवतीर्णहेवार्ष्णेयहेकृष्ण अनर्थरूपपापकरनेमेइच्छा नरहतेभी किसीकीप्रेरणासेयहपुरुषपापआचरणकरताहै कामक्रोधकोविचारवलसेरोंककेभीमनुष्यकीपापकर्मकरनेमेफेरिप्रवृत्तिदेखपड़तीहै इससेयहजानिपड़ैहै किकोईउसकामूलभूतकारणहोगाजोवलकरकेकरवाताहै इससंभावनापरसन्देहकरतेहुयेअर्जुननेप्रश्नकियाहै किकेनप्रयुक्तोयंपापाचरतिपूरुषः ३६

श्रीभगवानुवाच कामएषक्रोधएषरजोगुणसमुद्भवः
महाशनो महापाप्मा विद्ध्येनमिह वैरिणं ३७

## आनन्दगिरिकृतटीका।

प्रागेवानर्थमूलस्योक्तत्वात्पुनस्तज्जिज्ञासयाप्रश्नअनुपपत्तिरित्याशंक्याह यद्यपीति विक्षिप्तंविविधेषुप्रदेशेषुक्षिप्तंदर्शितमितियावत् अनवधारितमनेकत्वोक्तत्वादनेक धावाविवेककामादिभिर्विकल्पितत्वादित्यर्थः नन्वनर्थमूलंपरिहर्त्तव्यंतत्किमिति ज्ञातुमिष्यतेतत्राह ज्ञातेहीति कुर्यामितितज्ज्ञानमर्थवदितिशेषः वाक्यार स्यार्थत्वमथशब्दस्यगृहीत्वाप्रश्नवाक्यंव्याकरोति अथेत्यादिना अनिच्छतोऽपिवला देवदुश्चरितेप्रेरितत्वेदृष्टान्तमाचष्टे राज्ञेवेति विनियोज्यत्वस्येच्छासापेक्षत्वात्त दभावेतदसिद्धिमाशंक्यप्रागुक्तःस्मारयति राज्ञेवेत्युक्तइति ३६

## स्वामिकृतटीका।

तयोर्नवशमागच्छेदित्युक्तंतदेतदशक्यंमन्वानोऽर्जुनउवाच अथेति हे वार्ष्णेय वृष्णिवंशोऽवतीर्णः हेवार्ष्णेय अनर्थरूपंपापंकर्तुमनिच्छन्नपिकेनप्रयुक्तःप्रेरितोऽयंपुरुषःपापंचरतिकामक्रोधौविवेकवलेननिरुन्धतोऽपिपुरुषस्यपुनः पापेप्रवृत्तिदर्शनात् अन्योऽपितयोर्मूलभूतः कश्चित्प्रवर्तकोभवेदितिसम्भावनयाप्रश्नः ३६

## भाषा अनुवाद

अर्ज्जुनने जोपूछाकि इच्छाविनाभी किसीकी प्रेरणा से पुरुषपापाचार मेंप्रवृत्त होताहै इसीकाउत्तरभगवानकरतेहैं किसवको अपनेवशकरने वालाऔ प्राणियोंका परमशत्रु सकलअनर्थप्राप्तिकारीयह कामजोकामना सोइकिसीकारणसे प्रतिहत भयाअर्थात् कामनाजोसिद्धनभईतो वही कामवदल कररजोगुणसेहै जन्मजिसकाऐसाक्रोधरूपहोयपुरुषकोअहंकारकेवशकराय रजोगुणकी सेवामेडालदेताहैं वहक्रोधफेरिमहाशनहैं अर्थात् महत भोजनहै जिसकासो ऐसामहापाप्माकहे पापरूपपरमशत्रुहै यह तुमजानोतात्पर्य यहहै किकामही जीवोंकोप्रेरणादेता है परन्तुसतोगुणकी वृद्धिहोनेसेरजो गुणकीक्षयहोतीहै फेरिरजोगुणका कार्य्यकामकामकहे कामनाकाजन्मनहीं होता है सो इसमोक्षमार्गकेवैरीकामरूपशत्रुकोपूर्व्वकथित उपायसेनाश करनाहीं उचित है देखोकामनाकेअनुरूपभोगमिलनेसे भीउनकाभोग चिरकालकरते भीसन्तोषनहींहोताहै इसीसेकहा किमहाशनकहे वड़ा खानेवालाकामसो भोगकरनेसे भीपूर्णनहीं होता है ३७

## शाङ्करभाष्यं।

शृणुत्वंतंवैरिणंसर्वानर्थकरंयं त्वंपृच्छसि भगवानुवाचऐश्वर्यस्यसमग्रस्य धर्मस्ययशसःश्रियः वैराग्यस्याथमोक्षस्य षण्णांभगइतीङ्गना ऐश्वर्यादि षड्कं यस्मिन् वासुदेवेनित्यमप्रतिबन्धत्वेनसामस्त्येनच वर्त्तते उत्पत्तिंप्रलयञ्चैवभूताना मागतिं गतिं वेत्तिविद्यामविद्याञ्चस वाच्योभगवानिति उत्पत्त्यादिविषयञ्चविज्ञा नंयस्यस वासुदेवोवाच्योभगवानिति कामइति कामएषसर्व्वलोकवशंकुर्व्वन्‌खलु यन्निमित्तासर्व्वानर्थप्राप्तिःप्राणिनांसएषकामःप्रतिहतःकेनचित् क्रोधत्वेनपरिण मतेऽतः क्रोधोऽप्येषएवरजोगुणसमुद्भवोरजश्चतद्गुणश्चरजोगुणः समुद्भवोयस्यसः कामोरजोगुणसमुद्भवोरजोगुणस्यवासमुद्भवःकामोह्युद्भूतोरजः प्रवर्त्तयन्पुरुषं प्रवर्त्तयति तृष्णयाह्यहङ्कारितः इति गुणदुःखिनांरजःकार्य्येसेवादौप्रवृत्तान्प्र लापःश्रूयते महाशनोमहदशनमस्येति महाशनोऽतएवमहापाप्माकामेनप्रेरितो जन्तुःपापंकरोति अतोविद्ध्येनंकाममिह संसारेवैरिणं ३७

## आनन्दगिरिकृतटीका।

सम्प्रतिपत्तिवचनंप्रस्तौति शृणिवति तस्यवैपरीत्यंस्फोरयति सर्व्वेति अप्र स्तुतकिमितिप्रस्तूयते तत्राह यंत्वमिति भगवच्छब्दार्थंनिर्द्धारयितुंपौराणिकंवच नमुदाहरति ऐश्वर्यस्येति समग्रस्येत्येतत्प्रत्येकंविशेषणैः सम्बध्यतेश्रियशब्दस्तथाय व्दपर्य्यायः समुच्चयार्थःमोक्षशब्देनतदुपायोज्ञानंविवक्ष्यते उदाहृतवचसस्तात्प र्यमाह ऐश्वर्य्यादीति सवाच्योभगवानितिसम्बन्धः तत्रैवपौराणिकंवाच्यान्त रंपठति उत्पत्तिमिति भूतानामिति प्रत्येकमुत्पत्त्यादिभिःसम्बध्यतेकारणैश्चो त्पत्तिप्रलयशब्दौक्रियामात्रस्य पुरुषान्तरगोचरत्वसम्भवादगतिर्गतिश्चेत्यागामि

## स्वामिकृतटीका

अत्रोत्तरंश्रीभगवानुवाचकामएषक्रोधएषइत्यादि यस्त्वयापृष्टोहेतुरेषका मएवननुक्रोधोऽपिपूर्व्वंत्वयोक्तइन्द्रियस्येन्द्रियस्यार्थइत्यत्रसत्यंनासौततः पृथक्किन्तु क्रोधोऽप्येषकामएवहिकेनचित्प्रतिहतःक्रोधात्मनापरिणमते पूर्व्वंपृष्टत्वेनोक्तोऽ धिक्रोधःकामजएवेत्यभिप्रायेणैकीकृत्योच्यते रजोगुणात्समुद्भवतीति तथाअनेन सत्त्ववृद्ध्यारजसिक्षयंनीतेसतिकामोनजायतइतिसूचितंएनंकाममिह मोक्षमार्गेवै रिणंविद्धिअयञ्चवक्ष्यमाणक्रमेणहन्तव्यएवयतोनासौदानेनसन्धातुंशक्यइत्याह म हाशनोमहदशनंयस्यदुष्पूरइत्यर्थःनचसाम्नासन्धातुंशक्योयतोमहापाप्माअत्युग्रः ३७

धूमेनाव्रियते वह्निर्यथा दर्शो मलेनच यथोल्बेनावृतो गर्भस्तथातेनेदमावृतं ३८

### शाङ्करभाष्यम् ।

कथंवैरीति दृष्टान्तैःप्रत्याययति धूमेनेति धूमेनसहजेनाव्रियते वह्निःप्रकाशात्मकोऽप्रकाशात्मकेनयथावादर्शोमलेनच यथोल्बेनगर्भवेष्टनेनजरायुना आवृत आच्छादितो गर्भस्तथातेनेदमावृतं ३८

### आनन्दगिरिकृतटीका ।

न्यौसम्पदामदौहृच्येते वाक्यान्तरस्यापितात्पर्यमाह उत्पत्तप्रादीति वेत्तीत्युक्तःसाक्षात्कारोविज्ञानमित्युच्यतेसमग्रैश्वर्यादिसम्पत्तिसमुच्चयार्थश्चकारः उक्तलक्षणोभगवान्किमुक्तवानिति तदाह कामइति कामस्यसर्वलोकशत्रुत्वंविपद्यति वह्निमित्तेति तथापिकथंतस्यैवक्रोधत्वंतदाह सएषइति कामक्रोधयोरेवहेयत्वद्योतनार्थंकारणंकथयति रजोगुणइति कारणद्वाराकामादेरेवहेयत्वमुक्त्वा कार्यद्वारापितस्यहेयत्वंसूचयति रजोगुणस्येति कामस्यपुरुषप्रवर्तकत्वमेवनरजोगुणजनकत्वमित्याशंक्याह कामोहीति तत्रैवानुभवानुसारिणींलोकप्रसिद्धिंप्रमाणयति तृष्णयाहीति तस्ययोग्यायोग्यविभागमन्तरेणबहुविषयत्वंदर्शयति महाशनइति बहुविषयत्वप्रयुक्तंकर्मनिर्दिशति अतइति सर्वविषयत्वेपिकुतोऽस्यपापत्वमित्याशंक्याह कामेनेति कामस्योक्तविशेषणवत्त्वेफलितमाह अतइति ३७

उत्तरश्लोकमवतारयति कथमिति अनेकदृष्टान्तोपादानंप्रतिपत्तिसौकर्यार्थं सहजस्यधूमस्यप्रकाशात्मकवह्निप्रति आवरकत्वसिद्ध्यर्थं विशिनष्टि अप्रकाशात्मकेनेति ३८

### स्वामिकृतटीका ।

कामस्यवैरित्वंदर्शयतिधूमेनेति धूमेनसहजेनयथावह्निराव्रियतआच्छाद्यते यथाचादर्शोमलेनआगन्तुकेनयथाचोल्बेनगर्भवेष्टनचर्मणागर्भःसर्वतोनिरुद्धआवृतस्तथाप्रकारत्रयेणापितेनकामेनावृतमिदं ३८

### भाषा अनुवाद ।

अवविशेषरूपसेकामकोशत्रुता देखावते ऊपरकहते हैं किजैसेधूमसे आगऔ मलसेदर्पणउल्वाजोझिल्लीचमड़ा तिससे गर्भआवृत कहे लपेटे है तैसेही कामजोकामनातिससेयह ज्ञानभी आवृत कहे घेराहै ३८

आवृतंज्ञानमेतेनज्ञानिनोनित्यवैरिणा कामरूपेणकौन्तेयदुष्पूरेणानलेनच ३९

## शाङ्करभाष्यं

किंपुनस्तदिदंशब्दवाच्यंयत्कामेनावृतमित्युच्यते आवृतमिति आवृतमेतेन ज्ञानंज्ञानिनोनित्यवैरिणा ज्ञानीहिजानात्यनेनअहमनर्थेप्रयुक्तःपूर्वमेवातःदुःखीच भवतिनित्यमेवअतोऽसौज्ञानिनोनित्यवैरीनतुमूर्खस्यसहिकामंतृष्णाकालेमित्रमि वपश्यंस्तत्कार्येदुःखेप्राप्ते जानातितृष्णयाहंदुःखित्वमापादितइति नपूर्वमेवातोज्ञा निनोएवनित्यवैरीकिंरूपेणकामइच्छैवरूपमस्येति कामरूपस्तेनदुष्पूरेणदुःखेन पूरणमस्येतिदुष्पूरेणदुःखेनपूरणमस्येति दुःपूरोऽतस्तेनानलेननांस्यालंपर्याप्तिर्वि द्यतइत्यनलस्तेन ३९

## आनन्दगिरिकृतटीका।

सामान्यतोनिर्दिष्टंविशेषतोनिर्देष्टुंआकाङ्क्षापूर्व्वकमनन्तरश्लोकमवतारयति किंपुनरिति कामस्यज्ञानंप्रत्यावरणसिद्ध्यर्थंज्ञानिनोनित्यवैरिणेत्यादिविशेषणंप्र तीकमादयव्याचष्टे आवृतमित्यादिना ज्ञानिनांप्रतिवैरित्वंकामस्यकथमित्याह ज्ञानीहीति अनर्थप्राप्तिमन्तरेणकामस्यप्रसङ्गावस्थापूर्व्वमेवेत्युच्यते अतःशब्देन कामप्रसक्तिरेवपरामृश्यतेनित्यमेवेत्युत्पत्तवस्थाकार्यावस्थाचकामस्यकथ्यते ननु सर्व्वस्यापिकामात्मतानप्रशस्तेतिकामोनित्यवैरीभवति ततःकुतोज्ञानिविशेषणमि त्याशंक्याह नत्विति अज्ञस्यनासौनित्यवैरीत्येतदुपपादयति सहीति कार्यप्राप्ति प्रागवस्थापूर्व्वमित्युक्ताअज्ञंप्रतिवैरित्वेसत्यपि कामस्यनित्यवैरित्वाभावेफलितमा

## भाषा अनुवाद।

फेरिभीकामकावैरित्वप्रकाशकरतेहैं किविवेकज्ञानइसीकामसेआवृतहोता है यद्यपिअज्ञानीमनुष्यको यहकामभोगसमयमेसुखकाहेतुहै परतौभीशेष मेवैरभावप्रगटकरताहै इसीसेज्ञानीलोगोंको भोगकालमेभीअनर्थहीजानिप ड़ताहै क्योंकियहकामदुखकाकारणहै हेकौन्तेयअर्जुनदेखोयहकामअनेकदिन विषयभोगकरतेभीसन्तोषनहींपावतावरन्दिनदिनऔरऔरइच्छावढ़तीहीजा तीहै जैसेआगइन्धनपायअधिक२वढ़तीपरसन्तुष्टनहींहोतीहैं औरजोकदाचि तविषयभोगनमिलायाअसामर्थ्यनिर्बलतासेभोगहीनकरसकै तोशोकसन्तापहो ता इससेआखिरमेतोदुखछोड़सुखका लेसभीनहींहै तोप्रथमही क्योंनछोडे ३९

इन्द्रियाणिमनोबुद्धिरस्याधिष्ठानमुच्यते एतैर्विमोहयत्येषज्ञानमावृत्यदेहिनं ४०

## शाङ्करभाष्यं

किमधिष्ठानःपुनःकामोज्ञानस्यावरणत्वेनवैरिसर्व्वस्येत्यपेक्षायामाह ज्ञातेहि शत्रोरधिष्ठानेसुखेननिवर्हणंकर्त्तुं शक्यइति इन्द्रियाणीति इन्द्रियाणिमनोबुद्धिश्चास्यकामस्याधिष्ठानमुच्यते एतैरिन्द्रियादिभिराश्रयैर्व्विमोहयति विविधंमोहयत्येषकामोज्ञानमावृत्याच्छाद्यदेहिनंशरीरिणं ४०

## आनन्दगिरिकृतटीका ।

ह अतइति स्वरूपतोनित्यवैरित्वाविशेषेपिज्ञानाज्ञानाभ्यामवान्तरभेदसिद्धिरित्यर्थः आकाङ्क्षाद्वाराप्रकृतंवैरिणमेवस्फोरयति किंरूपेरित्यादिना ३९

कामस्यनिराश्रयस्यकार्य्यकरत्वाभावंमत्वाप्रश्नपूर्व्वकमाश्रयंदर्शयति किमधिष्ठानइति कामस्यनित्यवैरित्वेनपरिजिहीर्षितस्यकिमित्यधिष्ठानंज्ञाप्यतेतत्राह ज्ञातेहीति इन्द्रियादीनांकामाधिष्ठानत्वंप्रकटयति एतैरिति नन्वेताभिरितिवक्तव्येकथमेतैरित्युच्यतेतत्राह इन्द्रियादिभिरिति ४०

## स्वामिकृतटीका

इदंशब्दनिर्द्दिष्टंदर्शयन्वैरित्वंस्फुटयतिआवृतमिति इदंविवेकज्ञानंएतेनावृतंअज्ञस्यखलुभोगसमयेकामःसुखहेतुरेवपरिणामेतुवैरित्वंप्रतिपद्यते ज्ञानिनःपुनस्तत्कालमप्यनर्थानुसन्धानाद्दुःखहेतुरेवेतिनित्यवैरिणेत्युक्तं किञ्चविषयैःपूर्य्यमाणोऽपियोदुस्पूरःअपूर्य्यमाणस्तुशोकसन्तापहेतुत्वादनलतुल्यः अनेनसर्व्वान्प्रतिवैरित्वमुक्तं ३९

इदानींतस्याधिष्ठानंकथयन्जयोपायमाह इन्द्रियाणीति द्वाभ्यां विषयदर्शनश्रवणादिभिःसंकल्पेनाध्यवसायेनचकामस्याविर्भावादिन्द्रियाणिचमनश्चबुद्धिश्चा

## भाषा अनुवाद ।

अबकामकेरहनेकीजगह औरइसकेजयकरनेकीउपाय दोश्लोकसेकहतेहैं किविषयोंकाइन्द्रियोंकेद्वाराभोगहोताहै औरमनसेसङ्कल्परूपविषयवासनासानसिककर्मतथाबुद्धिसेनिश्चयहोनाअर्थात् यहकामअवश्यकरैंगेइनसबबातोंसेजानागया किमनबुद्धिऔइन्द्रीयेकामनाकेआधारस्थानहैं अर्थात्उत्पत्तिऔररहनेकीजगहहैं सोईकामविवेकज्ञानकोआच्छादनकरकेवैरिकै देहीजोआत्मा उसकोमोहयुक्तकरदेताहै फेरवह मूलसेकामवशहोखराबहोताफिरताहै ४०

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनं ४१

शाङ्करभाष्यं।

यत एवं तस्मादिति तस्मात्त्वमिन्द्रियाण्यादौ पूर्वं नियम्य वशीकृत्य भरतर्षभ पाप्मानं पापाचारं कामं प्रजहि परित्यज हि यस्मात् एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रत आचार्यतश्च आत्मादीनामवबोधः विज्ञानं विशेषतस्तदनुभवस्तयोर्ज्ञान विज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनं नाशकं तं नाशनं प्रजहि आत्मनः परित्यजेत्यर्थः ४१

आनन्दगिरिकृतटीका।

तेषां कामाश्रयत्वे सिद्धे साश्रयस्य तस्य परिहर्त्तव्यत्वमाह यत इति तस्मादि न्द्रियादीनामाश्रयत्वादिति यावत् पूर्वं कामनिरोधात् प्रागवस्थायामित्यर्थः तेषु नि यमितेषु मनोबुद्ध्योर्नियमः सिध्यति तत्प्रवृत्तेरितरप्रवृत्तिव्यतिरेकेणाफलत्वा दिति भावः पापमूलतया कामस्य तच्छब्दवाच्यत्वमुन्नेयं कामस्य परित्यज्यत्वं वैरि त्वं हेतुस्तमेव हेतुं साधयति ज्ञानेति ज्ञानविज्ञानशब्दयोरर्थभेदमावेदयति ज्ञान मित्यादिना ४१

पूर्वोक्तमनूद्य कामत्यागस्य दुष्करत्वं मन्वानोऽप्यसौ प्रत्यक्तोक्तमेव स्पष्टीकर्त्तुं प्रश्नपूर्वकं श्लोकान्तरमवतारयति इन्द्रियाणीत्यादिना पञ्चेति ज्ञानेन्द्रियवत् कर्मेन्द्रियाण्यपि वागादीनि गृह्यन्ते किमपेक्षया तेषां परत्वं तत्राह देहमिति तथा

स्वामिकृतटीका।

यत्र चित्तप्रणिधानेनेन्द्रियाणि नियन्तुं शक्यन्ते तदात्मस्वरूपं देहादिभ्यो विविच्य दर्श यति इन्द्रियाणीति इन्द्रियाणि देहादिभ्यो ग्राह्येभ्यः पराणि श्रेष्ठान्याहुः सूक्ष्मत्वात् प्र काशकत्वाच्च अत एव तद्व्यतिरिक्तत्वमप्यर्थादुक्तं भवति इन्द्रियेभ्यश्च संकल्पात्मकं मनः परं तत्प्रवर्त्तकत्वात् मनसस्तु निश्चयात्मिका बुद्धिः परा निश्चयपूर्वकत्वात् संकल्पस्य यस्तु बुद्धेः साक्षित्वेनावस्थितः स आत्मा ... स्तु बुद्धेः स्वाधिष्ठानमुच्यते एतैरिन्द्रियादिभिर्दर्शनादिव्यापारवद्भिराश्रयभूतैर्विवे कज्ञानमावृत्य देहिनं विमोहयति ४०

भाषा अनुवाद।

तिसकारणसे मोह होनेके प्रथम ही येसब इन्द्रीऔ मन तथा बुद्धिको नियम्य कहे काबूकर या रोककर पापरूप कामको हे भरतर्षभ अर्ज्जुन अच्छीतरह नाशकरो अथवा त्यागकरो क्योंकि यह काम आत्मज्ञान और शास्त्रोक्त जो विज्ञान तिन दोनाका नाशक है इसको आत्माका परमवैरी जानो यह भगवानने कहा ४१

इन्द्रियाणिपराण्याहुरिन्द्रियेभ्यःपरंमनः
मनसस्तुपराबुद्धिर्बुद्धेर्यःपरतस्तुसः ४२

शांकरभाष्यं

इन्द्रियाणिआदौनियम्यकामंशत्रुं जहि इत्युक्तं तत्र किमाश्रयःकामंजह्यादि त्युच्यते इन्द्रियाणीति इन्द्रियाणिश्रोत्रादीनिपञ्च देहंस्थूलंवाह्यं परिच्छिन्नंचापे क्ष्यसौक्ष्म्यान्तरत्वव्यापित्वाद्यपेक्ष्यं पराणिप्रकृष्टान्याहुःपण्डितास्तथेन्द्रियेभ्यः परंमनः सङ्कल्पात्मकंतथामनसस्तु पराबुद्धिर्निश्चयात्मिका तथाजःसर्व्वदृश्येभ्योबुद्ध्य न्तेभ्योऽभ्यन्तरोयंदेहिनं इन्द्रियादिभिराश्रयैर्युक्तः कामोज्ञानावरणद्वारेणमोहय तीत्युक्तं बुद्धेःपरतस्तुसः सबुद्धेर्द्रष्टा परमात्मा ४२

आनन्दगिरिकृतटीका।

पिकेनप्रकारेणपरत्वं तदाह सौक्ष्म्येति आदिशब्देनकारणत्वादिगृह्यते इन्द्रि यापेक्षयासूक्ष्मत्वादिना मनसःस्वरूपोक्तिपूर्व्वकं परत्वंकथयति तथेति मनसिद र्शितंन्यायंबुद्धावतिदिशति तथामनसस्त्विति योबुद्धेरित्यादि व्याचष्टे तथेत्यादिना आत्मनोयथोक्तविशेषणस्याप्रकृतत्वमाशंक्याह यं देहिनमिति ४२

स्वामिकृतटीका।

यस्मादेवंतस्मादिति तस्मात्त्वमादौविमोहात् पूर्व्वमेवेन्द्रियाणिमनोबुद्धिञ्चनियम्य पाप्मानंपापरूपमेनंकामं हि स्फुटंप्रजहि घातय यद्वाप्रजहि परित्यज ज्ञानमात्म विषयं विज्ञानंशास्त्रीयंतयोर्नाशनं यद्वा ज्ञानं शास्त्राचार्य्योपदेशजं विज्ञानं नि दिध्यासजं तमेवधीरोविज्ञाय प्रज्ञां कुर्व्वीतेतिश्रुतेः ४१

भाषा अनुवाद।

अबजिसमे मनुष्यचित्तकोसावधानकरिआत्मामेलगाय इन्द्रियोंको वशकर नेसकै सोई आत्माकास्वरूपदेहादिसे भिन्नदेखावते हैं किदेहआदिवाह्यकहे वाहरकेस्थूलपदार्थोंसेइन्द्री सूक्ष्म औपरहैं अर्थात् श्रेष्ठहैं औरइन्द्रियों सेभी सङ्कल्पात्मक मन इन्द्रियोंकोविषयोंमेप्रवृत्ति करावनेवाला परहै अर्थात् सूक्ष्मऔ श्रेष्ठहै अथवाइन्द्रियोंसे भिन्नजानोऔरमनकीअपेक्षा निश्चयशक्तिरूप बुद्धिश्रेष्ठहै या भिन्नहै क्योंकिमनके संकल्पको यहबुद्धि रोंकसकतीहै और जोबुद्धिसेभीपरे अर्थात् श्रेष्ठ किम्बा पृथक् औरसाक्षीरूपहो सबके अन्तरमेटि काहै सोईआत्माहै देखोतिसको यह दुष्टकाम नित्तमोहयुक्तकरता है ४२

एवंबुद्धेःपरंबुध्वासंस्तभ्यात्मानमात्मना जहिशत्रुंमहाबाहोकामरूपंदुरासदं ४३

इतिश्रीमहाभारतेशतसाहस्र्यांसंहितायांवैयासिक्यांभीष्मपर्व्वणिश्रीभगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवादे कर्मयोगोनामतृतीयोऽध्यायः ३

## शाङ्करभाष्यं।

ततःकिंएवमिति एवंबुद्धेःपरमात्मानंबुध्वाज्ञात्वासंस्तभ्यसम्यक्स्तम्भनंकृत्वा स्वेनैवात्मनासंस्कृतेनमनसासम्यक्समाधायेत्यर्थःजह्येनंशत्रुंमहाबाहोकामरूपंदुरासदंदुःखेनासदःआसादनंप्राप्तिर्यस्यतंदुरासदंदुर्व्विज्ञेयानेकविशेषमिति ४३

## आनन्दगिरिकृतटीका।

इन्द्रियादिसमाधानपूर्व्वकमात्मज्ञानात्कामजयोभवतीत्युपसंहरति एवमित्यादिना संस्कृतंमनोमनःसमाधानेहेतुरितिसूचयति संस्तभ्येति प्रकृतंशत्रुमेव विशिनष्टि कामरूपमिति तस्यदुरासदत्वेहेतुमाह दुर्व्विज्ञेयेति अनेकोविशेषस्तादृशोमहाशनत्वादिस्तदनेनोपायभूताकर्म्मनिष्ठाप्राधान्येनोक्ताउपेयात्तुज्ञाननिष्ठागुणत्वेनेतिविवेक्तव्यं ४३ इतिआनन्दगिरिकृतटीकायांतृतीयोऽध्यायः ३

## स्वामिकृतटीका।

परतस्तत्साक्षित्वेनावस्थितःसर्व्वान्तरःसआत्मातंविमोहयतिदेहिनमितिदेहिशब्दोक्तआत्मासइतिपरान्द्यते ४२

उपसंहरति एवमिति बुद्धेरेवविषयेन्द्रियादिजन्याःकामादिविक्रियाःआत्मातुनिर्व्विकारस्तत्साक्षीत्येवंबुद्धेः परमात्मानंबुद्ध्वाआत्मनाएवंभूतयानिश्चयात्मिकयाबुद्ध्याआत्मानंमनःसंस्तभ्यनिश्चलंकृत्वाकामरूपिणंशत्रुंजहिमारयदुरासदंदुःखेनासादनीयंदुर्व्विज्ञेयमित्यर्थः स्वधर्म्मेणयमाराध्यभक्त्यामुक्तिमिताबुधाः तंकृष्णंपरमानन्दंतोषयेत्सर्व्वकर्मभिः ४३ इतिश्रीधरस्वामिकृतटीकायांतृतीयोऽध्यायः३

## भाषाअनुवाद।

अबकहतेहैं किविषयऔइन्द्रियोंसे कामआदिविकारयुक्तबुद्धिहीहोतीहै औरआत्मानिर्विकारबुद्धिकासाक्षीरूपऔरउससेपृथकहै इससेआत्माकोश्रेष्ठजानिऔरऐसीनिश्चयरूपबुद्धिसेमनकोनिश्चलकरकेहेमहाबाहो दुखकादरवाला निवारणकरनेकेयोग्य सदृकामरूपीदुष्टदुर्ज्जेयशत्रुकोजीतो ४३

इति पण्डितजगन्नाथशुक्लविरचितायांमनभावनीटीकायांतृतीयोऽध्याय

चतुर्थोध्यायः

श्रीभगवानुवाच इमं विवस्वते योगं प्रोक्तवानहमव्ययं
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् १

शाङ्करभाष्यं ।

श्रीभगवानुवाच योऽयंयोगोऽध्यायद्वयेनोक्तोज्ञाननिष्ठालक्षणःससंन्यासःस कर्म्मयोगोपायःयस्मिन्वेदार्थःपरिसमाप्तःप्रवृत्तिलक्षणोनिवृत्तिलक्षणश्चगीतासुच सर्व्वास्वयमेवयोगोविवक्षितोभगवताअतःपरिसमाप्तंवेदार्थंमन्वानस्तंवंशकथनेनस्तौ तिभगवान् इमंअध्यायद्वयेनोक्तंयोगंविवस्वतेआदित्याय सर्गादौप्रोक्तवान्अहंजग त्परिपालयितृणांक्षत्रियाणांवलाधानायतेनयोगवलेनयुक्ताःतेसमयाभवन्ति ब्रह्म परिरक्षितुंब्रह्मक्षत्रेपरिपालिते जगत्परिपालयतुमलं अव्ययमव्ययफलत्वात्नह्य स्यसम्यक्दर्शननिष्ठालक्षणस्य मोक्षाख्यंफलंव्येति सचविवस्वान्मनवेप्राह मनुरि क्ष्वाकवेस्वपुत्रायादिराजायाब्रवीत् १

आनन्दगिरिकृतटीका ।

पूर्व्वाभ्यामध्यायाभ्यांनिष्ठाद्वयात्मनोयोगस्यगीतत्वात् वेदार्थस्यचसमाप्तत्वात्व क्तव्याशेषाभावात् उक्तयोगस्यकृतिमत्त्वशङ्कानिवृत्त्येव 'शकथनपूर्व्विकांस्तुतिं भग वानुक्तवानित्याह श्रीभगवानिति तदेतद्भगवद्वचनंवृत्तानुवादद्वारेणप्रस्तौति ये

भाषा अनुवाद ।

श्रीकृष्णभगवानआपहीअपनाआविर्भावकहे प्रगटहोना औरतिरोभावकहे परमधामकाजाना तिसकेप्रकाशकरनेकेनिमित्त सामवेदकेअन्तर्गतजोवह्मप्रति पादक तत्त्वमसिमहावाक्यहै तिसकेतत्पदऔत्वम्पदकेविचारकेअर्थ कर्मयोगकी प्रसंशाकरतेगीताशास्त्रकोअभिप्राय जोप्रवृत्तिनिवृत्तिलक्षणज्ञानयोगऔकर्मयोग सोदोअध्यासेकहिचुके यहमानतेहुये अववंशकथनसे उसकर्मयोगकीस्तुतिकरते हैं कियहीकर्मयोगमैनेपूर्व्वकालमेसूर्य्यसेकहाथा औसूर्य्यनेअपनेपुत्रआद्यदेवम नुसेकहा औमनुनेफेरिअपनेपुत्रइक्ष्वाकुराजासेकहाथा ऐसेनरम्परावहकर्मयोग चलाआताथा १

## आनन्दगिरिकृतटीका ।

यमिति उक्तमेवयोगंविभज्यानुवदति ज्ञानेति संन्यासेनेतिकर्त्तव्यतयासहित स्यज्ञानात्मनोयोगस्य कर्माख्योयोगोहेतुरतस्तोपायोपेयभूतं निष्ठाद्वयंप्रतिष्ठापित मित्यर्थः उक्तेयोगद्वयेप्रमाणमुपन्यस्यति यस्मिन्निति अथवाज्ञानयोगस्यकर्म योगोपायत्वमेवस्फुटयति यस्मिन्निति प्रवृत्तिलक्षणेतिज्ञायतेकर्मयोगोनिवृत्तिल क्षणस्यतेज्ञानयोगइतिविभागः यद्यपिपूर्वस्मिन्नध्यायद्वयेयथोक्तनिष्ठाद्वयव्या ख्यातंतथापिवक्ष्यमाणाध्यायेषुवक्तव्यान्तरमस्तीत्याशंक्याह गीतासुचेति कथंत र्हिसमनन्तराध्यायस्यप्रवृत्तिरतआह अतइति वंशकथनंसम्प्रदायोपन्यासःसम्प्र दायोपदेशश्च अकृत्रिमत्वशङ्कानिवृत्त्यायोगस्तुतौपर्य्यवसाति गुरुशिष्यपरम्परोप न्यासमेवानुक्रामति इममिति इममित्यस्यसन्निहितंविषयंदर्शयति अध्यायेति योगं ज्ञाननिष्ठालक्षणं कर्मयोगोपायलभ्यमित्यर्थः स्वयमकृतार्थानांप्रयोजनव्यग्र णांपरार्थप्रवृत्त्यसम्भवाद्भगवत स्तथाविधप्रवृत्तिदर्शनात् कृतार्थता कल्पनीयेत्याह विवस्वत इति अव्ययवेदमूलत्वादव्ययत्वं योगस्यगमयितव्यंकिमिति भगवता कृता र्थेनापियोगप्रवचनंकृतमितितदाह जगदिति कथंयथोक्तेनयोगेनक्षत्रियाणांबला धानंतदाह तेनेति युक्ताः क्षत्रियाइति शेषः ब्रह्मशब्देनब्राह्मणत्वजातिरुच्यते यद्यपियोगप्रवचनेनक्षत्रं रक्षितं तेनचब्राह्मणत्वं तथापि कथंरक्षणीयंजगदशेषं रक्षितमित्याशंक्याह ब्रह्मेति ताभ्यांहि कर्मफलभूतं जगदनुष्ठानद्वाराक्षितुं शक्यमित्यर्थः योगस्याव्ययत्वे हेत्वन्तरमाह अव्ययफलत्वादिति ननुकर्मफलव दुक्तयोगफलस्यापि साध्यत्वेन क्षयिष्णुत्वमनुमीयते नेत्याह नहीति अपुनरा वृत्तिश्रुतिप्रतिहतमनुमानंन प्रमाणीभवतीतिभावः भगवता विवस्वते प्रोक्तोयो गस्तत्रैव पर्यवस्यतीत्याशंक्याह सचेति स्वपुत्रायेत्युभयत्र सम्बध्यते आदिराजाये तीक्ष्वाकोःसूर्यवंशप्रवर्त्तकत्वेनवैशिष्ट्यमुच्यते १

## स्वामिकृतटीका ।

आविर्भावतिरोभावावाविष्कर्त्तुंस्वयंहरिः तत्त्वम्पदविवेकार्थं कर्मयोगंप्रशंसति एवं तावदध्यायद्वयेन कर्मयोगोपायकज्ञानयोगो मोक्षसाधनत्वेनोक्तस्तमेवब्रह्मा र्पणादिगुणविधानेनतत्त्वंपदार्थविवेकादिनाच प्रपञ्चयिष्यन्प्रथमंतावत् परम्परा प्राप्तत्वेनस्तुवन्श्रीभगवानुवाच इममिति त्रिभिः अव्ययफलत्वादव्ययंइमंयोगंपुरा हंविवस्वते आदित्यायकथितवान् सचस्वपुत्राय मनवेश्राद्धदेवायप्राह सचमनुः स्वपुत्रायेक्ष्वाकवेऽब्रवीत् १

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः
सकालेनेह महता योगोनष्टःपरन्तप २
सएवायंमयातेऽद्ययो गःप्रोक्तःपुरातनः
भक्तोऽसिमेसखाचेति रहस्यंह्येतदुत्तमं ३

## शाङ्करभाष्यं

एवमिति एवंक्षत्रियपरम्पराप्राप्तमिमंराजर्षयोराजानस्तेऋषयश्चराजर्षयोविदुरिमंयोगंसयोगःकालेनेह महता दीर्घेणनष्टोविच्छिन्नसम्प्रदायःसम्भूत्तो हेपरन्तप आत्मनोविपक्षभूताः परेउच्यन्तेतान् शौर्यतेजोगभस्तिभिर्भानुरिव तापयतीति परन्तपःशत्रुतापनइत्यर्थः २

दुर्बलान् अजितेन्द्रियान्प्राप्यनष्टंयोगमिममुपलभ्यलोकञ्चापुरुषसम्बन्धिनं सएवायमिति सएवायंमयातेतुभ्यमद्येदानींयोगःप्रोक्तःपुरातनःभक्तोसिमेसखाचासीतिरहस्यं हि यस्मादेतदुत्तमंयोगंज्ञानमित्यर्थः ३

## आनन्दगिरिकृतटीका

यथोक्तेयोगेपरम्परागते विशिष्टजनसम्मतिमुदाहरति एवमिति तस्यकथं सम्प्रति वक्तव्यत्वंतदाह सकालेनेति पूर्वार्द्धंव्याकरोति एवमित्यादिना ऐश्वर्यसम्पत्तिमत्त्वंराजत्वंतेषामेव सूक्ष्मार्थनिरीक्षणक्षमत्वमृषित्वमिहेति भगवतोऽर्जुनेनग्रहसंव्यवहारकालोदृष्टह्येते परन्तपेतिसम्बोधनंविभजते आत्मनइति २

## स्वामिकृतटीका।

एवमिति एवंराजानस्तेऋषयश्चेति अन्येऽपिराजर्षयोनिमिप्रमुखाःस्वपितादिभिरिक्ष्वाकुप्रमुखैःप्रोक्तमिमं योगंविदुर्जानन्तिस्म अद्यतनानामज्ञाने कारणमाह हे परन्तपशत्रुतापन स योगःकालवशादिह लोकेनष्टोविच्छिन्नः २

## भाषाअनुवाद

इसीप्रकारइसकर्मयोगको परम्पराप्राप्तकहेएकसेदूसरादूसरेसे तीसरे ऐसेराजऋषिलोगजानतेचलेआतेथे परअबहेपरन्तपशत्रुतापनअर्जुन वह कर्मयोग वहुतकालपायकरनष्ट होगयाहै २

सोईकर्मयोगजोपरम्परासम्प्रदायसेसंसारमेनरहा अबफेरिहमनेतुमसेकहा क्योंकितुमसेरेभक्तहौ औरमित्रभीहौ नहीं तो मैनेफेरऔरकिसीसेइसकोन हीं कहा औरनकोई मेरामक्तछोड़इसकोकहनेयोग्य है ३

अर्जुनउवाच अपरं भवतो जन्म परं जन्म विवस्वतः
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ४

आनन्दगिरिकृतटीका ।

किमिति वर्त्तमानेकालेप्रकृतोयोगःसम्प्रदायरहितोभूदित्याशंक्याधिकार्यभावादित्याह दुर्व्वलानिति तदेवदौर्व्वल्यंप्रकृतोपयोगित्वेनव्याकरोति अजितेन्द्रियानिति यद्यपिकामक्रोधादिप्रधानान् पुरुषान् प्रतिलब्धकामक्रोधादिभिरभिभूयमनोयोगोनष्टोविच्छिन्नसम्प्रदायःसञ्जातस्तथापियोगादृते पुरुषार्थोलोकस्यलभ्यते चेत्किमनेनयोगोपदेशेनेत्याशंक्ययथोक्तयोगाभावेपरमपुरुषार्थाप्राप्तेर्मैवमित्याह लोकञ्चेति पूर्व्वोयोगोविच्छिन्नसम्प्रदायोऽधुनात्वन्ययोगोमदर्थमुच्यतेभगवतेत्याशंक्याह सएवेतिकस्मादन्यस्मैकस्मैचित्पुरातनोयोगोनोक्तोभगवतेत्याशंक्याह भक्तोसीतिउक्तमधिकारिणंप्रतियोगस्यवक्तव्यत्वे हेतुमाह रहस्यंहीति अनादिवेदमूलत्वात् योगस्यपुरातनत्वं भक्तिःशरणबुद्ध्याप्रीतिस्तया युक्तोनिजरूपमवेक्ष्यभक्तोविवक्षितः समानवयःस्निग्धःसहायःसखेत्युच्यते एतदिति कथंयोगोविशेष्यते तत्राह ज्ञानमिति ३

स्वामिकृतटीका ।

सएवायमिति सएवायंयोगोयोगविच्छिन्ने सम्प्रदायेसति पुनस्तमयातेतुभ्यमुक्तं यतस्त्वं ममभक्तोऽसिसखाचअन्यस्मैमयानोच्यते हि यस्मादेतदुत्तमं रहस्यं ३

भाषा अनुवाद ।

जबभगवाननेऐसेकहा किप्रथमहमनेसूर्य्यसे यहीकर्म्मयोग कहाथा तबतो अर्ज्जुनसन्देहयुक्तहोय पूछाकिहेमहाराज अपरकहे इससमयमेतो आपकाजन्मभयाहै और परकहे पूर्व्वकालमेविवस्वान जोसूर्य्यतिनकाजन्म भयाथा इससे नवीनजोआप सोप्राचीनसूर्य्यकेप्रति कर्म्मयोगजोकहा यह हम किसतरहसेजानैं कितुमनेसूर्य्यसे प्रथमकहाथा यह हमैअसंभवऐसाजानि पड़ैहै दूसरा अर्थयहकिअपरकहे औरभीपूर्व्वकालमेआपकाजन्मभयाथा कि सूर्यहीका परकहे इससमयमे कोईजन्मभयाहै नहींतो यह आपकाकहनाजो असम्भवहै सोहमकैसेसत्यकरजानैं कि तुमनेसूर्य्यसे यहयोगकहा है ४

श्रीभगवानुवाच वहूनि मे व्यतीतानि जन्मानि तव चार्जुन
तान्यहं वेद सर्व्वाणि न त्वं वेत्थ परन्तप ५

## शाङ्करभाष्यं

भगवता विप्रतिषिद्धमुक्तमितिमाभूत् कस्यचित् बुद्धिरिति परिहारार्थंचोद्य मिवकुर्व्वन् अर्ज्जुनउवाच अपरमिति अपरमर्व्वाक्वसुदेवगृहे भवतोजन्म परं पूर्व्वंसर्गादौजन्मोत्पत्तिर्व्विवस्वत आदित्यस्य तत्कथमेतद्विजानीयामविरुद्धार्थतया यस्त्वमेवादौप्रोक्तवानिमंयोगंसएवत्वमिदानींमह्यं प्रोक्तवानसीति ४

या वासुदेवेअनीश्वरासर्व्वज्ञाशङ्का मूर्खाणांतांपरिहरन्श्रीभगवानुवाच यद र्थोह्यर्जुनस्यप्रश्नः वहूनीति वहूनिमेममव्यतीतानिअतिक्रान्तानिजन्मानितवचहे अर्जुन तान्यहंवेदजानेसर्व्वाणिनत्वंवेत्थनजानीषे परन्तप धर्माधर्म्मादिप्रतिवद्धज्ञान शक्तित्वादहंपुनर्नित्यशुद्धबुद्धमुक्तसत्यस्वभावत्वादनावरणज्ञानशक्तिरिति वेदाहंहे परन्तप ५

## आनन्दगिरिकृतटीका।

भगवति लोकस्यानीश्वरत्वशङ्कांनिवर्त्तयितुं चोद्यमुद्भावयति भगवतेति परि हारार्थंभगवतो मनुष्यादर्वाक्तस्यानीश्वरत्वमुपेत्य तद्वचनेशङ्कितविप्रतिषेधस्येति शेषः भगवतोनिजरूपमुपेत्यवेदंनेदंचोद्यं किन्तु लीलाविग्रहंगृहीत्वेति वक्तुंचो द्यमिवेत्युक्तं एतच्छव्दार्थमेवस्फुटयति यस्त्वमिति ४

## स्वामिकृतटीका।

भगवतोविवस्वन्तंप्रतियोगोपदेशासम्भवंपश्यन्नर्जुनउवाच अपरमिति अप रंअर्व्वाचीनंतवजन्मपरंप्राक्कालीनंविवस्वतोजन्म तस्मात्तवाधुनातनत्वाच्चिरन्तना यविवस्वते त्वमादौयोगंप्रोक्तवानित्येतत् कथमहंजानीयां ज्ञातुंशक्नुयां ४

रूपान्तरेणोपदिष्टवानित्यभिप्रायेणोत्तरंश्रीभगवानुवाच वहूनीति तान्य हंवेद वेद्मि शक्तित्वात् त्वन्तुनवेत्थनवेत्सि अविद्यावृतत्वात् ५

## भाषा अनुवाद।

तवतोश्रीभगवानवोले किहेअर्जुन हमनेऔरजन्ममेउपदेशकियाथा सन्देह नकरो हमारेऔरतुमारेभी वहुतजन्महोयवीतेहैं परउनसवको हमजानते हैं और तुमनहींजानतेहो क्योंकि हमारीज्ञानशक्तिजातीनहीं वनीरहतीहै औरतुमअविद्या कहेअज्ञान तिससेआवृतकहेघेरेहो इसकारणनहीं जानते ५

## शाङ्करभाष्यं

कथंतर्हितवनित्येश्वरस्यधर्म्माधर्माभावेपिजन्मेत्युच्यते अजोपीपि अजोपिजन्मरहितोऽपिसं स्तथाव्ययात्माक्षीणज्ञानशक्तिस्वभावोऽपिसन् तथाभूतानांब्रह्मादिस्तम्बपर्य्यन्तानांईश्वरईशनशीलोपिसन्प्रकृतिंमायांममवैष्णवींत्रिगुणात्मिकां यस्यावशेसर्व्वंजगत्वर्त्ततेयया मोहितःसन्स्वमात्मानंवासुदेवंनजानाति तांप्रकृतिंस्वामधिष्ठायवशीकृत्यसम्भवामिदेहवानिवभवामि जातइवात्ममाययानपरमार्थतोलोकवत्॥६॥

## आनन्दगिरिकृतटीका

भगवत्यज्ञानांमनुष्यत्वशङ्कांवारयितुंप्रतिवचनमवतारयति यावासुदेवइति अन्यथाप्रश्नेकथमाशङ्कान्तरंपरिहर्त्तुं भगवद्वचनमित्याशंक्य प्रतिवचनयोरेकार्थत्वमाह यद्यौहीति यस्यशङ्कितस्यविरोधस्यपरिहारार्थःतस्यप्रश्नस्तमेवपरिहारंवक्तु भगवद्वचनमित्यर्थः अतीतानेकजन्मवत्त्वं ममैवनासाधारणंकिन्तुसर्व्वप्राणिसाधारणमित्याह तवचेति तानिप्रमाणाभावान्नप्रतिभान्तीत्याशंक्याह तानीति ईश्वरस्यानाहतज्ञानत्वादित्यर्थः किमितितर्हितानिममनप्रतीयन्तेतवाहतज्ञानात्वादित्याह नत्वमिति परान्परिकल्प्यतत्परिभवार्थंप्रवृत्तत्वात्तवज्ञानावरणंविज्ञेयमित्याह परन्तपेति अर्जुनस्यभगवतासहातीतानेकजन्मवत्त्वे तुल्येपिज्ञानवैषम्येहेतुमाह धर्म्मेति आदिशब्देनरागलोभादयोगृह्यन्तेईश्वरस्यातीतानागतवर्त्तमानसर्व्वार्थविषयज्ञानत्वेहेतुमाह अहमिति ५

ईश्वरस्यकारणाभावात् जन्मैवायुक्तमतीतानेकजन्मवत्त्वन्तुदूरोत्सारितमितिशङ्कते कथमिति वस्तुतोजन्माभावेपिमायावशाज्जन्मसम्भवतीत्युत्तरमाह उच्यतइति पारमार्थिकजन्मायोगेकारणंपूर्व्वार्द्धेनानूद्यप्रातिभासिकजन्मसम्भवेकारणमाहप्रकृतिमिति प्रकृतिशब्दस्यस्वरूपविषयत्वंप्रत्यादेष्टुमात्ममाययेत्युक्तं वस्तुतोजन्माभावेकारणानुवादभागंविवृणोति अजोपीत्यादिना प्रातिभासिकजन्मसम्भवेकारणकथनंपरमुत्तरार्द्धंविभजते प्रकृतिमित्यादिना प्रकृतिशब्दस्यस्वरूपशब्दपर्य्यायत्वंवारयति मायामिति तस्याःस्वातन्त्र्यंनिराकृत्यभगवदधीनत्वमाह ममेति तस्याश्चअधिकरणद्वारेणावच्छिन्नत्वंसूचयति वैष्णवीमिति मायाशब्दस्यापिप्रज्ञानामसुपाठाद्विज्ञानशक्तिविषयत्वमाशंक्याह त्रिगुणात्मिकामिति तस्याःकार्य्यलिङ्गकमनुमानंसूचयति यस्याइतिजगतोमायावशवर्त्तित्वमेवस्फुटयति ययेतियथालो

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ६

## आनन्दगिरिकृतटीका

केवञ्चिज्ज्ञातोदेहवानात्तच्यतेएवमहमपिमायामाश्रित्यतयास्ववश्ययासम्भवामिते नमायामयमीश्वरस्यजन्मेत्याह तांप्रकृतिमित्यादिना सम्भवामिइत्युक्तमेवविभजते देहवानिति अस्मदादेरिवतवापिपरमार्थिकत्वाभिमानोजन्मादिविषयेस्यादित्याशंक्य प्रागुक्तस्वरूपपरिज्ञानवत्वादीश्वरस्यमैवमित्याह नपरमार्थतइति आहत ज्ञानवतोलोकस्यजन्मादिविषयेपरमार्थत्वाभिमानःसम्भवतीत्याह लोकवदिति ६

## स्वामिकृतटीका

ननुअनादेस्तवकुतोजन्मअविनाशिनश्चकथंपुनःपुनर्जन्मयेनबहूनिमेव्यतीतानीत्युच्यते ईश्वरस्यतवपुण्यपापविहीनस्यकथंवाजीववज्जन्मेत्यतआह अजोऽपीतिसत्यमेवंतथापिअजोऽपिजन्मशून्योऽपिसन्नहंतथाऽव्ययात्मापिअनश्वरस्वभावोऽपिसन्तथाईश्वरोऽपिकर्मपारतन्त्र्यरहितोपिसन् स्वमाययासम्भवामिसम्यक्अप्रच्युतज्ञानबलवीर्यादिशक्त्यैवभवामि ननुतथापिषोड़शकलात्मकलिङ्गदेहशून्यस्यचतवकुतोजन्मइत्यतउक्तं स्वांशुद्धसत्त्वात्मिकांप्रकृतिमधिष्ठायस्वीकृत्य विशुद्धोर्जितसत्त्वमूर्त्यास्वेच्छयावतरामीत्यर्थः ६

## भाषाअनुवाद।

जोकहोकिअनादिजोतुम तुमाराजन्मकैसे औरअविनाशीहौ तुम तुमारा पुनर्जन्मकींवाकैसेसम्भवहोय जोकहतेहोकि बहुतजन्महमारेव्यतीतभयेहैं औरसीतुम ईश्वरतुमारेपुन्यऔपाप दोनोभीनहींहैं तोफेरिजीवकेसमानतुमाराजन्मकैसेसंभवहो यतिसपरकहतेहैं कि हांयहबाततोठीकहै परहमजन्मरहित औरअविनाशीस्वभावहोकेभी तथाईश्वरअर्थात्कर्मकेवशनहींभीहैं परतौभीअपनीमायाकेद्वारा स्वइच्छासेप्रगटहोतेहैं और जोकहोकितौभीपञ्चज्ञानइन्द्रीऔपञ्चकर्मइन्द्रीतथापञ्चप्राणऔरएकअन्तःकरण येसोरहकलारूपलिङ्गशरीरकेविनाकिसतरहतुमाराजन्महोना सम्भवहैयइसपरकहतेहैं किहमअपनीशुद्धसत्त्वात्मकप्रकृतिकोस्वीकारकरिअतिजाज्वल्यमानसत्वमूर्त्तिसेस्वेच्छाधीनआपसेआपअवतारलेतेहैं ६

यदायदाहि धर्मस्यग्लानिर्भवतिभारत अभ्युत्थानमधर्मस्यतदात्मानं सृजाम्यहं ७
परित्राणायसाधूनांविनाशायचदुष्कृतां धर्मसंस्थापनार्थायसम्भवामियुगेयुगे ८

शाङ्करभाष्यम्

तच्चजन्मकदाकिमर्थंवेत्युच्यते यदेति यदायदाहिधर्मस्यग्लनिर्हानिर्व्वर्णाश्रमादिलक्षणस्यप्राणिनामभ्युदयनिःश्रेयससाधनस्य अभावोभवतिभारतअभ्युत्थानंसमुद्भवोऽधर्मस्यतदातदात्मानंसृजाम्यहं मायया ७

आनन्दगिरिकृतटीका

यदीश्वरस्यमायानिवन्धनंजन्मेत्युक्तंतस्यप्रश्नपूर्व्वककालंकथयति तच्चेत्यादिना चातुर्व्वर्ण्यंचातुराश्रम्येचयथावदनुष्ठीयमानेनास्तिधर्महानिरिति मन्वानोविशिनष्टि वर्णेति वर्णैराश्रमैस्तदाचारैश्चलच्यतेज्ञायतेधर्मःतस्येतियावत् धर्महानौ समस्तपुरुषार्थभङ्गोभवतीत्यभिप्रेत्याह प्राणिनामिति नचयथोक्तसर्व्वधर्मस्यहानिं सोढुंशक्तोभवानित्याह भारतेति नकेवलं प्राणिनांधर्महानिरेवभगवतोमूर्त्तिग्रहस्यपरिग्रहेहेतुरपितुतेषामधर्मप्रवृत्तिरपीत्याह अभ्युत्थानमिति [illegible] तिपूर्व्वेणसम्बन्धः ७

स्वामिकृतटीका।

कदासम्भवसीत्यपेक्षायामाह यदायदेति ग्लानिर्हानिःअभ्युत्थानमाधिक्य [illegible]

भाषा अनुवाद

तोअपनीइच्छासेकवआपजन्मग्रहणकरतेहो इसअपेक्षापरकहतेहैं किहे भारतभरतवंशीअर्जुन जवजवधर्मकीग्लानिअर्थात्हानिहोतीहै औरअधर्मकाअभ्युत्थानकहे वृद्धिहोती तवतवहमशरीरधारनकरतेहैं ७

जोकहोकिऐसेसमयमेंआपक्योंशरीरधारणकरअवतरतेहो तोकहतेहैं कि साधुकहेस्वधर्मकेकरनेवालेलोगउनकीरक्षाऔरदुःकृतकहेअधर्मीपापीजनोंके नाशकेहेतुमैंजन्मलेताहूं इससेयहआया किधर्मकास्थापनऔसाधुकारक्षण दुष्टोंकावधकरिमैंधर्मकीवृद्धिकरनेकोसोईसोईसमयमेंशरीरग्रहणकरताहूं वही कहाकिसंभवामियुगेयुगे जोकोईशङ्काकरैकिदुष्टनाशकरनेसेभगवानकोनिर्दयताआवतीहै तोऐसाकभीकहनानहीं देखोमातापितागुरुयेजोपुत्रशिष्यकोशिक्षाकेहेतुताड़नकरतेहैं तोक्यानिर्दईहैं ऐसेहीईश्वरभीगुणदोषनियमकेअर्थदण्डदेतेहैं परशत्रुतासेनहीं ८

जन्मकर्म्मचमेदिव्यमेवंयोवेत्तितत्त्वतः त्यक्त्वादेहं पुनर्जन्मनैतिमामेतिसोऽर्जुन ६

## शाङ्करभाष्यं

किमर्थंपरित्राणायेति परित्राणायपरिरक्षणायसाधूनांसन्मार्गस्थानां विनाशायचदुष्कृतांपापकारिणांकिञ्चधर्मसंस्थापनार्थायसम्यक् स्थापनंतदर्थं सम्भवामियुगेयुगेप्रतियुगं ८

जन्मेति तत् जन्ममायारूपंकर्म्मचसाधूनां परित्राणादिमेममदिव्यम प्राकृतमैश्वरमेवंयथोक्तं योवेत्तितत्त्वतः तत्त्वेनयथावत्त्यक्त्वादेहमिमंपुनर्जन्मपुनरु त्पत्तिंनैति नप्राप्नोति मामेत्यागच्छति समुच्यते अर्जुन ६

## आनन्दगिरिकृतटीका।

यथोक्तेकालेकृतकृत्यस्यभगवतोमायाकृतेजन्मनिप्रश्नपूर्व्वकंप्रयोजनमाह किमर्थ मित्यादिना यथासाधूनांरक्षणमसाधूनांनिग्रहस्त्र भगवदवतारफलं तथाफला न्तरमपितस्यास्तीत्याह किञ्चेति धर्मोहिस्थापितेजगदेवस्थापितंभवत्यन्यथाभिन्नम र्यादंजगदसङ्गतमापद्येतेत्यर्थः ८

## स्वामिकृतटीका।

किमर्थमित्यपेक्षायामाह परित्राणायेति साधूनांस्वधर्मवर्त्तिनांरक्षणायदु ष्टंकर्मकुर्व्वन्तीतिदुष्कृतस्तेषांवधायचएवंधर्मसंस्थापनार्थायसाधुरक्षणेन दुष्टवधेनच धर्मंस्थिरीकर्त्तुं युगेयुगेतत्तदवसरेसम्भवामीत्यर्थः नचैवंदुष्टनिग्रहं कुर्व्वतोऽपिनै र्घृण्यंशङ्कनीयमथाहुः लालनेताडनेमातुर्नाकारुण्यंयथार्भकेतद्वदेवमहेशस्यनि यन्तुर्गुणदोषयोरिति ८

एवम्विधानामीश्वरजन्मकर्मणाञ्ज्ञानेफलमाह जन्मेति स्वेच्छयाकृतंममज न्मकर्म्मचधर्म्मपालनरूपंदिव्यमलौकिकंतत्वतःपरानुग्रहार्थमेवेतियोवेत्ति सदेहाभि मानंत्यक्त्वापुनर्जन्मसंसारंनैति नप्राप्नोति किन्तुमामेवप्राप्नोति ६

## भाषा अनुवाद।

अबअपनेजन्मकर्म्मजाननेकाफलकहतेहैं किहमारेस्वेच्छासेदिव्यकहेअलौ किकआस्चर्य्यरूप जोजोजन्मऔकर्म केवललोकके अनुग्रहार्थहैं तिनकेतत्त्वपूर्व कजाननेसे लोगदेहअभिमानकोछोड़िकरफेरिसंसारमेजन्मग्रहणनहीकरतेहैं वलुहमारेहीकोप्राप्तहोते अर्थात्आवागमनसेरहितहोतेहैं ६

*

वीतरागभयक्रोधामन्मयामामुपाश्रिताः बहवोज्ञानतपसापूतामद्भावमागताः १०

## आनन्दगिरिकृतटीका।

मायामयमीश्वरस्यजन्मनवास्तवं तस्यैवचजगत्परिपालनंकर्म्मनान्यस्येति जानतःश्रेयोवाप्तिं दर्शयन्विपचेप्रत्यवायंसूचयति तज्जन्मेत्यादिना यथोक्तंमाया मयंकल्पितमिति यावत्वेदनस्ययथावत्त्वं वेद्यस्यजन्मादेरुक्तरूपानतिवर्त्तित्वं यदि पुनर्भगवतोवास्तवंजन्मसाधुजनपरिपालनादिचान्यस्यैवकर्म क्षत्रियस्येतिविवच्यते तदा तत्वापरिज्ञानप्रयुक्तोजन्मादिःसंसारोदुर्वारःस्यादिति भावः ६

सम्प्रतिप्रस्तुतमोक्षमार्गस्यनूतनत्वेनाव्यवस्थितत्वमाशङ्क्यपरिहरति नैषइति मन्मयत्वस्यमद्भावगमनेनापौनरुक्त्यंप्रदर्शयति ब्रह्मविदइति आत्मनोभिन्नत्वेनवा ब्रह्मणोवेदनंव्यावर्त्तयति ईश्वरेति अभेददर्शनेनसमुच्चित्यकर्म्मानुष्ठानांप्रत्याचष्टे मामेवेति तदुपाश्रयत्वमेवविषदयति केवलेति मामुपाश्रिताइतिकेवलज्ञान निष्ठत्वमुक्त्वाज्ञानतपसापूताइतिकिमर्थंपुनरुच्यतेतत्राह इतरेति १०

## स्वामिकृतटीका।

कथंजन्मकर्मज्ञानेनत्वत्प्राप्तिःस्यादित्यतआह वीतरागेति अहंशुद्धसत्वावतारैर्धर्मपालनंकरोमीतिमदीयंपरमकारुणिकत्वं ज्ञात्वावीताविगतारागभयक्रोधा येभ्यस्तचित्तविक्षेपाभावामन्मयामदेकचित्ताभूत्वामामेवोपाश्रिताः सन्तोमत्प्रसाद लब्धंयदात्मज्ञानञ्चतपश्चतत्परिपाकहेतुःस्वधर्म्मः इन्द्रैकवद्भावः तेनज्ञानतपसा पूताःशुद्धानिरस्ताज्ञानतत्कार्य्यमलामद्भावंमत्सायुज्यंप्राप्ताबहवःनत्वधुनैवप्रवृत्तो ऽयंमद्भक्तिमार्गइत्यर्थः तदेवंतान्यहंवेदसर्व्वाणीत्यादिनाविद्याविद्योपाधिभ्यांतत्वंप दार्थावीश्वरजीवौप्रदर्श्य ईश्वरस्यचाविद्याभावेननित्यशुद्धत्वाज्जीवस्यचेश्वरप्रसाद लब्धज्ञानेनाज्ञाननिवृत्तेःशुद्धस्यसतश्चिदंशेनतदैक्यमुक्तमितिद्रष्टव्यं १०

## भाषा अनुवाद।

जोकहोकिईश्वरकेजन्मकर्मजाननेहींसेकैसेईश्वरप्राप्तिहोतीहै इसपरकह तेहैं किशुद्धसतोगुणसेअवतारलेयहमारेजोपरमदयालुताकेकर्म तिनकेजान नेसेसतोगुणकेद्वारा सत्त्वबुद्धिहोतीहैफेरिवेलोगसंसारसेविगतस्नेह औ गतक्रो धनिर्भयहोय मेरेआश्रितमद्रूपअर्थात्मत्स्वभाव वज्ञतेरेज्ञानसम्पन्नपवित्रहोय मद्भावकोप्राप्तभयेहैं अर्थात्मेरेस्वरूपमेलीनहोगयेहैं १०

येयथामांप्रपद्यन्तेतांस्तथैवभजाम्यहं ममवर्त्मानुवर्त्तन्तेमनुष्याःपार्थसर्व्वशः ११

शाङ्करभाष्यम्।

नैषमोक्षमार्गइदानींप्रवृत्तःकिंतर्हिपूर्व्वमपि वीतरागेति वीतरागभयक्रोधा रागश्चभयञ्चक्रोधश्चरागभयक्रोधाः वीताविगतायेभ्यस्तेवीतरागभयक्रोधामन्मयाब्रह्मविदईश्वराभेददर्शिनो मामेवचपरमेश्वरमुपाश्रिताःकेवलज्ञाननिष्ठाइत्यर्थःबहवोऽनेकेज्ञानतपसाज्ञानमेवचपरमात्मविषयंतत्तपस्तेनज्ञानतपसापूताः परांशुद्धिंगताःसन्तोमद्भावमीश्वरभावंमोक्षमागताःसमनुप्राप्ताःइतरतपोनिरपेक्षाज्ञाननिष्ठाइत्यस्यलिङ्गंज्ञानतपसेतिविशेषणं १०

तवतर्हि रागद्वेषौस्तः येनकेभ्यश्चिदेवात्मभावं प्रयच्छसि नसर्व्वेभ्यइत्युच्यते येयथेति येयथायेनप्रकारेणयेनप्रयोजनेनयत्फलार्थितया मां प्रपद्यन्तेतांस्तथैव तत्फलदानेनभजाम्यहमनुगृह्णाम्यहं इत्यतः तेषांमोक्षंप्रत्यनर्थित्वान्नह्येकस्यमुमुक्षुत्वंफलार्थित्वञ्च युगपत् सम्भवति अतो ये यत्फलार्थिनःतान्तत्फलप्रदानेन,येयथोक्तकारिणस्तत्फलार्थिनोमुमुक्षवश्च तान्ज्ञानप्रदानेन येज्ञानिनःसन्यासिनोमुमुक्षवश्चतान्मोक्षप्रदानेन तथाआर्त्तानार्त्तिहरणेनेत्येवंयथायेन प्रकारेण मां प्रपद्यन्ते येतांस्तथैवभजामीत्यर्थः नपुनः रागद्वेषनिमित्तंमोहनिमित्तं वा किञ्चिद्भजामि सर्व्वथापिसर्व्वावस्थस्यममेश्वरस्य वर्त्ममार्गमनुवर्त्तन्तेये मनुष्याःयत्फलार्थितयायस्मिन्कर्मण्यधिकृताः येप्रयतन्ते ते मनुष्याअत्रउच्यन्ते हे पार्थ सर्व्वशःसर्वप्रकारैः ११

भाषा अनुवाद।

तोतुमारेभो क्याविपरीतभावकहे स्वपरबुद्धिहै जिसहेतु शरणागत को कृपाकरिआत्मस्वभावदेते और दूसरेकोनहीं देते हो इसकासिद्धान्तकहतेहैं किहेपार्थअर्जुन जोमनुष्यजबजिसप्रकारअर्थात्सकाम या निःकामरूपहमको भजते सेवते हैं उनकोवैसेही फलप्रदानकरि मैभीअनुग्रहकरताहूं और कामनाकरके जोलोगइन्द्रआदिदेवतोंका भजनपूजनकरतेहैं उनकाअनादर या त्याग हमनहीं करते कारणयह किजिसकिसीकीपूजायाभजनकरै वह मेरीहीपूजाहोतीहै क्योंकि सर्व्वरूपमयमैहीहूं सोहेपार्थ मेरीही राहमे सबमनुष्यवर्त्तमानहैं परजैसीजिसकीभावना तैसातिसकोफलमिलताहै इससेसकामलोगोंको कर्म्मानुसारफललाभदेखाया और निःकामतो मेराहूपहीहैं ११

आनन्दगिरिकृतटीका।

ईश्वरःसर्व्वेभ्योभूतेभ्योमोक्षंप्रयच्छतिचेत् प्रागुक्तविशेषणवैयर्थ्यंयदितुकेभ्यश्चिदेव मोक्षंप्रयच्छेत्तर्हि तस्य रागादिमत्त्वादनीश्वरत्वापत्तिरितिशङ्कते तवतर्हीति येमुमुक्षवस्तेभ्योमोक्षमीश्वरोज्ञानसम्पादनद्वारा प्रयच्छति फलान्तरार्थिभ्यस्तुतत्तदुपायानुष्ठापनेनतत्तदेवददातीति नास्यरागद्वेषावितिपरिहरति उच्यतइति मुमुक्षूणामीश्वरानुसारित्वेपिफलान्तरार्थिनांकुतस्तदनुसारित्वमित्याशंक्यफलमत उपपत्तेरितिन्यायेन तत्फलस्येश्वरायत्वात्तदनुवर्त्तित्वमावश्यकमित्याह ममेति भगवद्वचनभागिनांसर्व्वेषामेवकैवल्यमेकरूपंकिमितिनानुगृह्यतेतत्राह तेषामिति अभ्युदयनिःश्रेयसार्थित्वंप्रार्थनावैचित्र्यादेकस्यैवकिंनस्यादित्याशंक्यपर्य्यायेणतदनुपपत्तिंसाधयति नहीति मुमुक्षूणांफलार्थिनाञ्चविभागेस्थितेसत्यनुग्रहविभागंफलितमाह अतइति फलप्रदानेनानुगृह्णामीति सम्बन्धः नित्यनैमित्तिककर्म्मानुष्ठायिनामेव फलार्थित्वाभावेसति मुमुक्षुत्वेकथंतेष्वनुग्रहः स्यादिति तत्राह येयथोक्तेति ज्ञानप्रदानेनभजामीत्युत्तरत्रसम्बध्यः सन्तिकेचित्त्यक्तसर्व्वकर्म्माणोज्ञानिनोमोक्षमेवापेक्ष्यमाणास्तेष्वनुग्रहप्रकारं प्रकटयति येज्ञानिनइति केचिदार्त्ताःसन्तो ज्ञानादिसाधनान्तररहिता भगवन्तमेवार्त्तिमत्यहर्त्तुमनुवर्त्तन्ते तेषुभगवतोऽनुग्रहविशेषंदर्शयति तथेति पूर्व्वार्द्धव्याख्यानमुपसंहरति इत्येवमिति भगवतोऽनुग्रहे निमित्तान्तरंनिवारयति नपुनरिति फलार्थित्वेमुमुक्षुत्वे च जन्तूनांभगवदनुसरणमावश्यकमित्युत्तरार्द्धं विभजते सर्व्वथापीति सर्व्वावस्थत्वं तेनतेनात्मनापरस्यैवेश्वरस्यावस्थानंमार्गोज्ञानकर्म्मलक्षणः मनुष्यग्रहणादितरेषामीश्वरमार्गानुवर्त्तित्वसप्युदासःस्यादित्याशंक्याह यत्फलेति सर्व्वप्रकारैर्म्ममार्गमनुवर्त्तन्ते इतिपूर्व्वेणसम्बन्धः ११

स्वामिकृतटीका

ननुतर्हि किंत्वय्यपिवैषम्यमस्ति यस्मादेवंत्वदेकशरणानामेवात्मभावंददासि नान्येषांसकामानामित्यतआह येइति यथायेनप्रकारेणसकामतयानिःकामतयावायेमांभजन्तितानहंतथैवतदपेक्षितफलदानेनभजामिअनुगृह्णामिनतुसकामानांविहायेन्द्रादीनेवयेभजन्तेतानहमुपेक्षइति मन्तव्यं यतःसर्व्वशःसर्व्वप्रकारैरिन्द्रादिसेवकाअपिममैववर्त्मभजनमार्गमनुवर्त्तन्तइन्द्रादिरूपेणापि ममैव सेव्यत्वात् ११

काङ्क्षन्तःकर्मणांसिद्धिंयजन्तइहदेवताः क्षिप्रंहिमानुषेलोकेसिद्धिर्भवतिकर्मजा॥१२

## शाङ्करभाष्यं ।

यदितवेश्वरस्यरागादिदोषाभावःतदासर्व्वप्राणिषुअनुजिघृक्षायांतुल्यायांस र्व्वफलप्रदानसमर्थेचत्वयिसतिवासुदेवःसर्व्वमिति ज्ञानेनैवमुमुक्षवः सन्तःकस्मा त्त्वामेवसर्वे नप्रतिपद्यन्तेइतिशृणुतत्रकारणंकाङ्क्षन्तइति अभिलषन्तःकर्मणांसि द्धिंफलनिष्पत्तिंप्रार्थयन्तोयजन्तेइहास्मिन्लोकेदेवताइन्द्राग्न्याद्याःअथयोन्यांदेव तामुपास्तेऽन्योसावन्योहमस्मीति नसवेद यथापशुरेवंसदेवानामितिश्रुतेः तेषां हिभिन्नदेवतायाजिनांफलाकाङ्क्षिणांक्षिप्रंशीघ्रंहियस्मान्मानुषेलोकेमनुष्यलो केहिशास्त्राधिकारःक्षिप्रंहिमानुषेलोकेइति विशेषणादन्येष्वपिकर्मफलसिद्धिंद र्शयतिभगवान्मानुषेलोकेवर्णाश्रमादिकर्म्माणीतिविशेषः तेषाञ्चवर्णाश्रमाद्यधि कारिणांकर्मणांफलसिद्धिःक्षिप्रंभवतिकर्मजाकर्मणोजाता १२

## आनन्दगिरिकृतटीका ।

अनुग्राह्याणांज्ञानकर्मानुरोधेनभगवतातेष्वनुग्रहविधानात्तस्यरागद्वेषौ यदिनभवतस्तर्हि तस्यरागाद्यभावादेवसर्व्वेषुप्राणिष्वनुग्रहेच्छातुल्याप्राप्ता नच तस्यांसत्यामेवफलस्याल्पीयसःसम्पादनेसामर्थ्यं नतुभगवतोमहतोमोक्षाख्यस्यफल स्यप्रदानेऽशक्तिरिति युक्तमप्रतिहतज्ञानेच्छाक्रियाशक्तिमतस्तवसर्व्वफलप्रदानसा मर्थ्यात्तथाचययोक्तानुजिघृक्षायांसत्यांत्वयिचययोक्तसामर्थ्यं वतिसतिसर्व्वेफलगुफ लादश्युदयात्विमुखामोक्षमेवापेक्षमाणाज्ञानेनत्वामेवकिमिति नप्रतिपद्येरन्नि तिचोदयति यदीति सोक्षापेक्षाभावात्तदुपायभूतज्ञानादपिवैमुख्याद्भगवत्प्राप्त्य भावेहेतुमभिदधानःसमाधत्ते शृणिवति कर्मफलसिद्धिमिच्छतांकिमितिमानुषे लोकेदेवतापूजनमिष्यतेतत्राह क्षिप्रंहीति कर्मफलसम्बन्धर्शिनांवद्ध्यवध्यविभा गदर्शिनांतदृर्शनेकारणमात्माज्ञानमित्यत्रवृहदारण्यकश्रुतिमुदाहरति अथेति

## भाषा अनुवाद ।

जोऐसाकहोकितौफेरिमोक्षहीकेवास्तेसवलोगभगवतकाआराधनक्योंनहीं करतेहैं इसपरकहतेहैं किमनुष्यलोकमे वहुतेरेलोग कर्मफलकीअभिला षाकरि इन्द्रआदिदेवतोंकीसेवाकरते औरसाक्षात्हमारीसेवानहीकरतेहैं क्योंकिकर्मसेफलशीघ्रप्राप्तहोता औरमेरीसाक्षात्सेवासे ज्ञानकाफलरूपजोमु क्ति सोदुःप्रापहै वड़ेकठिनसेचिरकालमेमिलतीहै १२

## शाङ्करभाष्यं

मानुषएवलोकेवर्णाश्रमादिकर्माधिकारोनान्येषुलोकेष्वितिनियमःकिंनिमित्तइति अथवावर्णाश्रमादिप्रविभागोपेतामनुष्या ममवर्त्मानुवर्त्तन्ते सर्वशइत्युक्तं कस्मात् पुनःकारणात् नियमेनतवैववर्त्मानुवर्त्तन्ते नान्यस्येत्युच्यते चातुर्वर्ण्यंमि

## आनन्दगिरिकृतटीका।

अविद्याप्रकरणोपक्रमार्थमथेत्युक्तं उपायगंभेददर्शनमित्यनूद्यकारणमात्मज्ञानं नतत्वेतिदर्शयति नेति यथास्मदादीनांहलवहनादिनापशुरुपकरोत्येवमज्ञोदेवादीनांयागादिभिरुपकरोतीत्याह यथेति किमितितेफलाकाङ्क्षिणोभिन्नदेवतायाजिनोज्ञानमार्गंनापेक्षन्तेतत्रोत्तराद्धंमुत्तरत्वेनयोजयति तेषामित्यादिना यस्माद्यथोक्तानामधिकारिणांकर्मप्रयुक्तंफलंलोकविशेषेझटितिसिध्यतितस्मात्तेषांमोक्षमार्गादस्तिवैमुख्यमित्यर्थः।मानुषलोकविशेषणंकिमर्थमित्याशंक्याह मनुष्यलोकेहीति लोकान्तरेष्वपितर्हिकर्मफलसिद्धिर्नास्तीत्याशंक्य क्षिप्रविशेषणस्यतात्पर्यमाह क्षिप्रमिति क्वचित्कर्मफलसिद्धिरविलम्बेनभवत्यन्यत्रतुविलम्बेनेतिविभागेकोहेतुरित्याशंक्य सामग्रीभावाभावाभ्यामित्याह मानुषइति मनुष्यलोकेकर्मफलसिद्धेःशैघ्र्यात्तदभिमुखानांज्ञानमार्गवैमुख्यंप्रायिकमित्युपसंहरति तेषामिति १२

## स्वामिकृतटीका।

तर्हिमोक्षार्थमेवकिमिति सर्वेत्वांनभजन्तीत्यतआह काङ्क्षन्तइति कर्मणांसिद्धिंकर्मफलंकाङ्क्षन्तः प्रायेणेहमनुष्यलोकेइन्द्रादिदेवता एवयजन्ते नतुसाक्षान्मामेव हियस्मात्कर्मजासिद्धिःकर्मजंफलंशीघ्रंभवति नतुज्ञानफलंकैवल्यंदुष्प्राप्यत्वात्ज्ञानस्य १२

ननुकेचित्सकामतयाप्रवर्त्तन्तेकेचिन्निष्कामतयेति कर्मवैचित्र्यंतत्कर्तृणाञ्चब्राह्मणादीनामुत्तममध्यमादिवैचित्र्यंकुर्वतस्तवकथंवैषम्यंनास्तीत्याशंक्याह चातुर्वर्ण्यमिति चत्वारोवर्णाएवेति चातुर्वर्ण्यं स्वार्थेष्यञ्प्रत्ययःअयमर्थःसत्त्वप्रधानाब्राह्मणास्तेषांशमदमादीनिकर्माणिसत्वरजःप्रधानाःक्षत्रियास्तेषांशौर्ययुद्धादीनिकर्माणि रजस्तमःप्रधानावैश्यास्तेषाञ्चकृषिवाणिज्यादीनिकर्माणि तमःप्रधानाःशूद्रास्तेषाञ्चत्रैवर्णिकशुश्रूषादीनिकर्माणीत्येवंगुणानांकर्मणाञ्चविभागैश्चातुर्वर्ण्यंमयैवसृष्टमितिसत्यं तथाप्येवंतस्यकर्त्तारमपिफलतोऽकर्त्तारमेवमांविद्धि तत्रहेतुरव्ययंआसक्तिराहित्येनश्रमरहितं १३

चातुर्वर्ण्यं मयासृष्टंगुणकर्म्मविभागशः तस्यकर्त्तारमपिमांविद्ध्यकर्त्तारमव्ययं १३

शाङ्करभाष्यं

ति चातुर्वर्ण्यंचत्वारएववर्णाश्चातुर्वर्ण्यं मयेश्वरेणसृष्टमुत्पादितं ब्राह्मणोऽस्य मुखमासीदित्यादिश्रुतेः गुणकर्म्मविभागशः गुणविभागशः कर्म्मविभागशश्च गुणाः सत्त्वरजस्तमांसि तत्रसात्त्विकस्यसत्वप्रधानस्यब्राह्मणस्यशमोदमस्तप इत्यादीनि कर्म्माणिसत्त्वोपसर्ज्जनरजःप्रधानस्यक्षत्रियस्यशौर्य्यतेजःप्रभृतीनिकर्म्माणि तमउप सर्जनरजःप्रधानस्यवैश्यस्यकृष्यादीनिकर्माणि रजउपसर्ज्जनतमःप्रधानस्यशूद्रस्य शुश्रूषैवकर्मेत्येवंगुणकर्मविभागशःचातुर्वर्ण्यंमयासृष्टमित्यर्थःतच्चेदंचातुर्वर्ण्यंनान्ये षुलोकेषुअतोमानुषेलोकेइति विशेषणंहन्ततर्हिचातुर्वर्ण्यस्यसर्गादेःकर्म्मणःकर्तृ त्वात्तत्फलेषुयुज्यसेअतोनत्वंनित्यमुक्तोनित्येश्वरइत्युच्यतेयद्यपिमायासंव्यवहारेण तस्यकर्मणःकर्त्तारमपिसन्तंतथापिमांपरमार्थतो विद्ध्यकर्त्तारमतएवाव्ययमसंसा रिणञ्चमांविद्धि १३

आनन्दगिरिकृतटीका।

मनुष्यलोकेचातुर्वर्ण्यंचातुराश्रम्यमित्यनेनद्वारेणकर्माधिकारनियमेकारणं पृच्छति मानुषएवेति आदिशब्देनावस्थाविशेषाविवक्ष्यन्ते प्रकारान्तरेणदृष्टान्तानु

भाषा अनुवाद।

औरजोकहोकिचारोवर्णकेकर्त्ताभीतुमहीहो औरअनेकप्रकारकर्मभीवे दकेद्वारातुम्हीनेकहाहै फेरिउन्हीकर्मोकेकरनेवालेब्राह्मणआदिवर्णोकोउत्त मओअधमकर्मभीतुमनेकहा तोइससबकेकरनेओकहनेवालेएकतुमठहरे फेरि किसीकीप्रवृत्तिसकामकर्ममेऔरकिसीकीनिष्कामकर्ममेजोहोतीहै तोकहोवैषम्य दोषकहेविषमस्वभावतुमाराक्योंनहीहै इनबातोंसेअवतुमकोपक्षपातदोष भीहोसकताहै इसकेउपरकहतेहैंकिहां चातुर्वर्ण्यकहेसतोगुणप्रधानजोब्रा ह्मण उनकेकर्मशमदमउपरतितितिक्षासमाधानश्रद्धाहैं औरसत्त्वरजप्रधान जोक्षत्री उनकेकर्मभूमिरक्षाप्रजापालनयुद्धआदिकहैं औररजोगुणतमोगुणप्र धानजोवैश्य तिनकेकर्मव्यापारखेतीआदिकहै और तमोगुणप्रधानशूद्रकाकर्म इनतीनोवर्णकीसेवाहै सोयहबातठीकहैपरजौभी,हमइनकेकर्त्ताहैं तौभीअ कर्त्ताहीजानो क्योंकिहमअव्यय हमारीआसक्ति इनकर्मोमेनहीहै १३

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा इति मां योऽभि
जानाति कर्मभिर्न स बध्यते १४

शाङ्करभाष्यं

येषान्तुकर्मणांकर्त्तारंमामन्यसेपरमार्थतस्तेषामकर्त्तैवाहंयतः नेति नमां
तानिकर्माणिलिम्पन्ति देहाद्यारम्भकत्वेनाहङ्काराभावान्नचतेषांकर्म्मणाफलेषु

आनन्दगिरिकृतटीका।

वादपूर्वकंचोद्यमुत्थापयति अथवेत्यादिना प्रश्नद्वयंपरिहरति उच्यतइति तर्हित
वकर्तृत्वभोक्तृत्वसम्भवादस्मदादितुल्यत्वेनानीश्वरत्वमित्याशंक्याह तस्येति ईश्वर
स्यनिग्रहप्टिनिंदधानस्यसृष्टिवैषम्यनिर्म्मोहकंकथयति गुणेति गुणविभागेनकर्मवि
भागस्तेन चातुर्वर्ण्यस्यसृष्टिमेवोपदिष्टांस्पष्टयति तत्रेत्यादिना प्रश्नद्वयंप्रतिविधानं
प्रकृतमुपसंहरति तच्चेदमिति मनुष्यलोकेपरंवर्णाश्रमादिपूर्व्वकेकर्म्मण्यधिकारस्त
त्रैववर्णादेरीश्वरेणसृष्टत्वान्नलोकान्तरेषुतत्रवर्णाद्यभावादीश्वरमेवचातुर्व्वर्ण्याश्र
मादिविभग्गभागिनोऽधिकारिणोनुवर्त्तन्ते तेनैववर्णादेस्तद्व्यापारस्यचसृष्टत्वात्त
दनुवर्त्तनस्ययुक्तत्वादित्यर्थः तस्येत्यादिद्वितीयभागापोह्यंचोद्यमनुद्रवति हन्तेति
यदिचातुर्व्वर्ण्यादिकर्तृत्वादीश्वरस्यप्रागुक्तोनियमोऽभिमतस्तर्हितद्विषयसृष्ट्यादेस्त
न्निष्ठव्यापारस्यचधर्म्मादेर्निवर्त्तकत्वात्तत्फलस्यकर्तृत्वभोक्तृत्वयोस्त्वयिप्रसङ्गात्नि
त्यमुक्तत्वादितेनस्यादित्यर्थः मायायाकर्तृत्वंपरमार्थतश्चाकर्तृत्वमित्यभ्युपगमा
न्नित्यमुक्तत्वादिसिध्यतीत्युत्तरमाह उच्यतइति मायाप्रवृत्तेनसंव्यवहारेणचातुर्व्व
र्ण्यादेस्तत्कर्म्मणश्चयद्यपिकर्त्ताहं तथापितथाविधंमांपरमार्थतोऽकर्त्तारंविद्धीति
योजनाअकर्तृत्वादेवाभोक्तृत्वसिद्धिरित्याह अतएवेति १३

भाषा अनुवाद।

वहीकर्मकीआसक्तिदेखलातेहुयेकहतेहैं किदेखोविश्वसर्जनआदिकर्महम
कोनहींलगते औरनकर्म्मफलकीइच्छाहमैंहै क्योंकिहमनिरहङ्कारकर्मकरते
औरपूर्णकामहैं इससेकोईविषयकेदर्शनादिसेहमारीभोगमेंइच्छानहींहोतीतो
येकर्महमैंकैसेआसक्तकरसकैं औरक्याकहैं देखोजोमनुष्यहमकोकर्ममेंनिर्लिप्त
जानतेहैं वेभीकर्मबन्धनमेंनहींपड़ते कारणयहकिजोहमारेनिर्लेपताकेहेतुअन
हंकारऔनिस्पृहहैं सोउनकेजानकारपुरुषकेभीशिथिलहोते कहेनाममात्रकोर
हजातेऔरकुछकामदेखनेयोग्यनहींरहतेहैं नउनकाकुछकरसकतेहैं १४

## शाङ्करभाष्यं ।

मेस्पृहाऽतस्ता तेषान्तुसंसारिणामहंकर्त्तेत्यभिमानःकर्मसुस्पृहातत्फलेषुचतान् कर्माणिलिम्पन्तीतियुक्तं तदभावान्नमांकर्माणिलिम्पन्तीत्येवं योऽन्योपिमामात्मत्वे नाभिजानातिनाहंकर्त्तानमेकर्मफलेस्पृहेति सकर्मभिर्नबध्यते तस्यापिनदेहाद्या रम्भकाणिकर्माणिभवन्तीत्यर्थः १४

## आनन्दगिरिकृतटीका ।

ईश्वरस्यकर्तृत्वभोक्तृत्वयोर्वस्तुतोऽभावेकर्मतत्फलसम्बन्धवैधुर्यंफलतीत्याह येषांत्विति कर्मतत्फलसंस्पर्शशून्यमीश्वरंमांपश्यतोदर्शनानुरूपंफलंदर्शयति न मामिति तानिकर्माणीतियेषांकर्मणामहंकर्त्तातवाभिमतस्तानीतियावत् देहे न्द्रियाद्यारम्भकत्वेन तेषांकर्मणामीश्वरेसंस्पर्शाभावे तस्यतत्कारणावस्थायामह ङ्काराभावंहेतुंकरोति अहङ्काराभावादिति कर्मफलतृष्णाभावाच्चेश्वरंकर्माणिन लिम्पन्तीत्याह नचेति उक्तमेवप्रपञ्चयति येषांत्विति तदभावात् कर्मस्वहं कर्त्तेत्यभिमानस्य तत्फलेषुस्पृहायाश्चाभावादित्यर्थः ईश्वरस्यकर्मनिर्लेपेऽपिचेव मस्यकिमायातमित्याशङ्क्योत्तरार्द्धंव्याचष्टे इत्येवमिति अभिज्ञानप्रकारमभिनयति नाहमिति ज्ञानफलंकथयति सकर्मभिरिति कर्मासम्बन्धंविदुषिविषदयति तस्यापीति १४

तवकर्मतत्फलसम्बन्धाभवे तथाज्ञानवतश्चतदसम्बन्धेममापिकिंकर्मणेत्याशं क्य कर्मणिकर्तृत्वाभिमानंतत्फलेस्पृहाञ्चात्यक्त्वामुमुक्षुवत्त्वयाकर्मकर्तव्यमेवेत्या हनाहमित्यादिना एवमिति नाहंकर्तेत्येवमादिपरामृश्यते तेनपूर्वैर्मुमुक्षुभिरनु ष्ठितत्वेनहेतुनेत्यर्थः कर्मैवेत्येवकारार्थमाह नेत्यादिना त्वंशब्दस्यक्रियापदे नसम्बन्धः तस्मादित्युक्तमेवस्फुटयति पूर्वैरिति पूर्वैरिति यदुक्तंकिंमसकर्मणेतित त्वमज्ञोवातत्त्वविद्वा यद्यज्ञस्तदाचित्तशुद्ध्यर्थंकुरुकर्मेत्याह यदीति द्वितीयंप्रत्याह तत्त्वविदितिकुरुकर्मेति सम्बन्धःपूर्वैर्मूढैराचरितमित्येतावता किमिति विवेक

## स्वामिकृतटीका

तदेवदर्शयन्नाह नमामिति कर्माणिविश्वसृष्ट्यादीन्यपिमांनलिम्पन्तिआसक्तं नकुर्वन्ति निरहङ्कारत्वादाप्तकामत्वेनममकर्मफलेस्पृहाभावाच्चमांनलिम्पन्तीति किंवक्तव्यं इतःकर्मलेपराहित्येनमांयोऽभिजानाति सोऽपिकर्मभिर्नबध्यतेममनिर्लेप त्वकारणंनिरहङ्कारत्वनिस्पृहत्वादिकंजानतस्तस्याप्यहङ्कारादिशैथिल्यात् १४

एवंज्ञात्वाकृतंकर्म्म पूर्व्वैरपिमुमुक्षुभिः कुरुकर्म्मैवतस्मात्त्वंपूर्व्वैःपूर्व्वतरंकृतं १५

## शाङ्करभाष्यं

नाहंकर्त्तानमेकर्म्मफलेस्पृहेति एवमिति एवंज्ञात्वाकृतंकर्म्मपूर्व्वैरप्यतिक्रान्तैर्मुमुक्षुभिःकुरुतेनकर्म्मैवत्वंनतूष्णीमासनं नापिसंन्यासःकर्त्तव्यस्तस्मात्त्वंपूर्व्वैरप्यनुष्ठितत्वाद्यद्यनात्मज्ञस्त्वं तदात्मशुद्ध्यर्थंतत्त्वविच्चेल्लोकसंग्रहार्थंपूर्व्वैर्जनकादिभिःपूर्वतरंकृतं नाधुनातनंकृतं निर्वर्त्तितं।१५।

तत्रकर्मचेत्कर्तव्यंत्वद्वचनादेवकरोम्यहं किंविशेषितेनपूर्व्वैःपूर्व्वतरंकृतमित्युच्यते यस्मान्महद्वैषम्यंकर्म्माकर्मणि कथं किंकर्मेति किंकर्मकिम्वाकर्मेति कवयोमेधाविनोऽपिअत्रास्मिन्कर्मादिविषयेमोहिताः मोहंगताः अतस्तेतुभ्यमहंकर्मोकर्मचप्रवक्ष्यामि यत् ज्ञात्वाविदित्वाकर्मादिमोक्ष्यसेअशुभात् संसारात् नचैवंत्वयामन्तव्यं कर्मनामदेहादिचेष्टा लोकप्रसिद्धमकर्मनामतदक्रियातूष्णीमासनं किंतत्रबोद्धव्यमिति १६

## आनन्दगिरिकृतटीका

वता मया तत्कर्त्तव्यमित्याशंक्याह जनकादिभिरिति तेतदैवसंपाद्यकर्मकृतवन्तो नतदिदानीमप्रामाणिकत्वादनुष्ठेयमित्याशंक्याह पूर्वतरमिति १५

## स्वामिकृतटीका।

येयथामामित्यादिचतुर्भिःश्लोकैः प्रासङ्गिकमीश्वरस्यवैषम्यंपरिहृत्यपूर्वोक्तमेवकर्मयोगंप्रपञ्चयितुमनुस्मारयति एवमिति अहङ्काराादिराहित्येनकृतं कर्मवन्धकंनभवतीत्येवंज्ञात्वा पूर्वैर्जनकादिभिरपिमुमुक्षुभिसत्वशुद्ध्यर्थंपूर्वतरंयुगान्तरेष्वपिकृतं तस्मात्त्वमपिप्रथमंकर्मैवकुरु १५

## भाषाअनुवाद

अवऐसेचारिश्लोकसेप्रसङ्गप्राप्तईश्वरकेवैषम्यदोषकोदूरकरतेहुये पूर्वकथितकर्मयोगकोविस्तारकरिकहते हैं किअहङ्काररहितकियाहुआकर्म ज्ञानकावाधकनहीं होताहै यहजानिकरिकेपूर्वकालकेमुमुक्षुजनकआदिकोंनेकियायाइससेतुमभीअभीइसप्रथमअवस्थामेकर्मकरो जवज्ञानअवस्थाप्राप्तहोगीआपहीछूटजायगे अभीछोड़नेसेसतोगुणकीशुद्धिहोनादुर्घटहै देखोऔरऔरयुगमेभीलोगोंनेप्रथमकर्मकोकियाहै यहकर्मयुगयुगान्तरसे कियाचलाआताहै।१५

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् १६

आनन्दगिरिकृतटीका।

कर्मविशेषणमाक्षिपति तत्रेति मनुष्यलोकःसप्तम्यर्थः कर्मणिमहत्वैषम्य स्यविद्यमानत्वात्तस्यपूर्वैरनुष्ठितत्वेन पूर्वतरत्वेनचविशेषितत्वे तस्मिन्प्रवृत्तिस्तव सुकरेतियुक्तं विशेषणमिति परिहरति उच्यतइति कर्मणि देहादिचेष्टारूपे लोकप्रसिद्धेनास्तिवैषम्यमितिशङ्कते कथमिति विज्ञानवतामपि कर्मादिविषये व्यामोहोपपत्तेः सुतरामेव तवतद्विषयेव्यामोहसम्भवात्तदपोहार्थमाप्तवाक्यापेक्ष णादस्तिकर्मणि वैषम्यमित्युत्तरमाह किंकर्मेति तत्तेकर्मेत्यत्राकारानुबन्धेनापिप दंछेत्तव्यं कर्मादिप्रवचनस्यप्रयोजनमाह यज्ज्ञात्वेति तत्कर्माकर्मचेति सम्ब न्धः अतोमेधाविनोऽपि यथोक्तेविषयेव्यामोहस्यसत्तादित्यर्थः कर्मणोऽकर्मणश्चप्र सिद्धत्वात्तद्विषये नकिञ्चिद्बोद्धव्यमिति चोद्यमनूद्यनिरस्यति नचेति १६

तत्रहेत्वाकाङ्क्षापूर्वकमनन्तरंश्लोकमवतारयति कस्मादिति विष्वपिकर्माक र्मविकर्मसुबोद्धव्यमस्तीति यस्मादध्याहारस्तस्मान्मदीयंप्रवचनमर्थवदितियोजना बोद्धव्यसद्भावेहेतुमाह यस्मादिति त्रितयंप्रकृत्यान्यतमस्य गहनत्ववचनमयुक्तमि त्याशंक्यान्यतमगहनस्योपलक्षणार्थत्वमुपेत्यविवक्षितमर्थमाह कर्मादीनामिति १७

स्वामिकृतटीका।

तत्रतत्त्वविद्भिःसहविचार्यकर्तव्यं नलोकपरम्परामात्रेणेत्याह किंकर्मेति किं कर्मकीदृशंकर्मकरणं किमकर्मकीदृशंकर्माकरणं इत्यस्मिन्नर्थे विवेकिनोऽपिमोहि ताः अतोयज्ज्ञात्वायदनुष्ठायाशुभात्संसारान्मोक्ष्यसेमुक्तोभविष्यसि तत्कर्माक र्मचतुभ्यमहं प्रवक्ष्यामि तच्छृणु १६

भाषा अनुवाद।

औरदेखो तत्त्वज्ञानीकेसाथविचारकरकेकर्मकरनाचाहिये केवलभेड़िया धसंतकीनाई लोकपरम्पराप्राप्तदेखकर करनाअनुचितजानो यहकहतेहैं कि देखोकौनकर्मकर्त्तव्य और कौनअकर्त्तव्यहै इसकर्मअकर्मकेविचार मेंकविकहे बड़ेबड़ेपण्डितभी मोहितहोजातेपतानहींलगताहै इससेजिसकर्मकेकरनेसे इसअशुभसंसारसेमुक्तहोउगे सो औ अकर्म जोअकरणीयकर्म येदोनो हमतु मसेकहतेहैं सोसावधानहोसुनो जिसकोजानिकेअशुभसंसारसेछूटकर मुक्तहो जावगे १६

कर्मणोह्यपिबोद्धव्यंबोद्धव्यञ्चविकर्मणः अकर्मणश्चबोद्धव्यंगहनाकर्मणोगतिः १७

शाङ्करभाष्य।

कस्मात उच्यते कर्मणइति कर्मणःशास्त्रविहितस्यक्रियस्मात्अप्यस्तिबोद्धव्यं बोद्धव्यञ्चास्त्येव विकर्मणः प्रतिषिद्धस्य तथाअकर्मणश्च तूष्णीम्भावस्यबोद्धव्यमस्तीति त्रिष्वप्यध्याहारः कर्त्तव्योयस्मातगहनाविषमादुर्ज्ञेयाकर्मणइत्युपलक्षणार्थं कर्मादीनांकर्माकर्मविकर्मणांगतिर्याथात्म्यंतत्त्वमित्यर्थः १७

किंपुनस्तत्वं कर्मादेर्यद्बोद्धव्यंवक्ष्यामीतिप्रतिज्ञामुच्यते कर्मणीति कर्मणि कर्मक्रियतइति व्यापारमात्रं तस्मिन्कर्मणिअकर्मकर्माभावंयःपश्येदकर्मणिचकर्माभावेकर्त्तृतन्त्रत्वात् प्रवृत्तिनिवृत्तोर्वस्त्वप्राप्यैवहिसर्व्वएवक्रियाकारकादिव्यवहारोऽविद्याभूमावेवकर्मयःपश्येत्यःपश्यतिसबुद्धिमान्मनुष्येषुसयुक्तोयोगीचकृत्स्नकर्मकृत्समस्तकर्मकृच्चसइति स्तूयते कर्माकर्मणोरितरेतरदर्शनंनुकिमिदंविरुद्धमुच्यतेकर्मण्यकर्मयःपश्येदित्यकर्मणि चकर्मेतिनहिकर्माकर्मस्यादकर्मवाकर्मतत्रविरुद्धं कथंपश्येत् दृष्टान्तकर्मैवपरमार्थतःसत्कर्मवदवभासतेमूढदृष्टेर्लोकस्यतथाकर्मै

स्वामिकृतटीका।

ननुलोकप्रसिद्धमेवकर्मदेहादिव्यापारात्मकं अकर्मचतद्व्यापारात्मकं अतः कथमुच्यते कवयोऽप्यत्रमोहंप्राप्ताइति तत्राह कर्मणइतिकर्मणोविहितव्यापारस्यापितत्त्वंबोद्धव्यमस्ति नतुलोकप्रसिद्धमात्रमेव अकर्मणोऽविहितव्यापारस्यापितत्त्वंबोद्धव्यमस्ति विकर्मणोनिषिद्धव्यापारस्यापि तत्त्वंबोद्धव्यमस्ति यतःकर्मणोगतिर्गहनाकर्मइत्युपलक्षणार्थं कर्माकर्मविकर्मणांतत्त्वंदुर्विज्ञेयमित्यर्थः १७

भाषा अनुवाद।

जोकहोकि मनवचनदेहके व्यापारहीतोकर्महैं और देहादिव्यापारकाअभावहीअकर्महै यहीतोलोकमेंप्रसिद्धहै फेरिजोआपनेकहाकिपण्डितलोगभीकर्मअकर्मकेविषयमेंमोहकोप्राप्तहोते सोकैसे इसवातपरकहतेहैं किकर्मतोशास्त्रविहितव्यापारकातत्त्वजानिकरके कर्त्तव्यहै केवललोकव्यवहारदेखिअवश्यकर्त्तव्यकर्मनहींहै औरअकर्मतोसंन्यासआश्रमअङ्गीकारकरि शास्त्रकीरीतसेकर्मकात्यागकरनाहै परतत्त्वज्ञानवानहोकरउचितहैऔर विकर्मजोनिषिद्धकर्मउसकाक्यातत्त्वजाननाआवश्यकहै क्योंकिसवकर्मोंकीगतिका ज्ञानहोनाकठिनहैसोईकहाकिकर्मकीगतिगहनकहे बड़ीकठिनसहजसेजानवेजोगनहींहै १७

कर्म्मण्यकर्म्मयःपश्येदकर्म्मणिचकर्म्मयः सबुद्धिमान्मनुष्येषुसयुक्तःकृत्स्नकर्मकृत् १८

## शाङ्करभाष्यम्।

वाकर्मवत् तत्त्वयथाभूतदर्शनार्थमाह भगवान् कर्मण्यकर्मयःपश्येदित्यादि अतो नविरुद्धंबुद्धिमत्त्वाद्युपपत्तेस्त्वबोद्धव्यमिति च यथाभूतं दर्शनमुच्यते नचविपरी

## भाषा अनुवाद।

जोकहाकिकर्मकीगति गहनकहेजानवेजोगनहीं है औरकहाकिकर्मअकर्मनिषिद्धकर्मकातत्त्वजानिकरकर्मकोकरै सोईकर्मगतिकीकठिनाईदेखावतेहुये वहतत्त्वकहतेहैं जिसकेयथार्थज्ञानमेंपण्डितभीमोहितहोते औजिसकेज्ञानसे संसारसेछूटिजातेहैं उसकोमैंकहताहूं तुमसुनोयहप्रतिज्ञाजोकरीथीसोअवकहतेहैं किभगवतआराधनरूपकर्म जवकि किसीतरहज्ञानहोनेमेंवाधानहींकरता तोवहक्याकर्महै उसकोअकर्म हीअर्थात् कर्मसंन्यासही जोदेखतेहैं सोईकहाकिकर्मण्यकर्मयःपश्येत् औरशास्त्रविहितकर्मनकरनेसेदोषहोता फेरिवहीनकरनाज्ञानकाप्रतिवन्धककहेवाधाकाहेतुहोताहै इससेशास्त्रोक्तकर्मकोनकरनाहीं जोअकर्मउसीकोकर्तव्यकर्मजोदेखतेहैं वेईलोगकर्मकारीपुरुषोंकेमध्यमेंबुद्धिमानहैं भगवानउनीकीप्रसंशाकरतेहैं किऐसेहीकर्मअनुष्ठानकरतेजोज्ञानयोगकोप्राप्तहोते सोईयोगीपुरुषहैं औरउनकोभगवतआराधनरूपकर्मके अन्तर्भूतकहे अङ्गभूतसमस्तकर्मकरना आयगयाहै वहीकहाकि सयुक्तःकृत्स्नकर्मकृत् इससेयहआयाकि ज्ञानमार्गमेंजानेकीइच्छाजिसकोहै उसकोकर्मयोगअवस्थामेंकर्मकरनाउचितहै सोई ३ अध्यायके ४ श्लोकमेंकहाकि नकर्मणामनारम्भान्नैष्कर्म्यंपुरुषोऽश्नुते औरसम्पूर्णज्ञानहोनेसेफेरिकर्मकाकुछआवश्यकनहींहै सोई ३ अध्यायके १७ श्लोकमेंकहाकि यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवइति येदोनोंवातेंइसश्लोकसेअच्छीतरहकहीगईं औरजो कर्मेन्द्रियाणिसंयम्य यह ३ अध्यायके ८ श्लोकसेकहाइन्द्रियोंसेआत्माभिन्नहै तथाकोईकर्मनहींकर्ताऐसेजनि दृढ़समाधिमेंसमजोरहतेहैंऔरअनायासकहेबेमांगेप्राप्तभयेअन्नकोभोजनकरलेते वेसकलकर्मकरतेभीयोगीहैं औरउनकोविकर्मजोनिषिद्धकर्म मृगमांसभोजनादिदोषभी नहींलगताक्योंकिउन्हेंउसवस्तुकाआग्रहनहीहैं परन्तुअज्ञानीकोआग्रहऔरुचिहै इससेमृगमांसखानेसेदोषहै इससेनिषिद्धकर्मकातत्त्वकहा यहीतत्त्वजानिसवकर्ममेंप्रवृत्तहोना मैंनेकहाहै सोतुमठीकठीकजानो। १८।

## शाङ्करभाष्यं

तज्ज्ञानादशुभान्मोक्षणंस्यात् यत्ज्ञात्वा मोक्ष्यसेऽशुभादितिचोक्तं तस्मात् कर्माकर्म्मणी विपर्य्ययेणगृहीतेप्राणिभिस्तद्विपर्य्ययग्रहणनिवृत्त्यर्थं भगवतोवचनं कर्मण्यकर्मयइत्यादि नचात्र कर्माधिकरणमकर्मास्तिकुण्डेवदराणीवनाप्यकर्माधिकरणंकर्मास्ति कर्माभावत्वादकर्मणोऽतोविपरीतेगृहीतेएव कर्माकर्मणी लौकिकैः यथा मृगतृष्णिकायामुदकंशुक्तिकायांवारजतं ननुकर्मकर्म्मैवसर्व्वेषांनक्वचित् व्यभिचरति तन्ननौस्थस्यनाविगच्छन्त्यां तटस्थेष्वगतिकेषुनगेषु प्रतिकूलगतिदर्शनात् दूरेषु चक्षुषोऽसन्निकृष्टेषुगच्छत्सु गत्यभावदर्शनादेवमिहाप्यकर्म्मणिअहंकरोमीति कर्मदर्शनं कर्मणिचाकर्मदर्शनं विपरीतदर्शनंयेनतन्निराकरणार्थमुच्यते कर्म्मण्यकर्मयःपश्येदित्यादि तदेतदुक्तप्रतिवचनमप्यसकृदत्यन्तविपरीतदर्शनाभाविततया मोमुह्यमानोलोकः श्रुतमप्यसकृत्तत्त्वंविस्मृत्य मिथ्याप्रसङ्गमवतार्य्यावतार्य्यचोदयतीति पुनःपुनरुत्तरमाह भगवान् दुर्व्विज्ञेयत्वञ्चालक्ष्य वस्तुनाव्यक्तोयमचिन्त्योयं नजायते म्रियते इत्यादिनात्मनिकर्म्माभावःश्रुतिस्मृतिन्यायप्रसिद्ध उक्तो वक्ष्यमाणश्च तस्मिन्नात्मनिकर्म्माभावेऽकर्म्मणि कर्मविपरीतदर्शनमत्यन्तनिरूढं यतः किंकर्मकिमकर्मेति कवयोऽप्यत्रमोहिता देहाद्याश्रयंकर्मात्मन्यध्यारोप्याहं कर्त्ता ममैतत्कर्म मयास्यकर्मणःफलंभोक्तव्यमितिचतथाहंतूष्णींभवामि येनाहंनिरायासोऽकर्मासुखीस्यामीति कार्य्यकरणाश्रयव्यापारोपरमंकर्मैव तत्कृतञ्चसुखित्वमात्मन्यध्यारोप्यनकरोमिकिञ्चत्तूष्णींसुखमासमित्यभिमन्यते लोकस्तत्रेदंलोकस्यविपरीतदर्शनापनयायाह भगवान्कर्मण्यकर्मयःपश्ये दित्यादि अत्रचकर्मकर्मैवसत्कार्य्यकरणाश्रयंकर्मरहितेऽविक्रियेआत्मनिसर्व्वैरध्यस्तं यतःपण्डितोप्यहं करोमीतिमन्यते अतआत्मसमवेततयासर्व्वलोकप्रसिद्धेकर्मणिनदीकूलस्थेष्विववृक्षेषुगतिःप्रातिलोम्येनातोऽकर्मकर्माभावंयथाभावमिववृक्षेषुयःपश्येत् अकर्मणिचकार्य्यकरणव्यापारोपरमेकर्मवत् आत्मन्यध्यारोपिते तूष्णीमकुर्व्वन्सुखमासे इत्यहङ्काराभिसन्धिहेतुत्वात्तस्मिन् अकर्मणिचकर्म्मयःपश्येत् यएवंकर्माकर्म्मविभागज्ञः स बुद्धिमान् पण्डितो मनुष्येषु स युक्तो योगी कृत्स्नकर्मकृच्च सोऽशुभान्मोक्षितः कृतकृत्यो भवतीत्यर्थः

अयंश्लोकोन्यथाव्याख्यातः कैश्चित्कथंनित्यानांकिल कर्म्मणामीश्वरार्थेऽनुष्ठीयमानानां तत्फलभावादकर्माणितान्युच्यन्तेगौण्या वृत्त्या तेषाञ्चाकरणमकर्मत

## शाङ्करभाष्यं

प्रत्यवायफलत्वात् कर्मोच्यते गौणवृत्त्या तथा नित्ये कर्मण्यकर्म यः पश्येत् फलाभावात् यथा धेनुरपि गौरगौरुच्यते क्षीराख्यं फलं न प्रयच्छतीति तद्वत् तथा नित्याकरणे कर्मणि च कर्म यः पश्येत् नरकादिप्रत्यवायफलं प्रयच्छतीति नैतत् युक्तं व्याख्यानमेवं ज्ञानादशुभान्मोक्षानुपपत्तेः यत् ज्ञात्वा मोक्ष्यसेऽशुभादिति भगवतोक्तं वचनं बाध्येत कथं नित्यानामनुष्ठानादशुभात् स्यान्नाम मोक्षणं न तु तेषां फलाभावज्ञानान्न हि नित्यानां फलाभावज्ञानमशुभमुक्तिफलत्वेन चोदितं नित्यकर्मज्ञानं वा न च भगवतैवेहोक्तं एतेनाकर्मणि कर्मदर्शनं प्रत्युक्तं न ह्यकर्मणि कर्मेति दर्शनं कर्त्तव्यतयेह चोद्यते नित्यस्य तु कर्त्तव्यतामात्रं न चाकरणान्नित्यस्य प्रत्यवायो भवतीति विज्ञानात् किञ्चित् फलं स्यान्नापि नित्याकरणं ज्ञेयत्वेन चोदितं नापि कर्माकर्मेति मिथ्यादर्शनादशुभान्मोक्षणं न च बुद्धिमत्त्वं युक्तताकृत्स्नकर्मकृत्त्वादि चफलमुपपद्यते स्तुतिर्वा मिथ्याज्ञानमेव हि साक्षादशुभरूपं कुतोऽन्यस्मादशुभान्मोक्षणं न हि तमस्तमसो निवर्त्तकं भवति ननु कर्मणि चाकर्मदर्शनं अकर्मणि वा कर्मदर्शनं न तत् मिथ्याज्ञानं किं तर्हि गौणं फलभावाभावनिमित्तं न कर्माकर्मविज्ञानादपि गौणात् फलस्याश्रवणान्नापि श्रुतहान्यश्रुतपरिकल्पनया कश्चिद्विशेषो लभ्यते स्वशब्देनापि शक्यं वक्तुं नित्यकर्मणां फलं नास्त्यकरणाच्च तेषां नरकपातः स्यादिति तत्र व्याजेन परव्यामोहरूपेण कर्मण्यकर्म यः पश्येदित्यादिना किं तत्रैवं व्याचक्षाणेन भगवतोक्तं वाक्यं लोकव्यामोहार्थमिति व्यक्तं कल्पितं स्यान्न चैतच्छद्मरूपेण वाक्येन रक्षणीयं वस्तु नापि शब्दान्तरेण पुनः पुनरुच्यमानं वस्तु सुबोध्यं स्यादित्येवं वक्तुं युक्तं कर्मण्येवाधिकारस्त इत्यत्र हि स्फुटतर उक्तोऽर्थो न पुनर्वक्तव्यो भवति सर्वत्र च प्रशस्तं सुबोद्धव्यञ्च कर्त्तव्यमेव न निष्प्रयोजनं बोद्धव्यमित्युच्यते न च मिथ्याज्ञानं बोद्धव्यं भवति तत्प्रत्युपस्थापितं वा वस्त्वाभासं नापि नित्यानामकरणादभावात् प्रत्यवायोत्पत्तिर्नासतो विद्यते भाव इति वचनात् कथमसतः सज्जायेतेति च दर्शितं असतः सज्जन्मप्रतिषेधात् असतः सदुत्पत्तिं ब्रुवता असदेव सद्भवेत् सच्चाप्यसद्भवेदित्युक्तं स्यात् तच्चाप्ययुक्तं सर्वप्रमाणविरोधात् न च निष्फलं विदध्यात् कर्म शास्त्रं दुःखस्वरूपत्वात् दुःखस्य च बुद्धिपूर्वकतया कार्यत्वानुपपत्तेः तदकरणे च नरकपाताभ्युपगमे अनर्थायैवोभयथापि करणे अकरणे च शास्त्रं निष्फलं कल्पितं स्यात् स्वाभ्युपगमविरोधश्च नित्यं निष्फलं कर्मेत्यभ्युपगम्यते मोक्षफलायेति ब्रुवतः तस्माद्यथाश्रुत एवार्थः कर्मण्यकर्म इत्यादेस्तथा च व्याख्यातोऽस्माभिः श्लोकः १८

## आनन्दगिरिकृतटीका।

उत्तरश्लोकमाकाङ्क्षापूर्व्वकमुपादत्ते किंपुनरिति प्रथमपादस्याक्षरोत्थमर्थं कथयति कर्म्मणीत्यादिना द्वितीयपादस्यापिशब्दप्रकाशितमर्थंनिर्द्दिशति अकर्म्मणिचेति कर्म्माभावेयःकर्मपश्यतीति सम्बन्धः प्रवृत्तेरेवकर्मत्वान्निवृत्तेस्तदभावत्वात्तत्रकथंकर्मदर्शनमित्याशंक्यद्वयोरपिकारकाधीनत्वेनाविशेषमभिप्रेत्याह कर्त्तृतन्त्रत्वादिति प्रवृत्ताविवनिवृत्तावपिकर्म्मदर्शनमविरुद्धमिति शेषः ननुनिवृत्तेर्व्वस्त्वधीनत्वात् कारकनिवन्धनाभावान्नतत्रकर्मदर्शनंयुज्यते तत्राह वस्त्विति क्रियाकारकफलव्यवहारस्यसर्व्वस्याविद्यावस्थायामेवप्रवृत्तत्वाद्वस्तुसंस्पर्शशून्यत्वात् प्रवृत्तिवन्निवृत्तावपियःकर्मपश्यति समनुष्येषुवुद्धिमानिति सम्बन्धःकर्मण्यकर्म अकर्मणिचकर्मपश्यतोवुद्धिमत्त्वंयुक्तंसमस्तकर्मकृत्त्वञ्चकथमित्याशंक्याहइतिस्तूयतइति श्लोकस्यशब्दोत्थेर्थेदर्शिते तात्पर्य्यार्थापरिज्ञानान्मिथो विरोधं शङ्कते नन्विति कथमिदंविरुद्धमित्याशंक्याह कर्मणीति विषयसप्तमीवास्यादधिकरणसप्तमीवेति विकल्पशाद्योऽन्याकारंज्ञानमन्यावलम्बनमिति स्पष्टोविरोधःस्यादित्याह नहीति अन्यस्यान्यात्मतायोगात् कर्माकर्मणोरभेदासम्भवादकर्माकारंकर्मावलम्बनंज्ञानमयुक्तमित्यर्थः द्वितीयंदूषयति तत्रेति कर्मण्यधिकरणेततो विरुद्धमकर्मथकर्माधेयंद्रष्टाद्रष्टुमीष्टेनहि कर्माकर्मणोर्मिथोविरुद्धयोराधाराधेयभावःसम्भवतीत्यर्थः विषयसप्तमीमुपेत्य सिद्धान्तीपरिहरति नन्वकर्मैवेतिलोकस्यमूढदृष्टेर्व्विवेकवर्ज्जितस्यपरमार्थतो ब्रह्माकर्माक्रियमेवसत् भ्रान्त्या कर्मसहितं क्रियावदिवप्रतिभातीत्यक्षरार्थःपरस्पराध्यासमुपेत्योक्तं तथेति यथाखल्वकर्मब्रह्मकर्मवदुपलभ्यते तथाकर्मसक्रियमेवद्वैतमक्रिये ब्रह्मण्यधिष्ठानेसंसृष्टं तद्वद्भातीत्यक्षरयोजना कर्माकर्मणोरितरेतराध्यासेसिद्धे सम्यग्दर्शनसिद्ध्यर्थंभगवतोवचनमुचितमित्याह तत्रेति यथायदिदंरजतमिति प्रतिपन्नंतदिदानींसुक्तिसकलं पश्येति भ्रमसिद्धरजतरूपविषयानुवादेन तदधिष्ठानं सुक्तिमात्रमुपदिश्यते तथाभ्रमसिद्धकर्माद्यात्मकविषयानुवादेन तदधिष्ठानं कर्मादिरहितं कूटस्थंब्रह्मभगवता व्यपदिश्यते तथाचभगवद्वचनमविरुद्धमित्याह अतइति इतश्चाध्यारोपितकर्माद्यनुवादपूर्व्वकंतदधिष्ठानस्य कर्मादिरहितस्य निर्व्विशेषस्यब्रह्मणोभगवता वोध्यमानत्वान्नतत्रविरोधाशङ्कावकाशो भवतीत्याह वुद्धिमत्त्वादिति कूटस्थात् ब्रह्मणोन्यस्य सर्व्वस्य मायामात्रत्वात् अन्यज्ञानाद्बुद्धिमत्त्वयुक्तत्वसर्व्वकर्म्मकृत्त्वाना

## आनन्दगिरिकृतटीका।

मनुपपत्तेरत्रच बुद्धिमानित्यादिना बुद्धिमत्त्वादिनिर्द्देशात् ब्रह्मज्ञानादेवतदुपपत्तेः सर्व्वविक्रियारहितं ब्रह्मज्ञानमेव विवक्षितमित्यर्थः बोधशब्दस्य सम्यग्ज्ञाने प्रसिद्धत्वात् कर्माकर्म्मविकर्म्मणां स्वरूपं बोद्धव्यमस्तीतिवदता सम्यग्ज्ञानोपदेशस्य विवक्षितत्वादपि कूटस्थंब्रह्मात्माभिप्रेतमित्याह बोद्धव्यमिति फलवचनपर्य्यालोचनायामपि कूटस्थंब्रह्मात्माभिप्रेतं प्रतिभातीत्याह नचेति सम्यग्ज्ञानाधीनफलमत्रनश्रुतमित्याशंक्याह यत्ज्ञात्वेति अध्यारोपापवादार्थं भगवद्वचनमविरुद्धमित्युपपादितमुपसंहरति तस्मादिति तद्विपर्य्ययेत्यत्र तच्छब्देन प्राणिनोगृह्यन्ते विषयसप्तमीपरिग्रहेण परिहारमभिधायाधिकरणसप्तमीपक्षेदर्शितं दूषणमङ्गीकारेणपरिहरति नचेति व्यवहारभूमिरत्रेत्युच्यते योग्यत्वे सत्यनुपलब्धेरित्यर्थः अकर्माधिकरणंकर्म्मनसम्भवतीत्यत्रहेत्वन्तरमाह कर्माभावत्वादिति नहितुच्छस्याधिकरणत्वं क्वचिद्दृष्टमिष्टञ्चेत्यर्थः निरूप्यमाणे कर्माकर्म्मणोरधिकरणाधिकर्त्तव्यभावासम्भवे फलितमाह अतइति शास्त्रपरिचयविरहिणामध्यारोपमुदाहरति यथेति कर्माकर्म्मणोरारोपितत्वमुक्तमनूद्यमानःशङ्कते नन्विति कर्म्म कर्म्मैवेत्यत्राकर्म्म चाकर्म्मैवेतिद्रष्टव्यं विमतं सत्यमव्यभिचारित्वात्ब्रह्मवदित्यर्थः तत्रकर्म्म तत्वतो नाव्यभिचारि कर्म्मत्वान्नौस्थस्य तटस्थदृक्गमनवदित्यव्यभिचारित्वं कर्म्मण्यसिद्धमिति परिहरति तत्रेति अकर्म्मचतत्त्वतो नाव्यभिचारि कर्माभावत्वात् दूरप्रदेशे चैत्रमैत्रादिषुगच्छत्स्वेवचक्षुषा सन्निधानविधुरेषु दृश्यमानगत्यभावादित्याह दूरइति दूरत्वादेव विशेषतःसन्निकर्षविरहितेषु तेषु स्वरूपेण चक्षुसन्निकृष्टेषु चक्षुषागत्यभावदर्शनादिति योजना गतिरहितेषु तरुषु गतिदर्शनवत्प्रकृते ब्रह्मण्यविक्रिये कर्म्मदर्शनं सक्रियेच द्वैतप्रपञ्चेचितिमत्सुचैत्रादिषु गत्यभावदर्शनवत् कर्माभावस्य विपरीतदर्शनंयेनहेतुना सम्भवति तेनतस्यविपरीतदर्शनस्य निरशनार्थंभगवद्वचनमिति दार्ष्टान्तिकंनिगमयति एवमित्यादिना ननुकर्म तदभावयोरारोपितत्वादविक्रियस्य ब्रह्मणोज्ञानमात्माभिप्रेतंचेदव्यक्तोयमचिन्त्योयं नजायते म्रियते वेत्यादिनापौनरुक्त्यं प्राप्तं तत्रैवब्रह्मात्मनोनिर्व्विकारत्वस्योक्तत्वादिति तत्राह तदेतदिति तदेतदात्मनिशङ्कितं सक्रियत्वमसकृदुक्तंप्रतिवचनमपिनिर्व्विकारात्मवस्तुपेक्षयात्यन्तविपरीतदर्शनंमिथ्याज्ञानंतेनभावितत्वंतत्संस्कारप्रचयवत्त्वंततोतिशयेनमोहमापद्यमानोज्ञोकःश्रुतपितत्त्वंविस्मृत्यपुनर्यत्किञ्चित्प्रसङ्गमासाद्यसक्रियत्वमेवात्मनश्चोदयतीतिपुनःपुनरु

आनन्दगिरिकृतटीका।

त्वभूतसुत्तरंभगवानभिधत्तेवस्तुनस्तद्दुर्व्विज्ञेयत्वात्पुनःपुनःप्रतिपादनंतत्तद्भ्रमनिरा करणार्थमुपयुज्यते तथाचनास्ति पुनरुक्तिरित्यर्थः असकृदुक्तप्रतिवचनमेवानु वदति अव्यक्तोयमिति कर्म्माभावउक्तइति सम्बन्धः उक्तस्य नजायते म्रियते वाविपश्चिदित्यादिश्रुतौ प्रकृतस्मृतावसङ्गत्वादिन्यायेनच प्रसिद्धत्वमस्तीत्याह श्रु तीति नकेवलमुक्तः कर्म्माभावः किन्तु सर्व्वकर्म्माणिमनसा संन्यस्येत्यादौ वक्ष्य माणश्चेत्याह वक्ष्यमाणश्चेति ननुकर्मणांदेहादिनिर्व्वर्त्तकत्वेन त्रैविध्यात् कूट स्थस्वभावस्यात्मनोऽसङ्गत्वात्तद्व्यापाररूपस्य कर्मणोऽप्रसिद्धत्वात् नतस्मिन्नक र्मणि विपरीतस्य कर्मणोदर्शनं सिध्यतीत्याशंक्याह तस्मिन्निति कर्मैवविपरीतं तस्यदर्शनमिति यावत् अहंकर्त्तेत्यात्मसमानाधिकरणस्य व्यापारस्यानुभवात् क र्मभ्रमस्तावदात्मन्यत्यन्तरूढोस्तीत्यर्थः आत्मनि कर्मविभ्रमोस्तीत्यत्रहेतुमाह य तइति आत्मनो निःक्रियत्वेकुतस्तस्मिन् यथोक्तोविभ्रमः सम्भवेदित्याशंक्याह दे हेति इदानीमात्मन्यकर्मभ्रममुदाहरति तथेत्यादिना यथासुक्तौ स्वाभाविक मरूप्यत्वंरूप्यत्वमारोपितं तदभावोप्यारोपप्रत्यपाती तथात्मनोपिस्वाभाविकमनि क्रियत्वं पुनरध्यस्तंतदभावत्वात् कर्माभावोप्यध्यस्तएवेतिमन्वानःसन्नुपसंहरति त त्वेदमिति आत्मनिकर्मादिविभ्रमेलौकिकेसिद्धेसति एवंकर्मणीत्यादिवचनं त त्परिहारार्थंभगवानुक्तवानित्यर्थः सम्प्रत्युक्तेऽर्थे श्लोकाक्षरसमन्वयं दर्शयितुं कर्मणीत्यादि व्याचिख्यासुः भूमिकांकरोति अत्रचेति व्यवहारभूमौ कार्य्यकार णाभिकरणं कर्म स्वेनैवरूपेण व्यवस्थितं सदात्मन्यविक्रियेकार्य्यकरणारोपणद्वा रेण सर्व्वैरारोपितमित्यत्रहेतुमाह यतइति अविवेकिनान्तुकर्त्तृत्वाभिमानः सुतरामिति वक्तुमपिशब्दः आत्मनि कर्मरहिते कर्मारोपेदृष्टान्तमाह नदीति एवमात्मनि कर्मारोपमुपपाद्य प्रथमपादं व्याचष्टे अतइति आरोपवशादात्मनि छत्वेन कर्मणि सर्व्वलोकप्रसिद्धे कर्माभावं यःपश्येत्सबुद्धिमानितिसम्बन्धः अ कर्मदर्शनस्य यथाभूतत्वं सम्यक्त्वं तत्रदृष्टान्तमाह गत्यभावमिवेति द्वितीयपा दंव्याकरोति अकर्मणिचेति अध्यारोपमभिनयति तूष्णीमिति अकर्मणि कर्म दर्शनेयुक्तिमाह अहङ्कारेति पूर्व्वार्द्धेनोक्तमनूद्योत्तरार्द्धं विभजते यएवमिति आत्मनि कार्य्यकरणसंघातसमारोपद्वारेणतद्व्यापारमात्रेकर्मणिशुक्तिकायामिव रजतमारोपितेविपश्येतदभावमकर्मवस्तुतोयोरजताभाववदनुभवति अकर्मणिच

## आनन्दगिरिकृतटीका ।

संघातव्यापारोपरमेतद्द्वारा स्वात्मन्यहंतूष्णीमासेसुखमित्यारोपितेगोचरेकर्मा हङ्कारहेतुकंयस्तत्त्वतोमन्यतेसकृत्यदभावविभागहीनप्रकृतिमात्ववदात्मनोकर्मत दभावविभागशून्यंकूटस्थंपरमार्थतोवगच्छन् बुद्धिमानित्यादिस्तुतियोग्यतांगच्छती त्येवंस्वाभिप्रायेणश्लोकंव्याख्याय अत्रवृत्तिकारव्याख्यानमुत्थापयति अयमिति अ न्यथाव्याख्यानमेवप्रश्नद्वाराप्रकटयति कथमित्यादिना ईश्वरार्थेनानुष्ठानेफलाभाव वचनंव्याहतमितिमत्वाह किलेति नित्यानामकर्मत्वमप्रसिद्धमित्याशंक्यफलरा हित्यगुणयोगात्तेष्वकर्मत्वव्यवहारःसिध्यतीत्याह गौणेति नित्यानामकरणंमुख्य वृत्त्यैवाकर्मशब्दवाच्यमित्याह तेषाञ्चेति तत्रकर्मशब्दस्यप्रत्यवायाख्यफलहेतुत्व गुणयोगात् गौणेवृत्तप्रवृत्तिरित्याह तच्चेति पातनिकामेवंकृत्वाश्लोकाक्ष राणिव्याचष्टे तत्रेत्यादिना अकर्मणिचेत्यादिव्याकरोति तथेति सबुद्धिमानि त्यादिपूर्ववत् परकीयंव्याख्यानंव्युदस्यति नैतदिति नित्यंकर्मोकर्मनित्याक रणंकर्मेतिज्ञानात् दुरितनिवृत्तत्रनुपपत्तेर्भगवद्वचनं वृत्तिकारमतेबाधितं स्यादि त्यर्थः धर्मेणपापमपनुदतीतिश्रुतेर्नित्यानुष्ठानात् दुरितनिवर्हणप्रसिद्धेस्त दनुष्ठानस्यफलान्तराभावात्तदकर्मेति ज्ञात्वानुष्ठानेक्रियमाणेकथमशुभक्षयोनेति शङ्कते कथमिति चेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिःपरमासतेतिस्मरणात् कर्मणात्व न्तिकाशुभक्षयाभावेप्यङ्गीकृत्य परिहरति नित्यानामिति नित्यानुष्ठानादशुभक्ष येपिनास्मिन्प्रकरणेतद्विवक्षितं यत्ज्ञात्वामोक्ष्यसेऽशुभादितिज्ञानादशुभक्षयस्य प्रतिज्ञातत्वान्नचतज्ज्ञानफलाभावविषयमेषितव्यमित्याह नत्विति अशुभस्य फलाभावाज्ञानकार्यत्वाभावात् नफलाभावज्ञानाक्षयःसिध्यतीत्यर्थः किञ्चाती न्द्रियोर्थःशास्त्रान्निश्चीयते नचनित्यकर्मणांफलाभावज्ञानादशुभनिवृत्तिरित्यत्रशा स्त्रमस्तीत्याह नहीति नित्याकरणंकर्मेतिज्ञानमपिनाशुभनिवृत्तिफलत्वेनचोदि तमस्तीत्याह नित्यकर्मेति भगवद्वचनमेवात्रप्रमाणमित्याशंक्याह नचेति साधारण मेवयत्ज्ञात्वेत्यादिभगवतोवचनंनतुनित्यानांफलाभावंज्ञात्वेतिविशेषविषयमित्यर्थः अशुभमोक्षणासम्भवप्रदर्शनेनकर्मण्यकर्मदर्शननिराकरणन्यायेनाकर्मणिकर्मदर्श नंनिराकरोति एतेनेति नामादिषुफलायब्रह्मदृष्टिवदकर्मण्यपिफलार्थंकर्मदृष्टिवि धानाच्चाशुभमोक्षणानुपपत्तिरित्याशंक्याह नहीति अत्रहि श्लोकेनित्यस्याकर्तव्य तामात्रंपरमतेविवक्षितमतश्चाकर्मणिकर्मदर्शनंविधीयते तत्फलायेतिकल्पनाम

## आनन्दगिरिकृतटीका।

रस्यसिद्धान्तविरुद्धेत्याह नित्यस्त्विति परमतेपिनित्यस्य कर्त्तव्यमात्रमत्रस्लोकेन विवक्षितंकिन्तुनित्यानुष्ठानेप्रवृत्तिसिद्ध्यर्थंनित्याकरणात्प्रत्यवयोभवतीतिज्ञानमपि कर्त्तव्यत्वेनात्रविवक्षितमेवेत्याशंक्याह नचेति नतावत्प्रवृत्तिरस्यविज्ञानस्यफलंनि योगादेवतदुपपत्तेर्नापिफलान्तरमनुपलम्भादतोऽफलत्वादकरणात् प्रत्यवायोभ वतीति ज्ञानं नात्रकर्त्तव्यत्वेन विवक्षितमित्यर्थः किञ्चाकरणेकर्मदृष्टिविधावकर णस्यालम्बनत्वेनप्रधानत्वात् ज्ञेयत्वं वक्तव्यं तच्च तुच्छत्वादनुपपन्नमित्याह नापीति अकरणस्यासतो नामादिवदाश्रयत्वेन दर्शनासम्भवेपि सामानाधिकरण्येनेदं रज तमितिवद्दर्शनंभविष्यतीत्याशंक्याह नापिकर्मेति आदिशब्देनसर्वोत्कर्षादिगृह्यते फलवत्त्वंस्तुतिर्वासम्यग्ज्ञानस्ययुक्तंनमिथ्याज्ञानस्यानुपपत्तेरित्यर्थः स्वप्नेमिथ्याज्ञा नमपिफलवदुपलब्धमित्यशंक्यमिथ्याज्ञानस्याशुभाविरोधित्वान्नतस्मात्तन्निवृत्तिरि त्याह मिथ्याज्ञानमेवेति अशुभादेवाशुभानिवृत्तौदृष्टान्तेनाह नहीनि अविवेपूर्व्व कमिदंरजतमितिसदसतोः सामानाधिकरण्याग्निमिथ्याज्ञानंयुक्तं कर्माकर्मणोस्त्ववि वेकेनभासतोसामानाधिकरण्याधीनंज्ञानंसिंहदेवदत्तयोरिवगौणंनमिथ्याज्ञानं इतिशङ्कते नन्विति कर्माकर्मेतिदर्शनेफलाभावोगुणःअकर्मकर्मेतिदर्शनेतुफला भावोगुणस्तन्निमित्तमिदंज्ञानंगौणमित्याह फलेति यथोक्तज्ञानस्यगौणत्वेपिप्रामा णिकफलाभावापन्नतज्ज्ञौणतोचितेतिदूषयति नेत्यादिना कर्माकर्मेत्यादिगौणविज्ञा नोपन्यासव्याजेननित्यकर्म्मकर्त्तव्यतया विवक्षितत्वाज्ज्ञौणज्ञानस्याफलत्वमदूषणमि त्याशंक्याह नापीति ज्ञानादशुभमोक्षणस्यश्रुतस्यहानिरश्रुतस्यनित्यानुष्ठानस्य कल्पनेत्यनेनव्यापारगौरवेणनकश्चिद्विशेषःसिध्यतीत्यर्थः उक्तमेवप्रपञ्चयति स्वश ब्देनेति नरकपातःस्यादतोविधेरेवानुष्ठेयानितानीतिशेषः यथोक्तवाचकशब्दप्र योगादेवापेक्षितार्थसिद्धिसम्भवेभगवतोव्याजवचनकल्पनमनुचितमित्याह तत्रेति प्रकृतेस्लोकेवृत्तिकृतांव्याख्यानेन परमाप्तस्यैवभगवतोविप्रलम्भकत्वमापादितमि तितदीयंव्याख्यानमुपेक्षितव्यमितिफलितमाह तत्रैवमिति नित्यकर्मानुष्ठानसिद्ध्य र्थंव्याजरूपमितिभगवद्वचनमनुचितमित्याशंक्यस्वशब्देनापीत्यादिप्रागुक्तपरिपाट्या पितदनुष्ठानबोधनसम्भवान्मैवमित्याह नचैतदिति वस्तुशब्देननित्यकर्मानुष्ठानमु च्यते यथात्मप्रतिपादनंसुबोधत्वसिद्ध्यर्थंपौनःपुन्येनक्रियते तथानित्यानामपिकर्म्म णामनुष्ठानंकर्म्मण्यकर्मेत्यादिशब्दान्तरेणोच्यमानंसुबोधंस्यादितिभगवतःशब्दान्त

आनन्दगिरिकृतटीका।

रंयुक्तमित्याशंक्यतस्यनित्यानुष्ठानवाचकत्वाभान्नैवमित्याह नापीति किञ्चपूर्व्वमे वनित्यानुष्ठानस्यस्पष्टमुपदिष्टत्वान्नतस्यसुबोधनार्थंशब्दान्तरमपेक्षितमित्याह कर्म ण्येवेति कर्माकर्मादिविज्ञानव्याजेननित्यकर्मानुष्ठानकर्त्तव्यतायांतात्पर्यमित्येतन्नि राकृत्यकर्माकर्मादिदर्शनंगौणमितिपक्षेदूषणान्तरमाह सर्व्वत्रचेति लोकेवेदेचय थाप्रशस्तंदेवतादितत्त्वं यच्चकर्त्तव्यमनुष्ठानार्हमग्निहोत्रादितदेवबोद्धव्यमित्युच्यते ननिष्फलंकाकदन्तादिकर्मण्यकर्मदर्शनं अकर्मणिचकर्मदर्शनंगौणत्वादेवाप्रशस्तम कर्त्तव्यञ्चनातस्तद्बोद्धव्यमिति वचनमर्हतीत्यर्थः किञ्चकर्मादेर्मायामात्रत्वाद्गौणम पितद्विषयंज्ञानंमिथ्याज्ञानमिति नतस्यबोद्धव्यत्वसिद्धिरित्याह नचेति मिथ्याज्ञा नस्यबोद्धव्यत्वाभावेपितद्विषयस्यबोद्धव्यतासिध्येदित्याशंक्यवस्तुभासत्वान्नैवमित्याह तत्प्रत्युपस्थापितञ्चेति यत्पुनरकरणस्यप्रत्यवायहेतुत्वंअकरणेगौण्याहृत्त्याकर्म शब्दप्रयोगेनिमित्तमिति तद्दूषयति नापीति अकरणात्प्रत्यवायोभवतीत्यत्रश्रुतिस्मृ तिविरोधमभिधाययुक्तिविरोधमभिदधाति असतइति असतःसद्रूपेणभवनमभव नञ्चनिःस्वरूपत्वादनुपपन्नं निरस्तसमस्ततत्त्वस्यकिञ्चित्त्वाभ्युपगमेसर्व्वप्रमाणा नामप्रामाण्यप्रसङ्गादित्याह तच्चेति यत्तुनित्यानांफलराहित्यंतत्राकर्मशब्दप्रयोगे निमित्तमिति तन्निरस्यति नचेति नकेवलं विध्युद्देशे स्वफलाभावान्नित्यानां विध्य नुपपत्तिरपितुधात्वर्थस्यक्लेशात्मकत्वात्तत्र श्रुतफलभावेनैवविधिरवकाशमासाद येदित्याह दुःखेति दुःखरूपस्यापिधात्वर्थस्यसाध्यत्वेनकार्य्यत्वात्तद्विषयोविधिःस्या दितिचेन्नेत्याह दुःखस्यचेति स्वर्गादिफलाभावेपि नित्यानामकरणनिमित्तनिरय निवासार्थंदुःखरूपाणामपि स्यादनुष्ठेयत्वमित्याशंक्याह तदकरणेचेति फलान्त राभावेपिमोक्षसाधनत्वात्मुमुक्षुणानित्यानिकर्माणिअनुष्ठेयानि इत्याशंक्याह स्वाभ्युपगमेति हत्तिकारव्याख्यानासम्भवेफलितमुपसंहरति तस्मादिति कोसौय थाश्रुतोर्थःश्लोकस्येत्याशंक्याह तथाचेति १८

स्वामिकृतटीका।

तदेवकर्मादीनांदुर्व्विज्ञेयत्वंदर्शयन्नाह कर्मणीति परमेश्वराराधनल क्षणेकर्मणिकर्मविषयेअकर्मकर्मेदंनभवतीतियःपश्येत्तस्यज्ञानहेतुत्वेन बन्धकत्वा भावात् अकर्मणिचविहिताकरणेकर्मयःपश्येत्प्रत्यवायोत्पादकत्वेनबन्धहेतुत्वात्

यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः १९

### स्वामिकृतटीका

मनुष्येषुकर्मकुर्वाणेषुसबुद्धिमान्व्यवसायात्मकबुद्धिमत्त्वाच्छ्रेष्ठ तंप्रशंसति सयुक्तोयोगी तेनकर्मणाज्ञानयोगावाप्तेःसएवकृत्स्नकर्मकर्त्ताचसर्वतःसंप्लुतोदकस्थानीयेचतस्मिन्कर्मणिसर्वकर्मफलानामन्तर्भावात् तदेवमारुरुक्षोःकर्मयोगाधिकारावस्थायां नकर्मणामनारम्भादित्यादिनोक्तःएवकर्मयोगःस्पष्टीकृतस्तत्प्रपञ्चरूपत्वाच्चास्यप्रकरणस्यनपौनरुक्त्यदोषः अनेनैवयोगारूढावस्थायांयस्त्वात्मरतिरेवस्यादित्यादिना यः कर्मानुपयोग उक्तस्तस्याप्यर्थात् प्रपञ्चकृतोवेदितव्यः तदारुरुक्षोरपिकर्मबन्धकंनभवति तदारूढस्यकुतो बन्धकं स्यादित्यत्रापिश्लोकोयुज्यते यद्वाकर्मणि देहेन्द्रियादिव्यापारे वर्त्तमानेऽप्यात्मनो देहादिव्यतिरेकानुभवेनअकर्मस्वाभाविकंनैष्कर्म्यमेव यः पश्येत् तथाअकर्मणिचज्ञानरहिते दुःखबुद्ध्याकर्मणांत्यागे कर्म यः पश्येत्तस्यप्रयत्नसाध्यत्वेन मिथ्याचारत्वात् तदुक्तं कर्मेन्द्रियाणि संयम्येत्यादिना य एवंभूतः सतु सर्व्वेषुमनुष्येषु बुद्धिमान् पण्डितः तत्र हेतुर्यतः कृत्स्नानिसर्व्वाणियदृच्छया प्राप्तानिआहारादीनिकर्म्माणिकुर्व्वन्नपि सयुक्तएवअनात्मज्ञानेनसमाधिस्थएवेत्यर्थः अनेनैवज्ञानिनःस्वभावादापन्नं कलञ्जभक्षणादिकं न दोषाय अज्ञस्यतुरागतः कृतं दोषायेति विकर्मणोऽपितत्त्वं निरूपितं द्रष्टव्यं १८

### भाषाअनुवाद

अथकर्मण्यकर्मयःपश्येत् इसश्लोकमेंस्तुतिकातात्पर्जअर्थजोकहा सोईयांव श्लोकमेंस्पष्टकरकेकहतेहैं जिसकेसबसमारम्भकहे कर्मकामसंकल्पवर्जित अर्थात् कामनारहितहैं उसीकोबुधकहे बुद्धिमानलोग पण्डितकहतेहैं जिससे कर्मअनुष्ठानकेद्वारा शुद्धचित्तहोनेसे प्रगटहुयेज्ञानअग्निसे सकलकर्मदग्धहोजातेहैं फेरिकर्मबन्धउसकोनहींहोताहै औरज्ञानआरूढअवस्थामें कामका अर्थ कर्मफल औरइसकेअर्थ यहकर्महमकोकरनाउचितहै परन्तु ज्ञानआरूढपुरुष इनदोनोंसेभीरहितहै सोईकहा जिनिसकेसबसमारम्भकामनारहित हों सो पण्डित है १९

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित् करोति सः २०

शाङ्करभाष्य।

तदेतत् कर्मण्यकर्म्मादिदर्शनं स्तूयते यस्येति यस्ययथोक्तदर्शिनः सर्व्वेयावन्तः समारम्भाः सर्व्वाणिकर्म्माणिसमारभ्यन्तेइति समारम्भाः कामसङ्कल्पवर्जिताः कामैस्तत्कारणैश्चसङ्कल्पैर्व्वर्ज्जिताः मुधैवचेष्टामात्रा अनुष्ठीयन्ते प्रवृत्तेनचेल्लोकसंग्रहार्थंनिवृत्तेनचेत्जीवनमात्रार्थंतंज्ञानाग्निदग्धकर्माणंकर्मादावकर्मादिदर्शनं ज्ञानंतदेवाग्निस्तेनज्ञानाग्निनादग्धनिशुभाशुभलक्षणानि कर्माणियस्यतमाहुः परमार्थतः पण्डितं बुधाःब्रह्मविदः १९

आनन्दगिरिकृतटीका

कर्मण्यकर्मदर्शनंपूर्व्वोक्तंस्तोतुमुत्तरश्लोकं प्रस्तौति तदेतदिति यथोक्तदर्शित्वंपूर्वोक्तदर्शनसम्पन्नत्वं समारम्भशब्दस्यकर्मविषयत्वं नरूढ्याकिन्तुव्युत्पत्त्येत्याह समारभ्यन्तइतीति कामसङ्कल्पवर्जितत्वे कथंकर्मणामनुष्ठानमित्याशंक्याह मुधैवेति उद्देश्यफलाभावेतेषामनुष्ठानंयादृच्छिकंस्यादित्याशंक्यप्रवृत्तेननिवृत्तेनवा तेषामनुष्ठानंयादृच्छिकंस्यादिति विकल्पक्रमेणनिरस्यति प्रवृत्तेनेत्यादिना ज्ञानाग्नीत्यादिविभजते कर्मादाविति यथोक्तज्ञानंयोग्यमेवदहति नायोग्यमिति विवक्षितत्वात्तस्मिन्नग्निपदं यथोक्तविज्ञानविरहिणामपि वैशेषिकादीनांपण्डितत्वाप्रसिद्धिमाशंक्य तेषांपण्डिताभासत्वं विवक्षित्वाविशिनष्टि परमार्थत इति १९

स्वामिकृतटीका।

कर्मण्यकर्मयः पश्येदित्यनेनश्रुत्यर्थापत्तिभ्यांयदुक्तमर्थद्वयं तदेवस्पष्टयति यस्येतिपञ्चभिः सम्यगारभ्यन्तइति समारम्भाःकर्माणिकाम्यतइति कामःफलं

भाषा अनुवाद।

और सर्व्वकर्मतथाकर्मकेफलमेंआसक्तिछोडकर नित्यआनन्दरूपआत्मामे सन्तुष्टमनुष्य अप्राप्तवस्तुकीचेष्टा औप्राप्तकापालन इनदोनोसेदूरहैं इसीसेवे कोईकर्ममेंप्रवृत्तहोयं परउनकावहकर्मकर्मनहींहै अर्थात् उसके सवकर्मअकर्मताकोप्राप्तहैं सोईकहतेहैं किकर्मकेफलऔसंग जोआसक्ति तिसेछोडि नित्यसुखआत्मसेतृप्त वेपरवाह जोकर्ममेंप्रवृत्तभीहै परवह कुछभीनहीं करताहै यहजानो २०

## शाङ्करभाष्यं

यस्त्वकर्मादिदर्शी सोऽकर्मादिदर्शनादेव निःकर्मा संन्यासी जीवनमात्रार्थचेष्टः सन् कर्मणि न प्रवर्त्तते यद्यपि प्राग्विवेकतः प्रवृत्तः यस्तु प्रारब्धकर्मा सन् उत्तरकालमुत्पन्नात्मसम्यग्दर्शनः स्यात् स कर्मणि प्रयोजनमपश्यन् ससाधनं कर्म परित्यजत्येव सकुतश्चिन्निमित्तात् कर्मपरित्यागासम्भवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावाल्लोकसंग्रहार्थं पूर्व्ववत् कर्मणि प्रवृत्तोऽपि नैव किञ्चित् करोति ज्ञानाग्निदग्धकर्मत्वात् तदीयं कर्माकर्म्मैव सम्पद्यत इत्येतदर्थं दर्शयिष्यन्नाह त्यक्त्वेति त्यक्त्वा कर्मस्वभिमानं फलासङ्गञ्च यथोक्तेन ज्ञानेन नित्यतृप्तो निराकांक्षो विषयेष्वित्यर्थो निराश्रय आश्रयरहित आश्रयो नाम यदाश्रित्य पुरुषार्थं सिसाधयिषति दृष्टादृष्टेफलसाधनाश्रयरहित इत्यर्थः तेनैवम्भूतेन स्वप्रयोजनाभावात् ससाधनं कर्म परित्यक्तव्यमेवेति प्राप्ते ततो निर्गमासम्भवात् लोकसंग्रहचिकीर्षया शिष्टविगर्हणापरिजिहीर्षया वा पूर्व्ववत् कर्मण्यभिप्रवृत्तोऽपि निःक्रियात्मदर्शनसम्पन्नत्वान्नैव किञ्चित् करोति सः २०

## आनन्दगिरिकृतटीका।

विवेकात् पूर्व्वं कर्मणि प्रवृत्तावपि सति विवेके तत्र न प्रवृत्तिरित्याह नेत्याद्येन करोति यस्त्विति विवेकात् पूर्व्वमभिनिवेशेन प्रवृत्तस्य विवेकानन्तरमभिनिवेशाभावात् प्रवृत्त्यसम्भवेऽपि जीवनमात्रमुद्दिश्य प्रवृत्त्याभासः सम्भवतीत्यर्थः सत्यपि विवेके तत्त्वसाक्षात्कारानुदयात् कर्मणि प्रवृत्तस्य कथं तत्त्यागः स्यादित्याशंक्याह यस्तु प्रारब्धेति त्यक्त्वेत्यादि समनन्तरश्लोकमवतारयितुं भूमिकां कृत्वा तदवतारणप्रकारं दर्शयति सकुतश्चिदिति लोकसंग्रहादिनिमित्तं विवक्षितं कर्मपरित्यागासम्भवे सति तस्मिन् प्रवृत्तोऽपि नैव करोति किञ्चिदिति सम्बन्धः कर्मणि प्रवृत्तो न करोति कर्मेति कथमुच्यते तत्राह स्वप्रयोजनाभावादिति कथं तर्हि कर्मणि प्रवर्त्तते तत्राह लोकेति प्रवृत्तेरर्थक्रियाकारित्वाभावं मध्यादिभिश्चाविशेषादिति न्यायेन व्यावर्त्तयति पूर्व्ववदिति कथं तर्हि विवेकिनामविवेकिनाञ्च विशेषः स्यादित्याशंक्य कर्मादौ सङ्गासङ्गाभ्यामित्याह कर्मणीति उक्तेऽर्थे समनन्तरश्लोकमवतारयति ज्ञानाग्नीति एतमर्थं दर्शयिष्यन्निमं

## स्वामिकृतटीका।

तत्सङ्कल्पेन वर्जिता यस्य भवन्ति तं पण्डितमाहुः बुधा ह्येवम्भूतस्तैः समारम्भैः शुद्धे चित्ते सति जातेन ज्ञानाग्निना दग्धानि अकर्मतां नीतानि कर्माणि यस्य तं आरूढावस्थायां तु कामः फलहेतुविषयः तदर्थमिदं कर्त्तव्यमिति कर्त्तव्यविषयः सङ्कल्पस्ताभ्यां वर्ज्जितां शेषं स्पष्टं १९

निराशीर्यतचित्तात्मात्यक्तसर्व्वपरिग्रहः शारीरंकेवलंकर्मकुर्व्वन्नाप्नोतिकिल्बिषं२१

## शाङ्करभाष्यम्

यःपुनःपूर्व्वोक्तविपरीतः प्रागेवकर्मारम्भाद्ब्रह्मणिसर्व्वान्तरे प्रत्यगात्मनिनिष्क्रिये सञ्जातात्मदर्शनःसद्दृष्टादृष्टेष्टविषयाशीर्व्विवर्ज्जिततया दृष्टादृष्टार्थेकर्मणिप्रयोजनमपश्यन् ससाधनंकर्मसंन्यस्यशरीरयात्रामात्रचेष्टोयतिर्ज्ञाननिष्ठोमुच्यत इत्येतमर्थंदर्शयितुमाह निरिति निराशोर्निर्गताः आशिषो यस्मात्सनिराशीःयतचित्तात्माचित्तमन्तःकरणमात्मावाह्यः कार्य्यकरणसंघातस्तावुभावपि यतौसंयतौ

## आनन्दगिरिकृतटीका।

श्लोकमाहेतियोजनायथोक्तंज्ञानंकूटस्थात्मदर्शनंतेनस्वरूपभूतंसुखंसाक्षादनुभूयकर्मणितत्फलेचसङ्गमपास्यविषयेषुनिरपेक्षश्चेष्टतेविद्वानित्याह त्यक्त्वेत्यादिदृष्टसाधनमपेक्षस्वकुतोनिरपेक्षत्वमित्याशंक्याविशिनष्टि निराश्रयइतियदाश्रित्येतियच्छब्देनफलसाधनमुच्यतेआश्रयरहितंइत्यस्यर्थं स्पष्टयति दृष्टेतितेनज्ञानवतापुरुषेणैवम्भूतेनत्यात्क्वकर्मफलासङ्गमित्यादिनाविशेषितेनेत्यर्थःततःसमाधानात्कर्मणःसकाशादितियावत् निर्गमासम्भवेहेतुमाह लोकेत्यादिनापूर्व्वयत्ज्ञानोदयात्प्रागवस्थायामिवेत्यर्थमभिप्रवृत्तोपिलोकदृष्ट्येतिशेषःनैवकरोतिकिञ्चिदितिस्वदृष्टेतिद्रष्टव्यं २०

## स्वामिकृतटीका।

किञ्चत्यक्त्वेति कर्मणितत्फलेचासक्तिंत्यक्त्वानित्यानन्देनतृप्तःअतएवयोगक्षेमार्थमाश्रयणीयरहितः एवंभूतोयःस्वाभाविकेविहिते वा कर्मणि अभितः प्रवृत्तोऽपि किञ्चिदपिनैवकरोति तस्यकर्मअकर्मतामापद्यत इत्यर्थः २०

## भाषा अनुवाद।

विक्षेपकारीकर्म्महींकोतो शास्त्रवन्धनकाहेतु कहतेहैं और आपने कर्म्मकीप्रसंशाकरिजनकादिकोदृष्टान्तदेखाय प्रथमअवस्थामेअधिकारऔरज्ञानप्राप्तभयेभीनिरहङ्कारकर्मकरनेसे अदोषकहा इससेसर्व्वथाकर्मकरनाप्राप्तहोता है इससन्देहपरकहतेहैं किजोसर्वकासनापरित्यागकरि निष्कामहोतथामनइन्द्रीशरीर अपनेवशीभूतराखि सकलविषयसेनिवृत्तहैं और शरीरनिर्व्वाहमात्रकेअर्थकर्त्तृत्वअभिमानरहितहो कर्मोंकोकरतेजुयेभी वेमनुष्यकर्मवन्धकोनहीं प्राप्तहोतेहैं अर्थात् कर्मजनितकिल्बिषजोपाप सोनहींलगताहै सोईकहाकि निराशीर्यतचितात्मात्यक्तसर्वपरिग्रहः २१

## शाङ्करभाष्यं

येन सयतचित्तात्मात्यक्तसर्व्वपरिग्रहः त्यक्तः सर्व्वः परिग्रहो येन सत्यक्तसर्व्वपरिग्रहः
शारीरं शरीरस्थितिमात्रप्रयोजनं केवलं कर्म तत्राप्यभिमानवर्ज्जितं कर्म कुर्व्वन्नाप्नोति
नप्राप्नोति किल्बिषम् अनिष्टरूपं पापं धर्मञ्च धर्मोऽपि मुमुक्षोरनिष्टरूपत्वात् किल्बि
षमेव बन्धापादकत्वात् किञ्च शारीरं केवलं कर्मेत्यत्र किं शरीरनिर्व्वर्त्यं शारीरं कर्मा
भिप्रेतमाहोस्विच्छरीरस्थितिमात्रप्रयोजनं शारीरं कर्मेति किञ्चातो यदि शरीरनि
र्व्वर्त्त्यं शारीरं कर्म यदि वा शरीरस्थितिमात्रप्रयोजनं शारीरमित्युच्यते यदा शरीर
निर्व्वर्त्त्यं कर्म शारीरमभिप्रेतं स्यात्तदा दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरीरेण कु
र्व्वन्नाप्नोति किल्बिषमिति ब्रुवतो विरुद्धाभिधानं प्रसज्जेत शास्त्रीयञ्च कर्म दृष्टादृ
ष्टप्रयोजनं शरीरेण कुर्व्वन्नाप्नोति किल्बिषमित्यपि ब्रुवतोऽप्राप्तप्रतिषेधप्रसङ्गः शा
रीरं कर्म कुर्व्वन्निति विशेषणात् केवलशब्दप्रयोगाच्च वाङ्मनसनिर्व्वर्त्त्यं कर्म विधि
प्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्व्वन्नाप्नोति किल्बिषमित्युक्तं स्यात् तत्रापि वा
ङ्मनोभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धमापद्येत प्रतिषिद्धसेवापक्षेऽ
पि भूतार्थानुवादमात्रमनर्थकं स्यात् यदा तु शरीरस्थितिमात्रप्रयोजनं शारीरं कर्मा
भिप्रेतं भवेत्तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधशास्त्रगम्यं शरीरवाङ्मनोवर्त्यम
न्यदकुर्व्वंस्तैरेव शरीरादिभिः शरीरस्थितिमात्रप्रयोजनं केवलशब्दप्रयोगादहं करो
मीत्यभिमानवर्जितः शरीरादिचेष्टामात्रं लोकदृष्ट्या कुर्व्वन्नाप्नोति किल्बिषमेवम्भूत
स्य पापशब्दवाच्यकिल्बिषप्राप्त्यसम्भवात् किल्बिषं संसारं नाप्नोति ज्ञानाग्निदग्ध
सर्व्वकर्मत्वादप्रतिबन्धेन मुच्यत एवेति पूर्व्वोक्तसम्यग्दर्शनफलानुवाद एवैषः एवं
शारीरं केवलं कर्मेत्यस्यार्थस्य परिग्रहे निरवद्यं भवति २१

## आनन्दगिरिकृतटीका ।

सत्यपि विक्षेपके कर्मणि कूटस्थात्मानुसन्धानस्य सिद्धे कैवल्यहेतुत्वे विक्षेपाभावे सुत
रां तस्य तद्धेतुत्वसिद्धिरित्यभिप्रेत्याह यः पुनरिति पूर्व्वोक्तविपरीतत्वं लोकसंग्रहादि
निरपेक्षत्वं तदेव वैपरीत्यं स्फोरयति प्रागेवेति ससाधनसर्वकर्मसंन्यासे शरीरस्थि
तिरपि कथमित्याशंक्याह शरीरेति तर्हि तथाविधचेष्टानिविष्टचेतस्तया सम्यग्ज्ञा
नबहिर्मुखस्य कुतो मुक्तिरित्याशंक्य यथोद्दिष्टायामनादरान्मैवमित्याह ज्ञाननिष्ठ इति
इति दर्शयितुमिमं श्लोकं प्राहेति पूर्व्ववत् आशिषः प्रार्थनाभेदास्तृष्णाविशेषाः आशि
षां विदुषो निर्गतत्वे हेतुमाह यतेति चित्तवदात्मनः संयमनं कथमित्याशंक्याह आत्मा

आनन्दगिरिकृतटीका ।

वाच्यइतिद्वयोःसंयमनेसत्यर्थसिद्धमर्थमाह त्यक्तेति सर्वपरिग्रहपरित्यागेदेहस्थिति रपिदुःस्थास्यादित्याशंक्याह शरीरमिति मात्रशब्देनपौनरुक्त्यादनर्थकंकेवलंपद मित्याशंक्याह तत्रापीति शरीरं केवलमित्यादौशरीरपदार्थस्यटीकाकर्त्तुरुभयथा सम्भावनयाविकल्पयति शारीरमिति शरीरनिर्वर्त्त्यंशारीरमित्यस्मिन्पक्षेकिंरूप शंशरीरस्थितिमात्रं शारीरमित्यस्मिन्वापक्षेकिंफलमिति पूर्ववादीपृच्छति कि ञ्चातइति शरीरनिर्वर्त्त्यंशारीरमित्यस्मिन्पक्षेसिद्धान्तीदूषणमाह उच्यतइति शरीरेणयन्निर्वर्त्त्यंतत्किंप्रतिषिद्धंविहितम्वा प्रथमेविरोधःस्यादित्याह यदेति प्रतिषिद्धाचरणेपिनानिष्टप्राप्तिरित्युक्तेप्रतिषेधशास्त्रविरोधःस्यादित्यर्थः द्वितीयेवि हितकरणेसत्यनिष्टप्राप्त्यभावादप्राप्तप्रतिषेधःस्यादित्याह शास्त्रीयञ्चेति दृष्टप्रयो जनंशारीर्य्यादिकंकर्म्मादृष्टप्रयोजनंस्वर्गसाधनंज्योतिष्टोमादिकंकर्मेति विभागः शरीरनिर्वर्त्तकंकर्मशारीरमभिमतमितिपक्षेदूषणान्तरमाह शारीरमिति वाचा मनसाचाकर्मणोऽनुष्ठानेसंन्यासिनोभवत्येवकिल्बिषप्राप्तिरित्याशंक्याह तत्रापीति वाङ्मनोभ्यांविहितानुष्ठाने वा प्रतिषिद्धकरणेवाकिल्बिषप्राप्तिःसंन्यासिनःस्यादिति विकल्पाद्ये जपध्यानविधिविरोधःस्यादित्युक्त्वा द्वितीयंदूषयति प्रतिषिद्धेति शरी रनिर्वर्त्तकंकर्मशारीरमिति पक्षमेवंप्रतिक्षिप्यद्वितीयपक्षेलाभंदर्शयति यदात्विति अन्यदेहस्थितिप्रयोजनात्कर्मणःचकाशादिति शेषः तत्रापि विदुषः स्वदृष्ट्यान प्रवृत्तिरिति सूचयति लोकेति विद्वानुक्तशारीरयात्रावर्त्तमानोनाप्नोतिकिल्बिषमि त्यत्र विवक्षितमर्थमाह एवम्भूतेति विधिनिषेधगम्यंकर्मदेहस्थितिहेतुव्यतिरिक्त मकुर्वत इत्यर्थः शारीरंकेवलंकर्मकुर्वन्नाप्नोति किल्बिषमित्यस्योक्तेन प्रकारेण परिग्रहे शारीरं केवलमिति विशेषणद्वयंनिर्दोषं सिध्यतीति फलितमाह एव मिति २१

स्वामिकृतटीका ।

किञ्चनिराशीरिति निर्गताआशिषः कामनायस्मात् यतंनियतंचित्त मात्माशरीरंचयस्यत्यक्ताःसर्वे परिग्रहायेनसःशारीरंशरीरमात्रनिर्व्वर्त्त्यंकर्तृत्वा भिनिवेशरहितं कर्म कुर्व्वन्नपि किल्बिषं बन्धं नप्राप्नोति योगारूढपक्षेश रीरनिर्व्वाहमात्रोपयोगिस्वाभाविकं भिक्षाटनादि कुर्व्वन्नपि किल्बिषं विहि ताकरणनिमित्तदोषं नप्राप्नोति २१

यदृच्छालाभसन्तुष्टोद्वन्द्वातीतोविमत्सरः समःसिद्धावसिद्धौचकृत्वापिननिबध्यते २२

शाङ्करभाष्यं

त्यक्तसर्व्वपरिग्रहस्य यतेरन्नादेःशरीरस्थितिहेतोःपरिग्रहस्याभावात् याच नादिनाशरीरस्थितौ कर्त्तव्यतायां प्राप्तायामयाचितमसंक्लृप्तमुपपन्नंयदृच्छये त्यादिना वचनेनानुज्ञातं यतेःशरीरस्थितिहेतोरन्नादेः प्राप्तिद्वारमाविष्कुर्व्व न्नाह यदृच्छेति यदृच्छालाभसन्तुष्टोऽप्रार्थितोऽयत्नतो लाभो यदृच्छालाभस्तेन सन्तुष्टः संजातालंप्रत्ययःद्वंद्वातीतो द्वन्द्वद्वैः शीतोष्णादिभिःहन्यमानोऽविषण्णचि त्तोद्वन्द्वातीत उच्यते विमत्सरो विगतमत्सरोनिर्वैरबुद्धिः समस्तुल्योयदृच्छया लाभस्यापिसिद्धावसिद्धौच य एवम्भूतो यतिरन्नादेःशरीरस्थितिहेतोः लाभाला भयोः समोपिहर्षविषादवर्ज्जितः कर्मादौ अकर्मादिदर्शी यथाभूतात्मदर्शन निष्ठः शरीरस्थितिमात्रप्रयोजने भिक्षाटनादिकर्मणि शरीरादिनिर्वर्त्यनैवकि ञ्चित् करोम्यहं गुणागुणेषु वर्त्तन्ते इत्येवं सदासम्परिचक्षाण आत्मकर्तृत्वा भावंपश्यन्नैव किञ्चिद्भिक्षाटनादिकं कर्मकरोति लोकव्यवहारसामान्यदर्शने न तुलौकिकैरारोपितकर्तृत्वे भिक्षाटनादौ कर्मणिकर्त्ता भवति भिक्षाटनादिचेष्टा स्वपिचकर्तृत्वादनुसन्धानमेव विदुषः स्वानुभवेनतुशास्त्रप्रमाणादिजनितेनाक र्त्तैव स एवंपराध्यारोपितकर्तृत्वं शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिकंकर्म कृत्वापि ननिबध्यते बन्धहेतोःकर्मणःसहेतुकस्य ज्ञानाग्निनादग्धत्वादित्यनुवाद एवैषः २२

आनन्दगिरिकृतटीका।

पूर्व्वश्लोकेनसङ्गतिंदर्शयन्नुत्तरश्लोकमुत्थापयति त्यक्तेति अन्नादेरित्यादिशब्देन पादुकाच्छादनादिगृह्यते याचनादिनेत्यादिपदेनसेवाकृष्याद्युपादीयतेभिक्षाटना र्थमुद्योगात् प्राक्काले केनापियोग्येननिवेदितं भैक्षमयाचितंअभिप्रश्नं पतितञ्च

भाषा अनुवाद।

औरयदृच्छालाभसंतुष्टकहे मांगेविना आपसेआप प्राप्तजोयथालाभ तिससे जोसन्तुष्टहैं अर्थात्उत्तमअधमअधिकअल्पलाभसेहर्षविषादरहितहैं औरशी तउष्णहानिलाभसुखदुःखवैरप्रीतिआदि द्वन्द्वभावरहितहैंतथासिद्धिअसिद्धिमे समभावहैं वेपुरुषकर्मकरतेभी संसारगतिकोनहींप्राप्तहोते अर्थात्कर्मबन्धन मेनहींपडतेहैं सोईकहा कियदृच्छालाभसन्तुष्टो द्वन्द्वातीतोविमत्सरइति २२

## शाङ्करभाष्यम्।

त्यक्त्वाकर्म्मफलासङ्गंइत्यनेनश्लोकेन यःप्रारब्धकर्म्मासन्यदानिःक्रियब्रह्मात्मद र्शनसम्पन्नःस्यात् तदास्यात्मनःकर्त्तृकर्म्मप्रयोजनाभावदर्शिनःकर्म्मपरित्यागेप्राप्ते कुतश्चिन्निमित्तात्तदसम्भवेसति पूर्ब्ववत्तस्मिन्कर्म्मण्यभिप्रवृत्तोपिनैवकिञ्चित् क रोतिसइतिचकर्म्माभावःप्रदर्शितःयस्यैवंकर्म्माभावो दर्शितस्तस्यैव गतसङ्गस्येति गतसङ्गस्य सर्वतोनिवृत्तासक्तेर्मुक्तस्यनिवृत्तधर्म्मादिवन्धनस्य ज्ञानावस्थितचेतसो ज्ञानेएवअवस्थितं चेतोयस्य सोऽयंज्ञानावस्थितचेतस्तस्य यज्ञाययज्ञनिर्वृत्यर्थमा चरतो निर्वर्त्तयतःकर्मसमग्रं सहाग्रेणकर्मफलेनवर्त्तते इतिसमग्रं कर्मतत्समग्रं प्रविलीयते विनश्यतीत्यर्थः २३

## आनन्दगिरिकृतटीका।

वर्जयित्वा सङ्कल्पमन्तरेणपञ्चभ्यःसप्तभ्योवागृहेभ्यःसमानीतं भैक्ष्यमसंक्लृप्तंसिद्ध मन्नंभक्तजनैः स्वसमीपमुपानीतमुपपन्नंयदृच्छयास्वकीयप्रयत्नव्यतिरेकेणेतिया वत्आदिशब्देन माधुकर्यमसंक्लृप्तं प्राक्प्रणीतमयाचितं तात्कालिकोपपन्नञ्चभैक्ष्यं पञ्चविधंस्मृतमित्यादिगृह्यते आविष्णुर्वेत्तिदंवाक्यमाहेति योजनीयं परोत्कर्षा मर्षपूर्विकास्वस्योत्कर्षावाञ्छाविगतायस्मादिति व्युत्पत्तिमाश्रित्यविवक्षितमर्थमा ह निर्वैरेति संक्षेपतोदर्शितमर्थं विशदयति यएवम्भूतइति तथापिप्रकृतस्ययते र्भिक्षाटनादौकर्त्तृत्वंप्रतिभाति तदभावेभिक्षाटनाद्यभावेनजीवनाभिभावप्रसङ्गा दित्याशंक्याह लोकेति लौकिकैरविवेकिभिःसह्व्यवहारस्नानाचमनभोजना दिलक्षणस्यविदुष्यपिसासाम्येनदर्शनात्तदनुसारेणलौकिकैरध्यारोपितकर्त्तृत्व भोक्तृत्वादिर्विद्वानपिलोकदृष्ट्याभिक्षाटनादौकर्त्तृत्वमनुभवतीत्यर्थः कथन्तर्हि तस्या कर्त्तृत्वंतत्राह स्वानुभवेनेति यदृच्छेत्यादिपादत्रयंव्याख्यायकृत्वापीत्यादिचतुर्थपा दंव्याचष्टे सएवमिति भिक्षाटनादिनाप्रातिभासिकेनकर्मणाविदुषोवद्धत्वाभावेपि कर्म्मान्तरेणनिवद्धत्वंभविष्यतीत्याशंक्याह वन्धेति ज्ञानाग्निदग्धत्वादित्येवंशारीरं

## स्वामिकृतटीका।

किञ्चयदृच्छालाभेति अप्रार्थितोपस्थितोलाभोयदृच्छालाभस्तेनसन्तुष्टः द्वन्द्वा निशीतोष्णादीन्यतीतोऽतिक्रान्तस्तत्सहनशीलइत्यर्थ विमत्सरोनिर्वैरः यदृच्छाला भस्यापिसिद्धावसिद्धौच समोहर्षविषादरहितःयएवंभूतःसपूर्व्वोक्तरभूमिकयोर्यथा यथविहितं स्वाभाविकंवा कर्मकृत्वा वन्धंनप्राप्नोति; २२

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः यज्ञायाचरतः कर्म्म समग्रं प्रविलीयते २३

शांकरभाष्यं ।

कस्मात् पुनः कारणात् क्रियमाणं कर्म्म स्वकार्य्यारम्भमकुर्व्वन् समग्रं प्रविलीय तइत्युच्यते यतः ब्रह्मेति ब्रह्मार्पणं येन करणेन ब्रह्मविद्धविरग्नावर्पयति तद्ब्रह्मैवेति पश्यति तस्यात्मव्यतिरेकेणाभावं पश्यति यथा शुक्तिकायां रजताभावं पश्यति तदुच्यते ब्रह्मैवार्पणमिति यथा यद्रजतं तच्छुक्तिकैवेति ब्रह्मार्पणमि त्यसमस्ते पदे यदर्पणबुद्ध्या गृह्यते लोके तदस्य ब्रह्मविदो ब्रह्मैवेत्यर्थः ब्रह्म हविस्तथा

आनन्दगिरिकृतटीका

केवलमित्यादावुक्तस्यायमनुवाद इति योजना यथोक्तस्य कर्म्मणो युक्त्या बन्धाविरोधा भ्युपगमसूचनार्थोऽपिशब्दः २२

गतसङ्गस्येत्यादिश्लोकस्य व्यवहितेन सम्बन्धं वक्तुं वृत्तं कीर्त्तयति त्यक्तेति अनेन श्लोके ननैव किञ्चित् करोति सइत्यत्र कर्माभावः प्रदर्शितइति सम्बन्धः कस्य कर्माभाव प्र दर्शनमित्याशङ्कायामाह प्रारब्धेति यः प्रारब्धकर्मा सन्योवतिष्ठते तस्य कर्माभावः प्रदर्शितश्चेद्विरोधः स्यादित्याशंक्यावस्थाविशेषे तत्प्रदर्शनान्मैवमित्याह यदेति ननु ज्ञानवतः क्रियाकारकफलभावदर्शिनः कर्मपरित्यागध्रौव्यात् कर्माभाववचनमप्राप्त प्रतिषेधः स्यादित्याशंक्याह आत्मनइति लोकसंग्रहादिनिमित्तं प्रागेवोक्तमविद्या वस्थायामिव पूर्व्ववदित्युक्तं एवं वृत्तमनूद्योत्तरश्लोकमवतारयति यस्येति यथोक्तस्या पिविद्यावतो मुक्तस्य भगवत्प्रीत्यर्थं कर्मानुष्ठानोपलम्भात्ततो बन्धारम्भः सम्भाव्येतेत्याशं क्याह यज्ञायेति धर्माधर्मादीत्यादिशब्देन रागद्वेषादिसंग्रहः तस्य बन्धनत्वं करणव्यु त्पत्त्या प्रतिपत्तव्यं यज्ञनिर्व्वर्त्यर्थं यज्ञशब्दितस्य भगवतो विष्णोर्नारायणस्य प्रीतिसम्प त्त्यर्थमिति यावत् ज्ञानमेवाञ्छतो ज्ञानस्य प्रतिबन्धकं कर्म परिशङ्कितं परिहरति कर्म्मेति समग्रं सत्यज्ञीस्तत्व्याचष्टे सहेत्यादिना २३

भाषा अनुवाद ।

और भी कहते हैं कि गतसंगस्य कहे जिसका देह गेह औ विषयसे संग आसक्ति चलीगई औ कामक्रोधसे मुक्त कहे छूटगया है और चित्त ज्ञानरूप परब्रह्म में स्थित है ऐसे गुणों से युक्त मनुष्य के यज्ञ रक्षार्थ किम्वा लोकशिक्षार्थ या शरीरयात्रार्थ अथवा भगवदाराधनार्थ कियेहुये सम्पूर्ण कर्म वासना समेत विलीन होजाते हैं २३

ब्रह्मार्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतं ब्रह्मैवतेनगन्तव्यंब्रह्मकर्मसमाधिना २४

## शाङ्करभाष्यम्।

यद्वविर्दुह्यागृह्यमाणंतद्ब्रह्मैवास्यतथाब्रह्माग्नाविति समस्तं पदमग्निरपिब्रह्मैव यत्रहूयते ब्रह्मणाकर्त्रा ब्रह्मैवकर्त्तेत्यर्थःयत्तेनहुतं हवनक्रियापितत् ब्रह्मैव यत्तेनगन्तव्यंफलं तदपिब्रह्मैवब्रह्मकर्मसमाधिनाब्रह्मैवकर्मब्रह्मकर्मतस्मिन्समाधिर्यस्यसब्रह्मकर्मसमाधिस्तेनब्रह्मकर्मसमाधिनाब्रह्मैवगन्तव्यंलोकसंग्रहचिकीर्षुणापिक्रियमाणंकर्मपरमार्थतोऽकर्म ब्रह्मबुद्ध्युपमर्दितत्वात्तदेवंसति निवृत्तकर्मणोऽपिसर्वकर्मसंन्यासिनःसम्यग्दर्शनस्तुत्यर्थंयज्ञत्वसम्पादनंज्ञानस्य सुतरामुपपद्यते यदर्पणाद्यधियज्ञेप्रसिद्धंतदस्याध्यात्मब्रह्मैवपरमार्थदर्शिनइति अन्यथा

## स्वामिकृतटीका

किञ्चगतेति गतसङ्गस्यनिःकामस्यरागादिभिर्मुक्तस्यज्ञानेऽवस्थितं चेतोयस्य यज्ञायपरमेश्वराराधनार्थंकर्मचरतः सतः समग्रंसवासनंकर्मप्रविलीयते अकर्मभावमाप्नोति आरूढयोगपदेयज्ञाययज्ञरक्षणार्थंलोकसंग्रहार्थंकर्मकुर्वतइत्यर्थः २३

## भाषा अनुवाद।

जोयहशङ्काकरोकि धर्मशास्त्रतोवेदकाअर्थहीहै औतिसमेलिखतेहैं किनाभुक्तंक्षीयतेकर्म अर्थात बिनाभोगकियेकर्मक्षीणनहीहोता कर्मकाफलभोगनाहींपड़ताहै तोइसपरकरतेहैं किसम्पूर्णक्रियाऔकारकतथाफलरूपजोकुछहैतहै सोसबब्रह्ममात्र कहेब्रह्मछोड़औरकुछनहीं है ऐसेज्ञानवानब्रह्मज्ञानीब्रह्मरूपपुरुषके यावतकर्मविलीनहोजातेहैं इसमेकुछसन्देहनहीं सोईउपनिषदमेकहाहै किब्रह्मविदोब्रह्मैवसर्वक्रियाकारकफलजातं भवति सोईकहतेहैं किब्रह्मकेअर्थऔरब्रह्महीहवि तथाब्रह्मरूपअग्निमेंब्रह्महीनेदियाहै इसप्रकारजोजानताहै अर्थात् होमअग्निश्रुवाहविकर्त्ताक्रियाघृतआदिसबसाग्रीऔर जिसकोदियाजाययहसबजोहै सोब्रह्मव्यतिरेककहेबिनाऔरनहीं है ब्रह्मकर्ममेहै समाधि कहेचित्तवृत्ति जिसकी सोअवश्यब्रह्मकोप्राप्तहोताहै जैसेइनकर्मोंकीकर्ममेगिनती नहीं तैसेहीभगवतआराधनकर्मकोभी कर्ममेगणानाहीं है ऐसेकर्मजोहैं सोअकर्महीं हैं फेरिइनकाफलभोगनाकहांहै औरजोफलहै तो ब्रह्मयाभगवतप्राप्तिरूपहीहै औरदूसरानहीं २४

## शाङ्करभाष्यं

सर्वस्यब्रह्मत्वेऽर्पणादीनामेवविशेषतोब्रह्म वाभिधानमनर्थकंस्यात्  तस्माद्ब्रह्मैवेदं
सर्वमित्यभिजानतःविदुषः  सर्वकर्माभावःकारकबुद्ध्यभावाच्च नहि कारकबुद्धिर
हितं यज्ञाख्यंकर्मदृष्टंसर्वमेवाग्निहोत्रादिकंकर्मशब्दसमर्पितदेवताविशेषसम्प्रदा
नादिकारकबुद्धिमत्कर्त्रभिमानफलाभिसन्धिमच्चदृष्टं नोपमृदितक्रियाकारककर्म
फलभेदबुद्धिमत्कर्तृत्वाभिमानफलाभिसन्धिरहितञ्चइदन्तुब्रह्मबुद्ध्युपमृदितार्पणा
दिकारकक्रियाफलभेदबुद्धिमत्कर्मातोऽकर्मैवतत् तथाचदर्शितंकर्मण्यभिप्रवृत्तोऽपि
नैवकिञ्चित्करोति सः गुणागुणेषुवर्त्तन्तेनैवकिञ्चित्करोमीति युक्तोमन्येत तत्त्व
विदित्यादिभिस्तथाचदर्शयन्तत्रतत्रक्रियाकारकफलभेदबुद्ध्युपमर्द्दं करोति दृष्टा
चकामाग्निहोत्रादौ कामोपमर्द्देनकाम्याग्निहोत्रादिहानिस्तथामतिपूर्वकत्वादी
नांएवम्विधेनकारकात्मनांकर्म्मणांकार्य्यविशेषस्यारब्धत्वंदृष्टं तथेहापिब्रह्मबुद्ध्युपमृ
दितार्पणादिकारकक्रियाफलभेदबुद्धेर्बाह्यचेष्टामात्रेणकर्मापिविदुषोऽकर्म सम्पद्य
तेऽतउक्तं  समग्रंप्रविलीयतइति  अत्रकेचिदाहुर्यद्ब्रह्मतदर्पणादीनिब्रह्मैवकि
लार्पणादिना पञ्चविधेनकारकात्मनाव्यवस्थितंसत्तदेवकर्मकरोति तत्रनार्पणादि
बुद्धिर्निवर्त्ततेकिन्त्वर्पणादिषुब्रह्मबुद्धिराधीयते यथाप्रतिमादौविष्ण्वादिबुद्धिर्यथाच
नामादौ  ब्रह्मबुद्धिरेवंसत्यमेवमपिस्याद्यदिज्ञानयज्ञस्तुत्यर्थंप्रकरणंनस्यात् अत्र
तुसम्यग्दर्शनंज्ञानयज्ञशब्दितमनेकान्यज्ञशब्दितान्क्रियाविशेषानुपन्यस्यश्रेयान
द्रव्यमयाद्यज्ञात्ज्ञानयज्ञइति ज्ञानंस्तौति अत्रच समर्थमिदंवचनं ब्रह्मार्पणमि
त्यादिज्ञानस्ययज्ञत्वसम्पादनेअन्यथासर्वस्य ब्रह्मत्वेऽर्पणादीनामेवविशेषतोब्रह्मत्वा
भिधानमनर्थकंस्यात्  येत्वर्पणादिषुप्रतिमायांविष्णुदृष्टिवत्ब्रह्मदृष्टिःक्षिप्यतेना
मादिष्विव चेतिब्रुवतेनते पांब्रह्मविद्योक्तेह  विवक्षितास्यादर्पणादिविषयत्वात्
ज्ञानस्य नचदृष्टिसम्पादनज्ञानेनमोक्षफलं प्राप्यतेब्रह्मैवतेनगन्तव्यमिति चोच्यते
विरुद्धञ्चसम्यग्दर्शनमन्तरेणमोक्षफलंप्राप्यतइति प्रकृतविरोधञ्चसम्यग्दर्शनञ्च
प्रकृतं  कर्मण्यकर्मयःपश्येदित्यत्रान्तेचसम्यग्दर्शनंतस्यैवोपसंहारात् श्रेयान्द्रव्य
मयाद्यज्ञात्  ज्ञानयज्ञःपरन्तप ज्ञानंलब्ध्वापरांशान्तिमित्यादिनासम्यग्दर्शनस्तु
तिमेव  कुर्वन्नुपक्षीणोऽध्यायः  तत्राकस्मादर्पणादौब्रह्मदृष्टिरप्रतिमायामिवविष्णु
दृष्टिरुच्यत इत्यनुपपन्नं तस्माद्यथाव्याख्यातार्थ एवायंश्लोकः  २४

## आनन्दगिरिकृतटीका।

नाभुक्तं क्षीयते कर्म्मेति स्मृतिमाश्रित्य शङ्कते कस्मादिति समस्तस्य क्रियाकारकफलात्मकस्य द्वैतस्य ब्रह्ममात्रत्वेन बाधितत्वात् ब्रह्मविदो ब्रह्ममात्रस्य कर्म्म प्रविलीयते सर्व्वमिति युक्तमित्याह उच्यत इति ब्रह्मविदो ब्रह्मैव सर्व्वं क्रियाकारकफलजातं द्वैतमित्यत्र हेतुत्वेनानन्तरश्लोकमवतारयति यत इति अर्पणशब्दस्य करणविषयत्वं दर्शयन्नर्पणं ब्रह्मेति पदद्वयपक्षे सामानाधिकरण्यं साधयति येनेति यद्रजतं सा शुक्तिरितिवत् बाधायामिदं सामानाधिकरण्यमित्याह तस्येति तत्र दृष्टान्तमाह यथेति उक्तेऽर्थे पदद्वयमवतारयति तदुच्यत इति उक्तमेवार्थं स्पष्टयति यथा यदिति समाससंख्यां व्यावर्त्तयति ब्रह्मेति पदद्वयपक्षे विवक्षितमर्थं कथयति यदर्पणेति ब्रह्म हविरिति पदद्वयमवतार्य्य व्याचष्टे ब्रह्मेत्यादिना यदर्पणबुद्ध्या गृह्यते तद्ब्रह्मविदो ब्रह्मैवेति यथोक्तं तथेहापीत्याह तथेति ब्रह्मेति षष्ठी ब्रह्मविदमधिकरोति पूर्व्ववदसमासमाशंक्य व्यावर्त्तयन् पदान्तरमवतार्य्य व्याकरोति तथेति प्रागुक्तासमासवदिति व्यतिरेकः तत्र विवक्षितमर्थमाह अग्निरपीति ब्रह्मणेति पदस्याभिमतमर्थमाह ब्रह्मणेति कर्त्रा हूयत इति सम्बन्धः कर्त्ता ब्रह्मणः सकाशाद्व्यतिरिक्तो नास्तीत्येतदभिमतमित्याह ब्रह्मैवेति हुतमित्यस्य विवक्षितमर्थमाह यत्तेनेति ब्रह्मैव तेनेत्यादिभागं विभजते ब्रह्मैवेत्यादिना ब्रह्मकर्म्मेत्याद्यवतार्य्य व्याकरोति ब्रह्मेति कर्म्मत्वं ब्रह्मणो ज्ञेयत्वात् प्राप्यत्वाच्च प्रतिपत्तव्यं एवं ब्रह्मार्पणमन्त्रस्य अक्षरार्थमुक्त्वा तात्पर्य्यार्थमाह एवमिति निवृत्तकर्म्मणं सन्यासिनं प्रतिकथमस्य प्रवृत्तिरित्याशंक्याह निवृत्तेति यथावाह्ययज्ञानुष्ठानासमर्थस्याज्ञस्य सङ्कल्पात्मकयज्ञ दृष्टस्तथा ज्ञानस्य यज्ञत्वसम्पादनं स्तुत्यर्थं सुतरामुपपद्यते तेन स्तुतिलाभात् कल्पनायाः स्वाधीनत्वाद्वेत्यर्थः ज्ञानस्य यज्ञत्वसम्पादनमित्यभिनयति यदर्पणादीति केन प्रमाणेनात्मयज्ञत्वसम्पादनमवगतमित्याशंक्य अर्पणादीनां विशेषतो ब्रह्मत्वाभिधानानुपपत्तेरित्याह अन्यथेति ज्ञानस्य यज्ञत्वे सम्पादिते फलितमाह तस्मादिति आत्मैवेदं सर्व्वमित्यात्मव्यतिरेकेण सर्व्वस्यावस्तुत्वं प्रतिपद्यमानस्य कर्म्माभावे हेत्वन्तरमाह कारकेति कारकबुद्धेस्त्वभिमानस्याभावेऽपि किञ्चिदिति कर्म्म न स्यादित्याशंक्याह नहीति उक्तमेवान्वयव्यतिरेकाभ्यां द्रढयति सर्व्वमेवेति इन्द्रायेत्यादिना शब्देन समर्पितो देवताविशेषः सम्प्रदानं कारकमादिशब्दाद्दध्यादिकरणकारकं तद्विषयबुद्धिमत्कर्त्ताऽस्मीत्यभिमानपूर्व्वकं मोक्षफलमस्येति फलाभिसन्धिमच्च कर्म्म दृष्टमिति योजना

## आनन्दगिरिकृतटीका

अन्वयमुक्त्वाव्यतिरेकमाह नेत्यादिना उपमृदिता क्रियादिभेदविषया बुद्धिर्यस्य तत्कर्म्म तथाकर्त्तृत्वाभिमानपूर्व्वको मोक्षेफलमस्येतियोभिसन्धिस्तेनरहितञ्चन कर्मदृष्टमित्यन्वयः तथापिब्रह्मविदोभासमानकर्म्माभावेकिमायातमित्याशंक्याह इदमिति यदिदंब्रह्मविदोदृश्यमानंकर्म्मतद्ब्रह्मस्मिब्रह्मेतिबुद्ध्यानिराकृतकारकादिभेदविषयबुद्धिमदतस्तकर्म्मैवनभवतितत्त्व ज्ञानेसति व्यापकंकारकादिव्यावर्त्तमानंव्याप्यंकर्म्मापिव्यावर्त्तयति तत्त्वविदःशरीरादिचेष्टाकर्म्माभावःकर्मव्यापकरहितत्वात् सुषुप्तिचेष्टावदित्यर्थः ज्ञानवतोदृश्यमानंकर्म्माकर्मैवेत्यत्रभगवदनुमतिमाह तथाचेति ब्रह्मविदोदृष्टंकर्मनास्तीत्युक्तेपितत्कारणानुपमर्द्दात् पुनर्भविष्यतीत्याशंक्याह तथाचदर्शयन्निति अविद्वानिव विद्वानपिकर्मणिप्रवर्त्तमानोदृश्यतेतथापितस्यकर्माकर्मैवेत्यत्र दृष्टान्तमाह दृष्टाचेति विद्वत्कर्मापिकर्मत्वाविशेषादितरकर्मवत् फलारम्भकमित्यपिशङ्कानयुक्तेत्याह तथेति इदंकर्मैवकर्त्तव्यमस्यचफलंभोक्तव्यमिति मतिस्तत्पूर्व्वकान्यतत्पूर्वकाणिचकर्म्माणितेषामवान्तरभेदसंग्रहार्थमादिपदंदार्ष्टान्तिकमाह तथेति सप्तम्याविद्वत्प्रकरणंपरामृष्टंषष्ठ्यौसमानाधिकरणेउक्तेऽर्थेपूर्व्ववाक्यमनुकूलयति अतइति ब्रह्मार्पणमन्त्रस्यस्वव्याख्यानमुक्त्वास्वयुथ्यव्याख्यानमनुवदति अत्रेति प्रसिद्धोद्देशेनाप्रसिद्धविधानस्यन्याय्यत्वादप्रसिद्धोद्देशेनप्रसिद्धविधानंकथमित्याशंक्याह ब्रह्मैवेति किलेत्यस्मिन्व्याख्यानेसिद्धान्तिनोऽसंप्रतिपत्तिंसूचयति कर्त्तृकर्मकरणसम्प्रदानाधिकरणरूपेणपञ्चविधेनब्रह्मैवव्यवस्थितंकर्मकरोतीत्यङ्गीकारात्तदप्रसिद्धाभावात्तदनुवादेनार्पणादिष्वविरुद्धस्तद्दृष्टिविधिरित्यर्थः दृष्टिविधिपक्षेसिद्धान्ताद्विशेषंदर्शयति तत्रेति अर्पणादिषुकर्त्तव्यांब्रह्मबुद्धिंदृष्टान्ताभ्यांस्पष्टयति यथेत्यादिना दृष्टिविधानेत्विष्टयदृष्टेमानसक्रियात्वेनसम्यग्ज्ञानत्वाभावात् प्रकरणभङ्गःस्यादित्यभिप्रेत्यपरिहरति सत्यमेवमिति विधित्सितदृष्टिस्तुतिपरमेवप्रकरणं नज्ञानस्तुतिपरमित्याशंक्यप्रकरणपर्य्यालोचनयाज्ञानस्तुतिरेवात्रप्रतिभातीति प्रतिपादयति अत्रत्विति किञ्चब्रह्मार्पणमन्त्रस्यापिसम्यग्ज्ञानस्तुतौ सामर्थ्यंप्रतिभातीत्याह अत्रचेति नन्वर्पणादिषुब्रह्मदृष्टिंकुर्व्वतामपिब्रह्मविद्यैवात्रविवक्षितेति पक्षभेदासिद्धिरितिचेत्तत्राह येत्विति यथाब्रह्मदृष्यानामादिकमुपास्यंतथार्पणादिषुब्रह्मदृष्टिकरणेसत्यर्पणादिकमेवप्राधान्येनज्ञेयमिति ब्रह्मविद्यायथोक्तेनवाक्येनविवक्षिता नस्यादित्यर्थःकिञ्चब्रह्मवतेनगन्तव्य

दैवमेवापरेयज्ञंयोगिनःपर्य्युपासते ब्रह्माग्नावपरेयज्ञंयज्ञेनैवोपजुह्वति २५

## आनन्दगिरिकृतटीका।

मिति ब्रह्मप्राप्तिफलाभिधानादपिदृष्टिविधानमश्लिष्टमित्याह नचेति नचार्पणाद्या लम्बनाद्दृष्टिर्ब्रह्मप्रापयत्यप्रतीकालम्बनान्नयतीति न्यायविरोधादितिभावः दृष्टि विधानेपिनियोगवलाद्देवस्वर्गवदृष्टोमोक्षोभविष्यतीत्याशंक्याह विरुद्धञ्चेति ज्ञा नादेवकैवल्यसुक्तामार्गान्तराभवादिन्याश्रुत्याविरुद्धंमोचस्यअविद्यानिवृत्तिलक्षण स्यदृष्टस्य नैयोगिकत्ववचनमित्यर्थः दृष्टियोगान्मोक्षोभवति इत्येतत्करणाविरु द्धञ्चेत्याह प्रकृतेति तदेवप्रपञ्चयति सम्यग्दर्शनञ्चेति अन्तेच सम्यग्दर्शनंप्रकृ तमिति सम्बन्धः तत्रहेतुः तस्यैवेति सम्यग्ज्ञानेनोपक्रम्यतेनैवोपसंहारेपिम ध्येकिञ्चिदन्यदुक्तमिति प्रकरणस्यातद्विषयत्वमित्याशंक्याह श्रेयानिति प्रकरणे सम्यग्ज्ञानविषयेसत्यनुपपन्नोदर्शनविधिरितिफलितमाह तत्रेति ब्रह्मार्पणमन्त्रे परकीयव्याख्यानासम्भवेस्वकीयव्याख्यानंव्यवस्थितमित्युपसंहरति तस्मादिति २४

## स्वामिकृतटीका।

तदेवंपरमेश्वराराधनलक्षणंकर्मज्ञानहेतुत्वेनवन्धकत्वाभावादकर्मैव आरू ढावस्थायान्तु अकर्त्रात्मज्ञानवाधितत्वात् स्वाभाविकमपिकर्मअकर्मैवेति कर्मण्य कर्मयःपश्येदित्यनेनोक्तः कर्मप्रविलयःप्रपञ्चितः इदानींकर्मणितदङ्गेषुचब्रह्मैवा नुस्यूतं पश्यतः कर्मप्रविलयमाह ब्रह्मार्पणमिति अर्प्यतेऽनेनेत्यर्पणंजुह्वादितद पिब्रह्मैव अर्प्यमाणहविरपिघृतादिकंब्रह्मैव ब्रह्मवाग्निस्तस्मिन्ब्रह्मणाकर्त्राहुतं होमोऽग्निश्चकर्त्ताचक्रियाचब्रह्मैवेत्यर्थः एवंब्रह्मण्येवकर्मात्मकेसमाधिश्चित्तैकाग्र्यं यस्य तेनब्रह्मैवगन्तव्यंप्राप्यंनतु फलान्तरमित्यर्थः २४

## भाषाअनुवाद।

पर्व्वोक्तप्रकारयज्ञरूपसेसर्व्वतसम्पादित कहे प्रसिद्धकरकेकहाजोब्रह्मदर्शन रूपज्ञान सोसकलयज्ञोंकाहेतुकहेउसीकेवास्तेसवयज्ञोंकीजातीहैं अतएवश्रेष्ठ है इसीसेअवइसज्ञानकीप्रसंशाकरके अधिकारीकेभेदसेज्ञानकेउत्पत्तिकीउपा यरूपसवयज्ञोंको ८ स्लोकसेकहतेहैं कितनेकर्मयोगीलोग ब्रह्मबुद्धिरहित हो इन्द्रवरुणआदिदेवतोंकोयज्ञकरिकेवड़ीश्रद्धासेपूजते हैं और कितनेज्ञान योगीब्रह्मरूपअग्निमेंब्रह्मयज्ञरूपउपायसे यज्ञआदिसकलकर्मरूपब्रह्ममेंब्रह्मा र्पणविधिसे अर्पणकहैंसवकर्मलीनकरतेहैं सोईब्रह्मयज्ञ है यहजानो २५

## शाङ्करभाष्यं

तत्र अधुना सम्यग्दर्शनस्य यज्ञत्वं सम्पाद्य तत्स्तुत्यर्थमन्येपि यज्ञा उपक्षिप्यन्ते दैवमेवेत्यादिना दैवमेव देवा इज्यन्ते येन यज्ञेनासौ दैवो यज्ञस्तमेवापरे यज्ञं योगिनः कर्मिणः पर्य्युपासते कुर्व्वन्तीत्यर्थः ब्रह्माग्नौ सत्यं ज्ञानमनन्तं ब्रह्म विज्ञानमानन्दं ब्रह्म यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्व्वान्तर इत्यादिवचनोक्तमशनायादिसर्व्वसंसारधर्म्मवर्जितं नेति नेतीति निरस्ताशेषविशेषं ब्रह्मशब्देनोच्यते ब्रह्म च तदग्निश्च स होमादिकरणत्वविवक्षया ब्रह्माग्निस्तस्मिन् ब्रह्माग्नावपरेऽन्ये ब्रह्मविदो यज्ञं यज्ञशब्दवाच्य आत्मा आत्मनामसु यज्ञशब्दस्य पाठात् तमात्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तमध्यस्तसर्व्वोपाधिधर्म्मकमाहुतिरूपं यज्ञेनैवात्मनैवोक्तलक्षणेनोपजुह्वति प्रक्षिपन्ति सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन् होमस्तं कुर्व्वन्ति ब्रह्मात्मैकत्व दर्शननिष्ठाः संन्यासिन इत्यर्थः २५

## आनन्दगिरिकृतटीका।

ज्ञानस्य यज्ञत्वं संपाद्य पूर्व्वश्लोके स्थिते सत्यधुना तस्यैव ज्ञानस्य स्तुत्यर्थं यज्ञान्तरनिर्द्देशार्थमुत्तरग्रन्थप्रवृत्तिरित्याह तत्रेति सर्व्वस्य श्रेयःसाधनस्य मुख्यगौणवृत्तिभ्यां यज्ञत्वं दर्शयन् आदौ यज्ञद्वयमादर्शयति दैवमेवेति प्रतीकमादाय दैवयज्ञं व्याचष्टे देवा इति सम्यग्ज्ञानाख्यं यज्ञं विभजते ब्रह्माग्नाविति तत्र ब्रह्मशब्दार्थं श्रुत्यवष्टम्भेन स्पष्टयति सत्यमिति यदनृतमनन्तविपरीतमपरिच्छिन्नं ब्रह्म तस्य परमानन्दत्वेन परमपुरुषार्थत्वमाह विज्ञानमिति तस्य ज्ञानाधिकरणत्वेन ज्ञानत्वमौपचारिकमित्याशंक्याह तत्साक्षादिति जीवब्रह्मविभागे कथमपरिच्छिन्नत्वमित्याशंक्य विशिनष्टि य आत्मेति परस्यैवात्मत्वं सर्व्वस्मादेहादेरव्याकृतान्तादान्तरत्वेन साधयति सर्व्वान्तर इति विधिमुखं सर्व्वमेवोपनिषद्वाक्यं ब्रह्मविषयमादिशब्दार्थः निषेधमुखं

## स्वामिकृतटीका।

तदेवं यज्ञत्वेन सम्पादितं सर्व्वत्र ब्रह्मदर्शनलक्षणं ज्ञानं सर्व्वयज्ञोपायप्राप्यत्वात् सर्व्वयज्ञेभ्यः श्रेष्ठमित्येवं स्तोतुमधिकारिभेदेन ज्ञानोपायभूतान् बहून् यज्ञानाह दैवमित्यादिभिरष्टभिः देवा इन्द्रवरुणादय इज्यन्ते यस्मिन् एवकारेणेन्द्रादिषु ब्रह्मबुद्धिराहित्यं दर्शितं तं दैवं यज्ञमपरे कर्म्मयोगिनः पर्य्युपासते श्रद्धयानुतिष्ठन्ति अपरे तु ज्ञानयोगिनो ब्रह्मरूपेऽग्नौ यज्ञेनैवोपायेन ब्रह्मार्पणमित्याद्युक्तप्रकारेण यज्ञमुपजुह्वति यज्ञादि सर्व्वकर्म्माणि प्रविलापयन्तीत्यर्थः सोऽयं ज्ञानयज्ञः २५

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति २६

शाङ्करभाष्यं

सोऽयंसम्यग्दर्शनलक्षणोयज्ञोदैवयज्ञादिषुयज्ञेषुप्रक्षिप्यते ब्रह्मार्पणमित्यादिश्लोकैःश्रेयान्द्रव्यमयात्यज्ञात् ज्ञानयज्ञःपरन्तप इत्यादिनास्तुत्यर्थं श्रोत्रादीनिति श्रोत्रादीन्द्रियाण्यन्येयोगिनः संयमाग्निषुप्रतीन्द्रियंसंयमोभिद्यतइति बहुवचनं संयमाएवाग्नयस्तेषु जुह्वतीन्द्रियसंयममेवकुर्वन्तीत्यर्थः शब्दादीन्विषयानन्ये इन्द्रियाग्निषुजुह्वति इन्द्रियाण्येवाग्नयस्तेष्विन्द्रियाग्निषुजुह्वति श्रोत्रादिभिरविरुद्धविषयग्रहणंहोमंमन्यन्ते २६

आनन्दगिरिकृतटीका

ब्रह्मविषयमुपनिषद्वाक्यमशेषमेवार्थतो निबध्नाति अशनायेति ब्रह्मण्यग्निशब्दप्रयोगेनिमित्तमाह सहोमेति बुद्ध्यारूढतयासर्व्वस्यवाह्येतुल्यादिति द्रष्टव्यं यज्ञशब्दस्यात्मनित्वंपदार्थेप्रयोगेहेतुमाह आत्मनामस्विति आधाराधेयभावेनवास्तवभेदंब्रह्मात्मनोव्यावर्त्तयति परमार्थतइति कथंतर्हि होमो नहि तस्यैवतत्रहोमःसम्भवतीत्याशंक्याह बुद्ध्यादीति उपाधिसंयोगफलंकथयति अध्यस्येति उपाध्यध्यासद्वारातद्धर्माध्यासेप्राप्तमर्थंनिर्द्दिशति आहुतीति इत्थंभूतलक्षणात्तृतीयामेव व्याकरोति उक्तेति अशनायादिसर्व्वसंसारधर्म्मवर्ज्जितेननिर्व्विशेषेणस्वरूपेणेति यावत् आत्मनोब्रह्मणिहोममेवप्रकटयति सोपाधिकस्येति परइत्यस्यार्थंस्फोरयति ब्रह्मेति २५

स्वामिकृतटीका ।

श्रोत्रादीनीति अन्येनैष्टिकाब्रह्मचारिणस्तत्तदिन्द्रियसंयमरूपेष्वग्निषुश्रोत्रादीनिजुह्वति प्रविलापयन्ति इन्द्रियाणिनिरुध्य संयमप्रधानास्तिष्ठन्तीत्यर्थः इन्द्रियाण्येवाग्नयस्तेषु शब्दादीनन्येगृहस्थाजुह्वति विषयभोगसमयेऽप्यनासक्ताःसन्तोऽग्नित्वेनभावितेष्विन्द्रियेषु हविष्ट्वेनभावितान्शब्दादीन् प्रक्षिपन्तीत्यर्थः २६

भाषा अनुवाद ।

ऐसेहीकितनेब्रह्मचारीलोग इन्द्रियोंकासंयमजोविषयोंसेरोकना सोईअग्निरूपहैतिसमेंश्रोत्रघ्राणजिह्वात्वकचक्षु इनज्ञानइन्द्रियोंकोहोमकरतेअर्थात् इन्द्रियोंकोअन्तर्मुखकरकेसंयमसेहरतेहैं और कितनेगृहस्थजवइन्द्रियरूपअग्निमेंइविरूपविषयकहेरूपरसगन्धस्पर्शशब्दसोहोमकरतेहैं तोविषयभोगसमैंमेभीअनाशक्तहोके अग्निरूपइन्द्रियोंमे रूपआदिविषयरूपघृतहोमकरतेहैं कहेदग्धकरते निरहङ्कारहोकर फलइच्छारहितहोते हैं २६

सर्व्वाणीन्द्रियकर्म्माणि प्राणकर्माणि चापरे आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते २७

शाङ्करभाष्यं।

किञ्चसर्व्वाणीति सर्व्वाणीन्द्रियकर्माणिइन्द्रियाणांकर्माणीन्द्रियकर्माणितथा प्राणकर्माणिप्राणोवायुराध्यात्मिकस्तत्कर्माण्याकुञ्चनप्रसारणादीनितानि चापरे आत्मसंयमयोगाग्नौआत्मनिसंयमआत्मसंयमः सएवयोगाग्निस्तस्मिन्नात्मसंयमयोगाग्नौजुह्वति प्रक्षिपन्ति ज्ञानाग्निदीपितेस्नेहेनेवप्रदीपिते विवेकविज्ञानेनोज्ज्वलभावमापादिते जुह्वति प्रविलापयन्ति इत्यर्थः २७

आनन्दगिरिकृतटीका।

उक्तस्यज्ञानयज्ञस्यदैवयज्ञादिषुयज्ञेषुब्रह्मार्पणमित्यादिश्लोकैरुपक्षिप्यमाणत्वंदर्शयति सोयमिति उपक्षेपप्रयोजनमाह श्रेयानिति सम्प्रति यज्ञद्वयमुपन्यस्यति श्रोत्रादीनीति वाह्यानांकरणानांमनसिसंयमस्यैकत्वात् कथंसंयमाग्निष्विति वहुवचनमित्याशंक्याह प्रतीन्द्रियमिति संयमानांप्रत्याहाराधिकरणत्वेन व्यवस्थितानांमनोरूपाणांहोमाधारत्वादग्नित्वंव्यपदिशति संयमाइति विषयेभ्योऽन्तर्व्वाह्याणीन्द्रियाणिप्रत्याहरन्तीतिसंयमयज्ञंसंक्षिप्यदर्शयति इन्द्रियेति श्रोत्रादीन्द्रियाग्निषुशब्दादिविषयहोमस्यतत्तदिन्द्रियैस्तत्तद्विषयोपभोगलक्षणस्यसर्व्वसाधारणत्वमाशंक्यप्रतिषिद्धान्वर्ज्जयित्वारागद्वेषरहितोभूत्वाप्राप्तान्विषयान्भुञ्जते तैस्तैरिन्द्रियैरिति विवक्षितंहोमंविशदयति श्रोत्रादिभिरिति २६

यज्ञान्तरंकथयति किञ्चेति इन्द्रियाणांकर्माणिश्रवणवदनादीनिआत्मनि संयमोधारणाध्यानसमाधिलक्षणः सर्व्वमपिव्यापारंनिरुध्य आत्मनिचित्तसमाधानंकुर्व्वन्तीत्याह विवेकेति २७

भाषाअनुवाद

औरवहुतेरेध्यानीपुरुष श्रोत्रादिज्ञानइन्द्रियोंके श्रवणआदिकर्मतथावाक्आदिकर्मइन्द्रियोंकेकार्य्यवचनआदि औरप्राणअपानउदानव्यानसमाननागकूर्मकृकलदेवदत्तधनञ्जय येशरीरकीदशवायुवोंकेकर्मजोवहिर्गमनादि हैं सोसव आत्मसंयमयोगअग्निमेंहोमकरतेहैं अर्थात्ध्यानकेद्वाराचित्तकीएकाग्रतारूप ज्ञानसेदीपितयोगअग्निमे होमतेलीनकरतेहैं अर्थात् ध्येयकहेध्यानकेविषयको ध्यानकेद्वाराप्रज्वलितज्ञानदीपकीप्रकाशसे वहीध्येयकहे ध्यानयोग्यब्रह्मकोअच्छीतरहजानकर औरउसीमेंमनको संयमकहेयुक्तकरिके सकलकर्मकोदूर करदेते हैं २७

द्रव्ययज्ञास्तपोयज्ञायोगयज्ञास्तथापरे स्वाध्यायज्ञानयज्ञाश्च यतयःसंशितव्रताः२८

## शाङ्करभाष्यम् ।

द्रव्येति द्रव्ययज्ञास्तीर्थेषुद्रव्यविनियोगंयज्ञवुद्ध्याकुर्व्वन्तियेते द्रव्ययज्ञास्तपोयज्ञास्तपोयज्ञोयेषांतपस्विनांते तपोयज्ञायोगयज्ञाःप्राणायामप्रत्याहारादिलक्षणोयोगोयज्ञोयेषांते योगयज्ञास्तथापरेस्वाध्यायज्ञानयज्ञाश्चस्वाध्यायोयथाविधिऋगाद्यभ्यासोयज्ञोयेषांते स्वाध्याययज्ञाःज्ञानयज्ञाशास्त्रार्थपरिज्ञानंयज्ञोयेषांते ज्ञानयज्ञाःस्वाध्याययज्ञाज्ञानयज्ञाश्चयतयोयतनशीलाःसंशितव्रताः सम्यक्शितानितनूकृतानितीक्ष्णीकृतानिव्रतानियेषांतेसंशितव्रताः २८

## स्वामिकृतटीका ।

किञ्चसर्व्वाणीति अपरेध्याननिष्ठावुद्धीन्द्रियाणांश्रोत्रादीनांकर्म्माणिश्रवणदर्शनादीनि कर्मेन्द्रियाणांवाक्पाण्यादीनांकर्म्माणिवचनोपादानादीनि प्राणानाञ्चदशानांकर्म्माणिप्राणस्यवहिर्गमनं अपानस्याधोगमनंव्यानस्यव्यायनाकुञ्चनप्रसारणादीनि समानस्याशितपीतादीनांसमुन्नयनं उदानस्योर्द्ध्वनयनंउद्गारेनागआख्यातः कूर्मउन्मीलनेस्मृतःकृकरःक्षुत्करोज्ञेयोदेवदत्तोविजृम्भने नजहातिमृतञ्चापि सर्व्वव्यापीधनञ्जयः इत्येवंरूपाणिजुह्वति आत्मनिसंयमोध्यानैकाग्र्यंसएवयोगःसएवाग्निस्तस्मिन् ज्ञानेनध्येयविषयेनदीपितेप्रज्वलिते ध्येयंसम्यग्ज्ञात्वा तस्मिन्मनःसंयम्य तानिसर्व्वाणिकर्म्माणि उपरमयन्तीत्यर्थः २७ किञ्चद्रव्ययज्ञाइत्यादि द्रव्यदानमेवयज्ञोयेषांतेद्रव्ययज्ञाःकृच्छ्रचान्द्रायणादितपएवयज्ञोयेषांतेतपोयज्ञाःयोगश्चित्तवृत्तिनिरोधलक्षणसमाधिःसएवयज्ञोयेषांते योगयज्ञाःस्वाध्यायेनवेदेनश्रवणमननादिनायत्तदर्थज्ञानंतदेवयज्ञोयेषांते यद्वावेदपाठयज्ञास्तदर्थज्ञानयज्ञाश्चेति द्विविधायतयःप्रयत्नशीलाःसम्यक् शितंनिशितंतीक्ष्णीकृतंव्रतंयेषांते २८

## भाषा अनुवाद ।

औरलोकमेंकितनेपुरुष द्रव्यदानहीको परमयज्ञजानिद्रव्यदानरूपयज्ञ करते औरवहुतेरेमनुष्यकृच्छ्रचान्द्रायणतथाद्वादशवार्षिकव्रतआदिकमे चित्त लगाय तपरूपयज्ञकरतेहैं फेरिकितनेजन योगशास्त्रोक्तनेतीधौतीऔप्राणायामआदि योगकरके चित्तवृत्तिकेवोधरूपयोगयज्ञमेतत्परहैं औरवहुतेरे वेदशास्त्रकेअध्ययनमननकोस्वकर्मजानितदर्थज्ञानहीको सर्व्वस्वमानि स्वाध्यायज्ञानरूपयज्ञकरतेहैं परन्तु जोइन्द्रीजितऔव्रतमेतत्परहैं तेई येसवयज्ञोंकोरसकते हैं२८

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे। प्राणापानगती रुद्ध्वा प्राणायामपरायणाः॥ अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति २९

## शाङ्करभाष्यं

किञ्च अपानइति अपानेऽपानवृत्तौ जुह्वतिप्रक्षिपन्तिप्राणंप्राणवृत्तिं पूरकाख्यंप्राणायामंकुर्वन्तीत्यर्थः प्राणेऽपानंतथापरेजुह्वति रेचकाख्यञ्चप्राणायामं कुर्वन्तीत्येतत् प्राणापानगतीरुद्ध्वा मुखनासिकाभ्यांवायोर्निर्गमनंप्राणस्यगतिस्तद्विपर्य्ययेनाधोगमनमपानस्यते प्राणापानगती एतेरुद्ध्वानिरुध्यप्राणायामपरायणाःप्राणायामतत्पराःकुम्भकाख्यंप्राणायामंकुर्वन्तीत्यर्थः किञ्चअपरइति अपरे नियताहारा नियतः परिमितः आहारोयेषांते नियताहाराःसन्तःप्राणान्वायुभेदान्प्राणभेदेष्वेवजुह्वति यस्ययस्यवायोर्जयःक्रियते इतरान् वायुभेदांस्तस्मिन्जुह्वति ते तत्रप्रविष्टाइवभवन्ति २९

## आनन्दगिरिकृतटीका।

यज्ञपदकमवतारयति द्रव्येतीति तत्तद्द्रव्ययज्ञान्पुरुषानुपादायविभजते तीर्थेष्विति तपस्विनांयज्ञवुद्ध्यातपोनुतिष्ठतां नियमवतांइत्यर्थः प्रत्याहारादीत्यादिशब्दे नयमनियमासनध्यानधारणासमाधयोगृह्यन्ते यथाविधिप्राङ्मुखत्वपवित्रपाणित्वाद्यज्ञविधिमनतिक्रम्येतियावत् व्रतानांतिक्ष्णीकरणमतिदृढत्वं २८

## भाषा अनुवाद।

औरकितनेहठयोगाभ्यासीमनुष्य अपानवायुमेप्राणवायुकोपूरकप्राणायामकेद्वाराखैंचिकरहोमकरतेहैं अर्थात्पूरकसमैमेप्राणअपानएककरदेतेहैं और कोईकुंभकप्राणायामसेप्राणअपानवायुकोउर्द्धअधोगमनरोंककररेचककालमेअपानवायुकोप्राणवायुमें अैंचिलेकरहोमकरतेहै लीनकरदेतेहैं अैसेही पूरककुंभकरेचककेद्वारा प्राणायाममेतत्पररहतेहैं औरकोईकोईलोगआहारघटायइन्द्रीशिथिलकरकेसोईसोईइन्द्रियवृत्तिकालयरूपहोमकरतेहैं अथवापूरकरेचकदोनोश्वासावन्दकरहंसओसोहं इसकोअनुलोमकहे उलटपुलटरूपअजपामन्त्रकेद्वारातत्त्वमसिमहावाक्यसेकथित जोतत्पद औत्वंपद तिनकेअर्थकेअनुसारब्रह्म जीवकीएकताअर्थात्सोब्रह्महमहैं औरहमसोब्रह्महै अैसीभावनाकरतेहैं औरकोईप्राणायामहींकोयज्ञकहते अर्थात् उदरकेदोभाग अन्नसे पूर्णकरिऔएकभागपानीसेपूर्णकरिऔरवायुकेसंचारार्थ चतुर्थभागखालीराखि विधिकेअनुसारपरिमितअहारीजन कुंभककेद्वाराप्राणअपानकीगतिरोधकरिप्राणदमनशीलहो सबइन्द्रियोंकोप्राणवायुमेहोमकरतेहैं अर्थात्कुंभकसेसबप्राणएकहोजातेऔरइन्द्रियगणलयकोप्राप्तहोताहै २९

## आनन्दगिरिकृतटीका ।

प्राणायामाख्यं यज्ञमुदाहरति किञ्चेति प्राणायामपरायणाः सन्तो रेचकं पूरकञ्च कृत्वा कुम्भकं कुर्व्वन्तीत्याह प्राणेति प्राणापानयोर्गती श्वासप्रश्वासौ निरुध्येति कुर्व्वन्तीत्यपेक्षायामाह किञ्चेति प्राणापानगतिनिरोधरूपं कुम्भकं कृत्वा पुनः पुनर्व्वायुजयं कुर्व्वन्तीत्यर्थः आहारस्य परिमितत्वं हितत्वमेध्यत्वोपलक्षणार्थं प्राणानां प्राणेषु होममेव विभजते यस्येति जितेषु वायुभेदेष्वजितानां तेषां होमप्रकारं प्रकटयति तेतत्नेति २६

प्रकृतान् यज्ञानुपसंहरति सर्व्वेपीति यथोक्तयज्ञनिर्व्वर्त्तनानन्तरं लौकिकमपेक्षं स्यादित्याशंक्याह एवमिति यथोक्तानां यज्ञानां मध्ये केनचिदपि यज्ञेन विशेषितस्य पुरुषस्य प्रत्यवायं दर्शयति नायमिति पादान्तरेण कथं यथोक्तयज्ञानुष्ठायिनामवशिष्टेन कालेन विहितान्नभुजां ब्रह्मप्राप्तिरित्याशंक्य मुमुक्षुत्वे सति चित्तशुद्धिद्वारेत्याह मुमुक्षवश्चेदिति तत्किमिदानीं साक्षादेव मोक्षो विवक्षितः तथाच गतिश्रुतिविरोधः स्यादित्याशंक्य गतिनिर्द्देशसामर्थ्यात् क्रममुक्तिरत्राभिप्रेतेत्याह कालातीति ३०

## स्वामिकृतटीका ।

किञ्च अपानइति अपानेऽधोवृत्तौ प्राणमूर्द्ध्ववृत्तिं पूरकेन जुह्वति पूरककाले प्राणमपानेनैकीकुर्वन्ति तथा कुम्भकेन प्राणापानयोरूर्द्ध्वाधोगती रुद्ध्वा रेचककालेऽपानं प्राणे जुह्वति एवं पूरककुम्भकरेचकैः प्राणायामपरायणा अपरेइत्यर्थः किञ्चापरेइति अपरेत्वाहारसंकोचमभ्यस्यन्तः स्वयमेव जीर्य्यमाणेष्विन्द्रियेषु तत्तदिन्द्रियवृत्तिलयं होमं भावयन्तीत्यर्थः यद्वा अपाने जुह्वति प्राणं प्राणेऽपानं तथापरइत्यनेन पूरकरेचकयोरावर्त्त्यमानयोर्हंसः सोऽहमित्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमानेनाजपामन्त्रेण तत्त्वंपदार्थैक्यं व्यतीहारेण भावयन्तीत्यर्थः तदुक्तं योगशास्त्रे सकारेण वहिर्य्याति हकारेण विशेत् पुनः प्राणस्तत्र स एवाहमहं स इति चिन्तयेदिति प्राणापानगती रुद्ध्वेत्यनेन श्लोकेन प्राणायामयज्ञा अपरे कथ्यन्ते तत्रायमर्थः द्वौ भागौ पूरयेदन्नैर्जलैरेकं प्रपूरयेत् मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत् इत्येवमादिवचनोक्तनियतआहारो येषां ते कुम्भकेन प्राणापानगती रुद्ध्वा प्राणसंयमनपरायणाः सन्तः प्राणानिन्द्रियाणि प्राणेषु जुह्वति कुम्भके नहि सर्व्वे प्राणा एकीभवन्ति तत्रैव लीयमानेष्विन्द्रियेषु होमं भावयन्तीत्यर्थः तदुक्तं योगशास्त्रे यथा यथा सदाभ्यासान्मनसः स्थिरता भवेत् वायुवाक्कायदृष्टीनां स्थिरता च तथा तथेति २६

सर्वेऽप्येते यज्ञविदो यज्ञक्षयितकल्मषाः यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनं ३०
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ३१

## शाङ्करभाष्यम्

सर्व्व इति सर्वेऽप्येते यज्ञविदो यज्ञक्षयितकल्मषाः यज्ञैर्यथोक्तैः क्षयितो नाशितो कल्मषो येषां ते यज्ञक्षयितकल्मषाः एवं यथोक्तान् यज्ञान् निर्व्वर्त्य यज्ञशिष्टामृतभुजो यज्ञानां शिष्टं यज्ञविष्टं यज्ञशिष्टञ्च तदमृतञ्च यज्ञशिष्टामृतं तत् भुञ्जत इति यज्ञशिष्टामृतभुजो यथोक्तान् यज्ञान् कृत्वा तच्छिष्टेन कालेन यथाविधिचोदितमन्नममृताख्यं भुञ्जत इति यज्ञशिष्टामृतभुजो यान्ति गच्छन्ति ब्रह्म सनातनं चिरन्तनं मुमुक्षवश्चेत् कालातिक्रमापेक्षयेति शब्दसामर्थ्यात् गम्यते ३०

नायमिति नायं लोकः सर्व्वप्राणिसाधारणोऽप्यस्ति यथोक्तानां यज्ञानामेकोऽपि यज्ञो यस्य नास्ति सोऽयज्ञस्तस्य कुतोऽन्यो विशिष्टसाधनसाध्यः कुरुसत्तम ३१

## स्वामिकृतटीका ।

तदेवमुक्तानां द्वादशानां यज्ञविदां फलमाह सर्व्वेऽप्येते इति यज्ञान् विन्दन्ति लभन्त इति यज्ञविदो यज्ञज्ञा इति वा यज्ञैः क्षयितं नाशितं कल्मषं यैः यज्ञान् कृतावशिष्टकालेऽनिषिद्धमन्नममृतरूपं भुञ्जत इति तथा ते सनातनं नित्यं ब्रह्म ज्ञानद्वारेण प्राप्नुवन्ति ३०

तदकरणे दोषमाह नायमिति अयमल्पसुखोऽपि मनुष्यलोको अयज्ञस्य यज्ञानुष्ठानरहितस्य नास्ति कुतोऽन्यो बहुसुखः परलोकः अतो यज्ञाः सर्व्वथा कर्त्तव्या इत्यर्थः ३१

## भाषा अनुवाद ।

एही पूर्व्वोक्त बारह प्रकार के यज्ञकारीयों को प्राप्य फल कहते हैं कि ऐसी यज्ञरूप क्रिया जिनको जानी है और इन यज्ञों से जिनके पाप क्षय होगये हैं और यज्ञ समाप्त करपीछे शास्त्रविहित अमृत रूप अन्न भोजन करते हैं फेर तत्त्वज्ञान के द्वारा नित्य सत्य ब्रह्म को प्राप्त होते हैं सो इहां कहाकि सब ये यज्ञवित् यज्ञ से नष्ट कल्मष कहे निःपाप हो यज्ञशिष्ट अमृत भोगी सनातन ब्रह्म को जाते कहे प्राप्त होते हैं ३०

अब यज्ञ न करने में दोष कहते हैं कि देखो यज्ञ न करनेवालों को यह अल्पसुख जो मनुष्य लोक सोई नहीं मिलता है तो परलोक सुख फेरि कहां प्राप्त होना है इससे यज्ञ को निश्चय करना चाहिये कुरुसत्तम यह कैमुतिकन्याय से देखाया है ३१

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे
कर्म्मजान् विद्धि तान् सर्व्वानेवं ज्ञात्वा विमोक्ष्यसे ३२

## शाङ्करभाष्यं।

एवमिति एवंयथोक्ताबहुविधाबहुप्रकारायज्ञावितताविस्तीर्णाब्रह्मणोवेदस्य मुखेद्वारेवेदद्वारेणावगम्यमानाःब्रह्मणोमुखेवितता उच्यन्ते तद्यथावाचिहिप्राणंजुहुमइत्यादयःकर्म्मजान्कायिकवाचिकमानसकर्म्मोद्भवान्विद्धितान् सर्व्वाननात्मजान्निर्व्यापारोह्यात्माअतएवंज्ञात्वामोक्ष्यसेऽशुभात् नमद्व्यापाराइमे निर्व्यापारोऽहमुदासीनइत्येवंज्ञात्वास्मात् सम्यग्दर्शनात् मोक्ष्यसे संसारबन्धनादित्यर्थः ३२

## आनन्दगिरिकृतटीका

तृतीयंपादंव्याचष्टे नायमिति विवक्षितं कैमुतिकन्यायमाह कुतइति साधारणलोकाभावेपुनरसाधारणलोकप्राप्तिर्दूरनिरस्तेत्यर्थः यथोक्तोऽर्थेबुद्धिसमाधानं कुरुकुलप्रधानस्यअर्ज्जुनस्यअनायासलभ्यमितिवक्तुंकुरुसत्तमेत्युक्तं ३१

उक्तानांयज्ञानांवेदमूलत्वेनोत्प्रेक्ष्यानिबन्धनत्वं निरस्यति एवमिति आत्मव्यापारसाध्यत्वमुक्तकर्म्मणामाशंक्यदूषयति कर्म्मजानिति आत्मनोनिर्व्यापारत्वज्ञाने फलमाह एवमिति कथंयथोक्तानांयज्ञानांवेदस्यमुखेविस्तीर्णत्वमित्याशंक्याह वेदद्वारेणेति आत्मनोऽवगम्यमानत्वमेवोदाहरति तद्यथेति एतद्ब्रह्मवैतत्पूर्व्वेविद्वांसआङ्गिरिसप्रक्रमाध्ययनाद्यादित्यहेत्वाकाङ्क्षायामुक्तंवाचिहीति ज्ञानयज्ञिम

## स्वामिकृतटीका

ज्ञानयज्ञंस्तोतुमुक्तान्यज्ञानुपसंहरति एवंबहुविधाइति ब्रह्मणोवेदस्यमुखे वितता वेदेनसाक्षाद्विहिता इत्यर्थः तथापितान्सर्व्वानवाङ्मनःकायकर्म्मजनितानात्मस्वरूपसंस्पर्शरहितान्विद्धिजानीहि आत्मनःकर्म्मणोऽगोचरत्वात् एवंज्ञात्वाज्ञाननिष्ठःसन् संसाराद्विमुक्तोभविष्यसि ३२

## भाषा अनुवाद।

ज्ञानयज्ञकीप्रशंसाकरनेकेअर्थअबसब यज्ञोंकीचर्चाकरिन्यूनअधिकतारतम्य देखावतेहुये कहतेहैं किनानाप्रकारकोयज्ञोंवेदरूपमुखसेप्रत्यक्षविहित हैं परतौभी मनवचनशरीरकेकर्म्मसेउत्पन्नजोयज्ञहैं सकलआत्मस्वरूपस्पर्शसेरहितजानो अर्थात् उनसेआत्मज्ञाननहींहोता क्योंकिआत्माकर्म्मोंकाअगोचरकहे कर्म्मप्राप्यनहीं है इससेतुमज्ञाननिष्ठहोय संसारसेमुक्त होउगे यहजानो ३२

श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परन्तप सर्व्वंकर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते ३३

## शाङ्करभाष्यं

ब्रह्मार्पणमित्यादिश्लोकेन सम्यग्दर्शनस्ययज्ञत्वं सम्पादितं यज्ञाश्चअनेकविधा उपदिष्टास्तैःसिद्धपुरुषार्थप्रयोजनैर्ज्ञानंस्तूयते कथंश्रेयानिति श्रेयान्द्रव्यमयात्द्रव्यसाधनसाध्यात् यज्ञात् ज्ञानयज्ञःहेपरन्तपद्रव्यमयोहि यज्ञःफलस्यारम्भको नज्ञानयज्ञःफलस्यारम्भकोऽनःश्रेयान्प्रशस्यतरःकथं यतःसर्व्वंकर्म्मसमस्तमखिलंअप्रतिबद्धंपार्थज्ञानेमोक्षसाधनेसर्व्वतःसंप्लुतोदकस्थानीयेपरिसमाप्यतेऽन्तर्भवतीत्यर्थःयथाकृतायविजितायाधरेयाः संयन्त्येवमेनंसर्व्वंतदभिसमेति यत्किञ्चित्प्रजाःसाधुकुर्व्वन्ति यस्तद्वेदयत्सवेदेति श्रुतेः ३३

## आनन्दगिरिकृतटीका

द्विपयेक्रियाशक्तिमदुपसंहारोनविवक्षितः प्राणेवावाचंयोह्येवप्रभवःसएवाप्यय इति वाक्यमादिशब्दार्थःज्ञानशक्तिमतां क्रियाशक्तिमताञ्चान्योन्योत्पत्तिप्रलयत्वात्तदभावेनाध्ययनादिसिद्धिरित्यर्थः कर्म्मणामात्मव्यापारजन्यत्वाभावेहेतुमाह जिर्व्यापारोहीति तस्य च निर्व्यापारत्वं फलवत्त्वाज्ज्ञातव्यमित्याह अतइति एवं ज्ञानमेवज्ञापयन्उक्तंव्यनक्ति नेत्यादिना ३२

कर्म्मयोगेनेकधाभिहिते सर्व्वस्यश्रेयःसाधनस्यकर्म्मात्मकत्वप्रतिपत्तौकेवलंज्ञानमनादृियमाणमर्जुनमालक्ष्यवृत्तानुवादपूर्व्वकमुत्तरश्लोकस्य तात्पर्य्यमाह ब्रह्मेत्यादिना सिद्धेति सिद्धंपुरुषार्थभूतंपुरुषापेक्षितलक्षणं प्रयोजनंयेषां यज्ञानांतैरनेकैरुपदिष्टैरिति यावत् प्रश्नपूर्व्वकंस्तुतिप्रकारंप्रकटयति कथमित्यादिना ज्ञानयज्ञ

## भाषा अनुवाद।

अबज्ञानयज्ञकीश्रेष्ठता कहतेहैं किजिसलियेआत्मव्यापाररहितजोद्रव्यमय देवताकेअर्थयज्ञहैतिससे ज्ञानयज्ञही श्रेष्ठजानोऔरयद्यपिज्ञानयज्ञमानसिक व्यापारकेअधीनहै तथापिआत्माकास्वरूपजोज्ञान सोकेवलमनकापरिणामअर्थात्नाशरूप होनामात्रहै औज्ञान कुछमानसव्यापारसे प्रगटनहीहै और ज्ञानकीश्रेष्ठतामेहेतु यह कि फलकेसहित सर्व्वकर्मतत्त्वज्ञानकेअन्तर्भूतहैं क्योंकिलोगोंकेकियेहुयेसत्कर्म्म ज्ञानकेअनुगामीकहे साथहोतेहैं यह वेदमेकहाहै सोईइसश्लोकसेकहा कि श्रेष्ठहै द्रव्ययज्ञसेज्ञानयज्ञ हेपरन्तप औरसब कर्म्म हे पार्थअर्जुनज्ञानमे परिसमाप्तकहे लीनहोतेहैं इसीसेज्ञानयज्ञश्रेष्ठहै ३३

आनन्दगिरिकृतटीका

स्वद्रव्ययज्ञात् प्रशस्ततरत्वे हेतुमाह श्रेयानिति द्रव्यसाधनसाध्यादित्युपलक्षणं स्वाध्यायादेरपि ततोपिज्ञानयज्ञस्यश्रेयस्त्वाविशेषात् द्रव्यमयादियज्ञेभ्योज्ञान यज्ञस्यप्रशस्यतरत्वंप्रपञ्चयति द्रव्यमयोहीति फलस्याभ्युदयस्येत्यर्थ:नफलारम्भको नकस्यचित् फलस्योत्पादक:किन्तु नित्यसिद्धस्यमोक्षस्यअभिव्यञ्जकइत्यर्थ: तस्यप्र शस्यतरत्वेहेत्वन्तरमाह यतइति समस्तंकर्मेत्यग्निहोत्रादिकमुच्यते अखिलम विद्यमानं खिलंशेषोस्येत्यनल्पंमहत्तरमितियावत् सर्व्वमखिलमिति पदद्वयोपा दानमसङ्कोचार्थं सर्व्वंकर्मज्ञानेन्तर्भवतीत्यत्र छान्दोग्यश्रुतिंप्रमाणयति यथेति चतुरायकेहि द्यूतेकश्चिदाय:चतुरङ्क: सन् कृतशब्देनोच्यते तस्मै विजिताय कृता यतादर्थ्येनाधरेयास्तस्मादधस्ताद्भाविनस्त्रिद्व्येकाङ्कास्त्रेताद्वापरकलिनामान: संय न्त्याया:संगच्छन्ति चतुरङ्केखल्वायेत्रिद्व्येकाङ्कानामन्तर्भावोभवति महासंख्याया मवान्तरसंख्यान्तर्भावावश्यम्भावादेवमेनंविद्यावन्तं पुरुषंसर्वंतदाभिमुख्येन समेति सङ्गच्छति किंतत्सर्वंयद्विदुपिपुरुषेन्तर्भवति तदाह यत्किञ्चिदिति प्रजा:सर्व्वायत् किमपिसाधुकर्म्मकुर्व्वन्ति तत्सर्वमित्यर्थ: एनमभिसमेतीत्युक्तं तमेवविद्यावन्तंपुरुषं विशिनष्टि यस्तदिति किंतदित्युक्तंतदेवविशदयति यत्सइति सरैक्वोयत्तत्त्वं वेदत त्त्वंयोन्योपिजानाति तमेनंसर्वंसाधुकर्म्माभिसमेतीति योजना ७७

यद्येवंप्रशस्यतरमिदंज्ञानंतर्हिकेनोपायेनतत्प्राप्तिरिति पृच्छति तदेतदिति ज्ञानप्राप्तौप्रत्यासन्नमुपायमुपदिशति उच्यतइति तद्विज्ञानंगुरुभ्योविद्धि गुरुचरणप्र णिपातादिभिरुपायैरावर्ज्जितचेतसोवदिष्यन्तीत्याह तद्विद्धीति उपदेष्टृत्वमुपदेश कर्त्तृत्वं परोक्षज्ञानमात्रेणनभवतीत्याह उपदेक्ष्यन्तीति तदिति प्रेक्षितं ज्ञानसा धनंगृह्यते येनविधिनेति विशेषदर्शनात् यद्वा येनाचार्य्यावर्ज्जनप्रकारेणतदुपदे शवशादपेक्षितं ज्ञानंलभ्यते तथातज्ज्ञानमाचार्य्येभ्योलभस्वेत्यर्थ:तदेवस्फुटयति आचार्य्यानिति एवमादिनेत्यादिशब्देनशमादयोगृह्यन्तेएवमादिनाविद्धीति पूर्व्वेण

स्वामिकृतटीका।

ज्ञानयज्ञस्तुश्रेष्ठइत्याह श्रेयानिति द्रव्यमयाद्दनात्मव्यापारजन्याद्दैवादियज्ञा त्ज्ञानयज्ञ:श्रेष्ठ: यद्यपिज्ञानस्यापिमनोव्यापाराधीनत्वमस्त्येव तथाप्यात्मस्वरू पस्यज्ञानस्यमन:परिणामेअभिव्यक्तिमात्रंतज्जन्यत्वमिति द्रव्यमयाद्विशेष:श्रेष्ठ त्वेहेतु: सर्व्वंकर्माखिलंफलसहितं ज्ञानेपरिसमाप्यते अन्तर्भवतीत्यर्थ:सर्व्वंतद भिसमेति यत्किञ्चित्प्रजा:साधुकुर्व्वन्तीतिश्रुते: ३३

तद्विद्धिप्रणिपातेनपरिप्रश्नेनसेवया उपदेक्ष्यन्तितेज्ञानंज्ञानिनस्तत्त्वदर्शिनः ३४

## शाङ्करभाष्यम्

तदेतद्विशिष्टं ज्ञानं तर्हि केन प्राप्यत इत्युच्यते तद्विद्धीति तद्विद्धि विजानीहि येन विधाना प्राप्यत इत्याचार्य्यानभिगम्य प्रणिपातेन प्रकर्षेण नीचैः प्रपतनं प्रणिपातो दीर्घनमस्कारः तेन कथं बन्धः कथं मोक्षः का विद्या का चाविद्येति परिप्रश्नेनसेवया गुरुशुश्रूषयैवमादिना प्रश्रयेणावर्ज्जिता आचार्य्या उपदेक्ष्यन्ति कथयिष्यन्ति ते ज्ञानं यथोक्तविशेषणं ज्ञानिनोज्ञानवन्तोपि केचिद्यथावत्तत्त्वदर्शनशीला न भवन्ति अपरेतु भवन्त्यतोविशिनष्टितत्त्वदर्शिन इति ये सम्यग्दर्शिनस्तैरुपदिष्टं ज्ञानं कार्य्यक्षमं भवति नेतरदिति भगवतोमतं ३४

## आनन्दगिरिकृतटीका।

सम्बन्धः उत्तरार्द्धंव्याचष्टे प्रश्रयेणेति प्रश्रयोभक्तिश्रद्धापूर्वकोनिरतिशयोऽवनतिविशेषःयथोक्तविशेषणंपूर्वोक्तेनप्रकारेणप्रशस्ततममित्यर्थः विशेषणस्यमौनरुक्तिपरिहारार्थमर्थभेदंकथयति ज्ञानवन्तोपीति ज्ञानिनइत्युक्त्वापुनस्तत्त्वदर्शिनइति ब्रुवतोभगवतोभिप्रायमाह येसम्यगिति बहुवचनञ्चैतदाचार्य्यविषयंबहवःश्रोतव्यंबहुधाचेति सामान्यन्यायाश्यनुज्ञानार्थंनत्वात्मज्ञानमधिकृत्य आचार्यबहुत्वं विवक्षितं तस्य तत्त्वसाक्षात्कारवदाचार्यमात्रोपदेशादेवोदयसम्भवात् ३४

## स्वामिकृतटीका।

एवंभूतात्मज्ञाने साधनमाह तदिति तज्ज्ञानंविद्धिजानीहि प्राप्नुहीत्यर्थः ज्ञानिनांप्रणिपातेननमस्कारेण ततः परिप्रश्नेनकुतोऽयंममसंसारःकथंवानिवर्त्तेत इति परिप्रश्नेनसेवयागुरुशुश्रूषयावज्ञानिनःशास्त्रज्ञास्तत्त्वदर्शिनोऽपरोक्षानुभवसम्पन्नाश्चतेतुभ्यंज्ञानमुपदेशेनसम्पादयिष्यन्ति ३४

## भाषा अनुवाद।

जोकहोकि भलाजिसज्ञानकीऐसीप्रशंसाकरतेहो सोकिसप्रकारसेप्राप्तहोय तो ज्ञानकेसाधनकहेउपायकहतेहैं किज्ञानीपुरुषोंकेनिकटजायनम्रतासे प्रणामकरप्रश्नकरै कि किसकारणसे हमकोयहसंसारभया औरकैसेनिवृत्तहोगा औरगुरुकीसेवाशुश्रूषाकरनेसेतुमको सोतत्त्वज्ञानमिलैगा औरज्ञानीजोशास्त्रज्ञ तथातत्त्वदर्शीजोहैं वेतुमकोउपदेशदे कर तत्त्वज्ञानसंपन्नकरदेवंगे सोईकहतेकिदण्डवत तथाप्रश्न औ सेवाकरनेसे तत्त्वदर्शीज्ञानीलोग तुमकोज्ञानउपदेश करैंगे औरजैसेबन्धऔ मोक्ष तथाज्ञानऔ अज्ञान क्याहै सोकहैंगे ३४

यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ३५

शाङ्करभाष्यं

तथा च सतीदमपि समर्थं वचनं यदिति यत् ज्ञात्वा यत् ज्ञानं तैरुपदिष्टमधिगम्य प्राप्य पुनर्भूयो मोहमेवं यथेदानीं मोहं गतोऽसि पुनरेवं न यास्यसि हे पाण्डव किञ्च येन ज्ञानेन भूतान्यशेषेण ब्रह्मादीनि स्तम्बपर्य्यन्तानि द्रक्ष्यसि साक्षादात्मनि प्रत्यगात्मनि मत्संस्थानीमानि भूतानीति अथो अपि मयि वासुदेवे परमेश्वरे चेमानीति चेत्र ज्ञेश्वरैकत्वं सर्व्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ३।

आनन्दगिरिकृतटीका।

विशिष्टैराचार्य्यैरुपदिष्टे ज्ञाने कार्य्यक्षमे प्राप्ते सति समनन्तरवचनमपि योग्य विषयमर्थवद्भवतीत्याह तथाचेति अतस्तस्मिन् विशिष्टे ज्ञाने त्वदीयमोहापोहहेतौ निष्ठावता भवता भवितव्यमिति शेषः तत्र निष्ठाप्रतिष्ठायै तदेव ज्ञानं पुनर्व्विशिनष्टि येनेति यज्ज्ञात्वेत्ययुक्तं ज्ञानायोगादित्याशंक्य प्राप्त्यर्थत्वमविप्रपूर्व्वस्य गमेरङ्गीकृत्य व्याकरोति अधिगम्येति इतश्चाचार्य्योपदेशलभ्ये ज्ञाने फलवति प्रतिष्ठावता भवितव्यमित्याह किञ्चेति जीवे चेश्वरे चोभयत्र भूतानां प्रतिष्ठितत्वप्रतिज्ञिर्द्देशे भेदवादानुमतिः स्यादित्याशंक्याह चेत्रज्ञेति मूलप्रमाणाभावे कथं तदेकत्वदर्शनं स्यादित्याशंक्याह सर्व्वेति ३५

स्वामिकृतटीका।

ज्ञानफलमाह यज्ज्ञात्वेति सार्द्धैस्त्रिभिः यज्ज्ञानं ज्ञात्वा प्राप्य पुनर्व्वन्धुवधादिनिमित्तं मोहं न प्राप्स्यसि तत्र हेतुर्येन ज्ञानेन भूतानि पितृपुत्रादीनि स्वाविद्याविजृम्भितानि आत्मन्येवाभेदेन द्रक्ष्यसि अथो अनन्तरं आत्मानं मयि परमात्मन्यभेदेन द्रक्ष्यसीत्यर्थः ३५

भाषाअनुवाद।

अनसाढ़े ३ श्लोकसे तत्त्वज्ञानका फल कहते हैं कि तत्त्वज्ञान होनेसे फेरि और बन्धुवधनिमित्त ऐसे मोहको न प्राप्त होउगे कारण यह कि ज्ञान संपत्ति होनेसे अपने अज्ञानवशते प्रगट जो पिता पुत्र भाई बन्धु तिनको अपने आत्मासे भिन्न न देखोगे औ रसाक्षात् परमात्मा रूप हमसे और अपने आत्मासे अभेद देखोगे सोई कहते कि जिस ज्ञानको जानिके हे पाण्डव फेरि ऐसे मोहको न पावोगे और जिसमें सम्पूर्ण प्राणीयोंको अपने और मेरेमें देखोगे सो तत्त्वज्ञान महात्मोंसे मिलैगा ३५

अपिचेदसिपापेभ्यः सर्व्वेभ्यः पापकृत्तमः सर्व्वंज्ञानप्लवेनैववृजिनंसन्तरिष्यसि ३६

## शाङ्करभाष्य।

किञ्चैतस्यज्ञानस्यमाहात्म्यं अपीति अपिचेदसिपापिभ्यःपापकृद्भ्यःसर्व्वेभ्यः सकाशादतिशयेनपापकृत् पापकृत्तमःयद्यसिभवसिसर्व्वंज्ञानप्लवेनैवज्ञानमेवप्लवं ज्ञानप्लवंकृत्वावृजिनंवृजिनार्णवंपापंसन्तरिष्यसिधर्म्मोपीहमुमुक्षोःपापमुच्यते३६ ज्ञानंकथंनाशयति पापमिति सदृष्टान्तमुच्यते यथेति यथाएधांसिकाष्ठा निसमिद्धःसम्यक्इद्धोदीप्तोऽग्निर्भस्मसात्भस्मीभावंकुरुतेअर्जुनएवंज्ञानमेवअग्नि र्ज्ञानाग्निःसर्व्वकर्म्माणिभस्मसात् कुरुते तथानिर्व्वीजंकरोतीत्यर्थःनहिसाक्षादेव ज्ञानाग्निःतानिकर्म्माणीन्धनवद्भस्मीकर्त्तुं शक्नोति तस्मात् सम्यक्दर्शनंसर्व्वकर्म्मणां निर्व्वीजत्वेकारणमित्यभिप्रायःसामर्थ्यात् येनकर्म्मणाशरीरमारब्धं तत् प्रवृत्तफ लत्वादुपभोगेनैवक्षीयतेऽतोयान्यप्रवृत्तफलानिज्ञानोत्पत्तेः प्राक्कृतानिज्ञानसह भावीनिचातीतानेकजन्मकृतानिच तान्येवसर्व्वाणिभस्मसात् कुरुते ३७

## आनन्दगिरिकृतटीका

ज्ञानस्यप्रकारान्तरेणप्रशंसांप्रस्तौति किञ्चेति पापकारिभ्यःसर्व्वेभ्यःसका शादतिशयेनपापकारित्वमेकस्मिन्नसम्भावितमपिज्ञानमाहात्म्यप्रसिद्धयर्थमङ्गीकृ त्यब्रवीति अपिचेदिति ब्रह्मात्मैक्यज्ञानस्यसर्व्वपापनिवर्त्तकत्वेनमाहात्म्यमिदानींप्र कटयति सर्व्वमिति अधर्म्मनिवृत्तेपिधर्म्मरूपप्रतिबन्धान्नज्ञानवतोपिमोक्षःसम्भव तीत्याशंक्याह धर्म्मोपीति इहेत्यध्यात्मशास्त्रंगृह्यते ३६

## स्वामिकृतटीका।

किञ्च अपिचेदिति सर्व्वेभ्योऽपिपापकारिभ्योयद्यप्यतिशयेनपापकारीत्वम सि तथापिसर्व्वंपापसमुद्रंज्ञानप्लवेनैवज्ञानपोतेनैवसम्यगनायासेनतरिष्यसि ३६

## भाषा अनुवाद।

औरजोसबपापीमनुष्योंसेभी तुमअधिकपापीहोउ तौभीपापरूपसमुद्रकोज्ञा नरूपनौकाकेद्वाराअनायाससेउतरिजावगे तात्पर्य्य यहकिजोतुमनेकहाथाकिपाप मेवाश्रयेदस्मान् अर्थात् कुटुम्बकेमारनेसेहमैवड़ाहीपापहोगा औरबन्धुबधरूप दृनिनकहेदुःखसागरकेपारकैसेजायंगे सोयहअज्ञानसेतुमारीभूलसहजउपाय आत्मज्ञानसे छूटजायगीऐसेकहिकरश्रीभगवाननेज्ञानकामहात्मकहा ३६

यथैधांसि समिद्धोऽग्निर्भस्मसात् कुरुतेऽर्जुन
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ३७

## आनन्दगिरिकृतटीका ।

ज्ञाने सत्यपि धर्माधर्मयोरुपलम्भात् कुतस्तयोस्ततो निवृत्तिरित्याशंक्य ज्ञानस्य धर्माधर्मनिवर्त्तकत्वं दृष्टान्तेन दर्शयितुमनन्तरश्लोकमवतारयति ज्ञानमिति यो व्याख्येयश्लोकभागे निवर्तकत्वान्निवर्त्यत्वविभागमुदाहरति यथेति दृष्टान्तानुरूपं दार्ष्टान्तिकमाचष्टे ज्ञानाग्निरिति कोऽयं विपर्ययो दाहकत्वमग्नेरप्रतिबन्धापेक्षये ति विवक्षित्वा विशिनष्टि सम्यगिति दार्ष्टान्तिकं व्याचष्टे ज्ञानमेवेति ननु ज्ञानसा क्षादेव कर्मदाहकं किमिति नोच्यते निर्बीजकरोति कर्मेति किमिति व्याख्यानमि त्याशंक्याह नहीति ज्ञानस्य स्वप्रमेयावरणाज्ञानापाकरणसामर्थ्यस्य लोके दृष्टत्वाद विक्रियब्रह्मात्मज्ञानमपि तदज्ञानं निवर्तयन् तज्जन्यकर्त्तृत्वभूमकर्मबीजभूतं निवर्त यति तन्निवृत्तौ च कर्माणि नस्यातु भारयन्ति न तु साक्षात् कर्मणां निवर्त्तकं ज्ञानमज्ञा नस्यैव निवर्त्तकमिति व्याप्तेस्तन्निवृत्तौ तु पुनरप्रिककर्मोद्भवसम्भवादित्यर्थः ज्ञान स्य साक्षात् कर्मनिवर्तकत्वाभावे फलितमाह तस्मादिति सम्यग्ज्ञानं मूलभूताज्ञा ननिवर्तनेन कर्मनिवर्त्तकमिष्टमन्यथा दारब्धफलस्यापि कर्मणो निवृत्तिप्रसङ्गात् ज्ञानो दयसमकालमेव शरीरपातः स्यादित्याशंक्याह सामर्थ्यादिति ज्ञानोदयसमस मयमेव देहापोहे तत्त्वदर्शिभिरुपदिष्टं ज्ञानं फलवादिति भगवदभिप्रायस्य बाधितत्व प्रसङ्गादाचार्य्यलाभान्यथानुपपत्त्या प्रवृत्तफलकर्मसम्भवादकर्मज्ञानस्य शंनाशयति ज्ञानमित्यर्थः कथं तर्हि प्रारब्धफलं कर्म न नश्यतीत्याशंक्याह येनेति तर्हि कथं ज्ञा नाग्निः सर्वकर्माणि भस्मसात् करोतीत्युक्तं तत्राह अत इति ज्ञानादारब्धफलानां कर्मणां निवृत्त्यनुपपत्तेरनारब्धफलानि यानि कर्माणि पूर्वं ज्ञानोदयादस्मिन्नेव ज न्मनि कृतानि ज्ञानेन च सह वर्त्तमानानि प्राचीनेषु चानेकेषु जन्मस्वार्जितानि तानि स र्वाणि ज्ञानं कारणनिवर्त्तनेन निवर्त्तयतीत्यर्थः ३७

## भाषा अनुवाद ॥

जो पूर्व श्लोकमें कहा कि ज्ञाननौकासे पापसमुद्रको उतरि जाउगे सो ठीक है परन्तु पापतो बना रहा इस सन्देहपर दृष्टान्त देकर कहते हैं कि हे अर्जुन जैसे प्रज्व लित अग्नि काष्ठसमूहको भस्म कर देती है तैसेही ज्ञानअग्निभी आरब्ध कर्मको छोड़ और सम्पूर्ण संचित आगामी कर्मोंको नाश करती है इसमें कुछ सन्देह न करो ३७

नहि ज्ञानेन सदृशं पवित्रमिह विद्यते तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ३८

## शाङ्करभाष्यम् ।

यत एवमतः नहीति नहि ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरमिह विद्यते हि यस्मात् तत् ज्ञानं स्वयमेव योगसंसिद्धो योगेन कर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतो योग्यतामापन्नो मुमुक्षुः कालेन महता आत्मनि विन्दति लभत इत्यर्थः ३८

## आनन्दगिरिकृतटीका ।

नन्वन्येनैव परमपरिशुद्धिकरेण केनचिदश्वमेधादिना परमपुरुषार्थसिद्धेरन्यथासिद्धं ज्ञानेनेत्याशङ्क्याह यत इति पूर्वोक्तेन प्रकारेण ज्ञानमाहात्म्यं यतः सिद्धमतस्तेन ज्ञानेन तुल्यं परिशुद्धिकरं परमपुरुषार्थोपयिकमिह व्यवहारभूमौ नास्तीत्यर्थः तर्हि तदात्मविषयं ज्ञानं सर्वेषां किमिति झटिति नोत्पद्यते तत्राह तत् ज्ञानं स्वयमिति महता कालेन यथोक्तेन साधनेन योग्यतामापन्नः तदधिकृतः स्वयं तदात्मनि ज्ञानं विन्दतीति योजना सर्वेषां झटिति ज्ञानानुदयो योग्यतावैधुर्यादिति भावः ३८

## स्वामिकृतटीका ।

समुद्रवत् स्थितस्यैव पापस्य अतिलङ्घनमात्रं न तु पापस्य नाश इति भ्रान्तिं दृष्टान्तेन वारयन्नाह यथैधांसीति एधांसि काष्ठानि प्रदीप्तोऽग्निर्यथा भस्मीभावं नयति तथा आत्मज्ञानरूपोऽग्निः प्रारब्धकर्मफलव्यतिरिक्तानि सर्वाणि कर्माणि भस्मीकरोतीत्यर्थः ३७

तत्र हेतुमाह नहीति पवित्रं शुद्धिकरमिह तपोयोगादिषु मध्ये ज्ञानतुल्यं नास्त्येव तर्हि सर्वेऽपि किमिति आत्मज्ञानमेव नाभ्यस्यन्तीत्यत आह तत्स्वयमिति सार्द्धेन तदात्मविषयं ज्ञानं कालेन महता कर्मयोगेन संसिद्धो योग्यतां प्राप्तः सन् स्वयमेवानायासेन लभते न तु कर्मयोगं विनेत्यर्थः ३८

## भाषा अनुवाद ।

तिसका कारण यह है कि संसार में तप दान व्रत यज्ञ आदि के बीच ज्ञान के समान कोई भी चित्त शुद्ध नहीं करते हैं तो फेरि सब मनुष्य क्यों नहीं ज्ञान हों का अभ्यास करते इस पर डेढ़ श्लोक से कहते हैं कि बहुत काल कर्मयोग करने से शुद्ध चित्त हो कर सहज में लोग आत्मा का तत्त्वज्ञान लाभ करते हैं परन्तु निष्काम कर्मयोगरूप जो भूमि का तिसके बिना तत्त्वज्ञान नहीं होता है सोई कहा कि नहि ज्ञानेन सदृशं पवित्रमिह इति ३८

श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः
ज्ञानं लब्ध्वापरंशान्तिमचिरेणाधिगच्छति ३८

## शाङ्करभाष्यं

येनैकान्तेनज्ञानप्राप्तिर्भवति सउपायउपदिश्यते श्रद्धावानिति श्रद्धावान्श्रद्धालुर्लभते ज्ञानंश्रद्धालुत्वेऽपिभवति कश्चिन्मन्दप्रस्थानोऽतआह तत्परोगुरूपासनादावभियुक्तोज्ञानलब्ध्युपायेश्रद्धावांस्तत्परोऽप्यजितेन्द्रियःस्यादित्यत आह संयतेन्द्रियःसंयतानिविषयेभ्योनिवर्त्तितानियस्येन्द्रियाणिससंयतेन्द्रियोयोगी य एवम्भूतः श्रद्धावांस्तत्परःसंयतेन्द्रियश्चसोऽवश्यंज्ञानंलभतेप्रणिपातादिस्तुवाह्यानैकान्तिकोपिभवतिमायावित्वादिसम्भवात् नतुतथानच्छ्रद्धावत्त्वादावित्यैकान्ततोज्ञानलब्ध्युपयःकिंपुनर्ज्ञानलाभात् स्यादित्युच्यते ज्ञानं लब्ध्वापरांमोक्षाख्यांशान्तिमुपरतिमचिरेणक्षिप्रमेवाधिगच्छतिसम्यग्दर्शनात् क्षिप्रमेव मोक्षो भवतीति सर्व्वशास्त्रन्यायप्रसिद्धः सुनिश्चितोऽर्थः ३८

## आनन्दगिरिकृतटीका।

कर्मभोगेनसमाधियोगेनचसम्पन्नस्यज्ञानोत्पत्तावन्तरङ्गसाधनमुपदिशति येनेति ज्ञानलाभप्रयोजनमाह ज्ञानमिति नकेवलंश्रद्धालुत्वमेवसहायंज्ञानलाभेहेतुरपितु तात्पर्यमपीत्याह श्रद्धालुत्वेपीति मन्दप्रस्थानत्वंतात्पर्यविधुरत्वंनचतस्योपदिष्टमपिज्ञानसुत्पत्तुमीष्टे तेनतात्पर्यमपि तत्रकारणंभवतीत्याह अतआहेति अभियुक्तोनिष्ठावान् उपासनादावित्यादिशब्देनश्रवणादिगृह्यते नकेवलंश्रद्धातत्पर्यञ्चेत्युभयमेवज्ञानकारणंकिन्तु संयतेन्द्रियत्वामपितदभावेश्रद्धादेरकिञ्चित्करत्वादित्याशयेनाह श्रद्धावानिति उक्तसाधनानांज्ञानेनसहैकान्तिकत्वमाह य एवम्भूत इति तद्विद्धिप्रणिपातेनेत्यादौप्रागेवप्रणिपातादेर्ज्ञानहेतोरुक्तत्वात् किमि

## भाषाअनुवाद

औरभीकहते हैं किश्रद्धावान्कहेआचार्यतथागुरुकेउपदेशमेविश्वासकारिआस्तीकाबुद्धिहोतत्परकहेएकउसीउपदेशमेदत्तचित्तहोऔरइन्द्रियोंकोवशराखिकर वहतत्त्वज्ञान लाभकरैहैं इसीसेज्ञानलाभकेपहिलेश्रद्धापूर्व्वक चित्तशुद्धिकेअर्थनिष्कामभक्तियोगकरमाउचितहै औरज्ञानहोनेपरज्ञानीकोफेरिअन्यकोईकर्मकरनानहीं है सोईकहते हैं कितत्त्वज्ञानीज्ञानलाभकेअनन्तरअचिरात् कहे अल्पकालमेंझटपट मोक्षकोपावते हैं इसमें सन्देह नहीं ३८

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति
नायं लोकोऽस्ति न परो नसुखं संशयात्मनः ४०

आनन्दगिरिकृतटीका।

तोदानींहेत्वन्तरमुच्यते तत्राह प्रणिपातादित्विति तद्विर्बहिरङ्गमिदंपुनरन्त रङ्गंनचतत्र ज्ञानेनप्रतिनियमोमनस्त्वन्यथाकृत्वाबहिरन्यथाप्रदर्शनात्मनोमायावि त्वस्यसम्भवाद्विप्रलम्भकत्वादेरपि सम्भावनोपनीतत्वादित्यर्थः मायावित्वादेःश्रद्धाव त्वात्तात्पर्य्यादावपिसम्भवादनैकान्तिकत्वमविशिष्टमित्याशंक्याह नत्विति नहि माययाविप्रलम्भेनत्रा श्रद्धातात्पर्यसंयमानियोगतो निष्ठातुमर्हतीत्यर्थः उत्तरार्द्धंप्र श्नपूर्व्वकमवतार्यव्याकरोति किंपुनरित्यादिना सम्यग्ज्ञानादभ्यासादिसाधनान पेक्षान्मोक्षोभवतीत्यत्रप्रमाणमाह सम्यग्दर्शनादिति शास्त्रशब्देनतमेवविदित्वा ज्ञानादेवतुकैवल्यमित्यादिविवक्षितं न्यायस्तुज्ञानादज्ञाननिवृत्ते रज्ज्वादौप्रसिद्धत्वा त्आत्मज्ञानादपिनिरपेक्षादज्ञानतत्कार्यप्रक्षयलक्षणोमोक्षः स्यादित्येवंलक्षणं ३८

भाषा अनुवाद।

तत्वज्ञानकेअधिकारीकोकहिकरि अबअनधिकारीजोअज्ञानीतिसकालक्ष णकहतेहैं कि एकतो शास्त्र औगुरुतथाआचार्य्यकाउपदेशकभीसुनानहीं और जो दैवात् सुनाभी तोसमभ्कानहीं औरजोकुछकिमीतरहससभ्काभी तो उसमे श्रद्धाअर्थात् विश्वासनभईऔरजोकहनेसुननेसेविश्वासभीआई तो यह अर्थकहै प्रयोजन हमारासिद्धहोयकिनहोय इससंशयमेपडगये ऐसेलक्षणोंसेभरेपूरे जो अलक्षणीअज्ञानीलोगहैं उनकामतलबकभीनहींहोता अर्थात् अपनेमनोर थसेभ्रष्टहोते हैं उनीकोनष्टप्राणीकहते हैं परन्तु ऊपरकहे जोअज्ञानीऔ श्रद्धाहीनतथासंशयग्रस्त इनतीनकेमध्यमेसंशययुक्तचित्तमनुष्यअच्छीतरह अपने मनोरथसेभ्रष्टहोताहै क्योंकि उसकोहरकामऔहरबातमेसन्देह लगीरहतो है क्याधनउपार्जनक्याविवाहक्यादानधर्म्मक्याअयनासुख खानापहिरनालेनादे नाआदिसबकामोमेसंशयकेमारे क्षणभरभीसुखनहीं फेरिऔरोंकोदेखिहमकु छनहींकरते यहचिन्ताजुटीशिरपरचढीरहतीहै तौफेरि संशयकेकारणधर्म्म नहोनेमे स्वर्गादिभीनहीमिलता और संसार मे तो धननाशकीसंदेहकरसंसा रिकसुखसेहाथधोहीवैठेहैं तो उनकेलोकपरलोककेदोनोसुखचलेगये केवलचि न्ताकेचितामेवैठेधीरेधीरेजरिजरायकेमाटीमेमिलगयेमूर्खतासेष्टथाजन्मचलाग या सोईकहाकि अज्ञश्चाश्रद्दधानश्चसंशयात्माविनश्यतिइति इस्सेतुमसंशयछोड़ो"

### शाङ्करभाष्यं

अत्र संशयो हि न कर्त्तव्यः पापिष्ठो हि संशयः कथमित्युच्यते अज्ञश्चेति अज्ञश्चानात्मज्ञोऽश्रद्दधानश्च संशयात्मा च विनश्यति अज्ञाश्रद्दधानौ यद्यपि विनश्यतः तथापि न तथा यथा संशयात्मा स तु पापिष्ठः सर्वेषां कथं नायं साधारणोऽपि लोकोऽस्ति तथा न परलोको न सुखं तत्रापि संशयोपपत्तेः संशयात्मनः संशयचित्तस्य तस्मात् संशयो न कर्त्तव्यः ४०

### आनन्दगिरिकृतटीका

उत्तरश्लोकस्य पातनिकां करोति अत्रेति यथोक्तसाधनवानुपदेशमपेक्ष्याचिरेण ब्रह्म साक्षात् करोति साक्षात्कृतब्रह्मत्वेऽचिरेणैव मोक्षं प्राप्नोतीत्येषोऽर्थः सम थ्यापराध्यते संशयस्याकर्त्तव्यत्वे हेतुमाह पापिष्ठो हीति उक्तं हेतुं प्रश्नपूर्वकमुत्तरश्लोकेन साधयति कथमित्यादिना अज्ञादश्रद्दधानाच्च संशयचित्तस्य विशेषमादर्शयति नायमिति द्वितीयभागविभजनार्थं भूमिकां करोति अत्रेति अज्ञादीनां मध्ये संशयात्मनो यत् पापिष्ठत्वं तत् प्रश्नद्वारा प्रकटयति कथमिति श्लोकद्वयस्य तत्प्रयुक्तसुखस्य चाभावे हेतुमाह तत्रापीति संशयचित्तस्य सर्वत्र संशयप्रवृत्तेर्दुर्निवारत्वादित्यर्थः संशयस्यानर्थमूलत्वे स्थिते फलितमाह तस्मादिति ४०

यद्यपि संशयः सर्वानर्थहेतुत्वात् कर्त्तव्यो न भवति तथापि निवर्त्तकाभावे तदकरणमशक्यं नासौ न शक्यमिति शङ्कते कस्मादिति श्रुतियुक्तिप्रयुक्तमैक्यज्ञानं तन्निवर्त्तकमित्युत्तरमाह ज्ञानेनेति संशयरहितस्यापि कर्माण्यनर्थहेतूनि भवन्तीत्याशङ्क्याह

### स्वामिकृतटीका ।

किञ्च श्रद्धावानिति श्रद्धावान् गुरूपदिष्टेऽर्थे आस्तिक्यबुद्धिमान् तत्परस्तदेकनिष्ठः संयतेन्द्रियश्च तज्ज्ञानं लभते नान्यः अतः श्रद्धादिसम्पत्त्या ज्ञानलाभात् प्राक् कर्मयोग एव शुद्ध्यर्थमनुष्ठेयः ज्ञानलाभानन्तरन्तु न तस्य किञ्चित् कर्त्तव्यमित्याह ज्ञानं लब्ध्वा तु मोक्षमचिरेण प्राप्नोति ३९

ज्ञानाधिकारिणमुक्त्वा तद्विपरीतमनधिकारिणमाह अज्ञश्चेति अज्ञो गुरूपदिष्टार्थानभिज्ञः कथञ्चिज्ज्ञाने जातेऽपि तत्राश्रद्दधानश्च जातायामपि श्रद्धायां ममेदं सिध्येन्नवेति संशयाक्रान्तचित्तश्च विनश्यति स्वार्थात् भ्रश्यति एतेषु त्रिष्वपि संशयात्मा सर्वथा नश्यति यतस्तस्यायं लोको नास्ति धनार्जनविवाहाद्यसिद्धेः न च परलोको धर्मस्यानिष्पत्तेः न च सुखं संशयेनैव भोगस्याप्यसम्भवात् ४०

योगसंन्यस्तकर्माणंज्ञानसंछिन्नसंशयं आत्मवन्तंनकर्माणिनिबध्नन्तिधनञ्जय ४१

शाङ्करभाष्यं

कस्मात् योगेति योगसंन्यस्तकर्माणं परमार्थदर्शनलक्षणेनयोगेन संन्यस्तानिकर्माणि येनपरमार्थदर्शिनाधर्माधर्माख्यानितं योगसंन्यस्तकर्माणं कथंयोगसंन्यस्तकर्मेत्याह ज्ञानेनात्मेश्वरैकत्वदर्शनलक्षणेन संछिन्नसंशयोयस्यसज्ञानसंछिन्नसंशयःयएवंयोगसंन्यस्तकर्मा तमात्मवन्तमप्रमत्तं गुणचेष्टारूपेण दृष्टानि न कर्माणिनिबध्नन्ति अनिष्टादिरूपंफलं नारभन्ते हेधनञ्जय ४१

आनन्दगिरिकृतटीका।

योगेति विषयपरवशस्यपुंसोयोगायोगात् कुतोयोगसंन्यस्तकर्मत्वमित्याशंक्याह आत्मवन्तमिति परमार्थदर्शनतः संशयोच्छित्तौतदुच्छेदकज्ञानमाहात्म्यादेवकर्मणांच्वनिवृत्तावप्रमत्तस्य प्रातिभासिकानिकर्माणिबन्धहेतवोनभवन्तीत्याह नकर्माणीति कर्मयोगादेवकर्मसंन्यासस्यानुपपत्तिमाशंक्याद्यंपादंविभजते परमार्थेति तत्रवेधर्मन्यासपक्षेपरोक्षंफलसंन्यासपक्षेत्वपरोक्षमिति विवेकः यथोक्तज्ञानेनसंन्यस्तकर्मत्वमेवसतिसंशये नसिध्यति संशयवतस्तद्योगादिति शङ्कते कथमिति द्वितीयंपादंव्याकुर्वन्परिहरति आहेत्यादिना पाठक्रमादर्थक्रमस्यबलीयस्त्वादादौद्वितीयंपादंव्याख्याय पश्चादाद्यंपादं व्याचक्षतेत्याह एवमिति सर्वमिदंप्रमादवतो विषयपरवशस्य नसिध्यतीत्यभिसन्धाय आत्मवन्तंव्याकरोति अप्रमत्तमितिनकर्माणीत्यादिफलोक्तिंव्याचष्टेगुणचेष्टेति अनिष्टादीत्यादिशब्देन दृष्टमिश्रञ्च गृह्यते ४१

भाषा अनुवाद।

दूसरेऔतीसरेअध्यायमें कहा जो कर्मनिष्ठाऔ ज्ञाननिष्ठा सोईदोश्लोकसे कहते हैं किजिसनेभगवतआराधनरूपसबकर्म अन्तर्यामीभगवानकोअर्पितकियाहै ऐसामनुष्य अपनेकर्मफलसेकभीबद्धनहीं होता औरहमकोईकर्मनहींकरतेहैंऐसेबोधमेंजिसकेदेहगेहमें आत्मबुद्धिरूपसंशय नष्टहोगईहैं ऐसेपुरुषकेलोकशिक्षार्थभिक्षापर्यटन आदिस्वभावसिद्धकर्म कभीभीज्ञानकेप्रतिबन्धकनहीं होतेहैं सोईकहाकि योगजोभगवदाराधनकर्म तिससेदियाहै कर्मोंकोसंन्यासजिसने औरज्ञानसेअच्छीतरहदूरकियाहै सन्देह जिसने ऐसेआत्मस्वरूपपुरुषको हेधनञ्जय कर्मबन्धन नहीं करसकतेहैं विचार कर देखो ४१

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ४२

इति श्रीमद्भगवद्गीतायां श्रीकृष्णार्जुन सम्वादे ज्ञानकर्म्म न्यासयोगोनाम चतुर्थोऽध्यायः ४

## शाङ्करभाष्यं।

यस्मात् कर्म्मयोगानुष्ठानात् अशुद्धिक्षयहेतुकज्ञानसंछिन्नसंशयो न निबध्यते कर्म्मभिर्ज्ञानाग्निदग्धकर्म्मत्वादेव यस्माच्च ज्ञानकर्मानुष्ठानविषयेसंशयवान् विनश्यति तस्मादिति तस्मात् पापिष्ठमज्ञानसम्भूतं अज्ञानादविवेकाज्जातं हृत्स्थं हृदि बुद्धौस्थितं ज्ञानासिनाशोकमोहादिदोषहरं सम्यक् दर्शनं ज्ञानं तदेवासिः खड्गस्तेन ज्ञानासिनात्मनः स्वस्यआत्मविषयत्वात् संशयस्यनहि परस्यसंशयोऽपरेण छेत्तव्यतांप्राप्नोयेनस्वस्येति विशेष्यतेऽतआत्मविषयोऽपि स्वस्यैवभवति ज्ञानासिनाछित्त्वैनंसंशयंस्वबुद्धिनाशहेतुभूतं योगंसम्यक् दर्शनोपायंकर्मानुष्ठानमातिष्ठकुर्व्वित्यर्थः उत्तिष्ठचेदानीं युद्धाय भारतेति ४२ इतिश्रीशाङ्करभाष्ये चतुर्थोऽध्यायः ४

## स्वामिकृतटीका।

अध्यायद्वयोक्तांपूर्व्वापरभूमिकाभेदेनकर्मज्ञानमयींद्विविधांब्रह्मनिष्ठामुपसंहरति योगेति द्वाभ्यां योगेनपरमेश्वराराधनरूपेणतस्मिन्संन्यस्तानिसमर्पितानि कर्माणियेनतं पुरुषंकर्माणिस्वफलैर्ननिबध्नन्ति ततश्च ज्ञानेनाकर्त्रात्मबोधेनसंछिन्नःसंशयोदेहाद्यभिमानलक्षणो यस्यतमात्मवन्तमप्रमादिनंकर्माणिलोकसंग्रहार्थानिस्वाभाविकानिवा न निबध्नन्ति ४१

## भाषा अनुवाद।

जबकिभगवदर्पणरूपनिष्कामकर्मयोगऔरज्ञानयोगसाहै तौहेभारत अर्जुन आत्मविषयकअपनेअज्ञानसेउत्पन्न औअन्तःकरणमेटिकेजोशोकमोह आदिसवसंशय उनकोदेह आत्माकाविवेककहे विचाररूपज्ञानखड्गसेकाटिकर उठो औकर्मयोगकाअनुष्ठानकरो औरउपस्थितजोयुद्धसोकरोश्रीकृष्णभारत इससम्बोधनसेयह जनायाकि युद्धक्षत्रीकास्वधर्महै औरतुमश्रेष्ठभरतवंशमे उत्पन्नहौ श्रीधरस्वामीकहतेहैं किपुरुषोंकोअवस्थाभेदसेकर्ममयऔज्ञानमय येदोप्रकारकीनिष्ठाजिसनेकहा ऐसेसंशयनिवारणभगवानश्रीकृष्णकोमैंप्रणाम करता हूं ४२ इति श्रीजगन्नाथ शुक्ल विरचितायां मनभावनीटीकायां चतुर्थोध्यायः ४

आनन्दगिरिकृतटीका ।

तस्मादित्यादिसमनन्तरश्लोकगतं तत्पदापेक्षितमर्थमाह यस्मादिति सतां कर्म्मणामस्मदादिषु फलारम्भकत्वोपलम्भात् विदुष्यपि तेषां तद्भावमनपराधमित्याशंक्याह ज्ञानाग्नीति ननु सन्दिहानस्य तत्प्रतिबन्धान्न कर्मयोगानुष्ठानं नापि तद्धेतुकज्ञानं तत्रापि संशयावतारादित्याशंक्याह यस्मान्नेति श्लोकाक्षराणि व्याचष्टे तस्मादित्यादिना पापिष्ठमिति संशयस्य सर्व्वानर्थमूलत्वेन त्याज्यत्वं सूच्यते विवेकाग्रहप्रसूतत्वादपि तस्य हेयत्वमविवेकस्यानर्थकरत्वप्रसिद्धेरित्याह अविवेकादिति नच तस्य चैतन्यवदात्मनिष्ठत्वादत्याज्यत्वं शङ्कितव्यमित्याह हृदीति शोकमोहाभ्यामभिभूतस्य पुंसो मनसि प्रादुर्भावतः संशयस्य प्रत्यक्प्रतिबन्धकाभावेनैव प्रध्वंसः सिध्येदित्याशंक्याह ज्ञानासिनेति स्वाश्रयस्य संशयस्य स्वाश्रयेणैव ज्ञानेन समुच्छेदसम्भवात् किमिति स्वस्येति विशेषणमित्याशंक्याह आत्मविषयत्वादिति स्वान्यादिविषयः संशयः तदविषयेण ज्ञानेन देवदत्तनिष्ठेन तन्निष्ठो व्यावर्त्त्यते प्रकृते त्वात्मविषयस्तदाश्रयश्च संशयः तथाविधेन ज्ञानेन अपनीयते तेन विशेषणमर्थवदित्यर्थः तदेव प्रपञ्चयति नहीति आत्माश्रयत्वस्य प्रकृते संशये सिद्धत्वेनाविवक्षितत्वात् तद्विषयस्य तद्विषयेणैव तस्य तेन निवृत्तिर्विवक्षितेत्युपसंहरति अतइति संशयसमुच्छित्त्यनन्तरं कर्त्तव्यमुपदिशति छित्त्वैनमिति अग्निहोत्रादिकं कर्म भगवदाज्ञया क्रमेण करिष्यामि युद्धात्पुनरुपरिरंसैवेत्याशंक्याह उत्तिष्ठेति भरतान्वयेमहति क्षत्रियवंशे प्रसूतस्य समुपस्थितसमरविमुखत्वमनुचितमिति मन्वानः सन्नाह भारतेति तदनेन योगस्य छन्नमत्वं भगवतोऽनीश्वरत्वञ्च निराकृत्य कर्मादावकर्मादिदर्शनादात्मनः सम्यग्ज्ञानात् प्रणिपातादेर्बहिरङ्गाच्च यद्देकृताद्याप्तानर्थनिवृत्त्याब्रह्मभावमभिदधता सर्व्वस्मादुत्कृष्टे तस्मिन्नसंशयानस्याधिकारादशेषदोषवन्तं संशयं हित्वोत्तमस्य ज्ञाननिष्ठापरस्य कर्मनिष्ठेति स्थापितं ४२ इति आनन्दगिरिकृतटीकायां चतुर्थोऽध्यायः ४

स्वामिकृतटीका

तस्मादज्ञानेति यस्मादेवं तस्मादात्मनोऽज्ञानेन सम्भूतं हृदिस्थितमेनं संशयं शोकादिनिमित्तं देहात्मविवेकज्ञानखड्गेन छित्त्वा कर्मयोगमातिष्ठ आश्रय तत्र च प्रथमं प्रस्तुताय युद्धायोत्तिष्ठ हे भारतेति क्षत्रियत्वेन युद्धस्य धर्म्यत्वं दर्शितं पुमवस्थाभेदेन कर्मज्ञानमयी द्विधा निष्ठोक्ता येन तं वन्दे शौरिं संशयच्छिदं ४२

इति श्रीधरस्वामिकृतटीकायां चतुर्थोऽध्यायः ४

श्रीमद्भगवद्गीता।

## पञ्चमाध्यायः

अर्ज्जुनउवाच सन्यासं कर्म्मणां कृष्ण पुनर्योगञ्च शंससि यच्छ्रेय एतयो रेकं तन्मेब्रूहि सुनिश्चितं १

शाङ्करभाष्य

कर्म्मण्यकर्म्म यः पश्येदित्यारभ्य सयुक्तः कृत्स्नकर्म्मकृत् ज्ञानाग्निदग्धकर्माणं शारीरंकेवलंकर्म कुर्व्वन्यदृच्छालाभसन्तुष्टोब्रह्मार्पणं ब्रह्महविः कर्मजान्विद्धि तान्सर्व्वान्सर्व्वंकर्माखिलंपार्थज्ञानाग्निः सर्व्वकार्माणियोगसंन्यस्तकर्माणमित्यन्तै र्वचनैः सर्व्वकर्मसंन्यासमवोचद्भगवान् छित्त्वैनंसंशयंयोगमातिष्ठेत्यनेन वचनेन पुनर्योगञ्च कर्मानुष्ठानलक्षणमनुतिष्ठेत्युक्तवान् तयोरुभयोश्च कर्मानुष्ठानकर्म-

भाषा अनुवाद

कर्मयोग औ सन्न्यास योगमेंअर्ज्जून की संशय निवारन करिके अवजिते न्द्रियों को मोक्षपरता श्रीभगवान श्रीमद्भगवद्गीताकेपञ्चये अध्याय मेकहैंगे अज्ञान से उत्पन्न भई जो संशय तिस को ज्ञान खड्ग से छेदन करिके निष्काम कर्मयोग करो यह जो भगवान नें पुनर्व्वार कर्म करने को कहा तो पूर्व्वापर कहे आगू पीछू जो कर्मत्याग औ कर्म करने को भगवतकी आज्ञा तिस को विचारते हुये अर्ज्जुन कहते हैं कि हे कृष्ण ३ अध्याय के १७ स्लोक में जो आपने कहा कि यस्त्वात्मरतिरेव स्यात् और ४ अध्याय के ३३ स्लोकादि मे कहा कि सर्व्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते यह तत्वज्ञानी को सर्व्व कर्म का त्यागरूप सन्न्यास ही कहा और ४ अध्याय के ४२ स्लोक मे तस्माद ज्ञानसम्भूतं इत्यादि ज्ञानरूप असि से संशय छेदन करिके उठो और युद्ध करो यह कहि के फेरि कर्मयोग की आज्ञा देते हैं परन्तु ये दोनो परस्पर विरुद्ध हैं अर्थात् कर्म का करना और छोडना यह एक पुरुष को एक ही काल मे असम्भव है सो हे कृष्ण सन्न्यास अथवा कर्मयोग इन दोनो में जो करने से हम कृतार्थ होंय सो एक प्रकार निश्चय करिके कहो और कभी सन्नास कभूं कर्मयोग कहि कहि कर हमे सन्देह मे बार वार न डालो १

## शाङ्करभाष्य

संन्यासयोः स्थितिगतिवत् परस्परविरोधादेकेन सह कर्त्तुमशक्यत्वात् कालभेदेन चानुष्ठानविधानाभावादर्थादेतयोरन्यतरकर्त्तव्यतायां प्राप्तौ सत्यां यत् प्रशस्ततरमेतयोः कर्मानुष्ठानकर्मसंन्यासयोः तत् कर्त्तव्यं नेतरदित्येवं मन्यमानः प्रशस्यतरवुभुत्सयार्ज्जुनउवाच संन्यासंकर्मणांकृष्णेत्यादिना ननुचात्मविदोज्ञानयोगेन निष्ठांप्रतिपादयिष्यन्पूर्व्वोदाहृतैर्व्वचनैर्भगवान् सर्व्वकर्मसंन्यासमवोचन्नत्वनात्मज्ञस्यातश्च कर्म्मानुष्ठानकर्मसंन्यासयोर्भिन्नपुरुषविषयत्वादन्यतरस्यप्रशस्ततरत्ववुभुत्सयाप्रश्नोनुपपन्नः सत्यमेवंत्वदभिप्रायेणप्रश्नोनोपपद्यते प्रष्टुःस्वाभिप्रायेण पुनः प्रश्नोयुज्यतएवेतिवदामः कथंपूर्व्वोदाहृतैर्व्वचनैर्भगवता कर्मसन्न्यासस्य कर्त्तव्यतया विवक्षितत्वात् प्रधान्यमन्तरेणचकर्त्तारं तस्यकर्त्तव्यत्वासम्भवादनात्मविदपिकर्त्तापक्षेप्राप्तोऽनूद्यत इति नपुनरात्मवित्कर्त्तृकत्वमेवसन्न्यासस्यविवक्षितमित्येवंमन्वानस्यार्ज्जुनस्य कर्म्मानुष्ठानकर्म्मसन्न्यासयोरविद्वत्पुरुषकर्त्तृकत्वमप्यस्तीति पूर्व्वोक्तेनप्रकारेणतयोःपरस्परविरोधादन्यतरस्यकर्त्तव्यत्वेप्राप्तेप्रशस्यतरञ्चकर्त्तव्यंनेतरदिति प्रशस्ततरविविदिषयाप्रश्नोनानुपपन्नःप्रतिवचनवाक्यार्थनिरूपणेनापिप्रष्टुरभिप्रायएवमेवेति गम्यते कथंसन्न्यासकर्म्मयोगौनिःश्रेयसकरौ तयोस्तुकर्म्मसन्न्यासात् कर्मयोगोविशिष्यते इति प्रतिवचनमेतन्निरूप्यंकिमनेनात्मवित्कर्त्तृकयोःसन्न्यासकर्मयोगयोर्निःश्रेयसकरत्वं प्रयोजनमुक्त्वातयोरेवकुतश्चिद्विशेषात् कर्मसन्न्यासात् कर्मयोगस्यविशिष्टत्वमुच्यते आहोस्विदनात्मवित्कर्त्तृकयोःसंन्यासकर्मयोगयोःतदुभयमुच्यतइति किञ्चातोयद्यात्मवित्कर्त्तृकयोःकर्मसन्न्यासकर्मयोगयोर्निःश्रेयसकरत्वंतयोस्तुकर्मसन्न्यासात् कर्मयोगस्यविशिष्टत्वमुच्यते यद्विवानात्मवित्कर्त्तृकयोःसन्न्यासकर्मयोगयोस्तदुभयमुच्यतइति अत्रोच्यते आत्मवित्कर्त्तृकयोःसन्न्यासकर्मयोगयोरसम्भवात्तयोर्निःश्रेयसकरत्ववचनंतदीयाच्चसन्न्यासात् कर्मयोगस्यविशिष्टत्वाभिधानमित्येतदुभयमनुपपन्नं यद्यनात्मविदःकर्मसन्न्यासःतत्प्रतिकूलञ्चकर्मानुष्ठानलक्षणःकर्मयोगःसम्भवेतां तदातयोर्निःश्रेयसकरत्वोक्तिःकर्मयोगस्यचकर्मसंन्यासाद्विशिष्टत्वाभिधानमित्येतदुभयमुपपद्येत आत्मविदस्तुसन्न्यासकर्मयोगयोरसम्भवात्तयोर्निःश्रेयसकरत्वाभिधानंकर्मसन्न्यासाच्चकर्मयोगोविशिष्यतइतिचानुपपन्नमत्राह किमात्मविदःसन्यासकर्मयोगयोरप्यसम्भवआहोस्विदन्यतरस्यासम्भवःयदाचान्यतरस्यासम्भवस्तदाकिंकर्मसंन्यासस्योतकर्मयोगस्येत्यसम्भवेकारणञ्चवक्तव्यमिति अत्रोच्यतेआत्मविदोनिवृत्तमिथ्याज्ञानत्वाद्विपर्य्यय

शाङ्करभाष्यं

ज्ञानमूलस्यकर्म्मयोगस्यासम्भवःस्याद्यस्मादिसर्व्वविक्रियारहितत्वेननिःक्रियमात्मान
मात्मत्वेनयोवेत्तितस्यात्मविदःसम्यग्दर्शनेनास्तमिथ्याज्ञानस्यनिःक्रियात्मस्वरूपाव
स्थानलक्षणंसर्व्वकर्म्मसन्यासमुक्त्वा तद्विपरीतस्यमिथ्याज्ञानमूलककर्तृत्वाभिमान
पुरःसरस्यसक्रियात्मस्वरूपावस्थानरूपस्यकर्म्मयोगस्येहशास्त्रेतत्रतत्रात्मस्वरूपनिरू
पणप्रदेशेषुसम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधादभावःप्रतिपाद्यते यस्मात्तस्मादा
त्मविदोनिवृत्तमिथ्याज्ञानस्यविपर्य्ययज्ञानमूलःकर्मयोगोनसम्भवतीति युक्तमुक्तं
स्यात् केषुकेषुपुनरात्मस्वरूपनिरूपणप्रदेशेष्वात्मविदःकर्माभावःप्रतिपाद्यतइ
त्यत्रोच्यते अविनाशितुतदितिप्रकृत्य यएनम्वेत्तिहन्तारंवेदाविनाशिनंनित्यमि
त्यादौतत्रतत्रात्मविदःकर्माभावउच्यते ननुचकर्मयोगोप्यात्मस्वरूपनिरूपणप्रदेशे
तत्रतत्रप्रतिपाद्यतएवतद्यथातस्माद्युध्यस्वभारतस्वधर्ममपिचावेक्ष्य कर्मण्येवाधिका
रस्तेइत्यादावतश्चकथमात्मविदःकर्मयोगस्यासम्भवः स्यादिति अत्रोच्यतेसम्यग्
ज्ञानमिथ्याज्ञानतत्कार्यविरोधात् ज्ञानयोगेनसांख्यानामित्यनेनसांख्यानामात्म
तत्त्वविदामनात्मवित्कर्तृककर्मयोगनिष्ठातोनिःक्रियात्मस्वरूपावस्थानलक्षणाया
ज्ञानयोगनिष्ठायाःपृथक्करणात् कृतकृत्यत्वेनात्मविदःप्रयोजनान्तराभावात् तस्य
कार्य्यंनविद्यतइति कर्त्तव्यान्तराभाववचनाच्चनकर्मणामनारम्भात् सन्यासस्तुम
हावाहोदुःखमाप्तुमयोगतःइत्यादिवचनाच्चात्मज्ञानाङ्गत्वेनकर्मयोगस्यविधानात्
योगारूढस्यतस्यैवसमःकारणमुच्यतइत्यनेनचोत्पन्नसम्यग्दर्शनस्यकर्मयोगाभाव
वचनात् शारीरंकेवलंकर्मकुर्व्वन्नाप्नोति किल्बिषमितिच शरीरस्थितिकारणा
तिरिक्तस्यकर्मणोवारणात् नैवकिञ्चित् करोमीतियुक्तोमन्येततत्त्वविदित्यनेन
चशरीरस्थितिमात्रप्रयुक्तेष्वपि दर्शन श्रवणादिकर्मस्वात्मयाथात्म्यविदःकरोमीति
प्रत्ययस्य समाहितचेतस्तयासदाकर्त्तव्यत्वोपदेशादात्मतत्त्वविदःसम्यग्दर्शनेनवि
रुद्धोमिथ्याज्ञानहेतुकःकर्मयोगःस्वप्नेपिनसम्भावयितुंशक्यते यस्मात्तस्मादनात्मवि
त्कर्तृकयोरेवसंन्यासकर्मयोगयोर्निःश्रेयसकरत्ववचनं तदीयाच्चकर्मसंन्यासात्
पूर्व्वोक्तात्मवित्कर्तृकसर्व्वकर्मसंन्यासविलक्षणात् सत्येकर्तृत्वविज्ञानेकर्मैकदेश
विषयत्वात् यमनियमादिसहितत्वेनचदुरनुष्ठेयत्वात् सुकरत्वेनचकर्मयोगस्य
विशिष्टत्वाभिधानमित्येवंप्रतिवचनवाक्यार्थनिरूपणेनापि पूर्व्वोक्तःप्रष्टुरभिप्रायो
निश्चीयतेइति स्थितंज्यायसीचेत्कर्मणस्तइत्यत्र ज्ञानकर्मणोःसहासम्भवेयच्छ्रे
यएतयोस्तन्मेब्रूहिइत्येवंपृष्टोऽर्जुनेनभगवान्ज्ञानयोगेनसांख्यानांनिष्ठापुनःकर्मयो

शाङ्करभाष्यम्।

गेनयोगिनांनिष्ठाप्रोक्तेतिनिर्णयञ्चकार नचसंन्यसनादेवकेवलात्सिद्धिंसमधिग च्छतीतिवचनात् ज्ञानसहितस्यतस्यसिद्धिसाधनत्वमिष्टं कर्मयोगस्यचविधानात् ज्ञानरहितस्यसन्यासःश्रेयान् किम्वाकर्मयोगःश्रेयानित्येतयोर्विशेषवुभुत्सयार्जुनउवाच संन्यासंपरित्यागंकर्मणांशास्त्रीयाणामनुष्ठानविशेषाणांशंससि प्रशंससिकथयसीत्येतत् पुनर्योगञ्चतेषामेवानुष्ठानमवश्यंकर्त्तव्यं शंससतोमेकतरत् श्रेय इतिसंशयः किंकर्मानुष्ठानंश्रेयः किम्वातद्धानमितिप्रशस्यतरञ्चानुष्ठेयमतश्च यच्छ्रेयःप्रशस्यतरमेतयोःकर्मसन्यासकर्मानुष्ठानयोर्यदनुष्ठानात् श्रेयोवाप्तिर्मम स्यादितिमन्यसे तदेकमन्यतरत् सहैकपुरुषानुष्ठेयत्वासंभवान्मेब्रूहि सुनिश्चितमभिप्रेतं तवेति १

आनन्दगिरिकृतटीका।

पूर्वोत्तराध्याययोः सम्बन्धमभिदधानोवृत्तानुवदापूर्वकमर्जुनप्रश्नस्याभिप्रायं प्रदर्शयितुं प्रक्रमते कर्मणीत्यादिना इत्यारभ्यकर्मण्यकर्मदर्शनमुक्त्वातत्प्रशंसा प्रसारितेत्याह सयुक्तइति ज्ञानवन्तंसर्व्वाणिकर्माणिलोकसंग्रहार्थंकुर्व्वन्तंज्ञान लक्षणेनाग्निना दग्धसर्व्वकर्माणं कर्म्मप्रयुक्तफलसम्बन्धविधुरंविवेकवन्तोवदन्तीति ज्ञानवतो ज्ञानफलभूतंसंन्यासंविवक्षन्विविदिषोःसाधनरूपमपिसंन्यासंभगवान् विवक्षितवानित्याह त्यक्त्वेति निराशीरित्यारभ्यशरीरस्थितिमात्रकारणं कर्मशरीरस्थितावपिसङ्गरहितः सन्समाचरन्धर्माधर्म्मफलभागीनभवतीत्यपि पूर्वोत्तराभ्यामध्यायाभ्यां द्विविधंसंन्यासंसूचितवानित्याह शारीरमिति यदृच्छेत्यादावपिसंन्यासःसूचितः तद्धर्म्मफलायोपदेशादित्याह यदृच्छेति ज्ञानस्ययज्ञत्वसम्पादनपूर्व्वकंप्रशंसावचनादपिकर्म्मसंन्यासोदर्शितो ज्ञाननिष्ठस्येत्याह ब्रह्मार्पणमितिज्ञानयज्ञस्तुत्यर्थंविहितान्नानाविधान् यज्ञाननूद्य तेषांदेहादिव्यापारजन्यत्ववचनेनात्मनोनिर्व्यापारत्वविज्ञानफलाभिलाषादपियथोक्तमात्मानंविविदिषोः सर्व्वकर्मसंन्यासेऽधिकारोध्वनित इत्याह कर्म्मजानिति समस्तस्यैवावशेषवर्जितस्य कर्मणोज्ञानेपर्य्यवसानाभिधानाद्ब्रजिज्ञासोःसर्व्वकर्म्मसन्यासःसूचित इत्याह सर्व्वमिति तद्विद्धीत्यादिनाज्ञानप्राप्त्युपायंप्रणिपातादिप्रदर्श्य प्राप्तेनज्ञानेनातिशय साक्षात्प्रवतासर्व्वकर्म्मणांनिवृत्तिरेवेतिवदताच ज्ञानार्थिनःसन्यासेऽधिकारोदर्शितोभवतेत्याह ज्ञानाग्निरिति ज्ञानेनसमुच्छिन्नसंशयं तस्मादेवज्ञानात्कर्म्मा

## आनन्दगिरितटीका

णिसंन्यस्य व्यवस्थितमप्रमत्तं वशीकृतकार्य्यकरणसंघातवन्तं प्रातिभासिकानि कर्माणि न निवध्नन्ति इत्यपि द्विविधः संन्यासो भगवतोक्त इत्याह येनेति कर्माणीत्यारभ्य योगसंन्यस्तकर्माणमित्यन्तैरुदाहृतैर्वचनैरुक्तं संन्यासमुपसंहरतीत्यन्तैरिति तर्हि कर्मसंन्यासस्यैव जिज्ञासुना ज्ञानवता चादरणीयत्वात् कर्मानुष्ठानमनादेयमापन्नमित्याशङ्क्योक्तमर्थान्तरमनुवदति छित्त्वेनमिति कर्मतत्त्यागयोरुक्तयोरेकेनैव पुरुषेणानुष्ठेयत्वसम्भवान्नविरोधोऽस्तीत्याशङ्क्य युगपद्वाक्रमेण वानुष्ठानमिति विकल्प्याद्यं दूषयति उभयोश्चेति द्वितीयं प्रत्याह कालभेदेनेति उक्तयोर्द्वयोरेकेन पुरुषेणानुष्ठेयत्वासम्भवे कथं कर्त्तव्यत्वसिद्धिरित्याशङ्क्याह अर्थादिति द्वयोरुक्तयोरेकेन युगपत्क्रमाभ्यां अनुष्ठानानुपपत्तेरित्यर्थः अन्यतरस्य कर्त्तव्यत्वे कतरस्येति कुतो निर्णयो द्वयोः सन्निधानाविशेषादित्याशङ्क्याह यत् प्रशस्यतरमिति भगवता कर्मणां संन्यासो योगश्चोक्तो नच तयोः सत्युभयत्वानुष्ठानं तेनान्यतरस्य श्रेष्ठस्यानुष्ठेयत्वे तद्बुभुत्सया प्रश्नोपपत्तिरित्युपसंहरति इत्येवमिति नायं प्रष्टुरभिप्रायः कर्मसंन्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेयत्वस्योक्तत्वादेकस्मिन्पुरुषे प्राप्त्यभावादिति शङ्कते नन्विति चोद्यमङ्गीकृत्य परिहरति सत्यमेवमिति कीदृशस्तर्हि प्रष्टुरभिप्रायो येन प्रश्नप्रवृत्तिरिति पृच्छति कथमिति एकस्मिन्पुरुषे कर्मतत्त्यागयोरस्ति प्राप्तिरिति प्रष्टुरभिप्रायं प्रतिनिर्देष्टुं प्रारभते पूर्व्वोदाहृतैरिति यथा स्वर्गकामो यजेतेति स्वर्गकामोद्देशेन यागो विधीयते नतु तस्यैवाधिकारो नान्यस्येत्यपि प्रतिपाद्यते वाक्यभेदप्रसङ्गात्तथानात्मवित्कर्त्तृसंन्यासपक्षे प्राप्तोऽनूद्यते नत्वात्मवित्कर्त्तृकत्वमेव संन्यासस्य नियम्यते वैराग्यमात्रेणाज्ञस्यापि संन्यासविधिदर्शनात् तस्मात्कर्मतत्त्यागयोरविद्वत्कर्त्तृकत्वमस्तीति मन्वानस्यार्ज्जुनस्य प्रश्नः सम्भवतीति भावः भवतु संन्यासस्य कर्त्तव्यत्वविवक्षा तथापि कथं प्रशस्यतरबुभुत्सया प्रश्नप्रवृत्तिरित्याशङ्क्याह प्राधान्यमिति तथापि कथमेकस्मिन्पुरुषे तयोरप्राप्तावुक्ताभिप्रायेण प्रश्नवचनं प्रकल्प्यतेतत्राह अनात्मविदिति आत्मविदो विद्यासामर्थ्यात् कर्मत्यागध्रौव्यवदितरस्यापि सति वैराग्ये तत्त्यागस्यावश्यकत्वात् तत्कर्त्तासौ प्राप्तो वानूद्यते तथाच कर्मतत्त्यागयोरेकस्मिन्विदुषि प्राप्तेर्व्यक्तत्वादुक्ताभिप्रायेण प्रश्नप्रवृत्तिरविरुद्धेत्यर्थः संन्यासस्यात्मवित्कर्त्तृकत्वमेवात्र विवक्षितं किं न स्यादित्याशङ्क्य कल्पान्तरमपयुदासः संन्यासविधिस्तेत्यर्थभेदे वाक्यभेदप्रसङ्गान्नैवमित्याह नपुनरिति इतिशब्दो वाक्यभेदप्रसङ्गहेतुद्योतनार्थः

आनन्दगिरिकृतटीका ।

ततः किमित्याशंक्यफलितमाह एवमिति कर्मानुष्ठानकर्मसंन्यासयोरविद्वत्कर्तृ कत्वमप्यस्तीत्येवं मन्वानस्यार्जुनस्य प्रश्नश्च्यतरविविदिषयाप्रश्नोनानुपपन्नइति सम्बन्धः तयोःसमुच्चित्यानुष्ठानसम्भवेकथं प्रश्नश्चतरविविदिषेत्याशंक्याह पूर्वोक्तेनेति उभयोश्चेत्यादावुक्तप्रकारेणकर्मतत्त्यागयोर्मिथोविरोधान्नसमुच्चित्यानुष्ठानंसावकाशमित्यर्थः भवतुतर्हि यस्यकस्यचिदन्यतरस्यानुष्ठेयत्वमिति क्रुतोयथोक्ताभिप्रायेणप्रश्नप्रवृत्तिरित्याशंक्याह अन्यतरस्येति उभयप्राप्तौसमुच्चयानुपपत्त्याऽवन्यतरपरिग्रहे विशेषस्यान्वेष्यत्वादुक्ताभिप्रायेणप्रश्नोपपत्तिरित्यर्थः इतश्चाविद्वत्कर्तृकयोः संन्यासकर्मयोगयोःकर्तुःश्रेयानिति प्रष्टुरभिप्रायोभातीत्याह प्रतिवचनेति किंतत्प्रतिवचनं कथम्वातन्निरूपणमिति पृच्छति कथमिति तत्प्रतिवचनंदर्शयति संन्यासेति तन्निरूपणंकथयति एतदिति तदुभयंनिःश्रेयसकरत्वं कर्मयोगस्यश्रेष्ठत्वञ्चेत्यर्थः गुणदोषविभागविवेकायपृच्छति किञ्चेति अतोऽस्मिन्नाद्येपक्षेकिंदूषणं अस्मिन्वादितीयेपक्षे किंफलमितिप्रश्नार्थः तत्रसिद्धान्तीप्रथमपक्षेदोषमादर्शयति अनेत्यादिना तदेवानुपपन्नत्वंव्यतिरेकद्वाराविवृणोति यदीत्यादिना निःश्रेयसकरत्वोक्तिरित्यत्रपारम्पर्येणेतिद्रष्टव्यं विशिष्टत्वाभिधानमिति प्रतियोगिनोऽसहायत्वादस्यच शुद्धिद्वाराज्ञानार्थत्वादित्यर्थः आत्मज्ञस्य कर्मसंन्यासकर्मयोगयोरसम्भवेदर्शिते चोदयति यत्राहेति चोदयिता निर्द्धारणार्थंविवृणोति किमित्यादिना अन्यतरासम्भवेपिसन्देहात्प्रश्नोवतरतीत्याह यद्वावेति यस्यकस्यचिदन्यतरस्यासम्भवोभविष्यतीत्याशंक्यकारणमन्तरेणासम्भवोभवन्नतिप्रसङ्गःस्यादिति मन्वानःसन्नाह असम्भवइति आत्मविदःसकारणं कर्मयोगासम्भवंसिद्धान्तीदर्शयति अवेति संग्रहवाक्यं विवृणन्नात्मवित्त्वंविवृणोति जन्मादीति तस्य यदुक्तंनिवृत्तमिथ्याज्ञानत्वंतदिदानीं व्यनक्ति सम्यगिति विपर्ययज्ञानमूलस्येत्यादिनोक्तंप्रपञ्चयति निःक्रियेति यथोक्तसंन्यासमुक्त्वाततोविपरीतस्यकर्मयोगस्याभावःप्रतिपाद्यत इतिसम्बन्धः वैपरीत्यंस्फोरयन्कर्मयोगमेव विशिनष्टि मिथ्याज्ञानेति मिथ्याचतदज्ञानञ्चेत्यनाद्यनिर्वाच्यमज्ञानंतन्मूलोहं कर्त्तेत्यात्मनिकर्तृत्वाभिमानस्तज्जन्यस्तस्येति यावत् यथोक्तसंन्यासमुक्त्वा यथोक्तकर्मयोगस्यासम्भवप्रतिपादनेहेतुमाह सम्यग्ज्ञानेति क्रुतस्तदभावप्रतिपादनंतत्राह इहेति उक्तहेतुं तत्वात्मज्ञस्यकर्मयोगासम्भवेफलितमाह यस्मादिति इह

## आनन्दगिरिकृतटीका ।

शास्त्रे तत्रतत्रेत्यादावुक्तमेवव्यक्तीकर्त्तुं पृच्छति केष्विति तानेवप्रदेशान्दर्शयति अत्रेति आत्मस्वरूपनिरूपणप्रदेशेषुसंन्यासप्रतिपादनादात्मविदः संन्यासो विवक्षितश्चेत्तर्हि कर्मयोगोपितस्यकस्मान्नभवति प्रकरणाविशेषादिति शङ्कते ननुचेति आत्मविद्याप्रकरणेकर्मयोगप्रतिपादनमुदाहरति तद्यथेति प्रकरणादात्मविदोपि कर्मयोगस्यसम्भवेफलितमाह अतश्चेति आत्मज्ञानोपायत्वेनापि प्रकरणपाठसिद्धौ ज्ञानादूर्द्ध्वं न्यायविरुद्धं कर्म कल्पयितुमशक्यमितिपरिहरति अत्रोच्यतइति सम्यग्ज्ञान मिथ्याज्ञानयोस्तत्कार्ययोश्च भ्रमनिवृत्तिभ्रमसद्भावयोर्मिथोविरोधात् कर्त्तृत्वादिभ्रममूलंकर्म सम्यग्ज्ञानादूर्द्ध्वं नसम्भवतीत्यर्थः आत्मज्ञस्यकर्मयोगासम्भवेहेत्वन्तरमाह ज्ञानयोगेनेति इतश्चात्मविदोज्ञानादूर्द्ध्वंकर्मयोगो नयुक्तिमानित्याह कृतकृत्यत्वेनेति ज्ञानवतोनास्तिकर्मेत्यत्रकारणान्तरमाह तस्येति तर्हिज्ञानवताकर्मयोगस्यहेयत्ववज्जिज्ञासुनापितस्यत्याज्यत्वं ज्ञानप्राप्तप्रातस्यापि पुरुषार्थसिद्धेरित्याशंक्यजिज्ञासोरस्तिकर्मयोगापेक्षा इत्याह न कर्मणामिति स्वरूपोपकार्यङ्गसन्तरेणाङ्गिस्वरूपानिष्पत्तेर्ज्ञानार्थिनाकर्मयोगस्यशुद्ध्यादिद्वाराज्ञानहेतोरादेयत्वमित्यर्थः तर्हिज्ञानवतामपिज्ञानफलोपकारित्वेन कर्मयोगोऽभ्यनुज्ञायतामित्याशंक्याह योगारूढस्येति उत्पन्नसम्यग्ज्ञानस्यकर्माभावेशरीरस्थितिहेतोरपिकर्मणोऽसम्भवान्नतस्यशरीरस्थितिस्तदस्थितौचकुतोजीवन्मुक्तिस्तदभावेचकस्योपदेष्टृत्वंउपदेशाभावेच कुतोज्ञानोदयः स्यादित्याशंक्याह शरीरमिति विदुषोपि शरीरस्थितिरास्थिताचेत्तम्मात्प्रयुक्तेषुदर्शनश्रवणादिषु कर्त्तृत्वाभिमानोपितस्यस्यादित्याशंक्याह नैवेति तत्त्ववित्त्वित्यनेनच समाहितचेतस्तयाकरोमीतिप्रत्ययस्यसदैवकर्त्तव्यत्वोपदेशादितिसम्बन्धः यत्तुविदुषःशरीरस्थितिनिमित्तकर्माभ्यनुज्ञानेतस्मिन्कर्त्तृत्वाभिमानोपिस्यादिति तत्राह शरीरेति आत्मयाथात्म्यविदःतेष्वपिनाहंकरोमीति प्रत्ययस्यैवकिञ्चित्करोमीत्यादावकर्त्तृत्वोपदेशान्नकर्त्तृत्वाभिमानसम्भावनेत्यर्थः यथोक्तोपदेशानुसन्धानाभावेविदुषोपिकरोमीति स्वाभाविकप्रत्ययद्वारा कर्मयोगःस्यादित्याशंक्याह आत्मतत्त्वेति यद्यपिविद्वान्यथोक्तमुपदेशंकदाचिन्नानुसन्धत्ते तथापितत्वविद्याविरोधान्मिथ्याज्ञानं तन्निमित्तं कर्मवा तस्यसम्भावयितुमशक्यमित्यर्थः आत्मवित्कर्त्तृकयोःसंन्यासकर्मयोगयोरयोगात्तयोर्निःश्रेयसकरत्वमन्यतरस्यविशिष्टत्वमित्येतदयुक्तमिति

## आनन्दगिरिकृतटीका

सिद्धत्वात् द्वितीयंपक्षमङ्गीकरोति यस्मादित्यादिना तदीयाच्च कर्मसंन्यासात्क र्मयोगस्य विशिष्टत्वाभिधानमिति सम्बन्धः ननु कर्मयोगेन शुद्धबुद्धेः संन्यासो जायमानस्तस्मादुत्कृष्यते कथंतस्मात् कर्मयोगस्योत्कृष्टत्ववाचोयुक्तिर्युक्तेति तत्राह पूर्वोक्तेति वैलक्षण्यमेवस्फुटयति सत्येवेति स्वाश्रमविहितश्रवणादौकर्त्तृत्वविज्ञानेसत्येवपूर्व्वाश्रमोपात्तकर्मैकदेशविषयसंन्यासात् कर्मयोगस्यश्रेयस्त्ववचनंनैतद्यथाब्राह्मणस्यास्ति वित्तमित्यादिस्मृतिविरुद्धमित्याशंक्याह यमनियमादिति आनृशंस्यंक्षमासत्यमहिंसादमआर्ज्जवंप्रीतिःप्रसादोमाधुर्यमक्रोधश्च यमादश दानमिज्यातपोध्यानंस्वाध्यायोपस्थनिग्रहौ व्रतोपवासोमौनञ्च स्नानञ्च नियमादश इत्युक्तैर्यमनियमैरन्यैश्चाश्रमधर्म्मैर्व्विशिष्टत्वेनानुष्ठातुमशक्यत्वादुक्तसंन्यासात् कर्मयोगस्यविशिष्टत्वोक्तिर्युक्तेत्यर्थः नहिकश्चिदितिन्यायेन कर्मयोगस्येतरापेक्षयासुकरत्वाच्च तस्यविशिष्टत्ववचनं श्लिष्टमित्याह सुकरत्वेनचेति प्रतिवचनवाक्यार्थालोचनात् सिद्धमर्थमुपसंहरति इत्येवमिति संन्यासकर्मयोगयोर्मिथोविरुद्धयोः समुच्चित्यानुष्ठातुमशक्ययोरन्यतरस्यकर्त्तव्यत्वेप्रशस्यतरस्य तद्भावातद्भावस्य चानिर्द्धारितत्वात्तन्निर्द्धारयिषयाप्रश्नः स्यादिति प्रश्नवाक्यार्थपर्य्यालोचनयाप्रष्टुरभिप्रायोयथापूर्व्वमुपदिष्टस्तथाप्रतिवचनार्थनिरूपणेनापि तस्यनिश्चितत्वात् प्रश्नोपपत्तिःसिद्धेत्यर्थः ननुतृतीयेयथोक्तप्रश्नस्य भगवतानिर्णीतत्वान्नात्र प्रश्नप्रतिवचनयोः सावकाशत्वमित्याशंक्यविस्तरेणोक्तमेवसम्बन्धंपुनःसंक्षेपतोदर्शयति ज्यायसी चेदिति सांख्ययोगयोर्भिन्नपुरुषानुष्ठेयत्वेननिर्णीतत्वान्नपुनःप्रश्नयोग्यत्वमित्यर्थः इतोपिनतयोःप्रश्नविषयत्वमित्याह नचेति एवकारविशेषणाज्ज्ञानसहितसंन्यासस्य सिद्धिसाधनत्वंभगवतोभिमतं छित्त्वैनंसंशयंयोगमातिष्ठेतिचकर्मयोगस्य विधानात्तस्यापिसिद्धिसाधनत्वमिष्टंततश्चनिर्णीतत्वान्नप्रश्नस्तद्विषयःसिद्ध्यतीत्यर्थः केनाभिप्रायेणतर्हि प्रश्नःस्यादित्याशंक्य ज्ञानरहितसन्न्यासात् कर्मयोगस्यप्रशस्यतरत्वबुभुत्सयेत्याह ज्ञानरहितइति प्रष्टुरभिप्रायमेवंप्रदर्श्यप्रश्नोपपत्तिमुक्त्वाप्रश्नमुत्थापयति सन्न्यासमिति तर्हि इदंत्वयानुष्ठेयमित्याशंक्य तदशक्तेरुक्तत्वात् प्रशस्यतरस्यानुष्ठानार्थं तदिदमिति निश्चित्यवक्तव्यमित्याह यच्छ्रेयइति काम्यानां प्रतिषिद्धानाञ्च कर्मणांपरित्यागोसन्न्योच्यते नसर्व्वेषामित्याशंक्यकर्मण्यकर्मेत्यादौविशेषदर्शनात्मैवमित्याह शास्त्रीयाणामिति अस्तुतर्हि शास्त्रीयाशास्त्रीययोरशेषयोरपिकर्मणोस्त्यागोनेत्याह पुनरिति तर्हि कर्मत्यागस्तद्योगश्चेत्युभयमादर्शितव्यमित्याशंक्य

श्रीभगवानुवाच संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते २

आनन्दगिरिकृतटीका।

विरोधान्मैनमित्यभिप्रेत्याह अतइति द्वयोरेकेनानुष्ठानायोगस्योक्तत्वात्कर्त्तव्यत्वोक्तेश्चसंशयोजायते तमेवसंशयंविशदयति किंकर्मेति प्रशस्यतरवुभुत्साकिमर्थैत्याशंक्याह प्रशस्यतरञ्चेति तस्यैवानुष्ठेयत्वेप्रशंसावकाशत्वमाह अतश्चेति तदेवप्रशस्यतरंविशिनष्टि यदनुष्ठानादिति तदेकमन्यतरमस्मै ब्रूहीतिसम्बन्धः उभयोरुक्तत्वेसति किमित्येकंवक्तव्यमितिनियुज्यतेतत्राह सहेति कर्मतत्त्यागयोर्मिथोविरोधादित्यर्थः १

स्वामिकृतटीका।

निवार्यसंशयंजिष्णोःकर्मसंन्यासयोगयोः जितेन्द्रियस्यचयतेः पञ्चमेमुक्तिमब्रवीत् अज्ञानसम्भूतं संशयंज्ञानासिना छित्त्वाकर्मयोगमातिष्ठेत्युक्तंतत्रपूर्व्वापरविरोधंमन्वानोऽर्जुनउवाचसंन्यासमिति यस्त्वात्मरतिरेवस्यादित्यादिना सर्व्वंकर्म्माखिलंपार्थेत्यादिनाच ज्ञानिनः कर्मसंन्यासंकथयसिज्ञानासिनासंशयंछित्त्वायोगमातिष्ठेतिपुनर्योगञ्चकथयसि नचकर्मसंन्यासःकर्मयोगश्चैकस्यैकदैवासम्भवतोविरुद्धस्वरूपत्वात्तस्मादेतयोर्मध्ये एकस्मिन्ननुष्ठातव्येसतिममयच्छ्रेयःसुनिश्चितं तदेकंब्रूहि १

भाषा अनुवाद।

अर्जुनकीइसप्रश्नकाउत्तर श्रीभगवानकहतेहैं किहेअर्जुन हमवेदान्ती तत्वज्ञानीकेप्रति कर्मयोग करनानहींकहते हैं क्योंकि तत्त्वज्ञानीकोकर्म त्यागके उपदेशदेनेसे विरोधपडेगा परन्तुदेहआदिमेआत्मअभिमानीतुमको जोवन्धुवधनिमित्तशोकमोहसे उत्पन्नसंशय तिसकोस्थूलशरीरऔ आत्माकी विवेकरूपज्ञानखड्गसे छेदनकेअनन्तर तत्त्वज्ञानउत्पन्नहोनेका उपायरूपयो निष्कामकर्मयोग सोईअनुष्ठानकरनेकोकहा है देखोनिःकामकर्मकरनेसे चित्त शुद्धहोके तत्त्वज्ञानउत्पन्नहोनेपर ज्ञानकेपरिपाकार्थ ज्ञाननिष्ठाकाअङ्गभूतकर्मकेत्यागकोमैनेकहा है परन्तुज्ञानमार्गमेआरूढपुरुषको कर्मकात्याग औरअनारूढपुरुषकोजोभगवदाराधन निःकामकर्मयोगकहा सोईकहतेहैं किसंन्यासऔ कर्मयोग येदोनोनिःश्रेयसमुक्तिकेकरनेवालेहैं परन्तु दोनोकेवीच संन्याससे कर्मयोगहीअधिकहै जिसहेतु कर्मयोगसेज्ञानप्राप्तहोके तवसंन्यासअर्थात् कर्मकात्याग विहितहै औरपहिलेहीत्याग नही कहागयाहै २

ज्ञेयःसनित्यसंन्यासीयोनद्वेष्टिनकांक्षति निर्द्वन्द्वोहिमहाबाहोसुखंबन्धात्प्रमुच्यते ३

शाङ्करभाष्यं।

स्वाभिप्रायमाचक्षाणोनिर्णयायश्रीभगवानुवाच संन्यासइति संन्यासःकर्मणां परित्यागःकर्मयोगश्चतेषामनुष्ठानंतावुभावपिनिःश्रेयसकरौनिःश्रेयसं मोक्षंकुर्वाते ज्ञानोत्पत्तिहेतुत्वेनउभौयद्यपिनिःश्रेयसकरौ तथापि तयोस्तुनिःश्रेयसहेत्वोः कर्मसंन्यासात् केवलात् कर्मयोगोविशिष्यते इतिकर्मयोगंस्तौति २

आनन्दगिरिकृतटीका।

प्रश्नमेवमुत्थाप्यप्रतिवचनमुत्थापयति स्वाभिप्रायमिति निर्णयायतद्द्वारेणाप रस्यसंशयनिवृत्त्यर्थमित्यर्थः एवंप्रश्नेप्रवृत्तेकर्मयोगस्यसौकर्यमभिप्रेत्य प्रशस्यतरत्वमभिवित्सुर्भगवान्प्रतिवचनंकिमुक्तवानित्याशंक्याह संन्यासइति उभयोरपि तुल्यत्वंशङ्कावारयति तयोस्त्विति कथंतर्हिज्ञानस्यैवमोक्षोपायत्वंविवक्ष्यते तत्राह ज्ञानोत्पत्तीति तर्हिद्वयोरपिप्रशस्यत्वमप्रशस्यत्वंवातुल्यत्वमित्याशंक्याह उभाविति ज्ञानसहायस्यकर्मसन्न्यासस्यकर्मयोगापेक्षयाविशिष्टत्वविवक्षयाविशिनष्टि केवलादिति २

स्वामिकृतटीका।

अत्रोत्तरंश्रीभगवानुवाच संन्यासइति अयमाभावःनहिवेदान्तवेद्य त्मतत्त्वज्ञंप्रति कर्मयोगमहंब्रवीमि यतःपूर्वोक्तेनसंन्यासेनविरोधःस्यात् अपितुदेहात्माभिमानिनंत्वांबन्धुवधादिनिमित्तशोकमोहादिकृतमेनं संशयंदेहात्मविवेकज्ञानासिनाछित्वापरमात्मज्ञानोपायभूतंकर्मयोगमातिष्ठेति ब्रवीमि कर्मयोगेन शुद्धचित्तस्यात्मतत्त्वज्ञाने जाते सति तत्परिपाकार्थंज्ञाननिष्ठाङ्गत्वेनसंन्यासःपूर्वमुक्तःएवञ्चसत्यङ्गप्रधानयोर्विकल्पायोगात् संन्यासःकर्मयोगश्चेत्येतावुभावपिभूमिकाभेदेनसमुच्चितावेवनिःश्रेयसंसाधयतः तथापितयोर्मध्येकर्मसंन्यासात् सकाशात् कर्मयोगोविशिष्टोभवतीति २

भाषाऽनुवाद।

जोसंन्याससेकर्मयोगकोविशेषकहाथोइसकर्मयोगकोप्रसंशाकरतेकहते हैं किजोकर्मकरताहुआभी नकिसीसेवैरकरताओनकुछचाहताहै तथासुखदु खहानिलाभद्वन्द्वभावसेरहितहै सोईनित्यसन्यासीहै औरसंसारबन्धनसेछूटजाताहै अथवा सन्यासीकेऐसेआचरणकरताहुआजोरागद्वेषरहितकर्मकरताहै सोनित्यसन्यासीकहेनिश्चयसन्यासीऔरसन्यासीतोसन्यासीहीहैं क्योंकि कर्मसन्यासश्रेष्ठहै इहांएकसन्यासीपक्षपरहै दूसरासंन्यासपरजानो ३

## शाङ्करभाष्यं।

कस्मादित्याह ज्ञेयोज्ञातव्यःसकर्मयोगीनित्यसंन्यासीति योनद्वेष्टिकिञ्चिन्नकांक्षिति दुःखसुखेतत्साधनेचैवम्बिधोयःकर्मणिवर्त्तमानोपिसनित्यसंन्यासीति ज्ञातव्यइत्यर्थः निर्द्वन्द्वोद्वन्द्ववर्ज्जितोहियस्मान्महावाहोसुखंवन्धादनायासेनप्रमुच्यते ३

## आनन्दगिरिकृतटीका।

कर्म्महिवन्धकारणंप्रसिद्धं ततकथंनिःश्रेयसकरं स्यादितिशङ्कते कस्मादितिश्रुतात्मविज्ञानात् प्रागपिसर्व्वदासौसन्न्यासोज्ञेयोयोरागद्वेषौक्वचिदपिनकरोतीत्याह इत्याहेति यथाननुष्ठीयमानानिकर्माणिसन्न्यासिनंननिवध्नन्तिकृतानिच वैराग्येन्द्रियसंयमादीनिफलाभिसन्धिरहितानितथैवानभिसंहितफलानिनित्यनैमित्तिकानियोगिनमपिननिवध्नन्तिनिवर्तयन्ति चसञ्चितंदुरितमित्यभिप्रेत्याहनिर्द्वन्द्वोहीतिकर्मयोगिनोनित्यसंन्यासित्वज्ञानमन्यथाज्ञानत्वान्मिथ्याज्ञानमित्यशंक्याह एवम्बिधइति कर्मिणोपिरागद्वेषाभावेनसंन्यासित्वंज्ञातुमुचितमित्यर्थः रागद्वेषरहितस्यानायासेनवन्धप्रध्वंससिद्धेश्चयुक्तंतस्यसंन्यासित्वमित्याह निर्द्वन्द्वइति ३

यदुक्तं संन्यासकर्मयोगयोःनिःश्रेयसकरत्वं तदाक्षिपति ननुसंन्यासेति तत्रोत्तरत्वेनोत्तरश्लोकमवतारयति इति प्राप्तइति विवेकिनस्तर्हिकथंवदन्तीत्याकांक्षायामाह एकमिति संख्यामात्मसमीक्षामर्हतीति सांख्यंसंन्यासोयोगस्तुकर्मयोगस्तावुभावपिपृथगित्यस्यार्थमाह विरुद्धेति शास्त्रार्थविवेकशून्यत्वंवाल्यत्वं उत्तरार्द्धमवतारयितुं भूमिकांकरोति पण्डितास्त्विति ज्ञानिनोयोगिनश्चेतिशेषः द्वयोरविरुद्धफलत्वमेवप्रश्नपूर्व्वकंप्रकटयति कथमित्यादिना एकंसाधनमनुष्ठितवतोद्वयोरपिफलंभवतीति विरुद्धमित्याशंक्याह उभयोरिति सांख्ययोगयोःसन्न्यासकर्मानुष्ठानयोस्तत्त्वज्ञानद्वारानिःश्रेयसफलत्वान्नविरुद्धफलत्वशंकाइत्यर्थः सांख्ययोगयोरैकफलत्ववचनंप्रकरणाननुगुणमिति शङ्कते नन्विति अप्रकृतमसिद्धमिति परिहरति नैषदोषइति संन्यासंकर्मणामित्यादिनासंन्यासंकर्मयोगञ्चाङ्गी

## स्वामिकृतटीका।

कुतइत्यपेक्षायांसंन्यासित्वेनकर्मयोगिनंस्तुवंस्तस्यश्रेष्ठत्वंदर्शयति ज्ञेयइति रागद्वेषादिराहित्येनपरमेश्वरार्थंकर्माणियोऽनुतिष्ठति सनित्यंकर्मानुष्ठानकालेऽपिसंन्यासीत्येवज्ञेयः तत्रहेतुःनिर्द्वन्द्वोरागद्वेषादिद्वन्द्वशून्योहिशुद्धचित्तोज्ञानद्वारासुखमनायसेनैवसंसारात् प्रमुच्यते ३

## शाङ्करभाष्य

ननुसन्न्यासकर्मयोगयोर्भिन्नपुरुषानुष्ठेययोर्व्विरुद्धयोःफलेपिविरोधोयुक्तोन तूभयोर्निःश्रेयसकरत्वमेवेति प्राप्तइदमुच्यते सांख्ययोगाविति सांख्ययोगौपृथक्विरुद्धभिन्नफलौबालाःप्रवदन्ति नपण्डिताःपण्डितास्तुज्ञानिनएकंफलमविरुद्धमिच्छन्तिकथमेकमपिसांख्ययोगयोःसम्यगास्थितः सम्यगनुष्ठितवानित्यर्थःउभयोर्व्विन्दतेफलमुभयोस्तदेवहिनिःश्रेयसंफलमतोनफलेविरोधोस्ति ननुसंन्न्यासकर्मयोगशब्देनप्रस्तुत्यसांख्ययोगशब्दयोःफलैकत्वंकथमिहाप्रकृतंब्रवीति नैषदोषःयद्यप्यर्ज्जुनेनसंन्न्यासंकर्मयोगञ्चकेवलमभिप्रेत्यप्रश्नःकृतोभगवांस्तुतदपरित्यागेनैवस्वाभिप्रेतञ्चविशेषंसंयोज्यशब्दान्तरवाच्यतयाप्रतिवचनंददौ सांख्ययोगाविति तावेवसंन्न्यासकर्मयोगौज्ञानतदुपायसमबुद्धित्वादिसंयुक्तौ सांख्ययोगशब्दवाच्याविति भगवतोमतमतोनाप्रकृतप्रक्रियेति ४

## आनन्दगिरिकृतटीका

कृत्यप्रश्नेसन्न्यासःकर्मयोगश्चेत्यादिनातथैवप्रतिवचनेचकथंसांख्ययोगयोरेकफलत्वमप्रकृतंनभवतीत्युच्यते तत्राह यद्यपीति प्रतिवचनमपितदनुरूपमेवभगवतानिरूपितमिति विशेषानुपपत्तिरित्याशंक्याह भगवांस्त्विति तदपरित्यागेनेत्यत्रतत्पदेनप्रष्टाप्रतिनिर्द्दिष्टौकर्मसन्न्यासकर्मयोगावुच्येते सांख्ययोगाविति शब्दान्तरवाच्यतयातयोरेवसन्न्यासकर्मयोगयोरत्यागेनस्वाभिप्रेतञ्चविशेषंसंयोज्यभगवान्प्रतिवचनंसन्ददाविति योजना यदुक्तंस्वाभिप्रेतञ्चविशेषंसंयोज्येति तदेवव्यक्तीकरोति तावेवेति समबुद्धित्वादीत्यादिशब्देनज्ञानोपायभूतःशमादिरादीयते प्रकृतयोरेवसन्न्यासकर्मयोगयोरुपादानेफलितमाह अतइति सांख्ययोगावित्यादिश्लोकव्याख्यानसमाप्तिरितिशब्दार्थः ४

## स्वामिकृतटीका ।

यस्मादेवमङ्गप्रधानत्वेनोभयोरवस्थाभेदेनक्रमसमुच्चयोऽतोविकल्पमङ्गीकृत्योभयोःकःश्रेष्ठइति प्रश्नोऽज्ञानामेवोचितःनविवेकिनामित्याह सांख्ययोगाविति सांख्यशब्देनज्ञाननिष्ठावाचिनातदङ्गंसन्न्यासंलक्षयति सन्न्यासकर्मयोगावेकफलौसन्तौपृथक्स्वतन्त्राविति बालाअज्ञाएवप्रवदन्ति नतुपण्डिताः तत्रहेतुःअनयोरेकमपिसम्यगास्थितआश्रितवानुभयोःफलमाप्नोति तथाहि कर्मयोगंसम्यगनुतिष्ठन्शुद्धचित्तःसन्ज्ञानद्वारायदुभयोःफलंकैवल्यंतद्विन्दतीति सन्न्यासंसम्यगास्थितोऽपिपूर्व्वमनुष्ठितस्यकर्मयोगस्यापिपरम्परया यत्फलंकैवल्यंतद्विन्दतीति नपृथक्फलत्वमनयोरित्यर्थः ४

सांख्ययोगौपृथग्बालाःप्रवदन्तिनपण्डिताः एकमप्यास्थितःसम्यगुभयोर्विन्दतेफलं ४

## शाङ्करभाष्य

एकस्यापिसम्यगनुष्ठानात् कथमुभयोःफलंविन्दत इत्युच्यते यदिति यत् सांख्यैर्ज्ञाननिष्ठैःसंन्यासिभिः प्राप्यते स्थानंमोक्षाख्यं तद्योगैरपिज्ञानप्राप्त्युपाय त्वेनेश्वरेसमर्प्यकर्म्माणिआत्मनःफलमनभिसन्धायानुतिष्ठन्ति येते योगिनःतैरपि परमार्थज्ञानसन्न्यासप्राप्तिद्वारेणगम्यत इत्यभिप्रायोऽत एकंसांख्यञ्चयोगञ्चयः पश्यति सपश्यति फलैकत्वात् सम्यक् पश्यतीत्यर्थः ५

## आनन्दगिरिकृतटीका

प्रश्नपूर्व्वकंश्लोकान्तरमवतारयति एकस्यापीति केचिद्द्वैवतयोरेकफलत्त्वंपश्य न्तीत्याशंक्यतेषामेवसम्यग्दर्शित्वंनेतरेषामित्याह एकमिति तिष्ठत्यस्मान्नच्यवते पुनरिति व्युत्पत्तिमाश्रित्याह मोक्षाख्यमिति योगशब्दार्थमाह ज्ञानप्राप्तीति येहि जिज्ञासवःसर्व्वाणिकर्म्माणिभगवत्प्रीत्यर्थत्वेनकुर्वन्तितेषांफलाभिलाषमकृत्वा ज्ञानप्राप्तौ बुद्धिशुद्धिद्वारेणोपायत्वेनानुतिष्ठन्तितेत्र योगाविवक्ष्यन्ते अच्प्रत्ययस्य मत्वर्थत्वं गृहीत्वोक्तंयोगिनइति सर्व्वोपिद्वैतप्रपञ्चोनवस्तुभूतोमायाविलासत्वा दात्मत्वविक्रियोऽद्वितीयोवस्तुसन्निति प्रयोजकज्ञानंपरमार्थज्ञानंतत्पूर्व्वकसन्न्यास द्वारेणकर्म्मिभिरपितदेवस्थानंप्राप्यमित्येकफलत्वं सन्न्यासकर्म्मयोरविरुद्धमित्याह तैरपीति फलकत्वं फलितमाह अत इति ५

## भाषाअनुवाद

जिसहेतुसंन्यासऔकर्मयोग दोनोप्रधानअङ्गरूपअवस्थाभेदमेपायेजाते हैं इससे इनमेकौनश्रेष्ठऐसापूछना अज्ञानीकोतोउचितहोसकताहै परज्ञानीकोतो नहीं वहीकहतेहैं किज्ञाननिष्ठाजोसांख्य औउसीकाअङ्गरूपसंन्यास तथासं न्यासमेलक्षित कर्म्मयोगभीसन्यासहै इनदोनोकाफलएकहीहै तोभीदोनोभिन् नहैं यहकेवलअज्ञानीकहतेहैं औपण्डितऐसानहींकहते देखो इनमेएकपक्ष काआश्रयलेनेवालापुरुष दोनोके फलकोपाप्तहोताहै जैसे लोगनिःकामकर्म्मक रतेशुद्धचित्तहो तत्त्वज्ञानपाप्तिकेद्वाराउनदोनोकाफलजोकैवल्यसोलाभकरतेहैं ऐसेहीसवकर्म्मत्यागरूपसंन्यासधारीलोगभी परम्परारूपजोकैवल्यमोक्षसोपाव तेहैं तोअलवतादोनोकाफलपृथक्नहींहै सोईकहाकि सांख्यऔयोगकोबालक कहेअज्ञानीजन भिन्नकहते औरपण्डितनहींकहतेहैं एकमेभीअच्छीतरहसं स्थितहोके फलदोनोकाभी पावतेहैं इससेदोनोएकहैं ४

यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते
एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति ५

## शाङ्करभाष्यं

एवंतर्हि योगात् सन्न्यासएवविशिष्यते कथंतर्हि एवमुक्तंतयोस्तु कर्म्मसंन्या सात् कर्म्मयोगोविशिष्यते इतिशृणु तत्र कारणन्त्वयापृष्टंकेवलंकर्मसन्न्यासंकर्म योगञ्चाभिप्रेत्यतयोरन्यतरःकःश्रेयानिति तदनुरूपंप्रतिवचनंमयोक्तं कर्मसन्न्या सात् कर्मयोगोविशिष्यत इति ज्ञानमनपेक्ष्य ज्ञानापेक्षस्तु सन्न्यासःसांख्यमिति ममाभिप्रेतः परमार्थयोगस्तुसएवयस्तुकर्मयोगोवैदिकःसचतादर्थ्याद्योगःसन्न्यास इति चोपचर्य्यते कथंतादर्थ्यमित्युच्यते सन्न्यासइति सन्न्यासस्तुपारमार्थिकोहे महाबाहो दुःखमाप्तुमयोगतः योगेनविनायोगयुक्तो वैदिकेनकर्मयोगेनईश्वरस मर्पितरूपेणाफलनिरपेक्षेणतेनयुक्तो मुनिर्मननादीश्वरस्वरूपस्यमुनिर्ब्रह्मपरमात्म ज्ञाननिष्ठालक्षणत्वात् प्रकृतः सन्न्यासोब्रह्मोच्यते न्यासइतिब्रह्म ब्रह्महिपर इतिश्रुतेः ब्रह्मपरमार्थसंन्यासं परमात्मज्ञाननिष्ठालक्षणंनचिरेणक्षिप्रमेवाधिग च्छतिप्राप्नोत्यतोमयोक्तं कर्मयोगोविशिष्यतइति ६

## स्वामिकृतटीका।

एतदेवस्फुटयति यत् सांख्यैरिति सांख्यैर्ज्ञाननिष्ठैःसन्न्यासिभिर्यत्स्थानंमो क्षाख्यं प्रकर्षेणसाक्षादवाप्यते योगैरिति अर्शआदित्वान्मत्वर्थीयोऽत्प्रत्ययोद्रष्टव्य स्तेनकर्म्मयोगिभिरपि तदेवज्ञानद्वारेणगम्यतेऽवाप्यत इत्यर्थः अतःसांख्यञ्चयोग ञ्चैकफलत्वेनैकंयः पश्यति सएवसम्यक्पश्यति ५

## भाषा अनुवाद

सांख्यऔयोगदोनोमेसेएककेसम्यकअनुष्ठानकरनेसेदोनोकाफलकिसतरह प्राप्तहोता है इससंज्ञापरसांख्यऔयोगकाएकफलत्व प्रकाशकरते हुये कहते हैं किसांख्यकहे ज्ञाननिष्ठसन्न्यासीजोमोक्षपदपावतेहैं सोईपदयोगशब्दवाच्य कर्मयोगीभीज्ञानकेद्वाराप्राप्तहोतेहैं इससेएकहीफलके हेतुरूपसन्न्यासऔयोग को जोएकरूपदेखतेहैं तेईसम्यक् दर्शीहैं सोईकहाकि जोपदसांख्यलोगपाव तेसोई योगीपुरुषों कोभिमिलताहै और सांख्ययोगदोनोजोएकदेखतेसोदेखते हैं वाकीसूरदासहैं अथवाजोकोईविरलेऐसेदेखतेहैं तोवेनहींवैसेदेखते हैं ५

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ६

## आनन्दगिरिकृतटीका

यदि यथोक्तज्ञानपूर्वकसंन्यासद्वारा कर्मिणामपि श्रेयोवाप्तिरिष्टा तर्हि संन्यासस्यैव श्रेयस्त्वप्राप्तमिति चोदयति एवंतर्हीति संन्यासस्य श्रेष्ठत्वे कर्मयोगस्य प्रशस्यत्ववचनमनुचितमित्याह कथंतर्हीति पूर्वोक्तमेवाभिप्रायंस्मारयन् परिहरति शृणिवति कर्मयोगस्यविशिष्टत्ववचनंतत्रेतिपरामृष्टं तदेवकारणंकथयति त्वयेत्यादिना केवलंविज्ञानरहितमिति यावत् तयोरन्यतरःकः श्रेयानिति इति शब्दोऽध्याहर्त्तव्यः त्वदीयंप्रश्नमङ्गस्यतदनुगुणंप्रतिवचनं ज्ञानमनपेक्ष्यतद्रहितात् केवलादेवसंन्यासात् योगस्यविशिष्टत्वमिति यथोक्तमित्याह तदनुरूपमिति ज्ञानापेक्षः संन्यासस्तर्हि कीदृगित्याशंक्याह ज्ञानेति तर्हि कर्मयोगेकथंयोगशब्दः संन्यासशब्दोवाप्रयुज्यते तत्राह यस्त्विति तादर्थ्यात् परमार्थज्ञानशेषत्वादिति यावत् तदेवतादर्थ्यं प्रश्नपूर्वकंप्रसाधयति कथमित्यादिना कर्मानुष्ठानाभावेबुद्धिशुद्ध्यभावात् परमार्थसंन्यासस्यसम्यग्ज्ञानात्मनोनप्राप्तिरिति व्यतिरेकमुपन्यस्यान्वयमुपन्यस्यति योगेति पारमार्थिकः सम्यग्ज्ञानात्मकःसामग्र्याभावेकार्य्यंप्राप्तिरयुक्तेति मत्वाह दुःखमिति योगयुक्तत्वंव्याचष्टेवैदिकेनेति ईश्वरस्वरूपसमर्पणविशेषस्येतिशेषः ब्रह्मेति व्याख्येयंपदमुपादायव्याचष्टेप्रकृतइति तत्रब्रह्मशब्दप्रयोगेहेतुमाहपरमात्मेति लक्षणशब्दोगमकविषयः संन्यासेब्रह्मशब्दप्रयोगेतैत्तिरीयकश्रुतिंप्रमाणयति न्यासइति कथंसंन्यासेहिरण्यगर्भवाचीब्रह्मशब्दप्रयुज्यते द्वयोरपिपरत्वाविशेषादित्याह ब्रह्महीति ब्रह्मशब्दस्यसंन्यासविषयत्वेफलितंवा

## भाषा अनुवाद।

जो ऐसा है कि योगी लोगों को भी शेष में सन्यास ही से ज्ञाननिष्ठा होती औ ज्ञान के द्वारा मोक्षपद पावते तो फिर सन्यास से कर्मयोग को अधिक क्यों पीछे कहा उचित है कि प्रथम ही से संन्यास करै इस संशययुक्त अर्ज्जुन के प्रति भगवान कहते हैं कि प्रथम कर्मयोग के किये विना हे महाबाहो अर्ज्जुन संन्यास का अभ्यास करना अति कठिन औ दुःख का मूल है क्योंकि चित्तशुद्ध भये विना ज्ञान होना असम्भव है परन्तु कर्म के अनुष्ठान करने वाले मुनि लोग चित्तशुद्धि के द्वारा सन्यासी हो अर्थात् कर्म छोड़कर अचिरा तक हे शीघ्र ही ब्रह्मपद को प्राप्त होते हैं या वे ब्रह्मरूप हो जाते हैं इससे चित्तशुद्धि के पहले निष्काम कर्म करना हीं सन्यास से श्रेष्ठ होता है तुमारी समझ में फिर है ६

योगयुक्तोविशुद्धात्माविजितात्माजितेन्द्रियः सर्व्वभूतात्मभूतात्माकुर्व्वन्नपिन लिप्यते ७

## शाङ्करभाष्यं

यदापुनरयंसम्यग्दर्शनप्राप्त्युपायत्वेन योगेति योगेनयुक्तोविशुद्धात्माविशुद्धचित्तो विजितात्माविजितदेहोजितेन्द्रियश्च सर्व्वभूतात्मासर्व्वेषांब्रह्मादीनांस्तम्बपर्य्यन्तानां भूतानामात्माभूतश्चात्माप्रत्यकचेतनोयस्यससर्व्वभूतात्मभूतात्मासम्यग्दर्शीत्यर्थः सतत्रै ववर्त्तमानोलोकसंग्रहायकर्मकुर्व्वन्नपिनलिप्यते योगयुक्तोनकर्मभिर्व्वध्यतइत्यर्थः ७

## आनन्दगिरिकृतटीका

क्वार्थमाह ब्रह्मेत्यादिना नद्याःस्रोतांसीवनिम्नप्रवणानिकर्म्मभिरतितरांपरिप क्वकषायस्यकरणानिसर्व्वतोव्यावृत्तानिनिरस्ताशेषकूटस्थप्रत्यगात्मान्वेषणप्रवणानि भवन्तीति सुकर्म्मयोगस्यपरमार्थसंन्यासप्राप्त्युपायत्वेफलितमाह अतइति ६

ननुपारिव्राज्यं परिगृह्यश्रवणादिसाधनमसकृदनुतिष्ठतोलब्धसम्यग्बोधस्यापि यथापूर्व्वंकर्माण्युपलभन्तेतानिचवन्धहेतूनिभविष्यन्तीत्याशंक्यश्लोकान्तरमवतारय

## स्वामिकृतटीका।

यदिकर्म्मयोगिनोऽप्यन्ततःसंन्यासेनैवज्ञाननिष्ठातर्हिआदितएवसंन्यासःकर्त्तुं युक्तइति मन्वानंप्रत्याह संन्यासस्त्विति अयोगतःकर्म्मयोगंविनासंन्यासःप्राप्तुदुःखं दुःखहेतुरशक्यइत्यर्थः चित्तशुद्ध्यभावेनज्ञाननिष्ठायाअसम्भवात्योगयुक्तस्तुशुद्धचि त्ततयामुनिःसंन्यासीभूत्वाअचिरेणब्रह्माधिगच्छति अपरोक्षंजानाति अतश्चित्त शुद्धेःप्राक्कर्म्मयोगएवसंन्यासादिविशिष्यत इति पूर्व्वोक्तंसिद्धंतदुक्तंवार्त्तिककृद्भिःप्र मादिनोहिश्चित्ताःपिशुनाःकलहोत्सुकाःसंन्यासिनोऽपिदृश्यन्तेदैवसंदूषिताशया इति ६

## भाषा अनुवाद।

जोऐसाकहोकिकर्म्मकेअनुष्ठानसेचित्तशुद्धिप्रभृति परम्पराप्रणालीक्रमसे ब्रह्मज्ञानहोनेकेअनन्तर इसज्ञानीकापूर्व्व कृतकर्म्मप्रतिवन्धकक्योंनहोय इसआश ङ्कापरकहते हैं किजोपुरुषयोगयुक्तअर्थात् निष्कामकर्म्मयोगरूपभक्तिअनुष्ठान करताहै औरजिसनेचित्ततथाइन्द्रियगणअपनेवशीभूतकररखाहै औरजोअप नेआत्माकोशरीरधारीदूसरेप्राणियोंकेआत्मासेभिन्नबुद्धिनकरके सर्व्वभूतमेंटिका जोचेतनरूपआत्मातिसकोअद्वैतकहेएकरूपविचारकरदेखते हैं इसीसेवेलोग शु द्धचित्तभिक्षाकेअर्थ अथवा स्वभावआधीनशौचभिक्षाआदिजोसवकर्मोंकोकरते हुयेभी उनकर्मोंमेंलिप्तनहींहोते औरनकर्म्मउनकोलगते हैं ७

नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित्
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ८

शाङ्करभाष्यम् ।

नचासौ परमार्थतः करोतीत्येतन्नैवकिञ्चित् करोमीति युक्तः समाहितः स नमन्येत चिन्तयेत तत्त्वविदात्मनोयाथात्म्यं तत्त्वं वेत्तीति तत्त्ववित् परमार्थदर्शीत्यर्थः कदाकथम्वा तत्त्वमवधारयन् मन्येतेत्युच्यते पश्यन्निति मन्येतेति पूर्व्वेणसम्बन्धः ८

आनन्दगिरिकृतटीका ।

ति यदापुनरिति सम्यग्दर्शनप्राप्त्युपायत्वेनयदापुनरयंपुरुषोयोगयुक्तत्वादिविशेषणःसम्यग्दर्शीसम्पद्यते तदाप्रातिभासिकींप्रवृत्तिमनुसृत्यकुर्व्वन्नपिनलिप्यतइति योजना योगेननित्यनैमित्तिककर्मानुष्ठानेनेतियावत् आदौनित्याद्यनुष्ठानवतोरजस्तमोभ्यामकलुषितंसत्त्वंसिद्धमित्याह विशुद्धेति बुद्धिशुद्धौकार्य्यकारणसंघातस्यापिस्वाधीनत्वंभवतीत्याह विजितेति तस्य यथोक्तविशेषणवतोजायते सम्यग्दर्शित्वमित्याह सर्व्वभूतेति सम्यग्दर्शिनस्तर्हिकर्मानुष्ठानंकुतस्त्यंतदनुष्ठानेवाकुतोवन्धविश्लेषसिद्धिरित्याशंक्याह सतथेति सम्यग्दर्शनंसम्यर्थः ७

कर्माण्यङ्गीकृत्यतैरस्याविदुषोवन्धोनास्तीत्युक्तमिदानींवस्तुतस्तस्य कर्माण्येवनसन्तीत्याह नचेति लोकदृष्ट्याविदुषोपिकर्माणिसन्तीत्याशंक्यस्वदृष्ट्यातदभावमभिप्रेत्याह नैवेति सार्द्धंसमनन्तरश्लोकमाकाङ्क्षापूर्व्वकमुत्थापयति कदेत्यादिना चक्षुरादिज्ञानेन्द्रियैर्व्वागादिकर्मेन्द्रियैः प्राणादिवायुभेदैरन्तःकरणचतुष्टयेनच तत्तच्चेष्टानिर्व्वर्त्तनावस्थायां तत्तदर्थेषुसर्व्वाप्रवृत्तिरिन्द्रियाणामेवेत्यनुसन्दधानोनैवकिञ्चित्करोमीतिविद्वान्प्रतिपद्यतेइत्यर्थः ८

स्वामिकृतटीका ।

कर्म्मयोगादिक्रमेणवह्माधिगमेसत्यपितदुपरितनेनकर्म्मणावन्धःस्यादेवेत्याशंक्याह योगयुक्तइतियोगेनयुक्तःअतएवविशुद्धआत्माचित्तंयस्यअतएवविजितआत्माशरीरंयेनअतएवविजितानीन्द्रियाणियेनततश्चसर्व्वेषांभूतानामात्मभूतआत्मायस्य सलोकसंग्रहार्थंस्वाभाविकंवाकर्म्मकुर्व्वन्नपिनलिप्यते ७

कर्म्म कुर्व्वन्नपिनलिप्यतइत्येतद्विशदयतिनेत्याशंक्य कर्त्तृत्वाभिमानाभावान्नेत्याह नैवेति द्वाभ्यां कर्म्मयोगेनयुक्तः क्रमेणतत्त्वविद्भूत्वादर्शनश्रवणादीनिकुर्व्वन्नपीन्द्रि

प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि इन्द्रियाणीन्द्रियार्थेषुवर्त्तन्तइतिधारयन् ९

## शाङ्करभाष्यं

यस्यैवं तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मसु अकर्मैव पश्यतः सम्यग्दर्शिन स्तस्य सर्वकर्मसंन्यासएवाधिकारः कर्मणोभावदर्शनात्नहिमृगतृष्णिकायामुदकंबु द्ध्यापानायप्रवृत्तउदकाभावज्ञानेपितत्रैवपानप्रयोजनायप्रवर्त्तते ९

## आनन्दगिरिकृतटीका।

यथोक्तस्यविदुषोविध्यभावेपिविद्यासामर्थ्यात् प्रतिपत्तिकर्मभूतंकर्मसंन्यासंफला त्मकमभिलपति यस्येति अज्ञस्येवविदुषोपिकर्मसुप्रवृत्तिसम्भवात् कुतःसंन्यासेधि कारःस्यादित्याशंक्याह नहीति ९

## स्वामिकृतटीका।

याणीन्द्रियार्थेषुवर्त्तन्तइतिधारयन्बुद्ध्यानिश्चिन्वन् किञ्चिदप्यहंनकरोमीतिमन्य ते तत्रदर्शनश्रवणस्पर्शनाघ्राणाशनानिचक्षुरादिज्ञानेन्द्रियव्यापाराः गतिःपाद योःस्वापोबुद्धेःश्वासःप्राणस्यप्रलपनंवागिन्द्रियस्यविसर्गःपायूपस्थयोः ग्रहणंहस्तयोः उन्मेषनिमेषणेकूर्माख्यप्राणस्येतिविवेकःएतानि सर्वाणिकुर्वन्नपिअनभिमानात्ब्र ह्मवित्नलिप्यते तथाचपारमर्षंसूत्रंतदधिगमेउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्य पदेशादिति ८।९

## भाषा अनुवाद।

औरजोऐसोयहशंकाकरोकि धर्मअनुष्ठानकरकेभीउसमेलिप्तकहे आत्मज्ञान होनायहअत्यन्तअसम्भवहै तिसकोहीगा इसपरदोश्लोकसेकहतेहैं किकर्त्त त्वअभिमानरहितहोनाअसम्भवनहींहै क्योंकिनिष्कामकर्मयोगरूपभक्तिअनुष्ठा नकरनेवालेमनुष्य क्रमसेतत्त्वज्ञानीहोकेदर्शनआदिइन्द्रियव्यापारकरतेभीइन्द्रि यसबअपनाअपनाकामकरतीहैं औरहम कछुभीनहींकरतेऐसीबुद्धिउनकीनि श्चयरनीरहतीहै यथादर्शनश्रवणपर्सघ्राणभोजन येज्ञानइन्द्रियोंकेव्यापारऔर गमनवचनविसृजनकहेविष्ठामूत्रत्याग जोकर्मइन्द्रीयोंकेकाम औरग्रहण जोकर काव्यापार औरस्वप्नबुद्धिव्यापारनिद्राहोना श्वसनप्राणवायुव्यापार औरउन्मेष निमेषकहे पलकलगनाखुलना जोकूर्मवायुसेहोताहै यहसबइन्द्रियआदिकाकर्म है औरहमद्रष्टासाक्षीरूपहैं यहकुछहमनहींकरते ऐसे हीज्ञानीपुरुष इनक र्मोमेअभिमानशून्यलिप्तनहींहोतेहैं सोईकहादोश्लोकसे किइन्द्रियाणीन्द्रियार्थेषु वर्त्तन्तेइतिधारयन् यहांतक ८ आठ नव इनदोनोश्लोकनाअर्थ एकहीसाथहै ९

ब्रह्मण्याधायकर्माणिसङ्गंत्यक्त्वाकरोतियः लिप्यतेनसपापेनपद्मपत्रमिवाम्भसा १०

## शाङ्करभाष्यं।

यस्तुपुनरतत्त्ववित्प्रवृत्तश्चकर्मयोगे ब्रह्मणीति ब्रह्मणीश्वरेआधायनिक्षिप्य तदर्थंकरोमीतिभृत्यइवस्वाम्यर्थंसर्वाणिकर्माणि मोक्षेपिफलेसङ्गंत्यक्त्वाकरोतियः सर्वकर्माणि लिप्यतेनसपापेनसंबध्यते पद्मपत्रमिवाम्भसोदकेन १०

केवलंसत्त्वशुद्धिमात्रफलमेवतस्यैवकर्मणःस्यात् यस्मात् कायेनेति कायेन देहेनमनसाबुद्ध्याच केवलैरिन्द्रियैर्ममत्ववर्जितैरीश्वरायैवकर्मकरोमीति नफला येति ममत्वबुद्धिशून्यैरिन्द्रियैरपिकेवलशब्दःकायादिभिरपिप्रत्येकंसम्बध्यते सर्व व्यापारेषुममतावर्ज्जनाययोगिनःकर्मिणःकर्मकुर्वन्तिसङ्गंत्यक्त्वाफलविषयमात्मशुद्ध येसत्त्वशुद्धयइत्यर्थः ११

## आनन्दगिरिकृतटीका।

तर्हिविद्यावानिवाविद्यावानपि कर्मणि नप्रवर्त्तेत प्रामोपहतिसम्भवादित्याशं क्याह यस्त्विति यथाभृत्यःस्वाम्यर्थंकर्माणिकरोति नस्वफलमपेक्षते तथैवयोवि द्वान्मोक्षेपिसङ्गंत्यक्त्वाभगवदर्थमेवसर्वाणिकर्माणिकरोति नसकर्मणाबध्यतेनहि पद्मपत्रमम्भसासम्बध्यतेतद्वदित्यर्थः १०

## स्वामिकृतटीका

तर्हियस्यकरोमीत्यभिमानोऽस्तितस्यकर्मलेपोदुर्वारः तथाचविशुद्धचित्तत्वात् संन्यासोऽपिनास्तीतिमहत्सङ्कटमापन्नमित्याशंक्याह ब्रह्मणीति ब्रह्मण्याधायप रमेश्वरेसमर्प्यतत्फलेचसङ्गंत्यक्त्वा यःकर्माणि करोति असौपापेनबन्धहेतुतयापा पिष्ठेनपुण्यपापात्मकेनकर्मणानलिप्यते यथापद्मपत्रमम्भसिस्थितमपितेनाम्भसानलि प्यतेतद्वत् १०

## भाषा अनुवाद।

औरजोमनुष्यहमकर्मकरतेहैं ऐसाअभिमानरखतेहैं तेईकर्ममेंलिप्त होतेऔवह्नीकोकर्मबन्धहोताहै फेरिचित्तकीअशुद्धतासेउनकोसंन्यासभीदुर्घट है इससेउनकोसन्तरहशङ्काहै जोऐसीशङ्काकरोतो यहउत्तरसुनोकिअ न्तर्यामीईश्वरकीप्रेरणासेहमसबकर्मकरतेहैं ऐसेविचारकरिकेसकलकर्मईश्वर मेंसमर्पणकरकेऔकर्मकालमेंआशारहितकर्मकरतेहैं तोउनकोकर्मप्रतिब न्धकनहींहोतेऔरवेकर्मसेलिप्तनहींहैं जैसेपद्मपत्रजलमेंनिरन्तररहतेभीज लसेअलगहै सोईकहाकि ब्रह्ममेंकर्मअर्पणकरिसङ्गकहेआशाछोड़िजोकर्मक रैहै सोपापसेनहींलिप्तहोता जैसेकमलकापत्ताजलमेंरहतेभीजलसेभिन्नहै १०

कायेनमनसाबुद्ध्याकेवलैरिन्द्रियैरपि योगिनःकर्मंकुर्वन्तिसङ्गंत्यक्त्वात्मशुद्धये ११

## शाङ्करभाष्यं।

तस्मात्त्वैवतवाधिकारइति कुरुकर्मैवयस्माच्च युक्तइति युक्तईश्वरायकर्माणि करोमिनममफलायेति एवंसमाहितःसन्कर्मफलंत्यक्त्वापरित्यज्यशान्तिंमोक्षाख्यामाप्नोति नैष्ठिकींनिष्ठायाम्भवांसत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषःयस्तुपुनरयुक्तोऽसमाहितःकामकारेणकरणंकारःकामस्यकारःकामकारस्तेनकामकारेणकामप्रेरिततयेत्यर्थःममफलायेदंकरोमिकर्मेत्येवंफले सक्तोनिवध्यते अतस्त्वंयुक्तोभवइत्यर्थः १२

## आनन्दगिरिकृतटीका

अविदुषस्तर्हिज्ञतेनकर्मणाकिंस्यादित्याशंक्याह केवलमितिच्चन्नस्येश्वरार्पण बुद्ध्यानुष्ठितंकर्मबुद्धिशुद्धिफलमित्यवैवहेतुमाह यस्मादिति केवलशब्दस्यप्रत्येकं सम्बन्धेप्रयोजनमाह सर्वव्यापारेष्विति ११

कर्मणश्चित्तशुद्धिफलत्वेतादर्थ्येनकर्मानुष्ठानमेवतवकर्त्तव्यमिति यस्मादित्यस्यापेक्षितंवदन्फलितमाह तस्मादिति युक्तःसन्फलंत्यक्त्वाकर्मकुर्वन्मोक्षाख्यांशान्तिंयस्मादाप्नोति तस्माच्चत्वयासङ्गंत्यक्त्वाकर्मकर्त्तव्यमितियोजना विपक्षेदोषमाह अयुक्तइति युक्तत्वंव्याकरोति ईश्वरायेति फलंपरित्यज्यकर्मकुर्वन्निति शेषः नैष्ठिकीशान्तिरित्येतदेवविशदयति द्वितीयमर्द्धंविभजते यस्त्विति असमाधाने दोषादर्जुनस्यनियोगंदर्शयति अतस्त्वमिति १२

## स्वामिकृतटीका।

बन्धकत्वाभावमुक्त्वामोक्षहेतुत्वंसदाचारेणदर्शयति कायेनेति कायेनस्नानादिमनसाध्यानादिबुद्ध्यातत्त्वनिश्चयादिकेवलैः कर्माभिनिवेशरहितैरिन्द्रियैःश्रवणकीर्त्तनादिलक्षणंकर्मफलसङ्गंत्यक्त्वाचित्तशुद्धयेकर्मयोगिनःकुर्वन्ति ११

## भाषा अनुवाद।

निष्कामकर्मबन्धकनहीं हैं इसकहनेकेबाद अवउत्तममनुष्योंकोकर्मकेद्वारा मुक्तिदिखावते हैं शरीरसेस्नानादिमनसेध्यानादिऔबुद्धिसेतत्त्वनिश्चयादितथाकर्ममेंआशक्तिरहितऔरफलाभिलाषशून्यहोकर इन्द्रियोंकेद्वाराश्रवणकीर्त्तन आदिचित्तशुद्धिकेअर्थकर्मानुष्ठाईयोगीकर्मकरते हैं सोई कहाकिकायमनबुद्धिसे औरकेवलइन्द्रियोंसेआत्मशुद्धिकेहेतुसङ्गछोड़ियोगीजनकर्मकरते हैं ११

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीं । अयुक्तः कामकारेण फले सक्तो निबध्यते १२

शाङ्करभाष्य ।

यस्तु परमार्थदर्शी स सर्वेति सर्वाणि कर्माणि सर्वकर्माणि संन्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धञ्च तानि सर्वाणि कर्माणि मनसा विवेकबुद्ध्या कर्मादौ अकर्मसन्दर्शनेन संत्यज्येत्यर्थः आस्तेतिष्ठति सुखं त्यक्तवान्मनःकायचेष्टो यतिः निरायासः प्रसन्नचित्तः आत्मनोऽन्यत्र निवृत्तसर्वबाह्यसर्वप्रयोजनः सुखमास्त इत्युच्यते वशी जितेन्द्रिय इत्यर्थः क्वास्त इत्याह नवद्वारे पुरे सप्तशीर्षण्यान्यात्मन उपलब्धिद्वाराण्यर्वाग् द्वे मूत्रपुरीषविसर्गार्थे तैर्द्वारैर्नवद्वारं पुरमुच्यते शरीरं पुरमिव पुरमात्मैकस्वामिकं तदर्थप्रयोजनैश्चेन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः पौरैरिवाधिष्ठितं तस्मिन्नवद्वारे पुरे देही सर्वकर्मसन्न्यासास्त इति किंविशेषणेन सर्वो हि देही संन्यास्यसन्न्यासी वा देह एवास्ते तत्रानर्थकं विशेषणमुच्यते यस्त्वज्ञो देही देहेन्द्रियसंघातमात्रात्मदर्शी स सर्वोऽपि गेहे भूमावासने वास इति मन्यते नहि देहमात्रात्मदर्शिनो देह इव देह आस इति प्रत्ययः सम्भवति देहादिसंघातव्यतिरिक्तात्मदर्शिनस्तु देह आस इति प्रत्यय उपपद्यते परकर्मणाञ्च परस्मिन्नात्मन्यविद्ययाध्यारोपितानां विद्यया विवेकज्ञानेन मनसा सन्न्यास उपपद्यते उत्पन्नविवेकविज्ञानस्य सर्वकर्मसन्न्यासिनो ऽपि गेह इव देह एव नवद्वारे पुरे आसनं प्रारब्धफलकर्मसंस्कारशेषानुवृत्त्या देह एव विशेषविज्ञानोत्पत्तेर्देह एवास्त इत्यस्त्येव विशेषणफलं विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात्

स्वामिकृतटीका ।

ननु कथं तेनैव कर्मणा कश्चिन्मुच्यते कश्चिद्बध्यत इति व्यवस्थाऽत आह युक्त इति युक्तः परमेश्वरैकनिष्ठः सन् कर्मणां फलं त्यक्त्वा कर्माणि कुर्वन्नात्यन्तिकीं शान्तिं मोक्षं प्राप्नोति अयुक्तस्तु बहिर्मुखः कामकारेण कामतः प्रवृत्त्या फले आसक्तो नितरां बन्धं प्राप्नोति १२

भाषा अनुवाद ।

जो ऐसी शङ्का करो कि वही एक कर्म से कोई तो मुक्त औ कोई को बन्धय है कैसी व्यवस्था है तो इसका निवारण करते ज्ञ ये कहते हैं कि योगी कहे कर्मकारी पुरुष ईश्वर में एकनिष्ठ हो कर्मफल को त्यागि कर्म अनुष्ठान करि के अत्यन्त शान्तिस्वरूप जो मुक्ति तिसको प्राप्त होते हैं परन्तु अयुक्त कहे कामना विशिष्ट कर्मफल में सक्त बहिर्मुख लोग काम्यकर्म से अवश्य ही बद्ध होते हैं युक्त कहे ईश्वरार्थ कर्म करनेवाले १२

सर्व्वकर्म्माणिमनसासंन्यस्यास्तेसुखं वशी नवद्वारेपुरेदेही नैवकुर्व्वन्नकारयन् १३

### शाङ्करभाष्यं।

यद्यपि कार्य्यकरणकर्म्माण्यविद्ययात्मन्यध्यारोपितानि सन्न्यस्यास्ते इत्युक्तंतथाप्या त्मसमवायितुकर्त्तृत्वं कारयितृत्वञ्चस्यादित्याशंक्याह नैवकुर्व्वन्स्वयंनचकार्य्यकर णानिकारयन्क्रियासुप्रवर्त्तयन्किंयत्तत्कर्त्तृत्वं कारयितृत्वञ्चदेहिनःस्वात्मसम वायिसत् सन्न्यासान्नसंभवति यथागच्छतोगतिःगमनव्यापारपरित्यागेनस्यात्तद्व त्. किंवास्वतएवात्मनोनास्तीत्यत्रोच्यते नास्यात्मनःस्वतःकर्त्तृत्वं कारयितृत्वञ्चो क्तंह्यविकार्य्योयमुच्यते शरीरस्थोपिकौन्तेय नकरोतिनलिप्यतइति ध्यायतीवले लायतीवेतिश्रुतेः १३

### आनन्दगिरिकृतटीका

तर्हिफलेसक्तिंत्यक्त्वासर्व्वैरपिकर्मकर्त्तव्यमितिकर्मसन्न्यासस्यनिरवकाशत्व मित्याशंक्याविदुषःसकाशाद्विदुषोविशेषंदर्शयति यस्त्विति सर्व्वकर्मपरित्यागेप्रा प्तंमरणंव्यावर्त्तयति आस्तइति इत्थंलभमानोपिशरीरतापेनाध्यात्मिकादिनातप्य मानस्तिष्ठतीति चेन्नेत्याह सुखमिति कार्य्यकरणसंघातपारवश्यंपर्युदस्यति वं शीति आसनस्यापेक्षितमधिकरणंनिर्दिशति नवेति देहसम्बन्धाभिमानाभासव त्वमाह देहीति मनसासर्वकर्मसंन्यासेपि लोकसंग्रहार्थंवहिःसर्व्वंकर्मकर्त्तव्यमिति प्राप्तंप्रत्याह नैवेति तान्येवसर्व्वाणिकर्माणिपरित्यज्यानिर्विशिनष्टि नित्यमिति ते षांपरित्यागेहेतुमाह तानीति यदुक्तं सुखमास्तइति तदुपपादयति त्यक्तेति जि

### भाषाअनुवाद

इनसबबातोंसेअशुद्धचित्तमनुष्यकोसन्न्यासकीअपेक्षानिष्कामकर्मकरनाहीं श्रेयहै यहविस्तारपूर्वककहिकर अवशुद्धचित्तपुरुषकोसन्न्यासहीश्रेष्ठहै यह कहतेहैंकिजितचित्तविवेकयुक्तपुरुषबुद्धिकेद्वाराविक्षेपकारकसबकर्मछोड़िजैसेसु खमेरहते तैसेज्ञाननिष्ठयुक्तहोकेभीसुखमेरहते हैं जोकहोकिकहांरहते तो कहते हैं किनवद्वारपुरजोअहङ्कारशून्यशरीर तिसमेआत्मस्वरूपमेंस्थितरह तेहैं औरअहङ्कारकेअभावसेआपशारीरककर्मनहींकरते औरममताकेअभा वसेदूसरेसेभी वेकोईकामनहीं करावतेहैं यहशुद्धऔअशुद्धचित्तमनुष्योंकाभेद भगवाननेकहा १३

आनन्दगिरिकृतटीका ।

तेन्द्रियत्वंकायवशीकारस्याप्युपलक्षणंद्वेश्रोत्रे द्वेचक्षुषीद्वेनासिकेवागेकेति सप्तशी
र्षण्यानिशिरोगतानिशब्दाद्युपलब्धिद्वाराणि तथापिकथंनवद्वारत्वमधोगताभ्यां
पायूपस्थाभ्यांसहेत्याह अर्वागिति शरीरस्यपुरसाम्यंस्वामिनापौरैश्चाधिष्ठितत्वेन
दर्शयति आत्मेत्यादिना यद्यपिदेहेजीवनत्वाद्देहसम्बन्धाभिमानाभासमानवत्ति
ष्ठते तथापिप्रवासीवपरगेहे तत्पूजापरिभवादिभिरप्रहृष्यन्नविषीदन्व्यामोहादि
रहितस्तिष्ठतीति मत्वाह तस्मिन्निति विशेषणमाक्षिपति किमिति तदनुपप
त्तिमेवादर्शयति सर्वोहीति सर्वसाधारणेदेहावस्थानेसन्न्यस्यदेहेतिष्ठति विद्वा
निति विशेषणमकिञ्चित्करमिति फलितमाह तत्रेति विशेषणफलंदर्शयन्नुत्त
रमाह उच्यतइति किंअविवेकिनंप्रतिविशेषणानर्थक्यंचोद्यते किम्वाविवेकिनं
प्रतीति विकल्पाद्यमङ्गीकरोति यस्त्विति अन्नत्वदेहित्वेहेतुः तदेवदेहित्वंस्फुट
यति दहेति संघातात्मदर्शिनोपिदेहे स्थितिप्रतिभासःस्यादिति चेन्नेत्याह न
हीति द्वितीयंदूषयति देहादीति गृहादिषुदेहस्यावस्थानेनात्मावस्थानभ्रमव्या
वृत्त्यर्थंदेहे विद्वानास्तइति विशेषणमुपपद्यते विवेकवतो देहेवस्थानप्रतिभासस
म्भवादित्यर्थः ननुविवेकिनोदेहावस्थानप्रतिभानेपिवाङ्मनोदेहव्यापारात्मनाकर्म
णांतस्मिन्प्रसङ्गाभावात् तत्त्यागेनकुतस्तस्यदेहेवस्थानमुच्यते तत्राह परकर्मणाञ्चे
ति ननुविवेकिनोदिगाद्यनवच्छिन्नवाह्याभ्यन्तराविक्रियब्रह्मात्मता मन्यमानस्यकु
तोदेहेवस्थानमास्थातुंशक्यते तत्राह उत्पन्नेति तत्रहेतुमाह प्रारब्धेति प्रारब्धफलंध
र्माधर्मात्मकंकर्मतस्योपभुक्तस्यशेषादनुपभुक्ताद्देहादिसंस्कारोनुवर्त्तते तदनुवृत्त्याच
तत्रैवदेहेविशेषविज्ञानमवस्थानविषयमुपपद्यते अतोविवेकवतःसन्न्यासिनोदेहेव
स्थानव्यपदेशःसम्भवतीत्यर्थः अविद्वत्प्रत्ययापेक्षयाविशेषणासम्भवेपिविद्वत्प्रत्ययापेक्ष
याविशेषणमर्थवदित्युपसंहरति देहएवेति देहेस्ववस्थानविषयोविद्वत्प्रत्ययस्तदवि
षयस्त्वविद्वत्प्रत्ययस्तयोरेवंभेदेविद्वत्प्रत्ययापेक्षयाविशेषणमर्थवदित्युपसंहरन्नेवहे
तुंविशदयति विद्वदिति आरोपितकर्त्तृत्वाद्यभावेपिस्वगतकर्त्तृत्वादिदुर्वारमित्या
शङ्काम्नूद्यदूषयति यद्यपीत्यादिना क्रियासुप्रवर्त्तयन्नास्तइति पूर्वेणसम्बन्धःपूर्व
स्यापिशतुरेवमेवसम्बन्धः कर्त्तृत्वंकारयितृत्वञ्चात्मनोनेत्यत्रविचारयति किमिति
यत्कर्त्तृत्वंकारयितृत्वञ्चतत्किंदेहिनः स्वात्मसमवायिसदेवसन्न्यासान्नभवतीत्यु
च्यते यथागच्छतोदेवदत्तस्यस्वगतैवगतिः तत्स्थित्यात्यागान्नभवति अथवास्वा
रस्येनकर्त्तृत्वंकारयितृत्वञ्चात्मनोनास्तीति वक्तव्यमाद्येसक्रियत्वंद्वितीयेकूटस्थत्व

नकर्त्तृत्वंनकर्माणि लोकस्यसृजतिप्रभुः नकर्मफलसंयोगं स्वभावस्तुप्रवर्त्तते १४

## आनन्दगिरिकृतटीका

मित्यर्थः द्वितीयंपक्षमाश्रित्योत्तरमाह अत्रेति उक्तोर्थेवाक्योपक्रमसमनुकूलयति उक्तंहीति तत्रैववाक्यशेषमपिसम्पादयति शरीरस्थोपीति स्मृत्युक्तेर्थेश्रुतिमपिदर्शयति ध्यायतीवेति उपाधिगतैवसर्व्वाविक्रियानात्मनिस्वतोस्तीत्यर्थः १३

## स्वामिकृतटीका।

एवंतावत् चित्तशुद्धिशून्यस्यसंन्यासात् कर्मयोगोविशिष्यतइत्येतत्प्रपञ्चितं इदानींशुद्धचित्तस्यसंन्यासःश्रेष्ठइत्याह सर्व्वकर्म्माणीति वशीजितचित्तःसर्व्वकर्म्माणिविक्षेपकाणिमनसाविवेकयुक्तेनसंन्यस्यसुखंयथाभवत्येवंज्ञाननिष्ठःसन्नास्ते क्कास्तइत्यतआह नवद्वारे नेत्रेनासिकेकर्णौमुखञ्चेति सप्तशिरोगतानि अधोगतेद्वेपायूपस्थरूपेइत्येवं नवद्वाराणियस्मिन्पुरेपुरवदहङ्कारशून्येदेहेदेहीअवतिष्ठते अहङ्काराभावादेवस्वयंतेनदेहेननैवकुर्व्वन् ममकाराभावात्नकारयन्निति अशुद्धचित्ताद्यावृत्तिरुक्ताअशुद्धचित्तोहिसंन्यस्यपुनःकरोति कारयतिच नत्वयंतथा अतःसुखमास्तइत्यर्थः १३

## भाषा अनुवाद

ईश्वरजिसकोइसलोकसे श्रेष्ठलोककोलेजानेकीइच्छाकरतेहैं उससेसत्कर्मकरावतेऔरजिसेअधोलोकलेजानेकीइच्छाकरतेउससेकुकर्मकरवावतेहैं यहश्रुतिमेकहाहै तोपरमेश्वरकीप्रेरणासे पराधीनजोमनुष्यसोकैसे वेकर्मत्यागकरनेशक्तैएक दूसरेजोपरमेश्वरहीकीप्रेरणासेशुभअशुभकर्ममेलोगप्रवृत्तहोतेहैं तोईश्वरभीविषमदृष्टिऔनिर्दयहै फेरिकर्मोकाकरवावनेवालाभीवहीहै तौउसकोभीपुन्यपापसम्बन्धक्योंनहोय जोयहशङ्काकरोतोइसकासिद्धान्त यहदोस्लोकसेकहतेहैं किप्रभुजोईश्वरसोमनुष्योंकोकर्त्तृत्वअथवाकर्मसृजननहीकिया किन्तुमनुष्योंकोपूर्वकर्मसंस्काररूपजोअज्ञान सोइकर्त्तृत्वादिमेप्रवृत्तकरैहै इसीसेअपनीअनादिअविद्यासेकामनावशहोप्रवृत्तियुक्तपुरुषकोईश्वरभीकर्ममेनियुक्तकरतेहैं औरईश्वरकुछआपसेउसकोप्रवृत्तिनहीदेतेहैं सोईकहाहैकिकर्त्तृत्वऔकर्मतथाफलयोगप्रभुनेनहींकिया लोगपूर्वसंस्काररूपस्वभावअर्थात्मायासेप्रवृत्तहैं १४

### शाङ्करभाष्यं

किन्तु नकर्त्तृत्वमिति नकर्त्तृत्वं स्वतःकुर्व्वितिनापिकर्माणि रथघटप्रासादादीनि ईप्सिततमानिलोकस्यसृजत्युत्पादयतिप्रभुरात्मानापिरथादिकृतवतस्तत्फलेन संयोगंनकर्मफलसंयोगंयदिकिञ्चिदपि स्वतोनकरोतिनकारयतिच देहीकस्तर्हि कुर्व्वन् कारयंश्चप्रवर्त्ततइत्युच्यते स्वभावस्तुस्वोभावःस्वभावोऽविद्यालक्षणाप्रकृतिः मायाप्रवर्त्तते दैवीह्रीत्यादीतिवक्ष्यमाणा १४

### आनन्दगिरिकृतटीका

आत्मनोयदुक्तंकारयितृत्वंनास्तीति तत्प्रपञ्चयति नेत्यादिना यद्यपिलोकस्य कर्त्तृत्वंनसृजतीतिनास्तीति कारयितृत्वं तथापिरथशकटादीनिकुर्व्वन्भवतिकर्त्ते त्याशंक्याह नकर्माणीति तथापिभोजयितृत्वेनविक्रियावत्त्वंदुष्परिहारमित्याशंक्याह नकर्मेति कस्तर्हिप्रवर्त्तकत्वंतदाह स्वभावस्त्विति कुर्व्वितिकर्त्तृत्वंलोकस्य नसृजत्यात्मेतिसम्बन्धः रथादीनांकर्मत्वंसाधयति ईप्सितेति आत्मनोदेहादिस्वामित्वेनप्रभुत्वं रथादिकृतवतोलोकस्य रथादिफलेनसम्बन्धमपि नसृजत्यात्मेत्यात्मनो भोजयितृत्वंप्रत्याचष्टे नापीति चतुर्थपादंशङ्कोत्तरत्वेनावतारयति यदीत्यादिना स्वभाववादस्तर्हीत्याशंक्यव्याकरोति अविद्यालक्षणेति प्रकृतेर्व्विद्यावत्त्वंव्युदसितुं मायेत्युक्तं साचसप्तमेवक्ष्यते तेनप्रधानविलक्षणेत्याह दैवीहीति १४

### स्वामिकृतटीका ।

ननुएषएवसाधुकर्मकारयतितं यमेभ्योलोकेभ्यउन्निनीषतेएषएवासाधुकर्म कारयतितं यमेभ्योलोकेभ्यअधोनिनीषतइत्यादिश्रुतेःपरमेश्वरेणैवशुभाशुभफलेषु कर्मसु कर्त्तृत्वेन प्रयुज्यमानोऽस्वतन्त्रः पुरुषः कथंतानिकर्माणित्यजेत् ईश्वरेणैव ज्ञानमार्गेप्रयुज्यमानः शुभान्यशुभानिचत्यक्ष्यतीतिचेत् एवंसतिवैषम्यनैर्घृण्याभ्या मीश्वरस्यापिप्रयोजककर्त्तत्वात् पुण्यपापसम्बन्धःस्यादित्याशंक्याह नकर्त्तृत्वमिति द्वाभ्यां प्रभुरीश्वरोजीवलोकस्यकर्त्तृत्वादिकं नसृजति किन्तुजीवस्यस्वभावोऽविद्यैवकर्तृत्वादिरूपेणप्रवर्त्तते अनाद्यविद्याकामवशात् प्रवृत्तिस्वभावमेवलोकमीश्वरः कर्मसुनियुङ्क्ते नतुस्वयमेवकर्त्तृत्वादिकमुत्पादयतीत्यर्थः १४

नादत्ते कस्यचित् पापं नचैव सुकृतं विभुः अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः १५

शाङ्करभाष्यं।

परमार्थतस्तु नेति नादत्ते न च गृह्णाति भक्तस्यापि कस्यचित् पापं नचैवादत्ते सुकृतं विभुः भक्तैः प्रयुक्तं विभुः किमर्थं तर्हि भक्तैः पूजादिलक्षणं यागदानहोमादिकञ्च सुकृतं प्रयुज्यत इत्याह अज्ञानेनावृतं ज्ञानं विवेकविज्ञानं तेन मुह्यन्ति करोमि कारया मि भोक्ष्ये भोजयामीत्येवं मोहं गच्छन्त्यविवेकिनः संसारिणो जन्तवः १५

आनन्दगिरिकृतटीका।

कर्तृत्वभोक्तृत्वैश्वर्याण्यात्मनोऽविद्याकृतानीत्युक्तमिदानीमीश्वरे संन्यस्तसम स्तव्यापारस्य तदेकशरणस्य दुरितं सुकृतं वा तदनुग्रहार्थं भगवानादत्ते मदेकशरणो मत्तीत्यर्थं कर्म कुर्वाणो दुष्कृताद्यनुमोदनेनानुग्राह्यो मयेति प्रत्ययभाक्त्वादित्याशंक्य सोपि परमार्थतो नास्यास्तविक्रियत्वादित्याह परमार्थतस्त्विति कथं तर्हि भक्तानाम नुग्राह्यत्वमीश्वरस्यानुगृहीतृत्वमिति प्रसिद्धिस्तत्राह अज्ञानेनेति पूर्वार्द्धगतान्य क्षराणि व्याख्याय आकाङ्क्षापूर्वकमुत्तरार्द्धमवतार्य व्याचष्टे किमर्थमित्यादिना १५

स्वामिकृतटीका।

कोऽपि सन् प्रभुः कस्यचित् पापं सुकृतञ्च नैवादत्ते न भजते तत्र हेतुः विभुः परिपू र्णः आप्तकाम इत्यर्थः यदि हि स्वार्थकामनया कारयेत्तर्हि तथा स्यात् न त्वेतदस्ति आप्तका मस्यैवाचिन्त्यनिजमायया तत्तत्पूर्वकर्मानुसारेण प्रवर्त्तकत्वात् ननु भक्ताननुगृह्ण तोऽभक्तान्निगृह्णतश्च वैषम्योपलम्भात् कथमाप्तकामत्वमित्यत आह अज्ञानेनेति नि ग्रहोऽपि दण्डरूपोऽनुग्रह एवेत्येवमज्ञानेन सर्वत्र समः परमेश्वर इत्येवम्भूतं ज्ञानमावृ तं तेन हेतुना जन्तवो जीवा मुह्यन्ति भगवति वैषम्यं मन्यन्त इत्यर्थः १५

भाषा अनुवाद।

जिस हेतु भगवान न कुछ करते और न किसीसे कुछ करावते हैं वे तो विभु कहे व्यापक तथा पूर्णकाम हैं इससे भक्त अभक्त किसीके पुन्य पापके भागी नहीं हैं प रन्तु परमेश्वरकी अचिन्त्य जो माया सोई पूर्वकर्मके अनुसार ऊंच नीच कर्ममें लोगों को प्रवृत्ति देती और अज्ञानसे ज्ञान आवृत्त है तिससे सब मोहित होते हैं जो कहो कि पूर्णकामको फेरि भक्तों पर अनुग्रह औ अभक्तोंका निग्रह क्यों करवटै है तो कहते हैं कि परमेश्वरका निग्रहरूप दण्ड अनुग्रह है अर्थात् दण्ड होनेसे पापोंका पाप दूर होजायगा ऐसे दण्डरूप अनुग्रहका न जानना जो अज्ञान सोई परमेश्वर विषयक ज्ञानको आवृत करता है तो फेरि जीव मोहित होय अपने अज्ञानसे परमेश्वरमें विष मदृष्टि करते हैं १५

ज्ञानेनतुतदज्ञानंयेषांनाशितमात्मनः तेषामादित्यवज्ज्ञानंप्रकाशयतितत्परं १६
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः गच्छन्त्यपुनरावृत्तिंज्ञाननिर्धूतकल्मषाः १७

## शाङ्करभाष्यं।

ज्ञानेनइति ज्ञानेनतुयेनअज्ञानेनावृत्ताःमुह्यन्तिजन्तवः तदज्ञानंयेषांजन्तूनां विवेकज्ञानेनात्मविषयेण नाशितमात्मनोभवति तेषांजन्तूनामादित्यवत् यथादित्यः समस्तंरूपजातंअवभासयति तद्वत् ज्ञानंज्ञेयंवस्तुसर्वंप्रकाशयतितत् परमार्थतत्त्वं १६ यत्परंज्ञानंप्रकाशितं तद्बुद्धय इति तस्मिन्गताबुद्धिर्येषांतेतद्बुद्धयः तदात्मानस्तदेवपरंब्रह्मआत्मायेषांतेतदात्मानःतन्निष्ठाइति तन्निष्ठानिष्ठाभिनिवेशस्तात्पर्यंसर्वाणिकर्माणिसन्न्यस्य ब्रह्मण्येवावस्थानंयेषांतेतन्निष्ठास्तत्परायणाश्चतदेवपरमायनंपरागतिर्येषांभवतितेतत्परायणाःकेवलात्मरतयइत्यर्थः तेगच्छन्त्यवस्थाम्

## आनन्दगिरिकृतटीका।

तर्हिसर्वेषामनाद्यज्ञानत्वात् व्यामोहाभावाच्चकुतः संसारनिवृत्तिरितितत्राह ज्ञानेनेति सर्वमितिपूर्णत्वमुच्यते ज्ञेयस्यैववस्तुनस्तत्परमिति विशेषणं तद्याचष्टे परमार्थतत्त्वमिति १६

## स्वामिकृतटीका

ज्ञानिनस्तुनमुह्यन्तीत्याह ज्ञानेनेति आत्मनोभगवतोज्ञानेनयेषांतदैश्वर्योपलम्भकमज्ञानंनाशितंतज्ज्ञानंतेषामज्ञानंनाशयित्वा तत्परंपरिपूर्णमीश्वरस्वरूपंप्रकाशयति यथादित्यस्तमोनिरस्यसमस्तंवस्तुजातंप्रकाशयतितद्वत् १६

## भाषा अनुवाद।

औरज्ञानसेजिनकाअज्ञाननाशहोगयाहै ऐसेज्ञानीपुरुषोंको परजोभगवत्स्वरूप सोप्रकाशमानहै जैसेसूर्यकेप्रकाशसेअन्धकारदूरहोवस्तुसबप्रकाशितहोतीहैं लोगकेवलअपनेमोहसेईश्वरमेंमोहकल्पनाकरतेहैं १६

ऐसेजोपरमेश्वरतिनकेउपासकोंकोप्राप्तजोफलहोताहै सोकहतेहैं कि भगवतकीभक्तिसेअवश्यही संसारसागरकोउतरजायंगे ऐसीजिनकेनिश्चयरूपबुद्धिहै औरतैसेहीभगवद्भक्तिमेसम्पन्नऔतत्परहैं औरपरमेश्वरहीजिनकेपरमअवलम्बहैं सोईजनईश्वरकेप्रसादसेनिःपापहोमुक्तिप्रदपाय आवागमनसेरहितहोतेहैं सोईकहाकिईश्वरमेबुद्धिऔईश्वरमेआत्माऔईश्वरमेनिष्ठा तथाईश्वरमेपरायणपुरुषज्ञानसेनिर्धूतकल्मष अपुनरागमनपदमोक्षप्राप्तहोतेहैं

शाङ्करभाष्यं

पुनरावृत्तिं पुनर्देहसम्बन्धंनगच्छन्ति ज्ञाननिर्धूतकल्मषाःयथोक्तेनज्ञानेननिर्धूतोनिरस्तोनाशितःकल्मषःपापादिसंसारकारणदोषोयेषांते ज्ञाननिर्धूतकल्मषाःयतयइत्यर्थः१७

येषांज्ञानेननाशितमात्मनोऽज्ञानंते पण्डिताःकथंतत्त्वंपश्यन्तीत्युच्यते विद्येति विद्याविनयसम्पन्नेविद्याचविनयश्चविद्याविनयौविद्यात्मनोबोधोविनयउपशमःता

आनन्दगिरिकृतटीका।

विदुषांविविदिषूणाञ्चान्तरङ्गाणिविद्यापरिपाकसाधनानिइत्युपदिदिक्षुरुत्तरश्लोकस्यापेक्षितंपूरयति यत्परमिति तस्मिन्परमार्थतत्त्वेपरस्मिन्ब्रह्मणिबाह्यंविषयमपोह्यगताप्रवृत्ताश्रवणमनननिदिध्यासनैरसकृदनुष्ठितैर्बुद्धिःसाक्षात्काररूपलक्षणायेषांते तथेति प्रथमविशेषणंविभजते तस्मिन्निति तर्हिवोद्धाजीवोवोद्धव्यंब्रह्मेति जीवब्रह्मभेदाभ्युपगमोनेत्याह तदात्मानइति कल्पितंवोद्धृवोद्धव्यत्वंवस्तुतस्तुनभेदोस्तीत्यङ्गीकृत्यव्याचष्टे तदेवेति ननुदेहादावात्माभिमानमपनीयब्रह्मण्येवाहमस्मीत्यवस्थानंतत्तदनुष्ठीयमानकर्मप्रतिबन्धान्नसिध्यतीत्याशंक्यविशेषणान्तरमादत्ते तन्निष्ठाइति तन्निष्ठाशब्दार्थंदर्शयन्विवक्षितमर्थमाह निष्ठेत्यादिना तथापिपुरुषार्थापेक्षाप्रतिबन्धात् कथंयथोक्तेब्रह्मण्येवावस्थानंसेद्धुंपारयति तत्राह तत्परायणाश्चेति यथोक्तानामधिकारिणांपरमपुरुषार्थस्योक्तब्रह्मानतिरेकान्नान्यत्रासक्तिरिति तात्पर्यार्थमाह केवलेति ननुयथोक्तविशेषणवतांवर्त्तमानदेहपातेपिदेहान्तरपरिग्रहव्यग्रतयाकुतोयथोक्तेब्रह्मण्यवस्थानमास्थातुंशक्यते तत्राह तेगच्छन्तीतिसतिसंसारकारणेदुरितादौ संसारप्रसरस्यदुर्वारत्वान्नपुनरावृत्तिसिद्धिरित्याशंक्याह ज्ञानेति उक्तविशेषणसम्पत्यादर्शितफलभागित्वमाश्रमान्तरेष्यसम्भावितमिति मन्वानोविशिनष्टि यतयइति १७

स्वामिकृतटीका।

एवंभूतेश्वरोपासकानांफलमाह तदिति तस्मिन्नेवबुद्धिर्निश्चयात्मिकायेषांतस्मिन्नेवआत्माप्रयत्नोयेषांतस्मिन्नेवनिष्ठातात्पर्य्यंयेषांतदेवपरमायनमाश्रयोयेषांततत्प्रसादलब्धेनात्मज्ञानेननिर्धूतंनिरस्तंकल्मषंयेषांतेऽपुनरावृत्तिंमुक्तिंयान्ति १७

विद्याविनयसम्पन्नेब्राह्मणेगविहस्तिनि शुनिचैवश्वपाकेचपण्डिताःसमदर्शिनः १८

## शाङ्करभाष्यम्।

श्यांविद्याविनयाभ्यांसम्पन्नोविद्वान्विनीतश्चयोब्राह्मणस्तस्मिन्ब्राह्मणेगविहस्तिनि शुनिचैवश्वपाकेचपण्डिताःसमदर्शिनोविद्याविनयसम्पन्नेउत्तमसंस्कारवति ब्राह्मणे सात्त्विकेमध्यमायाञ्चराजस्यांगविसंस्कारहीनायामत्यन्तमेवकेवलतामसेहस्त्यादौ चसत्त्वादिगुणैस्तज्जैश्चसंस्कारैस्तथाराजसैस्तथातामसैश्चसंस्कारैरत्यन्तमेवास्पृष्टं सममेकमविक्रियंब्रह्मद्रष्टुं शीलंयेषां तेपण्डिताःसमदर्शिनः १८

## आनन्दगिरिकृतटीका

यद्पुनरावृत्तिसाधनंतत्त्वज्ञानंतदेवप्रश्नद्वारेणविवृणोति येषामित्यादिना विद्यावेदार्थविज्ञानमित्यङ्गीकृत्यविनयंव्याचष्टे विनयइति उपशमोनिरहङ्कारत्व मनौद्धत्यंपदार्थमेवमुक्त्वावाक्यार्थंदर्शयति विद्वानिति गवीत्याद्यनूद्यवाक्यार्थंकथय ति विद्येति हस्त्यादौपण्डिताःसमदर्शिनइत्युत्तरत्रसम्बन्धः तत्रतत्रप्राणिप्रभेदे षुतत्तद्गुणैस्तत्तन्निमित्तसंस्कारैश्च संस्पृष्टत्वसम्भवान्नब्रह्मणः समत्वमित्याशंक्याह सत्त्वादीतितज्जैश्चेत्यत्रतच्छब्देनसत्त्वमेवगृह्यतेसात्त्विकसंस्कारैरिवराजससंस्का रैरपिसर्वथैवासंस्पृष्टंब्रह्मेत्याह तथेति राजसैरिवतामसैरपिसंस्कारैर्ब्रह्मात्यन्त मेवास्पृष्टमित्याह तथातामसैरिति ब्रह्मणोऽद्वितीयत्वंकूटस्थत्वमसङ्गत्वञ्चोक्तेऽर्थे हेतुरितिमत्वा समशब्दार्थमाह सममिति समदर्शित्वमेव पाण्डित्यं तद्व्याचष्टे ब्रह्मेति १८

## स्वामिकृतटीका।

कीदृशास्ते ज्ञानिनोयेऽपुनरावृत्तिंमुक्तिंगच्छन्तीत्यपेक्षायामाह विद्येति वि षमेष्वपिसमंब्रह्मैवद्रष्टुं शीलंयेषां तेपण्डिताज्ञानिनइत्यर्थः तत्रविद्याविनयाभ्यां युक्तेब्राह्मणेच शुनोयःपचतितस्मिंश्चेतिकर्मणोवैषम्यं गविहस्तिनिशुनिचेतिजाति तोवैषम्यंदर्शितं १८

## भाषानुवाद।

तोवेतत्त्वज्ञानी जोमुक्तिलाभकरतेकैसेहोतेहैं सोईकहते हैं किविषमवस्तु मेसमज्ञानअर्थात् सकलवस्तुमेब्रह्मरूपदेखते हैं जैसेकिविद्याऔविनयसेयुक्तब्रा ह्मण औगऊ हाथी कुत्ता तथाचाण्डाल इनसबमेपण्डितकहेज्ञानीपुरुषसमदर्शी होतेहैं अर्थात्सबमेआत्मारूपईश्वरकोएकरूपसेदेखते हैं १८

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः निर्दोषं हि समं ब्रह्म तस्माद् ब्रह्मणि ते स्थिताः १९

## शाङ्करभाष्यं

नन्वभोज्यान्नास्ते दोषवन्तः समासमाभ्यां विषमसमे पूजातइति स्मृतेर्न ते दोषवन्तः कथं इहेति इहैव जीवद्भिरेव तैः समदर्शिभिः पण्डितैर्जितो वशीकृतः सर्गोजन्म येषां साम्ये सर्वभूतेषु ब्रह्मणि समभावे स्थितं निश्चलीभूतं मनोऽन्तःकरणं निर्दोषं यद्यपि दोषवत्सु श्वपाकादिषु मूढैस्तद्दोषैर्दोषवदिव विभासते तथापि तद्दोषैरसंस्पृष्टमिति निर्दोषं हि दोषवर्जितं हि यस्मान्नापि स्वगुणभेदभिन्नं निर्गुणत्वाच्चैतन्यस्य वक्ष्यति च भगवानिच्छादीनां क्षेत्रधर्मत्वमनादित्वान्निर्गुणत्वादिति च नाप्यन्त्यादिविशेषा आत्मनो भेदकाः सन्ति प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेरतः समं ब्रह्म चैकञ्च तस्माद्ब्रह्मण्येव ते स्थिताः तस्मान्न दोषगन्धमात्रमपि तान्स्पृशति देहादिसंघातात्मदर्शनाभिमानाभावात् तेषां देहादिसंघातात्मदर्शनाभिमानवद्विषयन्तु तत् सूत्रं समासमाभ्यां विषमसमे पूजातइति पूजाविषयत्वविशेषणात् दृश्यते हि ब्रह्मवित् षडङ्गवित् चतुर्वेदवित् इति पूजादानादौ गुणविशेषसम्बन्धः कारणं ब्रह्म तु सर्वगुणदोषसम्बन्धवर्जितमित्यतो ब्रह्मणि ते स्थिता इति युक्तं १९

## आनन्दगिरिकृतटीका।

सात्त्विकेषु राजसेषु तामसेषु चासमत्वेषु समत्वदर्शनमनुचितमिति शङ्कते नन्विति सर्वत्र समदर्शिनः तच्छब्देन परामृश्यन्ते तेषां दोषवत्त्वादभोज्यान्नत्वमित्यत्र प्रमाणमाह समासमाभ्यामिति समानामध्ययनादिभिः समानधर्मकाणां वस्त्रालङ्कारादिपूजया विषमे प्रतिपत्तिविशेषे क्रियमाणे सत्यसमानाञ्चासमानधर्मकाणां कस्यचिदेकवेदत्वमपरस्य द्विवेदत्वमित्यादिधर्मवतां साम्युक्ततया पूजया समे प्रतिपत्ति

## भाषा अनुवाद।

यह सुनि जो मन्देह होय कि विषममें समदृष्टि होना ही निषिद्ध है फेरि सबमें समदृष्टि मनुष्य पण्डित कैसे हैं और गौतमने कहा कि विषममें सम पूजन और सममें विषम पूजन करनेवाले लोक परलोक से भ्रष्ट होते हैं इस शङ्का को निवारण करते कृष्ण कहते हैं कि जिनका मन सम भाव में स्थित है उनो ने इहां ही स्वर्ग जय कर लिया है क्योंकि सर्व्व वर्तमान रूप निर्दोष ब्रह्म परिपूर्ण हो रहा है ऐसा जो जानते हैं ते ब्रह्म में स्थित कहे ब्रह्म रूप हो निर्दोष हैं और गौतम की बात ज्ञान अवस्था के पहली अवस्था की है १९

## आनन्दगिरिकृतटीका।

विशेषेपूजयितापूरुषविशेषंज्ञात्वाप्रतिपत्तिमकुर्व्वन्धनाद्धर्माच्चहीयते तेनसात्त्विकेराजसतामसयोश्चसमबुद्धिंकुर्व्वन्प्रत्यवैतीर्थः उत्तरत्वेनोत्तरश्लोकमवतारयति नतेदोषवन्तइति सूत्यवष्टम्भेनसर्व्वसत्त्वेषु समत्वदर्शिनांदोषवत्त्वमुक्तंकथंनास्तीतिप्रतिज्ञामात्रेणासिध्यतीतिशङ्कते कथमिति सूतेर्गतिमग्रेवदिष्यन्निर्दोषत्वंसमत्वदर्शिनांविषदयति इहैवेति सर्व्वेषां चेतनानां साम्येप्रवणमनसा ब्रह्मलोकगमनमन्तरेणअस्मिन्नेव देहेपरिभूतजन्मनामशेषदोषराहित्येहेतुमाह निर्दोषंहीति वर्त्तमानोदेहः सप्तम्यापरिगृह्यते तानेवसमदर्शिनोविशिनष्टि येषामिति ननुब्रह्मणो निर्दोषत्वमसिद्धं दोषवत्सु श्वपाकादिषु तद्दोषैर्द्दोषवत्त्वोपलब्धसम्भवात्तत्राह यद्यपीति यस्मात् तन्निर्द्दोषंतस्मात्तस्मिन्ब्रह्मणि स्थितैर्जन्मदोषैः सर्गोजित इति सम्बन्धः ब्रह्मणो गुणभूयस्त्वादल्पीयान् दोषोपिस्यादित्याशंक्याह नापीति चेतनस्य गुणविशेषे विशिष्टत्वमानष्टं निर्गुणत्वश्रवणादित्ययुक्तं बुद्धिसुखादीनांपरिशेषादात्मधर्म्मत्वस्यकैश्चिन्निश्चितत्वादित्याशंक्याह वक्ष्यतिचेति आत्मनोनिर्गुणत्वेवाक्यशेषंप्रमाणयति अनादित्वादिति चकारोवक्ष्यतीत्यनेनसम्बन्धार्थः गुणदोषवशादात्मनोभेदाभावेपिभेदोन्त्यविशेषेभ्योभविष्यतीतिप्रसङ्गादाशंक्यदूषयति नापीति प्रतिशरीरमात्मभेदसिद्धौतद्धेतुत्वेनतेषांसत्त्वंतेषाञ्चसत्त्वेप्रतिशरीरमात्मनोभेदसिद्धिरिति परस्पराश्रयत्वमभिप्रेत्यहेतुमाह प्रतिशरीरमिति आत्मनोभेदकाभावेफलितमाह अतइति समत्वमेवव्याकरोति एकञ्चेति ब्रह्मणोनिर्विशेषत्वेनैकत्वाज्जीवानाञ्चभेदकाभावेनैकत्वस्योक्तत्वादेकलक्षणत्वादेकत्वंजीवब्रह्मणोरेष्टव्यमित्याह तस्मादिति जीवब्रह्मणोरेकत्वेजीवानां ब्रह्मवन्निर्द्दोषत्वंसिध्यतीत्याह तस्मान्नेति तच्छब्दार्थमेवस्फोरयति देहादीति यदिसर्व्वसत्त्वेषुसमत्वदर्शनमदुष्टमिष्टं तर्हिकथंगोतमसूत्रमित्याशंक्याह देहासंघातेतिसूत्रस्यतथोक्ताभिमानवद्विषयत्वेगमकमाह पूजेति यदिचतुर्व्वेदानामेवसतांपूजयावैषम्यंयदिवाचतुर्व्वेदानांषडङ्गविदांब्रह्मविदाञ्चपूजयासाम्यं तदातेषामुक्तपूजाविषयाणांकेषाञ्चिन्मनोविकारसम्भवेकर्त्ताप्रत्यवैतीत्यविद्वद्विषयत्वं सूत्रस्यप्रतिभातीत्यर्थःतत्रैवचानुभवमनुकूलत्वेनोदाहरति दृश्यतेहीति देहादिसंघाताभिमानवतां गुणदोषसम्बन्धसम्भवात्तद्विषयंसूत्रमित्युक्तमिदानींब्रह्मात्मदर्शनाभिमानवतां गुणदोषासम्बन्धान्नतद्विषयंसूत्रमित्यभिप्रेत्याह ब्रह्मस्विति १९

नप्रहृष्येत्प्रियंप्राप्य नोद्विजेत्प्राप्यचाप्रियं स्थिरबुद्धिरसंमूढोब्रह्मविद्ब्रह्मणि स्थित:२०

शाङ्करभाष्यं।

कर्म्मणिविषयञ्चसमासमाभ्यामित्यादि इदन्तु सर्व्वकर्म्मसंन्यासिविषयंप्रस्तुतं सर्व्वकर्म्माणि मनसेत्यारभ्याध्यायपरिसमाप्तेः यस्मान्निर्दोषं समंब्रह्मात्मातस्मात् नेति नप्रहृष्येत् नहर्षंकुर्य्यात् प्रियमिष्टंप्राप्यलब्ध्वानोद्विजेत् प्राप्यैवचाप्रियमनिष्टं लब्ध्वादेहमात्रात्मदर्शिनांहि प्रियाप्रियप्राप्तीहर्षविषादौकुर्व्वाते नकेवलात्मदर्शिनः तस्यप्रियाप्रियप्राप्त्रसम्भवात् किञ्चसर्व्वभूतेष्वेकःसमोनिर्द्दोषआत्मेति स्थिरानिर्व्विचिकित्साबुद्धिर्यस्य सस्थिरबुद्धिरसंमूढःसंमोहवर्ज्जितश्चस्यात् यथोक्तब्रह्मवित् ब्रह्मणिस्थितोऽकर्म्मकृत् सर्व्वकर्म्मसन्यासीत्यर्थः २०

आनन्दगिरिकृतटीका।

इतश्चनेदंसूत्रंब्रह्मविद्विषयमित्याह कर्मीति तत्रैवपूजापरिभवसम्भवादित्यर्थः ननुयत्रसमत्वदर्शनंतत्रैवत्विदंसूत्रंनतुकर्म्मणिवेतिविभागोस्तितत्राह इदंत्विति समत्वदर्शनस्यसन्यासिविषयत्वेतेनप्रस्तुतत्वेहेतुमाह सर्व्वकर्माणीति अध्यायपरिसमाप्तेःसर्व्वकर्माणीत्यारभ्यतत्रतत्रसर्व्वकर्म्मसन्यासाभिधानात्तद्विषयमिदमसंत्वदर्शनंगम्यते तत्रचनिरहङ्कारेनिरवकाशंसूत्रमित्यर्थः ननुइष्टानिष्टप्राप्तिभ्यांहर्षविषादौविद्वानपिकुर्व्वन्निर्दोषेब्रह्मणिकथंस्थितिं लभेतेत्याशंक्याकांक्षितंपूरयन्नुत्तरश्लो

स्वामिकृतटीका।

ननुविषमेपुसमदर्शनंनिषिद्धंकुर्व्वन्तोपिकथंतेपण्डिताः यथाहगौतमःसमासमाभ्यांविषमेसमेपूजातइति अस्यार्थःसमायपूजायांविषमेप्रकारेकृते सति विषमायचसमेप्रकारेकृते सति सपूजकइहलोकात् परलोकाच्चहीयतइति तत्राह इहैवेति इहैवजीवद्भिरेव तैःसृज्यतइतिसर्गःसंसारोजितोनिरस्तःकैःयेषांमनःसाम्येसमत्वेस्थितं तत्रहेतुःहियस्माद्ब्रह्मसमंनिर्द्दोषञ्चतस्मात्तेसमदर्शिनोब्रह्मण्येवस्थिताब्रह्मभावंप्राप्ताइत्यर्थः गौतमोक्तस्तुदोषोब्रह्मभावप्राप्तेःपूर्व्वमेव पूजातइति पूजकावस्थाश्रयणात् १९

भाषा अनुवाद।

अबब्रह्मभावप्राप्तपुरुषका लक्षणकहतेहैं किब्रह्मज्ञानीहोके जोब्रह्ममेंस्थित हैं वैकोईप्रियवस्तुपायके हर्षितनहींहोतेहैं औरअप्रियप्राप्तहोनेसेभी विषादन हींकरतेहैं क्योंकि वैलोग स्थिरबुद्धिऔमोहरहितहैं तथाब्रह्मवित् ब्रह्मरूपहैं २०

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखं सब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते २१

## शाङ्करभाष्यं।

किञ्च ब्रह्मणिस्थितः बाह्यबाह्यस्पर्शेषुबाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयास्तेषु बाह्यस्पर्शेषु असक्त आत्मान्तःकरणंयस्य सोयमसक्तात्माविषयेषुप्रीतिवर्जितः सविन्दतिलभते आत्मनियत्सुखंतद्विन्दतीत्येतत् सब्रह्मयोगयुक्तात्मा ब्रह्मणियोगःसमाधिर्ब्रह्मयोगस्तेनब्रह्मयोगेनयुक्तःसमाहितस्तस्मिन्व्यापृतआत्मान्तःकरणंयस्य सब्रह्मयोगयुक्तात्मासुखमक्षयमश्नुतेप्राप्नोति तस्माद्बाह्यविषयप्रीतेः क्षणिकायाइन्द्रियाणिनिवर्त्तयेदात्मन्यक्षयसुखार्थीत्यर्थः २१

## आनन्दगिरिकृतटीका

कमुत्थापयति यस्मादिति आत्मज्ञाननिष्ठावतोविदुषोहर्षविषादनिमित्ताभावान्नतावुचिताविल्याह स्थिरबुद्धिरिति ननुहर्षविषादनिमित्तत्वंप्रियाप्रिययोःसिद्धमिति कथंतत्प्राप्ताहर्षोद्वेगौनकर्त्तव्याविति नियुज्यते तत्राह देहेति विदुषोपिप्रियाप्रियप्राप्तिसामर्थ्याद्देवहर्षविषादौदुर्वाराविल्याशंक्याह नकेवलेति अद्वितीयदर्शनशीलस्यव्यतिरिक्तप्रियाप्रियप्राप्तयोगान्नतन्निमित्तौहर्षविषादावित्यर्थः इतोपिविदुषोहर्षविषादावसम्भावितावित्याह किञ्चेति निर्दोषेब्रह्मणिप्रागुक्तेदृढप्रतिपत्तिःसंमोहेन हर्षादिहेतुनारहितोयथोक्तसर्वदोषरहिते ब्रह्मण्यहमस्मीति विद्यावानशेषदोषशून्येतस्मिन्नेवब्रह्मणिस्थितस्तदनुरोधात् कर्माण्यकुर्वाणोनैवहर्षविषादभागीभवितुमर्हतीत्यर्थः २०

## स्वामिकृतटीका।

ब्रह्मप्राप्तस्यलक्षणमाह नप्रहृष्येदिति ब्रह्मविद्भूत्वाब्रह्मण्येवयःस्थितःसप्रियंप्राप्यनप्रहृष्येत्नप्रहृष्टोहर्षवान्स्यात् अप्रियंप्राप्यचनोद्विजेत् नविषीदतीत्यर्थः यतःस्थिरबुद्धिःस्थिरानिश्चलाबुद्धिर्यस्यतत् कुतःयतोऽसंमूढःनिवृत्तमोहः २०

## भाषा अनुवाद

मोहनिवृत्तभावहोनेसे बुद्धिस्थिरहोतीहै इसकाहेतुकहतेहैं किबाह्यइन्द्रियोंकेविषयमे अनासक्तचित्तपुरुष अपनेअन्तःकरणमे विक्षेपरहितशान्तियुक्तजोसात्विकसुख सोअनुभवकरते और वहीपुरुषशान्तिसुखप्राप्तहोके ब्रह्मयोगयुक्तआत्माकहेसमाधिकेद्वारा परमात्माकेसाथएकताप्राप्तिरूप जोअक्षयसुखसोभीलाभकरतेहैं २१

येहिसंस्पर्शजाभोगादुःखयोनयएवते आद्यन्तवन्तःकौन्तेयनतेषुरमतेबुधः २२

## शाङ्करभाष्यं।

इतश्चनिवर्त्तयेत् येहीति येहियस्मात् संस्पर्शजाविषयेन्द्रियसंस्पर्शेभ्योजा ताभोगाभुक्तयोदुःखयोनयएवतेऽविद्याकृतत्वात् दृश्यन्तेह्याध्यात्मिकादीनिदुःखा नितन्निमित्तान्येवयथेहलोकेतथापरलोकेपीतिगम्यते एवशब्दान्नसंसारेसुखस्यग न्धमात्रमप्यस्तीतिबुध्वाविषयमृगतृष्णिकायां इन्द्रियाणिनिवर्त्तयेन्नकेवलंदुःखयोन

## आनन्दगिरिकृतटीका

शब्दादिविषयप्रीतिप्रतिबन्धान्न कस्यचिदपिब्रह्मणिस्थितिःसिध्येदित्याशं क्याह किञ्चेति नकेवलंपूर्वोक्तरीत्याब्रह्मणिस्थितोहर्षविषादरहितः किन्तुविद्या न्तरेणापीत्यर्थः यावद्यावद्विषयेषुरागरूपमावरणं निवर्त्तते तावत्तावदात्मस्वरू पसुखमभिव्यक्तंभवतीत्याह बाह्येति नकेवलमसक्तात्माशमवशादेवसुखंविन्दते किन्तुब्रह्मसमाधिनासमाहितान्तःकरणः सुखमनन्तंव्याप्नोतीत्याह सब्रह्मेति त त्पूर्वार्द्धंव्याचष्टे बाह्येति समाधानाधीनसम्यग्ज्ञानद्वारानिरतिशयसुखप्राप्ति मुत्तरार्द्धव्याख्यानेन कथयति ब्रह्मणीत्यादिना शब्दादिविषयविमुखस्यानन्तसु खाप्तिसम्भवात्तदर्थिना प्रयत्नेन विषयवैमुख्यं कर्त्तव्यमिति शिष्यशिक्षार्थमाह त स्मादिति २१

## स्वामिकृतटीका

मोहनिवृत्तावुद्धिस्थैर्यहेतुमाह बाह्येति इन्द्रियैःस्पृश्यन्तइतिस्पर्शा विषयाः बाह्येन्द्रियविषयेष्वसक्तात्माअनासक्तचित्तआत्मन्यन्तःकरणेयदुपशमात्मकंसात्वि कंसुखंतद्विन्दतिलभते सचोपशमसुखंलब्ध्वाब्रह्मणियोगेनसमाधिनायुक्तस्तदै क्यंप्राप्तआत्मायस्य सोऽक्षयंसुखमश्नुतेप्राप्नोति २१

## भाषा अनुवाद।

प्रियजोविषयभोगतिनकेनिवृत्तहोनेसेफेरिमुक्तिपुरुषार्थअर्थात्परमप्रियकैसेहै इससंशयपरकहतेहैं किजोस्वर्गआदिविषयऔरउनविषयोंसेप्रगट जोसुखसो भोगनसमयमेंस्वल्पकेहैं औरऔरअधिकसुखदेखि इच्छाकोटद्धिऔआयुर्दाहोभर हैं औरभोगपीछेकुछनहींहैं खालीचिन्तामात्रकरतेहैं इनसबहेतुवोंसेविषय केवलदुखकेकारणहैं औरउनकाआदिअन्तभीहै इससेकौन्तेय विवेकीलोगउ सविषयसुखभोगमे नहींरमितहोतेहैं २२

## शाङ्करभाष्यं

यश्चाद्यन्तवन्तश्च आदिर्विषयेन्द्रियसंयोगोभोगानामन्तश्च तद्वियोगएवातश्चाद्य
न्तवन्तोऽनित्यामध्यक्षणभावित्वादित्यर्थः कौन्तेय नतेषुरमतेबुधोभोगेषुविवेकी अव
गतपरमार्थतत्त्वोऽत्यन्तमूढानामेवहि विषयेषु रतिर्दृश्यते यथापश्वादिप्रभृतीनां २२

## आनन्दगिरिकृतटीका ।

तत्रैवहेत्वन्तरपरत्वेनोत्तरश्लोकमुदाहरति इतश्चेति विषयेभ्यः सकाशा
दिन्द्रियाणीतिशेषः वैराग्यार्थमेववैषयिकानिसुखानिदूषयति येहीति ननुवि
षयेन्द्रियसंप्रयोगसंभूतेषुभोगेषु जन्तूनामभिरुचिदर्शनात्कुतस्तेषां दुःखयोनित्व
मित्याशंक्याविवेकिनांतेष्वासङ्गेपि नविवेकिनामित्याह आद्यन्तवन्तइति यस्मा
दाधिव्याधिजरामरणादिसहितेभ्यःसमागमनादिलक्षणरूपभागिभ्यश्च विषयेन्द्रि
यसम्बन्धेभ्योभोगाःसुखलवानुभवाजायन्ते तस्मात्तेदुःखहेतवोभवन्तीतियोजना अ
विद्याकार्यत्वाद्दुःखानांकुतोभोगजन्यत्वमित्याशंक्य भोगानामविद्याप्रयुक्तत्वात्तन्नि
बन्धनत्वंदुःखानांयुक्तमित्यभिप्रेत्याह अविद्येति भोगानांदुःखयोनित्वेमानम
नुभवमुपन्यस्यति दृश्यन्तेहीति ऐहिकानांभोगानांदुःखनिमित्तत्वेपिनामुष्मिका
णांतथात्वमनुभवादित्याशंक्यावधारणसामर्थ्यसिद्धमर्थमाह यथेति पूर्वार्द्धस्याक्ष
रार्थमुक्त्वातात्पर्यार्थमाह नेत्यादिना इतश्चविषयेभ्यःसकाशादिन्द्रियाणिनिवर्त्तयि
तव्यानीत्याह नकेवलमिति आद्यन्तवत्त्वेमध्यक्षणवर्त्तित्वेनक्षणभङ्गुरत्वादुपेक्ष
णीयत्वंभोगानांसिध्यति अस्तिहितेषांक्षणभङ्गुरत्वंक्षणिकविषयाकारमनोवृत्त्य
भिव्यक्तत्वादितिमन्वानःसन्नाह अतइति बुद्धिपूर्वकारिणांविवेकवतांभोगेषुप्रीत्यप
लब्धेश्चतेषःसाभासत्वंप्रतिभातीत्याह नतेष्विति प्रतीकोपादानमाद्यमिदंपुनर्व्या
ख्यानमिति नपुनरुक्तिः ननुकेषाञ्चिद्भोगेष्वभिरुचिरुपलभ्यते तत्राह अत्यन्तेति २२

## स्वामिकृतटीका ।

ननुप्रियविषयभोगानामपिनिवृत्तेःकथंमोक्षःपुरुषार्थःस्यात्तत्राह येहीति
संस्पृश्यन्तइति संस्पर्शाविषयास्तेभ्योजातायेभोगाःसुखानितेहिवर्त्तमानकालेऽपिस
र्द्धासूयादिव्याप्तत्वाद्दुःखस्यैवयोनयःकारणभूताः तथादिमन्तोऽन्तवन्तश्चअतोविवे
कीतेषुनरमते २२

शक्नोतीहैवयःसोढुं प्राक्शरीरविमोक्षणात् कामक्रोधोद्भवंवेगंसयुक्तःससुखी नरः २३

## शाङ्करभाष्यं

अयञ्चश्रेयोमार्गप्रतिपक्षीकष्टतमोदोषःसर्वानर्थप्राप्तिहेतुर्निवार्य्यश्चेति तत्परिहारेयत्नाधिक्यंकर्त्तव्यमित्याह भगवान्शक्नोतीति शक्नोत्युत्सहते इहैवजीवन्नेव यःसोढुं प्रसहितुंप्राक्पूर्वंशरीरविमोक्षणात् आमरणात् इत्यर्थःमरणसीमाकरणं जीवतोऽवश्यम्भावीहिकामक्रोधोद्भवोवेगअनन्तनिमित्तवान्हिसइति यावन्मरणं तावन्नविस्रम्भणीयइत्यर्थःकामइन्द्रियगोचरप्राप्तेइष्टेविषयेश्रूयमाणेस्मर्यमाणेचानुभूते सुखहेतौयागृद्धिःतृष्णासकामःक्रोधश्चात्मनःप्रतिकूलेषुदुःखहेतुषुदृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वायोद्वेषःसक्रोधस्तौकामक्रोधौउद्भवोयस्यवेगस्यसकामक्रोधोद्भवोवेगःरोमाञ्चनहृष्टनेत्रवदनादिलिङ्गोऽन्तःकरणप्रक्षोभरूपःकामोद्भवोवेगः गात्रप्रकम्पप्रस्वेदसन्दष्टौष्ठपुटरक्तनेत्रादिलिङ्गःक्रोधोद्भवोवेगस्तंकामक्रोधोद्भवंवेगं यउत्सहते सोढुं सहितुं यक्तःसयुक्तोयोगीसुखीचेहलोकेनरः २३

## आनन्दगिरिकृतटीका ।

उत्तरश्लोकस्यतात्पर्य्यमाह अयञ्चेति श्रेयोमार्गप्रतिपक्षत्वंकष्टतमत्वेहेतुस्तत्रैवहेत्वन्तरमाह सर्वेति प्रयत्नाधिक्यस्यकर्त्तव्यत्वेहेतुं सूचयति दुर्निवार्य्य इति प्रसिद्धंहिकामक्रोधोद्भवस्यवेगस्यदुर्निवारत्वंयेनमातरमपिचाधिरोहति पितरमपिहन्तितमवश्यंपरिहर्त्तव्यंदर्शयतिशक्नोतीति यथोक्तं वेगंवहिरनर्थरूपेणपरिणामात् प्रागेवदेहान्तरत्वन्नंयःसोढुं क्षमते तंस्तौति सयुक्तइति मरणसीमाकरणस्यतात्पर्य्यमाह मरणेति प्रसिद्धोहिशब्दः तत्रहेतमाह अनन्तेति व्याध्युपहतानांहृष्टानाञ्चकामादिवेगोनभवतीत्याशंक्याह इति यावदिति कामक्रोधोद्भवंवेगंव्याख्यातुमादौकामंमनोविकारविशेषत्वेनव्याचष्टे कामइति कथमस्यमनोविकारविशेषत्वंतदाह इन्द्रियेति कामोगृद्धिस्तृष्णेति पर्य्यायाःसन्तःशब्दामनोविकारविशेषे

## भाषा अनुवाद ।

इसमेंमुक्तिहीपरमपुरुषार्थहै औरकामक्रोधसेउत्पन्नजोक्षोभसोईमुक्तिकाप्रतिपक्षहै अतएवउसवेगकोजोसहिसकैसोमुक्तिभागीहोयगायहीकहतेहैं किशरीररहते अथवाशरीरसामर्थ्यरहते ऊयेजोकामक्रोधकेवेगकोसहिलेनेसकैसोईनरयुक्तहैआत्मरूपऔरसुखीहैं २३

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः। स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति २४

## शाङ्करभाष्यं

कथम्भूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्याह भगवान् यइति। योऽन्तरात्मनि सुखं यस्य सोऽन्तःसुखस्तथांतरेवात्मन्यारामः क्रीडायस्य सोऽन्तरारामस्तथैवांतरात्मैवज्योतिःप्रकाशो यस्य सोऽन्तर्ज्योतिरेव यईदृशः सयोगी ब्रह्मनिर्वाणंब्रह्मणिनिर्वृतिंमोक्षमिहजीवन्नेवब्रह्मभूतःसन्नधिगच्छति प्राप्नोति २४

## आनन्दगिरिकृतटीका।

पर्यवस्यन्तीत्यर्थः क्रोधश्चमनोविकारविशेषस्तद्वदित्याह क्रोधश्चेति तमेवक्रोधंस्पष्टयति आत्मनइति एवंकामक्रोधौव्याख्यायतयोरुत्कटत्वावस्थात्मनोवेगस्तताभ्यामुत्पत्तिमुपन्यस्यति ताविति यथोक्तवेगावगमोपायमुपदिशति रोमाञ्चनहृष्टनेत्रेत्यादिना उभयविधवेगंयोजीवन्नेवसोढुं शक्नोति तंपुरुषधौरेयत्वेनस्तौति तमित्यादिना २३

## स्वामिकृतटीका।

तस्मान्मोक्षएवपरमःपुरुषार्थस्तस्यचकामक्रोधवेगोऽतिप्रतिपक्षोऽतस्तत्सहनसमर्थ एवमोक्षभागित्याह शक्नोतीहैवेति कामात् क्रोधाच्चोद्भवति योवेगःमनोनेत्रादिक्षोभलक्षणस्तमिहैवतदुद्भवसमयएवयोनरःसोढुं प्रतिरोद्धुं शक्नोति तदपिनक्षणमात्रंकिन्तुशरीरविमोक्षणात् प्राग्देहपातादित्यर्थःयएवम्भूतःसएवयुक्तःसमाहितःसुखीचभवति नान्यः यद्वामरणादूर्द्ध्वंविलसन्तीभिर्युवतिभिरालिङ्ग्यमानोऽपिपुत्रादिभिर्दह्यमानोपियथाप्राणशून्यःकामक्रोधवेगंसहतेतथामरणात्प्रागपिजीवन्नेवयःसहतेसएवयुक्तःसुखीचेत्यर्थःतदुक्तं वशिष्ठेन प्राणेगतेयथादेहःसुखदुःखेनविन्दति तथाचेत् प्राणयुक्तोऽपिसकैवल्याश्रमेवसेदिति २३

## भाषाअनुवाद

औरकेवलकामक्रोधकावेगजीतनेहीसे मुक्तनहीं होयहै औरभीकहतेहैं किजोअपनेअन्तरात्मामेसुखीऔविषयभोगमेसुखी नहींहै औरजोपुरुषआत्मारामहोके आत्माहीमेविहारकरता औबाहरकेव्यापारसेविरततथाअन्तःप्रकाशहै अथवाआत्माहीमेदृष्टिऔनृत्यगीतआदिकविषयोंसेदृष्टिनहींरखताहै सोईयोगी इहकहेजीवतेहीब्रह्मरूपब्रह्ममेलीनहोताहै २४

लभंतेब्रह्मनिर्वाणमृषयःक्षीणकल्मषाः छिन्नद्वैधायतात्मानःसर्व्वभूतहितेरताः २५

शाङ्करभाष्यम् ।

किञ्चलभंतइति लभंतेब्रह्मनिर्वाणंमोक्षमृषयःसम्यग्दर्शिनःसन्न्यासिनःक्षीणकल्मषाः क्षीणपापादिदोषाःछिन्नद्वैधाःछिन्नसंशयाःयतात्मानःसंयतेन्द्रियाःसर्व्वभूतहितेरताःसर्व्वेषांभूतानांहितेआनुकूल्येरता अहिंसकाइत्यर्थः २५

आनन्दगिरिकृतटीका

ज्ञानस्यात्यंतरङ्गमात्ममात्मनिष्ठत्वं दर्शयन्प्रकृतंब्रह्मविदमेवविशिनष्टि कथम्भूतश्चेति • यथांतरेवसुखंनवाह्यैर्विषयैस्तथांतरेवज्योतिर्नश्रोत्रादिभिरतो विषयांतरविज्ञानरहित इत्याह तथेति यथोक्तविशेषणसमाधिमान्जीवन्नेवमुक्तिमधिगच्छतीत्याह सयोगीति आत्मन्यंतरेवसुखमितिवाह्यविषयनिरपेक्षत्वं विवक्षितमंतरारामत्वञ्चइन्द्रियादिविषयापेक्षामंतरेण क्रीडाप्रयुक्तफलभाक्त्वमभिमतमिन्द्रियादिजन्यप्रकाशशून्यत्वमात्मज्योतिष्ट्वमिष्टंयथोक्तविशेषणसम्पन्नः समाहितश्चजीवन्नेवब्रह्मभावंप्राप्नोतिब्रह्मणिपरिपूर्णेनिर्वृतिं सर्व्वानर्थनिवृत्त्युपलक्षितां स्थितिमनंतिशयानन्दाविर्भावलक्षणात् प्राप्नोतीत्याह यइत्यादइति २४

मुक्तिहेतोर्ज्ञानस्य साधनान्तरमाह किञ्चेति यज्ञादिनित्यकर्म्मानुष्ठानात्पापादिलक्षणंकल्मषंक्षीयते ततश्चश्रवणाद्यावृत्तेः सम्यक्दर्शनंजायते ततोमुक्तिरप्रयत्नेनभवतीत्याह लभन्तइति ज्ञानप्राप्त्युपायान्तरंदर्शयति छिन्नेति श्रवणादिनासंशयनिरसनं कार्यकारणनियमनञ्च दयालुत्वेनाहिंसकत्वमित्येतदपिसम्यक्ज्ञानप्राप्तौकारणमित्यर्थः अक्षरव्याख्यानंस्पष्टत्वान्नव्याख्यायते २५

स्वामिकृतटीका ।

नकेवलकामक्रोधवेगसम्बरणमात्रेणमोक्षंप्राप्नोति अपितुयोऽन्तरिति अंतरात्मन्येवसुखंयस्यनतुविषयेषुअंतरेवारामःक्रीडायस्यनवहिः अन्तरेवज्योतिर्दृष्टिर्यस्यनगीतनृत्यादिषुसएवंब्रह्मणिभूतःस्थितः सन्ब्रह्मनिर्वाणंलयमधिगच्छति प्राप्नोति २४

भाषानुवाद ।

मुक्तिकाहेतुजोज्ञानतिसकीसाधनउपायप्रकारान्तरकहे दूसरीतरहसेकहतेहैं किञ्चपिकहेसम्यक्दर्शीसन्न्यासीलोग जोयज्ञआदिनित्यनैमित्तिककर्म्मकरिक्षीणकल्मषकहेनिःपापऔनिःपापहोकेश्रवणआदिसेज्ञानकेद्वाराछिन्नद्वैधकहेसंशयरहितहोगयेहैं औरजिनकाचित्तऔइन्द्रियगणवशीभूतहैंऔप्राणियोंकेहितकारीदयालुस्वभावअर्थात् हिंसारहितहैं वेईब्रह्ममेलयरूपमोक्षपातेहैं २५

कामक्रोधविमुक्तानांयतीनांयतचेतसां अभितोब्रह्मनिर्व्वाणंवर्त्ततेविदितात्मनां २६

## शाङ्करभाष्यं ।

किञ्चकामेति कामक्रोधविमुक्तानांकामश्चक्रोधश्चकामक्रोधौताभ्यांविमुक्तानांयतीनांसन्यासिनांयतचेतसांसंयतान्तःकरणानां अभितउभयतोजीवतांमृतानाञ्चब्रह्मनिर्व्वाणंमोक्षोवर्त्तते विदितात्मनांविदितोज्ञातआत्मायेषांतेविदितात्मानस्तेषां विदितात्मनां सम्यग्दर्शिनामित्यर्थः २६

सम्यग्दर्शननिष्ठानांसंन्यासिनांसद्योमुक्तिरुक्ताकर्म्मयोगश्चईश्वरार्पितसर्व्वभावेनेश्वरेब्रह्मण्याधायक्रियमाणःसत्त्वशुद्धिज्ञानप्राप्तिसर्व्वकर्म्मसंन्यासक्रमेणमोक्षायेतिभगवान्पदेपदेऽब्रवीद्वक्ष्यतिच अथइदानींध्यानयोगंसम्यग्दर्शनस्यान्तरङ्गं विस्तरेणवक्ष्यामीति तस्यसूत्रस्थानीयान्श्लोकानुपदिशतिस्मभगवान्वासुदेवः स्पर्शानिति स्पर्शान्शब्दादीन्कृत्वाबहिर्व्वाह्यान्श्रोत्रादिद्वारेणान्तर्बुद्धौप्रवेशिताः शब्दादयो विषयास्तानचिन्तयतःशब्दादयोवाह्याबहिरेवकृताभवन्तितानेवंबहिःकृत्वाचक्षुश्चैवान्तरेभ्रुवोःकृत्वेत्यनुषज्यते तथाप्राणापानौनासाभ्यन्तरचारिणौसमौकृत्वा २७

## आनन्दगिरिकृतटीका

पूर्व्वंकामक्रोधयोर्वेगःसोढव्योदर्शितःसम्प्रति तावेवत्याज्यावित्याह किञ्चेति ननु दर्शितविशेषवतांमृतानामेवमोक्षोनतुजीवतामिति चेन्नेत्याह अभितइति अस्मदादीनामपितर्हिप्रभूतकामादिप्रभावविधुराणांकिमिति मोक्षोनभवतीत्याशंक्यसम्यग्ज्ञानवैशेष्याभावादित्याह विदितेति उक्तेर्थेश्लोकाक्षरणामन्वयमाचष्टेकामक्रोधेत्यादिना २६

## स्वामिकृतटीका ।

किञ्चलभन्तइति ऋषयःसम्यग्दर्शिनःक्षीणंकल्मषंयेषांछिन्नंद्वैधंसंशयोयेषां यतःसंयतआत्माचित्तंयेषांसर्व्वेषांभूतानांहितेरताः येकृपालवस्तेब्रह्मनिर्व्वाणंमोक्षंलभन्ते २५ किञ्चकामेत्यादि कामक्रोधाभ्यांविमुक्तानांयतीनांसन्यासिनां संयतचित्तानांज्ञातात्मतत्त्वानामभितउभयतोजीवतांमृतानाञ्चनदेहान्तएवतेषांब्रह्मणिलयोऽपि तुजीवतामपिवर्त्ततइत्यर्थः २६

## भाषा अनुवाद ।

औरकामक्रोधसेविमुक्तज्ञानीअरुसन्यासीयतचित्तलोगविदितहैं आत्माजिनकोते जीवितऔमृतदोनोअवस्थामेंमुक्तहैं ऐसानहींकि देहान्तमेंमुक्तिपावेंगेवेजीवतेभी ब्रह्मकेसाथएकरूपहोयजीवन्मुक्तऐसेप्रसिद्धहोते हैं २६

स्पर्शान्कृत्वाबहिर्वाह्यांश्चक्षुश्चैवान्तरेभ्रुवोः प्राणापानौसमौकृत्वानासाभ्यन्तरचारिणौ २७

आनन्दगिरिकृतटीका।

इत्तमनूद्योत्तरश्लोकत्रयस्यतात्पर्य्यार्थमाह सम्यग्दर्शनेति ईश्वरार्पितसर्व्वभावेनेति भगवति परस्मिन्नीश्वरेसमर्पितःसर्व्वेषांदेहेन्द्रियमनसांभावश्चेष्टाविशेषोन क्वचिदपिवहिस्तेषांव्यापारस्तेनेत्यर्थः कर्म्मयोगस्यतत्फलस्यचाभिधानानन्तरमित्यथशब्दार्थः स्वतोवाह्यानांविषयाणांकुतोवहिष्करणमित्याशंक्याह श्रोत्रादीति तेषांवहिष्करणंकीदृगित्याशंक्याह तानिति २७

स्वामिकृतटीका।

सयोगीब्रह्मनिर्व्वाण मित्यादिषुयोगीमोक्षमवाप्नोतीत्युक्तंतमेवयोगंसङ्क्षेपेणाह स्पर्शानिति द्वाभ्यां वाह्याएवस्पर्शारूपरसादयोविषयाश्चिन्तिताःसन्तोऽन्तःप्रविशन्तितांस्तच्चिन्तात्यागेनवहिरेवकृत्वाचक्षुर्भ्रुवोरन्तरेभ्रूमध्यएवकृत्वाअत्यन्तंनेत्रयोर्निमीलनेनिद्रयामनोलीयते उन्मीलनेचवहिःप्रसरति तदुभयदोषपरिहारार्थमर्द्धनिमीलनेनभ्रूमध्येदृष्टिंनिधायेत्यर्थः उच्छ्वासनिश्वासरूपेणनासिकयोरभ्यन्तरेचरन्तौप्राणापानावूर्द्ध्वाधोगतिरोधेनसमौकुम्भकंकृत्वेत्यर्थः यद्वा प्राणोऽयंयथान वहिर्निर्याति तथावाअपानोऽन्तर्नप्रविशति किन्तुनासामध्यएवद्वावपियथाचरतस्तथामन्दाभ्यामुच्छ्वासनिश्वासाभ्यांसमौकृत्वेति २७

यतद्गति अनेनोपायेनयताःसंयताइन्द्रियमनोबुद्धयोयस्यमोक्षएवपरमयनंप्राप्यंयस्यअतएवविगताइच्छाभयक्रोधायस्यएवंभूतोयोमुनिः ससदाजीवन्नपिमुक्तएवेत्यर्थः २८

भाषा अनुवाद।

इसीअध्यायके २४ श्लोकसेकहाकियोगीमोक्षपातेहैं सोईफेरिसंक्षेपसेकहतेहैं किशब्दस्पर्शआदिवहिर्विषयोंकोवाहरकरिकेऔचक्षुकोदृष्टिकोभौंहकेमध्यमेराखिप्राणअपानवायुकोसमकरिकेकुंभकप्राणायामकरैभ्रूमध्यमेदृष्टिइसलियेकहाकि नेत्रवन्दकरनेसेनिद्रावशहोमनलयकहेलीनहोजाता औरखुलेरहनेसेमनविषयोंपरधावताहै अधखुलेरखनेसेभूकेवीचनिकटदृष्टिरहतीहै औदोनोवायुसम करनेसेनासिकारन्ध्रमेसञ्चारकरतीहैं जिसमेप्राणवायुवाहरऔअपानभीतरसञ्चार नकरै इसवास्तेयोगीकुंभकप्राणायामयोगकरै २७

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः विगतेच्छाभयक्रोधोयःसदामुक्तएवसः २८

## शाङ्करभाष्यं ।

यतेन्द्रियइति यतेन्द्रियमनोबुद्धिर्यतानिसंयतानिइन्द्रियाणिमनोबुद्धिश्चयस्य सयतेन्द्रियमनोबुद्धिर्मननात् मुनिःसंन्यासीमोक्षपरायणः एवंदेहसंस्थानोमोक्षप रायणोमोक्षएवपरमयनंपरागतिर्यस्य सोयंमोक्षपरायणोमुनिर्भवेत् विगतेच्छाभ यक्रोधइच्छाचभयञ्चक्रोधश्चइच्छाभयक्रोधास्तेविगतायस्मात् सविगतेच्छाभयक्रो धः यएवंवर्त्ततेसदासंन्यासीमुक्तएवसनतस्यमोक्षेऽन्यःकर्त्तव्योनास्ति २८

एवंसमाहितचित्तेनकिंविज्ञेयमिति चोद्यते भोक्तारमिति भोक्तारंयज्ञानां तपसाञ्चकर्त्तृरूपेण देवतारूपेणच यत्तंसर्व्वलोकमहेश्वरं सर्व्वेषां लोकानां महा न्तं ईश्वरंसर्व्वलोकमहेश्वरंसुहृदंसर्व्वभूतानांसर्व्वप्राणिनां प्रत्युपकारनिरपेक्षतयो पकारिणंसर्व्वभूतानांहृदयेशयंसर्वकर्म्मफलाध्यक्षंसर्व्वप्रत्ययसाक्षिणं मां नारायणं ज्ञात्वा शान्तिंसर्वसंसारोपरतिमृच्छति प्राप्नोति २६

इति श्रीमद्भगवद्गीताभाष्ये पञ्चमोऽध्यायः ५

## आनन्दगिरिकृतटीका

विषयप्रावण्यंपरित्यज्यचक्षुरपिभ्रुवोर्मध्येविक्षेपपरिहारार्थंकृत्वाप्राणापानौना साभ्यन्तरचरणशीलौसमौन्यूनाधिकवर्जितौ कुम्भकेननिरुद्धौकृत्वाकरणानिसर्व्वा ण्येवंसंयम्यप्राणायामपरोभूत्वाकिंकुर्यादित्यपेक्षायामाह यतेन्द्रियेति इन्द्रियादि संयमंकृत्वामोक्षमेवापेक्षमाणोमननशीलःस्यादित्यर्थः ज्ञानातिशयनिष्ठस्यसर्व्वदे च्छादिशून्यस्यसंन्यासिनोमुक्तेरनायाससिद्धत्वान्नतस्यकिञ्चिदपिकर्त्तव्यमस्तीत्याह विगतेति पूर्व्वार्द्धाक्षराणि व्याकरोति यतेत्यादिना द्वितीयार्द्धाक्षराणिव्याचष्टे विगतेत्यादिना २८

अधिकारिणोयथोक्तस्य कर्त्तव्याभावेज्ञातव्यमपिनास्तीत्याशंक्य परिहरति ए वमित्यादिना प्रसिद्धंभोक्तारंव्यवच्छिनत्ति सर्वलोकेति ; ततोह्यस्यबन्धविपर्यया वितिन्यायेनसर्वफलदातृत्वंदर्शयति सुहृदमिति उक्तेश्वरज्ञानेफलंकथयति शा

## भाषा अनुवाद ।

औरइसीउपायसे जिसकीइन्द्री औमनबुद्धिआदिवशीभूतहैं औरमुक्तिप्रा प्तिकेयोग्यहै औरजिसनेइच्छाभयक्रोधकोदूरकियाहै ऐसेगुणोंसेसदायुक्त जो मुनि सोजीवनकालमेंभी मुक्तअर्थात्वहकर्म्मरहितजीवन्मुक्तहै २८

भोक्तारंयज्ञतपसांसर्वलोकमहेश्वरं सुहृदंसर्वभूतानांज्ञात्वामांशान्तिमृच्छति२९

इतिश्रीभगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रे श्रीकृष्णार्जुनसम्वादेसंन्यासयोगोनामपञ्चमो ऽध्यायः ५

## आनन्दगिरिकृतटीका।

त्वेति यज्ञेषु तपःसुचद्विधाभोक्तृत्वंयनक्ति कर्त्तृरूपेणेति हिरण्यगर्भादिव्यवच्छे दार्थंविशिनष्टि महान्तमिति स्वरक्षोपकारिणंराजानं व्यावर्त्तयति प्रत्युपका रेति ईश्वरस्यताटस्थ्यंव्युदस्यति सर्वभूतानामिति तर्हितत्तत्कव्यवस्थितकर्म्मतत्फ लसंसर्गित्वंस्यादित्याशंक्याह सर्वकर्मेति नचतस्यबुद्धितद्वृत्तिसम्बन्धोपिवस्तुतोस्ती त्याह सर्वप्रत्ययेति यथोक्तेश्वरपरिज्ञानफलमभिदधाति मांनारायणमिति त देवंकर्म्मयोगस्यामुख्यसंन्यासापेक्षयाप्रशस्तत्वेपि ततोमुख्यसंन्यासस्याधिक्यात्तद्वतो बुद्धिशुद्ध्यादियुक्तस्यकामक्रोधोद्भवंवेगमिहैवसोढुंशक्तस्यशमदमादिमतो योगाधि कृतस्यत्वंपदार्थाभिन्नस्यपरमात्मानंप्रत्यक्त्वेनजानतोमुक्तिरितिसिद्धं २९

इति आनन्दगिरिकृतटीकायां पञ्चमोऽध्यायः ५

## स्वामिकृतटीका।

नन्वेवमिन्द्रियादिसंयमसात्रेणकथंमुक्तिः स्यान्नतावन्मात्रेणकिन्तु ज्ञानद्वारेणे त्याह भोक्तारमिति यज्ञानांतपसाञ्चैव ममभक्तैःसमर्पितानांयदृच्छयाभोक्तारं पालकमितिवासर्वेषांलोकानांमहान्तमीश्वरंसर्वभूतानांसुहृदंनिरपेक्ष्योपकारि णमन्तर्यामिणंमांज्ञात्वामत्प्रसादेनशान्तिंमोक्षमृच्छति प्राप्नोति विकल्पशङ्कापोहे नयेनैवंयोगसांख्ययोः समुच्चयःक्रमेणोक्तःसर्वज्ञंनौमितंगुरुं २९

इति श्रीधरस्वामिकृतटीकायांपञ्चमोऽध्यायः ५

## भाषा अनुवाद।

जोकहोकिइन्द्रीमात्रवशकरनेसेपुरुषकैसेमुक्तहोय तिसपरकहतेहैंकि ह्वांमुक्ति ज्ञानहीकेद्वाराहोतीहै देखोहमारेभक्तोंसेसमर्पितयज्ञऔतपकेअयाचितरूपभो क्ताऔप्रतिपालकसर्वलोकमेंश्रेष्ठ ईश्वरसबसेनिरपेक्षअन्तर्यामीरूपहमको जानिकै योगीलोगमेरीअनुग्रहसेशान्तिकहेमोक्षपावतेहैं २९

श्रीधरस्वामीकहतेहैंकिजोअर्जुनकोकर्म्मयोगऔज्ञानयोगकीपृथकशङ्कानिवार णकरजिसनेक्रमसेदोनोंकोएककहाहै सोईजगतगुरुश्रीकृष्णकोप्रणामकरतेहैं

इतिश्रीजगन्नाथशुक्लविरचितायां रुनभावनीटीकायांपञ्चमोध्यायः ५

# श्रीमद्भगवद्गीता।

## षष्ठोध्यायः

श्रीभगवानुवाच अनाश्रितःकर्मफलंकार्य्यंकर्मकरोतियः ससंन्यासीचयो
गीचननिरग्निर्नचाक्रियः १

### शाङ्करभाष्यं।

अतीतानन्तराध्यायान्तेध्यानयोगस्यसम्यग्दर्शनंप्रत्यन्तरङ्गस्यसूत्रभूताःश्लोकाः
स्पर्शान्कृत्वाबहिरित्यादयउपदिष्टास्तेषांवृत्तिस्थानीयोयंषष्ठोध्यायआरभ्यते तत्र
ध्यानयोगस्यबहिरङ्गंकर्मेति यावद्ध्यानयोगारोहणासमर्थस्तावद्गृहस्थेनाधिकृतेन
कर्त्तव्यंकर्मेति अतस्तत्स्तौति अनाश्रितइति ननुकिमर्थंध्यानयोगारोहणसीमा
करणंयावतानुष्ठेयमेवविहितंकर्मयावज्जीवंनारुरुक्षोर्मुनेर्योगंकर्मकारणमुच्यतइति
विशेषणादारूढस्यचशमेनैवसम्बन्धकरणादारुरुक्षोरारूढस्यचशमःकर्मचोभयंकर्त्तव्य

### भाषा अनुवाद।

श्रीधरस्वामीछठयेअध्यायकेआरम्भमेवर्णनकरतेहैं किमनुष्योंकोचित्तशुद्ध
होनेसेभीध्यानकेविनाकेवलसन्यासमात्रसेमुक्तिनहींमिलतीहै इसीहेतुसेश्रीभग
वानछठयेंअध्यामेध्यानयोगविस्तारकरिकहतेहैं किपञ्चमअध्यायकेअन्तभागमेसं
क्षेपसेकहागयाजोध्यानयोगसोई विस्तारकरनेकोछठयेंअध्यायकाआरम्भअर्थात्
सर्व्वकर्माणिमनसासन्यस्यास्तेसुखंवशी इस ५ अध्यायके १३ श्लोकसेसवकर्मत्या
गपूर्व्वकज्ञाननिष्ठाकीप्रशंसाकरनेसेऔरकर्मअनुष्ठानक्लेशकारीहै इससेहठात्
कर्मत्यागकीअवस्थाविनाभीकर्मकात्यागमनुष्योंकेमनमेहोयउठैहै तिसकेनिवा
रनकेअर्थकर्मछोड़नेसेकर्मकरनाश्रेष्ठहै यहवाहिवरुयोगकोवढ़ाईकरतेहुये
भगवानकहतेहैं कि

अनाश्रितकहेकर्मफलकीआकांक्षारहितहोयकरसवकर्मअवश्यहीकर्त्तव्यहैं इस
विचारसेजोविहितकर्मकाअनुष्ठानकरैसोईसंन्यासीऔसोईयोगीहै नहींतोनिर
ग्निकहेअग्निसाध्ययज्ञादिकर्मत्यागीऔअक्रियअर्थात् वेअग्निकेकर्मकुंआंतालावाव
डीखन नतथादानादिकर्मत्यागीहोकेलोगअपनेकोयोगीसमझेंगे किन्तुऐसानहीं
है तात्पर्ययहकिफलहीकात्यागउचितकर्मकात्यागनहीं अर्थात्उपरलिखेसवकर्मवि
ष्णुप्रीत्यर्थकरनाहीचाहिये सोईकहाअनाश्रितःकर्मफलंकार्य्यंकर्मकरोतियः १

## शाङ्करभाष्यं

त्वेनाभिप्रेतञ्चेत् स्यात्तदारुरुक्षोरारूढस्येति शमकर्म्मविषयभेदेनविशेषणंविभा
गकरणञ्चानर्थकंस्यात् तत्राश्रमिणांकश्चित् योगमारुरुक्षुर्भवत्यारूढश्चकश्चिदन्ये
नारुरुक्षवोनचारूढास्तानपेक्ष्यारुरुक्षोरारूढस्यचेति विशेषणंविभागकरणञ्चोप
पद्यतएवेतिचेन्नतस्यैवेति वचनात् पुनर्योगग्रहणाच्च योगारूढस्येति यआसीत्
पूर्व्वंयोगमारुरुक्षुस्तस्यैवारूढस्यशमएवकर्त्तव्यंकारणंयोगफलंप्रत्युच्यतइत्यतोनयाव
ज्जीवंकर्त्तव्यत्वप्राप्तिःकस्यचिदपिकर्म्मणायोगविभ्रष्टवचनाच्चगृहस्थस्यचेत् कर्म्मिणोयो
गोविहितःषष्ठेध्याये सयोगविभ्रष्टोपिकर्म्मगतिंकर्म्मफलंप्राप्नोतीति तस्यनाशाशङ्कानु
पपन्नास्यादवश्यंहिकृतंकर्म्मकाम्यंनित्यंवामोक्षस्यनित्यत्वादनारभ्यत्वेपिस्वंफलमार
भतएवनित्यस्यचकर्म्मणोवेदप्रमाणावबुद्धत्वात् फलेनभवितव्यमित्यवोचामान्यथावेद
स्यानर्थक्यप्रसङ्गादिति नचकर्म्मणिसत्युभयविभ्रष्टवचनमर्थवत् कर्म्मणोविभ्रंशका
रणानुपपत्तेः कर्म्मकृतमीश्वरेसंन्यस्येत्यतःकर्त्तारंकर्म्मफलंनारभतइतिचेन्नेश्वरेस
न्यासस्याधिकतरफलहेतुत्वोपपत्तेर्म्मोक्षायैवेतिचेत् स्वकर्म्मणांकृतानामीश्वरेन्यासो
मोक्षायैवनफलान्तरायबोगसहितःयोगाच्चविभ्रष्टइत्यतस्तंप्रतिनाशाशङ्कायुक्तैवेति
चेन्नैकाकीयतचित्तात्मानिराशीरपरिग्रहोब्रह्मचारिव्रतेस्थित इतिकर्म्मसंन्यास
विधानात् नचात्रध्यानकालेस्त्रीसहायत्वाशङ्कायेनैकाकित्वंविधीयते नचगृहस्थस्य
निराशीरपरिग्रहइत्यादिवचनमनुकूलंउभयभ्रष्टप्रश्नानुपपत्तेश्चअनाश्रितइत्यनेन
कर्म्मिणएवसंन्यासित्वंयोगित्वञ्चोक्तंप्रतिषिद्धञ्चनिरग्नेरक्रियस्यचसंन्यासित्वंयोगि
त्वञ्चेति चेन्नध्यानयोगंप्रति वहिरङ्गस्ययतःकर्म्मणःफलाकाङ्क्षासंन्यासस्तुतिपरत्वा
न्नकेवलंनिरग्निरक्रियएवसंन्यासीयोगीच किंतर्हिकर्म्म्यपिकर्म्मफलासङ्गंसंन्यस्यकर्म्म
योगमनुतिष्ठन्सत्त्वशुद्ध्यर्थंसंन्यासीयोगीचभवतीतिस्तूयते नचैकेनवाक्येनकर्म्मफला
सङ्गसंन्यासस्तुतिश्चतुर्थाश्रमप्रतिषेधश्चोपपद्यते नचप्रसिद्धंनिरग्नेरक्रियस्यपरमा
र्थसंन्यासिनःश्रुतिस्मृतिपुराणेतिहासयोगशास्त्रेषुविहितंसंन्यासित्वंयोगित्वञ्चप्रति
षेधति भगवान्स्ववचनविरोधाच्च सर्व्वकर्म्माणिमनसासंन्यस्यनैवकुर्व्वन्नकारयन्नास्ते
मौनीसन्तुष्टोयेनकेनचिदनिकेतःस्थिरमतिर्व्विहायकामान्यःसर्व्वान्पुमांश्चरतिनि
स्पृहःसर्व्वारम्भपरित्यागीतिच तत्रतत्रभगवतास्ववचनानिदर्शितानितैर्व्विरुध्येतचतु
र्थाश्रमप्रतिषेधस्तस्मात् मुनेर्योगमारुरुक्षोःप्रतिपन्नगार्हस्थस्याग्निहोत्रादिक
र्म्मफलनिरपेक्षमनुष्ठीयमानंध्यानयोगारोहणसाधनत्वंसत्त्वशुद्धिद्वारेणप्रतिपद्यते

## शाङ्करभाष्यं।

इति ससंन्यासोचयोगीचेतिस्तूयते अनाश्रितइति अनाश्रितोनआश्रितोऽनाश्रितः किंकर्म्मणःफलंकर्मफलंयत्तदनाश्रितःकर्मफलंतृष्णारहितइत्यर्थः योहिकर्मफलेतृष्णावान्सकर्मफलमाश्रितोभवति अयन्तुतद्विपरीतोऽतोनाश्रितःकर्मफलंएवभूतः सन्कार्यंकर्त्तव्यंनित्यंकाम्यविपरीतमग्निहोत्रादिकंकरोति निर्व्वर्त्तयतियःकश्चित् यईदृशःकर्म्मीसकर्म्यन्तरेभ्योविशिष्यतइत्येवमर्थमाह ससंन्यासीचयोगीचेति संन्यासःपरित्यागःसयस्यास्तिससंन्यासीचयोगीचयोगश्चित्तसमाधानंसयस्यास्तिसयोगी चेत्येवंगुणसम्पन्नोयंमन्तव्योनकेवलंनिरग्निरक्रियएवसंन्यासीयोगीचेति मन्तव्यः निर्गताअग्नयःकर्म्माङ्गभूतायस्मात् सनिरग्निरक्रियश्चअनग्निसाधनाअप्यविद्यमानाक्रियास्तपोदानादिकायस्यासावक्रियःननुचनिरग्नेरक्रियस्यैवश्रुतिस्मृतियोगशास्त्रेषुसंन्यासित्वंयोगित्वञ्चप्रसिद्धं कथमिहसाग्नेःसक्रियस्यसंन्यासित्वंयोगित्वञ्चाप्रसिद्धमुच्यते इति नैषदोषःकयाचिद्गुणवृत्त्योभयस्यसम्पिपादयिषितत्वात्तत् कथं कर्मफलसंकल्पसंन्यासात्संन्यासित्वंयोगाङ्गत्वेनचकर्मानुष्ठानात् कर्मफलसङ्कल्पस्यवाचित्तविक्षेपहेतोःपरित्यागाद्योगित्वञ्चेति १

## आनन्दगिरिकृतटीका।

ध्यानयोगप्रस्तावानन्तरंतद्योग्यताहेतुकर्मणःस्तुतिं भगवानुक्तवानित्याह श्री भगवानिति पूर्व्वोत्तराध्याययोःसङ्गतिमभिदधानोवृत्तमनूद्याध्यायान्तरमवतारयति अतीतेति सम्यग्दर्शनप्रकरणेध्यानयोगस्यप्रसङ्गाभावंव्युदस्यति सम्यगिति संग्रहविवरणयोरतीतानन्तराध्याययोर्युक्तंहेतुहेतुमत्त्वमितिभावः अध्यायसम्बन्धमभिधायानाश्रितःकर्मफलमित्यादिश्लोकद्वयस्यतात्पर्य्यमाह तत्रेति कर्मयोगस्यसन्न्यसहेतोर्मर्य्यादांदर्शयितुंसाङ्ख्ययोगंविचारयितुमध्यायेप्रवृत्तेसतीति सम्प्रत्यर्थःसंन्यासिनाकर्त्तव्यंकर्मेत्येवंप्रतिभासंव्युदस्यति गृहस्थेनेति कर्त्तव्यत्वंस्तुतियोग्यत्वमतःशब्दार्थःसमुच्चयवादी सीमाकरणमाक्षिपति नन्विति यावज्जीवश्रुतिवशात् ध्यानारोहणसामर्थ्ये सत्यपिकर्मानुष्ठानस्यदुर्व्वारत्वादिति हेतुमाह यावतेति भार्य्यावियोगादिप्रतिबन्धाद्यावज्जीवश्रुतिचोदितकर्मानुष्ठानवत्वैराग्यप्रतिबन्धादपितदननुष्ठानसम्भवाद्भगवतोविशेषवचनाच्च नयावज्जीवंकर्मानुष्ठानप्रसक्तिरितिपरिहरति नारुरुक्षोरिति उक्तमेवार्थंव्यतिरेकद्वारेणविवृणोति आरुरुक्षोरित्यादिना आरोढुमिच्छतीत्यारुरुक्षुरनारोहणेच्छाविशेषणमारोहणंकृतवानित्यत्रपुनरिच्छाविष

## आनन्दगिरिकृतटीका

यभूततमारोहणं विशेषणमेवं शमकर्मविषययोर्भेदेन विशेषणं मर्य्यादाकरणानङ्गीकरणे विरुद्धमापद्येततयोरेवं विभागकरणञ्च भागवतसीमानङ्गीकारेणयुज्येतेत्यर्थः विशेषणविभागकरणयोरन्यथोपपत्तिमाशङ्कते तत्रेति व्यवहारभूमिःसप्तम्यर्थः षष्ठीनिर्द्धारणे भवत्वधिकारिणांद्वैविध्यंतथापिप्रकृते विशेषणादौकिमायातमित्याशंक्यतृतीयापेक्षयातदुपपत्तिरित्याह तानपेक्षेति आरुरुक्षोरारूढस्यचभेदे तस्यैवेति प्रकृतपरामर्शानुपपत्तिरितिदूषयति नतस्येति यद्यनारुरुक्षुं पुरुषमपेक्ष्यारुरुक्षोरिति विशेषणंतस्यचकर्मारोहणकारणमनारूढञ्चपुरुषमपेक्ष्यारूढस्येति विशेषणंतस्यचशमःसंन्यासोयोगफलप्राप्तौकारणमिति विशेषणविभागकरणयोरुपपत्तिस्तदारुरुक्षोरारूढस्यचभिन्नत्वात् प्रकृतपरामर्शिनःतच्छब्दस्यानुपपत्तेर्नयुक्तमित्यंविशेषणाद्युपादानमित्यर्थः किञ्च योगमारुरुक्षोस्तदारोहणेकारणंकर्मेत्युक्त्वापुनर्योगारूढस्येति योगशब्दप्रयोगात् योयोगंपूर्व्वमारुरुक्षुरासीत्तस्यैवापेक्षितं योगमारूढस्यतत्फलप्राप्तौकर्मसंन्यासःशमशब्दवाच्योहेतुत्वेनकर्त्तव्यइति वचनादारुरुक्षोरारूढस्यचाभिन्नत्वप्रत्यभिज्ञानान्नतयोर्भिन्नत्वंशङ्कितुंशक्यमित्याह पुनरिति यत्तुयावज्जीवश्रुतिविरोधात् योगारोहणसीमाकरणंकर्मणोऽनुचितमिति तत्राह उच्यतइति पूर्वोक्तारोयाकर्मतत्त्यागयोर्व्विभागोपपत्तौश्रुतेरन्यविषयात्वात् योगमारूढस्यमुमुक्षोर्जिज्ञासमानस्यनित्यनैमित्तिककर्मस्वपिपरित्यागसिद्धिरित्यर्थः इतश्चयावजीवंकर्मकर्त्तव्यत्वंनभवतीत्यर्थः ननु योगभ्रष्टशब्देनगृहस्थस्यैवाभिधानात्तस्यैवास्मिन्नध्याये योगविधानाद्योगारोहणयोग्यत्वेसत्यपियावज्जीवंकर्म्मकर्त्तव्यमिति नेत्याह गृहस्थस्येति तेनापिमुमुक्षुणाकृतस्यकर्म्मणोमोक्षातिरिक्तफलानारम्भकत्वाद्योगभ्रष्टोऽसौछिन्नाभ्रमिवनश्यतीतिशङ्कासावकाशेत्याशंक्याह अवश्यंह्योति अपौरुषेयान्निर्द्दोषाद्वेदात् फलदायिनीकर्म्मणःस्वाभाविकीशक्तिरवगता प्रज्ञाभावस्यचस्वतःसिद्धत्वान्नकर्म्मफलत्वमितिमोक्षातिरिक्तस्यैवफलस्यकर्मारम्भकमितिकर्म्मिणियोगभ्रष्टेपिकर्म्मगतिंगच्छतीति निरवकाशाशङ्केत्यर्थः ननुमुमुक्षुणाकाम्यप्रतिषिद्धयोगकरणात् कृतयोश्चनित्यनैमित्तिकयोरफलत्वात् कथंतदीयस्यकर्म्मणोनियमेनफलारम्भकत्वंतत्राह नित्यस्यचेति चकारेणनैमित्तिकंकर्मानुकृष्यते वेदप्रमाणकत्वेपिनित्यनैमित्तिकयोरफलत्वेदोषमाह चान्यथेति कर्मण्यनुष्ठितस्यफलारम्भकत्वध्रौव्यात् गृहस्थोयोगभ्रष्टोपिकर्मगतिं गच्छतीति न

## आनन्दगिरिकृतटीका।

तस्यनाशाशङ्केतिशेषः इतोऽपिगृहस्थोयोगभ्रष्टशब्दवाच्योनभवतीत्याह नचेति ज्ञानंकर्मचेत्युभयं ततोभ्रष्टोयंनश्यतीतिवचनंगृहस्थेकर्मणिसति नार्थवद्भवितुमलंतस्य कर्मनिष्ठस्यकर्मणोविभ्रंशहेत्वभावात् तत्फलस्यावश्यकत्वादित्यर्थः कृतस्यकर्मणोमुमुक्षुणाभगवति समर्पणात् कर्तरिफलानारम्भकत्वात्तद्विभ्रंशकारणमितिशङ्कते कर्मेति राजाराधनवुद्ध्याधनधान्यादिसमर्पणस्याधिकफलहेतुत्वोपलम्भादीश्वरेसमर्पणंनभ्रंशकारणमिति दूषयति नेत्यादिना अधिकफलहेतुत्वेपिमोक्षहेतुत्वमिष्यतामिति शङ्कते मोक्षायेति तदेवन्नोद्यंविवृणोति स्वकर्मणामिति सहकारिसामर्थ्यात्तस्यफलान्तरं प्रत्युपायत्वसिद्धिरितिहेतुंसूचयति योगेति ध्यानसहितस्यसंन्यासस्यमोक्षोपयिकत्वेकुतोयोगभ्रष्टमधिकृत्यनाशाशङ्केत्याशंक्याह योगाच्चेति सहकार्यभावेसामग्र्यभावात्फलानुपपत्तेर्युक्तानाशाशङ्केत्यर्थः ध्यानसहितमीश्वरेकर्मसमर्पणंमोक्षायेत्यत्रप्रमाणाभावात्गृहस्थोयोगभ्रष्टशब्दवाच्योनभवतीतिदूषयति नेति गृहस्थस्ययोगभ्रष्टशब्दवाच्यत्वाभावेहेत्वन्तरमाह एकाकीति नखल्वेतानिविशेषणानिगृहस्थस्यसम्भवन्तितेनतस्यध्यानयोगविध्यभावात् नतंप्रतियोगभ्रष्टशब्दवचनमुचितमित्यर्थः एकाकित्ववचनंगृहस्थस्यापिध्यानकालेस्त्रीसहायत्वाभावाभिप्रायेणभविष्यतीत्याशंक्य अग्निहोत्रादिवद्ध्यानस्यपत्नीसाध्यत्वाभावादप्राप्तप्रतिषेधप्रसङ्गान्मैवमित्याह नचालेति विशेषणान्तरपर्यालोचनयापिनायमेकाकिशब्दोगृहस्थपरोभवितुमर्हतीत्याह नचेति किञ्चगृहस्थस्यैवैकाकित्वादिविवक्षित्वाध्यानयोगविधौतंप्रत्युभयभ्रष्टप्रश्नोनोपपद्यतइत्याह उभयेति नहिगृहस्थंप्रतिउभयस्मात्ज्ञानात्कर्मणश्चविभ्रष्टत्वमुपेत्यप्रष्टुंयुज्यतेतस्यज्ञानात्भ्रंशेपिकर्मणस्तदभावादनुष्ठीयमानकर्मभ्रंशेपिप्रागनुष्ठितकर्मवशात्फलप्रतिलम्भादतोयथोक्तप्रश्नालोचनयानगृहस्थंप्रतिध्यानविधानोपपत्तिरित्यर्थः ननुभगवतासंन्यासस्यप्रतिषिद्धत्वात्गृहस्थस्यैव योगविधानात्तस्यैवयोगभ्रष्टशब्दवाच्यत्वमितिशङ्कते अनाश्रितइत्यनेनेति भगवद्वाक्यंनप्रतिषेधपरमिति परिहरति नध्यानेति स्तुतिपरत्वमेवस्फोरयति नकेवलमिति सत्त्वशुद्ध्यर्थमनुतिष्ठन्नितिसम्बन्धःवाक्यस्योभयपरत्वमाशंक्याह अभेदप्रसङ्गान्मैवमित्याह नचेति इतोपिभगवतःसंन्यासाश्रमप्रतिषेधोभिप्रेतोनभवतीत्याह नचप्रसिद्धमिति तस्यप्रसिद्धंसंन्यासित्वंयोगित्वञ्चेति सम्बन्धः प्रसिद्धत्वमेवव्याकरोति श्रुतीति इतोपिसंन्यासाश्रमंभगवान्

शाङ्करभाष्यं।

गौणमुभयंनपुनर्मुख्यसंन्यासित्वंयोगीत्वञ्चाभिमतमित्येतमर्थंदर्शयितुमाह यं संन्यासमिति यंसर्वकर्मतत्फलपरित्यागलक्षणंपरमार्थसंन्यासंसंन्यासमितिप्राहुःश्रुतिस्मृतिविदोयोगंकर्मानुष्ठानलक्षणंतंपरमार्थसंन्यासंविद्धिजानीहिहेपाण्डवकर्मयोगस्यप्रवृत्तिलक्षणस्यतद्विपरीतेननिवृत्तिलक्षणेनपरमार्थसंन्यासेनकीदृशं

आनन्दगिरिकृतटीका

प्रतिषेधतीत्याह स्ववचनेनेति विरोधमेवसाधयति सर्वकर्माणीत्यादिना अनाश्रित इत्यादिवाक्यस्ययथाश्रुतार्थत्वानुपपत्तेःस्तुतिपरत्वमुपपादितमुपसंहरति तस्मादिति कर्मफलसंन्यासित्वमत्रमुनिशब्दार्थःस्तुतिपरंवाक्यमक्षरयोजनार्थमुदाहरति अनाश्रितइति कर्मफलेभिलाषोनास्तीत्येतावताकथंतदनाश्रितत्ववाचोयुक्तिरित्याशंक्यव्यतिरेकमुखेनविशदयति योहीति कार्य्यमित्यादिव्याकरोति एवम्भूतःसन्निति कथंकर्मिणःसंन्यासित्वंयोगित्वञ्चकर्मित्वविरोधादित्याशंक्याह यईदृशइति स्तुतेरत्रविवक्षितत्वान्नानुपपत्तिश्चोदनीयेति मन्वानःसन्नाह इत्येवमिति ननिरग्निरित्यादेरर्थमाह नकेवलमिति अग्नयोगार्हपत्याहवनीयान्वाहार्य्यपचनप्रभृतयः नन्वनग्नित्वेसिद्धमक्रियत्वमग्निसाध्यत्वात्क्रियाणां तथाचननिरग्निरित्येतावतैवापेक्षितसिद्धेर्नचाक्रियइत्यनर्थकमर्थपुनरुक्तेरिति तत्राह अनग्नीति उत्तरश्लोकस्य तात्पर्यंदर्शयितुंव्यावर्त्त्यामाशङ्कांदर्शयति ननुचेति प्रसिद्धंपरित्याज्याप्रसिद्धिरुपादीयमानाप्रसिद्धिविरुद्धेतिचोद्यंदूषयतिनैषदोषइति उभयस्यसाग्नौसक्रियेच संन्यासित्वस्ययोगित्वस्यचेत्यर्थः गुणवृत्त्योभयसम्पादनंप्रश्नपूर्वकंप्रकटयति तत्कथमित्यादिना १

स्वामिकृतटीका।

चित्तेशुद्धेऽपिनध्यानंविनासंन्यासमात्रतः मुक्तिःस्यादितिवष्ठेऽस्मिन्ध्यानयोगोवितन्यते पूर्वाध्यायान्तेसंक्षेपेणोक्तंयोगंप्रपञ्चयितुंषष्ठाध्यायारम्भस्तत्रतावत्सर्व्वकर्माणिमनसासंन्यस्येत्यारभ्य संन्यासपूर्व्वकायाज्ञाननिष्ठायास्तात्पर्य्येणाभिधानाद्दुःखरूपत्वाच्चकर्मणःसहसासंन्यासातिप्रसङ्गंप्राप्तंवारयितुं संन्यासादपिश्रेष्ठत्वेनकर्म्मयोगंस्तौतिअनाश्रितइतिद्वाभ्यां कर्मफलमनाश्रितोऽनपेक्षमाणःसन्नवश्यंकार्यंतयाविहितंकर्मयःकरोतिसएवसंन्यासीयोगीच नतुनिरग्निरग्निसाध्येष्टाख्यकर्मत्यागीनचाक्रियोऽनग्निसाध्यपूर्त्ताख्यकर्मत्यागीच १

यंसन्यासमितिप्राहुर्योगंतंविद्धिपाण्डव नह्यसंन्यस्तसंकल्पोयोगीभवतिकश्चन २

## शाङ्करभाष्यं।

सामान्यसङ्कीर्त्त्यतद्भावउच्यतइत्यपेक्षायामिदमुच्यते अस्तिपरमार्थसंन्यासेनसादृश्यंकर्त्तृद्वारकंकर्मयोगस्ययोहिपरमार्थसंन्यासी सत्यक्तसर्वकर्मसाधनतयासर्वकर्मतत्फलविषयंसङ्कल्पंप्रवृत्तिहेतुकामकारणंसंन्यस्यतिअयमपिकर्मयोगीकर्मकुर्व्वाणएवफलविषयंसङ्कल्पंसंन्यस्यतीत्येतमर्थंदर्शयन्नाह नहियस्मादसन्न्यस्तोसङ्कल्पो संन्यस्तोऽपरित्यक्तःफलविषयसङ्कल्पोभिसन्धिर्येनसोऽसंन्यस्तसङ्कल्पः कश्चनकश्चिदपिकर्म्मीयोगीसमाधानवान्भवतिनसम्भवतीत्यर्थःफलसङ्कल्पस्यचित्तविक्षेपहेतुत्वात्तस्माद्यःकश्चनयोगीकर्म्मीसंन्यस्तफलसङ्कल्पोभवेत् सयोगीसमाधानवान्भवति नविक्षिप्तचित्तोभवतिचित्तविक्षेपहेतोःफलसङ्कल्पस्यसंन्यस्तत्वात् इत्यभिप्राय योगाङ्गत्वेनकर्म्मानुष्ठानात्कर्मफलसङ्कल्पस्यवाचित्तविक्षेपहेतोःपरित्यागात्योगित्वञ्चेतिसंन्यासित्वञ्चेत्यभिप्रेतमुच्यतेएवंपरमार्थसंन्यासकर्मयोगयोःकर्त्तृद्वारकंसंन्याससामान्यमपेक्ष्ययंसंन्यासमिति प्राहुर्योगंतंविद्धिपाण्डवेतिकर्मयोगस्यस्तुत्यर्थंसंन्यासत्वमुक्तं २

## आनन्दगिरिकृतटीका।

सम्भवति मुख्ये संन्यासित्वादौकिमिति गौणमुभयमभीष्टमित्याशंक्यमुख्यस्यकर्मयसम्भवाद्गौणमेवस्तुतिसिद्ध्यर्थंतदिष्टमित्याह नपुनरिति चित्तव्याकुलत्वहेतुकामनात्यागाच्चित्तसमाधानसिद्धेर्योगित्वंकर्मिणोपियुक्तं संन्यासित्वंतुतस्यविरुद्धमितिशङ्कमानंप्रत्युक्तार्थेश्लोकमवतारयति इत्येतमिति परमार्थसंन्यासंप्राहुरिति सम्बन्धःइतीत्यंसंन्यासस्यप्रामाणिकाभ्युपगतत्वादितीति शब्दोयोज्योयोगंफलट

## भाषा अनुवाद

यहसुनिअर्जुननेपुछा किहेकृष्ण किसकारणसे वैमनुष्ययोगीऔसंन्यासीन होहिं इसपरकर्मयोगकोसंन्यासप्रतिपादनकरतेहुयेकहतेहैं किहेपाण्डवअर्जुन संन्यासमानहीकोजोसवश्रुतियोंनेश्रेष्ठकहाहै सोईफलसंन्यासरूपकर्मको भीजानो जोकहोकिकैसेजानेतोकहतेहैं किइतिशब्दसेकहेजोहेतु सोयोगमे भीहैं सोईऊर्ध्वश्लोकसेकहतेहैं किकर्मनिष्ठ या ज्ञाननिष्ठजोहोय परफलकीइच्छात्यागविनायोगीनहींहै इससेफलकामनामेजिसकाचित्तविक्षिप्तनहीहै सोई योगीऔसंन्यासीहै सोईकहानह्यसंन्यस्तसंकल्पोयोगीभवतिकश्चन २

आरुरुक्षोर्मुनेर्योगंकर्मकारणमुच्यते योगारूढस्यतस्यैवशमःकारणमुच्यते ३

आनन्दगिरिकृतटीका

ष्णांपरित्यज्यसमाहितचेतस्तयेतिशेषः यदुक्तंसंन्यासित्वंयोगित्वञ्चगृहस्थस्यगौणमिति तदुत्तरार्द्धयोजनयाप्रकटयितुमुत्तरार्द्धमुत्थापयति कर्मयोगस्येति कर्मयोगस्यपरमार्थसंन्यासेनकर्त्तृद्वारकंसाम्यमुक्तंव्यक्तं करोति योहीति त्यक्तानिसर्वाणिकर्माणिसाधनानिचयेनसतथोक्तस्तस्यभावस्तत्तातयासर्वकर्मविषयंतत्फलविषयञ्चसंकल्पंत्यजतीत्यर्थः संकल्पत्यागेतत्कार्यकामत्यागः तत्त्यागेतज्जन्यप्रवृत्तित्यागश्चसिध्यतीत्यभिसन्धायविशिनष्टि प्रवृत्तीति कर्मिण्यपियथोक्तसंकल्पसंन्यासित्वमस्तीत्याह अयमपीति तदपरित्यागेव्याकुलचेतस्तयाकर्मानुष्ठानस्यैवदुःशकत्वादित्यर्थः उक्तमेवसाम्यंव्यक्तीकुर्वन्व्यतिरेकंदर्शयति इत्येतमिति फलसंकल्पापरित्यागेकिमिति समाधानवत्ताभावस्तत्राह फलेति व्यतिरेकमुखेनोक्तमर्थमन्वयमुखेनोपसंहरति तस्मादिति हिशब्दार्थस्ययस्मादित्युक्तस्यतस्मादित्यनेन सम्बन्धः कर्मिणंप्रतियथोक्तविधौ हेतुर्हेतुमद्भावमभिप्रेत्य द्वितीयविधौहेतुमाह चित्तविक्षेपेति पूर्वश्लोकेपूर्वोत्तरार्द्धाभ्यामुक्तमनुवदति एवमिति २

स्वामिकृतटीका।

कुतइत्यपेक्षायांकर्मयोगस्यैवसंन्यासत्वंप्रतिपादयन्नाह यमिति यंसंन्यासंप्राज्ञःप्रकर्षेणश्रेष्ठत्वेन न्यासः संन्यासएवात्यरेचयदित्यादिश्रुतयइतिकेवलात्फलसन्न्यासाद्भ तोयोगमेवतंजानीहि कुतइत्यपेक्षायामितिशब्दोक्तोहेतुर्योगेऽप्यस्तीत्याह नहीति नसन्न्यस्तःफलसङ्कल्पोयेनसकर्मनिष्ठोज्ञाननिष्ठोवाकश्चिदपियोगीनहिभवति अतःफलसङ्कल्पत्यागादेव चित्तविक्षेपाभावात् योगीचभवत्येवसइत्यर्थः २

भाषाअनुवाद

तौफिरिजावत्जीवनकहेजिन्दगीभरकर्मयोगहीकरनाचहिये जोऐसीशङ्काकरोतोकर्मयोगकीअवधिकहते हैं किज्ञानयोगमेआरूढहोनेकीइच्छाकरनेवाले पुरुषोंकोउसराहकेचढ़नेंमेकर्महीकारणरूपकहाहै क्योंकिनिष्कामकर्मचित्तशुद्धिकरताहै औरज्ञानयोगआरूढकहेज्ञानीकोशमकहेविक्षेपकारीकर्मसकलकात्यागहीउचितहै जिसलियेत्यागज्ञानपरिपाककाकारणरूपकहाहै ३

शाङ्करभाष्यं

ध्यानयोगस्य फलनिरपेक्षः कर्म्मयोगी वहिरङ्गसाधनमिति तं संन्यासत्वेन स्तुत्वा
धुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति आरुरुक्षोरिति आरुरुक्षोरारोढु
मिच्छतः अनारूढस्य ध्यानयोगे वस्थातुमशक्तस्यैवेत्यर्थः कस्य तस्यारुरुक्षोर्मुनेः कर्मफल
संन्यासिन इत्यर्थः किमारुरुक्षोर्योगं कर्म कारणं साधनमुच्यते योगारूढस्य पुनस्तस्यै
व शम उपशमः सर्व्वकर्मभ्यो निवृत्तिः कारणं योगारूढत्वस्य साधनमुच्यत इत्यर्थः यावद्या
वत् कर्मभ्य उपरमते तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते तथा सति
सभ्कटिति योगारूढो भवति तथा चोक्तं व्यासेन नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैक
ता शमता सत्यता च शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्य इति ३

आनन्दगिरिकृतटीका ।

परमार्थसंन्यासस्य कर्मयोगान्तर्भावे कर्मयोगस्यैव सदा कर्त्तव्यत्वमापद्येत तेनेत
रस्यापि ज्ञातत्वसिद्धेरित्याशङ्क्योक्तानुवादपूर्व्वकमुत्तरश्लोकतात्पर्यमाह ध्यानयोगस्ये
ति भाविन्यावृत्त्यास्य मुनेर्योगमारोढुमिच्छोरिष्यमाणस्य योगारोहणस्य कर्म हेतुश्चेद
पेक्षितं योगमारूढस्यापि तत्फलप्राप्तौ तदेव कारणं भविष्यति तस्य कारणत्वे क्लृप्तश
क्तित्वादित्याशङ्क्याह योगारूढस्येति अनारूढस्येत्येतस्यैवार्थं स्फुटयति ध्यानेति मुनि
त्वं कर्मफलसंन्यासित्वौपचारिकमित्याह कर्मफलेति साधनं चित्तशुद्धिद्वारा ध्यानयो
गप्राप्तीच्छायामिति शेषः तस्येति प्रकृतस्य कर्मिणो ग्रहणं एवकारो भिन्नक्रमः शमशब्दे
न सम्बध्यते कस्यान्ययोगव्यवच्छेदेन शमो हेतुरिति तत्राह योगारूढत्वस्येति सर्व्वव्या
पारोपरमरूपोपशमस्य योगारूढत्वे कारणत्वं विवृणोति यावद्यावदिति सर्व्वकर्मनि
वृत्तावायासाभावाद्वशीकृतस्येन्द्रियग्रामस्य चित्तसमाधाने योगारूढत्वं सिध्यतीत्यर्थः
सर्व्वकर्मोपरमस्य पुरुषार्थसाधनत्वे पौराणिकीं सम्मतिमाह तथा चेति एकता सर्व्वे
षु भूतेषु वस्तुनो द्वैताभावोपलक्षितत्वमिति प्रतिपत्तिः शमता तेष्वेवौपाधिकविशेषे
ष्वपि स्वतो निर्व्विशेषत्वधीः सत्यता तेषामेव हितवचनं शीलं स्वभावसम्पत्तिः स्थितिः स्थैर्यं
दण्डनिधानमहिंसनं आर्जवमवक्रत्वं क्रियाभ्यः सर्व्वाभ्यः सकाशादुपरतिश्चेत्येतदुक्तं स
र्व्वं यथायादृशमेतादृशं नान्यद्ब्राह्मणस्य वित्तं पुरुषार्थसाधनमस्ति तस्मादेतदेवास्य निर
तिशयं पुरुषार्थसाधनमित्यर्थः ३

स्वामिकृतटीका ।

तर्हि यावज्जीवं कर्मयोग एव प्राप्त इत्याशङ्क्य तस्यावधिमाह आरुरुक्षोरिति ध्या
नयोगमारोढुं प्राप्तुमिच्छोः पुंसस्तदारोहे कारणं कर्मोच्यते चित्तशुद्धिकरत्वात्

यदाहिनेन्द्रियार्थेषुनकर्मस्वनुषज्जते सर्वसङ्कल्पसंन्यासीयोगारूढ़स्तदोच्यते ४

शाङ्करभाष्यं

अथेदानींकदायोगारूढ़ोभवतीत्युच्यते यदेति यदासमाधीयमानचित्तोभवति योगोहीन्द्रियार्थेषुइन्द्रियाणामार्थाःशब्दादयस्तेष्विन्द्रियार्थेषुकर्मसुचनित्यनैमित्तिककाम्यप्रतिषिद्धेषुप्रयोजनाभावबुद्ध्यानानुषज्जते अनुषङ्गंकर्त्तव्यताबुद्धिंनकरोतीत्यर्थःसर्व्वसङ्कल्पसंन्यासीसर्व्वान्सङ्कल्पानिहामुत्रार्थकामहेतून्संन्यसितुंशीलंअस्येति ससर्व्वसङ्कल्पसंन्यासीयोगारूढःप्राप्तयोगइत्येतत्तदातस्मिन्कालेयोगारूढउच्यते सर्व्वसंकल्पसंन्यासीतिवचनात् सर्व्वांश्चकामान्कामात्मकान्सर्व्वाणिच कर्माणिसंन्यसेदित्यर्थः संकल्पमूलाहिसर्व्वेकामाः संकल्पमूलःकामोवैयज्ञाःसंकल्पसम्भवाः कामंजानामिते मूलंसङ्कल्पात्त्वंहिजायसे नत्वांसङ्कल्पयिष्यामितेनमेनभविष्यसिइत्यादिस्मृतेः सर्व्वकामपरित्यागेचसर्व्वकर्म्मसंन्यासःसिद्धोभवति सयथाकामोभवति तत्क्रतुर्भवति तत्कर्म्मकुरुतेइत्यादिश्रुतिभ्यो यद्यद्धिकुरुतेकर्मतत्तत्कामस्यचेष्टितमित्यादिस्मृतिभ्यश्चन्यायाश्चनहिसर्वसंकल्पसन्न्यासेकश्चित्स्पन्दितुमपिसक्तस्तस्मात् सर्व्वसङ्कल्पसन्न्यासीतिवचनात् सर्व्वान्कामान् सर्व्वाणिकर्म्माणिचत्याजयति भगवान ४

आनन्दगिरिकृतटीका

योगप्राप्तौकारणकथनान्तरं तत्प्राप्तिकालंदर्शयितुंश्लोकान्तरमवतारयति अथेति समाधानावस्थायदेत्युच्यते अतएवोक्तंसमाधीयमानचित्तोयोगीति शब्दादिषु कर्मसु चानुषङ्गस्य योगारोहणप्रतिबन्धकत्वात्तदभावस्यतदुपायत्वंप्रसिद्धमिति द्योतयितुंहीत्युक्तं सर्वेषामपिसङ्कल्पानांयोगारोहणप्रतिबन्धकत्वमभिप्रेत्यसर्वसङ्कल्पसंन्यासीत्यत्रविवक्षितमर्थमाह सर्व्वानिति सर्वसङ्कल्पसंन्यासेपिसर्वेषां

स्वामिकृतटीका।

ज्ञानयोगमारूढस्यतुतस्यैवज्ञाननिष्ठस्यशमोविक्षेपककर्मोपरमोज्ञानपरिपाकेकारणमुच्यते ३

भाषानुवाद।

जोपूछोकिवहज्ञानयोगआरूढ़पुरुषजिसकोविक्षेपकारीकर्मकात्यागकहागया कैसाहोताहै तोकहतेहैं किजवइन्द्रियोंकेभोगजोविषयतिनमें औरभोगके साधनभूतकर्मोंमेंआशक्तनहोय औरकर्मसंकल्पकोछोडिसकै तवउसकोजोगारूढ़कहते हैं ४

उद्धरेदात्मनात्मानंनात्मानमवसादयेत् आत्मैवह्यात्मनोबन्धुरात्मैवरिपुरात्मनः ५

## शाङ्करभाष्यं

यदैवंयोगारूढ़स्तदातेनात्मानोद्धृतोभवति संसारादनर्थव्रातादतः उद्धरेदिति उद्धरेत् संसारसागरेनिमग्नमात्मनात्मानंततउत् ऊर्ध्वंहरेत् उद्धरेत् योगारूढ़ता

## आनन्दगिरिकृतटीका ।

कामानांकर्मणाञ्चप्रतिबन्धकत्वसम्भवेकुतोयोगप्राप्तिरित्याशंक्याह सर्वेति सर्व सङ्कल्पपरित्यागेयथोक्तविध्यनुष्ठानमयत्नसिद्धमिति मन्वानःसन्नाह सङ्कल्पेति मू लोन्मूलनेचतत्कार्यनिवृत्तिरयत्नसुलभेतिभावः तत्रप्रमाणमाह सङ्कल्पमूलइति तत्रान्वयव्यतिरेकावभिप्रेत्योक्तमुपपादयति कामेति सर्वसङ्कल्पाभावेकामाभा ववत्कर्माभावस्यसिद्धत्वेपिकर्मणां कामकार्यत्वात्तन्निवृत्तिप्रत्युक्तामपि निवृत्तिमुप न्यस्यति सर्वकामेति यदुक्तंकर्मणांकामकार्यत्वंतत्रश्रुतिस्मृतीप्रमाणयति सयथेति सपुरुषःस्वरूपमजानन्यत्फलकामोभवति तत्साधनमनुष्ठेयतयाबुद्धौधारयतीति तत्क्रतुर्भवति यच्चानुष्ठेयतयागृह्णाति तदेवकर्मवहिरपिकरोतीति कामाधीनंक र्मेतिमितिश्रुत्यर्थः कामजन्यंकर्मैत्यन्वयव्यतिरेकसिद्धमिति द्योतयितुंस्मृतौहि शब्दः न्यायमेवदर्शयति नहिसर्वसङ्कल्पेति स्वापादावदर्शनादित्यर्थः नित्य नैमित्तिककर्मानुष्ठानंदूरनिरस्तमिति वक्तुमपिशब्दः श्रुतिस्मृतिन्यायसिद्धमर्थमुप संहरति तस्मादिति ४

## स्वामि कृतटीका

कीदृशोऽयंयोगारूढ़ोयस्यशमःकारणमुच्यतइत्यत्राह यदेति इन्द्रियार्थेष्वि न्द्रियभोगेषु तत्साधनेषुचकर्मसु यदा नानुषज्जतेआसक्तिंनकरोति तत्रहेतुःआ सक्तिमूलभूतान्सर्वान्भोगविषयान्कर्मविषयांश्चसङ्कल्पान् संन्यासितुंत्यक्तुंशी लंयस्यसतदायोगारूढ़उच्यते ४

## भाषा अनुवाद ।

देखोविषयोंकीइच्छानिवृत्तिहोनेसेमोक्षऔविषयोंमेंआसक्तिसेबन्धहोताहै यह विचारिरागद्वेषादिस्वभासेरहितहोना उचितसोईकहतेहैं किविवेकयुक्तआपही अपनेआत्माकोबुद्धिकेद्वारासंसारसेउद्धारकरैगा औरअधोगतिकोनलेजायगा जिस हेतुकामनासेनिवृत्तजोआत्माकहेमन सोईअपनाबन्धुरूपउपकारीहै औरकाम कीकामनामेंआशक्तजोमन सोशत्रुरूपअपकारीहै तोअपनाशत्रुमित्रआपहीहै ५

बन्धुरात्मात्मनस्तस्य येनैवात्मात्मनाजितः अनात्मनस्तु शत्रुत्वे वर्त्तेतात्मैव शत्रुवत् ६

## शाङ्करभाष्यं।

मापादयेदित्यर्थः नात्मानमवसादयेन्नाधोनयेत् आत्मैवहियस्मादात्मनोबन्धुर्नह्यन्यः कश्चिद्बन्धुर्यः संसारमुक्तयेभवति बन्धुरपितावन्मोक्षंप्रति प्रतिकूलएवस्नेहादिबन्धनायतनत्वात्तस्माद्युक्तमवधारणमात्मैवह्यात्मनोबन्धुरिति आत्मैवरिपुःशत्रुर्योन्योऽपकारीवाह्यःशत्रुःसोप्यात्मप्रयुक्तएवेति युक्तमेवावधारणमात्मैवरिपुरात्मनइति ५

आत्मैवात्मनोबन्धुरात्मैवरिपुरात्मनइत्युक्तंतत्रकिंलक्षणआत्माआत्मनोबन्धुःकिंलक्षणोवाआत्मात्मनोरिपुरित्युच्यते बन्धुरिति बन्धुरात्मात्मनस्तस्यतस्यात्मनःसआ

## आनन्दगिरिकृतटीका।

योगारूढस्यकिंस्यादित्याशङ्क्याह यदैवमिति योगारोहस्यदृष्टादृष्टोपायैरवश्यकर्त्तव्यतायैमुक्तिहेतुत्वंतद्विपर्ययस्याधःपतनहेतुत्वञ्चदर्शयति अतइति तत्रहेतुमाह आत्मैवहीति उद्धरणापेक्षामात्मनःसूचयति संसारेति संसारादुद्धरणंकीदृगित्याशङ्क्याह योगारूढतामिति योगप्राप्तावनास्थातु नकर्तव्येत्याह नात्मातमिति योगप्राप्तुप्रपायश्चेन्नानुष्ठीयते तदायोगाभावेसंसारपरिहारासम्भवादात्माधोनीतःस्यादित्यर्थः नन्वात्मानंसंसारेनिमग्नंतदायोबन्धुस्तस्मादुद्धरिष्यति नेत्याह आत्मैवहीति कुतोऽवधारणमन्यस्यापिप्रसिद्धस्यबन्धोःसम्भवात्तत्राह नहीति अन्योबन्धुःसन्नपिसंसारमुक्तयेनभवतीत्येतदुपपादयति बन्धुरपीति स्नेहादीत्यादिशब्दात्तदनुगुणप्रवृत्तिविषयत्वंगृह्यते आत्मातिरिक्तस्यापिशत्रोरपकारिणःसुप्रसिद्धत्वादवधारणमनुचितमित्याशङ्क्याह योन्यइति - ५

## स्वामिकृतटीका।

अतोविषयासक्तित्यागेमोक्षंतदासक्तौचबन्धंपर्य्यालोच्यरागादिस्वभावंत्यजेदित्याह उद्धरेदिति आत्मनाविवेकयुक्तेनात्मानंसंसारादुद्धरेत् नत्ववसादयेदधोनयेत् हियतआत्मैवमनःसङ्गाद्युपरतआत्मनःस्वस्यबन्धुरुपकारकःरिपुरपकारकः ५

## भाषा अनुवाद।

अबआत्माहीतोकिसीमनुष्यकाबन्धु औकिसीकारिपुहैइसअपेक्षापरकहते हैं जिसनेअपनेआत्मासेआत्माकोजीताअर्थात्विज्ञानमय आत्माकर्त्तृककार्यकारणमिलितरूपजोआत्मास्थूलसूक्ष्मशरीरादि वशीभूतहोतीहै सोईविज्ञानमयजीवअपनाबन्धु है औरअनात्माकहेशरीरादि अवशीकृतजोहै सोईआपअपनाशत्रुतुल्यहै ६

जितात्मनः प्रशान्तस्य परमात्मा समाहितः शीतोष्णसुखदुःखेषु तथा मानावमानयोः ७

## शाङ्करभाष्य ।

त्मा बन्धुर्येनात्मनात्मैव जितः आत्मकार्य्यकारणसंघातो येन जितो वशीकृतो जितेन्द्रिय इत्यर्थः अनात्मनस्तु अजितात्मनस्तु शत्रुत्वे शत्रुभावे वर्त्तेत शत्रुवत् यथानात्मा शत्रुरात्मनोऽपकारी तथात्मात्मनोऽपकारे वर्त्तेत इत्यर्थः ६

जितात्मन इति जितात्मनः कार्यकरणादिसंघात आत्मा जितो येन स जितात्मा तस्य जितात्मनः प्रशान्तस्य परमात्मा समाहितः साक्षादात्मभावेन वर्त्तत इत्यर्थः किञ्च शीतोष्णसुखदुःखेषु तथा माने ऽवमाने च मानावमानयोः पूजापरिभवयोः समः स्यात् इत्याध्याहारः ७

## आनन्दगिरिकृतटीका

उक्तमनूद्य प्रश्नपूर्व्वकं श्लोकान्तरमवतारयति आत्मैवेत्यादिना एकस्यैवात्मनो मिथो विरुद्धं बन्धुत्वं रिपुत्वञ्च लक्षणभेदमन्तरेणायुक्तमिति चोदिते वशीकृतसंघातस्यात्मानं प्रति बन्धुत्वमितरस्य शत्रुत्वमित्यविरोधं दर्शयति बन्धुरित्यादिना वशीकृतसंघातस्य विक्षेपाभावादात्मनि समाधानसम्भवादुपपन्नमात्मानं प्रति बन्धुत्वमिति साधयति तस्येति अवशीकृतसंघातस्य पुनर्विक्षेपोपपत्तेरात्मनि समाधानायोगादात्मानं प्रति शत्रुभावे प्रसिद्धशत्रुवत् आत्मैव शत्रुत्वेन वर्त्तेतेत्युत्तरार्द्धं व्याकरोति अनात्मन इति दृष्टान्तं व्याचष्टे यथेति उक्तदृष्टान्तवशादवशीकृतसंघातः स्वस्य हिताना चरणादात्मानं प्रति शत्रुरेवेति दार्ष्टान्तिकमाह तथेति ६

## स्वामिकृतटीका ।

कथम्भूतस्यात्मैव बन्धुः कथंभूतस्य चात्मैव रिपुरित्यपेक्षायामाह बन्धुरिति येनात्मनैवात्मा कार्य्यकारणसंघातरूपो जितो वशीकृतस्तस्य तथाभूतस्यात्मन आत्मैव बन्धुः अनात्मनोऽजितात्मनस्तु आत्मैवात्मनः शत्रुत्वे शत्रुवदपकारित्वे वर्त्तेत ६

## भाषा अनुवाद ।

जितात्मा पुरुषको जो अपने आत्मासे बन्धुता है सो खुलासा करके कहते हैं कि जिसने आत्मा जो शरीर आदि तिसको जीता अर्थात् अपने आधीन किया केवल उस प्रीति विरोध आदिसे रहित मनुष्यका मन शीत उष्ण सुख दुःख आदिमें समाहित कहे सावधान रहता है अर्थात् वही आत्मनिष्ठ है अथवा उसीका हृदय परमात्मामें समाहित अर्थात् विक्षेपरहित निश्चल होता किसीका और काहे नहीं न होसकता है ७

ज्ञानविज्ञानतृप्तात्माकूटस्थोविजितेन्द्रियः युक्तइत्युच्यतेयोगीसमलोष्टाश्मकाञ्चनः ८

## शाङ्करभाष्यं।

ज्ञानेति ज्ञानविज्ञानतृप्तात्माज्ञानंशास्त्रोक्तपदार्थानांपरिज्ञानं विज्ञानन्तु शास्त्रतोऽज्ञातानांतथैवस्वानुभवकरणंताभ्यांज्ञानविज्ञानाभ्यांतृप्तः सञ्जातालंप्रत्यय आत्मान्तःकरणंयस्यसज्ञानविज्ञानतृप्तात्माकूटस्थोऽप्रकम्प्योभवतीत्यर्थः विजितेन्द्रियश्चयईदृशोयुक्तःसमाहितइति सउच्यतेकथ्यते सयोगीसमलोष्टाश्मकाञ्चनःलोष्टाश्मकाञ्चनानिसमानियस्यसःसमलोष्टाश्मकाञ्चनः ८

## आनन्दगिरिकृतटीका।

कथंसंयतकार्यकरणस्यबन्धुरात्मेति तत्राह जितात्मनइति जितकार्यकरणसंघातस्यप्रकर्षेणोपरतबाह्याभ्यन्तरकरणस्यपरमात्माविक्षेपेण पुनःपुनरनभिभूयमानोनिरन्तरंचित्तेप्रथतइत्यर्थः जितात्मानंसंन्यस्तसमस्तकर्माणमविकारिणंप्रदश्य योगाङ्गानिदर्शयति शीतेति समःस्यादित्यध्याहारः पूर्वार्द्धंव्याचष्टे जितेत्यादिना नकेवलंतस्यपरमात्मासाक्षादात्मभावेनवर्त्ततेकिन्तुशीतोष्णादिभिरपिनासौचाल्यतेतत्त्वज्ञानादित्युत्तरार्द्धंविभजते किञ्चेति तेष्पुसमःस्यादितिसम्बन्धः ७ चित्तसमाधानमेवविशिष्टफलञ्चोद्दिष्टं तर्हिकथम्भूतःसमाहितोव्यवह्रियते तत्राह ज्ञानेति परोक्षापरोक्षाभ्यांज्ञानविज्ञानाभ्यांसंजातोलंप्रत्ययोऽक्रियोहर्षविषादकामक्रोधादिरहितोयोगीयुक्तःसमाहितइति व्यवहारभागीभवतीति पादत्रयव्याख्या

## स्वामिकृतटीका।

जितात्मनःस्वस्मिन्बन्धुत्वंस्फुटयति जितात्मनइति जितआत्मायेनतस्यप्रशान्तस्यरागादिरहितस्यैवपरंकेवलमात्माशीतोष्णादिषु सत्स्वपिसमाहितआत्मनिष्ठोभवति नान्यस्य यद्वा तस्यहृदिपरमात्मासमाहितःस्थितोभवति ७

## भाषा अनुवाद।

योगआरूढ़पुरुषकेलक्षणऔरभीकहतेहैं ज्ञानकहेशास्त्रसेअथवागुरुकेउपदेशसेजोहोय औरविज्ञानजोअनुभवसिद्ध अर्थात् हमसोईब्रह्महैं यहप्रत्यक्षज्ञान इनदोनोंसे जिसकाआत्माकहे चित्तसन्तुष्टहै औरजिसनेइन्द्रियगणकोजीताहै तथाढेलापत्थरसोना ये जिसकोसमानअर्थात् लेनेछोड़नेकीबुद्धिजिससेनहींहै ऐसाजोनिरपेक्षनिर्विकार कूटस्थकहे अचलकेतुल्यनिश्चलपुरुषसोइयुक्तयोगीकहेयोगारूढ़है ८

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ९

## शाङ्करभाष्यम्।

किञ्च सुहृदिति सुहृदित्यादिश्लोकार्द्धमेकपदं सुहृदिति प्रत्युपकारमनपेक्ष्योपकर्त्ता मित्रं स्नेहवान् अरिः शत्रुः उदासीनो न कस्यचित् पक्षं भजते मध्यस्थो यो विरुद्धयोरुभयोर्हितैषी द्वेष्यः आत्मनोऽप्रियो बन्धुः सम्बन्धीत्येतेषु साधुषु शास्त्रानुवर्त्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्व्वेष्वेतेषु समबुद्धिः कः किंकर्म्मेत्यव्यापृतबुद्धिरित्यर्थः विशिष्यते विमुच्यत इति वा पाठान्तरं योगारूढानां सर्व्वेषामयमुत्तम इत्यर्थः. ९

## आनन्दगिरिकृतटीका

नेन दर्शयति ज्ञानमित्यादिना सच योगी परमहंसपरिव्राजकः सर्व्वतोपेक्षावुद्धिरनतिशयवैराग्यभागीति कथयति सयोगीति ८

योगारूढस्य प्रशस्तत्वमभ्युपेत्य योगस्याङ्गान्तरं दर्शयति किञ्चेति पदच्छेदः पदार्थोक्तिरिति व्याख्यानाङ्गं सम्पादयति सुहृदितीति अरिर्नाम परोक्षमपकारकः प्रत्यक्षमप्रियो द्वेष्य इति विभागः समबुद्धिरिति व्याचष्टे कः किमिति प्रथमो हि प्रश्नो जातिगोत्रादिविषयः द्वितीयो व्यापारविषयः उक्तप्रकारेणाव्यापृतबुद्धित्वे सर्व्वोत्कर्षो विसर्वोपायविमोक्षो वा सिध्यतीत्याह विशिष्यत इति पाठद्वयेऽपि सिद्धमर्थं संगृह्य कथयति योगारूढानामिति ९

## स्वामिकृतटीका।

योगारूढस्य लक्षणं श्रेष्ठ्यंचोक्तमुपसंहरति ज्ञानेति ज्ञानमौपदेशिकं विज्ञानमपरोक्षानुभवस्ताभ्यां तृप्तो निराकांक्ष आत्मा चित्तं यस्य अतः कूटस्थो निर्विकारः अतएव विजितानीन्द्रियाणि येन अतएव समानि लोष्टादीनि यस्य मृत् खण्डपाषाणसुवर्णेषु हेयोपादेयबुद्धिशून्यः सयुक्तो योगारूढ इत्युच्यते ८

## भाषा अनुवाद।

और शत्रु मित्र आदि में जो समदर्शी मनुष्य सो योगी से भी अधिक है यह कहते हैं कि सुहृद कहे स्वभाव ही से हितकारी औ मित्र जो स्नेहवश ते उपकारी औ अरि कहे घातक जो शत्रु औ उदासीन अर्थात् उपकार अपकार दोनो से अलग निरपेक्ष जो है औ मध्यस्थ कहे पक्षपात विना दोनो ओर हितकारी औ द्वेष्य अर्थात् निःप्रयोजन शत्रु जो अकारण क्रोधी औ बन्धु जिनसे कुछ सम्बन्ध है औ साधु कहे सुशील सुन्दर आचरण जिनका है तथा पापजो दुराचारी इन सबके विषे जिसकी बुद्धि समान कहे प्रीति विरोध रहित है सो विशिष्ट कहे योगी से अधिक है ९

योगीयुञ्जीतसततमात्मानंरहसिस्थितः एकाकीयतचित्तात्मानिराशीरपरिग्रहः१०

## शाङ्करभाष्यं।

अतएवमुत्तमफलप्राप्तये योगीति योगीध्यायीयुञ्जीतसमादध्यात् सततंसर्वदात्मानमन्तःकरणंरहस्येकान्तेयोगीगिरगुहादौस्थितःसन्नेकाकीअसहायोरहसिस्थितएकाकीचेतिविशेषणात्संन्यासंकृत्वेत्यर्थःयतचित्तात्माचित्तमन्तःकरणमात्मादेहश्चसंयतौयस्यसयतचित्तात्मा निराशीर्वीततृष्णोऽपरिग्रहश्चपरिग्रहरहित इत्यर्थःसंन्यासित्वेपिसतित्यक्तसर्वपरिग्रहःसन्युञ्जीतेत्यर्थः १०

## आनन्दगिरिकृतटीका

यथोक्तविशेषणवतोयोगारूढेषूत्तमत्वे योगानुष्ठाने प्रयतितव्यमित्यङ्गाभिधानान्तरंप्रधानमभिदधाति अतएवमिति आदरनैरन्तर्य्यदीर्घकालत्वंविशेषणत्रयंयोगस्यसूचयति सततमिति तस्यैवपञ्चाङ्गान्युपन्यस्यति रहसतीत्यादिना सर्वदेत्यादरदीर्घकालयोरुपलक्षणं प्रत्यागात्मानंव्यावर्त्तयति अन्तःकरणमिति गिरिगुहादावित्यदिशब्देनयोगप्रतिबन्धकदुर्ज्जनादिविधुरोदेशोगृह्यते विशेषणद्वयस्यतात्पर्यमाह रहसीति योगंयुञ्जानस्यसंन्यासिनोविशेषणान्तराणिदर्शयति यतेति सतिसंन्यासित्वेकिमित्यपरिग्रहग्रहणमर्थपुनरुक्तेरित्याशंक्यकौपीनाच्छादनादिष्वपिशक्तिनिवृत्त्यर्थमित्याह संन्यासित्वेपीति १०

## स्वामिकृतटीका।

सुहृन्मित्रादिषु समबुद्धियुक्तस्तुततोऽपिश्रेष्ठइत्याह सुहृदिति सुहृत्स्वभावेनैवहिताशंसीमित्रंस्नेहवशेनोपकारकःअरिर्घातुकः उदासीनोविवदमानयोरुभयोरप्युपेक्षकः मध्यस्थोविवदमानयोरुभयोरपिहिताशंसी द्वेष्योद्वेषविषयः बन्धुःसम्बन्धी साधवःसदाचाराः पापादुराचाराःएतेषु समारागद्वेषशून्याबुद्धिर्यस्य सतुविशिष्टः ९

## भाषाअनुवाद

योगीकेलक्षणकहिकरअबउसकाअङ्गरूपजोयोगसोइसश्लोकसेलेकरइसीअध्यायके सयोगीपरमोमतःइस२२श्लोकतककहतेहैं कियोगआरूढपुरुषसङ्गरहितहोय जिसकेअन्तःकरणऔशरीरवशीभूतहैं सोनिराकांक्षसर्व्वपरिग्रहरहितपुरुएषकान्तमेअकेलासावधानबैठिकरअपनेआत्माकहे मनकोनिरन्तरभगवतकेमननमेयुक्ताकरै १०

शुचौदेशेप्रतिष्ठाप्यस्थिरमासनमात्मनः नात्युच्छ्रितंनातिनीचंचैलाजिनकुशोत्तरं ॥

### शाङ्करभाष्यं।

अथेदानींयोगंयुञ्जतआसनाहारविहारादीनांयोगसाधनत्वेननियमोवक्तव्यः प्राप्तयोगस्यलक्षणंतत्फलादिचेत्यतआरभ्यते तत्रासनमेवतावत् प्रथममुच्यते शुचाविति शुचौशुद्धेविविक्तेस्वभावतःसंस्कारतोवादेशेस्थानेप्रतिष्ठाप्यस्थिरमचलमात्मनःआसनंनात्युच्छ्रितंनाप्यतिनीचंतच्चचैलाजिनकुशोत्तरंचैलमजिनंकुशाश्चउत्तरेयस्मिन्नासनेतदासनंचैलाजिनकुशोत्तरंपाठक्रमात् विपरीतोत्रअनुक्रमश्चैलादीनां ११

### आनन्दगिरिकृतटीका

योगंयोगाङ्गानिचोपदिश्योत्तरसन्दर्भस्यतात्पर्यमाह अथेति योगस्वरूपकतिपयतदङ्गप्रदर्शनानन्तर्य्यमथशब्दार्थविहारादीनामित्यादिशब्देनयथोक्तासनादिगतावान्तरभेदग्रहणंतत्फलादिचेत्यादिशब्देनयोगफलंसम्यग्ज्ञानञ्चतत्फलंकैवल्यंततोभ्रष्टस्यात्यन्तिकाविनष्टत्वमित्यादिगृह्यते एवंसमुदायतात्पर्य्येदर्शिते किमासीनःशयानस्तिष्ठन्गच्छन्कुर्वन्वा युंजीतेत्यपेक्षायामनन्तरश्लोकतात्पर्यमाह तत्रेति निर्द्धारणेसप्तमी प्रथमंयोगानुष्ठानस्यप्रधानमासीनःसम्भवादिति न्यायात् इतियावत् विविक्तत्वंद्वेधाविभजते स्वभावतइति आसनस्यास्थैर्य्ये तत्रोपविश्ययोगमनुतिष्ठतःसमाधानायोगात् योगासिद्धिरित्यभिसन्धायविशिनष्टि अचलमिति आस्यतेस्मिन्निति व्युत्पत्तिमनुश्रित्याह आसनमिति आत्मनइति परकीयासनव्युदासार्थं

### स्वामिकृतटीका।

एवंयोगारूढस्यलक्षणमुक्त्वेदानींतस्यसाङ्गंयोगंविधत्ते योगीत्यादिना सयोगीपरमोमतइत्यन्तेनग्रन्थेन योगीयोगारूढआत्मानंमनोयुञ्जीतसमाहितं कुर्य्यात् सततंनिरन्तरंरहसिएकान्तेस्थितःसन्एकाकीसङ्गशून्यः यतंसंयतंचित्तमात्मादेहश्चयस्यनिराशीर्निराकाङ्क्षःअपरिग्रहःपरिग्रहशून्यश्च १०

### भाषा अनुवाद

उसीयोगकाआसनऔनियमआदिदिखावते हुये दोश्लोकसेकहतेहैं किपवित्रस्थानमेंअपनेआसनपरबैठनेकेअनन्तर योगअभ्यासकरै आसनकैसाचाहिये किजोअचलऔनबहुतउंचा नअतिनीचाहोय और चेलकहेवस्त्रअजिनव्याघ्रचर्मअर्थात् नीचेकुश तवचर्म उपरवस्त्र ऐसाआसनकरै ११

तत्रैकाग्रंमनःकृत्वायतचित्तेन्द्रियक्रियः उपविश्यासनेयुंज्याद्योगमात्मविशुद्धये १२

## शाङ्करभाष्यं

प्रतिष्ठाप्यकिं तत्रेति तत्रतस्मिन्नासनेउपविश्ययोगंयुञ्ज्यात् कथंसर्वविषयेभ्य उपसंहृत्यैकाग्रंमनःकृत्वायतचित्तेन्द्रियक्रियःसकिमर्थंयोगंयुञ्ज्यादित्याह आत्मविशुद्धयेअन्तःकरणस्यशुद्ध्यर्थमित्येतत् १२

## आनन्दगिरिकृतटीका ।

पतनभयपरिहारार्थंनात्युच्चमित्युक्तंनाप्यतिनीचमिति भूतलपाषाणादिसंस्पर्शेवात क्षोभाग्निमान्द्यादिसम्भावितदोषनिरासार्थं चेलंवस्त्रमजिनंचर्मपशूनां तच्चत्वगस्य कुशादभीस्तेचोत्तरेयस्मिन्नुपरिष्टादारभ्य तत्तथोक्तं प्रथमंचेलंततोऽजिनंततस्त्वक्कुशाइति प्रतिपन्नक्रममपातिकंक्रममतिक्रम्यादौकुशास्ततोऽजिनंततश्चेलमितिक्रमं विविच्चित्वाह विपरीतोत्रेति ११

यथोक्तमासनंसम्पाद्यकिंकर्त्तव्यमिति प्रश्नपूर्वकंकर्त्तव्यंतन्निर्दिशति प्रतिष्ठाप्येति योगंयुञ्जानस्येतिकर्त्तव्यताकलापंपृच्छति कथमिति सर्वेभ्योविषयेभ्यःसकाशात् प्रत्याहृत्यमनसोयदेकस्मिन्नेवध्येयेविषयेसमाधानंयच्चित्तस्येन्द्रियाणाञ्चवाह्यक्रियाणां संयमनंतदुभयंकृत्वायोगमनुतिष्ठेदित्याह सर्वेति आसनेयथोक्तेस्थित्वायथोक्तयारीत्यायोगानुष्ठानस्यप्रश्नपूर्वकंफलमाह सकिमर्थमित्यादिना १२

## स्वामिकृतटीका ।

आसननियमंदर्शयन्नाह शुचाविति द्वाभ्यां शुद्धेस्थानेआत्मनःस्वस्यासनंस्थापयित्वा कीदृशंस्थिरमचञ्चलंनात्युच्छ्रितंनचातिनीचंचेलंवस्त्रंअजिनंव्याघ्रादिचर्म्म चेलाजिनेकुशेभ्यउत्तरेयस्य कुशानामुपरिचर्म्मतदुपरिवस्त्रमास्तीर्य्येत्यर्थः ११

तत्रतस्मिन्नासनेउपविश्यएकाग्रंविक्षेपरहितंमनःकृत्वायोगंयुञ्ज्यादभ्यसेत् यतासंयताचित्तस्येन्द्रियाणाञ्चक्रियायस्यआत्मनोमनसोविशुद्धयउपशान्तये १२

## भाषा अनुवाद ।

और जिसका चित्त औ इन्द्रिय निष्कृय कहे व्यापार रहितहैं सो मन की शान्तिकहे शुद्धिके अर्थ उक्तआसन पर बैठनेके बाद मनको एकाग्र विक्षेपरहित करके योग अभ्यास करै १२

समंकायशिरोग्रीवंधारयन्नचलंस्थिरः संप्रेक्ष्यनासिकाग्रंस्वंदिशश्चानवलोकयन् १३

## शाङ्करभाष्यं

वाह्यसाधनमासनमुक्तंअधुनाशरीरस्यधारणंकथमित्युच्यते सममिति समंकाय शिरोग्रीवंकायश्चशिरश्चग्रीवाचकायशिरोग्रीवंतत् समंधारयन्अचलञ्चसमंधार यतश्चलनंसम्भवत्यतोविशिनष्टि अचलमिति स्थिरःस्थिरोभूत्वेत्यर्थःस्वंनाशिकाग्रं संप्रेक्ष्यसम्यक्प्रेक्षणंदर्शनंकृत्वेवेतीवशब्दोलुप्तोद्रष्टव्यो नहिस्वनासिकाग्रसंप्रेक्षण मिहविधित्सितं किंतर्हि चक्षुषोदृष्टिसन्निपातः सचान्तःकरणसमाधानापेक्षोविव क्षितः स्वनासिकाग्रसंप्रेक्षणमेवचेद्विवक्षितं मनस्तत्रैवसमाधीयेत नात्मनिआत्म निहिमनसःसमाधानंवक्ष्यत्यात्मसंस्थंमनःकृत्वेति तस्मादिवशब्दलोपेनाक्ष्णोर्दृष्टि सन्निपातएवसंप्रेक्ष्येत्युच्यते दिशश्चानवलोकयन् दिशाञ्चावलोकनमकुर्वन्नित्येव मन्तराकुर्वन्नित्येतत् १३

## आनन्दगिरिकृतटीका ।

उक्तमनूद्यानन्तरश्लोकस्यापुनरुक्तमर्थमाह वाह्येति समत्वमृजुत्वंकायःश रीरमध्यं अचलमिति विशेषणमवताय्र्यतस्यतात्पर्य्यमाह सममिति कायकर णयोर्विषयधारवत्वशून्यत्वमचलत्वंस्थैर्यं किमितीवशब्दलोपोनकल्प्यते स्वना सिकाग्रसंप्रेक्षणमेवयोगाङ्गत्वेनाविधित्सितंकिंनस्यादित्याशंक्याह नहीति तर्हि किमत्रविवक्षितमिति प्रश्नपूर्वकमाह किंतर्हीति दृष्टिसन्निपातोदृष्टेश्चक्षुषोरूप प्रवृत्तिराहित्यं कथमसावनायासेनसिध्यति तत्राह तचेति समाधानस्यप्राधान्ये नाविवक्षितत्वात्दृष्टेर्व्वहिर्विषयत्वेनतद्भङ्गसङ्गात्तस्याविषयेभ्योव्यावृत्तस्यान्तरेच सन्निपातोविवक्षितोभवतीत्यर्थः तथापिकथंस्वनासिकाग्रसंप्रेक्षणमत्रश्रुतमविवि क्षितमित्याशंक्याह स्वनासिकेति तत्रैवमनःसमाधानेकाहानिरित्याशंक्यवाक्यशे षविरोधान्मैवमित्याह आत्मनिहीति किंतर्हिसंप्रेक्ष्येत्यादौविवक्षितमित्याशंक्या

## भाषाअनुवाद ।

अवचित्तकीएकाग्रताकेउपयोगी जोदेहधारणादिसोदोश्लोकसेकहते हैं कि कायकहेशरीरकामध्यभाग औशिरग्रीवाअर्थात् मूलआधारसेलेमस्तकपर्यन्तश रीर कोअतियत्नसेसीधोराखिकेऔनिश्चलकरके धारणाकेवाद अपनीनासिका केअग्रभगमे अर्द्धउन्मीलनपूर्वक दोनोदृष्टीलगाय समाहितसावधानहोय और दिशोंमेदृष्टिनदेय १३

प्रशान्तात्माविगतभीर्ब्रह्मचारिव्रतेस्थितः-मनःसंयम्यमच्चित्तोयुक्तआसीतमत्परः॥१४

## शाङ्करभाष्यं

किञ्चप्रशान्तेति प्रशान्तात्माप्रकर्षेणशान्तआत्मान्तःकरणंयस्यसोयंप्रशान्तात्माविगतभीर्विगतभयःब्रह्मचारिव्रतेस्थितःब्रह्मचारिणोव्रतंब्रह्मचारिव्रतंब्रह्मचर्यंगुरुशुश्रूषाभिक्षाभुक्त्यादितस्मिन्स्थितस्तदनुष्ठाताभवेदित्यर्थः किञ्चमनःसंयम्यमनसोवृत्तीरुपसंहृत्येत्येतत् मच्चित्तोमयिपरमेश्वरेचित्तंयस्यसोयंमच्चित्तोयुक्तःसमाहितःसंन्यासीचोपविशेत् मत्परोऽहंपरोयस्यसोयंमत्परोभवति कश्चित् रागीस्त्रीचित्तोनतुस्त्रियमेवपरत्वेनगृह्णाति किं तर्हिराजानंमहादेवंवा अयन्तुमच्चित्तोमत्परश्च १४

## आनन्दगिरिकृतटीका

ह तस्मादिति दक्षिणोत्तरचक्षुषोर्यादृष्टिस्तस्याबाह्यादिविषयाद्वैमुख्येनान्तरेवसन्निपतनमवस्थकीयंनासिकाग्रंनासिकान्तंसंप्रेक्ष्येति विवक्षितमित्यर्थः तथैवोत्तरमपिविशेषणमनुकूलमित्याह दिशश्चेति अनवलोकयन्नासीदित्युत्तरत्रसम्बन्धः अन्तरादिशामवलोकनमपियोगप्रतिबन्धकमिति तत्प्रतिषेधः १३

योगंयुञ्जानस्यविशेषणान्तराणिदर्शयति किञ्चेति अन्तःकरणस्यप्रशान्तिःरागद्वेषादिदोषराहित्यंतस्याश्चप्रकर्षोरागादिहेतोरपिनिवृत्तिःविगतभयत्वंसर्वकर्मपरित्यागेशास्त्रीयनिश्चयवशान्निःसन्दिग्धबुद्धित्वं भिक्षाभुक्त्यादीत्यादिशब्देनत्रिषवणस्नानशौचाचमनादिगृह्यते विशेषणान्तरमाह किञ्चेति उपसंहृत्ययोगनिष्ठोभवेदितिशेषः मनोवृत्त्युपसंहारेध्यानमपिनसिध्येत्तस्यतद्वृत्त्यावृत्तिरूपत्त्वा

## स्वामिकृतटीका।

चित्तैकाग्र्योपयोगिनींदेहादिधारणांदर्शयन्नाह सममिति द्वाभ्यां कायइतिदेहस्यमध्यभागोविवक्षितःकायश्चशिरश्चग्रीवाचकायशिरोग्रीवंमूलाधारादारभ्यमहोग्रपर्यन्तंसममवक्रंनिश्चलंधारयन्स्थिरोदृढप्रयत्नोभूत्वेत्यर्थःस्वीयंनासिकाग्रंसंप्रेक्ष्यचार्द्धनिमीलितनेत्रइत्यर्थः इतस्ततोदिशश्चानवलोकयन्नासीतेत्युत्तरेणान्वयः १३

## भाषाअनुवाद।

जिसकाचित्तप्रशान्तऔर जोनिर्भयऔब्रह्मचर्य्यव्रतमेंस्थितहोकेअपनेमनकोसबतरफसेखींच मेरेमेंलगायाहै औरजिसकोमहींपरमपुरुषार्थरूपकहै इष्टहौं ऐसामत्परायणपुरुष उक्तमतयोगमेंसमाहितसावधानरहताहै १४

युञ्जन्नेवंसदात्मानंयोगीनियतमानसः शान्तिंनिर्वाणपरमांमत्संस्थामधिगच्छति॥१५॥

## शाङ्करभाष्यं।

अथेदानींयोगफलमुच्यते युञ्जन्निति युञ्जन्समाधानंकुर्वन्नेवंयथोक्तेनविधानेनसदायोगीनियतमानसःनियतंसंयतंमानसंमनोयस्यसोयंनियतमानसः सशान्तिमुपरतिंनिर्वाणपरमांनिर्वाणंमोक्षस्तत्परमानिष्ठायस्याःशान्तेःसानिर्वाणपरमातांनिर्वाणपरमांमत्संस्थांमदधीनतामधिगच्छति प्राप्नोति १५

## आनन्दगिरिकृतटीका।

दित्याशंक्याह मच्चित्तइति विषयान्तरविषयमनोवृत्तुपसंहारेणात्यन्त्येवतन्निय मनान्नध्यानानुपपत्तिरित्यर्थः मच्चित्तत्वेनैवमत्परत्वसिद्धत्वात् मत्परइति पृथक् विशेषणमनर्थकमित्याशंक्याह भवतीति अन्तःकरणशुद्धिर्योगस्यावान्तरफलं १४

संप्रतिपरमफलकथनपरत्वेनानन्तरश्लोकमादत्ते अथेति योगस्वरूपंतदङ्गमासनमतिसत्कर्तृविशेषणमित्यस्यार्थस्यप्रकथनानन्तरमित्यथशब्दार्थः आत्मानं युञ्जन्निति सम्बन्धःआत्मशब्दोमनोविषयःयथोक्तोविधिरासनादि उक्तविशेषणवद्योतनार्थंसदेत्युक्तंयोगीध्यायीसंन्यासीत्यर्थः मनःसंयमस्ययोगंप्रत्यसाधारणत्वं दर्शयति नियतेति शान्तिशब्दितोपरतेःसर्व्वसंसारनिवृत्तिपर्य्यवसायित्वंमत्वा विशिनष्टि निर्व्वाणेति यथोक्तायामुक्तेर्ब्रह्मस्वरूपावस्थानादनर्थान्तरत्वमाह मत्संस्थामिति मदधीनांमदात्मिकामित्यर्थः १५

## स्वामिकृतटीका।

प्रशान्तेति प्रशान्तआत्माचित्तंयस्यविगताभीर्भयंयस्यब्रह्मचारिव्रते ब्रह्मचर्येस्थितःसन् मनःसंयम्यप्रत्याहृत्यमय्येवचित्तंयस्य अहमेवपरःपुरुषार्थोयस्यसमत्परःएवंयुक्तोभूत्वातिष्ठेत् १४

## भाषा अनुवाद।

अबयोगाभ्यासकरनेकाफलकहतेहैं किपूर्व्वोक्तप्रकारसेसदाआत्मामेमनकोयुक्तकरतेनियतकहे निरुद्धहै मानसअर्थात्चित्तजिसका सोईशान्तिकहे संसारनिवृत्तिकोप्राप्तहोताहै वहशान्तिकिसरूपकीहै सोकहतेहैं किजिससे परमनिर्व्वाणप्राप्तहोयहै सोईशान्तिऔरमत्संस्थाकहे मेरेरूपमेंअवस्थिति सोभीउसकोमिलैहै १५

नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन १६

## शाङ्करभाष्यं।

इदानीं योगिन आहारादिनियम उच्यते नात्यश्नत इति न अत्यश्नत आत्मसंमितमन्नपरिमाणमतीत्य अश्नतः अत्यश्नतो न योगोऽस्ति न च एकान्तमनश्नतो योगोऽस्ति यदु ह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवतीति श्रुतेः तस्मात् योगी नात्मसंमितादन्नादधिकं न्यूनं वाश्नीयात् अथवा योगिनो योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रमश्नतो योगो नास्ति उक्तं हि अर्धं सव्यञ्जनस्य तृतीयमुदकस्य तु वायोः सञ्चरणार्थं तु चतुर्थमवशेषयेदित्यादिपरिमाणं तथा न चातिस्वप्नशीलस्य योगो भवति नैव चातिमात्रं जाग्रतो योगो भवति चार्जुन १६

## आनन्दगिरिकृतटीका।

आहारादीत्यादिशब्देन विहारजागरितादि चोच्यते आत्मसंमितमन्नपरिमाणमष्टग्रासादिआहारनियमे शतपथश्रुतिं प्रमाणयति यदिति तदन्नं भुज्यमानं यदु ह वा इति प्रसिद्धया श्रुत्यानुदितमवत्यनुष्ठानयोग्यतामापाद्यानुष्ठानद्वारेण भोक्तारं रक्षति न पुनस्तदन्नमस्यानर्थाय भवतीत्यर्थः यत्पुनरात्मसंमितात् भूयोधिकतरं शास्त्रमतिक्रम्य भुज्यते तदात्मानं हिनस्ति भोक्तुरनर्थाय भवति यच्चान्नं कनीयोऽल्पतरं शास्त्रनियमाभावाद्भुज्यते तदन्नमनुष्ठानयोग्यतादिद्वारा न रक्षितुं क्षमते तस्मादत्यधिकमत्यल्पं चान्नं योगसाक्षत्कारं त्याज्यमित्यर्थः श्रुतिसिद्धमर्थं निगमयति तस्मादिति नेत्यादेर्व्याख्यानान्तरमाह अथवेति किं तदन्नपरिमाणं योगशास्त्रोक्तं यदधिकं न्यूनं वाभिव्यवहरतो योगानुपपत्तिरित्याशंक्याह उक्तं हीति पूरयेदशनेनार्धं तृतीयमुदकेन तु वायोः सञ्चरणार्थाय चतुर्थमवशेषयेदिति वाक्यमादिशब्दार्थः यथा नात्यन्तमश्न

## स्वामिकृतटीका।

योगाभ्यासफलमाह युञ्जन्नेवमिति एवमुक्तप्रकारेण सदा आत्मानं मनो युञ्जन्समाहितं कुर्वन् नियतं निरुद्धं मानसं चित्तं यस्य स शान्तिं संसारोपरमं प्राप्नोति कथंभूतां निर्वाणं परं प्राप्यं तस्यां तां मत्संस्थां मद्रूपेणावस्थितिं १५

## भाषा अनुवाद।

योगाभ्यासी को आहार शयन आदि का नियम कहते हैं कि हे अर्जुन अत्यन्त अधिक आहारी और अन्तनिराहारी इन दोनों को भी योग जो समाधि सो नहीं हो सकती है और अतिनिद्रा करनेवाला तथा निद्रात्यागी इनको भी समाधि नहीं होती है १६

युक्ताहारविहारस्ययुक्तचेष्टस्यकर्म्मसु युक्तस्वप्नाववोधस्ययोगोभवतिदुःखहा १७

## शाङ्करभाष्यं

कथंपुनर्योगोभवतीत्युच्यते युक्तेति युक्ताहारविहारस्ययुक्तचेष्टस्याह्रियतइत्याहारोऽन्नंविहरणंविहारःपादक्रमस्तौयुक्तौनियतपरिमाणौयस्यसयुक्ताहारविहारस्तस्ययुक्तचेष्टस्य तथान्याचयुक्तानियताचेष्टायस्यकर्म्मसु तथायुक्तस्वप्नाववोधस्ययुक्तौस्वप्नश्चाववोधश्चतौनियतकालौयस्यतस्ययुक्ताहारविहारस्यकर्मसुयुक्तस्वप्नाववोधस्ययोगिनोयोगोभवति दुःखहा दुःखानिसर्व्वाणिहन्तीति दुःखहासर्व्वसंसारदुःखक्षयकृद्योगोभवति इत्यर्थः १७

## आनन्दगिरिकृतटीका।

तोऽनश्नतश्चयोगोनसम्भवति तथात्यन्तस्वपतोजाग्रतश्चनयोगःसम्भवतीत्याह तथेति १६

आहारनिद्रादिनियमविरहिणोयोगव्यतिरेकमुक्त्वातन्नियमवतोयोगान्वयंव्याचष्टे कथंपुनरित्यादिना अन्नस्यनियतत्वमर्द्धमशनस्येत्यादिविहारस्यनियतत्वंयोजनान्नपरंगच्छेदित्यादिकर्मसुचेष्टायानियतत्वंवाङ्नियमादिरात्रौप्रथमतोदशघटिकापरिमिते कालेजागरणंमध्यतःस्वपनंपुनरपिदशघटिकापरिमिते जागरणमितिस्वप्नाववोधयोर्नियतकालत्वमेवंप्रयतमानस्ययोगिनोभवति योगस्यफलमाह दुःखहेति सर्व्वाणीत्याध्यात्मिकादिभेदभिन्नानीत्यर्थः यथोक्तयोगमन्तरेणापिस्वस्वप्नादौदुःखनिवृत्तिरस्तीतिविशिनष्टि सर्व्वेति विशुद्धविज्ञानद्वारेतिशेषः १७

## स्वामिकृतटीका

योगाभ्यासनिष्ठस्याहारादिनियममाह नात्यश्नतइति द्वाभ्यां अत्यन्तमधिकंभुञ्जानस्यएकान्तमत्यन्तमभुञ्जानस्यापियोगःसमाधिर्नभवति तथातिनिद्राशीलस्यातिजाग्रतश्चयोगोनैवास्ति १६

तर्हिकथम्भूतस्ययोगोभवतीत्यतआह युक्ताहारेति युक्तोनियतआहारोविहारश्चगतिर्यस्यकर्म्मसुकार्य्येषुयुक्तानियताचेष्टायस्ययुक्तौनियतौस्वप्नाववोधौनिद्राजागरौयस्यतस्यदुःखनिवर्त्तकोयोगोभवति सिद्ध्यति १७

## भाषा अनुवाद।

तोफेरिकैसेपुरुषकोसमाधिहोसकतीहै इसअपेक्षापरकहतेहैं किनियतरूपआहारऔविहारहै जिसका तथाकर्मोंमेपरिमितचेष्टाकहेव्यापारहै जिसकाऔरयथाउचितहै सोवनाजागनाजिसका उसीकोयोगकहे समाधिहोतीहै औरदुखदूरकरतीहै अर्थात् संयमकरनेसेसमाधिऔसमाधिसेदुखदूरहोताहै १७

यदाविनियतंचित्तमात्मन्येवावतिष्ठते निस्पृहःसर्व्वकामेभ्योयुक्तइत्युच्यतेतदा १८

## शाङ्करभाष्यं।

अथाधुनाकदायुक्तोभवतीत्युच्यते यदेति यदाविनियतंचित्तंविशेषेणनियतंसंयतमेकाग्रतामापन्नंचित्तंहित्वाबाह्यंचित्तमात्मन्येवकेवलेऽवतिष्ठते स्वात्मनिस्थितिंलभतइत्यर्थःनिस्पृहः सर्व्वकामेभ्योनिर्गतादृष्टादृष्टविषयेभ्यःस्पृहातृष्णायस्ययोगिनःसयुक्तःसमाहितइत्युच्यतेतदातस्मिन्काले १८

योगिनःसमाहितंयच्चित्तंतस्योपमोच्यते यथेति यथादीपःप्रदीपोनिवातस्थोनिवातेवातवर्जितेस्थानेस्थितोनेङ्गतेनैजतिनचलति सोपमाउपमीयतेऽनयेत्युपमायोगज्ञैश्चित्तप्रचारदर्शिभिःस्मृताचिन्तितायोगिनोयतचित्तस्यसंयतान्तःकरणस्ययुञ्जतोयोगमनुतिष्ठतआत्मनःसमाधिमनुतिष्ठतइत्यर्थः १९

## आनन्दगिरिकृतटीका

सफलस्यसाङ्गस्ययोगस्योत्यनन्तरं यदाहीत्यादावुक्तकालानुवादेनयुक्तंलक्षयितुमनन्तरश्लोकप्रवृत्तिंदर्शयति अथाधुनेति विशेषेणसंयतत्वमेवसंक्षिपति एकाग्रतामिति आत्मन्येवेत्येवकारार्थंकथयति हित्वेति केवलत्वमद्वितीयत्वं तस्यात्मस्थितिंविवृणोति स्वात्मनीति चित्तस्यकल्पितस्यात्मैवतत्त्वं तत्पुनरन्यतःसर्व्वतोनिवारितमधिष्ठानेनिमग्नंतिष्ठतीतिभावः तस्यामवस्थायांसर्व्वेभ्योविषयेभ्योव्यावृत्ततृष्णोयुक्तोव्यवह्रियतइत्याह निस्पृहइति १८

## स्वामिकृतटीका।

कदानिष्पन्नयोगःपुरुषोभवतीत्यपेक्षायामाह यदेति विनियतंविशेषेणनिरुद्धंसच्चित्तमात्मन्येव यदानिश्चलंतिष्ठति तदाप्राप्तयोगइत्युच्यते १८

## भाषा अनुवाद।

कौनसमयमेंयोगसम्पन्नअर्थात् समाधिसिद्धहोगा सोकहतेहैं किजवपुरुषकाचित्तएकाग्रकहे अच्छीतरह सवओरसेरुककरअर्थात्वाह्यकहे वाहरकेसकलविषयोंकोछोडिकार केवलआत्मामेंनिश्चलरूपसेलगैअर्थात् अपनेआत्मामेंस्थितिकरै औरसवमनोरथकीदूरहोनाकहेअर्थात्देखीसुनीजोसंसारिकविषय तिनकीकामनामेंस्पृहाकहे तृष्णानरहै तववहयोगसिद्धकहे युक्तसमाहितकहाजाताहै सोईकहाकि यदाविनियतंचित्तमात्मन्येवावतिष्ठतेइति १८

यथादीपोनिवातस्थोनेङ्गतेसोपमास्मृता योगिनोयतचित्तस्ययुञ्जतोयोगमात्मनः१९

## शाङ्करभाष्यं ।

एवंयोगाभ्यासबलादेकाग्रीभूतंनिवातप्रदीपकल्पंसत् यत्रेति यत्रयस्मिन्काले उपरमते चित्तंउपरतिं गच्छति निरुद्धंसर्व्वतोनिवारितप्रचारंयोगसेवयायोगानुष्ठानेनयत्रचैवयस्मिंश्चकालेआत्मनासमाधिपरिशुद्धेनान्तःकरणेनआत्मानंपरं चैतन्यंसर्व्वतोज्योतिःस्वरूपंपश्यन्नुपलभमानःस्वेएवात्मनितुष्यति तुष्टिंभजते २०

## आनन्दगिरिकृतटीका ।

उपमायोगिनश्चित्तस्थैर्य्यस्योदाहरणमित्यर्थः उपमाशब्दस्यप्रदीपविषयत्व सिद्ध्यर्थंकरणव्युत्पत्तिंदर्शयति उपमीयत इति योगिनोयथोक्तविशेषणवतश्चित्तस्थैर्य्यस्येतिशेषः १९

द्विविधःसमाधिःसंप्रज्ञातोऽसंप्रज्ञातश्चध्येयैकाकारसत्त्ववृत्तिभेदेनकथञ्चित् ज्ञायमानःसंप्रज्ञातःसमाधिःकथमपिपृथगज्ञायमानासैवसत्त्ववृत्तिरसंप्रज्ञातःसामाधिस्तत्रसामान्येनसमाधिलक्षणमभिधायासंप्रज्ञातस्यसमाधेरधुनालक्षणंविवक्षन्ना

## स्वामिकृतटीका ।

आत्मैकाकारतयावस्थितस्यचित्तस्योपमानमाह यथेति वातशून्येदेशेस्थितो दीपोयथानेङ्गतेनचलतिसाउपमादृष्टान्तःकस्यआत्मविषयंयोगंयुञ्जतोऽभ्यस्यतोयोगिनो यतं नियतं चित्तं यस्यनिष्कम्पतयाप्रकाशकतयाचाचञ्चलं तच्चित्तं तद्वत्तिष्ठतीत्यर्थः १९

## भाषा अनुवाद ।

आत्माकाराकारितरूपअवस्थितचित्तकहे आत्मारूपताकोप्राप्तजोचित्त तिसकादृष्टान्तकहतेहैं किजैसेनिर्व्वातस्थानमेदीपशिखाहलचलनहींहोतीसोईउपमाकहे दृष्टान्तजानो यहकिसकादृष्टान्तहै जोपूछोतोकहतेहैं किआत्मविषयकयोगाभ्यासीयोगीपुरुषजिसकाचित्तवशीभूतहै उसीकाचित्तनिर्व्वातस्थानस्थितदीपशिखाकेसमानआत्मामेस्थिरहै यहांचित्तशब्दकाअर्थअन्तःकरणहै सोअन्तःकरणवृत्तिभेदसेचारिप्रकारकाहै सङ्कल्पात्मककहे सङ्कल्परूपअन्तःकरणकी वृत्तिकहे स्वभावकोमनकहतेहैं औरनिश्चयात्मकअन्तःकरणकीवृत्तिकोबुद्धिकहते औरअनुसन्धानकहे किसीवस्तुकेजाननेकेलिये तद्वस्तुरूपहोरहनाअनुसन्धानात्मकअन्तःकरणवृत्तिकोचित्तकहतेहैं औरअभिमानयुक्तअन्तःकरणअहङ्कारकहाजाताहै १९

यत्रोपरमते चित्तंनिरुद्धंयोगसेवया यत्रचैवात्मनात्मानंपश्यन्नात्मनितुष्यति २०

## शाङ्करभाष्यं।

किञ्च सुखमिति सुखमात्यन्तिकमत्यन्तमेवभवतीत्यात्यन्तिकं अनन्तमित्यर्थः यत्तद्बुद्धिग्राह्यंबुद्ध्यैवेन्द्रियनिरपेक्षयागृह्यतइति बुद्धिग्राह्यमतीन्द्रियगोचरातीत मविषयजनितमित्यर्थः वेत्ति यदीदृशंसुखमनुभवतियत्रयस्मिन्काले नचएवअयंवि द्वानात्मस्वरूपेस्थितस्तस्मात्नैवचलति तत्त्वतः तत्त्वस्वरूपान्नप्रच्यवतइत्यर्थः २१

## आनन्दगिरिकृतटीका

इ एवमिति कालेसमाध्युपलक्षिते एवकारस्तुष्यतीत्यनेनसम्बध्यते चकारस्यस म्बन्धमाह यस्मिंश्चेति कालस्तुपूर्ववत्सकर्मकारकत्वेननिर्दिष्टमात्मानंतत्पदार्थत्वेन व्याचष्टे परमिति आत्मनीत्यस्यत्वंपदार्थविषयत्वमाह स्वेएवेति परमात्मानंप्र तीच्येवतद्धानेनापरोक्षीकुर्वन्नतुष्टिहेत्वभावात्तुष्यत्येवेत्यर्थःतस्मिन्कालेयोगसिद्धिर्भ वतीतिशेषः २०

## स्वामिकृतटीका।

यंसन्यासमितिप्राहुर्योगंतंविद्धिपाण्डवेत्यादौ कर्मैवयोगशब्देनोक्तं नात्यश्नतस्तु योगोऽस्तीत्यादौतुसमाधिर्योगशब्देनोक्तस्तत्रमुख्योयोगःकइत्यपेक्षायांसमाधिमे वस्वरूपतःफलतश्चलक्षयन्सएवमुख्योयोगइत्याह यत्रेति सार्द्धैस्त्रिभिःयत्रयस्मिन्नव स्थाविशेषेयोगाभ्यासेननिरुद्धंचित्तमुपरतंभवतीति योगस्यस्वरूपलक्षणमुक्तं त थाचपातञ्जलसूत्रं योगश्चित्तवृत्तिनिरोधइतिइष्टप्राप्तिलक्षणेनफलेनतमेवलक्षय तियत्रचयस्मिन्नवस्थाविशेषेआत्मनाशुद्धेनमनसाआत्मानमेवपश्यति नतुदेहादिप श्यंश्चात्मन्येवतुष्यति नतुविषयेषुयत्रेत्यादीनांतंयच्छब्दानांयोगसंज्ञितंविद्यादिति चतुर्थेनान्वयः २०

## भाषा अनुवाद।

यत्सन्यासमितिप्राहुर्योगंतद्विद्धिपाण्डव इसीअध्यायकेदूसदूसरेश्लोकसेयोग हीकोकर्मकहाहै औरनात्यश्नतस्तुयोगोस्ति इससोलहेंश्लोकमेंयोगशब्दसेसमाधि कहा तोइनमेसुख्ययोगकिसकोकहैं इसअपेक्षामेफलऔस्वरूपतथालक्षणक्रमसेस माधिहीमुख्यहै यहसाढेतीनिश्लोकसेकहते हैं किजिसअवस्थामेयोगाभ्याससे निरुद्धकरकेएकाग्रचित्तहोताहै औरजिसअवस्थामे आपअपनेस्वरूपकोदेखतेऊ येसन्तुष्टहोताहै ऐसीजोसमाधिकहेचित्तवृत्तिकोएकाग्रता सोईयोगहै सोईपा तञ्जलसूत्रमेकहा कियोगश्चित्तवृत्तिनिरोधः योगचित्तवृत्तिकारोकनाहै २०

सुखमात्यन्तिकंयत्तद्बुद्धिग्राह्यमतीन्द्रियं वेत्तियत्रनचैवायंस्थितश्चलतितत्त्वतः २१
यंलब्ध्वाचापरंलाभंमन्यते नाधिकंततः यस्मिंस्थितोनदुःखेनगुरुणापिविचाल्यते २२

## शाङ्करभाष्यम्।

किञ्च यंलब्ध्वेति यंलब्ध्वायमात्मलाभंलब्ध्वाप्राप्यचअपरमन्यल्लाभान्तरंततोधिकमस्तीति नमन्यते नचिन्तयति किञ्चयस्मिन्नात्मतत्त्वेस्थितोदुःखेनशस्त्रनिपातादिलक्षणेनगुरुणामहतापिनविचाल्यते २२

## आनन्दगिरिकृतटीका

योगसिद्धिकालंप्रकारान्तरेणप्रकटयति किञ्चेति बुद्धिशब्दःस्वानुभवविषयः इन्द्रियनिरपेक्षस्वानुभवगम्यत्वोक्तेरतीन्द्रियमिति पुनरुक्तमित्याशंक्याह अविषयेतिपदच्छेदः नचेत्यादि अपेक्षितपूरणंआत्मस्वरूपइति तस्मात्तत्त्वतइति सम्बन्धः नैवेत्येवकारसंबन्धोक्तिःचकारःसमुच्चयासम्बन्धनीयः यत्रेति पूर्ववत् सम्बन्धः २१

प्रकारान्तरेणप्रकृतंयोगंविशिनष्टि किञ्चेति आत्मलाभान्नपरंविद्यतेइति स्मृत्याव्याचष्टे यमात्मलाभमिति लाभान्तरंपुरुषार्थभूतंतत्तस्मादात्मलाभादिति यावत् तंविद्यादित्युत्तरत्रसम्बन्धः यस्मिन्नित्याद्यवतारयति किञ्चेति अपरिपक्व

## स्वामिकृतटीका।

आत्मन्येवतोषेहेतुमाह सुखमिति यत्रयस्मिन्नवस्थाविशेषे यत्तत् किमपिनिरतिशयमात्यन्तिकंनित्यंसुखंवेत्ति ननुतदाविषयेन्द्रियसम्बन्धाभावात् कुतःसुखंस्यात्तत्राह अतीन्द्रियंविषयेन्द्रियसम्बन्धातीतंकेवलंबुद्ध्यैवात्माकारयाग्राह्यंअतएवच यत्रस्थितःसंस्तत्त्वतआत्मस्वरूपान्नैवचलति २१

## भाषाअनुवाद

आत्मसन्तोषकाहेतुकहतेहैं किजिसअवस्थाविशेषमें योगीजन कोईनिरतिशयकहे अत्यन्तनित्यसुखरूपका अनुभवकरतेहैं जोकहोकिउसअवस्थामेतोविषयसम्बन्धकाअभावहै तोसुखकासम्भवकैसेहोय तिसपरकहतेहैं किविषयइन्द्रियसम्बन्धसेरहितजोकेवलआत्माकाररूपबुद्धिसेग्रहणकेयोग्यहै इसीसेउसमेस्थितहो योगीआत्मस्वरूपसेविचलित नहींहोते हैं २१

उसीकाअचलत्वप्रतिपादनकरतेहैं किआत्मआनन्दसुखजोआत्मस्वरूपलाभं वांछितकहेपावकरिकेऔरलाभकोरिउससेअधिक नहींगिनते अर्थात् वडे दुखभीयीतउष्णआदिउसकाकुछनहींकरसकते हैं औरकाक्यालेखाहै २२

तंविद्याद्दुःखसंयोगवियोगंयोगसंज्ञितं सनिश्चयेनयोक्तव्योयोगोनिर्विण्णचेतसा२३

### शाङ्करभाष्यं।

यत्रोपरमतेइत्याद्यारभ्ययावद्भिर्विशेषणैर्विशिष्टआत्मावस्थाविशेषोयोग उक्तः तमिति तंविद्यात्विजानीयात्दुःखसंयोगवियोगंदुःखैःसंयोगोदुःखसंयोगस्तेनवियोगोदुःखसंयोगवियोगस्तंदुःखसंयोगवियोगंयोगइत्येवसंज्ञितंविपरीतलक्षणेनविद्यात्विजानीयादित्यर्थः योगफलमुपसंहृत्यपुनरन्वयारम्भेणयोगस्यकर्त्तव्यंतोच्यते निश्चयानिर्वेदयोर्योगस्यसाधनविधानार्थंसयथोक्तफलोयोगोनिश्चयेनाध्यवसायेनयोक्तव्योऽनिर्विण्णचेतसाननिर्विण्णं अनिर्विण्णं तच्चेतस्तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः २३

### आनन्दगिरिकृतटीका

योगेयथादर्शितेनदुःखेनप्रच्याव्यतेनचैवंविचाल्यते यस्मिंस्थितोयोगीतंयोगंविद्यादिति पूर्ववत् २२

तंविद्यादित्याद्यपेक्षितं पूरयन्नवतारयति यत्रेति तमित्यात्मावस्थाविशेषं परामृशति दुःखसंयोगस्यवियोगोवियोगसंज्ञितोयुज्यते सकथंयोगसंज्ञितःस्यादित्याशंक्याह विपरीतेति इयंहियोगावस्थासमुत्खातनिखिलदुःखभेदेति दुःखसंयोगाभावोयोगसंज्ञामर्हतीत्यर्थः उपसंहृतयोगफले किमितिपुनर्योगस्यकर्त्तव्यत्वमुच्यतेतत्राह योगफलमिति प्रकारान्तरेणयोगस्यकर्त्तव्योपदेशारम्भोनान्तरम्भःयोगंयुञ्जानस्तत्क्षणादुक्तांसंसिद्धिमलभमानःसंशयानोविवर्त्ततेति तन्निरस्य

### स्वामिकृतटीका।

अचलत्वमेवोपपादयति यमिति यतोयमात्मस्वरूपंलब्ध्वाततोऽधिकंलाभंनमन्यते तस्यैवनिरतिशयसुखत्वात् यस्मिंश्चस्थितोमहतापिशीतोष्णादिदुःखेनन विचाल्यते नाभिभूयते एतेनानिष्टनिवृत्तिफलेनापियोगस्यलक्षणमुक्तंद्रष्टव्यं २२

### भाषा अनुवाद।

ऐसीदुखसंयोगकेअभावअवस्थाविशेषको योगसंज्ञाजानो दुखशब्दसेविषयसुखजोहैं उनकोग्रहणकरतेहैं अर्थात्जिसअवस्थामें दुखकालेशमात्रभीनहींहै सोईअवस्थायोगहै इससेथिरचित्तहोकरनिश्चयसे योगअभ्यासकरनाअवश्यहीकर्त्तव्यहै निर्वेदशब्दकाअर्थतो यत्नकरनेमेंशैथिल्यहैं सोईकहाकि अनिर्विण्णचित्तहोय अर्थात् शैथिल्यछोडि यत्नपूर्वकअभ्यासकरैविषयसुखभीदुखहै २३

संकल्पप्रभवान्कामांस्त्यक्त्वासर्वानशेषतः मनसैवेन्द्रियग्रामंविनियम्यसमन्ततः२४

## शाङ्करभाष्यं।

किञ्च सङ्कल्पेति सङ्कल्पप्रभवान्सङ्कल्पःप्रभवोयेषां कामानां तेसङ्कल्पप्र भवाःकामास्तान्कमांस्त्यक्त्वापरित्यज्यसर्वानशेषतोनिर्लेपेन किञ्चमनसैवविवेकयु क्तेनइन्द्रियग्राममिन्द्रियसमुदायं विनियम्यनियमनंकृत्वा समन्ततःसमन्तात् २४

## आनन्दगिरिकृतटीका।

यँपुनःकर्त्तव्योपदेशोऽर्थवानिति मत्वाह निश्चयेति तयोःसाधनत्वविधानमेवाक्षर योजनयासाधयति सयर्थेति इहजन्मनिजन्मान्तरेवासेतुस्यतोत्यध्यवसायेनयोक्त व्यःकर्त्तव्यः २३

इतश्चयोगस्यकर्त्तव्यत्वमितिप्रतिजानीते किञ्चेति केनक्रमेणकर्त्तव्यत्वमित्य पेक्षायामह सङ्कल्पेति सङ्कल्पःशोभनाध्यासः सर्वानित्युक्त्वापुनरशेषतइति पु नरुक्तिरित्याशंक्याह निर्लेपेनेति यथाशेपोनभवति तथासर्वेषां कमानां शोभना ध्यासाधीनानां त्यागस्ययोगानुष्ठानशेषत्ववद्विवेकयुक्तेनमनसाकरणसमुदायस्यसर्व तोनियमनमपितनशेषत्वेनकर्त्तव्यमित्याह किञ्चेति २४

## स्वामिकृतटीका।

तमिति यएवंभूतोऽवस्थाविशेषस्तंदुःखसंयोगवियोगंयोगसंज्ञितंविद्यात्दुःख शब्देनदुःखमिश्रितंवैषयिकंसुखमपिगृह्यते दुःखस्यसंयोगेनसंस्पर्शमात्रेणापिवि योगोयस्मिंस्तमवस्थाविशेषंयोगसंज्ञितं योगशब्दवाच्यं जानीयात् परमात्मनिचित्त स्ययोजनंयोगःयद्वादुःखस्यसंयोगेन वियोगएवकुरेकातरशब्दवद्विरुद्धलक्षणया योगउच्यते कर्म्मणितुयोगशब्दस्तदुपायत्वादौपचारिकइतिभावःयस्मादेवंमहाफ लोयोगस्तस्मात्सएवयत्नतोऽभ्यसनीयइत्याह सइति सार्द्धेन . सयोगोनिश्चयेनशा स्त्राचार्य्योपदेशजनितेनयोक्तव्योऽभ्यसनीयःयद्यपिशीघ्रंनसिध्यति तथाप्यनिर्व्विण्णे ननिर्वेदरहितेनचेतसायोक्तव्यःदुःखवुद्ध्याप्रयत्नशैथिल्यंनिर्वेदः २३

## भाषा अनुवाद

सङ्कल्पसेप्रभवकहे प्रगटजो योगकेप्रतिकूलकहेविरोधी वाधकरूप सकल कामना उनकोवासनासमेत त्यागकरिकेंविषयोंके दोषदेखताहुआ पुरुष मनके द्वारा सर्वत्रधावमानइन्द्रियोंको सवओरसेदमनकरिके योगाभ्यासकरै अथवा स र्वत्रधावंतीहुई इन्द्रियोंको मनहीसेरोंककर योगकरै यहअढस्लोकसेकहा २४

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् २५

## शाङ्करभाष्यं

शनैरिति शनैः शनैर्न सहसा उपरमेत् उपरतिं कुर्य्यात् कया बुद्ध्या किंविशिष्टया धृतिगृहीतया धृत्या धैर्य्येण गृहीतया धैर्य्येण युक्तयेत्यर्थः आत्मनि संस्थितं आत्मैव सर्वं न ततोऽन्यत् किञ्चिदस्तीत्येवमात्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् एष योगस्य परमो विधिः तत्रैवमात्मसंस्थं मनः कर्त्तुं प्रवृत्तो योगी २५

## आनन्दगिरिकृतटीका

कामत्यागद्वारेणेन्द्रियाणि प्रत्याहृत्य किं कुर्य्यादिति शङ्कितारं प्रत्याह शनैः शनैरिति सहसा विषयेभ्यः सकाशादुपरमे मनसो न स्वास्थ्यं संभवतीत्यभिप्रेत्याह न सहसेति तत्र साधनं धैर्ययुक्ता बुद्धिरित्याह कयेत्यादिना भूम्यादीरव्याकृतपर्यन्ताः प्रकृतीरष्टौ पूर्वपूर्वावधारणं कृत्वोत्तरक्रमेण प्रविलापयेदिति भावः अव्यक्तमात्मनि प्रविलाप्य आत्ममात्रनिष्ठं मनो विधाय चिन्तयितव्याभावादिति स्वस्थो भवेदित्याह आत्मेति तत्र संस्थितिमेव मनसो विवृणोति आत्मैवेति योगविधिमुपक्रम्य किमिदमुक्तमित्याशंक्याह एष इति यन्मनसो नैश्चल्यमिति शेषः ननु मनसः शब्दादिनिमित्तानुरोधेन रागद्वेषवशादत्यन्तचञ्चलस्यास्थिरस्य तत्र तत्र स्वभावेन प्रवृत्तस्य कुतो नैश्चल्यं नैश्चिन्त्यञ्चेति तत्रेति योगप्रारम्भः सप्तम्यर्थ एवशब्देन मनसैवेत्यादि उक्तप्रकारो गृह्यते २५

## स्वामिकृतटीका

किञ्च सङ्कल्पेति सङ्कल्पात्प्रभवो येषां तान् योगप्रतिकूलान् सर्वान् कामान् शेषतः सवासनांस्त्यक्त्वा मनसैव विषयदोषदर्शिना सर्वतः प्रसरन्तमिन्द्रियसमूहं विशेषेण नियम्य योगो योक्तव्य इति पूर्वेणान्वयः २४

## भाषाअनुवाद।

और जो मन पूर्व्वजन्मकृतकर्म्मके संस्कारसे चलविचल होय तौभी धारणा जो धैर्यरूप बुद्धिशक्ति तिससे थिर करै यह कहते हैं कि धारणासे वशीभूत जो बुद्धि तिससे मनको आत्मामें अच्छीतरह स्थापन करिके उपरम करै अर्थात् फेरि न कुछ चिन्तन करै परन्तु यह भी सनैः सनैः कहे धीरे धीरे धैर्यवती बुद्धिके द्वारा क्रमसे मनको आत्मामें थिर करै सहसा न करै अर्थात् जल्दी न करै तो आत्मस्वरूप आनन्द पावे २५

यतोयतोनिश्चलति मनश्चञ्चलमस्थिरं ततस्ततोनियम्यैतदात्मन्येववशंनयेत् २६

## शाङ्करभाष्यं

यतइति यतोयतोयस्माद्यस्मान्निमित्ताच्छब्दादेर्निश्चलति निर्गच्छति स्व भावदोषान्मनश्चञ्चलमत्यर्थंचलमतएवास्थिरंततस्ततस्तस्माच्छब्दादेर्निमित्तान्नियम्यतत्तन्निमित्तंयाथात्म्यनिरूपणेनाभासीकृत्यवैराग्यभावनयाचैतन्मनआत्मन्येववशंनयेत् आत्मवश्यतामापादयेत् २६

एवंयोगाभ्यासवलाद्योगिनआत्मन्येवप्रशाम्यति मनःप्रशान्तेति प्रशान्तमनसंप्रकर्षेणशान्तंमनोयस्यसप्रशान्तमनास्तंप्रशान्तमनसंह्येनंयोगिनंसुखमुत्तमंनिरतिशयमुपैत्युपगच्छति शान्तरजसंप्रक्षीणमोहादिक्लेशरजसमित्यर्थःब्रह्मभूतंजीवन्मुक्तंब्रह्मैवसर्व्वमित्येवंनिश्चयवन्तंब्रह्मभूतमकल्मषंधर्म्माधर्म्मादिवर्जितं २७

## आनन्दगिरिकृतटीका।

स्वाभाविकोदोषोमिथ्याज्ञानाधीनोरागादिःशब्दादेर्मनसोनियमनंकथमित्याशंक्याह तत्तन्निमित्तमिति याथात्म्यनिरूपणंचयिष्णुत्वदुःखसंभिन्नत्वाद्यालोचनंतेनतत्तत्‌ वैराग्यभावनयातत्तदाभासीकृत्य ततस्ततोनियम्यैतन्मनइतिसम्बन्धः २६

## स्वामिकृतटीका।

यदितुप्राक्तनकर्म्मसंस्कारेणमनोविचलेत्तर्हिधारणयास्थिरीकुर्य्यादित्याह शनैरिति धृतिर्धारणातयागृहीतयावशीकृतयाबुद्ध्या आत्मसंस्थमात्मन्येवसम्यक्स्थितं निश्चलंमनःकृत्वाउपरमेत् तत्तुशनैरभ्यासक्रमेणनतुसहसाउपरमस्वरूपमाह नकिञ्चिदपिचिन्तयेत्निश्चलेमनसिस्वयमेवप्रकाशमानपरमानन्दनिष्ठोभूत्वाआत्मध्यानादपिननिवर्त्तेतइत्यर्थः २५

एवमपिरजोगुणवशाद्यदिमनःप्रचलेत्तर्हिपुनःप्रत्याहारेणवशीकुर्य्यादित्याह यतोयतइति स्वभावतश्चञ्चलंवार्य्यमाणमप्यस्थिरंमनोयंयंविषयंप्रति निर्गच्छति ततस्ततःप्रत्याहृत्य आत्मन्येवस्थिरंकुर्य्यात् २६

## भाषाअनुवाद।

फिरिभीजोरजोगुणवशते मनविचलितहोय तोफेरिउसकोअपनेवशकरनाय हकहतेहैं किस्वभावहीसेचञ्चलमनधारणाकीइच्छाकरतेभीजोचञ्चलहोयतो जिसजिसविषयमेगमनकरै उसीउसीविषयसेखैञ्चिकरिआत्माहीमेथिरकरै २६

प्रशान्तमनसंह्येनंयोगिनंसुखमुत्तमं उपैतिशान्तरजसंब्रह्मभूतमकल्मषं २७
युञ्जन्नेवंसदात्मानंयोगीविगतकल्मषः सुखेनब्रह्मसंस्पर्शमत्यन्तंसुखमश्नुते २८

शाङ्करभाष्यं।

युञ्जन्निति युञ्जन्नेवंयथोक्तेनक्रमेणयोगीयोगान्तरायवर्जितःसदासर्व्वदात्मानंयुञ्जन्विगतकल्मषोविगतपापः सुखेनानायासेनब्रह्मसंस्पर्शं ब्रह्मणापरेण संस्पर्शोयस्यतद्ब्रह्मसंस्पर्शंसुखमत्यन्तमुत्कृष्टं सुखं निरतिशयंसुखमश्नुतेव्याप्नोति २८

आनन्दगिरिकृतटीका।

मनसोवशीकरणेनोपशमेकिंस्यादित्याह एवमिति योगाभ्यासोविषयविवेकद्वारामनोनिग्रहाद्यावृत्तिःप्रशान्तमात्मन्येवप्रलीनमितियावत् मनस्तद्वृत्त्योरभावे स्वरूपभूतसुखाविर्भावस्यस्वापादौप्रसिद्धिंद्योतयितुं हिशब्दः मोहादिक्लेशप्रतिबन्धाद्योगिनियथोक्तसुखाप्राप्तिमाशंक्यमनोविलयमुपेत्यपरिहरति प्रशान्तेति तस्यास्मदादिविलक्षणत्वमाह ब्रह्मभूतमिति अस्मदादेरपिस्वतोब्रह्मभूतत्वेनतुल्यं जीवन्मुक्तत्वमित्याशंक्याह ब्रह्मेति धर्माधर्मप्रतिबन्धाद्युक्तायथोक्तसुखप्राप्तिरित्याशंक्योक्तं अकल्मषमिति २७

स्वामिकृतटीका।

एवंप्रत्याहारादिभिःपुनःपुनर्मनोवशीकुर्वन्तं रजोगुणक्षयेसति योगसुखंप्राप्नोतीत्याह प्रशान्तेति एवमुक्तप्रकारेणशान्तरजोयस्यतंअतएवप्रशान्तंमनोयस्यतमेनं निष्कल्मषं ब्रह्मत्वं प्राप्तं योगिनमुत्तमं सुखं समाधिसुखं स्वयमेवोपैति प्राप्नोति २७

भाषा अनुवाद।

इसप्रकारमनऔरइन्द्रीवशकारीपुरुषको रजोगुणकीक्षयहोनेसे परेयोगसुख प्राप्तहोताहै सोईकहतेहैं किपूर्वोक्तरीतिसे जिसकारजोगुणनाशभया औरश्रीतरहमनभीशान्तभयाहै सोईपापरहितप्रक्षीणमोह तथाब्रह्मभावकोप्राप्त योगी उत्तमसमाधिसुखको अनायासपावताहै २७

अबयोगीजनकीकृतार्थताकहतेहैं किइसीप्रकारसर्वदामनवशीभूतकारीपुरुष जिसकासम्पूर्णपापदूरभयाहै सोईयोगीअनायासब्रह्मसंस्पर्शअर्थात्अविद्यानिवृत्तिकारी जोप्रत्यक्षब्रह्मज्ञान सर्वोत्तमसुख सोपावतेअर्थात्जीवन्मुक्तहोतेहैं २८

सर्वभूतस्थमात्मानंसर्वभूतानिचात्मनि ईक्षतेयोगयुक्तात्मासर्वत्रसमदर्शनः २९

## शाङ्करभाष्यं

इदानींयोगस्ययत्फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत्प्रदर्श्यते सर्वेति- सर्वभूतस्थंसर्वेषु भूतेषु स्थितं स्वमात्मानंसर्वभूतानि चात्मनि ब्रह्मादीनि स्तम्बपर्यन्तानिच सर्वभूतान्यात्मन्येकतां गतानि ईक्षतेपश्यति योगयुक्तात्मासमाहितान्तःकरणःसर्वत्रसमदर्शनःसर्वेषु ब्रह्मादिस्थावरान्तेषु विषमेषु सर्वभूतेषु समं निर्विशेषंविक्रियारहितं ब्रह्मात्मैकत्वविषयं दर्शनंज्ञानंयस्य ससर्वत्रसमदर्शनः२९

## आनन्दगिरिकृतटीका।

उत्तमंसुखंयोगिनोभवतीत्युक्तंतदेवस्फुटयति युञ्जन्निति क्रमोयथोक्तोमनसेन्द्रियग्राममित्यादि योगान्तरायोरागद्वेषादिस्तदात्मानं युञ्जन्निति सम्बन्धः २८ पापपदमुपलक्षणंपुण्यस्यापिसंस्पर्शस्तादात्म्यमैकरसंउत्कर्षोविषयासंस्पर्शोयोगमनुतिष्ठतोब्रह्मभूतस्य सर्वानर्थनिवृत्तिनिरतिशयसुखप्राप्तिलक्षणोद्विविधोमोक्षो हेतुनाकेनस्यादिति शङ्कमानंप्रत्याह इदानीमिति स्वमात्मानमीक्षतइति सम्बन्धः सर्वभूतान्यपि तद्विशेषणत्वेनपश्यति चेन्नशुद्धवस्तुज्ञानमिति नाविद्यानिवृत्तिरित्याशंक्याह सर्वभूतानीति उक्तेदर्शनेचित्तसमाधानमुपायंदर्शयति योगेति विषमेषु उपाधिषु तदनुरोधाद्विषममेवदर्शनं उपदर्शितदर्शनप्रतिबन्धकं प्रत्युदस्यति सर्वत्रेति, २९

## स्वामिकृतटीका।

ततश्चकृतार्थोभवतीत्याह युञ्जन्निति एवमनेनप्रकारेणसर्व्वदाआत्मानंमनोयुञ्जन्वशीकुर्वन् विशेषेण सर्वात्मनाविगतं कल्मषंयस्य सयोगीसुखेनानायासेन ब्रह्मणः संस्पर्शोऽविद्यानिवर्त्तकः साक्षात्कारस्तदेवात्यन्तं सर्वोत्तमं सुखमश्नुते जीवन्मुक्तोभवतीत्यर्थः २८

## भाषा अनुवाद।

ब्रह्मसाक्षात्काररूपअपरोक्षज्ञानकैसाहोता-सोदेखावतेहैं कियोगयुक्तात्मा पुरुष ब्रह्मसेलेस्थावरपर्यन्तमे समदर्शीसर्वभूतकहे प्राणीमात्रमे अपनेकोदेखता औरयावत्जीवोंकोभी अपनेमेदेखताहै अर्थात् अविद्याकृतदेहादिभेद दूरहो ब्रह्ममयज्ञानवान सर्वत्रसमदर्शीहोताहै अर्थात् ईश्वरकोछोड़औरनहींदेखता-२९

योमांपश्यतिसर्व्वत्रसर्व्वञ्चमयिपश्यति तस्याहंनप्रणश्यामिसचमेनप्रणश्यति ३०

शाङ्करभाष्यं।

एतस्यात्मैकत्वदर्शनस्य फलमुच्यते योमामिति योमांपश्यति वासुदेवंसर्व्वस्यात्मानंसर्व्वत्रसर्व्वेषुभूतेषुपश्यति सर्व्वञ्चब्रह्मादिभूतजातंमयिसर्व्वात्मनिपश्यतितस्यैवमात्मैकत्वदर्शिनःअहमीश्वरोनप्रणश्यामिनपरोक्षतांगमिष्यामि सचमेनप्रणश्यतिसचविद्वान्मेममवासुदेवस्यनप्रणश्यति नपरोक्षोभवति तस्यचममचैकात्मकत्वात स्वात्माहिनामात्मनःप्रियएवभवति ३०

आनन्दगिरिकृतटीका।

उक्तस्यैकत्वज्ञानस्यफलविकल्पत्वशङ्कांशिथिलयति एतस्येति तत्रैकत्वदर्शनमनुवदति योमामिति तत्फलमिदानीमुपन्यस्यति तस्येति ज्ञानानुवादभागंविभजतेयोमामितितत्फलोक्तिभागंव्याचष्टे तस्यैवमितिअनेकत्वदर्शिनोपीश्वरोनित्यत्वान्नप्रणश्यतीत्याशंक्याह नेति अहंपरमानन्दोनतंप्रति परोक्षोभवामीत्यर्थः सचेत्यादिव्याचष्टे विद्वानिति विद्वानिवाविद्वानपीश्वरस्यननश्यतीत्याशंक्योक्तं नेत्यादिना अविदुषस्वरूपेणसतोपिव्यवहितत्वादविद्ययानष्टप्रायनेत्यर्थः ईश्वरस्यविदुषश्चपरस्परमपरोक्षत्वेहेतुमाह तस्यचेति आत्मैकत्वेपिकथंमिथोऽपरोक्षत्वं तत्राह स्वात्मेति ३०

स्वामिकृतटीका।

ब्रह्मसाक्षात्कारमेवदर्शयति सर्वभूतस्थमिति योगेनाभ्यस्यमानेनयुक्तात्मासमाहितचित्तःसर्वत्रसमंब्रह्मैवपश्यतीति तथास्वमात्मानमविद्याकृतदेहादिपरिच्छेदशून्यंसर्वभूतेषु ब्रह्मादिस्थावरान्तेष्ववस्थितं पश्यति तानिचआत्मन्यभेदेनपश्यति २९

एवंभूतात्मज्ञानेचसर्वभूतात्मतयामदुपासनंमुख्यंकारणमित्याह योमामिति मांपरमेश्वरंसर्व्वत्रभूतमात्रेयःपश्यति सर्व्वंचप्राणिमात्रंमयियःपश्यति तस्याहंनप्रणश्यामिअदृश्योनभवामि सचममादृश्योनभवति प्रत्यक्षोभूत्वाकृपादृष्ट्यातंविलोक्यानुगृह्णामीत्यर्थः ३०

भाषा अनुवाद।

अबपूर्वोक्तज्ञानीको जोफलहोतासोकहते हैं किसाक्षात्परमेश्वरजोमैं तिसको यावद्वस्तुमात्रसबमें औरसकलजोकुछहै सोमेरेमें जोदेखताहै तोउसकोहमअदृश्यनहींहोते औरहमकोवहभीअदृश्यनहींहोगाअर्थात् हमप्रत्यक्षहोयकरकृपादृष्टिसेउसपरअनुग्रहकरतेहैं ३०

सर्व्वभूतस्थितंयोमांभजत्येकत्वमास्थितः सर्व्वथावर्त्तमानोपिसयोगीमयिवर्त्तते ३१

शाङ्करभाष्यं ।

यस्माच्चाहमेवससर्व्वात्मैकत्वदर्शीइत्येतत्पूर्व्वश्लोकार्थंसम्यग्दर्शनमनद्य ततफलंमोचोभिधीयते सर्व्वेति सर्व्वथासर्व्वप्रकारैर्व्वर्त्तमानोपिसम्यग्दर्शीयोगीमयिवैष्णवेपरमेपदेवर्त्तते नित्यमुक्तएवसःनमोचप्रतिकेनचित् प्रतिवध्यतइत्यर्थः ३१

किञ्चान्यत् आत्मेति आत्मौपम्येन आत्माखयमेवउपमीयत इति उपमातस्याः उपमायाः भावऔपम्यं तेनआत्मौपम्येनसर्व्वत्रसर्व्वभूतेषु समंतुल्यंपश्यति योऽर्जुन सचकिंसमंपश्यतीत्युच्यते यथाममसुखमिष्टं तथासर्व्वप्राणिनां सुखमनुकूलंवाशब्दश्चार्थे यदिवायच्चदुःखंममप्रतिकूलमनिष्टं यथातथासर्व्वप्राणिनां दुःखमनिष्टं प्रतिकूलमित्येवमात्मौपम्येन सुखदुःखेअनुकूलप्रतिकूले तुल्यतयासर्वभूतेषु समंपश्यति नकस्यचित् प्रतिकूलमाचरत्यहिंसकइत्यर्थः यएवमहिंसकः सम्यग्दर्शननिष्ठः सयोगीपरमउत्कृष्टोमतोऽभिप्रेतः सर्व्वयोगिनां मध्ये ३२

आनन्दगिरिकृतटीका ।

विद्वदीश्वरयोरेकत्वानुवादेनविद्याफलंविवृणोति यस्माच्चेति तस्मादेकदर्शनार्थंप्रयतितव्यमिति शेषः पूर्व्वार्द्धेनानूद्योत्तरार्द्धेनफलविधिरिति मत्वाह इत्येतदिति रागादिरहितस्ययमनियमादिसंस्कारवतःस्वैरप्रवृत्त्यसम्भवेपि तामङ्गीकृत्यज्ञानंस्तौति सर्व्वथेति प्रतिभासतोपियथेष्टचेष्टाङ्गीकारेकृतोज्ञानवतोनित्यमुक्तत्वंप्रातीतिकदुराचारप्रतिवन्धादित्याशंक्याह नमोचमिति ३१

स्वामिकृतटीका ।

नचैवंभूतोविधिकिङ्करःस्यादित्याह सर्व्वस्थितमिति सर्व्वभूतेषुस्थितंनामाभेदमास्थितआश्रितोयोभजति सयोगीज्ञानीसन्सर्व्वथाकर्म्मपरित्यागेनापिवर्त्तमानोमय्येववर्त्तते मुच्यते नतुभ्रश्यतीत्यर्थः ३१

भाषा अनुवाद ।

एवम्भूतपुरुष विधिकहे कर्मकेअधीननहींहै सोकहते हैं किसर्व्वभूतमेंवर्त्तमानजोमैं तिसकोएकवुद्धिकहे एकमोहिंछोडऔरवुद्धिनहींहैजिसकैसो मेरेही कोआश्रयकरिकेभजताहै सोयोगीतत्वज्ञानीसकलकर्म्मपरित्यागकरिकेसर्व्वथा वर्त्तमानकहे जीवितदशामेंभी मेरेमेंप्राप्तहै अर्थात्सायुज्यगतिकोप्राप्तहै ३१

आत्मौपम्येनसर्व्वत्रसमंपश्यतियोऽर्जुन सुखंवायदिवादुःखंसयोगीपरमोमतः ३२

शाङ्करभाष्यं।

एतस्य यथोक्तस्य सम्यग्दर्शनलक्षणस्य योगस्य दुःसम्पाद्यतामालक्ष्य शुश्रूषुः ध्रुवंतत्प्राप्त्युपायमर्जुनउवाच योयमिति योयं योगस्त्वयाप्रोक्तःसाम्येनसमत्वेन हे मधुसूदन एतस्य योगस्याहं नपश्यामि नोपलभे चञ्चलत्वान्मनसः किंस्थिरा मचलांस्थितिंप्रसिद्धमेतत् ३३

आनन्दगिरिकृतटीका

स्वैराचरणस्याप्रतिबन्धकत्वकथनात् परपीड़नस्य योगिनःसम्यग्दर्शनंप्रत्यप्रतिबन्धकत्वप्रसक्तावुक्तं किञ्चेति अन्यदपि किञ्चिदुच्यते परमयोगिनोनिर्द्देशद्वारायोगमाहात्म्यमित्यर्थः उपमैवौपम्यमात्माच तदौपम्यञ्चतेनसर्व्वभूतेषु यःसमंपश्यतीत्युक्तं तदेवसमदर्शनं प्रश्नपूर्व्वकं विवृणोति किमित्यादिना विकल्पार्थत्वं वारयति वाशब्दइति उपदर्शितसमदर्शनफलमभिलपति नकस्यचिदिति किमपेक्षया तस्यपरमत्वंतत्राह सर्व्वेति ३२

मनसश्चंचलमस्थिरमित्युपश्रुत्य निर्विशेषेचित्तस्थैर्यंदुःशकमिति मन्वानस्तदुपायबुभुत्सया पृच्छतीति प्रश्नमुत्थापयति एतस्येति तत्प्राप्त्युपायंशुश्रूषुरिति मन्वानः मनसश्चंचलत्वेपि तन्निग्रहद्वारायोगस्थैर्य्यं सम्पाद्यतामित्याशंक्याह एतस्येति प्रसिद्धमिति सम्बन्धः ३३

स्वामिकृतटीका।

एवञ्चमां भजतां योगिनांमध्ये सर्व्वभूतानुकम्पीश्रेष्ठइत्याह आत्मौपम्येनेति आत्मौपम्येन स्वसादृश्येन यथाममसुखंप्रियंदुःखञ्चाप्रियंतथान्येषामपीति सर्व्वत्रसमंपश्यन्सुखमेवसर्व्वेषांयोवाञ्छति नतुकस्यापिदुःखंसयोगीश्रेष्ठोममाभिमत इत्यर्थः ३२

भाषा अनुवाद।

औरऐसेयोगीजनोंकेबीचमेजीवोंपरअनुग्रहकरनेवालाश्रेष्ठहै सोकहते हैं किहेअर्जुन जोअपनीउपमाकहे औरसबमेभी अपनेसमानसुखयादुखतथाप्रियअप्रियदेखताहै औरसबकोभीसुखकीइच्छाकरताऔदुखनहींदेखसकताहै सोईयोगीयोगीजनोंकेबीचमेश्रेष्ठहै ३२

अर्जुन उवाच योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिरां ३३
चञ्चलंहिमनःकृष्णप्रमाथिवलवद्दृढं तस्याहंनिग्रहंमन्येवायोरिवसुदुष्करं ३४

## शाङ्करभाष्यं

चञ्चलमिति चञ्चलं हिमनःकृष्णइति कृषतेर्विलेखनार्थस्य रूपंभक्तजन पापादिदोषाकर्षणात् कृष्ण हियस्मान्मनः चञ्चलं नकेवलमत्यर्थं चञ्चलं प्रमाथि चप्रमथनशीलंप्रमथ्नाति शरीरमिन्द्रियाणिचविक्षिपति परवशीकरोति किञ्च वलवत्प्रवलं नकेनचिन्नियन्तुंशक्यंदुर्निवारत्वात् किञ्चदृढंतन्तुनागवदच्छेद्यंतस्य वम्भूतस्यमनसोहं निग्रहं रोधं मन्येवायोरिव यथावायोर्दुष्करोनिग्रहस्ततोपिमन सोदुष्करंमन्यइत्यभिप्रायः ३४

## आनन्दगिरिकृतटीका।

मनसश्चञ्चलत्वेपि कृष्णपदपरिनिष्पत्तिप्रकारंसूचयति कृष्णइतीति कथं कर्षकत्वमाप्तकामस्य भगवतःसम्भवतीत्याशङ्क्याह भक्ते ति ऐहिकामुष्मिकसर्वस म्पदामाकर्षणशीलत्वाच्चे ति द्रष्टव्यं प्रमथ्नातिक्षोभयति तदेवक्षोभकत्वंप्रकट

## स्वामिकृतटीका

उक्तलक्षणस्य योगस्यासम्भवंमन्वानोऽर्जुनउवाच योऽयमिति साम्येनमनसो लयविक्षेपशून्यतया केवलात्माकारावस्थानेन योऽयं योगस्त्वया प्रोक्तएतस्य योग स्यस्थिरां दीर्घकालां स्थितिं नपश्यामि मनसश्चंचलत्वात् ३३

## भाषा अनुवाद।

ऐसेयोगकेलक्षणभगवानसेसुनिकरि असम्भवजानिअर्जुनकहतेहैं किमन कोलयऔविक्षेपशक्तिदूरकरि केवलआत्मामेंजोअवस्थानकहे समभावसेमनका थिररहोरहना रूपयोग जोआपनेकहा सोहेमधुसूदनमनकोचञ्चलताईकेहेतुसे हमकोइसयोगकीदीर्घकालअवस्थितिकहे थिररहनानहींदेखपडताहै ३३
औरवहीचञ्चलताकोविस्तारकरिकहतेहैं किहेकृष्णयहमनस्वभावहीसे चञ्चलऔप्रमाथीअर्थात्देहइन्द्रियोंकोविक्षिप्तकारी औरवलवानकहेविचारसे इसकाजीतनाअसाध्यहै तथादृढकहे विषयवासनासेवद्ध इसमनकोविषयोंसेभि न्नकरनाअतिदुष्करकहेकठिनहै इससेजैसेआकाशमेंवायुकोनिश्चलकरनाकठि नतैसेइसमनकाभीनि ग्रहकहे थिरकरनाहमकोअतिअसाध्यवोधहोताहै ३४

श्रीभगवानुवाच असंशयंमहाबाहोमनोदुर्निग्रहंचलं अभ्यासेनतुकौन्तेय वैराग्येणचगृह्यते ३५

## शाङ्करभाष्यं।

श्रीभगवानुवाच एवमेतद्यथात्रवीपिअसंशयंनास्तिसंशयोमनोदुर्निग्रहंचञ्चल मित्यत्र हेमहाबाहो किन्तुअभ्यासेनतुअभ्यासोनामचित्तभूमौकस्याञ्चित् समानप्र त्ययावृत्तिचित्तस्यवैराग्येणचगृह्यते वैराग्यंनामदृष्टादृष्टेषुभोगेषुदोषदर्शनाभ्या सात् वैतृष्ण्यंविषयेषुवितृष्णांवैराग्यं तेनचवैराग्येणगृह्यते विक्षेपरूपःप्रचारश्चि त्तस्यैवंतन्मनोगृह्यते निरुध्यतइत्यर्थः ३५

## आनन्दगिरिकृतटीका

यति विक्षिपतीति दुर्निवारत्वमभिप्रेताद्विषयादाक्रष्टुमशक्यत्वं विशेषणान्तरमा ह किञ्चेति अच्छेद्यत्वंविशेषणान्तरमाह किञ्च दृढमिति तन्तुनागोवरुण पाशशब्दितोजलचारीपदार्थोऽत्यन्तदृढतयाछेत्तुमशक्यत्वेनप्रसिद्धोविवक्षितः वा योरित्युक्तंव्यनक्ति यथेति ३४

प्रश्नमङ्गीकृत्यप्रतिवचनमुत्थापयति श्रीभगवानिति क्वसंशयराहित्यंतत्राह मनइति कथंतर्हिमनोनिरोधोभवति तत्राह किन्त्विति अभ्यासस्वरूपंसामान्ये

## स्वामिकृतटीका।

एतत्स्फुटयति चञ्चलमिति चञ्चलंस्वभावेनैवचपलंकिञ्चप्रमाथिप्रमथन शीलंदेहेन्द्रियक्षोभकरमित्यर्थः किञ्चवलवद्विचारेणापि जेतुमशक्यं किंचदृढंवि षयवासनानुवन्धतयादुर्भेद्यंअतोयथाकाशेदोधूयमानस्यवायोःकुम्भादिषु निरोधन मशक्यं तथाहं तस्यमनसोनिग्रहं निरोधंसुदुष्करंसर्वथाकर्त्तुमशक्यंमन्ये ३४

## भाषा अनुवाद।

अर्ज्जुनकीकहीमनकोचञ्चलताअङ्गीकारकरि भगवानउसकेनिग्रहकरनेकी उपायकहतेहैं किहेमहाबाहो हांमनकीचञ्चलतारोकनाकठिन यहजोतुमकह तेहोसोनिःसन्देहठीकहै परन्तौभीहेकौन्तेय अभ्यासकेद्वारामनपरमात्माकारवृ त्तिमे विषयोंकोवैराग्यवशते निग्रहीतहोसकैहै अभ्याससेलयऔरवैराग्यसेनिक्षे प येदोनोदूरहोय यहमननिर्वृत्तिहोय अर्थात्औरविषयोंकोछोडकरपरमात्मा कारतापायकर थिरहोताहै क्योंकियोगशास्त्रमेकहाहै किवृत्तिशून्यमनकीब्रह्मा काराकारितरूपस्थितिहोतीहै उसीकोनिर्विकल्पकसमाधिकहतेहैं ३५

असंयतात्मनायोगोदुष्प्राप्यइतिमेमतिः वश्यात्मनातुयततासक्योऽवाप्तुमुपायतः ३६

## शाङ्करभाष्यं।

य:पुनरसंयतात्मातेन असंयतेति असंयतात्मनाअभ्यासवैराग्याभ्यांअसंयत आत्माअन्तःकरणं यस्यसोयमसंयतात्मातेनासंयतात्मनायोगोदुःप्रापोदुःप्राप्यइति मेमतिःयस्तुपुनर्वश्यात्माअभ्यासवैराग्याभ्यां वश्यमापादितआत्मामनोयस्यसोयंव श्यात्मातेनतुयततामूयोपिप्रयत्नंकुर्वताशक्योवाप्तुं योगउपायतोयथोक्तादुपायात् ३६

## आनन्दगिरिकृतटीका

ननिदर्शयति अभ्यासोनामेति कस्मिंश्चिच्चित्तभूमावित्यविशेषितोध्येयोविषयोनि र्दिश्यते समानप्रत्ययावृत्तिर्विजातीयप्रत्ययान्तरितेतिशेषः चित्तस्येति षष्ठीप्रत्यय स्यतद्विकारत्वद्योतनार्थं वैराग्यस्वरूपंनिरूपयति वैराग्यमिति तेष्ववैतृष्ण्यं वैराग्यंनामेतिसम्बन्धः तत्रहेतुंसूचयति दोषेति विषयेषु वितृष्णांविषयेषुदो षदर्शनमभ्यस्यते तेनवैतृष्ण्यंप्रजायते तेननिगृह्यमाणंनिर्दिशति विक्षेपेति तस्मि न्गृहीतेनिरुद्धेमनोनिरोधेऽस्यकिंस्यादित्यपेक्षायामाह एवमिति अभ्यासहेतुकवै राग्यद्वारा चित्तप्रचारनिरोधे निरुद्धवृत्तिकं मनोविषयविमुखमन्तर्निष्ठं भव तीत्यर्थः ३५

## स्वामिकृतटीका।

तदुक्तंचञ्चलादिकमङ्गीकृत्यैवमनोनिग्रहोपायंश्रीभवानुवाच असंशयमिति च ञ्चलत्वादिना मनोनिरोद्धुमशक्यमितियद्वदसिएतन्निःसंशयमेव तथापितुअभ्यासे नपरमात्माकारयावृत्त्याविषय वैतृष्ण्यंनचगृह्यतेअभ्यासेनलप्रतिबन्धाद्वैराग्येणच विक्षेपप्रतिबन्धादुपरतवृत्तिकंसत् परमात्माकारेणपरिणतंतिष्ठतीत्यर्थः तदुक्तं योगशास्त्रे मनसोवृत्तिशून्यस्यब्रह्माकारतयास्थितिः यासंप्रज्ञातनामासौसमाधिर भिधीयतइति ३५

## भाषा अनुवाद।

औरसंयतआत्माको योगप्राप्तिसुलभहै यहकहतेहैं किउक्तरीतिसेअभ्या सऔवैराग्यकेद्वारा जिसकाचित्तवशनहींहै उसकोयहयोगदुःप्राप्यहै औरजि सकाचित्तवशीभूतहै औरजोपूर्वकथितउपायसेयत्नकरताहै वहमेरेमतसेयो गप्राप्तहोसकताहै असंयतात्मावहहै जिसकाचित्तवशीभूतनहींहै ३६

अर्जुनउवाच अयतिःश्रद्धयोपेतोयोगाच्चलितमानसः अप्राप्ययोगसंसिद्धिं कांगतिंकृष्णगच्छति ३७

### शाङ्करभाष्यम्।

तत्र योगाभ्यासाङ्गीकरणेन परलोकेहलोकप्राप्तिनिमित्तानि कर्म्माणि संन्यस्तानियोगसिद्धिफलंच मोक्षसाधनं सम्यग्दर्शनं नप्राप्तमिति योगीयोगमार्गान्मरणकालेचलितचित्तइति तस्यनाशमाशंक्यार्जुनउवाच अयतिरिति अयतिरप्रयत्नवान्योगमार्गेश्रद्धयास्तिक्यबुद्ध्यायोगतोयोगादन्तकालेपिचलितं मानसं मनोयस्य सचलितमानसोभ्रष्टस्मृतिः सोऽप्राप्ययोगसंसिद्धिं योगफलं सम्यग्दर्शनं कां गतिं हेकृष्ण गच्छति ३७

### आनन्दगिरिकृतटीका

संयतात्मनोयोगप्राप्तिःसुलभेत्युक्त्वाव्यतिरेकंदर्शयति यःपुनरिति व्यतिरेकोपन्यासपरंपूर्वार्द्धमनूद्यव्याकरोति असंयतेति पूर्वोक्तान्वयव्याख्यानपरमुत्तरार्द्धंव्याचष्टे यस्त्वित्यादिना अन्तःकरणस्यस्ववशत्वेसिद्धेपिवैराग्यादावास्थावता भवितव्यमित्याह यततेति उपायवैराग्यादिपूर्व्वकोमनोनिरोधः ३६

प्रश्नान्तमुत्थापयति तत्रेत्यादिना मनोनिरोधस्यदुःखसाध्यत्वमाशंक्यपरिहृतेसति प्रष्टापुनरवकाशंप्रतिलभ्योवाचेति सम्बन्धः लोकद्वयप्रापककर्म्मसम्भवेक्त

### स्वामिकृतटीका।

एतावांस्त्विह निश्चयइत्याह असंयतेति उक्तप्रकारेणाभ्यासवैराग्याभ्यांफलसंयतआत्माचित्तंयस्यतेनयोगोदुःप्रापःप्राप्तुमशक्यः अभ्यासवैराग्याभ्यां वश्योवशवर्त्तीआत्माचित्तंयस्य तेनपुरुषेण पुनश्चानेनैवोपायेनप्रयत्नं कुर्वता योगःप्राप्तुंशक्यः ३६

### भाषाअनुवाद

अभ्यासवैराग्यकेअभावसे या औरकोईप्रकारउपायसेजिसकोतत्त्वज्ञाननभया ऐसामनुष्यकौनफलपायसकताहै औकिसगतिकोजाताहै यहप्रश्नअर्जुनकरतेहैं किहेकृष्ण जोप्रथमकपटरहितश्रद्धायुक्तहो योगमेप्रवृत्तभया परन्तुतिसपीछेयत्ननकिया अर्थात्अभ्यासमेशिथिलकहे ढीलारहा औरजिसकामनविषयमेमग्नरहाकहे विषयसेविरागनभया ऐसामनुष्ययोगसंसिद्धि जोज्ञानरूपफल तिसकोनप्राप्तहोके किसरूपगतिकोपायसकताहै अर्थात्कौनगतिकोजाताहै ३७

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिवनश्यति अप्रतिष्ठोमहाबाहोविमूढोब्रह्मणःपथि ३८

### शाङ्करभा ।

कच्चिदिति कच्चित् किंनोभयविभ्रष्टःकर्म्ममार्गात् योगमार्गाच्चविभ्रष्टःसन् छिन्नाभ्रमिवनश्यतिकिंवाननश्यति अप्रतिष्ठोनिराश्रयोहेमहाबाहोविमूढःसन्ब्रह्मप्राप्तिमार्गे ३८

### आनन्दगिरिकृतटीका ।

तोयोगिनोनाशाशङ्कत्याशंक्याह योगाभ्यासेति तथापियोगानुष्ठानपरिपाकपरिप्राप्तिसम्यग्दर्शनसामर्थ्यान्मोक्षोप्रपत्तौकृतस्तस्यनाशाशंकेति चेन्नैवमनेकान्तरायवत्त्वाद्योगस्येह जन्मनिप्रायेणसंसिद्धेरसिद्धिरित्यभिसन्धायाह योगसिद्धीति अभ्युदयनिःश्रेयसबहिर्भावीनाशोयोगमार्गेतत्फलस्यसम्यग्दर्शनादिति शेषः तर्हितद्बहिर्मुखत्वमेवात्यन्तिकंसंहत्तमित्याशंक्याह श्रद्धयेति तर्हियोगमार्गमाश्रयतेनेत्याह योगादिति मरणकालेव्याकुलेन्द्रियस्यज्ञानसाधनानुष्ठानावकाशाभावादयुक्तं ततश्चलितमानसत्वमित्याशंक्याह भ्रष्टेति गच्छतदूतिगतिःपुरुषार्थःसामान्यप्रश्नमन्तर्भाव्यविशेषप्रश्नोद्रष्टव्यः ३७

### स्वामिकृतटीका ।

अभ्यासवैराग्याभावेनकथञ्चिदप्राप्तसम्यग्ज्ञानःकिंफलंप्राप्नोतीत्यर्जुनउवाच अयतिरिति प्रथमंश्रद्धयोपेतएवयोगेप्रवृत्तःनतुमिथ्याचारतयाततःपरन्त्वयतिः सम्यक्नयततेशिथिलाभ्यासइत्यर्थः तथायोगाच्चलितं मानसंविषयप्रवणं चित्तं यस्यमन्दवैराग्यइत्यर्थः एवमभ्यासवैराग्यशैथिल्याद्योगस्यसंसिद्धिंफलं ज्ञानमप्राप्य कांगतिं प्राप्नोति ३७

### भाषा अनुवाद

पूर्व्वोक्तप्रश्नकोअभिप्रायकोविस्तारसेअर्ज्जुनकहतेहैं किनतोनिष्कामकर्म्मकरिईश्वरकोसमर्पणकिया औरनकाम्यकर्म्महींकाअनुष्ठानकिया तोस्वर्गादिफलसेभीरहितरहा औरयोगकीअसम्पन्नताकहे अपूर्णतासे मोक्षभीनमिली तोफेरिहेमहाबाहोवहअप्रतिष्ठितकहे प्रतिष्ठारहितमनुष्य दोनोओरसेभ्रष्टहोछिन्नमेघकेसमान क्यानष्टतोनहींहोजाताहै जैसे मेघदलसेभिन्नभयामेघ औरमेघकोनप्राप्तहोके अन्तरिक्षहीमेविलायजाताहै याउसकीभीकोईगतिहै ३८

एतन्मेसंशयंकृष्णछेत्तुमर्हस्यशेषतः त्वदन्यःसंशयस्यास्यछेत्तानह्युपपद्यते ३९

शाङ्करभाष्यं

एतदिति एतन्मेममसंशयंकृष्णछेत्तुमपनेतुमर्हसि अशेषतःत्वदन्यःत्वत्तोऽन्यःऋषिर्देवोवाछेत्तानाशयिता संशयस्यास्य नहि यस्मादुपपद्यते नसम्भवतिअतस्त्वमेव छेत्तुमर्हसीत्यर्थः ३९

आनन्दगिरिकृतटीका

प्रश्नमेवविवृणोति कच्चिदिति प्रशस्तप्रश्नार्थत्वंकच्चिदित्यस्याङ्गीकृत्यव्याचष्टे किमिति उभयविभ्रष्टत्वंस्पष्टयति कर्म्मेत्यादिना वायुनाछिन्नंविशकलितमभ्रं यथानश्यति तद्वदित्याह छिन्नेति नाशाशङ्कानिमित्तमाह निराश्रयइति कर्म्ममार्गस्यापावृत्ताभावेपिज्ञानमार्गोवष्टम्भस्तस्यभविष्यतीत्याशंक्याह विमूढःसन्निति नहिकर्म्मिणांप्रतीयमाशङ्कायुक्ताभिलापंत्यक्त्वेश्वरेसमर्प्यवाक्कर्म्मानुतिष्ठतोनिरूपचारेणतद्भ्रंशवचनासम्भवात् सर्व्वकर्म्मसंन्यासिनस्तुविहितानांत्यागात् ज्ञातोपायाच्चविच्युतेरनर्थप्राप्तिशङ्कायुक्तेति भावः ३८

यथोपदर्शितसंशयापाकरणार्थमर्जुनोभगवन्तं प्रेरयन्नाह एतदिति मत्तोन्यःकश्चिदृषिर्व्वादेवोवात्वदीयंसंशयंछेत्स्यतीत्याशंक्याह त्वदन्यइति अन्यस्यसंशयच्छेत्तुरभावेफलितमाह अतइति ३९

स्वामिकृतटीका

प्रश्नाभिप्रायंविवृणोति कच्चिदिति कर्म्मणामीश्वरेऽर्पितत्वादननुष्ठानाच्चतावत्कर्म्मफलंस्वर्गादिकंनप्राप्नोति योगानिष्पत्तेश्चमोक्षंनप्राप्नोति एवमुभयस्माद्भ्रष्टःअप्रतिष्ठोनिराश्रयःअतएवब्रह्मप्राप्त्युपायेपथिमार्गेविमूढःसन्कच्चित्किंननश्यति किम्वानश्यतीत्यर्थः नाशेदृष्टान्तःयथाछिन्नमभ्रंपूर्व्वस्मादभ्राद्विश्लिष्टमभ्रान्तरमप्राप्तंसन्मध्यएवविलीयते तद्वदित्यर्थः ३८

भाषाअनुवाद।

जिससेआपसर्व्वज्ञहौ इससेआपकोछोडऔरकोई इसहमारीसंशयकादूरकरनेवालानहींहै अर्जुनयहीकहतेहैं किहेकृष्णमेरीइससन्देहकोआपछेदनकरनेयोग्यहौ औरआपकेविनादूसरादूसन्देहकानिवृत्तिकर्त्तानहींहै सोइससन्देहकोकृपाकरमेरेमनसेदूरकरौ ३९

श्रीभगवानुवाच पार्थनैवेह नामुत्रविनाशस्तस्यविद्यते नहि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ४०

## शाङ्करभाष्यं

पार्थेति हेपार्थनैवइहलोकेनामुत्रपरस्मिन्वालोकेविनाशस्तस्यविद्यते नास्ति नाशोनामपूर्व्वस्माद्धीनजन्मप्राप्तिः स तस्ययोगभ्रष्टस्यनास्तिनहियस्मात्कारणात् कल्याणकृत् शुभकृत्कश्चिद्दुर्गतिं कुत्सितां गतिं हेतात तनोत्यात्मानं पुत्ररूपेणे ति पिता तातउच्यते पितैवपुत्रइति पुत्रोपि तातउच्यते शिष्योपिपुत्रतुल्यउच्यते यतोनगच्छति ४०

## आनन्दगिरिकृतटीका।

योगिनोनाशाशङ्कां परिहरन्नुत्तरमाह भगवानिति यदुक्तमुभयभ्रष्टोयो गीनश्यतीति तत्राह पार्थेति तत्रहेतुमाह नहीति योगिनोमार्गद्वयाद्विभ्रष्टस्ये हिकोनाशःशिष्टगर्हालक्षणोनभवतीति श्रद्धादेःसद्भावात्तथापिकथमामुष्मिकना शशून्यत्वमित्याशंक्यतद्रूपनिरूपणपूर्व्वकंतदभावंप्रतिजानीते नाशोनामेति तत्रहे तुमागंविभजते नहीत्यादिना उभयभ्रष्टस्यापिश्रद्धेन्द्रियसंयमादेःसामिकृतश्रव णादेश्चभावादुपपन्नंशुभकृत्त्वं ताततेतिकथंपुत्रस्थानीयःशिष्यःसम्बोध्यते पितुर्देवता तशब्दत्वादित्याशंक्याह तनोतीति तेनपुत्रस्थानीयस्यशिष्यस्यताततेति सम्बोधनमवि रुद्धमित्यर्थः नगच्छतिकुत्सितां गतिं कल्याणकरत्वादिति नाशाभावः ४०

## स्वामिकृतटीका।

त्वयैवसर्वज्ञेनायं ममसन्देहोनिरसनीयःत्वत्तोऽन्यस्तुएतत्सन्देहनिवर्त्तकोना स्तीत्याह एतदिति एतत् एतत्क्षेत्तानिवर्त्तकः स्पष्टमन्यत् ३९

अत्रोत्तरं श्रीभगवानुवाच पार्थेति सार्द्धैश्चतुर्भिः इहलोकेनाशउभयभ्रंशात्

## भाषा अनुवाद।

अर्जुनकीइसप्रश्नकाउत्तर श्रीभगवानसाढेचारिश्लोकसेकहतेहैं किहेपा र्थ उसअधूरेयोगाभ्यासीकोयोगभ्रष्टहोनेसे यहलोकनाशकहे इसलोकमेपातक औरपरलोकमेनरकप्राप्ति येदोनोनहींहोतेहैं जिसहेतुकिसीकल्याणकृतकहे शुभआचरणकरनेवालापुरुष तातकहे हेभाईअर्जुन दुर्गतिकोनहींप्राप्तहोताहै तातशब्दसेलोकरीतिदेखावतेभये भगवानस्नेहपूर्बकअर्जुनकोसम्बोधनकरिक हाहै तातकाअर्थपिताऔपुत्रहै और शिष्यभी पुत्रकेतुल्यहै ४०

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः शुचीनां श्रीमतां गेहे योग
भ्रष्टोऽभिजायते ४१

शाङ्करभाष्यं

किन्त्वस्य भवति प्राप्येति योगमार्गेषु प्रवृत्त संन्यासीसामर्थ्यात् प्राप्यगत्वापु
ण्यकृतामश्वमेधादियाजिनां लोकांस्तत्रचउषित्वावासमनुभूयशाश्वतीर्नित्याःसमाः
सम्वत्सरान्तद्भोगक्षयेशुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहेगृहेयो
गभ्रष्टोऽभिजायते ४१

अथेति अथवाश्रीमतांकुलादन्यस्मिन्योगिनामेव दरिद्राणां कुलेभवति जा
यते धीमतांबुद्धिमतां एतद्धिजन्म यद्दरिद्राणांयोगिनांकुलेदुर्लभतरंदुःखेनलभ्यत
रंपूर्वमपेक्ष्यलोकेजन्मयदीदृशं यथोक्तविशेषणेकुलेयस्मात् ४२

आनन्दगिरिकृतटीका।

योगभ्रष्टस्यलोकद्वयेपि नाशाभावेकिंभवतीति पृच्छत किं त्विति तत्रस्तोके
नोत्तरमाह प्राप्येति कथंसंन्यासीति विशेष्यते तत्राह सामर्थ्यादिति कर्माणि
व्यापृतस्यकर्मिणोयोगमार्गप्रवृत्त्यनुपपत्तिस्तत्प्रवृत्तावपि फलाभिलाषविकलस्येश्वरे
समर्पितसर्वकर्मणस्तद्भ्रंशाशङ्कानवकाशादित्यर्थः समानां नित्यत्वंमानुषसमावि
लक्षत्वं वैराग्याभावविवक्षयाविभूतिमतां गृहे जन्मेति विशिष्यते ४१

स्वामिकृतटीका

पातित्यंअमुत्रपरलोकेनाशोनरकप्राप्तिस्तदुभयं तस्यनास्तेयवयतःकल्याणकृत्शुभ
कारीकश्चिदपिदुर्गतिंनगच्छति अयञ्चशुभकारी श्रद्धयायोगेप्रवृत्तत्वात्ताते ति
लोकरीत्याउपलालयन् सम्बोधयति ४०

तर्हिकिमसौप्राप्नोतीत्यपेक्षायामाह प्राप्येति पुण्यकारिणामश्वमेधादियाजि
नांल्लोकान्प्राप्यतत्रशाश्वती समं बह्वन् संवत्सरानुषित्वा वाससुखमनुभूयशुचीनां
सदाचाराणां श्रीमतां धनिनां गेहे सयोगभ्रष्टोजन्मप्राप्नोति ४१

भाषा अनुवाद।

तोफेरिवेयोगभ्रष्टलोगकिमगतिकोजातेहैं इसअपेक्षापरकहतेहैं किजि
सस्वर्गआदिलोकको अश्वमेधआदियज्ञकरिके मनुष्यजातेहैं पुण्यकर्मकारीयो
गभ्रष्टपुरुषभी उसीउत्तमलोकमेंजायकर बहुतवरसतकतहांवसि सुखभोगक
रिके फेरिसत्कर्मकारीधनीलोगोंकेघरमें आयजन्मग्रहणकरतेहैं ४१

अथवायोगिनामेवकुलेभवतिधीमतां एतद्धिदुर्लभतरंलोकेजन्मयदीदृशं ४२
तत्रतंबुद्धिसंयोगंलभतेपौर्व्वदैहिकं यततेचततोभूयःसंसिद्धौकुरुनन्दन ४३

शाङ्करभाष्यं।

तत्रेति तत्रयोगिनांकुलेतंबुद्धिसंयोगं बुद्ध्यासंयोगं बुद्धिसंयोगं लभतेपौर्व्वदैहिकंपूर्व्वस्मिन्देहेभवंपौर्व्वदैहिकंयततेच यत्नंकरोति ततस्तस्मात् पूर्व्वकृतात् संस्काराद्भूयोवहुतरंसंसिद्धिनिमित्तंहेकुरुनन्दन ४३

आनन्दगिरिकृतटीका

श्रद्धावैरग्यादिकल्याणाधिक्ये पचान्तरमाह अथवेति योगिनामिति कर्म्मिणांग्रहणंमाभूदिति विशिनष्टि धीमतामिति ब्रह्मविद्यावतां शुचीनां दरिद्राणां कुलेजन्मदुर्लभंप्रमादकारणाभावादित्याह एतद्धीति किमपेच्याखजन्मनोदुःखलभ्यादपि दुःखलभ्यतरत्वंतदाह पूर्व्वमिति यद्यपिविभूतिमतां शुचीनांगृहेजन्मदुःखलभ्यंतथापितदपेक्षयाइदंजन्मदुःखलभ्यतरं यदीदृशंशुचीनां दरिद्राणां विद्यावतामिति विशेषणोपेतेकुले लोकेजन्मलक्षणमित्यर्थः यदुक्तमतरं जन्मोक्तंतस्योत्तमत्वेहेत्वन्तरमाह यस्मादिति ४२

स्वामिकृतटीका।

अल्पंकालाभ्यस्तयोगभ्रंशेगतिविशेषमुक्त्वा चिराभ्यस्तयोगभ्रंशेपचान्तरमाह अथवेति योगनिष्ठानां धीमतां ज्ञानिनामेवकुलेजायते ननुपूर्व्वोक्तानामनारूढयोगानांकुलेएतज्जन्मस्तीति ईदृशंजन्म एतद्धिलोकेदुर्लभतरंमोक्षहेतुत्वात् ४२

भाषा अनुवाद।

थोड़ेदिनयोगाभ्यासकरिकेयोगसेभ्रष्टहुयेपुरुषकीगतिकहिचुके अववहुतकालअभ्यासकरकेभ्रष्टहुये योगीकीगतिकहतेहैं किअथवासतपात्रधनियोंकेघरजन्मलेनेसे औरजोदरिद्रवुद्धिमानयोगाभ्यासियोंकेकुलमेजन्मग्रहण सोउत्तमहै ऐसाजन्मलोकमेंअतिदुर्लभहै सोचिरकालयोगाभ्यासीयोगभ्रष्टहोय ऐसेहीघरमेउत्पन्नहोतेहैं ४२

सोईजन्मग्रहणकेवादिक्याहोताहै यह डेढश्लोकसेकहतेहैं किहेकुरुनन्दन तेईदोनोप्रकारकेयोगभ्रष्टलोग जन्मधारणकरिकेभी पूर्व्वदेहकेअभ्याससे ब्रह्मविषयकबुद्धिसंयोगयुक्तहोतेहैं औरफेरिभी मोक्षकीसिद्धिकेलियेअधिकयत्नकरतेहैं ४३

पूर्व्वाभ्यासेनतेनैवह्रियतेह्यवशोऽपिसः जिज्ञासुरपियोगस्यशब्दब्रह्मातिवर्त्तते ४४

## शाङ्करभाष्यं।

कथंभूतंपूर्व्वदेहबुद्धिसंयोगंइति तदुच्यते पूर्व्वेति यःपूर्व्वजन्मनिकृतोऽभ्यासः सपूर्व्वाभ्यासस्तेनैवबलवताह्रियतेसंसिद्धौ हियस्मादवशोपिसःयोगभ्रष्टःनकृतंचेत् योगाभ्यासजात् संस्कारात् बलवत्तरमधर्मादिलक्षणंकर्मतदायोगाभ्यासजनितेनसंस्कारेणह्रियतेऽधर्मश्चेद्बलवत्तरःकृतस्तेनयोगजोपिसंस्कारोऽभिभूयतएवतत्क्षयेतुयोगजःसंस्कारःस्वयमेवकार्य्यमारभते नदीर्घकालस्थस्यापिविनाशस्तस्यास्तीत्यतोजिज्ञासुरपियोगस्यस्वरूपंज्ञातुमिच्छन् योगमार्गेप्रवृत्तःसंन्यासीयोगभ्रष्टःसामर्थ्यात् सोपिशब्दब्रह्मवेदोक्तकर्मानुष्ठानफलमतिवर्त्तते कर्मानुष्ठानलक्षणमतिक्रामति अपाकरिष्यति किमुतबुद्ध्वायोयोगंतन्निष्ठोभ्यासंकुर्य्यात् ४४

## आनन्दगिरिकृतटीका

बुद्ध्येत्यात्मविषयेतिशेषः पूर्व्वस्मिन्देहेभवंतत्रानुष्ठितसाधनविशेषयुक्तमित्यर्थः तर्हि यथोक्तजन्मनिसाधनानुष्ठानमन्तरेणैवबुद्धिसम्बन्धः स्यादित्याशंक्याह यततेचेति प्रयत्नःश्रवणाद्यनुष्ठानविषयः ४३

## स्वामिकृतटीका।

ततःकिमतआह तत्रेति सार्द्धेन सतत्रद्विप्रकारेऽपिजन्मनिपूर्व्वदेहभवंपौर्व्वदैहिकं तमेवब्रह्मविषययाबुद्ध्या संयोगंलभते ततश्चभूयोऽधिकंसंसिद्धौमोक्षेप्रयत्नं करोति ४३

## भाषा अनुवाद।

वहपूर्व्वदेहकाबुद्धिसंस्कारकैसाहै औरउसकाकारणयहहै किसोईपूर्व्वदेहकीअभ्याससेअवशअर्थात् जोकोईकारणयाविभवलते इच्छानभोहोय तौभीमोक्षसिद्धिकेअर्थ पूर्व्वसंस्कारकेजोरसेअवशकीनाई यत्नकरते हैं अर्थात् विषयोंसेविमुखहोब्रह्मनिरतहोंतेहैं औरइसतरहपूर्व्वअभ्यासकेकारणसेमुक्तिकेअर्थ यत्नकारीमनुष्यजिसक्रमसेमुक्तहोतेहैं सो कैमुतिकन्यायसे डेढ़श्लोककेद्वाराकहतेहैं कि जिज्ञासूकहेयोगस्वरूपजाननेकीइच्छाकरनेवाला कुछकेवलयोगहीजोनहींप्राप्तहोता किन्तुयोगप्रविष्टमनुष्यपापवशते योगभ्रष्टहोयभीशब्दब्रह्मजोवेदतिसको अतिवर्त्तनकरता अर्थात् वेदोक्तफलकीअपेक्षा अधिकफलप्राप्तहोयकेफेरमुक्तहोताहै इतनाहीं नहीं इससेभीअधिक इसीको कैमुतिकन्यायकहतेहैं ४४

## शाङ्करभाष्यं।

कुतश्चयोगित्वंश्रेयइति प्रयत्नादिति प्रयत्नात् प्रयतमानादधिकतरंयतमानइत्यर्थः तत्रयोगीविद्वान्संशुद्धकिल्विषोविशुद्धकिल्विषः संशुद्धपापोऽनेकेषुजन्मसुकिञ्चित् किञ्चित् संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेनसंसिद्धोऽनेकजन्मसंसिद्धः ततोलब्धसम्यग्दर्शनःसन् यातिपरांप्रकृष्टांगतिं ४५

## आनन्दगिरिकृतटीका

यदिपूर्व्वसंस्कारोऽस्येच्छामुपनयन्प्रवर्त्तयति तथाचाप्रवृत्तिरनिच्छयास्यादित्याशंक्याह पूर्व्वेति सहियोगभ्रष्टःसमनन्तरजन्मकृतसंस्कारवशादुत्तरस्मिन्जन्मनि अनिच्छन्नपियोगंप्रत्येवाकृष्टोभवतीत्यर्थः तत्रकैमुतिकन्यायंसूचयति जिज्ञासुरिति पूर्व्वार्द्धंविभजते पूर्व्वेति तस्मान्नेच्छयातस्यप्रवृत्तिरिति शेषः योगभ्रष्टस्याधर्मादिप्रतिबन्धेपितर्हिपूर्व्वाभ्यासवशाद्बुद्धिसम्बन्धःस्यादित्याशंक्याह नेत्यादिना यदियोगभ्रष्टेनयोगाभ्यासजनितसंस्कारप्राबल्यात्प्रबलतरधर्मप्रभेदरूपंकर्मनकृतंस्यात्तदातेनसंस्कारेणवशीकृतःसन्निच्छादिरहितोऽपि बुद्धिसम्बन्धभाग्भवतीत्यर्थः विपक्षेयोगसंस्कारस्याभिभूतत्वान्नकार्यारम्भकत्वमित्याह अधर्मश्चेदिति योगजसंस्कारस्याधर्माभिभूतस्यकार्यमकृत्वैवाभिभावकप्राबल्येप्रणाशःस्यादित्याशंक्याह तत्क्षयेत्विति कालव्यवधानान्निवृत्तिंशाङ्कित्वोक्तंनेति दृष्टान्तलौकाद्दृष्टान्तस्य त्यासंस्कारस्यदीर्घतायाःसमधिगतत्वादिति भावः कैमुतिकन्यायोक्तिपरमुत्तरार्द्धं विभजते जिज्ञासुरपीत्यादिना अत्रापिसंन्यासीति विशेषणंपूर्व्ववदवधेयमित्याह सामर्थ्यादिति नहिकर्म्मीकर्ममार्गेप्रवृत्तस्ततोभ्रष्टःशङ्कितुंशक्यते अतःसंन्यासोपूर्व्वोक्तैर्विशेषणैर्विशिष्टोयोगभ्रष्टोऽभीष्टः सोपिवैदिकंकर्मततफलञ्चातिवर्त्तते किमुतयोगंबुद्ध्वातन्निष्ठःसदाभ्यासंकुर्व्वन्कर्मतत्फलञ्चातिवर्त्तते किमितिवक्तव्यमिति योजना योगनिष्ठस्यकर्मततफलातिवर्त्तनंततोधिकफलावाप्तिर्विवक्ष्यते ४४

## स्वामिकृतटीका।

तत्रहेतुः पूर्व्वेति तेनैवपूर्व्वदेहकृताभ्यासेनावशोऽपिकुतश्चिदन्तरायादनिच्छन्नपिसक्रियते विषयेभ्यःपरावृत्त्य ब्रह्मनिष्ठःक्रियते तदेवंपूर्व्वाभ्यासवशेनप्रयत्नंकुर्व्वन्शनैर्मुच्यतइतीममर्थंकैमुत्यन्यायेनस्पष्टयति जिज्ञासुरिति सार्द्धेन योगस्यस्वरूपं जिज्ञासुरेवकेवलंनतुप्राप्तयोगःएवंभूतोयोगेप्रविष्टमात्रोऽपिपापवशाद्योगभ्रष्टोऽपिशब्दब्रह्मवेदमतिवर्त्तते वेदोक्तकर्मफलान्यतिक्रामति तेभ्योऽधिकंफलंप्राप्य मुच्यतइत्यर्थः ४३

प्रयत्नात्यतमानस्तु योगी संशुद्धकिल्बिषः अनेकजन्मसंसिद्धस्ततो याति परां गतिं ४५

## शाङ्करभाष्यं ।

तस्मादेवं तस्मात् तपस्विभ्य इति तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि ज्ञानमत्र शास्त्रार्थपाण्डित्यं न तद्‌भ्योऽपि मतो ज्ञातोऽधिकः श्रेष्ठः इति कर्मिभ्योऽग्निहोत्रादि कर्मिभ्यः अधिको योगी विशिष्टः तस्माद्योगी भवार्जुन ४६

## आनन्दगिरिकृतटीका ।

योगनिष्ठस्य श्रेष्ठत्वे हेत्वन्तरं वक्तुं उत्तरश्लोकमवतारयति कुतश्चेति मृदुप्रयत्नोपि क्रमेण मोक्षं तेचेदधिकप्रयत्नस्य तस्य मोक्षहेतोः किंचित्करत्वमित्याशंक्य हेत्वन्तरमेव प्रकटयति प्रयत्नादिति तत्र योगविषये प्रयत्नातिरेके सतीत्यर्थः ततः सञ्चितसंस्कारसमुदायादिति यावत् समुत्पन्नसम्यग्दर्शनवशात् प्रकृष्टा गतिः सन्न्यासिनां लभ्यते तेन शीघ्रं मुक्तिमिच्छन्नधिकप्रयत्नो भवेदल्पप्रयत्नस्तु चिरेणैव मुक्तिभागित्यर्थः ४५

सम्यग्ज्ञानद्वारा मोक्षहेतुत्वं योगस्योक्तमनूद्य योगिनः सर्वाधिकत्वमाह यस्मादिति योगस्य सर्वस्मादुत्कर्षादवश्यकर्त्तव्यत्वाय योगिनः सर्वाधिक्यं साधयति तपस्विभ्य इति योगिनो ज्ञानिनश्च पर्य्यायत्वात् कथं तस्य ज्ञानिभ्योऽधिकत्वमित्याशंक्याह ज्ञानमिति योगिनः सर्वाधिकत्वे फलितमाह तस्मादिति ४६

रुद्रादित्यो विराडात्मा सूत्रं कारणमक्षरमित्येतेषामुपासका भूयांसो योगिनो गम्यन्ते तेषां कतमः श्रेयानित्यपेक्षायामाह योगिनामिति यो भगवन्तं सगुणं निर्गुणं वा यथोक्तेन चेतसा श्रद्दधानः सन्ननवरतमनुसन्धत्ते स युक्तानां मध्येऽतिशयेन युक्तः श्रेयान्

## स्वामिकृतटीका ।

यदैवं मन्दप्रयत्नोऽपि योगी परां गतिं याति तदा यस्तु योगी प्रयत्नादुत्तरोत्तरमधिकं योगे यतमानो यत्नं कुर्वन् योगेनैव संशुद्धकिल्बिषो विधूतपापः सोऽनेकेषु जन्मसु उपचितेन योगेन संसिद्धः सम्यग्ज्ञानी भूत्वा ततः श्रेष्ठां गतिं यातीति किम्वक्तव्यमित्यर्थः ४५

## भाषा अनुवाद ।

जिसहेतु मन्दयत्नकारी योगी श्रेष्ठगतिको प्राप्त होतेहैं तो उत्तरोत्तर योगमें जो अधिक यत्न करते वे योगसे निःपाप हो अनेकजन्मसंसिद्ध अर्थात् सम्यक्ज्ञानी होय श्रेष्ठ गति पावेंगे इसमें और कुछ कहना या सन्देह क्या बाकी है सो ई कहा कि अच्छी तरहसे यत्न करता योगी संशुद्धकिल्बिष निःपाप अनेकजन्मसंसिद्ध होय फेरि परमगतिको याताहै ४५

तपस्विभ्योऽधिकोयोगी ज्ञानिभ्योऽपिमतोऽधिकः कर्मिभ्यश्चाधिकोयोगी तस्माद्योगी भवार्जुन ४६ योगिनामपिसर्व्वेषांमद्गतेनान्तरात्मना श्रद्धावान्भजतेयोमांसमेयुक्ततमोमतः ४७ इति श्रीभगवद्गीतायांध्यानयोगोनामषष्ठोऽध्यायः ६

शाङ्करभाष्यं।

योगिनामिति योगिनामपिसर्व्वेषांरुद्रादिध्यानपराणांमध्येमद्गतेनमयिवासुदेवेसमाहितेनान्तरात्मनान्तःकरणेनश्रद्धावान्श्रद्दधानःसन्भजते सेवते योमांसमेसमयुक्ततमोऽतिशयेनयुक्तोमतोऽभिप्रेतइति४७ इति श्रीभगवद्गीताभाष्येषष्ठोध्यायः६

आनन्दगिरिकृतटीका।

नीश्वरस्याभिप्रेतःनहितदीयोभिप्रायोन्यथाभवितुमर्हतीत्यर्थः तदनेनाध्यायेनकर्मयोगस्यसंन्यासहेतोर्मर्य्यादांदर्शयतासाङ्ख्ययोगंबिदृणुवतामनोनिग्रहोपायोपदेशेनयोगभ्रष्टस्यात्यन्तिकनाशशङ्कान्शिथिलयतात्वंपदार्थाभिज्ञस्यज्ञाननिष्ठत्वोतयावाक्यार्थज्ञानान्मुक्तिरितिसाधितं ४७ इति आनन्दगिरिकृतटीकायांषष्ठोऽध्यायः

स्वामिकृतटीका।

यस्मादेवंतस्मात्तपस्विभ्यइति कृच्छ्रचान्द्रायणादितपोनिष्ठेभ्योऽपिज्ञानिभ्यःशास्त्रविज्ञानवद्भ्योऽपिकर्म्मिभ्यइष्टापूर्त्तादिकर्मकारिभ्योपियोगिश्रेष्ठोममाभिमतःतस्मात्त्वंयोगीभव ४६ योगिनामपियमनियमादिपराणांमध्येमद्भक्तःश्रेष्ठइत्याह योगिनामपीति मद्गतेनमय्यासक्तेनान्तरात्मनामनसायोमांपरमेश्वरंश्रद्धायुक्तःसन्भजते सयोगयुक्तेभ्यःश्रेष्ठोममसम्मतः अतोमद्भक्तोभवेति भावः आत्मयोगमवोचद्योभक्तियोगशिरोमणिं तंवन्देपरमानन्दंमाधवंभक्तसेवधिं ४७ इति षष्ठोऽध्यायः ६

भाषा अनुवाद।

जिसकारणसेऐसाहै किकृच्छ्रचान्द्रायणआदितपमेंनिरतऔशास्त्रसेजो ज्ञानी इनसेभीयोगीअधिकहै तथायज्ञकुवांतालवागदानकर्मकारीजोकर्मीतिससेभीअधिकहै हमारेमतमेयोगी इससेहेअर्जुनतुमयोगीहोउ ४६ योगियोंके मध्यअर्थात् यमनियमपरायणलोगोंकेबीचमेंमेराभक्तहीश्रेष्ठहै यहकहते हैं किमैंजोपरमेश्वर सोमद्गतअर्थात् मेरेमेंमनलगयश्रद्धासेजोहमकोभजैहै मेरेमतसे सोईश्रेष्ठइससेअर्ज्जुनतुममेरेभक्तहोउ॥ श्रीधरस्वामीप्रभुकोप्रणामकरतेहैं किपरमानन्दभक्तसेवितलक्ष्मीपतिकोमैंवन्दनाकरताहूं जिसनेभक्तियोगशिरोमणिरूपआत्मयोगउपदेशकियाहै ४७ इति मनभावनीटीकायांषष्ठोध्यायः ६

श्रीमद्भगवद्गीता

सप्तमोऽध्यायः



श्रीभगवानुवाच । मय्यासक्तमनाः पार्थ योगंयुञ्जन्मदाश्रयः । असंशयं समग्रं मां यथाज्ञास्यसितच्छृणु ॥ १ ॥

शाङ्करभाष्यं ।

योगिनामपिसर्व्वेषांमद्गतेनान्तरात्मनाश्रद्धवान्भजते योमांसमेयुक्ततमोमत इति प्रश्नबीजमुपन्यस्यस्वयमेवईदृशंमदीयंतत्त्वमेवंमद्गतान्तरात्मा स्यादित्येतद्विवक्षुर्भगवानुवाच मयीति मयिवक्ष्यमाणविशेषणेपरमेश्वरेआसक्तंमनोयस्यसमय्यासक्तमनाःहेपार्थ योगंयुञ्जन्मनःसमाधानंकुर्व्वन्मदाश्रयोऽहमेवपरमेश्वरआश्रयोयस्यसमदाश्रयोयोहिकश्चित्पुरुषार्थेनकेनचिदर्थीभवतिस तत्साधनंकर्म्माग्निहोत्रादितपोदानंवाकिञ्चिदाश्रयंप्रतिपद्यतेअयन्तुयोगीमामेवाश्रयं प्रतिपद्यतेहित्वान्यत्साधनान्तरंमय्येवासक्तमनाःभवतियस्त्वमेवम्भूतःसन्असंशयंसमग्रं समस्तं विभूतिबलशक्त्यैश्वर्य्यादिगुणसम्पन्नं मांयथायेनप्रकारेणज्ञास्यसिसंशयमन्तरेणैवमेवभगवानिति तच्छृणूच्यमानंमया १

आनन्दगिरिकृतटीका ।

कर्म्मसंन्यासात्मकसाधनप्रधानंत्वंपदार्थप्रधानञ्चाद्यप्रथमषट्कंव्याख्याय मध्यमषट्कमुपास्यनिष्ठंतत्पदार्थनिष्ठंवा व्याख्यातुमारभमानः समनन्तराध्यायमवतार

भाषाअनुवाद

अबइसअध्यायमे भजनीयईश्वरकास्वरूपकहतेहैं किजोपूर्व्वअध्यायकेअन्तमेकहा किमद्गतात्मकहोयजोमेरीभजनकरैहै सोउत्तमहै इसपरजोकहोकि सोभगवानकैसेहैं जिनकीभक्तिकरनाचाहिये इसअभिप्रायपर अपनेस्वरूपकानिरूपणकरनेकेअर्थश्रीकृष्णअर्ज्जुनसेकहतेहैं किहेअर्जुन मेरेमे जिसकामनलगाहै औरमैहीहौंअवलम्बजिसके ऐसाअनन्यशरणागतहोय योगाभ्यासकरनेकेअनन्तर संशयरहित समग्रकहेविभूतिबलऐश्वर्यसहित मेरेरूपकोजैसे जानिसकैगा सोईमेरेवचन तुमश्रवणकरो १

अग्निर्ज्योतिरहः शुक्लःषण्मासाउत्तरायणं तत्रप्रयातागच्छन्तिब्रह्मब्रह्म विदोजनाः २४

## शाङ्करभाष्यं।

तंकालमाह अग्निर्ज्योतिरिति अग्निःकालाभिमानिनीदेवतातथाज्योतिर्देवतै वकालाभिमानिनी अथवाग्निज्योतिषीयथाश्रुतेएवदेवते भूयसान्तुनिर्देशोयत्र कालेतंकालमिति आम्रवनवत् तथाहर्देवताहरभिमानिनीशुक्लपक्षदेवतातथाषण् मासाउत्तरायणं तत्रापिदेवतैवमार्गभूतेतिस्थितोन्यत्रन्यायस्तत्रस्मिन्मार्गेप्रयाताम् तागच्छन्तिब्रह्मब्रह्मविदोब्रह्मोपासकाःब्रह्मोपासनपराजनाःक्रमेणेति वाक्यशेषोन हिसद्योमुक्तिभाजांसम्यग्दर्शननिष्ठानांगतिर्वाक्वचिदस्तिनतस्यप्राणाउत्क्रामन्तीति श्रुतेःब्रह्मसंलीनप्राणाएवतेब्रह्ममयाब्रह्मभूताएवते २४

## आनन्दगिरिकृतटीका

भिमानिन्योदेवताःकालशब्देनोच्यन्ते कालाभिमानिनीनांभूयस्त्वात् कालशब्देनस र्वासांदेवतानामुपलक्षणत्वंविवक्षित्वाकालकथनमित्यर्थःयथाम्राणांभूयस्त्वाद्विद्यमाने ष्वपिवृक्षान्तरेषुआम्रैरेववनंनिर्दिश्यते तद्वदित्युदाहरणमाह आम्रेति ननुभोगचि ह्नानांभोगभूमीनांवातत्तच्छब्दैरुपादानसम्भवेकिमिति देवताग्रहणमित्याशंक्याति वाहिकास्तल्लिङ्गादितिन्यायेनोत्तरमाह इतिस्थितइति तेषांअग्न्यादीनांसमी पमितिसामीप्ये तत्रेतिसप्तमी ब्रह्मकार्योपाधिकंपरंवाब्रह्मपरम्परयास्तुत्यालम्बन मतएवक्रमेणेत्युक्तानिर्गुणमप्रपञ्चंब्रह्मास्मीति विद्यावतोव्यवच्छिनत्ति ब्रह्मोपासने ति ननुब्रह्मशब्दस्यमुख्यार्थत्वार्थंपरब्रह्मविदामेवेयंगतिरुच्यते नवादर्थ्यधिकरण विरोधादित्याह नहीति २४

## स्वामिकृतटीका।

तत्रानावृत्तिमार्गमाह अग्निरिति अग्निज्योतिःशब्दाभ्यांतेऽर्चिषमभिसन्धवन्ती

## भाषा अनुवाद

औरजिसमार्गमेंप्रयाणकरिके फेरिनहींसंसारगतिकोप्राप्तहोतेहैं सोइमा र्गकहते हैं किअर्चिअभिमानिनीअर्थात् अग्नि या ज्योतिरूपऔरअहकहेदिन औशुक्लपक्षतथाउत्तरायणजोछमासऔर संवत्सरइनसबकीअभिमानिनीदेवताइ हांलेतेहैं यथाप्रथमज्योतिमेंप्रवेशकरिफेरिदिनमेंदिनसेंपक्षमेंपक्षसेउत्तरायणछ महींमेंउससेसंवत्सरमें संवत्सरसेदेवलोकमेंप्राप्तहोयफेरिभगवतउपासकब्रह्मज्ञ होयसाक्षात् ब्रह्मस्वरूपहोतेहैं निष्कामकर्मकारी इसगतिसेजाते हैं २४

धूमोरात्रिस्तथाकृष्णःषण्मासादक्षिणायनं तत्रचान्द्रमसंज्योतिर्योगीप्राप्यनिवर्त्तते २५

## शाङ्करभाष्यं।

धूमइति धूमोरात्रिःधूमाभिमानिनीरात्र्यभिमानिनीचदेवतातथाकृष्णःकृष्णपक्षदेवताषण्मासादक्षिणायनमितिचपूर्ववद्देवतैव तत्रचन्द्रमसिभवंचान्द्रमसंज्योतिस्तत्फलंइष्टादिकारीयोगीकर्म्मीप्राप्यभुक्त्वातत्क्षयादिहनिवर्त्तते पुनः २५

## आनन्दगिरिकृतटीका।

प्रकृतंदेवयानंप्रस्तावंस्तोतुंपितृयानमुपन्यस्यति धूमइति तत्रापिमार्गचिह्नानिभोगभूमीश्चव्यवच्छिद्यआतिवाहिकदेवताविषयत्वंधूमादिपदानांविभजते धूमेत्यादिना तत्रेतिसप्तमीपूर्ववदेवसामीप्यार्था इष्टादीत्यादिशब्देनपूर्त्तदत्तेगृह्येते कृतात्ययेऽनुशयवानितिन्यायंसूचयति तत्क्षयादिति आरोहावरोहयोरभ्यासवाचिना पुनःशब्देन संसारस्यानादित्वंसूच्यते २५

## स्वामिकृतटीका

तिश्रुत्युक्तार्च्चिरभिमानिनीदेवतोपलक्ष्यते अहरिति दिवसाभिमानिनी शुक्लइति शुक्लपक्षाभिमानिनीउत्तरायणरूपाःषण्मासाइत्युत्तरायणाभिमानिनीएतच्चान्यासामपि श्रुत्युक्तानांसम्वत्सरदेवलोकादिदेवतानामुपलक्षणार्थं एवंभूतयोमार्गस्तत्रप्रयातागताभवदुपासकाजनाब्रह्मप्राप्नुवन्ति यतस्तेब्रह्मविदः तथाचश्रुतिः तेऽर्च्चिषमभिसम्भवन्तिअर्च्चिषोऽहरह्नआपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङादित्यएतिमासेभ्योदेवलोकमिति २४

आवृत्तिमार्गमाह धूमइति धूमाभिमानिनीदेवतारात्रिशब्देनपूर्ववदेवरात्रिकृष्णपक्षदक्षिणायनरूपषण्मासाभिमानिन्यस्तिस्रोदेवताउपलक्ष्यन्ते एताभिरुपलक्षितोयोमार्गस्तत्रप्रयातःकर्मयोगीचान्द्रमसंज्योतिस्तदुपलक्षितंस्वर्गलोकंप्राप्य तत्रेष्टापूर्त्तकर्मफलंभुक्त्वापुनरावर्त्ततेतत्रापिश्रुतिःतेधूममभिसम्भवन्ति धूमाद्रात्रिं

## भाषा अनुवाद

और जिसराहसेगमनकरि फेरिसंसारमेंआवते सोकहतेहैं किप्रथमधूममेप्राप्तहो फेरिधूमसेरात्रिमेंरात्रिसेकृष्णपक्षमेंकृष्णपक्षसेदक्षिणायनछमासमेंतब पितृलोकमें उससेफेरिचन्द्रजोतिमेंप्राप्तहोय योगीफेरिनिवृत्तहोतेहैं इहांभी धूमादिशब्दोंसे तदभिमानिनीदेवतालेतेहैं कामनाकरिकर्मकरियोंकीयहगति है किकर्म्मफलभोगकरि फेरिसंसारहोताहैं तोनिःकामकर्महींठीकहै २५

शुक्लकृष्णेगतीह्येते जगतःशाश्वते मते एकयायात्यनावृत्तिमन्ययाऽवर्त्ततेपुनः २६

## शाङ्करभाष्यम् ।

शुक्लेति शुक्लकृष्णे शुक्लाचकृष्णाचशुक्लकृष्णेज्ञानप्रकाशकत्वात् शुक्ला तदभावात्कृष्णाएतेशुक्लकृष्णे हिगतीजगतइत्यधिकृतानांज्ञानकर्म्मणोर्न जगतःसर्व्वस्यैवैते गतीसम्भवतःशाश्वतेनित्येसंसारस्यनित्यत्वान्नित्येमतेऽभिप्रेते तत्रैकयाशुक्लयायात्यनावृत्तिमावृत्तिमन्ययेतरयावर्ततेपुनःभूयः २६

## आनन्दगिरिकृतटीका ।

रात्रादौमृतानां ब्रह्मविदामब्रह्मप्राप्तिशङ्कानिवृत्त्यर्थमभिमानिनोदेवताग्रहणायमार्गयोर्नित्यत्वमाह शुक्लेति ज्ञानप्रकाशकत्वाद्विद्याप्राप्यत्वादर्चिरादिप्रकाशोपलक्षितत्वाच्चशुक्ला देवयानाख्यागतिस्तदभावाज्ज्ञानप्रकाशकत्वाभावात् धूमाद्यप्रकाशोपलक्षितत्वादविद्याप्राप्यत्वाच्चकृष्णापितृयानलक्षणागतिःतयोर्गत्योःश्रुतिस्मृतिप्रसिद्ध्यर्थो हिशब्दः जगच्छब्दस्यज्ञानकर्माधिकृतविषयत्वेनसङ्कोचेहेतुमाह नजगतइति अन्यथाज्ञानकर्मोपदेशानर्थक्यादित्यर्थः तयोर्नित्यत्वेहेतुमाह संसारस्येति मार्गयोर्यावत्संसारभावित्वेफलितमाह तत्रेति क्रमसुक्तिरनावृत्तिःभूयोभोक्तव्यकर्मक्षयेशेषकर्मवशादित्यर्थः २६

## स्वामिकृतटीका ।

रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्यरतिमासेभ्यः पितृलोकंपितृलोकात्चन्द्रंतेचन्द्रंप्राप्यान्नंभवन्तीत्यादि तदेवंनिवृत्तिकर्म्मसहितोपासनयाक्रमसुक्तिः काम्यकर्मभिश्चस्वर्गभोगानन्तरमावृत्तिः निषिद्धकर्मभिस्तुनरकभोगानन्तरमावृत्तिः क्षुद्रकर्मणान्तुजन्तूनांअत्रैवपुनःपुनर्जन्मेति द्रष्टव्यं २५

उक्तमार्गावुपसंहरति शुक्लेति शुक्लाऽर्चिरादिगतिः प्रकाशमयत्वात् कृष्णाधूमादिगतिस्तमोमयत्वात् एतेगती मार्गौ ज्ञानकर्माधिकारिणोजगतःशाश्वते अनादीसंमते संसारस्यानादित्वात्तयोरेकयाशुक्लयानावृत्तिंमोक्षंयाति अन्ययाकृष्णायातुपुनरावर्त्तते २६

## भाषाअनुवाद

येदोशुक्लकृष्णदोगती जगतमेसनातनसे चलीआवतीहै इनमेनिःकामकर्म्मकारी ज्ञानी शुक्लकहे प्रकाशमार्गसेगमनकरकेमुक्तहोते औरनानामनोरथकरकेयज्ञादिकर्म्मकारीमनुष्य कृष्णकहे अन्धेरीधूममार्गसे गमनकर कर्म्मफलभोगकेअनन्तर फेरिसंसारमेआय जन्मग्रहणकरते हैं सोएदोमार्गहै २६

नैतेसृतीपार्थजानन्योगीमुह्यतिकश्चन तस्मात्सर्वेषुकालेषुयोगयुक्तोभवार्जुन २७

शाङ्करभाष्यं

नैतद्इति नैतेयथोक्तेसृतीमार्गौपार्थजानन्संसारायैकान्यामोक्षायचेति योगीन मुह्यतिनकश्चनकश्चिदपि तस्मात्सर्व्वेषुकालेषुयोगयुक्तः समाहितोभवार्जुन २७

शृणुयोगस्यमाहात्म्यंवेदेष्विति वेदेषु सम्यगधीतेषुयज्ञेषुच साद्गुण्येनानुष्ठितेषुतपस्सुचसुतप्तेषुदानेषुचसम्यग्दत्तेषुयदेतेषुपुण्यफलंप्रदिष्टं शास्त्रेणात्येत्यतीत्यगच्छति तत्सर्व्वंफलजातमिदंविदित्वासप्तप्रश्ननिर्णयद्वारेणोक्तंसम्यगवधार्य्यानुष्ठायद्दृयथायोगीपरंउत्कृष्टमैश्वरंस्थानमुपैतिप्रतिपद्यते आद्यमादौभवंकारणं ब्रह्मेत्यर्थः २८ इतिश्रीभवद्गीताभाष्येअष्टमोध्यायः ८

आनन्दगिरिकृतटीका

गतेरुपास्यत्वायतद्विज्ञानंस्तौति नैतद्इति योगस्यमोहापोहकत्वे फलितमाह तस्मादिति ज्ञानप्रकारमनुवदति संसारायेति मोक्षायक्रममुक्त्यर्थमित्यर्थः योगी ध्याननिष्ठोगतिमभिध्यायन्नैव मुह्यति केवलंकर्मदक्षिणमार्गप्रापकंकर्त्तव्यत्वेन न प्रत्येतीत्यर्थः योगस्यापुनरावृत्तिफलत्वे नित्यकर्त्तव्यत्वंसिद्धमित्युपसंहरति तस्मादिति २७

श्रद्धाद्यर्थंयोगंस्तौति वेदेष्विति पवित्रपाणित्वप्राङ्मुखत्वादिसाहित्यमध्ययनस्यसम्यक्त्वमङ्गोपाङ्गोपेत्यमनुष्ठानस्यसाद्गुण्यं तपसांशास्त्रोक्तानांसुतप्तत्वंमनोबुद्ध्यादैकाग्र्यपूर्व्वकत्वंदानस्यचसम्यक्त्वंदेशकालपात्रानुगुणत्वमिदंविदित्वेत्यत्रेदंशब्दा

स्वामिकृतटीका।

मार्गज्ञानफलंदर्शयन्भक्तियोगमुपसंहरति नैतेइति एतेसृतीमार्गौमोक्षसंसारप्रापकौजानन्कश्चिदपियोगीनमुह्यति सुखबुद्ध्यास्वर्गादिफलं नकामयते किन्तुपरमेश्वरनिष्ठएवभवतीत्यर्थः स्पष्टमन्यत् २७

भाषा अनुवाद।

उक्तदोनोमार्गकेज्ञानसेजोफलहोतासोदिखावतेंजयेभक्तियोगकहतेहैंकिहेपार्थमोक्षऔसंसारकोदेनेवालीइनदोनोमार्गकोजानिकर कोईयोगीपुरुष सांसारिकमोहकोनहींपावता अर्थात्सुखसमझिस्वर्गादिफलकीकामनानहींकरता वलकिपरमेश्वरहीमेनिष्ठाकरताहैइससेअर्जुनतुममेरीभक्तियोगमेयुक्तहोकेरहो २७

वेदेषुयज्ञेषु तपःसुचैव दानेषु यत्पुण्यफलंप्रदिष्टं अत्येतितत्सर्वमिदंविदित्वा योगीपरंस्थानमुपैति चाद्यम् २८ इतिश्रीभगवद्गीतासुयोगशास्त्रेषुश्रीकृष्णार्जुनसंवादेतारकब्रह्मयोगोनामअष्टमोऽध्यायः ८

## आनन्दगिरिकृतटीका ।

धर्मेवस्फुटयति सप्तेति यद्यपिकिंतद्ब्रह्मेत्यादावधियज्ञःकथं कोवेत्यप्रश्नद्वयंप्रतिभासानुसारेण केश्चिदुक्तं तथापि प्रतिवचनालोचनायां द्वित्वप्रतीत्यभावात् प्रकारभेदविवक्षयाचशब्दद्वयस्य प्रतिनियतत्वान्नसप्तेतिविरुध्यते नचेदंवेदनमात्रंकिंत्वनुष्ठानपर्यन्तमित्याह सम्यगिति प्रकृतोध्याननिष्ठोयोगीत्युच्यते ऐश्वरंविष्णोः परमंपदंतदेवतिष्ठत्यस्मिन्नशेषमितिस्थानंयोगानुष्ठानादशेषफलातिशायिमोक्षलक्षणंफलंक्रमेणलब्धुंशक्यमितिभावःतदनेनसप्तप्रतिवचनेनयोगमार्गंदर्शयताधेयत्वेनतत्पदार्थोव्याख्यातः २८ इतिआनन्दगिरिकृतटीकायांअष्टमोध्यायः ८

## स्वामिकृतटीका

अध्यायार्थमष्टप्रश्नार्थनिर्णयसफलमुपसंहरति वेदेषु अध्ययनादिभिःयज्ञेषु अनुष्ठनादिभिःतपःसु कायशोषणादिभिःदानेषुसत्पात्रेऽर्पणादिभिः यत्पुण्यफलमुपदिष्टं शास्त्रेषुतत्सर्वमत्येति ततोऽपिश्रेष्ठंयोगैश्वर्यं पाप्नोति किंकृत्वा इदमष्टप्रश्नार्थनिर्णयेनोक्तं तत्वंविदित्वा ततश्चयोगीज्ञानीभूत्वापरमुत्कृष्टंआद्यं जगन्मूलभूतंस्थानंविष्णोःपदंप्राप्नोति २८ इति स्वामिकृतटीकायामष्टमोध्यायः ८

## भाषाअनुवाद

अध्यायका अर्थस्वरूप आठप्रश्नकीअर्थनिर्णय फलकेसहितकहतेहैं किवेदोंमेअध्ययनकेद्वारा औरयज्ञोंमेअनुष्ठानकेद्वारा औतपस्योंमेशरीरशोषणकेद्वारा औसर्वदानमेसत्पात्रकेअर्पणसे जोउत्तमपुण्यफल सबशास्त्रोंनेकहाहै उसफलको उल्लंघनकरि अर्थात् उसफलकीअपेक्षाअधिकजानियोगीश्रेष्ठयोगरूपऐश्वर्यको प्राप्तहोतेहैं अर्थात् परमपदपावतेहैं अर्थात् आटप्रश्नसेकहाजोतत्वतिसकेजाननेहीसे योगऐश्वर्यपावते औरफेरिसे,ईयोगीजनज्ञानीहोयके उत्तमजोभगवतकापदकहेस्थानसोलाभकरते हैं २८ इतिश्रीजगन्नाथसुकुलविरचितमनभावनीनामभाषाटीकायां अष्टमोऽध्यायः ८

## श्रीमद्भगवद्गीता ।

## नवमोध्यायः

श्रीभगवानुवाच इदन्तुते गुह्यतमं प्रवक्ष्याम्यनसूयवे ज्ञानंविज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् १

### शाङ्करभाष्यं

अष्टमेनाडीद्वारेणधारणायोगसगुणउक्तस्तस्यचफलमग्न्यर्चिरादिक्रमेण कालान्तरेब्रह्मप्राप्तिलक्षणमेवानावृत्तिरूपंनिर्द्दिष्टं तत्रानेनैवप्रकारेण मोक्षप्राप्तिफलमधिगम्यते नान्यथेति तदाशङ्काव्यावृत्त्यर्थयाभगवानुवाच इदमितिइदंब्रह्मज्ञानंवक्ष्यमाणमुक्तञ्चपूर्वेष्वध्यायेषुतद्बुद्धौसन्निधीकृत्येदमित्याह तुशब्दोविशेषनिर्द्धारणार्थः इदमेवतुसम्यक्ज्ञानंसाक्षान्मोक्षप्राप्तिसाधनंवासुदेवःसर्व्वमित्यात्मैवेदं सर्वमेकमेवाद्वितीयमित्यादिश्रुतिस्मृतिभ्योनान्यत् अथ येन्यथातोविदुरन्यराजानस्तेऽक्षय्यलोकाभवन्तीत्यादिश्रुतिभ्यश्चतेतुभ्यंगुह्यतमंगोप्यतमंप्रवक्ष्यामिकथयिष्याम्यनसूयवेऽसूयारहिताय किंतज्ज्ञानंकिंविशिष्टंविज्ञानसहितमनुभवयुक्तं यत्ज्ञानंज्ञात्वा प्राप्यमोक्ष्यसेऽशुभात् संसारबन्धनात् १

### भाषाअनुवाद

केवलभक्तिहीकेद्वारामे परमेश्वरपायेजातेअर्थात्ईश्वरका तत्त्वज्ञानभक्तिबिना कोईउपायमेसुलभनहींहै यहीअष्टमअध्यायमेस्थिरकियाहै सोईईश्वरकाअद्भुतऐश्वर्य औअपनीभक्तिकीसर्व्वश्रेष्ठमहिमा अवनवयेंअध्यायमेविस्तारसेभगवानआप कहतेहैं कि जिससेपरमेश्वरजानेजांय सोईविज्ञानकहेउपासना तिसके सहित ईश्वरविषयक जोयहज्ञानगुह्यतम अर्थात्शास्त्रोक्तधर्मज्ञानगुह्य कहेगोपनीयहै औरउमकीअपेक्षा देहादिसेभिन्न जोआत्मज्ञान सोगुह्यतरकहे अधिकगोपनीय है फेरिआत्मज्ञानमेभीपरमात्मज्ञान गुह्यतमहै अत्यन्तगोपनीयहै सोअसूयारहित अर्थात्वारवारअपनामाहात्मउपदेशकरतेहुये मेरेमेदोषदृष्टिरहित तुमहौ इससे मैंअवदयाकरि तुमसेकहूंगा किजिनकोजानिकरिके इसअशुभरूपसंसार बन्धनसेछूटिजावोगे १

## आनन्दगिरिकृतटीका

अतीतेनागामिनोऽध्यायस्यागतार्थत्वंवक्तुं वृत्तंअनुद्रवति अष्टमइति नाडीसुषु म्नाख्याधारणाख्येनाङ्गेनयुक्तोयोगःधारणायोगःसगुणः सर्वद्वारसंयमनादिगुणास्तेन सहितइत्यर्थः तत्फलोत्पत्त्यर्थमनन्तराध्यायारम्भमाशंक्याह तस्यचेति अग्निरर्चिरि त्यादिनोपलक्षितेनक्रमवतादेवयानेनयथेतियावत् ज्ञानान्तरमेवयथोक्तफललाभात् अलमनेनमार्गेणेत्याशंक्याह कालान्तरइति अर्चिरादिमार्गेण ब्रह्मप्राप्तौ मुक्तेः मार्गापेक्षत्वात्नतस्येत्यादिश्रुतिविरोधःस्यादित्याशयेनशङ्कते तत्रेति वृत्तोर्थःसप्त म्यर्थः उक्ताशङ्कानिवृत्त्यर्थमनन्तराध्यायमुत्थापयति तदाशङ्केति संप्रयुक्तत्वेनापरो क्षत्वाभावेपि पूर्वोत्तरग्रन्थालोचनयाबुद्धिसन्निधानादिदंशब्देन ब्रह्मज्ञानं गृहीतं इत्याह तद्वाविति प्रकृताज्ज्ञानात् ज्ञानस्यवैशिष्ट्यावद्योतीतुशब्दइत्याह तुशब्दइति निपातार्थमेवस्फुटयति इदमेवेति तस्मिन्नर्थेसम्वादकत्वेन श्रुतिस्मृतिं दर्शयति वा सुदेवइति अद्वैतज्ञानंवत्द्वैतज्ञानमपिकेषाञ्चिन्मोक्षहेतुरित्याशंक्याह नान्यदिति द्वैतज्ञानंमोक्षायनक्षममित्यत्रश्रुतिमुदाहरति अथेति अविद्याप्रकरणोपक्रमार्थोऽथ शब्दःअतोद्वैतादन्यथाभिन्नत्वेनेत्यर्थः विदुस्तत्त्वमितिशेषः द्वैतस्य दुर्निरूपत्वेन क ल्पितत्वात्तज्ज्ञानंरज्जुसर्पादिज्ञानतुल्यत्वान्नक्षेमप्राप्तिहेतुरितिचकारार्थः अ सूयागुणेषुदोषाविष्करणंतद्रहिताय ज्ञानाधिकृतायइत्यर्थः ज्ञानंब्रह्मचैतन्यंतद्विष यस्याप्रमाणज्ञानंतस्यतेनैवविशेषितत्वानुपपत्तिमाशंक्यव्याकरोति अनुभवेति विज्ञा नमनुभवःसाक्षात्कारस्तेनसहितमित्यर्थः उक्तज्ञानंप्राप्तस्य किंस्यादित्याशंक्याह य ज्ज्ञानमिति १

## स्वामिकृतटीका।

परेशःप्राप्यते शुद्धभक्त्येति स्थितमष्टमे ॥ नवमेतु तदैश्वर्यमत्याश्चर्यंप्रपंच्यते एवंता वत्सप्तमाष्टमयोःस्वीयपरमेश्वरतत्त्वंभक्त्यैवसुलभं नान्यथेत्युक्तमिदानीमचिन्त्यं स्व कीयमैश्वर्यंभक्तेश्चासाधारणप्रभावंप्रपञ्चयिष्यन्श्रीभगवानुवाच इदमिति विशेषे णज्ञायते .अनेनेतिविज्ञानमुपासनंतत्सहितंज्ञानमीश्वरविषयमिदंतुतेऽनसूयवेपु नःपुनःस्वप्रभावश्रवणेऽपि स्पर्धाद्वेषादिदोषरहितायै.. वक्ष्यामि तुशब्दोवैशिष्ट्ये तदेवाह गुह्यतममित्यादिना गुह्यंधर्मज्ञानंततोदेहादि व्यतिरिक्तात्मज्ञानंगुह्यतरंततोऽपिपरमात्मज्ञानमतिरहस्यत्वाद्गुह्यतमंतज्ज्ञात्वाऽ शुभात्संसारबन्धान्मोक्ष्यसे सद्यएवमुक्तोभविष्यसि १

राजविद्याराजगुह्यंपवित्रमिदमुत्तमं प्रत्यक्षावगमंधर्म्यंसुसुखंकर्त्तुमव्ययम् २

शाङ्करभाष्यं

तच्च स्तौति राजविद्येति राजविद्याविद्यानांराजादीप्तिरतिशयत्वात्दीप्यतेह्यीयमतिशयेनब्रह्मविद्यासर्व्वविद्यानांराजगुह्यं तथागुह्यानांराजापवित्रं पावनमिदमुत्तमं सर्व्वेषांपावनानांशुद्धिकारणानामिदंब्रह्मविज्ञानमुत्कृष्टतमंअनेकजन्मसहस्रसञ्चितमपिधर्म्माधर्मादिसमूलंकर्म्म क्षणमात्राद्भस्मीकरोति यतोऽतःकिं तस्यपावनत्वंवक्तव्यं किञ्चप्रत्यक्षावगमंप्रत्यक्षेणसुखादेरिवावगमोयस्यतत्प्रत्यक्षावगमंअनेकगुणवतोपिधर्म्मविरुद्धत्वंदृष्टं श्येनयागइव नतथा आत्मज्ञानंधर्म्मविरोधि किन्तुधर्म्यंधर्मादनपेतंएवमपिस्यात्दुःसंपाद्यमित्यतआह सुसुखंकर्त्तुं यथा रत्नविवेकविज्ञानं तत्राल्पायासानांअन्येषांकर्मणांसुखसंपाद्यानामल्पफलत्वं दृष्टं दुष्कराणाञ्चमहाफलत्वंदृष्टमितीदन्तुसुखसंपाद्यत्वात्त फलक्षयाद्व्येतीति प्राप्तेतत्रःह्याव्ययंनास्यफलतःकर्मवद्व्ययोऽस्तीतिअव्ययं अतःश्रद्धेयमात्मज्ञानं २

आनन्दगिरिकृतटीका

तदाभिमुख्यसिद्धयेजन्ज्ञानंस्तौति तच्चेति ब्रह्मविद्याविद्यानांराजाश्रेष्ठाइत्यत्र हेतुमाह दीप्तीति कुतोब्रह्मविद्यायाःविद्यान्तरेभ्योदीप्त्यतिशयित्वं तदाह दीप्यते हीति दृश्यते हिविद्वदन्तरेभ्योलोकेपूजातिरेकोब्रह्मविदामिति भावः उत्कृष्टतमंशुद्धिकारणंब्रह्मज्ञानमित्येतदुपपादयति अनेकेति तत्रश्रुतिस्मृतिप्रमाणयितव्येनशास्त्रैकगम्यमिदंज्ञानंकिन्तुप्रत्यक्षप्रमेयमित्याह किञ्चेति प्रत्यक्षमवगम्यमानमस्मिन्नितितथा यद्वावगम्यतइतिअवगमः फलंप्रत्यक्षोवगमोऽस्येतिदृष्टफलत्वं ज्ञानस्योच्यते धर्म्यमित्येतद्व्याकरोति अनपेतमिति धर्मस्येवतस्यक्लेशसाध्यत्वमाशंक्याह एवमपीति रत्नविषयविवेकज्ञानंसम्प्रयोगादुपदेशापेक्षादनायासेनदृष्टंतथेदंब्रह्मज्ञान

भाषा अनुवाद ।

अबअर्जुनकीइच्छाबढावनेकेहेतु जोज्ञानकहैंगेउसकीप्रशंसाकरतेहैं कियह जोज्ञान सोसकलविद्योंका राजाऔरगोपनीयजोकुछहै उसकाभीराजाअर्थात् सबसेश्रेष्ठहै और यहअत्यन्तपावनतथाउत्तमहै औज्ञानियोंकोप्रत्यक्षावगम कहे जिसकाबोध सुलभ है और धर्म्य कहेधर्मसेभिन्ननहींअर्थात् वेदविहितसर्व्वधर्मकाफलस्वरूपहै औरसुसुखंकहेअनायाससाधनकियाजायसकै है और जिस हेतुअक्षय फलहै इससे अव्ययअर्थात्नाशरहित है २

अश्रद्दधानाःपुरुषाधर्मस्यास्यपरन्तप अप्राप्यमांनिवर्त्तन्तेमृत्युसंसारवर्त्मनि ३

## शाङ्करभाष्यं

येपुनःअश्रद्दधानाइति अश्रद्दधानाःश्रद्धाविरहिताःआत्मज्ञानस्यधर्मस्यास्यस्व रूपेतत्फलेचनास्तिकाःपापकारिणोऽसुराणामुपनिषदं देहमात्रात्मदर्शनमेवप्रति पन्नाअसन्तःपुरुषाःपरन्तप अप्राप्यमांपरमेश्वरंमत्प्राप्तौनैवाशङ्केति मत्प्राप्तिमार्ग साधनभेदभक्तिमात्रमप्यप्राप्येत्यर्थःनिवर्त्तन्तेनिश्चयेनआवर्त्तन्ते क्व मृत्युसंसारवर्त्म निमृत्युयुक्तःसंसारस्तस्यवर्त्मनरकतिर्यगादिप्राप्तिमार्गस्तस्मिन्नेववर्त्तन्तइत्यर्थः ३

## आनन्दगिरिकृतटीका

मित्याह यथेति अव्ययमिति विशेषणमाशङ्कापूर्व्वकंविवृणोति तत्रेत्यादिना व्यवहा रभूमिःसप्तम्यर्थःज्ञानस्याक्षयफलत्वेफलितमाह अतइति २ आत्मज्ञानाख्येधर्मेश्र द्धावतांतन्निष्ठानांपरमपदप्राप्तिमुक्त्वाततोविमुखानांसंसारप्राप्तिमाह येपुनरिति आत्मज्ञानतत्फलयोर्नास्तिकानेवविशिनष्टि पापेति उक्तानामात्मभरीणांभगवत्प्रा प्तिसम्भावनाभावादप्राप्यमामित्यप्रसक्तंप्रतिषेधःस्यादित्याशंक्याह मत्प्राप्ताविति ३

## स्वामिकृतटीका।

किञ्चराजविद्येति इदंज्ञानंराजविद्याविद्यानांराजाराजगुह्यं गुह्यानाञ्चरा जाविद्यासुगोप्येषुचातिरहस्यंश्रेष्ठमित्यर्थः राजदन्तादित्वादुपसर्जनस्यापिपरत्वं रा ज्ञांविद्याराज्ञांगुह्यमितिवा उत्तमंपवित्रमिदमत्यन्तपावनं ज्ञानिनांप्रत्यक्षावगम ञ्चप्रत्यक्षःस्पष्टोऽवगमोऽवबोधोयस्यतत्प्रत्यक्षावगमंदृष्टफलंइत्यर्थः धर्म्यं धर्मादनपेतं वेदोक्तसर्व्वधर्मफलत्वात्कर्त्तुञ्चसुसुखं सुखेनकर्त्तुंशक्यमित्यर्थः अव्ययञ्चाक्षयफल त्वात् २ नत्वेवमप्यतिसुकरत्वेन केनामसंसारिणःस्युस्तत्राह अश्रद्दधानाइति अस्य भक्तिसहितज्ञानलक्षणस्यधर्म्यस्येतिकर्मणिषष्ठीइमंधर्ममश्रद्दधानाआस्तिक्येनास्वीकु र्व्वन्तउपायान्तरैर्मत्प्राप्तयेकृतप्रयत्नाअपि मामप्राप्यमृत्युयुक्तेसंसारवर्त्म निनिव र्त्तन्ते मृत्युव्याप्तसंसारमार्गे परिभ्रमन्तीत्यर्थः ३

## भाषा अनुवाद

जोइसज्ञानसेऐसासुखसुलभहै तोफेरिकौनऐसाअभागीजनजोसंसारी होगा इसशङ्कापरकहतेहैं कियहीभक्तिसहितज्ञानस्वरूपधर्मको नकरिकेदूसरीउपाय से मेरीप्राप्तिकेलिये जोलोगयत्नकरतेहैं वेमनुष्य हमकोनपायकेमृत्युयुक्तसंसार मार्गमेंप्रवृत्तहोते अर्थात् मृत्युकेअर्थ संसारमेंवारवार आतेऔरजाते हैं ३

मयाततमिदं सर्व्वं जगदव्यक्तमूर्त्तिना मत्स्थानि सर्व्वभूतानि नचाहं तेष्ववस्थितः ४

शाङ्करभाष्यं ।

इति ज्ञानं स्तुत्वार्ज्जुनमभिमुखीकृत्याह मयेति मया मम यः परोभावस्तेन ततं व्याप्तं सर्व्वमिदं जगदव्यक्तमूर्त्तिना नव्यक्ता मूर्त्तिः स्वरूपं यस्य मम सोहमव्यक्तमूर्त्तिस्तेन मयाव्यक्तमूर्त्तिना करणागोचरस्वरूपेणेत्यर्थः तस्मिन्मय्यव्यक्तमूर्त्तौ स्थितानि मत्स्थानि सर्व्वभूतानि ब्रह्मादीनि स्तम्बपर्यन्तानि नहि निरात्मकं किञ्चद्भूतं व्यवहारायावकल्पते ऽतो मत्स्थानि मयात्मनात्मवत्त्वेन स्थितानि अतो मयि स्थितानीत्युच्यते तेषां भूतानामहमेव आत्मा इत्यतस्तेषु स्थित इति मूढबुद्धीनामवभासते ऽतो ब्रवीमि नचाहं तेषु भूतेष्ववस्थितो मूर्त्तवत् संश्लेषाभावेनाकाशस्याप्यन्तरतमो ह्यहं ४

आनन्दगिरिकृतटीका ।

स्तुतिनिन्दाभ्यां ज्ञाननिष्ठां महीकृत्य ज्ञानं व्याख्यातुमारभते स्तुत्वेति सोपाधिकस्य व्याप्त्यसम्भवमभिप्रेत्य विशिनष्टि मयेति अनवच्छिन्नस्य भगवद्रूपस्य निरुपाधिकत्वमेव साधयति करणेति व्याप्यव्यापकत्वेन जगतो भगवतस्य परिच्छेदमाशंक्याह तस्मिन्निति तथापि भगवतो भूतानाञ्चाधाराधेयत्वेन भेदः स्यादित्याशंक्याह नहीति निरात्मकस्य व्यवहारानर्हत्वे फलितमाह अतइति ईश्वरस्य भूतात्मत्वे तेषु स्थितिः स्यादित्याशंक्याह तेषामिति तस्य तेषु स्थित्यभावं व्यवस्थापयति मूर्त्तवदिति ४

स्वामिकृतटीका ।

तदेवं वक्तव्यतया प्रस्तुतस्य ज्ञानस्य स्तुत्या श्रोतारमभिमुखीकृत्य तदेव ज्ञानं कथयति मयेति द्वाभ्यां अव्यक्ता अतीन्द्रिया मूर्त्तिः स्वरूपं यस्य तादृशेन मया कारणभूतेन सर्व्वमिदं जगत्ततं व्याप्तं तत् सृष्ट्वा तदेवानुप्राविशदित्यादि श्रुतेः अतएव कारणभूते मयि तिष्ठन्तीति मत्स्थानि सर्व्वाणि भूतानि चराचराणि एवमपि घटादिषु स्वकार्य्येषु मृत्तिकेव तेषु भूतेषु नाहमवस्थित आकाशवदसङ्गत्वात् ४

भाषा अनुवाद

इसप्रकार से अवसर प्राप्त जो ज्ञान का गुणकीर्त्तन करि के श्रोता अर्ज्जुन को उत्साहयुक्त करि के सोई ज्ञान दो श्लोक से कहते हैं कि जिसका स्वरूप अव्यक्त कहे इन्द्रियों का अगोचर ऐसा कारणरूप जो मैं सो मेरे से सम्पूर्ण जगत व्याप्त है क्योंकि श्रुति कहती है कि सोई ब्रह्म संसार सृष्टि करि के उसके बीच जीवरूप होय प्रविष्ट है इस कारण चराचरात्मक भूतमात्र कारणरूप मेरे ही में स्थित हैं परन्तु ऐसा है तौभी स्वकार्य घटादि में मृत्तिका के तुल्य मैं भूतों में नहीं हूं जिस हेतु मैं आकाश के समान संगरहित अर्थात् अलग हों ४

नचमत्स्थानिभूतानिपश्यमेयोगमैश्वरं भूतभृन्नचभूतस्थोममात्माभूतभावनः ५

## शाङ्करभाष्यं।

नह्यसंसर्गिवस्तुक्वचिदाधेयभावेनावस्थितंभवत्यतएवासंसर्गित्वान्मम नचेति नच मत्स्थानिभूतानिब्रह्मादीनिपश्यमेयोगंयुक्तिःघटनंमेममैश्वरंयोगमात्मनः ईश्वरस्ये दमैश्वरंमाहात्म्यमित्यर्थः तथाचात्मनोयाथात्म्यमसंसर्गित्वादसङ्गतांदर्शयत्यसङ्गोनहि सज्जतइदञ्चान्यदाश्चर्यमन्यत्पश्यभूतभृदसङ्गोपिसन्भूतानिबिभर्त्ति नचभूतस्थोयथोक्तेन न्यायेनदर्शितत्वात्भूतस्थत्वानुपपत्तेःकथंपुनरुच्यते असौममात्मेतिविभज्यदेहा दिसंघातंतस्मिन्नहङ्कारमध्यारोप्य लोकबुद्धिमनुसरन् व्यपदिशति ममात्मेति नपुनरात्मनआत्मा अन्यइति लोकवदजानंस्तथाभूतभावनोभूतानिभावयति उत्पा दयतिबर्द्धयतिबा भूतभावनः ५

## आनन्दगिरिकृतटीका

संश्लेषाभावेपिकिमितिनाधेयत्वमतआह नहीति परमेश्वरस्यभूतेषुस्थित्यभावेपि भूतानांतत्रस्थितिरास्थितेतिकुतोऽसङ्गत्वंतत्राह अतएवेति नचेत्तत्रचकारोऽवधा रणार्थः भूतानामीश्वरेणैवस्थितिरित्यत्रहेतुमाह पश्येति आत्मनोऽसङ्गत्वस्वरूपमि त्यत्रप्रमाणमाह तथाचेति असङ्गश्चेदीश्वरस्तर्हि कथंमत्स्थानिभूतानीत्युक्तंकथञ्च तयोक्तंश्चमत्स्थानीतितद्विरुद्धमुदीरितमित्याशंक्याह इदञ्चेति तर्हिभूतसम्बन्धः स्यादितिनेत्याह नचेति यथोक्तेनन्यायेनअसङ्गत्वेनेतियावत् असङ्गतयावस्तुतोभू तासम्बन्धेपिकल्पनयातदविरोधान्नमिथोविरोधोऽस्तीतिभावःआत्मनःसकाशादात्म

## भाषा अनुवाद।

औरदेखोकि हमसबसेअलगहैं इसहेतुस्थावरजङ्गमभूतहमारेमेंनहींस्थित हैं औरजोशङ्काकरोकि पीछेतुमनेअपनासर्व्वव्यापित्वऔसबकेआश्रय यहकहाहै तोकहतेहैं किहमारीअघटघटनारूपचातुरीदेखोकिमेरीयोगमायाकेविभवबल सेमेरीचातुरीबूझनेकेअयोग्य हैपरमेराकहनातोकिसीअंशमेविरुद्ध नहीं है औ र आचार्यलोगभीभूतभावनपालनकर्त्ताकहतेहैं तौभीहमाराउत्कृष्टरूपभूतभाव ननहीं है जैसेजीव देहधारणऔपालनकरतेहुये अहङ्कारसेदेहकेसाथमिलते हैं तैसेनिरहङ्कारहेतुसे भूतोंका लालनपालनकरतेहुयेभी हम उनसे पृथ कहैं यहीमेराऐश्वर्य है किजैसे आकाश औवायुसबमेंरहते औजुदेहैं ५

यथाकाशस्थितोनित्यंवायुःसर्व्वत्रगोमहान् तथासर्वाणिभूतानिमत्स्थानीत्युपधारय ६

## शाङ्करभाष्यं।

यथोक्तेनश्लोकद्वयेनउक्तमर्थंदृष्टान्तेनोपपादयन्नाह यथेति यथालोकेआकाशस्थितः आकाशेस्थितोनित्यंसदावायुःसर्व्वत्रगच्छतीतिसर्व्वत्रगःमहान्परिमाणतस्तथाकाशवत् सर्व्वगते मय्यसंश्लेषणैवस्थितानि मत्स्थानीत्येवमुपधारय जानीहि ६

## आनन्दगिरिकृतटीका।

नोऽन्यत्वायोगाय कुतःसम्बन्धोक्तिरित्याशंक्याह असाविति यथालोकोवस्तुतत्वमजानन्भेदमारोप्य ममायमितिसम्बन्धमनुभवतिनतथेहसम्बन्धव्यपदेशःआत्मनि स्वतोभेदाभावादतोभेदेसत्येवलोकेसम्बन्धबुद्धिदर्शनमनुसरन्भगवानात्मनोदेहादिसंघातं विभज्याहङ्कारंतस्मिन्नारोप्य असौममात्मेतिभेदं व्यपदिशति तथाचसंघातस्यमेति व्यपदेशात्ततोनिकृष्टस्यस्वरूपस्यात्मशब्देननिर्देशान्नभूतस्थोसावित्यर्थः पूर्व्वोक्तासंगत्वाङ्गीकारेणैवात्माभूतानिभावयतीत्याह तथेति ५

सृष्टिस्थितिसंहाराणामसङ्गात्माधारत्वंमयाततमिदमित्यादिश्लोकद्वयेनोक्तोर्थे

## स्वामिकृतटीका

किञ्च नचेति नचमयिस्थितानिभूतानिअसङ्गत्वादेवमम ननुतर्हि व्यापकत्वमायतञ्च पूर्व्वोक्तं विरुद्धमित्याशंक्याह पश्येति मेऐश्वरमसाधारणंयोगंयुक्तिंअघटनघटनाचातुर्य्यमिदंपश्य मदीययोगमायावैभवस्याऽवितर्क्यत्वान्नकिञ्चित्विरुद्धमित्यर्थः अन्यदप्याश्चर्य्यंपश्येत्याह भूतेति भूतानिबिभर्त्तिधारयतीतिभूतभृत्भूतानिभावयतिपालयतीतिभूतभावनः एवंभूतोऽपिममात्मापरमस्वरूपंभूतस्थोनभवतीति अयंभावः यथा देहंबिभ्रत्पालयंश्चजीवोऽहङ्कारेणतत्संश्लिष्टस्तिष्ठति एवमहं भूतानि धारयन्पालयन्नपितेषु नतिष्ठामि निरहङ्कारत्वादिति ५

## भाषाअनुवाद

अनमिलवस्तुभीआधारआधेयअर्थात् रहनेकोजगहऔररहनेवालीवस्तुहोसकैहै यहदृष्टान्तदेखायकरकहतेहैं किआकाशकेविनाकिसीवस्तुकेरहनेकाअसम्भवहै इससेआकाशमेंस्थित जोवायु सोसर्व्वगतऔमहानहोकेभीआकाशकेसाथ मिलनेकी कोई उपायनरहनेसे जैसेआकाशकेसाथ नहींमिलतीहै तैसेभूतमेरेमेरहते भीअलगजानो अर्थात्जैसेआधाररूपआकाशमेरहिकर वायुनिर्लिप्तहै तैसेभूतोंकेरहतेहुयेभी आधारस्वरूप ब्रह्म निर्लिप्तहै अर्थात् सबसे अलगहै ६

सर्वभूतानिकौन्तेयप्रकृतिंयान्तिमामिकां कल्पक्षयेपुनस्तानिकल्पादौविसृजाम्यहं ७

### शाङ्करभाष्यं

एवंवायुराकाशइवमयिस्थितानिसर्वभूतानिसर्वाणिभूतानिस्थितिकालेतानिसर्वभूतानिकौन्तेय प्रकृतिंत्रिगुणात्मिकामपरांनिकृष्टांयान्ति मामिकांमदीयां कल्पक्षयेप्रलयकालेपुनर्भूयस्तानिभूतान्युत्पत्तिकालेकल्पादौ विसृजाम्युत्पादयाम्यहंपूर्ववत ७

### आनन्दगिरिकृतटीका।

स्वदृष्टान्तेनोपपादयन्नादौदृष्टान्तमाहेतियोजना सदेत्युत्पत्तिस्थितिसंहारकालोगृह्यते आकाशादेर्महतोऽन्याधारत्वंकथमित्याशंक्याह महानिति यथासर्वगामित्वात् परिमाणतोमहान्वायुराकाशेसदातिष्ठति तथाआकाशादीनिमहान्त्यपिसर्वाणिभूतान्याकाशकल्पेपूर्णप्रतीच्यसङ्गे मयस्मिन्नात्मनिसंश्लेषमन्तरेणस्थितानीत्यर्थः ६

आकाशेवाय्वादिस्थितिवदाकाशादीनिभूतानिस्थितिकालेपरमेश्वरेस्थितानिचेत्तर्हि प्रलयकालेततोन्यत्रतिष्ठेयुरित्याशंक्याह एवमिति प्रकृतिशब्दस्यस्वभाववचनत्वंव्यावर्त्तयति त्रिगुणात्मिकामिति साचापरेयमिति प्रागेवसूचितेत्याह अपरामिति तस्यास्त्वीश्वराधीनत्वेनास्वातन्त्र्यमाह मदीयामिति प्रलयकालेभूतानियथोक्तांप्रकृतिं यान्तिचेदुत्पत्तिकालेमिततस्तेषामुत्पत्तिरीश्वराधीनत्वं भूतसृष्टेर्नस्यादित्याशंक्याह पुनरिति ७

### स्वामिकृतटीका।

असंश्लिष्टयोरपिआधाराधेयभावंदृष्टान्तेनाह यथेति अवकाशंविनावस्थानानुपपत्तेर्नित्यमाकाशस्थितोवायुःसर्वत्रगोऽपिमहानपिनाकाशेनसंश्लिष्यते निरवयवत्वेनसंश्लेषायोगात् तथासर्वाणिभूतानिमयिस्थितानिजानीहि ६

तदेवमसङ्गस्यैवयोगमाययास्थितिहेतुत्वमुक्तं तथैवसृष्टिप्रलयहेतुत्वमाह सर्वेति कल्पक्षयेप्रलयकालेसर्वाणिभूतानिमदीयांप्रकृतिंयान्ति त्रिगुणात्मिकांमायामायालीयन्ते पुनःकल्पादौसृष्टिकाले तानिविसृजामि विशेषेणसृजामि ७

### भाषाअनुवाद।

इससेअसङ्गरूपईश्वरकीयोगमायासेचराचरकोस्थिति ईश्वरमे कहीगईअबसोईयोगमायासेसृष्टिऔपालनकेभो हेतुईश्वरहैं यहकहते हैं किप्रलकेसमयमे सकलभूतसत्वरजतमगुणमयीमेरीप्रकृतिमे लीनहोते फेरिसृष्टिकेसमयमे स्थूलसूक्ष्मनानारूपभूतोंको मैसिर्जनकरताहूं हे कौन्तेय अर्ज्जुन ७

प्रकृतिंस्वामवष्टभ्यविसृजामिपुनःपुनः भूतग्राममिमंकृत्स्नमवशंप्रकृतेर्वशात् ८

## शाङ्करभाष्यं

एवमविद्यालक्षणां प्रकृतिमिति प्रकृतिंस्वांस्वीयामवष्टभ्यवशीकृत्यविसृजामि पुनःपुनःप्रकृतितोजातंभूतग्रामंभूतसमुदायंइमंवर्त्तमानंकृत्स्नंसमग्रमवशमस्वतन्त्रमविद्यादिदोषैःपरवशीकृतंप्रकृतेर्वशात् स्वभाववशात् ८ तर्हितस्यैवपरमेश्वरस्यतभूग्रामंविषमंविदधतःतन्निमित्ताभ्यांधर्माधर्माभ्यांसम्बन्धःस्यादितीदमाह भगवान् नचमामिति नचमामीशंतानिभूतग्रामस्यविषमविसर्गनिमित्तानिकर्माणिनिबध्नन्ति धनञ्जय तत्रकर्म्मणामसम्बन्धत्वेकारणमाह उदासीनवदासीनंयथोदासीनउपेक्षकःकश्चित् तद्वदासीनमात्मनोऽविक्रियत्वमसंसक्तंफलसङ्गरहितमभिमानवर्जितमहङ्करोमीति तेषु कर्मसुतोऽन्यस्यापिकर्त्तृत्वाभिमानाभावःफलसङ्गाभावश्चाबन्धकारणमन्यथा कर्मभिर्बध्यतेमूढःकोशकारवदित्यभिप्रायः ९

## आनन्दगिरिकृतटीका

तर्हिकीदृशीप्रकृतिः साचकथंसृष्टावुपयुक्तेत्याशंक्याह एवमिति संसारस्यानादित्वद्योतनार्थंपुनःपुनरित्युक्तं भूतसमुदायस्याविद्यास्मितादिदोषपरवशत्वेहेतुमाह स्वभाववशादिति ८

## स्वामिकृतटीका

नन्वसङ्गोनिर्विकारस्त्वंकथंसृजसीत्यपेक्षायामाह प्रकृतिमित्यादि स्वांस्वाधीनांप्रकृतिमवष्टभ्यअधिष्ठाय प्रलयेलीनंसन्तंचतुर्विधमिमंसर्वंभूतग्रामंकर्म्मादिपरवशंपुनःपुनर्विविधंसृजामिविशेषेणसृजामीतिवा कथंप्रकृतेर्वशात् प्राचीनकर्मनिमित्ततत्स्वभाववशात् ८

नन्वेवंनानाविधानिकर्म्माणिकुर्वतस्तवजीववद्बन्धःकथंनस्यादित्यतआह नचमामिति तानिविश्वसृष्ट्यादीनिकर्म्माणिमांननिबध्नन्ति कर्मासक्तिर्हिबन्धहेतुःसाचाप्तकामत्वान्ममनास्ति अतउदासीनवद्वर्त्तमानस्यमेबन्धंनोपपादयन्ति उदासीनत्वेकर्त्तृत्वानुपपत्तेः कर्त्तृत्वेचोदासीनत्वानुपपत्तेरुदासीनवत् स्थितमित्युक्तं ९

## भाषा अनुवाद।

जोकहोकितुमजोअसङ्गनिर्विकारसोकैसेसृष्टिकरतेहौ इसअपेक्षापरकहतेहैं किमैंअपनेअधीनप्रकृतिको अंगीकारकरि प्राचीनकर्मोकेस्वभावपराधीनभयेकर्म्मकेवश भूतसकलकोंमैंहीं फेरिनानारूपसिर्जनकरतारहताहूं ८

नचमांतानिकर्माणिनिवध्नन्तिधनञ्जय उदासीनवदासीनमसक्तं तेषु कर्मसु ९

## शाङ्करभाष्यं

तत्रभूतग्राममिमंविसृजाम्युदासीनवदासीनमितिचविरुद्धमुच्यते तत्परिहारार्थमाह मयेति मयासर्वतोदृशिमात्रस्वरूपेणाविक्रियात्मनाध्यक्षेणममायात्रिगुणात्मिकाऽविद्यालक्षणाप्रकृतिःसूयतेउत्पादयतिसचराचरंजगत् तथाचमन्त्रवर्णः एकोदेवःसर्व्वभूतेषुगूढःसर्व्वव्यापीसर्वभूतान्तरात्मा कर्म्माध्यक्षःसर्वभूताधिवासः साक्षीचेताकेवलोनिर्गुणश्चेति साक्षिमात्रेणहेतुनानिमित्तेनानेनाध्यक्षत्वेन कौन्तेय जगत्सचराचरंव्यक्ताव्यक्तात्मकंविपरिवर्त्तते सर्वावस्थासुदृशिकर्मत्वापत्तिनिमित्ताहि जगतःसर्वाप्रवृत्तिरहमिदंभोक्ष्येपश्यामीदंशृणोमीदंसुखमनुभवामि दुःखमनुभवामि तदर्थमिदंकरिष्याम्येतदर्थमिदंकरिष्य इदंज्ञास्यामीत्याद्यवगतिनिष्ठाअवगतिरवसानैवयोस्याध्यक्षःपरमेव्योमन्नित्यादयश्चमन्त्रा एतमर्थंदर्शयन्ति ततश्चैकस्यदेवस्य सर्वाध्यक्षभूतचैतन्यमात्रस्यपरमार्थतःसर्व्वभोगानभिसम्बन्धिनोऽन्यस्यचेतनान्तरस्याभावे भोक्तुरन्यस्याभावात् किंनिमित्तेयंसृष्टिरित्यत्रप्रश्नप्रतिवचनेनुपपन्ने कोऽद्धावेदकइह प्रावोचत्कुतआयातःकुतइयंविसृष्टिरित्यादिमन्त्रवर्णेभ्योदर्शितञ्चभगवता अज्ञानेनावृतंज्ञानंतेनमुह्यन्तिजन्तवइति १०

## आनन्दगिरिकृतटीका।

यदिप्राकृतंभूतग्रामंस्वभावादविद्यातस्त्वंविषमंविदधासि तर्हितवविषमसृष्टिप्रयुक्तंधर्मादिमत्त्वमित्यनीश्वरत्वापत्तिरितिशङ्कते तर्हीति तत्रेति सप्तम्यापरमेश्वरोनिरुच्यते ईश्वरस्यफलसङ्गाभावात् कर्तृत्वाभिमानाभावाच्चकर्मसम्बन्धवदीश्वरादन्यस्यापितदुभयाभावोधर्माद्यसम्बन्धेकारणमित्याह अतोन्यस्येति यदिकर्मसुकर्तृत्वाभिमानोवाकस्यचित्कर्म्मफलसंयोगोवास्यात्तत्राह अन्यथेति ९

## भाषाअनुवाद

औरजोकहोकिइसप्रकारनानप्रकारकर्मकारीजोतुम तोतुमाराभी जीवके समानवन्धनक्योंनहोय तोइसपरकहतेहैं कि वेकर्महमकोवन्धनहींकरसकते क्योंकिकर्ममेंजोआसक्तिसोईबन्धनकाकारणहै औरहमपूर्णकामहै इससेवहआसक्ति हमकोनहींहै हमतोउदासीनके समानवर्त्तमानहैं इससेउदासीनकेसमानकर्मकरोकुछडरनहीहै कोईकर्म तुम कोभीनलगेंगे हे धनंजयअर्जुन ९

मयाध्यक्षेणप्रकृतिः सूयतेसचराचरं हेतुनानेनकौन्तेय जगद्विपरिवर्त्तते १०

आनन्दगिरिकृतटीका

ईश्वरेस्रष्टत्वमौदासीन्यंत्वञ्चविरुद्धमितिशङ्कते तत्रेति पूर्वग्रन्थःसप्तम्यर्थः वि रोधपरिहारार्थमुत्तरश्लोकमवतारयति तदिति तृतीयाद्वयंसमानाधिकरणमित्यभ्यु पेत्यव्याचष्टे मयेत्यादिना प्रकृतिशब्दार्थमाह ममेति तस्याअपिज्ञानत्वंव्यावर्त्तयति त्रिगुणेति पराभिप्रेतंप्रधानंव्युदस्यति अविद्येति साक्षित्वेप्रमाणमाह तथाचेति मू र्तित्रयात्मनोभेदंवारयति एकइति अखण्डजाड्यंप्रत्याह देवइति आदित्यवत्ताटस्थ्यंप्र त्यादिशति सर्वभूतेष्विति किमितितर्हिसर्वैर्नोपलभ्यतेतत्राह गूढइति बुद्ध्यादिव त्परिच्छिन्नत्वंव्यवच्छिनत्ति सर्व्वव्यापीति तर्हिनभोवदनात्मत्वंनेत्याह सर्वभूतेति तर्हितत्तत्कर्मतत्फलसम्बन्धित्वंस्यात्तत्राह कर्मेति सर्व्वाधिष्ठानत्वमाह सर्वेति सर्वेषुभूतेषुसत्तास्फूर्त्तिप्रदत्वेन संनिधिर्व्वाश्रोच्यते नकेवलंकर्मणामेवायमध्यक्षोपि तुतद्वतामपीत्याह साक्षीति दर्शनकर्तृत्वशङ्कांशातयति चेतेति अद्वितीयत्वंकेवल त्वंधर्म्माधर्मादिराहित्यमाह निर्गुणइति किंवहुनासर्व्वविशेषशून्यइति चकारार्थः उदासीनस्यापीश्वरस्यसाक्षित्वमात्रंनिमित्तीकृत्यजगदेतत्पौनःपुन्येनसर्गसंहाराव नुभवतीत्याह हेतुनेति कार्य्यवत्कारणस्यापिसाक्ष्यधीनाप्रवृत्तिरितिवक्तुं व्यक्ताव्यक्ता त्मकमित्युक्तं सर्व्वावस्थास्वित्यनेनसृष्टिस्थितिसंहारावस्थागृह्यन्ते तथापिजगतःस्वर्गा दिष्वोभिन्नाप्रवृत्तिःस्वाभाविकीनेश्वरायत्तेत्याशंक्याह दृशीति नहिदृशाव्याप्यत्वंवि ना जडवस्तुगंकापिप्रवृत्तिरितिहिशब्दार्थः तामेवप्रवृत्तिमुदाहरति अहमित्यादिना भोग्यंस्वविपयोपलम्भाभावासम्भवान्नानाविधांविपयोपलब्धिंदर्शयति पश्यामीतिभो गफलमिदानींकथयति सुखमिति विहितप्रतिपिद्धाचरणनिमित्तंसुखदुःखञ्चेत्याह तदर्थमिति नच विमर्शपूर्व्वकंविज्ञानंविनानुष्ठानमित्याह इदमिति इत्याद्याप्रवृत्ति रितिसंम्बन्धः साचप्रवृत्तिःसर्वादृक्कर्मत्वमुररीकृत्यैवविद्यणोतिइत्युक्तंनिगमयति अ वगीतीति तत्रैवचप्रवृत्तेरवसानमित्याह अवगतिरवसानइति परस्याध्यक्षत्वमात्रेणज गद्वेष्टेत्यत्रप्रमाणमाह योऽस्येतिअस्यजगतोयोध्यक्षोनिर्विकारःसपरमेप्रकृष्टेहार्दव्यो

भाषाअनुवाद

सोईकहतेहैंकिअधिष्ठाताकारणस्वरूपमेरेवलसे यहप्रकृतिचराचरविश्वको वारवारउत्पन्नकरतीहै तात्पर्ययहकिमेरीसान्निध्यसे प्रकृतिसृष्टिकरनेकोसमर्थहो तीहै इससे हमको कर्तृत्व औ उदासीनत्व दोनोअसङ्गतनहींहैं क्योंकियह मायाहमारेसहारेविनअसमर्थहै अर्थात् आपअकेलीकुछनहींकरसकतीहै १०

अवजानन्तिमांमूढा मानुषीन्तनुमाश्रितं परंभावमजानन्तो ममभूतमहेश्वरं ११

## शाङ्करभाष्यं

एवंमांनित्यशुद्धमुक्तस्वाभावंसर्व्वजन्तूनामात्मानमपिसन्तं अवेति अवजानन्त्यव ज्ञांपरिभवंकुर्व्वन्ति मांमूढाअविवेकिनोमानुषींमनुष्यसम्बन्धिनींतनुंदेहमाश्रितंम नुष्यदेहेनव्यवहरन्तमित्येतत्परंप्रकृष्टंभावंपरमात्मतत्वमाकाशकल्पमाकाशादप्य न्तरंतममजानन्तोममभूतमहेश्वरंसर्व्वभूतानांमहान्तमीश्वरंस्वमात्मानंततश्चतस्य म मावज्ञानभावनेनहताःवराकास्ते ११

## आनन्दगिरिकृतटीका।

स्थितोनिर्विकारःनपरमेप्रकृष्टेहार्द्देव्योम्निस्थितोदुर्व्विज्ञेयइत्यर्थः ईश्वरस्यसाक्षि त्त्वमात्रेणस्रष्टृत्वे स्थिते फलितमाह ततश्चेति किंनिमित्तापरस्येयंसृष्टिर्नतावद्भो गार्थापरस्यपरमार्थतो भोगासम्बन्धित्वात्तस्यसर्व्वसाक्षीभूतचैतन्यमात्रत्वान्नचान्यो भोक्ता चेतनान्तराभावादीश्वरस्यैकत्वादचेतनस्याभोक्तृत्वान्नचसृष्टिरपवर्गार्थतद्वि रोधित्वान्नैवंप्रश्नोवा तदनुरूपंप्रतिवचनंवायुक्तं परस्यमायानिबन्धनेसर्गेतस्यानव काशत्वादित्यर्थः परस्यात्मनोदुर्व्विज्ञेयत्वेश्रुतिमुदाहरति कोऽद्धेति तस्मिन्प्रवक्तापि संसारमण्डलेनास्तीत्याह कइहेति जगतःसृष्टिकर्त्तृत्वेनपरस्यज्ञेयत्वमाशंक्याकूट स्थात्ततोनसृष्टिर्जातेत्याह कुतइति नहीयंविविधासृष्टिरन्यस्मादपिकस्माच्चिदुपप द्यतेअन्यस्यवस्तुनोभावादित्याह कुतइति कथं तर्हिसृष्टिरित्याशंक्याज्ञानाधीनेत्या ह दर्शितञ्चेति १० सर्व्वाध्यक्षःसर्व्वभूताधिवासोनित्यमुक्तस्चेत्त्वं तर्हिकिमितित्वा

## स्वामिकृतटीका

तदेवोपपादयति मयेति मयाअध्यक्षेणअधिष्ठात्रानिमित्तभूतेनप्रकृतिःसचरा चरंविश्वंसूयतेजनयति अनेनमदधिष्ठानेनहेतुनाइदंजगद्विपरिवर्त्ततेपुनःपुनर्जाय ते सन्निधिमात्रेणाधिष्ठातृत्वात् कर्त्तृत्वमुदासीनत्वञ्चाविरुद्धमितिभावः १०

## भाषा अनुवाद

औरजोकहोकिऐसेजोपरमेश्वरतुम तोतुमकोकोईकोईआदरनहींक्योंकरते हैं तोदोश्लोकसेकहतेहैं किसर्बभूतकेईश्वरजोहम सोहमरा परमतत्त्व जोलोग नहींजानतेतेईमूढ हमरानिरादरकरतेहैं इसमेकारणयहहै किहमविशुद्धस स्वरूपहोयकेभी अपनेभक्तोंकीइच्छावशते मनुष्यकेसमानशरीरधरतेऔतैसेही कर्म्मभीकरतेहैं इसीसेलोग अपनेसमान हमकोभीमानतेहैं ११

शाङ्करभाष्यं।

कथंमोघाशेति मोघाशाव्रथाआशाआशिषो।येषांतेमोघाशास्तथामोघकर्म्माणो यानिचाग्निहोत्रादीनि तैरनुष्ठीयमानानिकर्म्माणि तानिचतेषांभगवत्परिभवात् स्वात्मभूतस्यावज्ञानान्मोघान्येवनिःफलानिकर्म्माणिभवन्तीति मोघकर्म्माणस्तथामोघ ज्ञानाःमोघंनिःफलंज्ञानंयेषांतेमोघज्ञानाःज्ञानमपितेषांनिःफलमेवस्यात्विचेतसो विगतविवेकाश्चतेंभवन्तीत्यभिप्रायःकिञ्चतेभवन्तिराक्षसींरक्षसांप्रकृतिंस्वभावं आसुरीमसुराणाञ्चप्रकृतिंमोहनीमोहकरींदेहात्मवादिनींश्रिताआश्रिताःछिन्धिभिन्धिपिवखादपरस्वमपहरेत्येवंवदनशीलाःक्रूरकर्म्मकुर्वाणाभवन्तीत्यर्थः असुर्य्यानाम तेलोकाइतिश्रुतेः १२ येपुनःश्रद्दधानाःभगवद्भक्तिलक्षणेमोक्षमार्गेप्रवृत्ताःमहा

आनन्दगिरिकृतटीका

मेवात्मत्वेनभेदेनवासर्वेनभजन्तेतत्राहएवमिति विपर्य्यस्तबुद्धित्वंभगवदवज्ञायांकारणमित्याह मूढाइति भगवतोमनुष्यदेहसम्बन्धात्तस्मिन्विपर्यासःसम्भवतीत्याह मानुषीमिति अस्मदादिवद्देहतादात्म्याभिमानंभगवतोव्यावर्त्तयति मनुष्येतिभगवत्तामवजानतामविवेकमूलाज्ञानं हेतुमाह परमिति ईश्वरावज्ञानात्किंभवतीत्यपेक्षायां तदवज्ञानप्रतिबन्धबुद्धयःशोच्याभवन्तीत्याह ततश्चेति भगवदवज्ञानादेव हेतोरवजानन्तस्ते जन्तवोवराकाः शोच्याःसर्वपुरुषार्थशून्याःस्युरितिसम्बन्धः तत्र हेतुंसूचयति तस्येति प्रकृतस्यभगवतोऽवज्ञानमनादरणंनिन्दनम्बातस्यभावनंपौनःपुन्यं तेनहतास्तज्जनितदुरितप्रभावात्प्रतिबद्धबुद्धयइत्यर्थः ११

भगवन्तमवजानतांप्रश्नपूर्वकंशोच्यत्वंविशदयति कथमिति भगवन्निन्दापराणांनकाचिदपिप्रार्थनार्थवतीत्याह वृथेति ननुभगवन्तंनिन्दतोपिनित्यंनैमित्तिकञ्च कर्म्मानुतिष्ठन्तितदनुष्ठानाच्चतेषांप्रार्थनाःसार्थाभविष्यन्तीतिनेत्याहतथेति परिभवस्तिरस्करणंअवज्ञानमनादरणं तेषामपिशास्त्रार्थविज्ञानवतांतद्वाराप्रार्थनार्थवत्त्वमित्याशंक्याह तथामोघेति तथापियौक्तिकविवेकवशात्तत्प्रार्थनासाफल्यमित्याशंक्याह विचेतसइति नकेवलमुक्तविशेषणवत्त्वमेवतेषांकिन्तुवर्त्तमानदेहपातादनन्तरंतत्तदतिक्रूरयोनिप्राप्तिश्चानिश्चितेत्याह किञ्चेति मोहकारीमिति प्रकृतिद्वये

स्वामिकृतटीका।

नन्वेवंभूतंपरमेश्वरंत्वांकिमिति केचिन्नाद्रियन्तेतत्राह अवजानन्तीतिद्वाभ्यां सर्वभूतमहेश्वररूपंमदीयंपरंभावंतत्त्वमजानन्तो मूढामूर्खामामवजानन्ति मामवमन्यन्ते अवज्ञानेहेतुःशुद्धसत्त्वमयीमपितनुंभक्तेच्छावशान्मनुष्याकारामाश्रितवन्तमिति ११

मोघाशामोघकर्म्माणोमोघज्ञानाविचेतसः राक्षसीमासुरीञ्चैवप्रकृतिंमोहनीं श्रिताः १२

### शाङ्करभाष्यं

त्मानइति महात्मानस्तुअक्षुद्रचित्तामामीश्वरंपार्थदैवींदेवानांप्रकृतिं शमदमदयाश्रद्धादिलक्षणामाश्रिताःसन्तोभजन्तिसेवन्तेऽनन्यमनसोऽनन्यचित्ताज्ञात्वामां भूतादिंभूतानांआश्रयमादिकारणं वियदादीनांप्राणिनांचादिकारणमाश्रयमव्ययम् १३

### आनन्दगिरिकृतटीका

पितुर्त्वंविशेषणं छिन्धिभिन्दिपिबखादेतिप्राणिहिंसारूपोरक्षसां स्वभावोऽसुराणां स्वभावस्तुनदेहिनोजुहुधि परस्वमेवापहरेत्यादिरूपःमोहोमिथ्याज्ञानं तत्तमेव स्फुटयति छिन्धीति १२ केपुनर्भगवन्तंभजन्ते तानाह येपुनरिति महान् प्रकृष्टोयज्ञादिभिःशोधितआत्मासत्त्वं येषामितिव्युत्पत्तिमाश्रित्याह अक्षुद्रेति तुशब्दोऽवधारणे प्रकृतिंविशिनष्टि शमेति अनन्यस्मिन्प्रत्यग्भूतेमय्यपरस्मिन्नेवमनो येषामिति व्युत्पत्याव्याकरोति अनन्यचित्ताइति अज्ञातेसेवानुपपत्तेः शास्त्रोपपत्तिभ्यामादौज्ञात्वाततःसेवन्तेइत्याह ज्ञात्वेति अव्ययमविनाशिनं १३ भजनप्र

### स्वामिकृतटीका।

किञ्च मोघाशाइति मत्तोऽन्यद्देवतान्तरंक्षिप्रंफलंदास्यतीत्येवंभूता मोघानिःफलैवाशायेषांतेअतएवमद्विमुखत्वान्मोघानिनिःफलानिकर्म्माणियेषांते मोघमेव नानाकुतर्काश्रितंशास्त्रज्ञानंयेषांतेंअतएवविचेतसोविक्षिप्तचित्ताःसर्वत्रहेतुः राक्षसींतामसींहिंसादिप्रचुरां आसुरीञ्चराजसींकामदर्पादिबहुलांमोहनीं बुद्धिभ्रंशकरींप्रकृतिंस्वभावंश्रिताःआश्रिताःसन्तो मामवजानन्तीतिपूर्व्वेणैवान्वयः १२

केतर्हित्वामाराधयन्तीत्यतआह महात्मानइति महात्मानःकामाद्यनभिभूतचित्ताःअतएवअभयंसत्त्वसंशुद्धिरित्यादिनावक्ष्यमाणांदैवींप्रकृतिंस्वभावमाश्रिताःअतएवमद्व्यतिरेकेणनास्त्यन्यस्मिन्मनोयेषांतेतुभूतादिंजगत्कारणंअव्ययंनित्यञ्चमां ज्ञा

### भाषा अनुवाद

औरजोमनुष्यहमसेभिन्नऔरदेवतोंसे क्षिप्रशीघ्रफलदेयंगेऐसीनिःफलआशाकरतेहैं औरहमसेविमुख जेफलकेहेतुकर्म्मकरेहैं औरजिनके शास्त्रसेजोज्ञानसोनानाकुतर्कयुक्तहै वेईसकलविचेतसकहेविक्षिप्तचितलोग अनर्थकेहेतुहिंसादितामसकर्म्मतथाकामअभिमानसेभरीपूरीजोराजसीबुद्धितिसकेआश्रितहोयहमकोनजानिहमारानिरादरकरतेहैं अभिमानकरते औरजीवमारते हैं १२

महात्मानस्तुमांपार्थदैवींप्रकृतिमाश्रिताः भजन्त्यनन्यमनसोज्ञात्वाभूतादिमव्ययं१३
सततंकीर्त्तयन्तोमांयतन्तश्चदृढ़व्रताः नमस्यन्तश्चमांभक्त्यानित्ययुक्ताउपासते १४

## शाङ्करभाष्यं।

कथंसततमिति सततंसर्व्वदाभगवन्तंब्रह्मस्वरूपंमांकीर्त्तयन्तोयजन्तश्चेन्द्रियोपसंहारशमदमदयाहिंसादिलक्षणैःधर्म्मैःप्रयतन्तश्च दृढ़व्रतादृढंस्थिरमचाल्यंव्रतंयेषांतेदृढ़व्रतानमस्यन्तश्चमांहृदयेशयमात्मानं भक्त्यानित्ययुक्ताःसन्तउपासतेसेवन्ते १४ तेकेनकेनप्रकारेणोपासतइत्युच्यते ज्ञानेति ज्ञानयज्ञेनज्ञानमेवभगवद्विषयंयज्ञस्तेनज्ञानयज्ञेनयजन्तःपूजयन्तोमामीश्वरं चान्येऽन्यामुपासनांपरित्यज्य उपासतेतञ्चज्ञानमेकत्वेनएकमेवपरंब्रह्मेति परमार्थदर्शनेनयजन्तउपासते केचिच्चपृथक्त्वेनआदित्यचन्द्रादिभेदेनसएवभगवान्विष्णुरादित्यादिरूपे

## आनन्दगिरिकृतटीका

कारंपृच्छति कथमिति तत्प्रकारमाह सततमिति सर्व्वदेति श्रवणावस्थागृह्यन्ते कीर्त्तनंवेदान्तश्रवणंप्रणवजपश्चव्रतंब्रह्मचर्यादिनमस्यन्तोमांप्रति चेतसा प्रह्वीभवन्तो भक्त्यापरेणप्रेम्णानित्ययुक्ताःसन्तःसदासंयुक्ताः १४

## स्वामिकृतटीका

त्वाभजन्ति १३ तेषांभजनप्रकारमाह सततमिति द्वाभ्यां सततंसर्व्वदास्तोत्रमन्त्रादिभिःकीर्त्तयन्तः केचिन्मामुपासतेसेवन्तेदृढ़ानिव्रतानिनियमायेषांतादृशाःसन्तोयतन्तश्चऐश्वर्य्यज्ञानादिपुप्रयत्नंकुर्व्वन्तःकेचिद्भक्त्यानमस्यन्तश्चप्रणमन्तः अन्येनित्ययुक्ताअनवरतंअवहिताःसेवन्तेभक्त्येतिनित्ययुक्ताइतिचकीर्त्तनादिष्वपिद्रष्टव्यं१४

## भाषाअनुवाद

तोतुमारीआराधनाकौनकरतेहैं जोयहपूछोतोकहतेहैं किकामादिकसेजिनकाचित्तअवशनहीं ऐसेजोमहात्मालोग वेदैवीप्रकृतिकेआश्रितहोतेहैं इसीसेहमकोछोडिऔरमेंजिनका मननहींहै तेमनुष्यहमकोसमस्तभूतकेआदि कहेजगतकेकारणनित्यस्वरूपजानिकै भक्तिपूर्व्वकआराधनकरतेहैं १३ अबभक्तोंकेभजनकाप्रकारदोश्लोकमेंकहतेहैं किसर्व्वदास्तोत्रऔमंत्रसेकोईमेरा कीर्त्तनकरतेंहुये मेरीउपासनाकरतेहैं औरकोईदृढ़नियमकरकेऐश्वर्य्यऔ ज्ञानमेयत्नकरतेंहुयेमेरेउपासकहोतेहैं औरकोईभक्तिपूर्व्वकप्रणतहोय मेरासेवनकरतेहैं ऐसेनित्ययुक्तकहे सावधान मेरेमेंतत्परहोय मेरेभक्त मुझे सेवतेहैं १४

ज्ञानयज्ञेनचाप्यन्येयजन्तोमामुपासते एकत्वेनपृथक्त्वेनबहुधाविश्वतोमुखम् १५
अहंक्रतुरहंयज्ञ:स्वधाहमहमौषधं मन्त्रोहमहमेवाज्यमहमग्निरहंहुतम् १६

शाङ्करभाष्यं

णावस्थितइत्युपासतेकेचिद्बहुधावस्थित:स एव भगवान्सर्वतोमुखोविश्वरूपइति तंविश्वरूपंसर्वतोमुखं बहुधा बहुप्रकारेणोपासते १५ यदिबहुभि:प्रकारैरु पासतेकथंत्वामेवोपासतइत्यतआह अहमिति अहंश्रौतकर्मभेदोऽहमेवाहंयज्ञ: स्मार्त्त:किञ्चस्वधान्नमहंपितृभ्योयद्दीयतेतत्स्वधा तथाअहमौषधं सर्वप्राणिभिर्यद द्यतेतदौषधशब्दवाच्यव्रीहियवादिसाधनमथवा स्वधेति सर्वप्राणिसाधारणमन्न मौषधमिति व्याध्युपशमार्थंभेषजंमन्त्रोहंयत्पितृभ्योदेवताभ्यश्च हविर्दीयतेऽहमे वाज्यंहविश्वाहमग्निर्यस्मिन्हूयते सोप्यग्निरहमेवाहंहुतंहवनंकर्मच १६

आनन्दगिरिकृतटीका।

उपासनप्रकारभेदप्रतिपित्सयापृच्छति तेकेनेति तत्प्रकारभेदोदीरणार्थं श्लो कमवतारयति उच्यतइति इज्यतेपूज्यतेपरमेश्वरोनेनेतिप्रकृतेज्ञानेयज्ञशब्द: ईश्व रञ्चेति चकारोवधारणे देवतान्तरध्यानत्यागमपिशब्दसूचितंदर्शयति अन्यामिति अन्येचब्रह्मनिष्ठामिति यावत् ज्ञानयज्ञमेवविभजते तच्चेति उत्तमाधिकारिणामुपा सनमुक्त्वा मध्यमानामधिकारिणामुपासनप्रकारमाह केचिच्चेति तेषामेवअहंयज्ञ: स्मार्त:किञ्चस्वधाहंपितृभ्योयद्दीयतेतत्स्वधा तथासमौषधंसर्वप्राणिभिर्यदद्यते प्र कारान्तरेणोपासनमुदीरयति केचिदिति बहुप्रकारेणास्वरादित्यादिरूपेणेतियाव त् १५ भगवदेकविषयमुपासनंतर्हिनसिध्यतीति शङ्कते यदीति प्रकारभेदमादा यध्यायन्तोपिभगवन्तमेवध्यायन्तितस्यसर्वात्मत्वादित्याह अतआहेति क्रतुयज्ञ

भाषाअनुवाद

औरचराचरमात्रश्रीकृष्णऐसाजोआत्मदर्शनसोईज्ञानऔसोईयज्ञइसप्रकारज्ञान यज्ञसेकितनेहमकोपूजते हैं देखोकोईअभेदभावसेऔकोईहमभगवानकेदासइस भेदभावसेउपासनाकरतेहैं औरकोईहमकोब्रह्मारुद्रआदिरूपसमझकरसेवते हैं १५ अवअपनीसर्वरूपता चारिश्लोकसेकहतेहैं किमैहीक्रतुकहेवेदोक्तअग्नि ष्टोमआदियज्ञ औरयज्ञकहेधर्मशास्त्रोक्तजोपञ्चयज्ञवालवैश्वदेवादि औस्वधाक हेश्राद्धऔर औषधअर्थात फलहोनेसेजोपकिजाय इससेअन्नभीआयगये औमंत्र औआज्यकहेघृतआदि औअग्निकहेयज्ञाग्नि औहोम यहजोकुछहैसोहमहैं १६

पिताहमस्य जगतो माता धाता पितामहः वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च १७
गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत् प्रभवः प्रलयः स्थानं निधानं बीजमव्ययं १८

## शाङ्करभाष्यम्।

किञ्च पितेति पिता जनयिता हमस्य जगतो माता जनयित्री धाता कर्म्मफलस्य प्राणिभ्यो विधाता पितामहः पितुः पिता वेद्यं वेदितव्यं पवित्रं पावनं ओङ्कार ऋक् साम यजुरेव च १७
किञ्च गतिरिति गतिः कर्मफलं भर्त्ता पोष्टा प्रभुः स्वामी साक्षी प्राणिनां कृताकृतस्य निवासो यस्मिन् प्राणिनो निवसन्ति शरणं आर्त्तानां प्रपन्नानामार्त्तिहरः सुहृत् प्रत्युपकारानपेक्षः उपकारी प्रभव उत्पत्तिर्जगतः प्रलयः प्रलीयते यस्मिन्निति प्रलयः तथा

## आनन्दगिरिकृतटीका।

द्वयोरनयोरपौनरुक्त्यं दर्शयन् व्याचष्टे श्रौतइति क्रियाकारकफलज्ञानं भगवदतिरिक्तं नास्तीति समुदयार्थः १६ इतश्च भगवतः सर्व्वात्मकत्वमनुमन्तव्यमित्याह किञ्चेति पवित्रं पूयतेऽनेनेति व्युत्पत्त्या परिशुद्धेकारणं पुण्यं कर्म्मेत्याह पावनमिति वेदितव्ये ब्रह्मणि वेदनसाधनमोङ्कारः तत्र प्रमाणमृगादि च चकारादथर्व्वाङ्गिरसो गृह्यन्ते १७

## स्वामिकृतटीका।

किञ्च ज्ञानेति वासुदेवः सर्वमित्येवं सर्व्वात्मदर्शनं ज्ञानं तदेव यज्ञस्तेन ज्ञानयज्ञेन मां यजन्तः पूजयन्तोऽप्युपासते तत्रापि केचिदेकत्वेनाभेदभावनया केचित् पृथग्भावनया दासोऽहमिति केचित्तु विश्वतोमुखं सर्व्वात्मकं मां बहुधा ब्रह्मरुद्रादिरूपेणोपासते १५
सर्वात्मतां प्रपञ्चयति अहंक्रतुरिति चतुर्भिः क्रतुः श्रौतोऽग्निष्टोमादिः यज्ञः स्मार्त्तः पञ्चयज्ञादिः स्वधा पितृभ्यो दीयमानान्नादिः औषधं ओषधिप्रभवमन्नं मेषजम्वा मन्त्रो याज्यपुरोधोवाक्यादिः आज्यं होमादिसाधनं अग्निराहवनीयादिः हुतं होमः एतत्सर्वमहमेव १६

## भाषाअनुवाद

और इस जगत के पिता माता तथा धाता कहे कर्मफलदाता औ पितामह तथा वेद्य कहे यन्तु औ पावन कहे शुद्ध करनेवाले औ ओङ्कार तथा ऋक यजुर साम अथर्व वेद यह सब मैं हीं हौं १७ और मैं हीं गति कहे प्राप्य कर्मफलरूप औ भर्ता कहे पोषण कर्ता औ प्रभु नियामक तथा साक्षी शुभ अशुभ के द्रष्टा औ निवास भोगस्थान तथा शरण कहे रक्षक एवं सुहृत् कहे हेतुरहित हितकारी प्रभव अर्थात् जगत के उत्पन्नकर्त्ता प्रलय कहे संहर्त्ता स्थान कहे विश्व के आधार और निधान कहे लयस्थान औ बीज कहे कारण औ अव्यय कहे अविनाशी मैं हीं हौं १८

शाङ्करभाष्यं

स्थानंतिष्ठत्यस्मिन्निति निधानंनिक्षेपःकालान्तरोपभोग्यंप्राणिनांबीजंप्ररोहकारणं प्ररोहधर्म्मिणामव्ययं यावत्संसारभावित्वादव्ययं नह्यबीजंकिञ्चित् प्ररोहति नित्यञ्चप्ररोहदर्शनाद्बीजसन्ततिर्नव्येतीत्येवगम्यते १८

आनन्दगिरिकृतटीका

भगवतासर्वात्मकत्वेहेत्वन्तरमाह किञ्चेति गम्यतइति प्रकृतिविलयपर्य्यन्तं कर्म्मफलंगतिरित्याह कर्मेति पोष्टाकर्म्मफलस्यैवप्रदाता कार्य्यकारणप्रपञ्चस्याधिष्ठानमित्याह निवासइति शीर्यते दुःखमस्मिन्निति व्युत्पत्तिमाश्रित्याह शरणमिति प्रभवत्यस्माज्जगदिति व्युत्पत्तिमादायोक्तं उत्पत्तिरिति कारणस्यकथमव्ययत्वमित्याशंक्याह यावदिति कारणान्तरेणापिकार्यंकदाचिदुदेष्यति किंकारणेत्याशंक्याह नहीति माभूत्तर्हिसंसारदशायामेवकार्य्योत्पत्तिरित्याशंक्याह नित्यञ्चेति कारणव्यक्तेर्नाशमङ्गीकृत्य तदन्यतमव्यक्तिशून्यत्वंपूर्वकालस्यनास्तीति सिद्धवत्कृत्यविशिनष्टि बीजेति १८

इतश्चसर्वात्मत्वेभगवतोनविवदितव्यमित्याह किञ्चेति आदित्याज्जायते वृष्टिरिति स्मृतिमवष्टभ्यव्याचष्टे कैश्चिदिति वर्षोत्सर्गनिग्रहावेकस्यैकस्मिन्कालेविरुद्धौइत्याशंक्याह अष्टभिरिति ऋतुभेदेनवर्षस्यनिग्रहोत्सर्गावेककर्त्तृकावविरुद्धावित्यर्थः यस्यकारणस्यसम्बन्धित्वेनयत्कार्य्यमभिव्यज्यते तदिहसदित्युच्यते कारणसम्बन्धेनानभिव्यक्तंकारणमेवअनभिव्यक्तनामरूपमसदिति व्यवह्रियन्तेतदेतदाह सदेति शून्यवादंव्युदस्यति नपुनरिति भगवतोऽत्यन्तसत्वेकार्यकारणकल्पनानिरधिष्ठाना नतिष्ठेदित्यर्थः. तर्हियथाश्रुतंकार्यस्यसत्त्वंकारणस्यचासत्त्वमास्थेयमित्याशंक्य वाशब्देननिषेधति कार्य्येति तर्हिकार्य्यस्यात्यन्तिकंसत्त्वंवाचारम्भणश्रुतेर्नामो

स्वामिकृतटीका

किञ्च पितामहस्येति धाताकर्मफलविधाताविद्यंज्ञेयंवस्तुपवित्रंशोधकंप्रायश्चित्तात्मकंवा ओङ्कारःप्रणवःऋगादयोवेदाश्चाहमेव स्पष्टमन्यत् १७ किञ्च गतिरिति गम्यतइतिगतिः फलंभर्त्तापोषणकर्ताप्रभुर्नियन्तासाक्षीशुभाशुभद्रष्टानिवासो भोगस्थानंशरणंरक्षकःसुहृत् हितकर्त्ताप्रकर्षेणभवत्यनेनेति प्रभवःस्रष्टाप्रलीयतेऽनेनेतिप्रलयःसंहर्त्ता तिष्ठन्त्यस्मिन्निति स्थानमाधारः निधीयतेऽस्मिन्निति निधानंलयस्थानं बीजंकारणं तथाप्यव्ययमविनाशि नतुव्रीह्यादिबीजवद्विनश्वरमित्यर्थः १८

तपाम्यहमहंवर्षंनिगृह्णाम्युत्सृजामिच अमृतञ्चैवमृत्युश्चसदसच्चाहमर्जुन १९

## शाङ्करभाष्यं

किञ्च तपामीति तपाम्यहमादित्योभूत्वा कैश्चित्रश्मिभिस्तपामि अहंवर्षंकैश्चिद्रश्मिभिरुत्सृजामिउत्सृज्यपुनर्निगृह्णामिकैश्चिद्रश्मिभिरष्टाभिर्मासैः पुनरुत्सृजामिप्रावृषिअमृतञ्चैवदेवानांमृत्युश्चमर्त्यानां यत्यस्ययत्सम्बन्धितयाविद्यानांतद्विपरीतंअसच्चैवाहंअर्जुन नपुनरत्यन्तमेवासद्भगवान्स्वयंकार्यकारणेवासदसतीयेपूर्वोक्तैःनिवृत्तिप्रकारैरेकत्वपृथक्त्वादिविज्ञानैर्यज्ञैर्मां पूजन्तउपासते ज्ञानविदस्तेयथाविज्ञानं मामेवप्राप्नुवन्ति १९

येपुनरज्ञाःकामकामाः त्रैविद्ये ति त्रैविद्याऋग्यजुःसामविद याज्ञिकाःयेषांतेमांवस्वादिदेवरूपिणंइष्ट्वासम्पूज्ययज्ञशेषंसोमपाःसोमंपिबन्तीतिसोमपास्तेनैव सोमपानेनतेपूतपापाःशुद्धकिल्विषायज्ञैरग्निष्टोमादिरिष्ट्वापूजयित्वास्वर्गतिंस्वर्गगमनंस्वरेवगतिः स्वर्गतिस्तांप्रार्थयन्तेयाचयन्तेतेचपुण्यंपुण्यफलमासाद्यसम्प्राप्यसुरेन्द्रलोकं शतक्रतोःस्थानंअश्नन्तिभुञ्जते दिव्यान्दिविभवान्अप्राकृतान्देवभोगान् देवानांभोगांस्तान् २० ते तमिति तेतंभुक्त्वास्वर्गलोकंविशालंविस्तीर्णंक्षीणे

## आनन्दगिरिकृतटीका

तस्यात्यन्तिकंअसत्त्वंकुतस्तत्खल्वित्यादिश्रुतेरित्यर्थः उक्तैर्ज्ञानयज्ञैर्भगवदभिध्यानाभिनिविष्टबुद्धीनांकिंफलमित्याशंक्य सद्योवा क्रमेणवा मुक्तिरित्याह येइति १९

## स्वामिकृतटीका ।

किञ्च तपाम्यहमिति आदित्यात्मनास्थित्वानिदाघकालेतपामि जगतस्तापंकरोमिवृष्टिसमयेचवर्षंसमुत्सृजामिविमुञ्चामि कदाचित्तुवर्षंनिगृह्णामिआकर्षामिअमृतंजीवनंमृत्युश्चनाशःसत्स्थूलंदृश्यंअसत्सूक्ष्ममदृश्यंएतत्सर्वमहमेवेति एवंमत्वामामेवबहुधोपासते इति पूर्वेणैवान्वयः १९

## भाषाअनुवाद

औरग्रीष्मकालमेंसूर्यरूपमैंहींतापदेताहूं औवर्षाकालमेंजलवृष्टिभीहमीकरते हैं औतद्याकोईसमैमेंजलकिरणोंसेखींचतें औकभीफेरिजलकोछोडतेंभीहमींहैं अमृतकहेजीवन मृत्युकहेमरणऔरसतकहेपृथिवीआदिस्थूलपदार्थऔअसत् कहेसूक्ष्मवस्तु रूपादिमात्राभीहेअर्जुन हमहींकोजानो इसीसेलोगनानारूपहमारी उपासनाकरते हैं १९

त्रैविद्यामांसोमपाःपूतपापायज्ञैरिष्ट्वास्वर्गतिंप्रार्थयन्ते तेपुण्यमासाद्य सुरेन्द्रलोक मश्नन्तिदिव्यान्दिविदेवभोगान् २०

शाङ्करभाष्यं ।

पुण्ये मर्त्यलोकमिमंविशन्त्याविशन्ति एवंहियथोक्तेनप्रकारेणत्रयीधर्मंकेवलंवैदिकं कर्म्मानुप्रपन्नास्तेगतागतं गतञ्चागतञ्चगतागतंगमनागमनंकामकामाः कामंका मयन्त इतिकामकामा लभन्ते गतागतमेव नतुस्वातन्त्र्यं क्वचिल्लभन्तइत्यर्थः २१

आनन्दगिरिकृतटीका

भगवद्भक्तानामपिनिःकामानामेवमुक्तिरितिदर्शयितुंसकामानांपुंसां संसार मवतारयति येपुनरिति तिस्रोविद्याअधीयन्तेविदन्तीतिवा तेत्रैविद्या वेदविदस्त दाह ऋगिति वस्वादीत्यादिशब्देनसवनद्वयेशानादित्यारुद्राश्च गृह्यन्तेशुद्धकिल्विषा निरस्तपापाइतियावत् २० तर्हिस्वर्गप्राप्तेरपिभगवत्प्राप्तितुल्यतामित्याशंक्याह

स्वामिकृतटीका ।

तदेवमवजानन्ति मां मूढाइत्यादिश्लोकद्वयेन क्षिप्रफलाशयादेवतान्तरं यज न्तो मां नाद्रियन्तइत्यभक्ताःदर्शिताः महात्मानस्तुमांपार्थेत्यादिनाचभक्ताउक्तास्तत्रै कत्वेन पृथक्त्वेन वा ये परमेश्वरंनभजन्तितेषांजन्ममृत्युप्रवाहोदुर्वारइत्याह त्रै विद्याइति द्वाभ्यां ऋग्यजुःसामलक्षणास्तिस्रोविद्यायेषांतेत्रिविद्यास्त्रिविद्याएव त्रैविद्याःस्वार्थेऽण् तिस्रोविद्याअधीयन्ते जानन्तीति वा त्रैविद्यावेदत्रयोक्तकर्म्मपरा इत्यर्थःवेदत्रयविहितैर्यज्ञैर्मामिष्ट्वाममैवरूपंदेवतान्तरमित्यजानन्तोऽपिवस्तुत इन्द्रा दिरूपेणमामेवेष्ट्वासंपूजयज्ञशेषंसोमंपिबन्तीतिसोमपास्तेनैव पूतपापाः शोधित कल्मषाःसन्तःस्वर्गतिंस्वर्गंप्रतिगतिंयेप्रार्थयन्तेतेपुन्यफलरूपंसुरेन्द्रलोकंस्वर्गमासा द्य प्राप्य दिविस्वर्गेदिव्यानुत्तमान्देवानांभोगानश्नन्तिभुञ्जते २०

भाषा अनुवाद ।

मूढमेराअनादरकरतेऔरमहात्मामेरीभजनकरतेअसेपूर्व्वमे भक्तअभक्तकेल क्षणकहिके अवमूढोंकाजन्ममृत्युरूपसंसारप्रवाहदुर्निवारहैयहदोस्लोकसेकहते हैं किजोमनुष्यऋक्यजुःसामवेदपढतेवेत्रैविद्यअर्थात्वेदोक्तकर्म्मपरायणयज्ञके द्वा रा सर्व्वरूपजोमैंहूं सो मेरीहीपूजाकरिऔरसोमलताकारसपीकरपूतपापहोयस्वे च्छासेस्वर्गलोककोजाते औरपुण्यफलरूपस्वर्गकोप्राप्तहोय वहांके उत्तमदेवभोग्य वस्तुवोंकाभोगकरतेहैं २०

तेतंभुक्त्वास्वर्गलोकंविशालंक्षीणेपुण्येमर्त्यलोकंविशन्ति एवंत्रयीधर्म्ममनुप्रपन्ना गतागतंकामकामालभन्ते २१

## शाङ्करभाष्यं

येपुनःनिःकामाःसम्यग्दर्शिनःअनन्याइति अनन्याअपृथग्भूताःपरंदेवं नारायणं आत्मत्वेनगताःसन्तश्चिन्तयन्तोमांयेजनाःसंन्यासिनःपर्युपासतेतेषांपरमार्थदर्शिनां नित्याभियुक्तानांसततभियोगिनांयोगक्षेमंयोगोऽप्राप्तस्यप्रापनं क्षेमस्तद्रक्षणं तदुभयंवहाम्यहं ज्ञानीत्वात्मैवमेमतंसचममप्रियोयस्मात्तस्मात्तेममात्मभूताःप्रियाश्चेति नन्वेषामपिभक्तानांयोगक्षेमंवहत्येवभगवान्सत्यमेवंवहत्येव किन्त्वयंविशेषोऽन्येमे येभक्तास्तेस्वात्मार्थंस्वयमपियोगक्षेममीहन्ते अनन्यदर्शिनस्तुनात्मार्थं योगक्षेममीहन्ते नहितेजीवितेमरणेवात्मनोगृर्द्धिंकुर्व्वन्ति केवलमेवभगवच्छरणास्ते अतोभगवानेवतेषां योगक्षेमंवहतीति २२

## आनन्दगिरिकृतटीका।

तेतमिति पुण्येस्वर्गप्राप्तिहेताविति यावत्प्रसिद्धोऽर्थोहिशब्दःत्रयाणां होत्रादीनां वेदत्रयविहितानांधर्म्माणांसमाहारस्त्रिधर्म्मंतद्देवत्वैधर्म्यंतदनुप्रपन्नास्तदनुगताइति यावत् कामकामानांगमनागमनद्वाराकामिततत्फलाप्तिश्चेदिष्टमेव चेष्टितमित्याशंक्याह गतेति २१ फलमनभिसन्धायत्वामेवाराधयतां सम्यग्दर्शननिष्ठानामत्यन्तनिःकामानांकथंयोगक्षेमंस्यातामित्याशंक्याह येपुनरिति तेषांयोगक्षेमंवहामीत्युत्तरत्रसम्बन्धः येभ्योऽन्योनविद्यतइतिव्युत्पत्तिमाश्रित्याह अपृथगिति कार्यस्येवकारणेकर्म्मतादात्म्यंव्यावर्त्तयति परमिति अहमेववासुदेवःसर्व्वात्मानमतोऽन्यत्

## स्वामिकृतटीका।

ततश्चतेतमिति तेस्वर्गकामास्तंप्रार्थितंविपुलंस्वर्गलोकंतत्सुखंभुक्त्वाभोगप्रापके पुण्येक्षीणेसति मर्त्यलोकंविशन्ति पुनरप्येवमेववेदत्रयविहितंधर्म्ममनुगताः कामकामा भोगान्कामयमानागतागतंयातायातंलभन्ते २१

## भाषाअनुवाद।

फेरितेईस्वर्गकामीमनुष्य अपनाइष्टविपुल स्वर्गसुखभोगकरिके जबपुण्यक्षीण भईतबफेरिमर्त्त्यलोकमेआवतेहैं अयकारके फेरिवहीवेदत्रयीविहितधर्म्मकर्म करिके भोगकामनाकारीलोग गमनागमनमात्रलाभकियाकरतेहैं अर्थात्कभी नीचेआतेऔकभीउपरजातेरहते हैं २१

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं २२

शाङ्करभाष्यं

नन्वन्या अपि देवतास्त्वमेव नेत्तद्भक्ता अत्वामेव भजन्ते सत्यमेवं ये अन्यदेवताभक्ता अन्यासु देवतासु भक्ता अन्यदेवताभक्ताः सन्तो यजन्ते पूजयन्ति श्रद्धयास्तिक्यबुद्धया अन्विता अनुगतास्ते ऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमविधिरज्ञानं तत्पूर्वकं अज्ञानपू

आनन्दगिरिकृतटीका

किञ्चिदस्तीति ज्ञात्वा तमेव प्रत्यक्षं सदा ध्यायन्त इत्याह चिन्तयन्त इति प्राकृतान्व्यावर्त्य मुख्यानधिकारिणो निर्दिशति संन्यासिन इति पर्युपासते परितः सर्वतो नवच्छिन्नतया पश्यन्तीत्यर्थः नित्याभियुक्तानामित्यनवरतमादरेण ध्याने व्यापृतानामित्याह सतेति योगश्च क्षेमश्च योगक्षेमं तत्रापुनरुक्तमर्थमाह योग इति किमर्थं परमार्थदर्शिनां योगक्षेमं वहामीत्याशङ्क्याह ज्ञानीत्विति अतस्तेषां योगक्षेमं वहामि इति सम्बन्धः सम्यग्दर्शननिष्ठानामेव योगक्षेमं वहति भगवानिति विशेषणममृष्यमाणः शङ्कते नन्विति अन्येषामपि भक्तानां भगवान्योगक्षेमं वहतीत्येतदङ्गीकरोति सत्यमिति त र्हि भक्तेषु ज्ञानिषु च विशेषो नास्तीति पृच्छति किंत्विति तत्र विशेषं प्रतिज्ञाय विवृणोति अयमित्यादिना योगक्षेममुद्दिश्य स्वयमीहन्ते चेष्टां कुर्वन्तीति यावत् आत्मविदां स्वार्थं योगक्षेममुद्दिश्य चेष्टाभावं स्पष्टयति नहीति अन्थिरमेत्र कानामित्येतत् ज्ञानिनां तर्हि सर्वेषामास्थेत्याशङ्क्याह केवलमिति तेषां तदेकशरणत्वे फलितमाह अत इति इतिशब्दो विशेषशब्देन सम्बध्यते २२

स्वामिकृतटीका

मद्भक्तास्तु मत्प्रसादेन कृतार्था भवन्तीत्याह अनन्या इति अनन्या नास्ति मद्व्यतिरेकेणान्यत्काम्यं येषां ते तथाभूता ये जना मां चिन्तयन्तः सेवन्ते तेषां तु नित्याभियुक्तानां सर्वथा मदेकनिष्ठानां योगं धनादिलाभं क्षेमञ्च तत्पालनं मोक्षम्वा तैरप्रार्थितमपि अहमेव वहामि प्रापयामि २२

भाषा अनुवाद।

और हमारे भक्ता जन मेरी कृपा ही से कृतार्थ होते यह कहते हैं कि जिनके हमें छोडि और कोई कामना नहीं है ते ई अनन्यभक्त हमारी सेवा करते हैं नित्याभियुक्त सर्वदा एक मेरे से तत्पर हैं मन जिनका उनका योगक्षेम अर्थात् योग जो धन आदि लाभ औ क्षेम जो प्राप्त वस्तु का रक्षण सो मैं करता हूं अथवा निर्वाण जो मुक्ति यद्यपि वे नहीं चाहते परम उनको मैं अपनी इच्छा से देता हौं २२

येप्यन्यदेवताभक्तायजन्ते श्रद्धयान्विताः तेपिमामेवकौन्तेययजन्त्यविधिपूर्वकं २३
अहंहिसर्वयज्ञानांभोक्ताचप्रभुरेवच नतुमामभिजानन्तितत्वेनातश्च्यवन्तिते २४

## शाङ्करभाष्यं

र्वकंयजन्तइत्यर्थः २३ कस्मात्तेऽविधिपूर्वकंयजन्तइत्युच्यतेयस्मात् अहमिति अहं हिसर्वयज्ञानांश्रौतानांस्मार्त्तानाञ्चसर्वेषांयज्ञानां देवात्मत्वेनभोक्ताचप्रभुरेवचमत् स्वामिकोहियज्ञोऽधियज्ञोऽहमेवात्रेतिचोक्तंतथानतुमामभिजानन्तितत्त्वेन यथावद तश्चाविधिपूर्वकमिष्ट्वायागफलात्च्यवन्तिते २४ ये प्यन्यदेवताभक्तिमत्वेनावि

## आनन्दगिरिकृतटीका

तत्तद्देवतात्मना परस्यैवात्मनःस्थित्यभ्युपगमाद्देवतान्तरपराणामपि भगवच्छर णत्वाविशेषात्तदेकनिष्ठत्वमकिञ्चित्करमितिमन्वानःशङ्कते नन्विति उक्तमङ्गीकृत्य परिहरति सत्यमित्यादिना देवतान्तरयाजिनांभगवद्याजिभ्योविशेषमाह अविधी ति तद्याकरोति अविधिरिति २३ ननुवस्वादित्येन्द्रादिज्ञानपूर्वकमेवतद्भक्तास्तद्या जिनोभवन्तीति कथमविधिपूर्वकंतेषांयजनमिति शङ्कते कस्मादिति देवतान्तरया जिनांयजनमविधिपूर्वकमित्यत्र हेत्वर्थत्वेनश्लोकद्वयमुत्थापयति उच्यतइति सर्वेषां द्विविधानांयज्ञानांवस्वादिदेवतात्वेनाहमेवभोक्ता स्वेनान्तर्यामिरूपेण प्रभुश्चाहमेवे ति प्रसिद्धमेतदितिहिशब्दः प्रभुरेवचेत्युक्तंविवृणोति मत्स्वामिकोहीति तत्रपूर्वा ध्यायगतवाक्यंप्रमाणयति अधियज्ञोहमिति तथापिदेवतान्तरयाजिनांयजनमविधि पूर्वकमिति कुतःसिद्धंतत्राह तथाइति मय्येवयज्ञेषुभोक्तृत्वेप्रभुत्वेचसतीतियावत् तयो

## भाषा अनुवाद

जोकहो किविचारसेतोसर्व्वदेवरूपतुमकोछोडि औरदेवताकौनहै देखो सबरू पजोतुमारेहैं तोइन्द्रादिकेपूजकलोगभीतुमारेहीउपासकहैं फेरिक्याकारणहै जोवेविचारेउपरनीचेगमनागमनकियाकरतेहैं इसपरकहतेहैं किहां अश्रद्धायु क्तजोइन्द्रादिदेवतोंकीआराधनाकरतेहैं सोसत्यहमारीहीसेवाहै परन्तु वैअविधि सेअर्थात्मोक्षकीदेनहारविधिकोछोडिकर पूजनकरतेहैं इसीसेपुनःपुनः संसार पावते हैं २३ पूर्व्वकथितवाक्यकोविस्तारसेकहतेहैं किदेवतास्वरूपयज्ञफलभोक्ता महींहों औरप्रभुकहेयज्ञफलदाताभीमैंहीहूं परइसतरहसे वेदेवपूजकलोगयथा वत्कहेठीकनहींजानतेहैं इसीसेफेरिसंसारगतिकोपावतेहैं औरसर्व्वदेवमेंहम कोअन्तर्यामीरूपदेखि जोमेराअर्चनकरते वेपुनःसंसारगतिको नहींपावतेहैं २४

यान्तिदेवव्रतादेवान्पितॄन्यान्तिपितृव्रताः भूतानियान्तिभूतेज्यायान्तिमद्या
जिनोऽपिमाम् २५

## शाङ्करभाष्यं।

धिपूर्व्वकंयजन्तेतेषामपियागफलमवश्यम्भाविकंकथंयान्तीतियान्तिगच्छन्तिदेवव्रता
देवेषुव्रतंनियमोभक्तिश्चयेषांतेदेवव्रतादेवान्यान्तिपितॄनग्निष्वात्तादीन्यान्तिपितृ
व्रताःश्राद्धादिक्रियापराःपितृभक्ताःभूतानिविनायकमातृगणचतुर्भगिन्यादीनि या
न्तिभूतेज्याभूतानांपूजकाःयान्तिमद्याजिनोमद्यजनशीलावैष्णवाःमामेवयान्तिस
मानेऽप्यायासे मामेवनभजन्तेअज्ञानात्तेन ते अल्पफलभाजोभवन्तीत्यर्थः २५

## आनन्दगिरिकृतटीका।

र्मोक्तृप्रभ्वोर्भावस्तत्वंतेनभोक्तृत्वेनप्रभुत्वेनचमांयथावद्यतोनजानन्ति अतोभोक्तृत्वा
दिनाममाज्ञानान्मयिअनर्पितकर्माणश्चावर्त्तन्तेकर्मफलादित्याह अतश्चेति २४

यद्यन्यदेवताभक्ताभगवत्तत्वाज्ञानात्कर्मफलाच्चवन्तेतर्हितेषांदेवतायजनम
किञ्चित्करमित्याशंक्याह येपीति देवतान्तरयाजिनामनावृत्तिफलाभावेपि तत्तद्दे
वतायागानुरूपफलप्राप्तिर्ध्रौव्यान्नतदकिञ्चित्करमित्यर्थः देवतान्तरयाजिनामावश्य
कंतत्फलमाशङ्कापूर्व्वकमुदाहरति कथमित्यादिना नियमोवल्युपहारप्रदक्षिणप्र

## स्वामिकृतटीका

ननुचत्वद्व्यतिरेकेणवस्तुतोदेवतान्तराभावादिन्द्रादिसेविनोऽपि त्वद्भक्ताएवेति
कथंतेगतागतंलभेरंस्तत्राह येपीति श्रद्धयोपेताःसन्तोयेजनाअन्यदेवता इन्द्रादिरू
पायजन्तेतेऽपिमामेवयजन्तीतिसत्यं किन्तुअविधिपूर्व्वकंमोक्षप्रापकंविधिंविनायज
न्तिअतस्तेपुनरावर्त्तन्ते २३ एतदेवविवृणोति अहमिति सर्व्वेषांयज्ञानांतत्तद्देवता
रूपेणाहमेवभोक्ताप्रभुश्चस्वामीफलदाताप्यहमेवेत्यर्थः एवंभूतंमांतेतत्वेन यथावदभ
भिजानन्ति अतश्चवन्तिप्रच्यवन्तिवपुनरावर्त्तन्तेयेतुसर्व्वदेवतासु मामेवान्तर्यामि
नंपश्यन्तोयजन्ति तेतुनावर्त्तन्ते २४

## भाषा अनुवाद

अववहीउक्तवाक्यकाप्रतिपादनकरतेहैं किजोदेवव्रतकहेइन्द्रादिदेवउपासक
हैं वेलोग देवलोककोजाते औपितृउपासनाकरनेवाले पितृलोककोजाते तथा
भूतसेवाकारी अन्तमेंभूतजोनिपावतेहैं औरजोमेरीपूजाकरैंहै सो मद्याजी
अक्षय परमानन्दस्वरूप हमकोप्राप्तहोते हैं फेरिगमनागमनहोतानहीं २५

पत्रंपुष्पंफलंतोयंयोमेभक्त्याप्रयच्छति तदहंभक्त्युपहृतमश्नामिप्रयतात्मनः २६

## शाङ्करभाष्यं।

नकेवलंमद्भक्तानामनावृत्तिलक्षणमनन्तफलमुक्तंसुखाराधनश्चाहंकथं पत्रमिति पत्रंपुष्पंफलंतोयमुदकंयोमेमह्यंभक्त्याप्रयच्छति तदहंपत्रादिभक्त्योपहृतंभक्तिपूर्वकंप्रापितंभक्त्युपहृतमश्नामिगृह्णामि प्रयतात्मनःशुद्धबुद्धेः २६ यतएवमतःयत् करोषीति यत् करोषियदाचरसिशास्त्रीयंकर्मस्वतःप्राप्तंयदश्नासियत् खादसि यद् जुहोपिहवनंनिर्वर्त्तयसिश्रौतंस्मार्त्तंवा यत् ददासिप्रयच्छसिब्राह्मणादिभ्योहिरण्यमन्नाद्यादि यत्तपस्यसिकौन्तेय तत् कुरुष्वमदर्पणं मत्समर्पणं २७

## आनन्दगिरिकृतटीका।

ह्नीभावादिरित्यर्थः देवतान्तराराधनस्यान्तवत् फलमुक्त्वाभगवदाराधनस्यानन्तफलत्वमाह यान्तीति भगवदाराधनस्यानन्तफलत्वेदेवतान्तराराधनंत्यक्त्वाभगवदाराधनमेवयुक्तमायाससाम्यात्फलातिरेकाच्चेत्यक्ष्यार्थंशंक्याह समानेपीति अत्राराधीनत्वेनदेवतान्तराराधनवतां फलतोन्यूनतांदर्शयति तेनेति २५ अनन्तफलत्वाद्भगवदाराधनमेवकर्त्तव्यमित्युक्तंसुकरत्वाच्चतथेत्याह नकेवलमिति भगवदाराधनस्य

## स्वामिकृतटीका।

तदेवोपपादयति यान्तीति देवेष्विन्द्रादिषुव्रतंनियमोयेषां तेअन्तवतोदेवान्यान्तिअतःपुनरावर्त्तन्तेपितृव्रतयेषांश्राद्धादिक्रियापराणांतेपितॄन्यान्ति भूतेषुविनायकमातृगणादिषुइज्यापूजयेषां तेभूतेज्याभूतानियान्ति मांयष्टुंशीलंयेषांतेमद्याजिनस्तेतुमामक्षयंपरमानन्दस्वरूपंयान्ति २५ तदेवंस्वभक्तानामक्षयफलमुक्त्वाअनायासत्वञ्चस्वभक्तेर्दर्शयति पत्रमिति पत्रपुष्पादिमात्रमपिमह्यंभक्त्यायःप्रयच्छति तस्यप्रयतात्मनःशुद्धचित्तस्यनिष्कामभक्तस्य तत्पत्रपुष्पादिकंभक्त्यातेनोपहृतंसमर्पितमहमश्नामिप्रीत्यागृह्णामि नहिमहाविभूतिपतेःपरमेश्वरस्यममक्षुद्रदेवतानामिवबहुवित्तसाध्ययागादिभिःपरितोषःस्यात्किन्तुभक्तिमात्रेणअतोभक्तेनसमर्पितंयत् किञ्चित् पत्रादिमात्रमपितदनुग्रहार्थमेवाश्नामीतिभावः २६

## भाषाअनुवाद

अवस्वभक्तोंकोअक्षयफलत्वऔस्वभक्तिकासुलभत्वदेखावतेंहैं जोमनुष्यभक्तिपूर्वकपत्रपुष्पफलजलमात्रभी हमेंदेयहै वहविमलचित्तभक्तजनका प्रीतिसेदियाहुआपुष्पादि मैंअतिप्रसन्नहोय ग्रहणकरताहूं इसकाभावयहहै किऔरदेवकेसमानवडीपूजासामग्री हमेंनचाहिये हमकेवलभावभक्तिसे प्रसन्नहोतेंहैं २६

यत्करोषियदश्नासियज्जुहोषिददासियत् यत्तपस्यसिकौन्तेयतत्कुरुष्वमदर्पणं २७

शाङ्करभाष्यं

एवंकुर्वतस्तवयद्भवति तच्छृणु शुभेति शुभाशुभफलैरेवंशुभाशुभेइष्टानिष्टफलेये षांतानिशुभाशुभफलानिकर्माणि तैःशुभाशुभफलैःकर्मबन्धनैरेवंमत्समर्पणंकुर्वन् मोक्ष्यसेसोयंसंन्यासयोगोनामसंन्यासश्चासौमत्समर्पणतयाकर्मकर्तृत्वाद्योगश्चासा विति तेनसंन्यासयोगेनयुक्तआत्मान्तःकरणंयस्यतव सत्वंसंन्यासयोगयुक्तात्मासन्वि मुक्तःकर्मबन्धनैर्जीवन्नेव पतितेचास्मिन्शरीरे मामुपेष्यस्यागमिष्यसि २८

आनन्दगिरिकृतटीका।

सुकरत्वमेवप्रश्नपूर्वकंप्रपञ्चयति कथमित्यादिना यद्विपुष्पादिकंभक्तिपूर्वकंमदर्थमपि तंतेनायंशुद्धचेताःतपस्वीमामाराधयतीत्यहमवधारयामीत्याह पत्रमित्यादिना २६ तदाराधनस्यसुकरत्वेतदेवावश्यकमित्याह यदिति स्वतःशास्त्राद्वेतिःप्राप्तंगमनादी तियावत् यदश्नासि यंकिञ्चिद्भोगंभुंक्षे हवनस्य स्वतस्त्वं वारयति श्रौतमिति मत्स मर्पणंतत् सर्वंमह्यं समर्पयेत्यर्थः २७ किमतोभवति तदाह एवमिति भगवदर्प णबुद्ध्यासर्वकर्मकुर्वतोजीवन्मुक्तस्यप्रारब्धकर्मावसानेविदेहकैवल्यमावश्यकमित्याह शुभेत्यादिना भगवदर्पणकारणान्मुक्तिः संन्यासयोगाच्चेति साधनद्वयशङ्कांशात यति सोयमिति २८

स्वामिकृतटीका।

नचफलपुष्पादिकमपियज्ञार्थपशुसोमादिद्रव्यवन्मदर्थमेवोद्यमैराद्यसमर्प णीयंकिन्तर्हियत्करोसीति स्वभावतःशास्त्रतोवायत्किञ्चित् कर्मकरोषि तथाय दश्नासियज्जुहोषि यद्ददासि यच्चतपस्यसितपःकरोषि तत्सर्वंमय्यर्पितंयथाभवति एवंकुरुष्व २७ एवञ्च यत् फलंप्राप्स्यसितच्छृणु इत्याह शुभाशुभेति एवं कुर्वन् कर्मबन्धनैःकर्मनिमित्तैरिष्टानिष्टफलैर्मुक्तोभविष्यसि कर्मणांमयिसमर्पित त्वेनतवतत्फलसम्बन्धानुपपत्तेः तैश्चविमुक्तःसन्संन्यासयोगयुक्तात्मासंन्यासःकर्मस मर्पणंसएवयोगस्तेनयुक्तआत्माचित्तंयस्य तथाभूतस्त्वं मांप्राप्स्यसीत्यर्थः २८

भाषा अनुवाद।

जिसलियेमैंकेवलभावभक्तिसेभक्तपरप्रसन्नहोताहूं इससे हेकौन्तेयकुन्तीपुत्र जो कुछकर्मकरो याआहारकरो यायज्ञकरो यादानकरो सोसबमदर्पणअर्थात् मेरे कोसमर्पणकरो तोवहसबअक्षयफलहोगा औरदोषकिसीतरहकानलगैगा २७

शुभाशुभफलैरेवंमोक्ष्यसेकर्मबन्धनैः संन्यासयोगयुक्तात्माविमुक्तोमामुपैष्यसि २८
समोऽहंसर्वभूतेषुनमेद्वेष्योऽस्तिनप्रियः येभजन्तितुमांभक्त्यामयितेतेषुचाप्यहं २९

शाङ्करभाष्यं

रागद्वेषवान् तर्हिभगवान्यतोभक्ताननुगृह्णाति नेतरानीति तन्न समोऽहमिति समःतुल्योऽहंसर्व्वभूतेषुनमेद्वेष्योऽस्तिनप्रियःअग्निवदहंदूरस्थानांयथाग्निःशीतंनापनयति समीपमुपसर्पतामपनयति तथाहंभक्ताननुगृह्णामिनेतरान् येभजन्तितुमामीश्वरंभक्त्यामयिते स्वभावतएव नममरागनिमित्तंमयिवर्त्तन्ते तेषुचाप्यहं स्वभावत एववर्त्ते नेतरेषुनैतावतातेषुद्वेषोमम २९

आनन्दगिरिकृतटीका

भगवतोरागद्वेषवत्वेनानीश्वरत्वमाशंक्यपरिहरति रागेत्यादिना तर्हि भगवद्भजनमकिञ्चित्करमित्याशंक्याह अग्निवदिति तत्प्रपञ्चयति यथेति भक्तानभक्तांश्चानुगृह्णतोऽननुगृह्णतश्चभगवतोनकथंरागादिमत्त्वमित्याशंक्याह येभजन्तीति ये त्विवर्णाश्रमादिधर्म्मामांजन्ति तेतेनैवभजनेनाचिन्त्यमात्मेन परिशुद्धबुद्धयोमयि मत्समीपेवर्त्तन्ते मदभिव्यक्तियोग्यचित्ताभवन्ति तुशब्देस्वविशेषस्वद्योतनार्थःतेषुच समीपेसमर्चतेषामहमपिस्वभावतोवर्त्तमानस्तदनुग्रहपरोभवामि यथाव्यापकमपि सावित्रतेजःस्वच्छेदर्पणादौप्रतिफलति तथापरमेश्वरोऽवर्जनीयतयाभक्तिनिरस्तसमस्तकलुषसत्वेषुपुरुषेषुसन्निधत्ते दैवीमेषातिमायितानामभजन्तीत्युक्तत्वादित्यर्थः २९

भाषा अनुवाद

इसप्रकारआचरणकरनेसेजोफलहोगा सोसुनोकिउक्तप्रकारसेकर्मसकलभगवत्समर्पणकरनेसे कर्मबन्धनअर्थात् कर्मजनितइष्टअनिष्टफलप्राप्तिसेबचिरहोगे औरमेरेमेंसमर्पितजोकर्मसन्यासयोगउसीसेयुक्तचित्तहोके तुम हमकोनिःसन्देह प्राप्तहोवगे २८ भलाजोमहतोंकोइसभांति मुक्तकरतेहो औअभक्तोंकोनहींतो क्या तुमारेमेंप्रीति विरोधकृतविषमस्वभावहै इसकेउपरअपनेभावकाअभावकहतेहैं किसकलभूतमे हमसमानरूपसेहैं इसोसेहमारेनकोईप्रियऔरनअप्रिय है औरजोहमारीभक्तिकरताहै सोहमारेमेवर्त्तमानहै औरमैंभोउसपरअनुग्रह करतारहताहूं इसकाभावार्थयहहै किजैसेअग्निकेसेवनकरनेवालेकाअन्धकार औशीतादिदुखकानिवारणकारीअग्निमेविषमभावनहींहै औरजैसेकल्पवृक्षअपनेसेवककोसकलपदार्थदेताहै तोइनकोप्रियअप्रियकोईनहीं परन्तुफलजोहै सो भक्तहीकोहै इससेभक्तिहीकी महिमा यहसबजानो २९

अपिचेत्सुदुराचारोभजतेमामनन्यभाक् साधुरेवसमन्तव्यःसम्यग्व्यवसितोहिसः ३०
क्षिप्रंभवतिधर्मात्माशश्वच्छान्तिंनिगच्छति कौन्तेयप्रतिजानीहिनमेभक्तःप्रणश्यति ३१

शाङ्करभाष्यं ।

शृणुमद्भक्तेर्माहात्म्यं अपिचेदिति अपिचेत् यद्यपिसुष्ठुदुराचारः सुदुराचारोऽतीवकुत्सिताचारोपिभजतेमांअनन्यभाक्नान्यभक्तिःसन् साधुरेवसम्यग्वृत्तएवसमन्तव्यःज्ञातव्यःसम्यग्यथावत्व्यवसितोहियस्मात्साधुनिश्चयःसः ३०

आनन्दगिरिकृतटीका

प्रस्तांभगवद्भक्तिंस्तुवन्पापीयसामपितत्राधिकारोस्तीति सूचयति शृण्विति सम्यग्वृत्तएवभगवद्भक्तोज्ञातव्यइत्यत्रहेतुमाह सम्यगिति ३० हेत्वर्थमेवप्रपञ्चयति उत्सृज्येति भगवन्तं भजमानस्यकथंदुराचारतापरित्यक्ता भवतीत्याशंक्याह क्षिप्रमि

स्वामिकृतटीका ।

यदितुभक्तोष्वएवमोचंददासिनामक्तोष्वस्तर्हितवापिकिंरागद्वेषादिकृतंवैषम्यमस्ति नेत्याह समोहमिति सर्वेषुभूतेष्वहंसमःअतोममप्रियश्चद्वेष्यश्चनास्त्येव एवंसत्यपियेमांभजन्ति तेभक्त्यामयिवर्त्तन्ते अहमपितेष्वनुग्राहकतयावर्त्ते अयंभावःयथाग्नेःस्वसेवकेष्वेवतमःशीतादिदुःखमपाकुर्वतोऽपिनवैषम्यं यथावाकल्पवृक्षस्यतथैव भक्तपक्षपातिनोऽपिमम वैषम्यंनास्त्येव किन्तुमद्भक्तेरेवायंमहिमेति २९

भाषा अनुवाद ।

और अपनीभक्तिकाअपूर्व्वअचिन्त्यप्रभावदेखावतेहैं किअत्यन्तदुराचारकहेऔर औरदेवताभीवासुदेवहीहैं इसरूपएकबुद्धिहोय यद्यपिऔरोंकीभक्तिनकरके केवलपरमेश्वरस्वरूपमहींकोभजैहै तौभीसोसाधुश्रेष्ठहै क्योंकिमेरेमेंउत्तमनिश्चयतोकियाहै ३० औसामनुष्यकिसप्रकारउत्तमहै इसशङ्कापरकहतेहैंकि अत्यन्तदुराचारीभीहमारीभक्तिकरकेस्वधर्म्मचित्तहोताहै अर्थात्चित्तकोतरङ्गनिवृत्तहोयपरमेश्वरमेंनिष्ठाअवश्यपावताहै औतुर्त्तधर्म्मात्माहोताऔरशान्तिकोप्राप्तहोताहै परइसबातकोकुतर्ककर्कशवादीलोगनमानैंगे इसशङ्कासेव्याकुलअर्जुनको भगवानउत्साहदेतेहैं किहेकौन्तेय नगारावंजायविवादकारीलोगोंकीसमामेंजायहाथ उठाय तुमनिःशङ्कहोयप्रतिज्ञाकरो किपरमेश्वरकेभक्तअतिदुराचारहोनेसेभी नष्टनहींहोतेवकृतार्थहोतेहैं ऐसीप्रतिज्ञाकरनेंपर तुमारीजयऔरवेनष्टकुतर्कहोयतुमकोगुरूकरमानैंगे सोतुमयहजानो किमेरेभक्तका नाशनहींहै ३१

## शाङ्करभाष्यं

उत्सृज्यचबाह्यांदुराचारतामन्तःसम्यग्व्यवसायसामर्थ्यात् क्षिप्रमिति क्षिप्रं शीघ्रं भवतिधर्म्मात्माधर्मचित्तएवशश्वत्नित्यंशान्तिञ्चोपशमंनिगच्छति प्राप्नोति शृणु परमार्थंकौन्तेयप्रतिजानीहि निश्चितांप्रतिज्ञांकुरु नमेममभक्तःमयिसमर्पितान्तरात्मा मद्भक्तोनप्रणश्यतीति ३१ किञ्च मांहीति मांहियस्मात्पार्थव्यपाश्रित्यमामाश्रित्याश्रयत्वेनगृहीत्वायेपिस्युर्भवेयुःपापयोनयःपापानियोनिःयेषांतेपापजन्मानः केत इत्याह स्त्रियोवैश्यास्तथाशूद्रास्तेपियान्तिगच्छन्ति परांगतिंप्रकृष्टांगतिं ३२ किंपुनरिति किंपुनर्ब्राह्मणाःपुण्यापुण्ययोनयःभक्ताराजर्षयस्तथाराजानश्चतेऋषय

## आनन्दगिरिकृतटीका

ति सति दुराचारेकथंधर्म्मचित्तत्वंतदाह शश्वदिति उपशमो दुराचराटुपरमः किमितितभक्तस्यदुराचारादुपरतिरुच्यते दुराचारोपहतचेतस्तयाकिमित्यतोन नंक्ष्यतीत्याशंक्याह शृणुवित्ति ३१ इतश्चभगवभक्तिर्विधातव्येत्याह किञ्चेति न मेभक्तःप्रणश्यतीत्यनहेतुमाचक्षाणो भक्त्याधिकारे जातिनियमोनास्तीत्याह मांहीति ३२

## स्वामिकृतटीका

अपिचमद्भक्तेरेवायमवितर्क्यःप्रभावइतिदर्शयन्नाह अपिचेदिति अत्यन्तदुराचारोऽपियद्यपृथक्त्वेनपृथग्देवतापिवासुदेवएवेतिबुद्ध्यादेवतान्तरभक्तिमकुर्व्वन्मामेवपरमेश्वरंभजते तर्हिसाधुःश्रेष्ठएवसमन्तव्यःयतोऽसौसम्यग्व्यवसितःशोभनमध्यवसायंकृतवान् ३० ननुकथंसमीचीनाध्यवसायमात्रेण साधुर्मन्तव्यस्तत्राह क्षिप्रमिति सुदुराचारोऽपिमांभजन्शीघ्रं धर्म्मचित्तोभवति ततश्चशश्वच्छान्तिंचित्तोपशमंवोपरमरूपांपरमेश्वरनिष्ठांनितरांगच्छति प्राप्नोति कुतर्ककर्कशवादिनोनैतन्मन्येरन्निति शङ्काकुलमर्जुनं प्रोत्साहयति हेकौन्तेय पटहादिमहाघोषपूर्व्वकं विवदमानानांसभांगत्वावाङ्गमुत्क्षिप्यनिःशङ्कंप्रतिजानीहि प्रतिज्ञांकुरु कथंमे परमेश्वरस्यभक्तःसुदुराचारोऽपिनप्रणश्यति अपितुकृतार्थएवभवतीति ततश्चतेतत्प्रौढिविजृम्भात्विध्वंसितकुतर्काःसन्तोनिःसंशयंत्वामेवगुरुत्वेनाश्रयेरन् ३१

स्वाचारभ्रष्टंमद्भक्तिःपवित्रीकरोतीति किमत्रचित्रं यतोमद्भक्तिर्दुष्कुलानप्यनधिकारिणोऽपिसंसारान्मोचयतीत्याह मांहीति येऽपिपापयोनयःस्युर्निकृष्टजन्मानोऽन्त्यजादयोभवेयु.येऽपिवैश्याःकेवलंकृष्यादिनिरताःअतःस्त्रियःशूद्राश्चाप्यध्ययनादिरहितास्तेऽपि मांव्यपाश्रित्य संसेव्य परांगतिंयान्ति हिनिश्चितं ३२

मांहिपार्थव्यपाश्रित्ययेपिस्युःपापयोनयःस्त्रियोवैश्यास्तथाशूद्रास्तेपियान्तिपरांगतिं ३२

शाङ्करभाष्यं।

यस्मेति राजर्षयःयतएवमतोऽनित्यंक्षणभङ्गुरमसुखंचसुखवर्जितं मनुष्यलोकंप्राप्यपु रुषार्थसाधनं दुर्लभमनुष्यत्वं लब्ध्वा भजस्व सेवस्व मां ३२

कथंमन्मनाइति मयिमनोयस्यतवसत्वंमन्मनाभव तथामद्भक्तोभव मद्याजीमद्य जनशीलोभव मामेवचनमस्कुरु मामेवेश्वरमेष्यसिआगमिष्यसि युक्त्वा समाधायचि

आनन्दगिरिकृतटीका।

यदिपापयोनिःपापाचारस्त्वद्भक्त्यापरांगतिंगच्छति तर्हिकिमुतजातिनिमि त्तेनसन्यासादिना किम्वासद्वृत्तेनेत्याशंक्याह किंपुनरिति उत्तमजातिमतांब्राह्म णादीनामतिशयेनपरागतिर्यतोलभ्यते अतोभगवद्भजनंतैःएकान्तेनविधातव्यमित्या ह यतइति मनुष्यदेहातिरिक्तेषुपश्वादिदेहेषुभगवद्भजनयोग्यताभावात् प्राप्तेम नुष्यत्वेतद्भजनेप्रयतितव्यंइत्याह दुर्लभमिति ३३ भगवद्भक्तिरित्यभावंपृच्छति कथमिति ईश्वरभजनेइति कर्त्तव्यतांदर्शयति मन्मनाइति एवंभगवन्तंभजमान स्यसमकिंस्यादित्यादिशंक्याह मामेवेति समाधायभगवत्येवेति शेषः एवमात्मा नमित्येतद्विष्टणोति अहंहीति अहमेवपरमयनंतवेति मत्परायणस्तथाभूतःमामे वात्मानमेष्यसीति सम्बन्धः तदेवंमध्यमानांध्येयंनिरूप्य क्रमेणाधमानामाराध्याभि धानमुखेन निजेनपारमार्थिकेनरूपेणप्रत्युक्तेनज्ञानं परमेश्वरस्यपरमाराधनमित्य भिधतासोपाधिकंतत्पदवाच्यं निरूपाधिकञ्च तत्पदलक्ष्यं व्याख्यातं ३४ इति ८

भाषाअनुवाद

अत्यन्ताचारभ्रष्टोंकोभीजोमेरीभक्तिपवित्रकरतीहैइसमेक्याआश्चर्य्यहैक्योंकि दे खोमेरीभक्तिअनधिकारीयोंकोभी संसारसेमुक्तकरतीहै तोदुराचारीकीमुक्तिमे क्यासन्देहहै सोई कहतेहैं किकोईनिकृष्टजन्मचाण्डालआदिक्योंनहो और स्त्री सेभीवेश्याक्योंनहो वेश्याहीकोवैश्याकहतेस्वार्थमेअणप्रत्ययकरनेसेवैश्याहोताहै औरशूद्र येभीहमारीभजनकरिउत्तमगतिकोप्राप्त होते हैं यहनिश्चयजानोजो कोई वैश्याकाअर्थवणिकजातिपरलगाते उनकीभूलकितनीवडीहै किवेदब्रह्मकेअ धिकारी तथासंध्याउपासनाकर्म्मकेअधिकारी तथायज्ञउपवीतधारी द्विजातिशब्द सेप्रसिद्ध वैश्य जोअनधिक रीहैंतोब्राह्मणक्षत्रीभीतैसेहीहैं मनमानाअर्थकरोवेद शास्त्रक्याकरनाहै परभाष्यकारआनन्दगिरि श्रीधरस्वामी वहीअर्थकियाहै ३२

किंपुनर्ब्राह्मणाःपुण्याभक्ताराजर्षयस्तथा अनित्यमसुखंलोकमिमंप्राप्यभजस्वमां ३३
मन्मनाभवमद्भक्तोमद्याजीमांनमस्कुरु मामेवैष्यसियुक्त्वैवमात्मानंमत्परायणः ३४
इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसंवादेराजगुह्यनामनवमोध्यायः ९

## शाङ्करभाष्यं

त्तमेवमात्मानंमामेवमहंहिसर्वेषांभूतानांआत्मापराचगतिःपरमयनं तंमामेवम्भूतंए
ष्यसीत्यतीतेनपदेनसम्बन्धः मत्परायणःसन्नित्यर्थः ३४ इति भाष्येनवमोध्यायः ९

## स्वामिकृतटीका

यदेवंतदासत्कुलाःसदाचाराश्चमद्भक्ताःपरांगतिं यान्तीति किंवक्तव्यमित्याह किं पुनरिति पुण्याःसुकृतिनोब्राह्मणाःतथाराजानश्चते ऋषयश्चेति एवंभूताश्चपरांगतिं यान्तीति किंवक्तव्यमित्यर्थः अतस्त्वंइमंराजर्षिरूपंदेहंप्राप्यलब्ध्वामांभजस्व किञ्च अनित्यमध्रुवंअसुखंसुखरहितञ्चेमंमर्त्यलोकंप्राप्य अनित्यत्वाद्विलम्बमकुर्वन् असुखत्वाच्चसुखार्थमुद्यमंहित्वा मामेवभजस्वेत्यर्थः ३३ भजनप्रकारंदर्शयन्नुपसंहरति मन्मनाइति मय्येवमनोयस्यसमन्मनास्त्वंभवतथाममैवभक्तःसेवकोभव मद्याजीमत्पूजनशीलोभव मामेवनमस्कुरु एवमेभिःप्रकारैर्मत्परायणःसन्नात्मानं मनोमयियुक्त्वासमाधाय मामेवपरमानन्दरूपमेष्यसिप्राप्स्यसिनिजमैश्वर्यमाश्चर्यं भक्तिश्चाद्भुतवैभवं नवमेराजगुह्याख्येकृपयाऽवोचदच्युतः ३४

इति नवमोध्यायः ९

## भाषा अनुवाद

अबकिमेरीभक्तिजोअनधिकारीयोंकोंमुक्तिदेतीतोफेरिब्राह्मणकहेंब्राह्मणआदि तीनोंवर्णजोब्राह्मणक्षत्रीवैश्यपवित्रऔमेरेभक्तउनकीमुक्तिमेंक्यासंदेहहै तिसमेरा जर्षिअर्थात्राजवंशक्षत्रियराजालोगजोदशदिक्पालोंकेअंशसेप्रगटहैं उनकोआ कहनाहै सोतुमराजवंशहो इसअनित्यसंसारसुखकोत्यागकरिकेइहलोककहेंनर देहपायहमकोभजो ३३ भजनप्रकारदेखावतेंकहतेहैंकिमेरेमेंजिसकामनहै ऐसेतुमसम्मनाहोउ औरमेरेहीभक्तहोउऔमेरीहीपूजाकरोऔरमैंहींकोप्रणाम करोइसीप्रकारसेमत्परायणहोके आत्माजोमनतिसकोमेरेमेंयोगकहेंलगायके परमआनन्दरूपमेरेस्वरूपकोप्राप्तहोउगे इसनवयेंअध्यायमेंअपनीभक्तिकाअद्भुत प्रभावराजयोगनामभगवानने प्रकाशकियाहै ३४ इति भाषायांनवमोध्यायः ९

श्रीमद्भगवद्गीता ।



## दशमोध्यायः

श्रीभगवानुवाच भूयएवमहावाहोशृणुमेपरमंवचः यत्तेऽहंप्रीयमाणाय वक्ष्यामि हितकाम्यया १

### शाङ्करभाष्यं

सप्तमेऽध्यायेभगवतस्तत्त्वंविभूतयश्चप्रकाशिता नवमेच अथेदानीं येषुयेषुभावेषु चिन्त्योभगवांस्तेभावावक्तव्याःतत्त्वञ्चभगवतोवक्तव्यंउक्तमपिदुर्व्विज्ञेयत्वादित्यतोभग वानुवाच भूयइतिभूयएवभूयःपुनःहेमहावाहोशृणुमेमदीयंपरमंप्रकृष्टंनिरतिशय वस्तुनःप्रकाशकंवचोवाक्यं यत्परमंतेतुभ्यंप्रीयमाणायमद्वचनात्प्रीयसेत्त्वमतीवामृत मिवपिवंस्ततोवक्ष्यामिहितकाम्ययाहितेच्छया १

### आनन्दगिरिकृतटीका

अध्यायद्वयेसिद्धमर्थंसंक्षेपतोनुभाषते सप्तमइति तत्त्वंसोपाधिकं निरुपाधिकञ्च विभूतयःसविशेषनिर्व्विशेषरूपप्रतिपत्युपयोगिन्यः उत्तराध्यायस्याध्यायद्वयेनसम्ब न्धंवदन्नध्यायान्तरमवतारयति अथेति वक्तव्याःसविशेषध्यानेनिर्व्विशेषप्रतिपत्तौच शेषत्वेनेतिशेषः ननुसविशेषंनिर्व्विशेषञ्चभगवतोरूपं प्रागेवतत्रतत्रोक्तं तत् किमि तिपुनरुच्यतेतत्राह उक्तमपीति तद्यदितत्रतत्रतत्त्वमुक्तं तथापिपुनर्व्वक्तव्यं दुर्व्विज्ञेय

### भाषाअनुवाद

सप्तमअध्यायसेलेकर नवमअध्यायपर्य्यन्त भगवानने अपनीविभूति औ सर्व्वईश्व रबुद्धिहोना तथाआपअपनापरमेश्वरत्व औयज्ञआदिसकलवस्तुसहीहूं और अप नीअनन्यभक्ति परमभक्तअर्जुनसे संक्षेपरूपकहा अबदशमअध्यायमें वहीअपनीवि भूतियोंको विस्तारकरिकहतेहुयें स्वभक्तिकीअवश्यकर्त्तव्यता श्रीभगवानकहतेहैं किहेमहावाहोअर्जुन तुमफेरिहमारेवचनसुनो परमात्माविषयकमेरेवचनअमृत ऐसेश्रवणकरि अतिप्रसन्नप्रीतियुक्तजोतुम सोतुमारीइच्छाकेअनुसार तुमारेहित वचनमैकहताहूं तुमश्रवणकरो १ कहीहुईवातकाजोपुनर्व्वार कहना तिसमेंहेतु

नमेविदुःसुरगणाःप्रभवंनमहर्षयः अहमादिर्हिदेवानांमहर्षीणाञ्चसर्व्वशः २

शाङ्करभाष्यं

किमर्थमहंवक्ष्यामीत्यतआह नमइति नमेविदुर्नजानन्तिसुरगणाःकिंतें नविदुः ममप्रभवंप्रभावंप्रभुशक्त्यतिशयं अथवाप्रभवंप्रभवनंउत्पत्तिंवा नापिमहर्षयोभृग्वाद् योविदुःकस्मात्तेनविदुरित्युच्यते अहमादिःकारणंहियस्माद्देवानांमहर्षीणांच सर्वशः

आनन्दगिरिकृतटीका।

त्वादिति यतोमन्यतेऽतइतियोजना प्रकृष्टत्वंवचसःस्पष्टयति निरतिशयेति तदेवव चोविशिनष्टि यत्परममिति सकृदुक्तेरर्थसिद्धेरसकृदुक्तिरनर्थिकेत्याशंक्याह प्रीय माणायेति ततोवक्ष्यामिइति तुभ्यंइति पूर्व्वेणसम्बन्धः १

हितकाम्ययादुर्विज्ञेयंतत्त्वज्ञानंकश्चिदन्योपिपरमंवचोमह्यंवक्ष्यति तेनच मम तत्त्वज्ञानंभविष्यत्यतोभगवद्वचनमकिञ्चित्करमिति शङ्कित्वापरिहरति किमर्थमित्या दिना इन्द्रादयोभृग्वादयश्चभगवत्प्रभावंनविन्दन्तीत्यत्रप्रश्नपूर्वकंहेतुमाह कस्मादि ति निमित्तत्वेनोपादानत्वेनच यतोदेवादीनांभगवानेवहेतुरतस्तद्विकारास्तेन तस्य

स्वामिकृतटीका।

उक्ताःसंक्षेपतःपूर्वंसप्तसादौविभूतयः दशमेताविवतन्यन्तेसर्वत्रेश्वरदृष्टये एवं तावत्सप्तमादिभिस्त्रिभिरध्यायैर्भजनीयंपरमेश्वरतत्वंनिरूपितं तद्विभूतयश्चसप्तमे रसोऽहमप्सुकौन्तेयेत्यादिनासंक्षेपतोदर्शिताः अष्टमेचअधियज्ञोहमेवात्रेत्यादि ना नवमेचाहंक्रतुरहंयज्ञइत्यादिना इदानींताएवविभूतीःप्रपञ्चयिष्यन्भक्त्याव श्यकरणीयत्वंवर्णयिष्यन्श्रीभगवानुवाच भूयएवेति महान्तौयुद्धादिस्वधर्म्मानुष्ठाने मह्यपरिचर्य्यायांवाकुशलौबाहूयस्य तथाहेमहाबाहो भूयएवपुनरपिमेवचःशृणु कथंभूतं परमंपरमात्मनिष्ठंमद्वचनात्प्रीतेनैवप्रीतिंप्राप्नुवतेतुभ्यं हितकाम्ययाहितेच्छ यायदहं वक्ष्यामितत् १ उक्तस्यापिपुनर्वचनेदुर्ज्ञेयत्वंहेतुमाह नमेविदुरिति मेमम

भाषाअनुवाद

यहकिमेरातत्त्वजाननाअतिकठिनहै सोईकहतेहैं कि जन्मरहितहोकेभी जोवि भूतियोंकेद्वारा मेराआविर्भावकहेप्रगटहोना सोदेवताऔभृगुप्रभृति महर्षिभी नहींजानतेहैं क्योंकि देवताओमहर्षियोंकेउत्पन्नकरनेवाले तथाबुद्धिकेप्रवृत्तिदेन हार आदिभूतकारणरूपहमहैं इसीसेहमारीकृपाबिना हमकोकोईजानने नहीं सकताहै २ अबआत्मज्ञानकाफलकहतेहैं किसबकेकारणरूपहेतुऔरजिसका

योमामजमनादिञ्चवेत्तिलोकमहेश्वरं असंमूढःसमर्त्येषु सर्वपापैःप्रमुच्यते ३
बुद्धिर्ज्ञानमसंमोहःक्षमासत्यंदमःशमः सुखंदुःखंभवोभावोभयञ्चाभयमेवच ४

शाङ्करभाष्यम्।

सर्वप्रकारैः २ किञ्च योमामिति योमामजमनादिञ्चयस्मादहमादिर्हि देवानांमह र्षीणाञ्चनममान्यःआदिर्विद्यतेऽहमजोऽनादिश्चअनादित्वमजत्वेहेतुस्तं मामजमना दिञ्चयोवेत्तिविजानाति लोकमहेश्वरंलोकानांमहान्तमीश्वरमसंमूढःसंमोहवर्जि तःसमर्त्येषुमनुष्येषुसर्वपापैःसर्वैःपापैःमतिपूर्व्वमतिपूर्वकृतैःप्रमुच्यते प्रमोच्यते ३

आनन्दगिरिकृतटीका

प्रभावंविदुरित्यर्थः २ इतश्चकश्चिदेवभगवत्प्रभावंवेत्तीत्याह किञ्चेति कोसौ प्र भावोभगवतो यंवहवोनविदुरित्यपेक्षायांपारमार्थिकंप्रभावंतदधीनफलञ्च कथय ति योमामिति पदद्वयांपौनरुक्त्यलाह अनादित्वमिति ३

भगवतोलोकमहेश्वरत्वेहेत्वन्तरमाह इतश्चेति मुमुक्षुभिराराध्यत्वसिद्धये व न्धमोक्षसाधनंपुरस्कृत्याशेषजगदाद्यत्यधिष्ठातृत्वलक्षणंसोपाधिकं भगवत्प्रभावम

स्वामिकृतटीका

प्रकृष्टंफलंजन्मरहितस्यापिनानाविभूतिभिराविर्भावं सुरगणापिमहर्षयोपिभृग्वा दयोनजानन्ति तत्रहेतुःअहंहिदेवानांमहर्षीणाञ्चादिःकारणंसर्वशःसर्वैःप्रकारै रुत्पादकत्वेनबुद्ध्यादिप्रवर्त्तकत्वेनच अतोमदनुग्रहंविनामांकेऽपिनजानन्तीत्यर्थः २

एवंभूतात्मज्ञानेफलमाह योमामिति सर्वकारणत्वादेवनविद्यतेआदिःकारणं यस्य तमनादिं अतएवाजंजन्मशून्यंलोकानांमहेश्वरञ्चमां योवेत्ति समनुष्येषु समोहर हितःसन् सर्वपापैःप्रमुच्यते ३ लोकमहेश्वरतांस्फुटयति बुद्धिरितित्रिभिः बुद्धिः

भाषाअनुवाद

कोईकारणनहींहै ऐसेअनादिऔजन्मरहित सकललोककेमहेश्वर जोमैं सोमुझे जोकोईजानैहै तोमनुष्योंकेमध्यमेवहीअच्छीतरह मोहरहितहोके समस्त पापों सेछूटिजायहै ३

अवतीनश्लोकसे अपनीलोकमहेश्वरताप्रकाशकरतेहैं किबुद्धिकहेसारअसार वस्तुविचारकीचातुरी औज्ञानतथाअसंमोहऔक्षमासत्यवचनऔरदमकहेवाहर कीइन्द्रियोंकादमनऔशमकहेमनकानिग्रहऔसुखदुखजन्मनाशऔभयअभय ये सब हमसेहोतेहैं ४ औरअहिंसाशमताकहेप्रीतिविरोधकाअभावऔतुष्टिकहे

अहिंसासमतातुष्टिस्तपोदानंयशोऽयशः भ वन्तिभावाभूतानांमत्तएवपृथग्विधाः ५

## शाङ्करभाष्यं

इतश्चाहंमहेश्वरोलोकानांबुद्धिरिति बुद्धिरन्तःकरणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यं तद्वन्तं बुद्धिमानितिहिवदन्तिज्ञानमात्मादिपदार्थानामवबोधःअसंमोहःप्रत्युपपन्नेषुबोद्धव्येषुद्रव्येषुविवेकपूर्विकाप्रवृत्तिःक्षमा आक्रुष्टस्यताडितस्यवाअविकृतचित्तता सत्यंयथादृष्टस्ययथाश्रुतस्यचात्मानुभवस्यपरबुद्धिसंक्रान्तये तथैवोच्चार्यमाणावाक्सत्यमुच्यतेदमोवाह्येन्द्रियोपशमःशमोऽन्तःकरणस्योपशमःसुखंआह्लादोदुःखं सन्तापोभवउद्भवःअभावस्तद्विपर्ययःभयञ्चत्रासोऽभयमेवचतद्विपरीतं ४ अहिंसेति अहिंसाअपीडाप्राणिनां समतासमचित्ततातुष्टिःसन्तोषःपर्याप्तबुद्धिर्लाभेषु तपइन्द्रियसंयमपूर्वकंशरीरपीडनंदानंयथाशक्तिसंविभागःयशोधर्म्मनिमित्ताकीर्त्तिः अयशस्त्वधर्म्मनिमित्ताकीर्त्तिःभवन्तिभावायथोक्ताबुद्ध्यादयोभूतानांप्राणिनांमत्तएवेश्वरात् पृथग्विधानानाविधा स्वकर्म्मानुरूपेण ५

## आनन्दगिरिकृतटीका।

भिवक्ते बुद्धिरिति सूक्ष्मादीत्यादिशब्देनस्थूलतरःसूक्ष्मतमश्चार्थोगृह्यते भक्तसामर्थ्यंबुद्धिरित्यस्मिन्नर्थेप्रसिद्धिं प्रमाणयति तद्वन्तमिति आत्मादीतितदवबोधवन्तंहि ज्ञानिनंवदन्तिअन्तःकरणस्योपशमोविषयेभ्योव्यावृत्तिरितिशेषः ४

यथाशक्तीति पात्रेश्रद्धयास्वशक्तिमनतिक्रम्यार्थानांदेशकालानुगुण्येनप्रतिपादनमित्यर्थः भक्तानांबुद्ध्यादीनांसाधारणमीश्वरादुत्पत्तिंप्रतिजानीतेभवन्तीति नानाविधत्वेहेतुमाह स्वकर्मेति ५

## स्वामिकृतटीका

सारासारविवेकनैपुण्यंज्ञानमात्मविषयंअसम्मोहोव्याकुलत्वाभावः क्षमासहिष्णुत्वं सत्यंयथार्थभाषणं दमोवाह्येन्द्रियसंयमःशमोऽन्तःकरणसंयमः सुखमनुकूलसंवेदनीयंदुःखञ्चतद्विपरीतंभवउद्भवःअभावस्तद्विपरीतःभयंत्रासःअभयंतद्विपरीतंअस्यश्लोकस्यमत्तएवभवन्तीत्युत्तरेणान्वयः ४ किञ्च अहिंसेति अहिंसापरपीडानि

## भाषाअनुवाद

वेमांगेयथालाभसन्तोषऔतपस्याजो १७ अध्यायमेकहैंगे औरदानकहेस्वधर्म्मसेउपार्जितधनसत्पात्रकोदेना औरयशअयशयेनानाप्रकार के भाव सबहमहीसे उत्पन्नहोते हैं ५

महर्षयःसप्तपूर्वेचत्वारोमनवस्तथा मद्भावामानसाजातायेषांलोकइमाःप्रजाः ६

## शाङ्करभाष्यं

किञ्चमहर्षयइति महर्षयःसप्तभृग्वादयःपूर्वेऽतीतकालसम्बन्धिनश्चत्वारो मनवस्तथासावर्णाइति प्रसिद्धाःते चमद्भावामद्भावना वैष्णवेनवासामर्थ्येनोपेता मानसामनसैवोत्पादितामया चतास्तत्पन्नायेषांमनूनांमहर्षीणाञ्च सृष्टिर्लोकइमाःस्थाव

## आनन्दगिरिकृतटीका

कथञ्चिदपितेषामात्मातिरेकेणाभावात् मत्तएवेत्युक्तं न केवलंभगवतः सर्व्वप्रकृतित्वमेव किन्तुसर्वज्ञत्वसर्व्वेश्वरत्वरूपमधिष्ठातृत्वमपीत्याह किञ्चेति आद्यास्सृग्वादयोवशिष्ठान्ताःसर्वज्ञाविद्यासंप्रदायप्रवर्त्तकास्तथेति मनूनामपिपूर्वत्वेनाद्यत्वमनुकृष्यते केते मनवस्तत्राह सावर्णाइति इतिप्रसिद्धाःपौराणेषुप्रजानांपालकाःस्वयंभुवश्चराश्चेतिशेषः महर्षीणांमनूनाञ्चतुल्यंविशेषणं तेचेति मयिसर्वज्ञेसर्व्वेश्वरेगताभावनायेषांतेतथा भावनाफलमाह वैष्णवेनेति वैष्णव्याशक्त्याधिष्ठितत्वेनज्ञानैश्वर्यवन्तइत्यर्थः तेषांजन्मनोवैशिष्ट्यमाचष्टेमानसाइति मन्वादीनेवविशिनष्टि येषामिति विद्ययाजन्मनाचसन्ततिभूतामन्वादीनामस्मिन्लोकेसर्व्वाःप्रजाइत्यर्थः ६

## स्वामिकृतटीका।

तुष्टिःसकृतारागद्वेषादिराहित्यंतुष्टिर्दैवलब्धेनसन्तोषःतपःशारीरादि वक्ष्यमाणंदानंन्यायार्जितस्वधनादेःपात्रेऽर्पणंयशःसत्कीर्त्तिःअयशोदुष्कीर्त्तिः एतेबुद्धिज्ञानादयस्तद्विपरीताश्चाबुद्ध्यादयोनानाविधाभावाःप्राणिनांमत्तःसकाशादेवभवन्ति ५

किञ्च महर्षयइति सप्तमहर्षयोभृग्वादयःसप्तब्रह्मपाइत्येतेपुराणेनिश्चयंगताभृग्वादिपुराणप्रसिद्धास्तेभ्योऽपिपूर्वेन्येचत्वारोमहर्षयःसनकादयस्तथामनवः स्वायम्भुवादयोमद्भावामदीयोभावःप्रभावोयेषुतेहिरण्यगर्भात्मनोममैवमनसःसङ्कल्पमात्राज्जाताः प्रभावमेवाह येषामिति येषांभृग्वादीनांसनकादीनाञ्चइमाःब्राह्मणाद्यालोकेवर्द्धमाना यथायथंपुत्रपौत्रादिरूपाःशिष्यप्रशिष्यादिरूपाश्चप्रजाःप्रजायन्ते ६

## भाषाअनुवाद

औरभृगुआदिसप्तमहर्षि येईपुराणोंमे सातब्राह्मणकरकेप्रसिद्धहैं औ इनकेभीपूर्वसनकादिचारि ब्राह्मणहैं औरस्वयम्भुआदिचौदहमनु इनसवमेकेमेराप्रभावहै औरयेसवहिरण्यगर्भजोमैसोमेरीइच्छासेप्रगटेहैं येईसातद्वीपवोंमेपुत्रपौत्रशिष्यप्रशिष्यक्रमसेप्रजारूपब्राह्मणादिवर्णसकलजन्मेहैं ६ अवयहसवउक्त वि

एतांविभूतिंयोगञ्चममयोवेत्तितत्वतः सोऽविकल्पेनयोगेनयुज्यतेनात्रसंशयः ७

## शाङ्करभाष्यं

रजस्तमलक्षणाःप्रजाः ६ एतामिति एतांयथोक्तांविभूतिंविस्तारंयोगञ्च युक्तिं चात्मनोघटनमथवायोगैश्वर्यसामर्थ्यंसर्वज्ञत्वञ्चयोगजंयोगउच्यतेममदीयंयोगंयो वेत्तितत्त्वतस्तत्त्वेनयथावदित्येतत्सःअविकल्पेनाप्रचलितेनयोगेन सम्यक्दर्शनस्थै र्य्यलक्षणेनयुज्यतेसंवध्यते नात्रसंशयःनास्मिन्नर्थेसंशयोस्ति ७

कीदृशेनाविकल्पेनयोगेनयुज्यतइत्युच्यते अहमिति। अहंपरंब्रह्मवासुदेवा ख्यंसर्वस्यजगतःप्रभवउत्पत्तिर्मत्तएवस्थितिनाशक्रियाफलोपभोगलक्षणं विक्रिया

## आनन्दगिरिकृतटीका

सोपाधिकंप्रभावंभगवतोदर्शयित्वातज्ज्ञानफलमाह एतामिति वुद्ध्याद्युपादान त्वेनविविधाभूतिर्भवनंवैभवंसर्वात्मकत्वंतदाह विस्तारमिति ईश्वरस्यतत्तदर्थसंगाद नसामर्थ्यंयोगस्तदाह आत्मनइति योगस्तत्फलमैश्वर्यंसर्वज्ञत्वंसर्वेश्वरत्वञ्च मदीयं शक्तिज्ञानेश्वर्यादिमनन्यादयोऽपस्थादयश्च भतेजानतेचतदाह अथवेति यथातौवि भूतियोगौतथानिरङ्कुशत्वेनेतिवेदनस्यनिरङ्कुशत्वंदर्शयति यथावदिति सोपाधिकं ज्ञानंनिरुपाधिकज्ञानेद्वारमित्याह सोविकल्पेनेति उक्तेऽर्थे प्रतिवन्धाभावमाह ना स्मिन्निति ७ कथंतावकविभूत्यैश्वर्यज्ञानस्युक्तयोगस्यहेतुरिति मत्वा पृच्छति कीदृशेनेतिउक्तज्ञानमाहात्म्यात्प्रतिष्ठितासम्यग्धीनिष्ठासिध्यतीत्याह उच्यतइति प्रभ वत्यस्मादिति प्रभवःसर्वप्रकृतिःसर्वात्मेत्याह उत्पत्तिरिति सर्वज्ञात्सर्वेश्वरान्मत्तो निमित्तात्सर्गस्थितिनाशादिभवति मयान्तर्यामिणाप्रेर्यमाणांसर्वंयथास्वंमर्यादा मनतिक्रम्यचेष्टतेतदाह मत्तइति इत्थंममसर्वात्मत्वंसर्वप्रकृतित्वंसर्वेश्वरत्वं सर्वज्ञ

## स्वामिकृतटीका।

यथोक्तविभूत्यादितत्त्वज्ञानस्यफलमाह एतामितिएतांब्रह्मादिलक्षणांमम विभूतिं योगञ्चैश्वर्यलक्षणंतत्त्वतोयोवेत्तिसःअविकल्पेननिःसंशयेनयोगेन सम्यग्दर्शनेन युक्तोभवति नात्रसंशयः ७

## भाषाअनुवाद।

भूतिकहे अपनीसम्पतिके तत्त्वज्ञानकाफलकहतेहैंकियेईश्वगुआदिरूपमारीविभूति औऐश्वर्यरूपयोगहै यहजोमनुष्ययथार्थसेजानैहै सोसंशयरहितासर्वज्ञ सम्यक् दर्शनहोयहै ७ अवविभूति औयोगजाननेसे जिसप्रकारसम्यक्ज्ञानप्राप्तिहो

अहंसर्वस्यप्रभवोमत्तःसर्वंप्रवर्त्तते इतिमत्वाभजन्तेमांबुधाभावसमन्विताः ८
मच्चित्तामद्गतप्राणाबोधयन्तःपरस्परं कथयन्तश्चमांनित्यंतुष्यन्तिचरमन्तिच ९

## शांकरभाष्यं।

रूपंसर्वंजगत्प्रवर्त्ततेइत्येवंमत्वाभजन्ते सेवन्तेमांबुधाअवगतपरमार्थतत्त्वार्थाःभाव समन्विताःभावोभावनापरमार्थतत्वाभिनिवेशस्तेनसमन्विताः संयुक्ताइत्यर्थः ८
किञ्चमच्चित्ताइति मच्चित्तामयिचित्तंयेषांतेमच्चित्तामद्गतप्राणाःमयि गताः प्राणा श्चक्षुरादयःप्राणायेषांतेमद्गतप्राणामय्युपसंहृतकरणाइत्यर्थःअथवामद्गतप्राणा म द्गतजीवनाइत्येतद्बोधयन्तोऽवगमयन्तःपरस्परमन्योन्यंकथयन्तो ज्ञानबलवीर्यादिध

## आनन्दगिरिकृतटीका

त्वञ्चमहिमानंज्ञात्वासम्यगेवनिष्ठावन्तोभवन्तीत्याह इत्येवमिति संसारासारताज्ञा नवतांभगवद्भजनेधिकारंद्योतयति अवगतेति परमार्थतत्वेपूर्वोक्तरीत्याज्ञातेप्रेमाद रावभिनिवेशाख्योभवतस्तेनसंयुक्तात्वञ्चभगवद्भजनेभवति हेतुरित्याह भावेति ८
नकेवलमुक्तमेवभगवद्भजनेसाधनान्तरञ्चास्तीत्याह किञ्चेति ईश्वरात्प्रतीचः प्रागुक्तादन्यत्रचित्तप्रचाररहित्यंभगवद्भजनोपायमाह मयीति चक्षुरादीनांभगवत्य

## स्वामिकृतटीका।

यथाचविभूतियोगबोधेनसम्यग्ज्ञानावाप्तिस्तद्दर्शयति अहमित्यादिचतुर्भिः अहंसर्वस्यजगतःप्रभवोब्रह्मादिरूपविभूतिद्वारेणोत्पत्तिहेतुःमत्तएवच म र्वस्यबुद्धिर्ज्ञानमसंमोहइत्यादिसर्वंप्रवर्त्तते इत्येवंमत्वाअवबुध्यबुधाविवेकिनोभावस मन्विताःप्रीतियुक्तामांभजन्ते ८

## भाषा अनुवाद

तोहै सोई चारिश्लोकसेदेखावतेहैं किमैहीं समस्तजगतकाप्रभव अर्थात्भृगुआ दिमनुआदि रूप विभूतिकेद्वारा उत्पत्तिकाहेतुहौंऔरहमीसेबुद्धिऔज्ञानसकल उत्पन्नहोते यहीजानिकेविवेकीलोग प्रीतियुक्तहोय हमारी भजनकरतेहैं ८
प्रीतिपूर्व्वकभजनकास्वरूपकहतेहैं किजिसकाचित्तमेरेहीमेनिरतहै सोम च्चित्तऔरजिसके प्राणकहेसकलइन्द्रियअथवाजीवनमेरेमेअर्पितहैं ऐसेमद्गतप्रा णविवेकीजन हमकोबुद्धिऔश्रुतिप्रमाणसेजानतेहैं औरसर्व्वदापरस्परमेरीहीच र्चाकरतेहुये सदासन्तुष्टमनमेरेगुणगानमे रममाणपूर्णकामइसअसारसंसारकेज ञ्जालसे मुक्तिपावतेहैं ९ ऐसेहीभक्तोंकोहमज्ञानप्रदानकरतेहैं सोईकहतेहैं

तेषांसततयुक्तानांभजतांप्रीतिपूर्व्वकं ददामिबुद्धियोगंतंयेनमामुपयान्तिते १०

### शाङ्करभाष्यं

मैर्विशिष्टंमांतुष्यन्तिचपरितोषमुपयान्तिरमन्तिचरतिञ्चप्राप्नुवन्तिप्रियसंगत्येव ९

ये यथोक्तैःप्रकारैर्भजन्तेमांभक्ताःसन्तःप्रीतिपूर्व्वकंतेषामिति तेषांसततयुक्तानां नित्याभियुक्तानांभजतांसेवमानानांकिमर्थित्वादिनाकारणेनेत्याह प्रीतिपूर्व्वकंप्रीतिः स्नेहस्तत्पूर्व्वकंमांभजतामित्यर्थःददामिप्रयच्छामिबुद्धियोगंबुद्धिःसम्यग्दर्शनंमत्तत्त्व विषयंतेन योगोबुद्धियोगस्तंबुद्धियोगंयेनबुद्धियोगेनसम्यग्दर्शनलक्षणेनमां परमे श्वरमात्मभूतं आत्मत्वेनोपयान्ति प्रतिपद्यन्ते १०

### आनन्दगिरिकृतटीका

प्राप्तिस्तदगोचरत्वात्तस्येत्याशंक्याह मय्युपसंहृतेति मदतिरेकेणजीवनेपि नाद रस्तदपिमय्येवार्पितंभक्तानामित्याह अथवेति आचार्येभ्यःश्रुत्वावादकथयापरस्परं भगवन्तंसब्रह्मचारिणोबोधयन्ति तदपिभगवद्भजनसाधनमित्याह बोधयन्तइति आगमोपपत्तिभ्यांभगवन्तमेवविशिष्टधर्माणंशिष्येभ्योगुरवोव्यपदिशन्ति तदपिभग वद्भजनमेवेत्याह कथयन्तइति भक्तानांतुष्टिरतीस्वरसतःख्यातामित्याह तुष्यन्तीति मनोरथपूर्त्यारतिप्राप्तौकामुकसंमतमुदाहरणमाह प्रितेति ९

यदुक्तंसोविकल्पेनेत्यादितदर्थंभूमिकांकृत्वातदिदानीमुदाहरति येयथोक्तेति नित्याभियुक्तानामनवरतंभगवत्येकाग्रसंपन्नानामित्यर्थः पुत्रादिलोकत्रयकृतेत्वर्थि त्वेनवागर्भदासत्वेनवाप्रत्यहंजीवनोपायसिद्धयेवाभजनमिति शङ्कित्वादूषयति किं मित्यादिना प्रागुक्तांज्ञानाख्यांभक्तिं स्नेहेनकुर्व्वतामित्यर्थःतेभ्योहंतत्त्वज्ञानंप्रयच्छा

### स्वामिकृतटीका।

प्रीतिपूर्व्वकंभजनमाह मच्चित्ताइति मयेवचितंयेषांतेमच्चिताःमामेवगताः प्रा णाःप्राणाइन्द्रियाणियेषांतेमद्गतप्राणाःमय्यर्पितजीवनाइतिवाएवंभूतास्तेबुधा अ न्योन्यंमांन्यायोपेतैःश्रुत्यादिप्रमाणैर्बोधयन्तोबुध्वाचमांकथयन्तःसंकीर्तयन्तःसन्तःनि त्यंतुष्यन्तिअनुमोदनेनतुष्टिंयान्ति रमन्तिच निर्वृतिंयान्ति ९

### भाषा अनुवाद

किएवम्भूतमेरेमेंसदाआसक्तचितऔप्रीति पूर्वकभजनकारीभक्तलोगोंकोमैंसोई बु द्धिरूपयोगकहेउपायदेताहूं औरउसउपायसेवेमेरे भक्त मुझे अनायास प्राप्त होतेहैं १० बुद्धियोगदेकरकेउनअपनेभक्तोंकाफेरिअविद्याकृतसंसार नाश

तेषामेवानुकम्पार्थमहमज्ञानजंतमः नाशयाम्यात्मभावस्थोज्ञानदीपेनभास्वता ११

## शाङ्करभाष्यं।

केतेयेमच्चित्तादिप्रकारैःमांभजन्तेकिमर्थंकस्यवातत्प्राप्तिप्रतिबन्धहेतोःना शकंबुद्धियोगंतेषांत्वद्भक्तानांददामीत्याकांक्षायामाह तेषामिति तेषामेवकथंनामश्रे यःस्यादित्यनुकंपार्थंदयाहेतोरहमज्ञानजमविवेकतोजातंमिथ्याप्रत्ययलक्षणंमोहा न्धकारंतमोनाशयाम्यात्मभावस्थःआत्मनोभावोऽन्तःकरणाशयस्तस्मिन्नवस्थितःसन् ज्ञानदीपेनविवेकप्रत्ययरूपेणभक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवाते रितेनब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्त्तिनामिविरक्तान्तःकरणाधारेण विष यव्यावृत्तचित्तरागद्वेषाकलुषितनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनित सम्यग्दर्शनभास्वताज्ञानदीपेनेत्यर्थः ११

## आनन्दगिरिकृतटीका।

सीत्याह ददीमीति उक्तबुद्धिसम्बन्धस्यफलमाह येनेति १० ध्यानजन्यप्रकर्षका ष्ठागतान्तःकरणपरिणामे निरस्ताशेषविशेषभगवद्रूपप्राप्तिहेतौ बुद्धियोगेप्रश्नपूर्व कभक्तानधिकारिणोदर्शयति केतइति भगवत्प्राप्तेर्बुद्धिसाध्यत्वेसत्यनित्यत्वापत्तेस्त्व भक्तेभ्योबुद्धियोगंददासीत्ययुक्तमिति शङ्कते किमर्थमिति तेषांबुद्धियोगंकिमर्थंददा सीति सम्बन्धः भगवत्प्राप्तिप्रतिबन्धकनाशकोबुद्धियोगस्तेननास्ति तत्प्राप्तेरनित्यत्व मित्याशयंव्याह कस्येति भक्तानांतत्प्राप्तिप्रतिबन्धकंविविच्यदर्शयति इत्याकांक्षायामि ति अविवेकोनाद्यज्ञानंततोजातंमिथ्याज्ञानंतदुभयमेकोकृत्यतमोविवक्ष्यते नचत न्नाशकत्वंजडस्यकस्यचित्तदन्तर्भूतस्ययुक्तंतेनाक्षंनाशयामीत्युक्तंकेवलचैतन्यस्यज

## स्वामिकृतटीका

एवंभूतानाञ्चसम्यग्ज्ञानमहंददामीत्याह तेषामिति एवंसततयुक्तानां मय्यासक्त चितानांप्रीतिपूर्वकंभजतांतंबुद्धिरूपंयोगसुपायंददामि तमितिकंयेनोपायेनते त भक्तामांप्राप्नुवन्ति १०

## भाषाअनुवाद

करताहूं अवयहकहतेहैं किउनपरअनुग्रहकरनेहीकेअर्थउनकेअज्ञानसेउ त्पन्नजोसंसारअन्धकार तिसकोनाशकरताहूं जोकहोकिकिसस्थानमेंवैठिऔरकौ नप्रकारसे सोअन्धकारदूरकरतेहौ तोकहतेहैंकिआत्मभावकहेबुद्धिवृत्तिमेंअव स्थानकरके प्रकाशमानतत्वज्ञानस्वरूपदीपकेद्वारा अन्धकारदूरकरताहौं ११

अर्जुनउवाचपरंब्रह्मपरंधामपवित्रंपरमंभवान् पुरुषंशाश्वतंदिव्यमादिदेवमजं विभुं १२

## शाङ्करभाष्यं ।

यथोक्तांभगवतोविभूतिंयोगञ्चश्रुत्वाअर्जुनउवाच परमिति परंब्रह्म परमात्मा परंधामपरंतेजःपवित्रंपावनंपरमंप्रकृष्टंभवान्पुरुषंशाश्वतंनित्यंदिव्यंदिवि भवमादिदेवंसर्व्वदेवानामादौभवंदेवमजंविभुंविभावनशीलं १२

## आनन्दगिरिकृतटीका ।

ऽबुद्धिवृत्तेरिवाज्ञानाद्यनाशकत्वमाशंक्यविशिनष्टि आत्मेति तस्याशयस्तन्निष्ठोवृत्ति विशेषःबाक्योत्यबुद्धिवृत्तत्रभिव्यक्तश्चिदात्मासहायसामर्थ्यादज्ञानादिनिवृत्तिहेतुरित्यर्थः बुद्धित्ववोधस्याज्ञानादिनिवर्त्तकत्वमुक्तावोधेत्वबुद्धेस्तन्निवर्तकत्वमितिपक्षान्तरमाह ज्ञानेति देहाद्यव्यक्तान्तानात्मवर्गातिरिक्तवस्तुगोचरत्वमाह विवेकेति भगवतिसदाविहितयाभक्त्यातस्यप्रसादोनुग्रहःसएवस्नेहस्तेनासेचनद्वारास्योत्पत्तिमाह भक्तीति मयेवभावनायामभिनिवेशोवातस्तेनप्रेरितोयंजायतेनहिवातप्रेरणमन्तरेणादौ दीपस्योत्पत्तिरित्याह मद्भावनेति ब्रह्मचर्यमष्टाङ्गमादिशब्देनशमादिग्रहः तेनहेतुनाहितसंस्कारवतीयाप्रज्ञातयाविधवर्त्तिनिष्ठयायंनह्यित्यतिरेकेणदीपोनिर्व्वर्त्तते तदाह ब्रह्मचर्येति नचाधाराद्वृतेदीपस्योत्पत्तिरदृष्टत्वादित्याह विरक्तेति तद्विषयेश्योव्यावृत्तंचित्तंरागाद्यकलुषितंतदेवनिवातमपवरकंतत्स्थितत्वमस्यदर्शयतिविषयेति भास्वतेतिविशेषणंविशदयति नित्येति सदातनंचित्तैकाग्र्यंतत्पूर्व्वकंध्यानंतेनज

## स्वामिकृतटीका ।

बुद्धियोगंदत्वाच तस्यानुभवपर्यन्तंतमाविष्कृत्याविद्याद्यतंसंसारंनाशयामीत्याह तेषामिति तेषामनुकम्पार्थमनुग्रहार्थमेवाज्ञानाज्जातंतमःसंसाराख्यंनाशयामिकुत्र स्थितःसन्केनवासाधनेनतमोनाशयसीत्यतआह आत्मभावस्थोबुद्धिवृत्तौस्थितःसन्भास्वताविस्फुरताज्ञानलक्षणेनदीपेननाशयामि ११ संक्षेपेणोक्तांविभूतिं विस्तरेण

## भाषाअनुवाद

संक्षेपरूपसेकहीगईजोविभूति उसकोविस्तारसेजाननेकीइच्छाकरिके अब अर्जुन भगवानकोस्तुतिकरतेहुये सातश्लोकसेकहतेहैं किआपपरब्रह्मऔपरमधामकहेआश्रय औपवित्रहौ इसकारणयहकि नित्यकहेसदावर्तमानपुरुष स्वयंप्रकाशआदिदेव औजन्मशून्य सर्वव्यापी तुमको ऋषिलोगकहतेहैं १२

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा असितो देवलो व्यासः स्वयञ्चैव ब्रवीषि मे १३

## शाङ्करभाष्यं

ईदृशं आहुः कथयन्ति त्वामृषयो वशिष्ठादयः सर्वे देवर्षिर्नारदस्तथा असितो देव लोऽप्येवमाह व्यासश्च स्वयञ्चैव ब्रवीषि मे मह्यं १३ सर्वमिति सर्वमेतद्यथोक्तमृषिभि स्त्वया चैतदृतं सत्यमेव मन्ये यन्मां प्रति वदसि भाषसे हे केशव न हि ते तव भगवन् व्यक्तिं प्रभ वं विदुर्न देवा न दानवा १४ यतस्त्वं देवादीनामादिरतः स्वयमिति स्वयमेवात्मना

## आनन्दगिरिकृतटीका।

नितं सम्यग्दर्शनफलं तद्वैभाः तद्दतातत्पर्यन्तेनेत्यर्थः तेनाज्ञाने सकार्ये निवृत्ते भग वद्भावः स्वयमेव प्रकाशो भवतीति मत्वा व्याख्यातमेव पदमनुवदति ज्ञानेति ११ निरस्ताशेषविशेषं निरुपाधिकं सोपाधिकञ्च सर्वात्मत्वादि भगवतो रूपं तद्विफलञ्च यु त्वा निरुपाधिकरूपस्य प्राक्तनबुद्ध्यनवगाह्योक्तिपूर्वकं मन्दानुग्रहार्थं सर्वदा सर्वबुद्धिग्रा ह्यं सोपाधिकं रूपं विस्तरेण श्रोतुमिच्छन् पृच्छतीत्याह यथोक्तमिति परं ब्रह्म भवानि ति लक्ष्यनिर्देशः तस्य लक्षणार्थं परं धामेत्यादि विशेषणत्रयं धामशब्दस्य स्थानवाचित्वं व्यावर्त्तयन् व्याचष्टे तेज इति तस्य चैतन्यस्य परमत्वं जन्मादिराहित्येन कौटस्थ्यं प्रकृष्टं पावनं सत्यन्तशुद्धत्वमुच्यते यदेवं लक्षणं परं ब्रह्म तद्भवानेव नान्य इत्यर्थः कुतस्त्वमेव मद्ब्रह्मासीरित्याशंक्याप्तवाक्यादित्याह पुरुषमिति दिवि परमे व्योम्नि भवतीति दिव्यः स र्वप्रपञ्चातीतं दीव्यति द्योतत इति देवः स चादिः सर्वभूतत्वादत एवात्मस्त्वां सर्वगत माहुरिति सम्बन्धः १२ उक्तविशेषणं त्वामृषयः सर्वे यस्मादाहुस्तस्मात्तद्वचनात्तद्य थोक्तं ब्रह्मत्वं युक्तमित्याह ईदृशमिति ऋषिग्रहणेन गृहीतानामपि नारदादीनां वि

## स्वामिकृतटीका

जिज्ञासुर्भगवन्तं स्तुवन्नर्जुन उवाच परं ब्रह्मेति सप्तभिः परं ब्रह्म परं धाम च आश्रयः पर मं पवित्रं भवानेव कुत इत्यत आह यतः शाश्वतं नित्यं पुरुषं तथा दिव्यं द्योतनात्मकं स्वयं प्र काशं आदिश्चासौ देवश्चेति तं देवानामादिभूतमित्यर्थः तथा अजं अजन्मानं विभुञ्च व्याप कं त्वामेवाहुः १२ के त इत्याह आहुरिति ऋषयो भृग्वादयः सर्वे देवर्षिश्च नारदः असितश्च देवलश्च व्यासश्च स्वयं त्वमेव साक्षान्मे मह्यं ब्रवीषि १३ अतो मम इदानीं त्वदी

## भाषाअनुवाद

कौन ऐसा कहते हैं तो इस पर कहते हैं कि भृगु आदि ऋषि सकल और देवर्षि नारद असि त ऋषि देवल व्यासदेव ये सब कहते हैं और आप भी साक्षात् हमसे कहते हो १३

सर्वमेतदृतं मन्ये यन्मां वदसि केशव। न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः १४

## शाङ्करभाष्यं

मां न वेत्थ जानासि त्वं कथम्भूतं निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तमीश्वरं पुरुषोत्तमं भूतानि भावयतीति भूतभावनः तत्सम्बुद्धौ हे भूतभावन भूतेश भूतानामीशः हे देवदेव जगत्पते १५ वक्तुमिति वक्तुं कथयितुमर्हसि अशेषेण विद्याश्चात्मविभूतयः आत्मनो

## आनन्दगिरिकृतटीका।

शिष्टत्वात् पृथक्ग्रहणं असितो देवलस्य पिता किमन्यैस्त्वं स्वयमेवात्मानमुक्तरूपं मह्यमुक्तवानित्याह स्वयञ्चेति १३

ऋषिभिस्तथाचोक्तत्वादुक्तं सर्वं सत्यमेवेति मम मनो पेत्याह सर्वमिति किं तदित्या शंक्यात्मरूपमित्याह यन्मामिति देवादिभिः सर्वैरुच्यमानतया तद्रूपे विशिष्टवक्तृग्रहणमनर्थकमित्याशंक्याह नहीति प्रभवो नाम प्रभवो निरुपाधिकस्वभावः यदा देवादीनामपि दुर्विज्ञेयं तवरूपं तदा का कथा मनुष्याणामित्यर्थः १४

कश्चिदेव महता कष्टेनानेकजन्मसंसिद्धो जानाति त्वदनुगृहीतस्तद्रूपमित्यभिप्रेत्याह यतइति स्वयमेवोपदेशमन्तरेणेत्यर्थः आत्मनाप्रत्येकेनाविषयतयेतियावत् आत्मानं निरुपाधिकं रूपं नच तव सोपाधिकमपि रूपमन्यस्य गोचरे तिष्ठतीत्याह निरतिशयेति पुरुषश्चासावुत्तमश्चेति क्षराक्षरातीतपूर्णचैतन्यरूपस्त्वं सम्बोधनेन

## स्वामिकृतटीका।

यैश्वर्येऽसम्भावनानिवृत्तेत्याह सर्वमेतदिति एतद्भवानेव परं ब्रह्मेत्यादि सर्वमपि ऋतं सत्यं मन्ये यन्मां प्रति त्वं कथयसि न मे विदुः सुरगणा इत्यादि तदपि सत्यमेव मन्ये इत्याह नहीति हे भगवंस्तव व्यक्तिं देवा न विदुः अस्मदनुग्रहार्थमियमभिव्यक्तिरिति न जानन्ति दानवाश्च अस्मन्निग्रहार्थमिति न विदुरेवेति १४

## भाषाअनुवाद

इससे अब आपके ऐश्वर्य्य मे असंभावनाबुद्धि निवृत्त होगई यह कहते हैं कि हे केशव आप जो कहते हो कि सब रूप हम ही हैं सो मैंने सत्य करि माना और जो आपने कहा कि सकल देवता हमको नहीं जानते वह भी यथार्थ करके मैंने जाना है सोई अर्ज्जुन कहते हैं कि हे भगवान भक्तों औ देवतों के अनुग्रह अर्थ जो तुमारे अवतार यह देवता नहीं जानते हैं और दानव भी यह नहीं जानते कि हमारे निग्रह के लिये भगवान का शरीर धारण भया है १४

स्वयमेवात्मनात्मानं वेत्थत्वंपुरुषोत्तम भूतभावनभूतेशदेवदेवजगत्पते १५ वक्तु
मर्हस्यशेषेणदिव्याह्यात्मविभूतयः याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्यतिष्ठसि १६

शाङ्करभाष्यं।

विभूतयोयास्तावक्तुमर्हसियाभिर्विभूतिभिरात्मनोमाहात्म्यविस्तरैरिमान्लोकांस्त्वं
व्याप्यतिष्ठसि १६

आनन्दगिरिकृतटीका

बोध्यते सर्वप्रकृतित्वंसर्वकर्तृत्वञ्चकथयति भूतानीति सर्वेश्वरत्वमाह भूताना
मिति उक्तंतेसोपाधिकंरूपंदेवादीनामाराध्यतामधिगच्छतीत्याह देवेति जग
तःसर्वस्यस्वामित्वेनपालयितृत्वमाह जगदिति १५ यस्मादस्मदृग्रामगोचरस्त
वात्माजिज्ञासितश्चतस्मात्त्वयैवतद्रूपंवक्तव्यमित्याह वक्तुमिति दिव्यत्वमप्राकृतत्वं
संप्रत्यन्वयमन्वाचष्टे आत्मनइति वक्तव्याविभूतीर्विशिनष्टि याभिरिति यद्द्वारा
लोकान्पूरयित्वावर्त्तसे ताविभूतीरशेषेण वक्तुमर्हसीत्यर्थः १६

स्वामिकृतटीका।

किंतर्हि स्वयमिति स्वयमेवत्वमात्मानंवेत्थजानासिनान्यः तदप्यात्मनास्वेनैववे
त्थनसाधनान्तरेणअत्यादरेणबहुधासम्बोधयति हेपुरुषोत्तमउत्तत्वेहेतुगर्भसम्बो
धनानिहेभूतभावनभूतोत्पादकभूतानामीशनियन्तादेवानामादित्यादीनां देवप्रका
शक जगत्पते विश्वपालक १५ यस्मात्तवाभिव्यक्तिं त्वमेववेत्सि नदेवादयस्तस्माद्व
क्तुमिति या आत्मनस्तवदिव्याअद्भुताविभूतयस्ताःसर्व्वावक्तुं त्वमेवार्हसियोग्योऽसि
याभिरिति विभूतीनांविशेषणंस्पष्टार्थं १६

भाषा अनुवाद

तोइसकाफलितअर्थक्याहै इसआकांक्षापरकहते हैं किहेपुरुषोत्तमआपही
अपनेकोजानते हो औरकोईतुमकोनहींजानैहै यहअतिआदरसे वारम्बारसम्बो
धनदेकहते हैं किहेभूतभावनभूतेशदेवदेवजगतपते इनसवसम्बोधनोंसेश्रीष्ठ
ष्णकापुरुषोत्तमत्वसाधनकियाहै १५ जिसहेतुतुमारातत्त्वऔअभिव्यक्तिकहेप्र
गटहोनातुमकोछोड़िदेवादिभी नहीं जानते इससेतुमारीजोअद्भुतविभूति सोतु
मारेहीकहनेयोग्यहैं किजिनविभूतियोंसेतुमसकललोकमेंव्यापरहेहो सोअपनी
उनदिव्यविभूतियोंकोकृपाकरके कहोतोमेरेमनकासन्देहछूटजाय १६

कथंविद्यामहंयोगिंस्त्वांसदापरिचिन्तयन् केषुकेषुचभावेषुचिन्त्योसिभगवन्मया १७
विस्तरेणात्मनायोगंविभूतिञ्चजनार्द्दन भूयःकथयतृप्तिर्हिंशृण्वतोनास्तिमेऽमृतं १८

शाङ्करभाष्यं

कथमिति कथंविद्यांविजानीयामहं हेयोगिन्त्वांसदापरिचिन्तयन् केषु केषुचभावेषुवस्तुषुचिन्त्योसिध्येयोसि भगवन्मया १७ विस्तरेणेति विस्तरेणात्मनोयोगंयोगैश्वर्य्यंशक्तिविशेषंविभूतिञ्चविस्तरंध्येयपदार्थानां हेजनार्द्दन अर्द्देतेर्गतिकर्म्मणोरूपं असुराणांदेवप्रतिपक्षभूतानां जनानांनरकादिगमयितृत्वाज्जनार्द्दन अभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनंसर्व्वैर्जनैर्याच्यत इति वाभूयःपूर्व्वमुक्तमपिकथयतृप्तिर्हि परितोषोयस्मान्नास्तिमेममशृण्वतःत्वन्मुखनिःसृतवाक्यामृतं १८

आनन्दगिरिकृतटीका

किमर्थंविभूतीः श्रोतुमिच्छतीत्याशंक्यध्यानसौकर्यप्रकारप्रश्नेनफलंकथयति कथमिति योगोनामैश्वर्य्यंतदस्यास्तीति योगी तत्संबुद्धौहेयोगिन्नहंसविष्टमतिस्त्वांकेनप्रकारेणसततमनुसन्दधानोविशुद्धबुद्धिर्भूत्वानिरुपाधिकंत्वां विजानीयामिति प्रश्नः प्रश्नान्तरंप्रस्तौति केषुकेष्विति चेतनाचेतनभेदादुपाधिबहुत्वाद्बहुवचनं १७ प्रकृतप्रश्नमुपसंहरति विस्तरेणेति अर्द्देर्गतिकर्म्मणोजनार्द्दनेतिरूपं तत्व्युत्पादयति असुराणामिति प्रकारान्तरेणशब्दार्थंव्युत्पादयति

स्वामिकृतटीका

कथनप्रयोजनंदर्शयन्प्रार्थयते कथमिति द्वाभ्यां हेयोगिन्कथंकैर्विभूतिभेदैः सदापरिचिन्तयन्नहंत्वांविद्यांजानीयां विभूतिभेदेनचिन्त्योसित्वंकेषुकेषुपदार्थेषुमया चिन्तनीयोऽसि १७ तदेवंबहिर्मुखेऽपिचित्ते तत्रतत्रविभूतिभेदेनत्वच्चिन्तैवयथाभवे

भाषा अनुवाद।

इसमेंअर्ज्जुनअपनेकहनेकाप्रयोजनदेखलायकरप्रार्थनाकरतेहैं किहेयोगिन्श्रीकृष्ण मैंतुमकोकिसरह तुमारीविभूतिभेदकेद्वारा निरन्तरभावनाकरिजाननेसकौंगा औरभिन्नभिन्नविभूतिमेंचिन्तनीयतुम कौनकौनपदार्थमें मेरीभावनाकेयोग्य हो अर्थात्किसकिसवस्तुमें तुमैंहमजानें १७ चित्तकीदृत्तिबहिर्मुखहोनेपरभी उससमैंतुमारीविभूतियोंकेद्वारा जिसप्रकारतुमाराचिन्तनहोय ऐसीउपायविस्तारसेकहो यहअर्जुनपूछतेहैं कितुमारासर्वज्ञत्वऔरसर्वशक्तिमत्त्वआदिस्वरूप जोयोगकाऐश्वर्यऔरसम्पूर्णविभूतिजोहै सोसब हेजनार्दनविस्तारसेपुनर्वारकहो क्योंकिआपकेअमृतस्वरूपवचनश्रवणकरतें हुयेभीमेरामनतृप्तनहीहोताहै १८

श्रीभगवानुवाच हन्तते कथयिष्यामिदिव्याह्यात्मविभूतयः प्राधान्यतःकुरु
श्रेष्ठनास्त्यन्तोविस्तरस्यमे १९

## शाङ्करभाष्यं।

हन्ततइति हन्तेदानींतेतवदिव्या दिविभवाआत्मविभूतयःआत्मनोममविभूतयोयास्ताःकथयिष्यामीत्येतत् प्राधान्यतोयत्रयत्रप्रधानायायाविभूतिस्तांतांप्रधानांप्राधान्यतःकथयिष्यास्यहंकुरुश्रेष्ठ अशेषतस्तुवर्षशतेनापिनशक्यते वक्तुमतोनास्त्यन्तोविस्तरस्यमेविभूतीनामित्यर्थः १९ तत्रप्रथममेवतावच्छृणु अहमिति अहमात्माप्रत्यगात्मागुडाकेशगुडाकानिद्रातस्याईशोगुडाकेशोजितनिद्र इत्यर्थः घनकेशइति वा सर्वेषांभूतानां आशयेन्तर्हृ दिस्थितोऽहमात्मा प्रत्यगात्मानित्यंध्येयस्तदशक्तेनचोत्तरेषुभावेषुचिन्त्योऽहंचिन्तयितुंशक्यः यस्मा दहमेवादिर्भूतानांकारणं तथामध्यञ्चस्थितिरन्तःप्रलयश्चएवञ्चध्येयोहं २०

## आनन्दगिरिकृतटीका

अभ्युदयेति ननुपूर्वमेवसप्तमेनवमेचविभूतिरैश्वर्यञ्चेश्वरस्यदर्शितं तत्किमिति श्रोतुमिष्यते तत्राह भूयइति अमृतममृतप्रख्यमित्यर्थः १८

प्रष्टारंविश्रम्भयितुंभगवानुक्तवानित्याह श्रीभगवानिति हन्तेत्यनुमतिं व्यावर्त्यजिज्ञासावच्छिन्नंकालंदर्शयति इदानीमिति दिविभवत्त्वमप्राकृतत्वमस्मदगोचरत्वंवाक्यान्वयंद्योतयति यास्ताइति सर्वविभूतीनांवक्तव्यत्वप्राप्तावुक्तं यत्रेति किमित्यनवशेषतोविभूतयोनोच्यन्ते तत्राह अशेषतस्त्विति तत्रहेतु यतइति १९

## स्वामिकृतटीका

तथाविस्तरेणकथयेत्याह विस्तरेणेति आत्मनस्तवयोगंसर्वज्ञत्वंसर्वशक्तित्वादिलक्षणंयोगैश्वर्यंविभूतिञ्चविस्तरेणपुनःकथय यतस्तववाक्यममृतरूपंशृण्वतोममतृप्तिरलंबुद्धिर्नास्ति १८ एवंप्रार्थितःसन्श्रीभगवानुवाच हन्तेति हन्तेत्यनुकम्पासम्बोधनं दिव्यायामद्विभूतयस्ताःप्राधान्येनतुभ्यंकथयिष्यामि यतोऽवान्तरस्यविभूतिविस्तरस्यमदीयस्यान्तोनास्ति अतःप्रधानभूताःकतिचिद्दर्शयिष्यामि १९

## भाषाअनुवाद

जबअर्जुननेऐसीप्रार्थनाकिया तबभगवानकहतेहैं किहेकुरुश्रेष्ठअर्जुन मेरीजोदिव्यविभूतीहैं सोतुमकोअच्छीप्रकारसेकहूंगा औरविस्तारसेकहनेकोतोमेरीविभूतियोंकाअन्तनहींहै इससेप्रधानप्रधानजोहैं सोसबकहूंगा १९

अहमात्मागुडाकेशसर्वभूताशयस्थितः । अहमादिश्चमध्यञ्चभूतानामन्तएवच २०
आदित्यानामहंविष्णुर्ज्योतिषांरविरंशुमान् मरीचिर्मरुतामस्मिनक्षत्राणामहं
शशी । २१

## शाङ्करभाष्यं

आदित्यं आदित्यानांद्वादशानांविष्णुर्नामादित्योऽहंज्योतिषांरविःप्रकाशयितॄणामंशुमान्
रश्मिमान्मरीचिर्नाममरुतांमरुद्देवताभेदानामस्मिनक्षत्राणामहंशशीचन्द्रमाः २१

## आनन्दगिरिकृतटीका

विभूतिप्रदर्शनेप्रस्तुते सत्यादावेवपारमार्थिकंपारमेश्वरंरूपंदर्शयितुंश्रोतृ
र्जुनस्यमनःसमाधानार्थंअर्थयते तत्रेति सोपाधिकमपिकाल्पनिकंपरस्यरूपंमस्मा
इव्यमाणंश्रोतुश्चित्तसमाधानञ्चकर्त्तव्यमेवेत्याह तावदिति आशेरतेस्मिन्विद्या
कर्मपूर्वप्रज्ञाइत्याशयोहृदयंसर्व्वेषांभूतानांहृदयेन्तःस्थितोयःप्रत्यगात्मासोऽहमेवेति
वाक्यार्थमाह सर्वेषामिति यस्तुमन्दोरूढ़ोवा परमात्मानमात्मत्वेनध्यातुंनालंतं
प्रत्याह तदशक्तेनेति वक्ष्यमाणादित्यादिषुपरस्यनध्येयत्वमन्यदेवकारणंकिञ्चित्त
त्रतत्र ध्येयमित्याशंक्याह यस्मादिति सर्वकारणत्वेनसर्वज्ञत्वेनसर्वेश्वरत्वेनच परस्य
ध्येयत्वमत्रेष्टं नान्यस्यकस्यचित्कारणस्यादित्यादिषुध्येयतेत्यर्थः उक्तध्यानाश
क्तोध्येयवक्तव्यंविभूतियोगमुपदिशति एवञ्चेति तत्रतत्र प्रधानत्वेनपरस्यध्येयत्वं २०

## स्वामिकृतटीका।

तत्रप्रथममैश्वरंरूपंकथयति अहमिति हेगुडाकेश सर्वेषांभूतानामाशयेष्व
न्तःकरणेषुसर्वज्ञत्वादिगुणैर्नियन्तत्वेनावस्थितःपरमात्माहं आदिर्जन्मसध्यं स्थितिः
अन्तःसंहारः सर्वभूतानांजन्मादिहेतुरहमेवेत्यर्थः २०

## भाषा अनुवाद

अबप्रथमईश्वरकास्वरूपकहतेहैं किहेगुडाकेशजितनिद्रअर्जुन परमात्मास्वरूप
मैंतावतभूतमात्रकेअन्तःकरणमेसर्वज्ञत्वआदिगुणोंसेनियन्तारूपस्थितहौं औरआ
दिमध्यअन्तकहेसर्वभूतोंकेसृष्टिस्थितिसंहारकाहेतुभीमैंहीहौंयहजानोगुडाकानि
द्राकोकहतेहैंअथवागुडाकहेंगुडचियालेघुंघुरालेहैंकेशजिसकेसोगुडाकेशहै २०
अबइसस्लोकसेलेकरअध्यायसमाप्तिपर्यन्तअपनीविभूतिकहतेहैं किबारहअदिति
केपुत्रोंमेविष्णुनामआदित्यमैंहूं औ प्रकाशकरूपोंमेसर्वत्रव्यापीरविरूपमैंहौंऔस
प्तदेवतोंकेबीचमरीचिनामहमैंजानोऔनक्षत्रोंमेचन्द्रमाभी मैंहींकोमानो २१

वेदानांसामवेदोस्मिदेवानामस्मिवासवः इन्द्रियाणांमनश्चास्मिभूतानामस्मिचेतना२२
रुद्राणांशङ्करश्चास्मिवित्तेशोयक्षरक्षसां वसूनांपावकश्चास्मिमेरुःशिखरिणामहं २३
पुरोधसाञ्चमुख्यंमांविद्धिपार्थबृहस्पतिं सेनानीनामहंस्कन्दःसरसामस्मिसागरः२४

शाङ्करभाष्यं

वेदानामिति वेदानांमध्येसामवेदोस्मिदेवानांरुद्रादित्यादीनांवासवइन्द्रोस्मिइन्द्रियाणामेकादशानांमनश्चास्मिचक्षुरादीनांसङ्कल्पविकल्पात्मकंमनश्चास्मिभूतानामस्मिचेतना कार्यकारणसंघातेऽभिव्यक्ताबुद्धेर्वृत्तिश्चेतना २२ रुद्राणामिति रुद्राणामेकादशानां शङ्करश्चास्मि वित्तेशःकुवेरोयक्षरक्षसांयक्षाणांरक्षसाञ्च वसूनामष्टानां पावकश्चास्मिअग्निः मेरुःशिखरिणांशिखरवतामहं २३ पुरोधसामिति

आनन्दगिरिकृतटीका

एवंशब्दार्थमेवदर्शयति आदित्यानामित्यादिना २१ मन्त्रब्राह्मणसमुदायानामृगादीनांमध्येसामवेदोस्मीति ध्यानान्तरमुदाहरति वेदानामिति संघातेजीवाधिष्ठिते इति यावत् पञ्चत्वंसर्वत्वव्यापिनीचैतन्याभिव्यञ्जिकेति शेषः २२ २३

स्वामिकृतटीका।

इदानींविभूतीःकथयति आदित्यानामिति यावत्समाप्ति आदित्यानाञ्चद्वादशादित्यानांमध्येविष्णुनामाहंज्योतिषांप्रकाशकानांमध्येअंशुमान्वियद्व्यापिरश्मियुक्तोरविःसूर्योऽहं मरुतांवायुनांमध्येमरीचिनामाहस्मि यद्वासप्तमरुद्गणादेवविशेषास्तेषांमध्येचन्द्रोऽहं अत्रचादित्यानामहंविष्णुरित्यादिषुप्रायशोनिर्धारणेषष्ठीक्वचिच्चभूतानामस्मिचेतनेत्यादिषुसम्बन्धेषष्ठी तत्रतत्रैवदर्शयिष्यामःविष्णुरित्यादिष्ववतारोऽपिप्रभावातिशयमात्रविवक्षयाविभूतित्वेननिर्दिश्यते अत परञ्चाध्यायसमाप्तिस्पष्टार्थत्वेऽपिक्वचित् किञ्चिद्व्याख्यास्यामः २१

वेदानामिति वासवइन्द्रःभूतानांसम्बन्धिनीचेतना ज्ञानशक्तिरहमस्मि २२

भाषाअनुवाद

औरवेदोंमेसामवेद देवतोंमेइन्द्र औइन्द्रियोंकेमध्यमे मनप्रधानइन्द्रीमैहौं तथाभूतकहेप्राणियोंकेविषे चेतना जोज्ञानशक्ति सोमैहौं २२ औरएकादशरुद्रोंमेशङ्कर औयक्षराक्षसोंमेकुवेरमैहौं अष्टवसुवोंकेवीचअग्निऔपर्वतोंमेसुमेरुनामपर्वतहमैंजानो २३ औरहेअर्जुन पुरोहितोंमेमुख्यबृहस्पतिहमहैं औसेनापतियोंमेस्वामकार्त्तिकभीहमहैं औरसरसांकहे थिरजलाशयोंकेमध्यसमुद्रहमकोजानो २४ और महर्षियोंमेभृगुमैहौं औरअक्षरतथापदआत्मक

महर्षीणांभृगुरहंगिरामस्म्येकमक्षरं यज्ञानांजपयज्ञोस्मिस्थावराणांहिमालयः२५
अश्वत्थःसर्ववृक्षाणांदेवर्षीणाञ्चनारदः गन्धर्वाणांचित्ररथःसिद्धानांकपिलोमुनिः २६
उच्चैःश्रवसमश्वानांविद्धिमाममृतोद्भवं ऐरावतंगजेन्द्राणांनराणाञ्चनराधिपं २७

## शाङ्करभाष्यम्।

पुरोधसांराजपुरोहितानांमुख्यंप्रधानंमांविद्धिजानीहि हेपार्थवृहस्पतिंसहीन्द्रस्ये तिमुख्यःस्यात्पुरोधाःसेनानीनां सेनापतीनामहंस्कन्दोदेवसेनापतिःसरसांयानिदेव खातानिसरांसितेषांसरसां सागरोस्मि भवामि २४ महर्षीणामिति महर्षी णांभृगुरहंगिरांवाचांपदलक्षणानामेकमक्षरमोङ्कारोस्मि यज्ञानामिति यज्ञानांजप यज्ञोस्मि स्थावराणांस्थितिमतांहिमालयः २५

अश्वत्थइति अश्वत्थःसर्ववृक्षाणांदेवर्षीणाञ्चनारदःदेवाएवसन्तऋषित्वंप्रा प्ताःमन्त्रदर्शित्वादेतेदेवर्षयः तेषांनारदोस्मिगन्धर्वाणांचित्ररथोनामगन्धर्वोस्मि सिद्धानांजन्मनैवधर्मज्ञानवैराग्यैश्वर्यातिशयंप्राप्तानांकपिलोमुनिः २६ उच्चैरिति उच्चैःश्रवसमश्वानांउच्चैः श्रवानामाश्वस्तंमांविद्धिजानीहिअमृतोद्भवंअमृतनिमित्तम थनोद्भवंऐरावतमिरावत्याअपत्यंगजेन्द्राणांहस्तीश्वराणांतंमांविद्धिइत्यनुवर्त्तते नराणां मनुष्याणाञ्चनराधिपंराजानंमांविद्धिजानीहि २७

## आनन्दगिरिकृतटीका

पुरोहितेषुवृहस्पतेर्मुख्यत्वेहेतुमाह सहीति २४ एकमित्योङ्कारस्यब्रह्मप्र तीकत्वेनतदभिमानत्वेन च प्रधानत्वमुच्यते जपयज्ञस्ययज्ञान्तरेभ्योहिंसादिराहि

## स्वामिकृतटीका

रुद्राणामिति रक्षसामपिक्रूरत्वादिसाम्यात्यक्षैःसहैकीकृत्य निर्द्देशः तेषांम ध्येवित्तेशःकुवेरोऽस्मिपावकोग्निःशिखरिणांशिखरवतामुच्छ्रितानांमध्येमेरुः २३
पुरोधसामितिपुरोधसांमध्ये देवपुरोहितत्वान्मुख्यंवृहस्पतिंमांविद्धिसेनानीनां

## भाषाअनुवाद

वाक्यकेबीचओंकारअक्षरभीमैंहौं औयज्ञोंमे हिंसारहितहेतुसे जपरूपयज्ञमै हौं तथास्थावरोंमे हिमालयगिरि हमहैं २५ औरवृक्षजातियोंमेअश्वत्थकहेपीपर औदेवऋषियोंमेनारदमैहौं औगन्धर्वगणोंमेचित्ररथ औसिद्धकहे आजन्मसेपरमा र्थतत्त्वज्ञानियोंमे कपिलमुनिमैहौं २६ अश्वकहेघोड़ोंमेउच्चैःश्रवा औगजेन्द्रों मे ऐरावत तथामनुष्योंमेनरपति कहेराजाभीमैंहींहौं २७

आयुधानामहंवज्रं धेनूनामस्मिकामधुक् प्रजनश्चास्मिकन्दर्पः सर्पाणामस्मिवासुकिः २८
अनन्तश्चास्मिनागानां वरुणोयादसामहं पितृणामर्य्यमाचास्मियमः संयमतामहं २९

## शाङ्करभाष्यं

आयुधानामिति आयुधानामहंवज्रं दधीच्यस्थिसम्भवंमांविद्धि धेनूनांदोग्ध्री णामस्मिकामधुक्वशिष्ठस्यसर्वकामानांदोग्ध्रीसामान्यावाकामधुक् प्रजनःप्रजनयितास्मिकन्दर्पःकामःचास्मि सर्पाणांसर्पभेदानामस्मिवासुकिःसर्पराजः २८ अनन्त इति अनन्तश्चास्मिनागानांनागविशेषाणांनागराजः वरुणो यादसामहमब्देवतानां राजाहं पितृणामर्यमानामपितृराजश्चास्मि यमःसंयमतांसंयमनंकुर्व्वतामहं २९

## आनन्दगिरिकृतटीका।

त्वेनप्रधान्यमुपेत्याह यज्ञानामिति शिखरवतामुच्छ्रितानांपर्व्वतानांमध्येमेरुरहमित्युक्तेपिस्थितिशीलानांतेषामेवहिमवान्पर्व्वतराजोस्मीत्यर्थभेदंगृहीत्वाह स्थितिमतामिति २५ सर्व्वदृक्षाणामित्यत्रसर्व्वशब्देनवनस्पतयोगृह्यन्ते २६ २७
प्रजनयतीतिव्युत्पत्तिमाश्रित्याहप्रजनयितेतिसर्पानागाश्चजातिभेदाद्भिद्यन्ते २८२९३०

## स्वामिकृतटीका

सेनापतीनांमध्ये देवसेनापतिःस्कन्दोऽहमस्मिसरसांस्थिरजलाशयानांमध्ये समुद्रोऽस्मि २४ महर्षीणामिति गिरांवाचांपदात्मिकानांमध्येएकमक्षरमोङ्काराख्यं पदमस्मि २५ अश्वत्थइति देवाएवसन्तोये मन्त्रदर्शनेनऋषित्वंप्राप्तास्तेषांमध्ये नारदोऽस्मिसिद्धानामुत्पत्तितएवाधिगतपरमार्थतत्त्वानांमध्ये कपिलाख्योमुनिरस्मि २६ उच्चैःश्रवसमिति अमृतार्थंक्षीरोदाब्धिमथनादुद्भूतं उच्चैश्रवसनामाश्व मद्विभूतिंविद्धिअमृतोद्भवमित्येतदैरावतेऽपिसंबध्यतेनराधिपंराजानंमांविद्धि २७

आयुधानामिति कामान्दोग्धीतिकामधुक्प्रजनःप्रजोत्पत्तिहेतुःकन्दर्पःकामोऽस्मिनकेवलंसम्भोगमात्रप्रधानःकामोमद्विभूतिरशास्त्रीयत्वात्सर्पाणांसविषाणांराजा वासुकिरस्मि २८ अनन्तइति नागानांनिर्विषाणांराजाअनन्तः शेषोहमस्मि

## भाषाअनुवाद

औरआयुधोंमेवज्रऔधेनुवोंमेकामधेनुऔप्रजावोंका उत्पत्तिकारी जोकन्दर्प सो मैहौं तथासर्पोंमेवासुकीभीहमैजानो विषधारियोंकोसर्प संज्ञाहै, २८ नागों मेअनन्तशेषनाग औरजलजीवोंमेवरुणराजामैहौं औपित्तरोंमेअर्यमातथा दण्डकारियोंमेयमराजहमैहु नागऔसर्पकेवीचविषरहितकोनाग कहते हैं २९

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहं मृगाणाञ्च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणां ३०
पवनः पवतामस्मि रामः शस्त्रभृतामहं झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ३१

## शाङ्करभाष्यं

प्रह्लादइति प्रह्लादो नाम चास्मि दैत्यानां दितिवंश्यानां कालः कलयतां कलनं गण
नं कुर्व्वतामहं मृगाणाञ्च मृगेन्द्रः सिंहो व्याघ्रो वाहं वैनतेयश्च गरुत्मान् विनतासुतः प
क्षिणां पतत्रिणामहं ३० पवनो वायुः पवतां पावयितॄणां अस्मि रामः शस्त्रभृतामहं
शस्त्राणां धारयितॄणां दाशरथी रामोहं झषाणां मत्स्यादीनां मकरो नाम जातिविशेषो
हं स्रोतसां स्रवन्तीनामस्मि जाह्नवी गङ्गा ३१ सर्गाणामिति सर्गाणां सृष्टीनां आदि
रन्तश्च मध्यञ्चैवाहमुत्पत्तिस्थितिलयानांऽहमर्ज्जुन भूतानां जीवाधिष्ठितानामेवादि
रन्तश्चेत्याद्युक्तमुपक्रमे इह तु सर्व्वस्यैव सर्गमात्रस्येति विशेषः अध्यात्मविद्या विद्यानां मो
क्षार्थत्वात् प्रधानमस्मि वेदोऽर्थनिर्णयहेतुत्वात् प्रवदतां प्रधानमतः सोऽहमस्मि प्रवक्तृद्वा

## आनन्दगिरिकृतटीका

अहमादिश्चेत्यादावुक्तमेव पुनरिहोच्यते तथा च पुनरुक्तिरित्याशंक्याह भूतानामि
ति सर्गशब्देन सृज्यन्त इति सर्व्वाणि कार्य्याणि गृह्यन्ते अध्यात्मविद्येति आत्मन्यन्तःक
रणपरिणतिरविद्यानिवर्त्तिका गृहीता प्रवदतामवस्थीवादो वीतरागकथा तत्वनिर्ण
याय माना वदा प्रवदतामिति लक्षणया कथाभेदो वादादिरं तद्वारिद्वारेण गृहीत्याह प्रव
क्तृति ३१ ३२

## स्वामिकृतटीका।

यादसां जलचराणां मध्ये राजा वरुणोऽस्मि पितॄणां राजा अर्य्यमास्मि संयमतां नियम
नं कुर्वतां मध्ये यमोऽस्मि २९ प्रह्लाद इति कलयतां वशीकुर्व्वतां गणयतां वा मध्ये
कालोहमस्मि मृगेन्द्रः सिंहः पक्षिणां मध्ये गरुडोऽस्मि ३० पवन इति पवतां
पावयितॄणां वेगवतां वा मध्ये वायुरहमस्मि रामो दाशरथिः झषाणां मत्स्यानां मध्ये
मकरनाम मत्स्यजातिविशेषोहं स्रोतसां प्रवाहोदकानां मध्ये भागीरथी ३१

## भाषाअनुवाद

दैत्योंमे प्रह्लाद मैं हौं और वशकरनेवालोंमें अथवा संख्याभे काल मैं हौं मृगजातिमें मृगे
न्द्रकहे सिंह मैं तथा पक्षियोंमें गरुड मैं हौं। ३० और पवित्र तथा वेगवानोंमें पवन क
हे वायु औ शस्त्रधारियोंमें राम दशरथके पुत्र मझको जानो तथा मछलियोंमें मक
र नाम मत्स्य मैं हौं और स्रोत कहे प्रवाहरूप नदियोंमे जाह्नवी गङ्गा भी मैं हौं ३१

सर्गाणामादिरन्तश्च मध्यञ्चैवाहमर्जुन अध्यात्मविद्याविद्यानांवादःप्रवदतामहं ३२
अक्षराणामकारोस्मिद्वन्द्वःसामासिकस्यच अहमेवाक्षयःकालोधाताहंविश्वतोमुखः३३

शाङ्करभाष्यं।

देशवदनभेदानामेववादजल्पवितण्डानामिहग्रहणंप्रवदतामिति ३२
अक्षराणामिति अक्षराणांवर्णानामकारोवर्णोस्मिद्वन्द्वःसमसोस्मि सामासिकस्यसमाससमूहस्यकिञ्च अहमेवाक्षयोऽक्षीणःकालःप्रसिद्धःक्षणलवाख्यः अथवा परमेश्वरःकालस्यापिकालोस्मि धाताहंकर्मफलस्यविधातासर्वजगतोविश्वतोमुखःसर्वतोमुखः ३३

आनन्दगिरिकृतटीका

सर्वहरश्चब्दस्यमुख्यमर्थान्तरमाह अथवेति ३३ भाविकल्पानामित्युक्तमेवस्पष्टयति उत्कर्षेति कीर्त्तिर्धार्मिकत्वनिमित्ता ख्यातिःश्रीर्लक्ष्मीःकान्तिःशोभावाक्वाणीसर्व

स्वामिकृतटीका।

सर्गाणामिति सृज्यन्तइति सर्गाआकाशादयस्तेषामादिरन्तश्चमध्यञ्चैवाहं अहमादिश्चमध्यञ्चेत्यनेनवृष्ट्यादिकर्तृत्वंपारमैश्वर्यमुक्तं अत्रतुसृष्टिस्थितिप्रलयाःसद्विभूतित्वेनध्येयाइत्युच्यतइतिविशेषः अध्यात्मविद्याआत्मविद्याप्रवदतांवादिनांसम्बन्धिन्योवादजल्पवितण्डाख्यास्तिस्रःकथाप्रसिद्धास्तासांमध्येवादोऽहं यत्रद्वाभ्यामपिप्रमाणतस्तर्कतश्चस्वपक्षःस्थाप्यते परपक्षश्छलजातिनिग्रहस्थानैर्दूष्यते सजल्पोनामयत्रत्वेकःस्वपक्षंस्थापयति अन्यस्तुछलजातिनिग्रहस्थानैस्तत्पक्षंदूषयति नतुस्वपक्षंस्थापयति सावितण्डानामकथा तत्रजल्पवितण्डेविजिगीषमाणयोर्वादिनोःशक्तिपरीक्षामात्रफले वादस्तुवीतरागयोःशिष्याचार्ययोर्वातत्वनिरूपणफलः अतोऽसौश्रेष्ठत्वान्मद्विभूतिरित्यर्थः ३२ अक्षराणामिति अक्षराणांवर्णानांमध्येअकारोऽस्मितस्यसर्व

भाषाअनुवाद।

सर्गकहे आकाशादिपदार्थोंमे आकाशजो आदिमध्यअन्तमे सदावर्त्तमानसो मैहौं अथवासृष्टिमे आदिमधअन्तमैहूं तथाहेअर्जुन विद्योंमे अध्यात्मविद्याऔ प्रवादकरनेबालोंकेवीचवादरूपमैहौ जिससेसिद्धान्तपक्षथिरहोताहै ३२
औरअक्षरोंकेमध्यमेअकारअक्षरमैहूं औरसमासोंकेविषेउभयपदप्रधान द्वन्द्वसमासमैहौंहूं औरअक्षयप्रवाहरूपकालजोसोहमहैं औरफलप्रदानकरनेबालोंमे विश्वतोमुख कहेसर्वप्रकारऔसवतरफसेसर्वफलविधानकर्त्तामैहैं ३३

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यतां कीर्त्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ३४

### शाङ्करभाष्यं।

मृत्युरिति मृत्युर्द्विविधो धनादिहरः प्राणहरश्च तत्र यः प्राणहरः सर्वहरः स उच्यते सोऽहमित्यर्थोऽथवा पर ईश्वरः प्रलये सर्वहरणात् सर्वहरः सोऽहमुद्भवश्चोत्कर्षोऽभ्युदयस्तत्प्राप्तिहेतुश्चाहं केषां भविष्यतां भाविकल्याणानामुत्कर्षप्राप्तियोग्यानामित्यर्थः कीर्त्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमेत्येता उत्तमाः स्त्रीणामहमस्मि यासामाभासमात्रसम्बन्धेनापि लोकाः कृतार्थमात्मानं मन्यन्ते ३४ बृहत्सामेति बृहत्साम तथा सम्नां मोक्षप्रतिपादकसामवेदविशेषः प्रधानमस्मि गायत्रीछन्दसामहं गाय

### आनन्दगिरिकृतटीका

स्वप्रकाशिकास्मि तथा चिरानुभूतस्मरणशक्तिः मेधा ग्रन्थधारणशक्तिः धृतिर्धैर्यं क्षमा मानापमानयोरविकृतचित्तता स्त्रीपुंकीर्त्यादीनामुत्तमत्वमुपपादयति यासामिति ३४ वेदानां सामवेदोऽस्मीत्युक्तं तत्रावान्तरविशेषमाह बृहदिति छन्दसां मध्ये गायत्रीनामयच्छन्दस्तदहमित्ययुक्तं छन्दसामृगादिव्यतिरेकेणस्वरूपाभावादित्याशंक्याह गायत्र्यादीति द्विजातेर्द्वितीयजन्मजननत्वादित्यर्थः मार्गशीर्षो मृगशीर्षेण युक्ता पौर्णमास्यस्मि

### स्वामिकृतटीका।

वाङ्मयत्वेन श्रेष्ठत्वात् तथा च श्रुतिः अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति स्तूयत इति श्रेष्ठं सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वः रामकृष्णावित्यादिसमासोऽस्मि उभयपदप्रधानत्वेन श्रेष्ठत्वात् अक्षयः प्रवाहरूपः कालो ऽहमस्मि कालः कलयतामहमित्यत्रायुर्गणनात्मकः सम्वत्सरशताद्यायुःस्वरूपकाल उक्तः स च तस्मिन्नायुषि क्षीणे सति क्षीयते अत्र तु प्रवाहात्मकोऽक्षयः काल उच्यत इति विशेषः कर्मफलविधातॄणां मध्ये विश्वतोमुखो धाता सर्वकर्मफलविधाताहमित्यर्थः ३३

मृत्युरिति संहारकाणां मध्ये सर्वहरो मृत्युरहं भविष्यतां भाविकल्याणानां प्राणिनामुद्भवोऽभ्युदयोऽहं नारीणां मध्ये कीर्त्त्याद्याः सप्तदेवतारूपाः स्त्रियोऽहं यासामाभासमात्रयोगेन प्राणिनः श्लाघ्या भवन्तीति ताः कीर्त्त्याद्याः स्त्रियो मद्विभूतयः ३४

### भाषाअनुवाद।

संहारकारियों के मध्य में सर्वसंहारकारी मृत्युरूप हमको जानो और होनेवाली वस्तुओं में उद्भवपदार्थ हम हैं और स्त्रियों में सप्तनारी कहे कीर्त्ति श्री वाणी स्मृति मेधा धृति क्षमा ये रूप मेरे हैं कि जिनको पाय कर मनुष्य धन्य होते हैं ३४

बृहत्साम तथा साम्नां गायत्री छन्दसामहं मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ३५
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहं जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहं ३६
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः मुनीनामप्यहं व्यासः कवीनामुशना कविः ३७

शाङ्करभाष्यं

त्र्यादिछन्दोविशिष्टानामृचां गायत्री ऋगहमित्यर्थः मासानामिति मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरो वसन्तः ३५ द्यूतमिति द्यूतमक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणामस्मि तेजस्विनां तेजोऽहं जयोऽस्मि जेतॄणां व्यवसायोऽस्मि व्यवसायिनां सत्त्वं सत्त्ववतां सात्त्विकवतां सात्त्विकानामहं ३६

आनन्दगिरिकृतटीका।

न्निति मार्गशीर्षो मासः सोऽहं पक्वशस्याढ्यत्वादित्याह मासानामिति वसन्तो रमणीयत्वादिति शेषः ३५ द्यूतमुक्तलक्षणं सर्वस्वापहारकारणमन्यायापदेशेन परा भिप्रेतं निघ्नतां स्वाभिप्रेतं वा संपादयतामित्याह छलस्येति तेजोऽप्रतिहताज्ञा उत्कर्षो जयः व्यवसायः फलहेतुरुद्यमः धर्मज्ञानवैराग्यादि सत्त्वकार्यं सत्त्वं उशनाः शुक्रः क विशब्दो न यौगिको न रूढः पौनरुक्त्यात् ३६ ३७

स्वामिकृतटीका

बृहदिति त्वाइन्द्रहवामहइत्यस्यामृचि गीयमानं बृहत्साम अहं तेन चेन्द्रः सर्वेश्वरत्वेन स्तूयत इति श्रैष्ठ्यं छन्दोविशिष्टानां मन्त्राणां मध्ये गायत्री मन्त्रोऽहं द्विजत्वापादकत्वेन सोमाहरणेन च श्रेष्ठत्वात् कुसुमाकरो वसन्तः ३५ द्यूतमिति छलयतामन्योन्यवञ्चनपराणां सम्बन्धि द्यूतमस्मि तेजस्विनां प्रभाववतां तेजः प्रभावोऽस्मि जेतॄणां जयोऽस्मि व्यवसायिनामुद्यमवतां व्यवसाय उद्यमोऽस्मि सत्त्ववतां सात्त्विकानां सत्त्वमहं ३६

भाषाअनुवाद

और सामवेदमे मन्त्रब्राह्मणगद्यपद्यभूतश्रुतियोंके मध्यमें बृहत्सामनाम हमको जानो जिससे इन्द्र गाये जाते हैं और छन्दवन्ध्ययुक्त मन्त्रोंके मध्य गायत्री हम हैं और मास महीनोंमे मार्गशीर्ष कहे अगहन मास हम हैं और ऋतुवोंमे वसन्त ऋतु मैं हौं ३५ छलवस्तुवोंमे द्यूत कहे जुआ मैं हौं और तेजस्वियोंमे तेज जो प्रताप सो मैं तथा जय और व्यवसाय कहे उद्यम भी मैं और सतोगुणी जितने हैं उनमे सतोगुण हम हैं ३६ और वृष्णिवंशियोंमे वासुदेव कृष्ण हम हैं जो तुमको उपदेश करते हैं और पाण्डवोंमे अर्जुन जो तुम सो मैं हूं औ मुनियोंमे व्यासदेव तथा कवियोंमे उसना शुक्र हम हैं ३७

दण्डोदमयतामस्मिनीतिरस्मिजिगीषतां मौनंचैवास्मिगुह्यानांज्ञानंज्ञानवतामहं ३८
यच्चापिसर्वभूतानांबीजंतदहमर्जुन नतदस्तिविनायत्स्यान्मयाभूतंचराचरं ३९

## शाङ्करभाष्यं

वृष्णीनामिति वृष्णीनांयादवानांवासुदेवोस्मिअयमेवाहंत्वत्सखा पाण्डवानांध नञ्जयस्त्वमेव मुनीनांमननशीलानांसर्वपदार्थज्ञानिनामप्यहंव्यासः कवीनांक्रान्तद र्शिनामुशनाःकविरस्मि ३७ दण्डइति दण्डोदमयतांदमयितॄणामस्मिअदान्ता नांदमनकारणंनीतिरस्मिजिगीषतांजेतुमिच्छतां मौनञ्चैवास्मिगुह्यानांगोप्यानां ज्ञानंज्ञानवतामहं ३८ यच्चापीति यच्चापिसर्वभूतानांबीजंप्ररोहकारणंतदहमर्जु न प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह नतदस्तिभूतंचराचरंवा मयाविनायत्स्या द्विनामयापकृष्टंपरित्यक्तं निरात्मकंशून्यं हितत्स्यादतोमदात्मकंसर्वमित्यर्थः ३९

## आनन्दगिरिकृतटीका

अदान्तानुत्पथान्पथिप्रवर्त्तयतांदण्डोऽनुत्पथप्रवृत्तौनिग्रहेहेतुरित्यर्थःनीति र्न्यायोधर्मस्यजयःपापस्यप्रकाशकः मौनंवाचःसंयमत्वमुत्तमावा चतुर्थाश्रमवृत्तिः श्र वणादिद्वारापरिपक्वसमाधिजन्यं सम्यग्ज्ञानं ३८ जायमानप्रतिबिम्बितंचै तन्यंबीजं किमितिस्थावरंजङ्गमंवा त्वदतिरेकेणनभवति तत्राह मयेति तस्यापि स्वरूपेणसत्वमाशंक्योक्तं शून्यं हीति आत्मनोपकर्षादित्यर्थः मयैवसच्चिदानन्दस्वरू पेण सर्वस्यसिद्धेरित्यतःशब्दार्थः ३९ दिव्यानांविभूतीनांपरिमितत्वशङ्कां वार

## स्वामिकृतटीका।

वृष्णीनामिति वासुदेवोयोहंत्वामुपदिशामि धनञ्जयस्त्वमेवमद्विभूतिःमुनीनांवे दार्थमननशीलानांवेदव्यासोस्मि कवीनांशास्त्रदर्शिनामुशनानामाकविःशुक्रः ३७ दण्डइति दमयतांदमनकर्त्तॄणांसम्बन्धीदण्डोऽस्मियेनासंयताअपिसंयताभवन्ति सदण्डोमद्विभूतिःजेतुमिच्छतांसम्बन्धिनीसामाद्युपायरूपानीतिरस्मि गुह्यानां गो प्यानांगोपनहेतुर्मौनवचनमस्मि नहितूष्णींस्थितस्याभिप्रायोज्ञायतेज्ञानवतांतत्व ज्ञानिनांयत्ज्ञानं तदहमस्मि ३८ यच्चापीति यदपिसर्वभूतानांबीजंप्ररोहकार

## भाषा अनुवाद

दमकरनेवालोंमेदण्डरूपहम तथाजीतनेवालोंकीनीतिहमैमानो गुह्यपदार्थों मेमौन जोसोहम औरज्ञानवानोंमेज्ञानरूपभीहमहैं ३८ औरयावतजीवों मे जोबीज सोहेअर्जुनहमहैं औरजोमेरेविनाहै सोकुछनहीं है अर्थात्चराचर

नान्तोऽस्तिममदिव्यानांविभूतीनांपरन्तप एषतूद्देशतःप्रोक्तोविभूतेर्विस्तरोमया ४०
यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेववा तत्तदेवावगच्छत्वं ममतेजोंशसम्भवः ४१

### शाङ्करभाष्यं

नान्तोस्तीति नान्तोस्तिममदिव्यानांविभूतीनांविस्तराणांपरन्तप नहीश्वरस्य सर्वात्मनोदिव्यानांविभूतीनांइयत्ताशक्यावक्तुंज्ञातुंवाकेनचित्एषतूद्देशतएकदेशेन प्रोक्तो विभूतेर्विस्तरोमया ४०

यद्यदिति यत्यत्लोकेविभूतिमद्विभूतियुक्तंसत्वंवस्तुजातंश्रीमदूर्जितमेव वा श्रीः लक्ष्मीःतयासहितंउत्साहोपेतंवा तत्तदेवावगच्छत्वंजानीहिममेश्वरस्य तेजोंशसम्भवंतेजसोंशःएकदेशःसम्भवोयस्य तत्तेजोंशसम्भवमित्यवगच्छ त्वंजानीहि ४१

### आनन्दगिरिकृतटीका ।

यति नेत्यादिना तदेवोपपादयति नहीति कथंतर्हिविभूतेर्विस्तरोदर्शितस्तत्राह ए षत्विति ४० अनुक्ताअपिपरस्यविभूतीःसंग्रहीतुंलक्षणमाह यद्यदिति वस्तुप्राणिजा तंश्रीमत्सम्पद्विमद्वाशोभावद्वाकान्तिमद्वासप्राणंवलवदूर्जितंतदाह उत्साहेति सम्भ वत्यास्मादितिसम्भवःतेजसश्चैतन्यस्येश्वरशक्तेर्वांशस्तेजोंशःसम्भवोस्येतितेजोंशसम्भवं

### स्वामिकृतटीका

यंतदहंतत्रहेतुःमयाविनायत्स्यात् भवेत्तच्चरमचरंवा भूतंनास्त्येवेति ३९ प्रकर णार्थमुपसंहरति नान्तोऽस्तीति अनन्तत्वाद्विभूतीनां ताःसाकल्येनवक्तुंनशक्यन्ते ए षतुविभूतिविस्तरउद्देशतःसंक्षेपतःप्रोक्तः ४०

पुनश्चसाकांक्षंप्रतिकथञ्चित्साकल्येनकथयति यत्यदिति विभूतिमदैश्वर्ययुक्तं श्रीमत्सम्पत्तियुक्तंऊर्जितंकेनापिप्रभाववलादिनागुणेनातिशयितंयद्यत्सत्वं वस्तुमा त्रं तत्तदेवममतेजसःप्रभावस्यांशेनसम्भूतंजानीहि ४१ अथवाकिमेतेनपरिच्छि

### भाषाअनुवाद

मेरेविनाभीकुछ्वाकोनहींहैं ३९ जिसहेतुहेपरन्तपअर्जुन मेरीदिव्यविभूतियों काअन्तनहींहै इससेसम्पूर्णकहीनहींजायसकतींहैं इतनीजोकहा सोउद्देशकहे संक्षेपसे मैनेलक्षित करायाहै ४०

यहसुनिअधिकश्रवणकेआकांक्षीअर्जुनसेभगवानसंक्षेपरूपअपनीसर्वरूपता कहतेहैं कि ऐश्वर्ययुक्त अथवावलयुक्त या प्रभावयुक्त तथाविद्याबुद्धिरूपगुणयुक्त जोवस्तुमात्रहै सोमेरेअंशकीप्रभावसेजानो अर्थात्उसमेमेराविशेषअंशहै ४१

अथवाबहुनैतेनकिंज्ञातेनतवार्जुन विष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगत् ४२
इति श्रीभगवद्गीतायांयोगशास्त्रेविभूतियोगोनामदशमोऽध्यायः १०

## शाङ्करभाष्य

अथवेति अथवाबहुनाएतेनैवमादिनाकिंज्ञातेनतवार्जुनस्यात् सावशेषेण अशेष तस्त्वमिममुच्यमानमर्थंशृणु विष्टभ्यविशेषतस्तम्भनंदृढंकृत्वाइदंकृत्स्नंजगत् एकांशे न एकावयवेनैकपादेनसर्व्वभूतस्वरूपेणेत्येतत्तथाचमन्त्रवर्णपादोस्यसर्व्वाभूतानीति स्थितोहमिति ४२ इति श्रीशाङ्करभाष्येदशमोध्यायः १०

## आनन्दगिरिकृतटीका

तदाह तेजसइति ४१ सर्व्वेषांसुगमत्वांयाबयवस्वविभूतिमुक्ता भक्तानुग्रहार्थं साक ल्येनतामाह अथवेति पक्षान्तरपरिग्रहार्थमथवेत्युक्तं बहुनाविस्तीर्णेनैतेनग्रन्थेन सं ज्ञातेनसावशेषेणतवशक्तस्यनकिञ्चित्फलंस्यादित्याह बहुनेति नहिविभूतियुक्तासु ज्ञातासुसर्व्वंज्ञायते कासाञ्चिदेवविभूतीनामुक्तत्वादित्यर्थःतर्हिकेनोपदेशेनाल्पा क्षरेणसर्व्वार्थोज्ञातुंशक्यतेतत्राह अशेषतइति विशेषतस्तम्भनंविधरणं सर्व्वभूत स्वरूपेणसर्व्वप्रपञ्चोपादानशक्तुपाधिकेनैकेनपादेनकृत्स्नंजगत्विष्टत्यस्थितोस्मीति सम्बन्धः तत्रैवश्रुतिंप्रमाणयति तथाचेति तदनेनभगवतोनानाविधविभूतीर्ध्येयत्वेन ज्ञेयत्वेनचोपदिश्यान्तेसर्व्वप्रपञ्चात्मकंध्येयरूपंदर्शयित्वा त्रिपादस्यामृतंदिवीति प्र पञ्चाधिकंनिरुपाधिकंतत्वमुपदिशता परिपूर्णः सच्चिदानन्दैकतानः तत्पदलक्ष्यो ऽर्थोनिर्द्धारितः ४२ इति आनन्दगिरिकृतटीकायांदशमोध्यायः १०

## स्वामिकृतटीका

न्त्रविभूतिदर्शनेनसर्व्वत्रसमदृष्टिमेवकुर्व्वित्याह अथवेति बहुनापृथग्ज्ञातेनकिंतव कार्यं यस्मादिदंसर्व्वंजगदेकांशेनैकदेशमात्रेणविष्टभ्यधृत्वाव्याप्येतिवा अहमेवावस्थि तः नमद्व्यतिरिक्तंकिञ्चिदस्ति पादोस्यविश्वाभूतानीतिश्रुतेः इन्द्रियद्वारतश्चित्तेवहि र्भावतिसत्यपि इशदृष्टिविधानायविभूतीर्दशमेऽब्रवीत् ४२ इतिदशमोध्यायः १०

## भाषाअनुवाद

अथवाहेअर्जुन इससबबखेडेसेतुमकोक्याप्रयोजनहै सकलवस्तुमेहमको देखोयहक हतेहैंकियावत्पदार्थमेमैव्यापरहाहौं यहजगतमेरारूपहैमोहिछोडिकुछमात्रभी नहीं है४२ इति जगन्नाथसुकुलविरचितभवभानीनामभाषायांदशमोध्यायः१०

## एकादश अध्यायः

अर्जुनउवाच मदनुग्रहायपरमंगुह्यमध्यात्मसंज्ञितं यत्त्वयोक्तंवचस्तेनमोहोयं विगतोमम १

### शाङ्करभाष्यं।

भगवतोविभूतयउक्तास्तत्रचविष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगदितिभगवताभिहितंश्रुत्वायज्जगदात्मरूपमाद्यमैश्वरं तत्साक्षात्कर्त्तुमिच्छन्नर्जुनउवाच मदनुग्रहार्थंपरमंनिरतिशयंगुह्यंगोप्यंअध्यात्मसंज्ञितमात्मनात्मविवेकविषयं निरतिशयंयत्त्वयोक्तं वचोवाक्यं तेनवचसामोहोयंविगतो ममाविवेकबुद्धिरपगतेत्यर्थः १

### आनन्दगिरिकृतटीका।

तेनतेनात्मनाभगवदनुसन्धानार्थमुक्ताविभूतीरनुवदति भगवतइति परस्यसोपाधिकंनिरुपाधिकञ्च चिद्रूपंध्येयत्वेनज्ञेयत्वेनचोक्तमित्यर्थः सोपाधिकमैश्वरंरूपमशेषजगदात्मकंविश्वरूपाख्यमधिकृत्याध्यायान्तरमवतारयन्ननन्तरप्रश्नोपयोगित्वेन वृत्तंकीर्त्तयति तत्रचेति यदेतदशेषप्रपञ्चात्मकमखिलस्यैतस्यजगतःकारणंसर्वज्ञंसर्वैश्वर्यवद्रूपमुक्तंतदिदंश्रुत्वा तस्यसाक्षात्कारंयियाचयिषुरादौष्टष्टवानित्याह श्रुत्वेति मयिकरुणांनिमित्तीकृत्योपकारोनुग्रहस्तदर्थमिति वचसोविशेषणं निरतिशयत्वंपरमंपुरुषार्थसाधनत्वं अशोच्यानित्यादित्वंपदार्थप्रधानवाक्यं मोहस्यायमित्यात्मसाक्षिकत्वं दर्शयति १

### स्वामिकृतटीका

विभूतेर्वैभवंप्रोच्यकृपयापरयाहरिः दिदृक्षोरर्जुनस्याथविश्वरूपमदर्शयत् पूर्वाध्यायान्तेविष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगदिति विश्वात्मकंपारमेश्वररूपमु

### भाषाअनुवाद

श्रीभगवानकृष्णचन्द्रनेअतिकृपाकरकेअपनीविभूतिकाविभवअर्जुनसेकहा सो सुनिकेदर्शनेच्छुअर्जुनको विष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगदित्यादिश्लोसे भगवाननेविश्वात्मकपरमेश्वरस्वरूपप्रसंगवशतेदेखाया तोअर्जुनभगवदुक्तपूर्ववचनोंकी प्रशंसाकरतेहुये अवएकादशध्यायकेआरम्भमेचारिश्लोकसेकहतेहैं कि अशोच्यानन्वशोचस्त्वमित्यादि दूसरेअध्यायकेग्यारहें श्लोकसेलेकर छठयेंअध्यायतक मेरे शोकनिवृत्तिकेअर्थ परमात्मनिष्ठअतिगोपनीयआत्मअनात्मविचारकेजोवचनआपनेकहा उनसेहमहन्ताओंयेमनुगणमारनेयोग्यहैंसोजोमेरीभ्रम सोमिटहोगई क्योंकि आत्माकोकर्तृत्वआदिकुछनहींहै यहआपनेकहा सोठीकहीहै १

भवाप्ययौहिभूतानांश्रुतौविस्तरशोमया त्वत्तःकमलपत्राक्षमाहात्म्यमपिचाव्ययं २

## शाङ्करभाष्यं

किञ्च भवेति भवउत्पत्तिरप्ययःप्रलयोभूतानांतौभवाप्ययौश्रुतौविस्तरशोमयान संक्षेपतस्त्वत्तत्वःत्सकाशात्कमलपत्राक्षकमलस्यपत्रंकमलपत्रंतद्वत्अक्षिणीयस्य तव सत्वंकमलपत्राक्षःहेकमलपत्राक्ष महात्म्यमपिचाव्ययमक्षयंश्रुतमित्यनुवर्त्तते २

## आनन्दगिरिकृतटीका।

अविवेकबुद्धिरज्ञानविपर्य्यासात्मिकासम्प्रमादारब्धतत्पदार्थनिर्णयार्थमपि भगवदुक्तंवचोमयाश्रुतमित्याहकिञ्चेति तौभूतानामुत्पत्तिप्रलयौत्वत्तःश्रुतावित्याभ्यां सम्बध्यते महात्मनस्तवभावोमाहात्म्यंपारमार्थिकंसोपाधिकंवा सर्वात्मत्वादिरूपं श्रुतमितिपरिणस्यानुवृत्तिंद्योतयितुं अपिचेत्युक्तं २

## स्वामिकृतटीका।

पठितं तद्दृष्टचुःपूर्वोक्तमभिनन्दन्नर्जुनउवाच मदनुग्रहायेतिचतुर्भिः ममानुग्रहायशोकनिवृत्तयेपरमंपरमात्मनिष्ठंगुह्यंगोप्यमपिअध्यात्मसंज्ञितमात्मानात्मविवेकविषयंयत्त्वयोक्तंवचः अशोच्यानन्वशोचस्त्वमित्यादिषष्ठाध्यायपर्यन्तंयद्वाक्यंतेनममायंमोहोऽहंहन्ताएतैर्हन्यन्तइत्यादिलक्षणभ्रमोविगतो विनष्टः आत्मनः कर्तृत्वाद्यभावोक्तेः १ किञ्च भवेति भूतानांभवाप्ययौसृष्टिप्रलयौत्वत्तःसकाशात्तेभवतइतिश्रुतौमया अहंकृत्स्नस्यजगतःप्रभवःप्रलयस्तथेत्यादौविस्तरशःपुनःपुनःकमलस्यपत्रेइवसुप्रसन्नेविशालेअक्षिणीयस्यतव हेकमलपत्राक्ष माहात्म्यमपिचाव्ययंअक्षयंश्रुतं विश्वसृष्ट्यादिकर्तृत्वेऽपिसर्वनियन्तृत्वेपिशुभाशुभकर्मकारयितृत्वेपि बन्धमोक्षादिविचित्रफलदातृत्वेपिअविकारावैषम्यासङ्गौदासीन्यादिलक्षणमपरिमितं महत्वञ्च श्रुतंअव्यक्तंव्यक्तिमापन्नंमन्यन्तेमामबुद्धयइतिमयाततमिदंसर्वमिति न च मांतानिकर्माणीति समोऽहंसर्वभूतेष्वित्यादिनाच अतस्त्वत्परतन्त्राणामपि जीवानामहंकर्त्तेत्यादिमदीयेभ्रमोहोविगतइतिभावः २

## भाषा अनुवाद

और भूतोंकीसृष्टितथाप्रलयभीआपहीसेहोती यहभीमैंनेविस्तारसे सुना औ हे कमलपत्राक्ष श्रीकृष्ण आपकाअव्ययकहे अक्षयमाहात्म्यभीआपसे सुना तो अवजीव सकलआपकेअधीनहैं यहजानाऔर अहं कर्त्ताभोक्ताइत्यादिमेरामोह अवसम्पूर्णदूरहोगया २ औरजोआपनेसप्तमअध्यायमेंकहाकिभूतसृष्टितथाप्रलय

एवमेतद्यथात्थत्वमात्मानंपरमेश्वरं द्रष्टुमिच्छामितेरूपमैश्वरंपुरुषोत्तम ३
मन्यसेयदितच्छक्यंमयाद्रष्टुमितिप्रभो योगेश्वरततोमेत्वंदर्शयात्मानमव्ययं ४

## शाङ्करभाष्यं

एवमितिएवमेतन्नान्यथाययायेनप्रकारेणात्थकथयसित्वमात्मानंपरमेश्वरं तथापिद्रष्टुमिच्छामितेतवज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिःसंपन्नमैश्वरंवैष्णवंरूपंपुरुषोत्तम३ मन्यसइति मन्यसेचिन्तयसियदिमयार्जुनेनतत्शक्यंद्रष्टुमितिप्रभोस्वामिन् योगेश्वरयोगिनोयोगास्तेषामीश्वरोयोगेश्वरःहेयोगेश्वरयस्मादहमतीवार्थीद्रष्टुंततः तस्मान्मेमम मदर्थंदर्शयत्वमात्मानमव्ययं ४ एवञ्चोदितोऽर्जुनेन भगवानुवाच पश्यमइति पश्यमेमपार्थरूपाणिशतशोऽथसहस्रशःअनेकशइत्यर्थः तानिचनानाविधानि अनेकप्रकाराणिदिविभवानिदिव्यान्यप्राकृतानिचनानावर्णाकृतीनिचनानानीलपी

## आनन्दगिरिकृतटीका।

त्वदुक्तेर्थेऽविश्वासाभावात् नतस्मिन्दिदृक्षा किन्तुकृतार्थीबुभूषयाइत्याह एवमेतदिति येनप्रकारेणसोपाधिकेननिरुपाधिकेनचेत्यर्थः यदिममाप्तत्वंनिश्चितमवाक्यंतेमानं तर्हिकिमिति मदुक्तंदिदृक्षते कृतार्थीबुभूषयेत्युक्तंमत्वाह तथापीति चतुर्भुजादिरूपनिवृत्त्यर्थमाह ऐश्वरमिति तद्याचष्टे ज्ञानेत्यादिना ३

## स्वामिकृतटीका।

किञ्च एवमेतदिति भवाप्ययौहिभूतानामित्यादिमयाश्रुतंयथाचेदानीमात्मानंत्वमात्थविष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगदित्येवंकथयसि हेपरमेश्वर एतदेवमेवअत्राथविश्वासोममनास्ति तथापिहेपुरुषोत्तमतवैश्वर्यंज्ञानैश्वर्यशक्तिवीर्यादिभिः सम्पन्नंत्वद्रूपंकौतूहलादहंद्रष्टुमिच्छामि ३ नचाहंद्रष्टुमिच्छामीत्येतावतैवत्वयातद्रूपं

## भाषाअनुवाद

आदिकामीकाकारणमैंहूं औरदशमअध्यायकेअन्तमेकहाकिविष्टभ्याहमिदंकृत्स्नमेकांशेनस्थितोजगदिति औअबभीजोरूपआपअपनाकहतेहोसोऐसाहीहैइसमे हमैकुछसन्देहनहींहैतौभीहेपुरुषोत्तमज्ञानऐश्वर्यबलवीर्य औतेजसेसम्पन्न कहेयुक्ततुमारेरूपकोअतिआश्चर्यसेमैंदेखनेकीइच्छा करताहूं ३ औरमेरीइच्छा देखनेकीहै इसहेतुआपकोअपनारूपदेखावनाउचितहै यहकुछबातनहीहै परन्तुहेयोगेश्वर जोवहआपकाईश्वरस्वरूपहमारेदेखनेयोग्यहोय औरहमदेख नेसकैं तोहेप्रभो वहीअव्ययस्वरूपअपनाहमैंकृपाकरि दिखावोयहअर्जुननेकहा४

श्रीभगवानुवाच पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः नानाविधानि दिव्यानि नानावर्णाकृतीनि च ५

शाङ्करभाष्यं।

तादिप्रकारा वर्णा विलक्षणास्तथा आकृतयोऽवयवसंस्थानविशेषा येषां रूपाणां तानि नानावर्णाकृतीनि च ५ पश्यादित्यानिति पश्य आदित्यान्द्वादश वसूनष्टौ रुद्रानेकादश अश्विनौ द्वौ मरुतः सप्तसप्तगणान् एतान् तथा च बहून्यन्यान्यपि अदृष्टपूर्वाणि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित् पश्याश्चर्याणि रूपाण्यद्भुतानि भारत ६

आनन्दगिरिकृतटीका

द्रष्टुमयोग्ये कुतो दिदृक्षेत्याशंक्याह मन्यसइति प्रभवंति सृष्टिस्थितिसंहारप्रवेशप्रशासनेभ्यः इति प्रभुः लक्षणया योगशब्दार्थमाह योगिनइति ततइत्यादि व्याचष्टे यस्मादिति ४ अर्जुनमतिभक्तं सखायं प्रार्थितप्रतिश्रवणेनाश्वासयितुमाह एवमिति ५

दिव्यानि रूपाणि पश्येत्युक्तं तान्येव लेशतोऽनुक्रामति पश्यादित्यानिति तान्मरुतश्चापश्येति सम्बन्धः नानाविधानीत्युक्तं तदेव स्फुटयति बहूनीति अदृष्टपूर्व्वा

स्वामिकृतटीका।

दर्शयितव्यं किं तर्हि मन्यसइति योगिन एव योगास्तेषामीश्वरमयार्ज्जुनेनतद्रूपंद्रष्टुं शक्यमिति यदि मन्यसे ततस्तर्हि तद्रूपं परमात्मानमव्ययं नित्यं मम दर्शय ४ एवंप्रार्थितः सन्नत्यद्भुतं रूपं दर्शयिष्यन् सावधानोभवेत्येवमर्ज्जुनमभिमुखीकरोति श्रीभगवानुवाच पश्येति चतुर्भिः रूपस्यैकत्वेऽपि नानाविधत्वाद्रूपाणीति बहुवचनं अपरिमितानि अनेकप्रकाराणि दिव्यान्यलौकिकानि मम रूपाणि पश्य वर्णाः शुक्लकृष्णादयः आकृतयः अवयवविशेषाः नाना अनेका वर्णा आकृतयश्च येषां तानि नानावर्णाकृतीनि ५

तान्येवाह पश्येति आदित्यादीन् मम देहे पश्य मरुतएकोनपञ्चाशद्देवताविशेषान् अदृष्टपूर्व्वाणि त्वया चान्येन वा पूर्व्वमदृष्टानि रूपाणि ६ किञ्च इहैकस्थमिति तवतव

भाषाअनुवाद

अब ऐसी प्रार्थना अर्जुन ने किया तब भगवान श्रीकृष्णचन्द्र ने अपने रूप देखावने का मनोरथ करके अर्जुन को सावधान होउ यह कहिकरि चारि श्लोक से कहते हैं कि हे पार्थ अर्जुन अपरिमित नाना प्रकार के अलौकिक मेरे रूप देखो और वर्ण कहे शुक्ल कृष्ण आदि आकृति कहे कर चरण अङ्ग सब यथायोग मेरा दिव्य रूप नानावर्ण नाना आकृति तुम देखो जो देखा चाहते हो ५

पश्यादित्यान्वसून् रुद्रानश्विनौमरुतस्तथा बहून्यदृष्टपूर्व्वाणिपश्याश्चर्य्याणिभारत ६
इहैकस्थंजगत् कृत्स्नंपश्याद्यसचराचरं ममदेहेगुडाकेशयच्चान्यद्द्रष्टुमिच्छसि ७
नतुमांशक्यसेद्रष्टुमनेनैवस्वचक्षुषा दिव्यंददामिते चक्षुःपश्यमेयोगमैश्वरम् ८

## शाङ्करभाष्यं ।

नकेवलमेतावदेव इहैकस्थमिति इहैकस्थंएकस्मिन्स्थितंजगत् कृत्स्नंसमस्तं पश्याद्येदानींसचराचरंसहचरेणाचरेणवर्त्तते ममदेहेगुडाकेश यच्चान्यज्जयपराजयादियच्छंकसे यद्वाजयेमयदिवानोजयेयुरिति यदशोचःतदपिद्रष्टुंयदीच्छसि ७

## आनन्दगिरिकृतटीका

णिपूर्व्वमदृष्टानि नानावर्णाकृतीनीत्युक्तंव्यनक्ति आश्चर्य्याणीति ६ नकेवलमा दित्यवस्वाद्येवमद्रूपंत्वयाद्रष्टुंशक्यं किन्तुसमस्तंजगदपिमद्देहस्थंद्रष्टुमर्हसीत्याह ने त्यादिना सप्तमीद्वयंमिथःसम्बध्यते समासान्तर्गतापिसप्तमीतत्रैवानीता यदीच्छसि तर्हिइहैवपश्येति सम्बन्धः ७ मन्यसेयदीत्युक्तमनुवदति किंत्विति सप्रपञ्चमनवच्छि

## स्वामिकृतटीका

परिभ्रमतावर्षकोटिभिरपिद्रष्टुमशक्यंकृत्स्नमपिचराचरसहितंजगदिहास्मिन्म मदेहेऽवयवरूपेणैकत्रस्थितमद्याधुनैव पश्ययच्चान्यज्जगदाश्रयभूतंकारणस्वरूपंजग तश्चावस्थाविशेषादिकंजयपराजयादिकञ्चयच्चयदप्यन्यद्द्रष्टुमिच्छसितत्सर्वंपश्य ७

## भाषाअनुवाद

अवसोईआपकहतेहैं किहेभारत सवआदित्यऔवसुगणरुद्रगणतथाअश्वि नीकुमारऔमरुतगण येसवदेवतोंकोमेरीदेहमेदेखो औरहेअर्जुन जोमेरारूप नतुमने नऔरकिसीनेकभीदेखाहै ऐसाअद्भुतमेरारूपदेखो ६ औरइसब्रह्माण्ड केवीच हरएकस्थानोंमेभ्रमणकरतेंहुये जोसूर्यचन्द्रग्रहनक्षत्रादिसमस्तचराचर जिनकोकोटिवर्षमेभी कोईनहीदेखिसकैहै सोसवस्थावरजङ्गमसमेतसम्पूर्णजगत इसमेरीशरीरमे अवयवकहेअङ्गरूपदेखो औरहेगुडाकेशअर्जुन जगतकाआश्रय औ संसारकीअवस्था तथाजयपराजयआदिजोकुछऔरदेखाचाहोसोसवमेरेरूप मेदेखो ७ औरजोअर्जुननेकहा किवहरूपमेरेदेखनेजोग्यहोय तोदेखावोइस परकहतेंहैं किहेअर्जुन इनअपनेचर्मचक्षुकहेचमड़ेकीआंखोंसे हमारेउसरूपको नदेखसकोगे इससेहमतुमकोअलौकिकदिव्यज्ञानचक्षुदेतेंहैं सोमेराईश्वरस्वरू पअघटनघनासमर्थकादर्शनभलीप्रकारसेकरो ८

सञ्जयउवाच एवमुक्त्वाततोराजन् महायोगेश्वरोहरिः दर्शयामासपार्थाय परमंरूपमैश्वरं ९

## शाङ्करभाष्यं

किन्तुनतुमामिति नतुमांशक्यसेनस्वकीयेनचक्षुषामांविश्वरूपधरंशक्यसेद्रष्टुमनेन प्राकृतेनस्वचक्षुषास्वकीयेनचक्षुषायेनतुशक्यसेद्रष्टुंदिव्येनतद्दिव्यंददामितेतुभ्यंच क्षुस्तेनपश्यमेममयोगमैश्वरंईश्वरस्यममैश्वरंयोगंयोगशक्त्यतिशयमित्यर्थः ८ एवंतं यथोक्तप्रकारेणोक्त्वाततोनन्तरंराजन्धृतराष्ट्रमहात्मासौयोगेश्वरश्चमहायोगेश्वरो हरिर्नारायणःदर्शयामासदर्शितवान्पार्थायपृथासुतायपरमंरूपंविश्वरूपमैश्वरं ९ अनेकेति अनेकवक्त्रनयनंअनेकानिवक्त्राणिनयनानिचयस्मिन्रूपेतदनेकवक्त्रन

## आनन्दगिरिकृतटीका

त्वंमांस्वचक्षुषानशक्नोषिद्रष्टुमित्याह नत्विति कथंतर्हित्वांद्रष्टुंशक्नुयामित्याशंक्याह येनेति दिव्यस्यचक्षुषोवक्ष्यमाणयोगशक्त्यतिशयदर्शनेविनियोगंदर्शयति तेनेति ८

इमंवृत्तान्तंधृतराष्ट्रायसञ्जयोनिवेदितवानित्याह सञ्जयइति तदीयंविश्वरू पाख्यंरूपंनप्राकृतेनचक्षुषानिरीक्षितुंक्षमंकिन्तुदिव्येनइत्यादियथोक्तप्रकारःअनन्त रंदिव्यचक्षुषःप्रदानादितिशेषः हरत्यविद्यांतत्कार्य्यंचेतिहरिः यदीश्वरस्यलायो पहितस्यपरमसुत्कृष्टंरूपंतद्दर्शयाम्बभूवेत्याह परममिति ९ तदेवरूपंविशिन

## स्वामिकृतटीका।

यदुक्तमर्जुनेनमन्यसेयदितच्छक्यमिति तत्राह नतुमामिति अनेनैवतुस्वीयेनच र्मचक्षुषामांद्रष्टुंनशक्यसेशक्तोनभविष्यसिअतोदिव्यमलौकिकंज्ञानात्मकंचक्षुस्तुभ्यंद दामिममैश्वरमसाधारणंयोगंयुक्तिमघटनघटनासामर्थ्यंपश्य ८ एवमुक्त्वाभगवान र्जुनायस्वरूपंदर्शितवांस्तच्चरूपंदृष्ट्वार्जुनः श्रीकृष्णंविज्ञापितवानितीममर्थंषड्भिः श्लोकैर्धृतराष्ट्रंप्रतिसञ्जयउवाच एवमुक्त्वेति हेराजन्धृतराष्ट्रमहात्मासौयोगेश्वर श्चहरिःपरममैश्वरंरूपंदर्शितवान् ९ कथंभूतंतदित्यत्राह अनेकवक्त्रनयनमिति

## भाषाअनुवाद

इसप्रकारसेकहिकरभगवाननेअर्जुनकोअपनाविराटरूपदेखाया तोवहरूपदे खिअर्जुननेश्रीकृष्णकोजैसाजानाऔदेखासोईछःश्लोकसेराजाधृतराष्ट्रकेप्रति सञ्ज यकहतेहैं किहेराजन्धृतराष्ट्र महात्माश्रीकृष्णयोगेश्वरनेअर्जुनसे येसबबातेंक रकेअपनाऐश्वर्यविशिष्टपरमरूपअर्जुन कोदर्शनकराया ९ अर्थात्किसप्रकारका

अनेकवक्त्रनयनमनेकाद्भुतदर्शनं अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् १०
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनं सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखं ११
दिविसूर्यसहस्रस्यभवेद्युगपदुत्थिता यदिभाःसदृशीसास्याद्भासस्तस्यमहात्मनः १२

## शाङ्करभाष्यम्।

यन्तंअनेकाद्भुतदर्शनंअनेकान्यद्भुतानिविस्मापकानियस्मिन्रूपेतदनेकाद्भुतदर्शनंरूपंतथानेकदिव्याभरणंअनेकानिदिव्याभरणानियस्मिंस्तदनेकदिव्याभरणंतथादिव्यानेकोद्यतायुधं दिव्यानिअनेकानिउद्यतानिआयुधानियस्मिंस्तद्दिव्यानेकोद्यतायुधंदर्शयामासेति पूर्वेणसम्बन्धः१० किञ्च दिव्येति दिव्यमाल्याम्बरधरंदिव्यानिमाल्यानिपुष्पाणिअम्बराणिवस्त्राणिचध्रियन्तेयेनेश्वरेणतंदिव्यमाल्याम्बरधरंदिव्यगन्धानुलेपनंदिव्यागन्धाअनुलेपनंसर्वाश्चर्यमयंसर्वाश्चर्यप्रायंदेवमनन्तंनास्यान्तोस्तीति अनन्तस्तंविश्वतोमुखंसर्वभूतात्मत्वात्तंदर्शयामासार्जुनोददर्शेतिवाअध्याह्रियते ११

## आनन्दगिरिकृतटीका

ष्टि अनेकेति दिव्याभरणादीनिहारकेयूरादीनिभूषणान्युद्यतानिउच्छ्रितानि १०
उक्तरूपवन्तंभगवन्तंप्रकारान्तरेणविशिनष्टि किञ्चेति अध्याहारोपिपदसंघटनासम्भवात् ११

## स्वामिकृतटीका

अनेकानिवक्त्राणिनयनानिचयस्मिंस्तत् अनेकानामद्भुतानांदर्शनंयस्मिंस्तत् अनेकानिदिव्याभरणानियस्मिंस्तत् दिव्यान्यनेकान्युद्यतान्यायुधानियस्मिंस्तत् १० किञ्च दिव्येति दिव्यानिमाल्यान्यम्बराणिचधारयतीतितत् तथादिव्योगन्धोयस्यताहशमनुलेपनंयस्यतत् सर्वाश्चर्यमयमनेकाश्चर्यप्रायंदेवंद्योतनात्मकंअनन्तमपरिच्छि

## भाषाअनुवाद

वहरूपहैसोकहतेहैं किअनेकहैं वक्त्रकहेमुखऔनेत्रतथाअनेकअनेकहैं अद्भुतवस्तुवोंकादर्शनजिसमेऔरअनेकदिव्यआभरणऔदिव्यअनेकआयुधधारणहैं जिसमेऐसारूपभगवानने‌अर्जुनकोदेखाया १० औरदिव्यमाल्यकहेपुष्पऔदिव्यअम्बरकहेवस्त्रतथादिव्यगन्धलेपनहैं जिसरूपमेऔरनानाआश्चर्ययुक्ततथाअनन्तअपरिच्छिन्नऔसर्वत्रहैं मुखजिसमेसोरूपदेखाया ११ औरउसरूपकोनिरुपमप्रभाप्रकाशकरतेहैं किआकाशमेजोएककालसहस्रसूर्यकेउदयकीप्रभाहोउठैतोकदाचितउनमहात्माकीकान्तिकेकोईअंशकीउपमाहोयतोहोयनहींतोउसरूपकीउपमाकोसंसारमेकोईनहींहै १२

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा १३

## शाङ्करभाष्यं

यापुनर्भगवतोविश्वरूपस्यभास्तस्याउपमोच्यते दिवीति दिव्यन्तरिक्षेतृतीय स्यांवादिविसूर्य्याणांसहस्रंसूर्य्यसहस्रंतस्ययुगपदुत्थितस्ययुगपदुत्थिताभाःसायदिस दृशीस्यात् तस्यमहात्मनोविश्वरूपस्यभासोयदिवास्यात् ततोपिविश्वरूपस्यैवभाःअति रिच्यत इत्यभिप्रायः १२ किञ्च तत्रैकस्थमिति तत्रतस्मिन्विश्वरूपेएकस्मिन् स्थितमेकस्थंजगत्कृत्स्नंप्रविभक्तमनेकधा देवपितृमनुष्यादिभेदैरपश्यत्दृष्टवान् देवदेवस्यहरेःशरीरेपाण्डवोर्जुनस्तदा १३ ततइति ततस्तंदृष्ट्वासविस्मयेनावि

## आनन्दगिरिकृतटीका

ननुप्रकृतस्यभगवतोरूपस्यदीप्तिरस्तिनवानचेत् काष्ठादिसाम्यंयद्यस्तिकीदृशीसे त्याशंक्याह यापुनरिति सायदिस्यात्तद्भासःसदृशीसेतियोजना असम्भावितान्युपगमा र्थोयदिशब्दःस्याच्छब्दोनिश्चयार्थःसाकथंसदृशीसम्भवति नतुभवत्येवेति विवक्षित्वाह यदिवेति १२ नकेवलमुक्तमेवार्जुनोदृष्टवान् किन्तुतत्रैवविश्वरूपेसर्वंजगदेकस्मिन्नेव स्थितमनुभूतवानित्याह किञ्चेति तदाविश्वरूपस्यभगवद्रूपस्यदर्शनंदर्शयामीत्यर्थः१३

विश्वरूपधरस्यभगवतस्तस्मिन्नेकीभूतजगतश्चोक्तविशेषणस्यदर्शनानन्तरंकिम करोदित्यपेक्षायामाह ततइति आश्चर्य्य बुद्धिर्विस्मयःरोम्णांहृष्टत्वंपुलकितत्वंप्रक

## स्वामिकृतटीका।

न्तंविश्वतःसर्वतोमुखानियस्मिंस्तत् ११ विश्वरूपदीप्तेर्निरुपमत्वमाह दिविसूर्य्येति दिविआकाशेसूर्य्यसहस्रस्ययुगपदुत्थितस्ययदियुगपदुत्थितःभाःप्रभाभवेत्तर्हिसामहा त्मनोविश्वरूपस्यभासःप्रभायाःकथञ्चित् सदृशीस्यात् अन्योपमानास्त्यवेत्यर्थःतथाभू तंरूपंदर्शयामासेति पूर्व्वेणैवान्वयः १२ ततःकिंवृत्तमित्यपेक्षायामाह तत्रेति अनेकधाप्रविभक्तंनानाविभागेनावस्थितंकृत्स्नंजगद्देवदेवस्यशरीरेतदवयवत्वेनैक त्वव्यवस्थितंतदापाण्डवोऽर्जुनोऽपश्यत् १३ एवंदृष्ट्वाकिंकृतवानित्यत्राह ततइति त तोदर्शनानन्तरंविस्मयेनाविष्टोव्याप्तःसन् हृष्टान्युत्पुलकितानिरोमाणियस्यसधन ञ्जयस्तमेवदेवंशिरसाप्रणम्यकृताञ्जलिःसंपूटीकृतहस्तोभूत्वाअभाषतउक्तवान् १४

## भाषा अनुवाद

तिसकेबादिक्याभयासोकहतेहैं किउससमय अर्जुनकोनानाप्रकारशरीरके अनेकभागमेंस्थितसमस्तजगतश्रीकृष्णएकअपनीशरीरमेंएकवारगीदेखाया १३

ततःसविस्मयाविष्टो हृष्टरोमाधनञ्जयः प्रणम्यशिरसादेवंकृताञ्जलिरभाषत १४
अर्जुनउवाच पश्यामिदेवांस्तवदेवदेहे सर्वांस्तथाभूतविशेषसंघान् ब्रह्माणमीशं
कमलासनस्थमृषींश्चसर्वानुरगांश्चदिव्यान् १५

शाङ्करभाष्यं।

ष्टोविस्मयाविष्टोहृष्टानिरोमाण्यस्यसोयंहृष्टरोमाचाभवद्धनञ्जयःप्रणम्यप्रकर्षेणनम
नंकृत्वाप्रह्वीभूतःसन्शिरसादेवंविश्वरूपधरंकृताञ्जलिर्नमस्कारार्थंसंपुटीकृतहस्तः
सन्नभाषतोक्तवान् १४ कथंयत्वयादर्शितंविश्वरूपंतदहंपश्यामीति स्वानुभवमा
विष्कुर्वन्अर्जुनउवाच पश्यामीति पश्याम्युपलभेहेदेवतवदेहेदेशान्सर्वांस्तथाभूत
विशेषसंघान्भूतविशेषाणांस्थावरजङ्गमानांनानासंस्थानविशेषाणांसंघाःभूतविशेषसं
घास्तान्किञ्चब्रह्माणंचतुर्मुखमीशितारंप्रजानांकमलासनस्थंपृथिवीपद्ममध्येमेरुक

आनन्दगिरिकृतटीका।

र्षोभक्तिश्रद्धयोरतिशयः १४ कथंभगवन्तंप्रत्यर्जुनोऽभाषिअवादिति पृच्छति कथ
मिति तत् प्रश्नमपेक्षितंपूरयन्नवतारयति यत्त्वयेति भूतविशेषसंघातेषुदेवताना
मन्तर्भावेपिपृथक्करणमुत्कृष्टाद्ब्रह्मणःसर्वदेवतात्मत्वेपितेभ्योभेदकथनंतादुत्यादक
त्वादितिं मत्वाह किञ्चेति ऋषीणामुरगाणाञ्चकिञ्चिद्वैपश्यात् पृथक्त्वंदिव्या
नीत्युभयेषांविशेषणं १५ यत्भगवद्देहेसर्वमिदंदृष्टंतमेवविशिनष्टि अनेकेति आदि

स्वामिकृतटीका

भाषणमेवाह पश्यामीति सप्तदशभिः हेदेवतवदेहेदेवानादित्यादीन् पश्या
मितथासर्वान् भूतविशेषाणांजरायुजाण्डजादीनांसंघांस्तथादिव्यानृषीन्उरगांश्चत

भाषाअनुवाद

तवतोअर्जुनवहआश्चर्यरूपभगवानकारूपदेखिअतिकौतुकयुक्तहोयआनन्दसेंपुल
कितभयेऔरमस्तकभुंकायप्रणामकरिहाथजोड़ियहवचनवोलतेभये १४ अवस
ञ्जय सलहश्लोकसेअर्जुनकेकहेवचनकहतेहैं किहेकृष्णआपकीशरीरमेंआदित्यऔ
तावत्भूतसमूहअर्थात् जरायुजमनुष्यपशुऔरअण्डजपक्षीसर्पआदिऔस्वेदजजुआं
मच्छडप्रभृति तथाउद्भिजलताष्टक्षआदियेसवदेखताहौंऔरहेदेवदेव तासकल
औनाभिकमलमेंब्रह्मावैठेतथाईशमहादेवऔरदिव्यऋषिवशिष्टआदिऔउरगत
क्षकआदिकोंकोदेखताहूं पद्मासनस्थब्रह्माकिसप्रकार सोकहतेहैं किपृथिवीरूप
नाभिसेउठाजोकमलस्वरूपसुमेरुगिरितिसपरवैठेदेखोंहौं १५ औरअनेकउदर

अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपं नान्तं न मध्यं न पुनस्तवादिं पश्या
मि विश्वेश्वर विश्वरूप १६ किरीटिनं गदिनं चक्रिणञ्च तेजोराशिं सर्वतो दीप्ति
मन्तं पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् १७

## शाङ्करभाष्यं

र्णिकासनस्थमित्यर्थः ऋषींश्च वशिष्ठादीन् सर्वान् उरगांश्च वासुकिप्रभृतीन् दिव्यान् दिवि
भवान् १५ किञ्च अनेकेति अनेकबाहूदरवक्त्रनेत्रं अनेके बाहव उदराणि वक्त्राणि ने
त्राणि च यस्य तव स त्वमनेकबाहूदरवक्त्रनेत्रस्तमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां
सर्वतः सर्वत्र अनन्तरूपमनन्तानि रूपाणि अस्येत्यनन्तरूपस्तं अनन्तरूपं नान्तमन्तोऽव
सानं न मध्यं मध्यं नाम द्वयोः कोट्योरन्तरं न पुनस्तवादिं तव देवस्य न अन्तं पश्यामि न मध्यं
पश्यामि न पुनरादिं पश्यामि हे विश्वेश्वर हे विश्वरूप १६ किञ्च किरीटिनमिति किरी
टिनं किरीटो नाम शिरोभूषणविशेषः तद्यस्यास्तीति स किरीटी तं किरीटिनं तथा गदि
नं गदा यस्य विद्यत इति गदी तं गदिनं तथा चक्रिणं चक्रमस्यास्तीति चक्री तं चक्रिणं
च तेजोराशिं तेजःपुञ्जं सर्वतो दीप्तिमन्तं सर्वतो दीप्तिर्यस्यास्तीति सर्वतो दीप्तिमांस्तं

## आनन्दगिरिकृतटीका

शब्देन मूलमुच्यते नान्तं न मध्यमित्यत्रापि पश्यामीत्यस्य प्रत्येकं सम्बन्धं सूचयति नान्तं
पश्यामीति १६ विश्वरूपवन्तं भगवन्तमेव प्रकारान्तरेण प्रपञ्चयति किञ्चेति परि
च्छिन्नत्वं व्यावर्त्तयति सर्वत इति दुर्निरीक्ष्यं पश्यामीत्यधिकारिभेदादविरुद्धं पुर
तो वा पृष्ठतो वा पार्श्वतो वा नास्य दर्शनं किन्तु सर्व्वत्रेत्याह समन्तत इति दीप्तिमन्तं दृष्टा

## स्वामिकृतटीका।

चकादीन् तथा ते शदेवादीनामीशं स्वामिनं ब्रह्माणञ्च कथंभूतं कमलासनस्थं पृथ्वीपद्म
कर्णिकायां मेरौ स्थितमित्यर्थः यद्वा त्वन्नाभिपद्मासनस्थमिति १५ किञ्च अनेकेति
अनेकानि बाह्वादीनि यस्य तादृशं त्वां पश्यामि अनन्तानि रूपाणि यस्य तं त्वां सर्वतः पश्या
मि तव तु अन्तं मध्यमादिञ्च न पश्यामि सर्व्वगतत्वात् १६ किञ्च किरीटिनमिति

## भाषा अनुवाद

और अनेक बाहु अनेक उदर अनेक मुख अनेक नेत्र रूप तुमको सर्व्वत्र मैं देखता हूं पर
न्तु हे विश्वरूप तुम्हारा आदि मध्य अन्त नहीं देखता हूं १६ और मुकुट गदा चक्रयुक्त
तथा तेजपुञ्ज सर्व्वत्र प्रकाशमान अति दुर्निरीक्ष्य चहुं ओर प्रदीप्त अनल अर्क के समान तुम
को मैं देखता हूं १७ जिस हेतु तुम्हारा ऐश्वर्य ऐसा अचिन्त्य है इससे तुम अक्षर गोचर ब्रह्म

त्वमक्षरंपरमंवेदितव्यं त्वमस्यविश्वस्यपरंनिधानं त्वमव्ययःशाश्वतधर्मगोप्ता सनात
नस्त्वंपुरुषोमतोमे १८

## शाङ्करभाष्यं।

सर्वतोदीप्तिमन्तंपश्यामित्वांदुर्निरीक्ष्यंदुःखेननिरीक्ष्योदुर्निरीक्ष्यस्तं समन्ततःसर्वत्र
दीप्तानलार्कद्युतिं अनलश्चार्कश्चानलार्कौदीप्तौअनलार्कौदीप्तानलार्कौतयोर्दीप्तान
लार्कयोर्द्युतिरिवद्युतिस्तेजोयस्यतवसत्वंदीप्तानलार्कद्युतिस्तंत्वांदीप्तानलार्कद्युतिंअप्र
मेयंनप्रमेयमप्रमेयमशक्यपरिच्छेदमित्यर्थः १७ इतएवते योगशक्तिदर्शनादनुमिन
मि त्वमिति त्वमक्षरंनक्षरतीति परमंपरंब्रह्मवेदितव्यंज्ञातव्यंमुमुक्षुभिःत्वमस्यविश्व
स्यसमस्तस्यजगतःपरंप्रकृष्टंनिधानंनिधीयतेअस्मिन्नितिनिधानंपरआश्रयइत्यर्थः कि
ञ्च त्वमव्ययोनचतवव्ययोविद्यतइति अव्ययःशाश्वतधर्मगोप्ताशश्वद्भव शाश्वतोनित्यो

## आनन्दगिरिकृतटीका।

न्तोनस्पष्टयति दीप्तेति १७ स्वप्रपञ्चेभगवद्रूपेप्रकृते प्रकरणविरुद्धत्वमक्षरमित्या
दिनिरुपाधिकवचनमित्याशंक्याह इतएवेति योगशक्तिरैश्वर्यातिशयःनक्षरतीति
निःप्रपञ्चत्वमुच्यते परमपुरुषार्थत्वात् परमार्थत्वाच्चज्ञातव्यत्वं यस्मिन् द्यौःपृथिवी
त्यादौप्रपञ्चायतनस्यैवयतोनिकृष्टस्यज्ञातव्यत्वश्रवणात् कुतोब्रह्मणोज्ञातव्यत्वंतत्रा
ह त्वमस्येति निःप्रपञ्चस्यब्रह्मणोज्ञेयत्वेहेत्वन्तरमाह किञ्चेति अविनाशित्वा
त्तवैवज्ञातव्यतातिरिक्तस्यनाशित्वेनहेयत्वादित्यर्थःज्ञानकर्मात्मनोधर्मस्यनित्यत्वंवेद
प्रमाणकत्वं धर्मख्यापनयनार्थीयमञ्जवासीत्युक्तत्वाज्ञोपारचिता । १८

## स्वामिकृतटीका

मुकुटवन्तंगदावन्तं चक्रवन्तंतेजःपुञ्जरूपंतथादुर्निरीक्ष्यं द्रष्टुमशक्यंतत्रहेतुःदीप्तयो
रनलार्कयोर्द्युतिरिवद्युतिर्यस्यतंअतएवाप्रमेयं एवंभूतइतिनिश्चेतुमशक्यंत्वांसमन्त
तःपश्यामि १७ यस्मादेवंतवातर्क्यमैश्वर्यं तस्मात्त्वमिति त्वमेवअक्षरंपरमंपर
ब्रह्मकथमूतंवेदितव्यंमुमुक्षुभिर्ज्ञातव्यंत्वमेवास्यविश्वस्यपरंनिधानं निधीयतेऽस्मिन्नि
तिनिधानंप्रकृष्टाश्रयःअतएवत्वमव्ययोनित्यः शाश्वतस्यनित्यस्यधर्मस्यगोप्तापालकःस
नातनश्चिरन्तनःपुरुषोमतोमेसम्मतोसि १८

## भाषाअनुवाद

मुमुक्षुलोगोंकेजाननेयोग्य औरतुमइसविश्वकेनिधानकहेपरमआश्रयहौ इससेतुम
नाशरहितऔनित्य तथानित्यधर्मकेप्रतिपालक औअनादिपुरुषमेरेमतमेहौ १८

अनादिमध्यान्तमनन्तवीर्य मनन्तबाहुं शशिसूर्यनेत्रं पश्यामित्वांदीप्तहुताशव
क्त्रं स्वतेजसाविश्वमिदंतपन्तं १६ द्यावापृथिव्योरिदमन्तरंहि व्याप्तं त्वयैकेन
दिशश्चसर्वाः दृष्ट्वाद्भुतंरूपमिदंतवोग्रं लोकत्रयंप्रव्यथितंमहात्मन् २०

शाङ्करभाष्यं

धर्म्मस्यगोप्ताशाश्वतधर्म्मगोप्तासनातनश्चिरन्तनस्त्वंपुरुषःपरोमतोभिप्रेतोमेमम १८
किञ्च अनादीति अनादिमध्यान्तमादिश्चमध्यञ्चअन्तश्चनविद्यतेयस्यसोयमना
दिमध्यान्तस्तंत्वामनादिमध्यान्तमनन्तवीर्यं नतवनीर्यस्यान्तोस्तीत्यनन्तवीर्यस्तंत्वाम
नन्तवीर्यंतथाअनन्तबाहुमनन्तावाहवोयस्यतवसत्वमनन्तबाहुस्तंत्वां अनन्तबाहुं
शशिसूर्यनेत्रंशशिसूर्यौनेत्रेयस्यतवसःत्वंशशिसूर्यनेत्रः तंत्वांशशिसूर्यनेत्रंचन्द्रा
दित्यनयनंपश्यामित्वांदीप्तहुताशवक्त्रंदीप्तश्चासौहुताशश्चतद्वत्वक्त्रंयस्यतवस त्वं
दीप्तहुताशवक्त्रस्तं त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वं समस्तमिदंतपन्तं सन्ताप
यन्तं १६ द्यावापृथिव्योरिति द्यावापृथिव्योरिदमन्तरंहिअन्तरिक्षंव्याप्तंत्वयै
केनविश्वरूपधरेणदिशश्चसर्वाव्याप्ताःदृष्ट्वाउपलभ्यअद्भुतंविस्मापकं रूपमिदं तव
उग्रंक्रूरंलोकत्रयंलोकानांत्रयंलोकत्रयंप्रव्यथितंभीतंप्रचलितंवा हेमहात्मन् अ
क्षुद्रस्वभाव २० अथाधुना पुरावद्वाजयेम यदिवानोजयेयुरिति अर्जुनस्य संशयः

आनन्दगिरिकृतटीका

भगवतोरूपंविश्वरूपाख्यंरूपमेवपुनर्विशिनष्टि किञ्चेति हुतमश्नातीति हु
ताशोवह्निः १६ प्रकृतभगवद्रूपस्य व्याप्तिंव्यनक्ति द्यावापृथिव्योरितीति तस्यैव
भयङ्करत्वमाचष्टे दृष्ट्वेति २० अमीहीत्यादिसमनन्तरश्लोकस्यतात्पर्यमाह अथेति

स्वामिकृतटीका।

किञ्च अनादीति अनादिमध्यान्तंउत्पत्तिस्थितिलयरहितंअनन्तंवीर्यंप्रभावो
यस्यतंअनन्तावाहवोयस्यतंशशिसूर्यौनेत्रेयस्यतादृशंत्वांपश्यामि तथादीप्तोहुताशो

भाषाअनुवाद

और अनादिमध्यान्तकहे उत्पत्तिस्थितिलयरहित औअनन्तप्रभावतथाअनन्त
बाहु औचन्द्रसूर्य हैंनेत्रजिसकेऐसेतुमको हमदेखतेहैं औरअग्निजिसकेमुखमे
जाज्वल्यमानहै ऐसेआप अपनेतेजसेइसविश्वकोसन्तप्तकरतेहुये तुमकोमैंदेखौं
हौं १६ औरहेमहात्मन्स्वर्गऔपृथिवीतथाअन्तरिक्ष औरसकलदिशाएकआ
पहीमेव्याप्तहैं सोयहउग्ररूपआपकादेखिकरके त्रैलोक्यभय खाताहै २०

अमीहित्वांसुरसंघाविशन्ति केचिद्भीताःप्राञ्जलयोगृणन्ति स्वस्तीत्युक्त्वामह र्षिसिद्धसंघा वीक्षन्तेत्वांस्तुतिभिःपुष्कलाभिः २१

## शाङ्करभाष्यं ।

आसीत्तन्निर्णयाय पाण्डवजयमैकान्तिकंदर्शयामीतिप्रवृत्तोभगवान् तं पश्यन्नाह अमीहीति किञ्चअमीहियुध्यमानायोधारस्त्वांसुरसंघा येऽत्र भूभारावतारायावती र्णावस्वादिदेवसंघामनुष्यसंस्थानास्त्वांविशन्तिप्रविशन्तोदृश्यन्ते तत्रकेचिद्भीताः प्रा ञ्जलयःसन्तोगृणन्तिस्तुवन्तित्वामन्येपलायनेऽप्यसक्ताःसन्तोयुद्धेप्रत्युपस्थिते उत्पाता दिनिमित्तान्युपलक्ष्य स्वस्त्यस्तुजगतइत्युक्त्वामहर्षिसिद्धसंघाःमहर्षीणाञ्चसिद्धाना ञ्चसंघाःस्तुवन्तित्वां स्तुतिभिःपुष्कलाभिःसम्पूर्णाभिः २१ किञ्चान्यत् रुद्रेति रुद्रा

## आनन्दगिरिकृतटीका

तंभगवन्तं पाण्डवजयमैकान्तिकंदर्शयन्तंपश्यन्नर्जुनोऽब्रवीतीत्याह तंपश्यन्निति विश्व रूपस्यैव प्रपञ्चनार्थमनन्तरग्रन्थजातमितिदर्शयति किञ्चेति असुरसंघाइति पदं स्थित्वा भूभारभूताद्दुर्योधनादयस्त्वांविशन्तीत्यपिचवक्तव्यं उभयोरपिसेनयोरव स्थितेषु योद्धुकामेष्ववान्तरविशेषमाह अत्रेति समरभूमौसमागतानांद्रष्टुकामा नां नारदप्रभृतीनांविश्वविनाशमाशङ्कमानानां तंपरिजिहीर्षतांस्तुपदेषु भगवद्विष यैषुप्रवृत्तिप्रकारंदर्शयति युद्धइति २१

## स्वामिकृतटीका ।

ज्निर्वह्निमुखस्तंस्वतेजसाद्दंदंविश्वंतपन्तंसन्तापयन्तंपश्यामि १८ किञ्च द्यावापृथि व्योरिति द्यावापृथिव्योरिदमन्तरमन्तरीक्षंत्वयैवैकेनव्याप्तंदिशश्चसर्वाव्याप्ताःअद्भु तमद्दृष्टपूर्वत्वदीयमिदमुग्रंघोरंरूपंदृष्टालोकत्रयं प्रव्यथितमतिभीतं पश्यामीति पू र्वस्यैवानुषङ्गः२० किञ्च अमीहीति अमीसुरसङ्घाभीताःसन्तस्त्वांविशन्तिशरणंप्र विशन्तितेषांमध्येकेचिदतिभीतादूरतएवस्थित्वाकृतसम्पुटकरयुगलाःसन्तोगृणन्ति जयजयरक्षरक्षेति प्रार्थयन्ते स्पष्टमन्यत् २१ किञ्च रुद्रेति रुद्राश्चआदित्याश्चव सवश्चयेचसाध्यानामदेवाःविश्वेदेवाःअश्विनौदेवौमरुतोमरुद्गणाश्चऊष्मपाश्च पितरो

## भाषाअनुवाद ।

औरयेसम्पूर्णदेवताभयपाय तुमारेशरणागतहैं औरकोईअतिभीतहोय दूर खडे करजोडे जयजयरक्षरक्षपुकारपुकारप्रार्थनाकरतेहैं औरमहर्षितथासिद्धसं घ तुमकोदेखतेस्वस्तिवचनउंचारतेहुये संपूर्णस्तुति सेस्तुतिकरतेहैं २१ औररु

रुद्रादित्यावसवोयेचसाध्या विश्वेऽश्विनौमरुतश्चोष्मपाश्च गन्धर्वयक्षासुरसिद्ध संघा वीक्षन्तेत्वांविस्मिताश्चैवसर्वे २२

## शाङ्करभाष्यं

दित्यावसवोये चसाध्यारुद्रादयोगणाःविश्वे श्विनौविश्वे देवाःअश्विनौचदेवौमरुतश्च वायवउष्मपाश्चपितरोगन्धर्वयक्षासुरसिद्धसंघाः गन्धर्वाहाहाहूहूप्रभृतयोयक्षाः कुवेरप्रभृतयःअसुराविरोचनप्रभृतयःसिद्धाः कपिलादयस्तेषांसंघाःगन्धर्वयक्षासुरसिद्धसंघास्तेवीक्षन्तेपश्यन्ति त्वात्वांविस्मिताःविस्मयमापन्नाःसन्ततएवसर्वे २२

यस्मात् रूपमिति रूपंमहदतिप्रमाणंतेतववक्त्रवक्त्रानेत्रं वक्त्राणिवक्त्राणिमुखानि नेत्राणिचक्षूंषिचयस्मिंस्तद्रूपंवक्त्रवक्त्रानेत्रंहेमहावाहोवक्त्रवाहूरुपादंवहवोवाहवः ऊरवःपादाश्चयस्मिन्रूपेतद्वक्त्रवाहूरुपादंकिञ्चवहूदरंवहूनिउदराणियस्मिन्निति तत्वहूदरंवक्त्रदंष्ट्राकरालंवह्वीभिःदंष्ट्राभिःकरालंविकृतंतद्वक्त्रदंष्ट्राकरालंदृष्ट्वा रूपमीदृशं लोकाःलौकिकाःप्राणिनःप्रव्यथिताःप्रचलिता भयेन तथाहं २३

## आनन्दगिरिकृतटीका

दृश्यमानस्यभगवद्रूपस्यविस्मयकरत्वेहेत्वन्तरमाह किञ्चेति तएवोक्तारुद्रादयः सर्वे विस्मयमापन्नास्त्वांपश्यन्तीतिसम्बन्धः २२ लोकत्रयं प्रव्यथितमित्युक्तमुपसंहरति यस्मादिति ईदृशंयस्मात्तेरूपंतस्मात्त्वांदृष्ट्वेतियोजना भयेनलौकिकवदहम पिव्यथितोव्यथांपीडांदेहेन्द्रियप्रचलनंप्राप्तोस्मीत्याह तथेति २३ अर्जुनस्यविश्वरूप

## स्वामिकृतटीका

त्युष्मपाःपितरःउष्मभागाहिपितरइतिश्रुतेःस्मृतिश्चयावदुष्णंभवेदन्नंतावदश्नन्ति वाग्यताः तावदश्नन्तिपितरोयावन्नोक्ताहविर्गुणाः गन्धर्वाश्चयक्षाश्चअसुराश्चवि रोचनादयःसिद्धसंघाःसिद्धानांसंघाश्चसर्वएवविस्मिताःसन्तस्त्वांवीक्षन्तइत्यन्वयः२२

## भाषा अनुवाद।

रुद्रगणआदित्यगणवसुगणऔसाध्यगणदेवगणतथाविश्वेदेवाअश्विनीकुमारऔमरुतगणपितृगणउष्णद्रव्यपानकरनेवालेपितृगण धर्मशास्त्रऔश्रुतिमेंऐसेकहाहै कि पितृगणतवतकमौनभोजनकरते जवतकअन्नउष्णहैऔरयावतपितृउद्देशकरि दियेहुयेअन्नकागुणवर्णनरूपमधुवातादि वैदिकमन्त्रपाठसमाप्तनहींहोयीतावतपितरअन्नखातेहैंऔरगन्धर्वगणयक्षगणऔरविरोचनप्रभृतिअसुरगणऔसिद्ध गण सकलविस्मययुक्तहोके तुमकोखडेदेखते हैं २२

रूपंमहत्तेवङ्कवक्त्रनेत्रं महाबाहोवङ्कबाहूरुपादं वहूदरंवङ्कदंष्ट्राकरालं दृष्ट्वा लोकाःप्रव्यथितास्तथाहं २३ नभस्पृशंदीप्तमनेकवर्णं व्यात्ताननंदीप्तविशालनेत्रं दृष्ट्वाहित्वांप्रव्यथितान्तरात्मा धृतिंनविन्दामिशमञ्चविष्णो २४

शाङ्करभाष्यं ।

तत्रेदंकारणंनभःस्पृशमिति नभःस्पृशंद्युस्पर्शमित्यर्थःदीप्तंप्रज्वलितंअनेकवर्णं अनेकवर्णाभयङ्करानानासंस्थानायस्मिंस्त्वयितंत्वामनेकवर्णंव्यात्ताननंव्यात्तानि विवृतानिआननानि मुखानियस्मिन्त्वयितंत्वांव्यात्ताननंदीप्तविशालनेत्रं दीप्तानिप्रज्वलितानिविशालानिविस्तीर्णानिनेत्राणियस्मिंस्त्वयितंत्वांदीप्तविशालनेत्रंदृष्ट्वाहित्वां प्रव्यथितान्तरात्मा प्रव्यथितःप्रभीतोऽन्तरात्मामनोयस्यममसोऽहं प्रव्यथितान्तरात्मासन् धृतिं धैर्यंनविन्दामिनलभे शमञ्चोपशमं मनस्तुष्टिं हेविष्णो २४

आनन्दगिरिकृतटीका

दर्शनेनव्यथितत्वेहेतुमाह तत्रेति २४ दृश्यमानेपिभगवद्देहे परितोषाद्यभावे

स्वामिकृतटीका ।

किञ्च रूपमिति हेमहाबाहोमहद्रत्युर्जितंतवरूपंदृष्ट्वालोकाःसर्वेप्रव्यथिता अतिभीताः तथाहञ्चप्रव्यथितोऽस्मि कीदृशंरूपंदृष्टांवहूनिवक्त्राणिनेत्राणिचयस्मिंस्तत् वहवोवाहवऊरवःपादाश्चयस्मिंस्तत्वहून्युदराणियस्मिंस्तत्वह्वीभिर्दंष्ट्राभिःकरालंविकृतंरौद्रमित्यर्थः २३ नकेवलंभीतोऽहमेतावदेव अपितु नभइति नभःस्पृशतीतिनभस्पृक्तंअन्तरीक्षव्यापिनमित्यर्थः दीप्ततेजोयुक्तंअनेकावर्णायस्यतं व्यात्तानिविवृतान्याननानियस्यतं दीप्तानिविशालानिनेत्राणियस्यतं एवंभूतंहित्वादृष्ट्वा प्रव्यथितोऽन्तरात्मामनोयस्य सोऽहंधृतिंधैर्यमुपशमञ्चनलभे २४

भाषाअनुवाद ।

औरहेमहावाहो यहमहान्तुमारारूप जिसमेवङ्कतमुखनेत्रवाङ्कऊरुपादउदरहैं औरजोवङ्कतेरेदांतोंसेअतिकरालकहेभयानकहैं इनकोदेखकेसकल लोकव्यथितहैं औरमैंभीपीडितहों २३ औरमैंहींकेवलडराहूं यहनहींऐसाआकाशकोपरसकरनेवालाअर्थात्शून्यव्यापीतेजयुक्तनानावर्णविशिष्टविस्तारको प्राप्तऔजलजलातेहैंविशालकहेवडेनेत्रजिसके ऐसेतुमकोअवलोकनकरिहे विष्णो हमाराअन्तरात्माव्यथायुक्तहै औरमैंइसरूपकोदेखतेजुयेशान्तितथाधीरज नहीं धरसकताहूं २४ औरहेदेवेश तुमारामुखदेखि डरकेमारेहमैंदिशाभूलिगई

दंष्ट्राकरालानिचतेमुखानि दृष्ट्वैवकालानलसन्निभानि दिशोनजानेनलभेच
शर्म्म प्रसीददेवेशजगन्निवास २५ अमीचत्वांधृतराष्ट्रस्यपुत्राः सर्वेसहैवावनिपा
लसंघैः भीष्मोद्रोणःसूतपुत्रस्तथासौ सहास्मदीयैरपियोधमुख्यैः २६

## शाङ्करभाष्यं

कस्मात् दंष्ट्राकरालानीति दंष्ट्राभिःकरालानिविकृतानि तेतवमुखानिदृष्ट्वैवोपलभ्य
कालानलसन्निभानिप्रलयकालेलोकानांदाहकोऽग्निःकालानलस्तन्निभानि काला
नलसदृशानिदृष्ट्वेत्येतद्दिशःपूर्व्वापरविवेकेन नजाने दिङ्मूढोस्म्यतो नलभेनचोपल
भेचशर्म्मसुखमतःप्रसीदप्रसन्नोभव देवेशजगन्निवास २५ येभ्योममपराजय
शङ्काप्रागेवासीत्साचापगतायतःअमीचेति अमीचत्वांधृतराष्ट्रस्य दुर्योधनप्रतयस्त्व
रमाणाविशन्तीति व्यवहितेनसंबन्धः सर्वैसहैवसंहताअवनिपालसंघैः अवनिंपृथीं
पालयन्तीत्यवनिपालास्तेषांसंघैःकिञ्चभीष्मोद्रोणःसूतपुत्रःकर्णस्तथासौसहास्मदीयै
रपि धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैःयोधानांमुख्यैःप्रधानैःसह २६

## आनन्दगिरिकृतटीका

कारणान्तरंप्रश्नपूर्वकमाह कस्मादिति दृष्ट्वैवेत्येवकारेणप्राप्तिर्व्यावर्त्तते २५
अस्माकंजयंपरेषांपराजयञ्चदिदृचन्तंपश्यामीत्याह येभ्यइति तत्रहेतुत्वेनश्लो
कमवतारयति यतइति २६ नकेवलंदुर्योधनादीनामेवपराजयःकिन्तु भीष्मादी

## स्वामिकृतटीका।

किञ्च दंष्ट्रेति हेदेवेशतवमुखानिदृष्ट्वाभयावेशेनदिशोनजानामि शर्म्मचसुखंन
लभे भोजगन्निवासप्रसनोभव कीदृशानिमुखानिदृष्ट्वादंष्ट्राभिःकरालानि कालान
लःप्रलयाग्निस्तत्सदृशानि २५ यच्चान्यद्रष्टुमिच्छसीत्यनेनास्मिन्संग्रामेभाविजयप

## भाषा अनुवाद

औरसुखपावतेंनहीं हेजगतनिवासअबप्रसनहोउ कैसामुखदेखिडरभयासोकहते
किबडेकरालदांतोसेभयानक सोप्रलयाग्निकेसमान हैं २५ औरजोकहाकि अ
न्यत्जोभावीपराजयहैसोभी इसमेरीशरीरमेदेखो सोईदेखिअबअर्जुनपांचश्लोक
सेकहतेहैं किजयद्रथप्रभृतिराजगणसमेतएधृतराष्ट्रकेपुत्रदुर्योधनादि तुमारे सुख
मेप्रवेशकरतेहैं औरभीष्मद्रोणऔसूतपुत्रकर्णएभीतुमारेमुखमेप्रवेशकरतेहैं और
यहीसबनहीं प्रवेशकरतेहैं वलुप्रतियोधाअर्थात्हमारेपचकेभी शिखण्डी धृष्टद्यु
म्नप्रभृतिकोंकेसमेत वेप्रवेशकरतेहैं २६ औरएदुर्योधनादिक धावतेंऊ येतुमा

वक्त्राणितेत्वरमाणाविशन्ति दंष्ट्राकरालानिभयानकानि केचिद्विलग्नादशना न्तरेषु संदृश्यन्तेचूर्णितैरुत्तमाङ्गैः २७ यथानदीनांबहवोऽम्बुवेगाः समुद्रमेवा भिमुखाद्रवन्ति तथातवामीनरलोकवीरा विशन्तिवक्त्राण्यभितोज्वलन्ति २८

## शाङ्करभाष्यं

किञ्च वक्त्राणीति वक्त्राणिमुखानितेतवत्वरमाणास्त्वरायुक्ताःसन्तोविशन्तिकिं विशिष्टानिदंष्ट्राकरालानिमुखानिभयानकानिभयङ्कराणि किञ्चकेचिन्मुखानि प्र विष्टानांमध्येविलग्नादशनान्तरेषुमांसमिवभक्षितंसंदृश्यन्ते उपलभ्यन्ते चूर्णितैश्चू र्णीकृतैरुत्तमाङ्गैःशिरोभिः २७ कथंप्रविशन्तिमुखानीत्याह यथा नदीनामिति यथानदीनांस्रवन्तीनांबहवोऽनेकेअम्बूनांवेगाअम्बुवेगास्त्वराविशेषाः समुद्रमेवाभि मुखाःप्रतिमुखाःद्रवन्ति प्रविशन्ति तथातद्वत्तव अमी भीष्मादयोनरलोकवीरामनु ष्यलोकपालाविशन्ति वक्त्राण्यभितोज्वलन्ति प्रकाशमानानि २८

## आनन्दगिरिकृतटीका ।

नासपीत्याह किञ्चेति भगवद्रूपस्योल्लेखेत्वन्तरमाह किञ्चेति प्रविष्टानांमध्ये के चिदिति सम्बन्धः २७ उभयोरपिसेनयोरवस्थितानांराज्ञां भगवन्मुखप्रवेशनं निदर्शनेन विशदयति कथमित्यादिना २८

## स्वामिकृतटीका

राजयादिकंममदेहेपश्येतियद्भगवतोक्तं तदिदानींपश्यन्नाह अनेकेति पञ्चभिःअ मीधृतराष्ट्रस्यपुत्रादुर्योधनादयःसर्वेऽवनिपालानांजयद्रथादीनांराज्ञांसंघैःसमूहैः स हैव तवबक्त्राणिविशंतीत्युत्तरेणान्वयः तथाभीष्मश्चद्रोणश्चासौसूतपुत्रश्चकर्णःनकेव लंतएवविशन्ति अपितुप्रतियोद्धारोऽस्मदीयायेयोधमुख्याःशिखण्डिधृष्टद्युम्नादयस्तैः सह २६ दंष्ट्राभिःविकृतानिकरालानिभयङ्कराणिवक्त्राणिविशन्तितेषांमध्येकेचि च्चूर्णितैरुत्तमाङ्गैःशिरोभिरुपलक्षितादन्तसन्धिषुसंश्लिष्टाःसंदृश्यन्ते २७प्रवेशनेदृष्टा

## भाषाअनुवाद

देविकटदन्तकरालमुखमेंप्रवेशकरतेहैं औरतिनकेबीचकोईकोईयोद्धामस्तकचूर्ण हुयेतुमारेदांतोकेमध्यसन्धिमेलिपटेसेदेखपडतेहैं २७ अवउनकेप्रवेशकेविषय मेदृष्टान्तकहतेहैं किजैसेअनेकअनेकमार्गसेनदियोंकेधाराप्रवाह समुद्रके अभि मुखधावतेभयेजायकरसमुद्रमेप्रवेशकरतेहैं तैसेहीएनरलोककेवीरसकल जाज्व ल्यमान तुमारेमुखमे पैठतेजातेहैं २८ वेवशरूपप्रवेशमेनदीकादृष्टान्तकहिकर

यथाप्रदीप्तंज्वलनंपतङ्गा विशन्तिनाशायसमृद्धवेगाः तथैवनाशायविशन्तिलोकास्तवापिवक्त्राणिसमृद्धवेगाः २९

## शाङ्करभाष्य

ते किमर्थंप्रविशन्तिकथञ्चेत्याह यथेति यथाप्रदीप्तंज्वलनंअग्निंपतङ्गाःपक्षिणो विशन्तिनाशायविनाशायसमृद्धवेगाःसमृद्धःउद्भूतोवेगोगतिर्येषांतेसमृद्धवेगाः तथैव नाशायविशन्तःलोकाःप्राणिनस्तवापिवक्त्राणिसमृद्धवेगाः २९ त्वंपुनःलेलिह्यसेआस्वादयसि ग्रसमानोऽन्तःप्रवेशयन्समन्तात् समन्ततोलोकान्समग्रान्समस्तान्वदनैर्वक्त्रैर्ज्वलद्भिर्दीप्यमानैस्तेजोभिरापूर्य्यसंव्याप्यजगत् समग्रंसहाग्रेणसमस्तमित्येतत् किञ्चभासोदीप्तयस्तवोग्राःक्रूराःप्रतपन्तिप्रतापंकुर्व्वन्ति हेविष्णोव्यापनशील ३० यतएवमुग्रस्वभावोऽतःआख्याहीति आख्याहिकथय मेमह्यंकोभवानेवमुग्ररूपः

## आनन्दगिरिकृतटीका

प्रवेशप्रयोजनं तत्प्रकारविशेषञ्चोदाहरणान्तरेणस्फोरयति तेकिमर्थमित्यादिना २९ योद्धुकामानांराज्ञां भगवन्मुखप्रवेशप्रकारंप्रदर्श्यतस्यांदशायांभगवतस्तद्ग्रासाञ्चप्रवृत्तिप्रकारंप्रत्याययति त्वंपुनरिति भगवत्प्रवृत्तिमेवमत्याय तदीयभासां प्रवृत्तिं प्रकटयति किञ्चेति ३० भगवद्रूपस्यार्जुनेनदृष्टपूर्व्वत्वात्तस्यतस्मिन्न

## स्वामिकृतटीका

न्तमाह यथेति नदीनामनेकमार्गप्रवृत्तानांवहवोऽम्बूनांवारीणांवेगाःप्रवाहाःसमुद्राभिमुखाःसंतोयथासमुद्रमेवद्रवन्तिविशन्ति तथाअमीयेनरलोकवीरास्तेऽभितोज्वलन्ति सर्व्वतःप्रदीप्यमानानितववक्त्राणिप्रविशन्ति २८ अवशत्वेनप्रवेशे नदीवेगदृष्टान्तउक्तोवुद्धिपूर्व्वकप्रवेशेदृष्टान्तमाह यथेति प्रदीप्तंज्वलन्तमग्निंपतङ्गाशलभावुद्धिपूर्व्वकंसमृद्धोवेगोयेषांतेयथानाशायमरणायैवविशन्ति तथैवलोकाएतेजनाअपि भवन्मुखानिप्रविशन्ति २९ ततःकिमतआह लेलिह्यसेइति ग्रसमानोपिसन्समग्रान्लोकान्सर्व्वान्तान्वीरान्सर्वतोलेलिह्यसेअतिशयेनभक्षयसि कैःज्वलद्भिर्वदनैःकिञ्चहेविष्णोतवभासोदीप्तयस्तेजोभिर्विस्फुरणैःसमग्रंजगद्व्याप्यतीव्राः

## भाषाअनुवाद

अवुद्धिपूर्व्वकप्रवेश करनेमेंदृष्टान्त कहतेहैं किजैसेवडेवेगऔउत्साहसेपतङ्गजोपांखी तेनाशकेनिमित्तदीपशिखामेजायगिरतेऔमरतेहैं तैसेही अतिवेगमेयेसववीरमनुष्य नाशकेअर्थ तुमारेमुखमे आयकर प्रवेशकरते हैं २९

लेलिह्यसेग्रसमानःसमन्ताल्लोकान्समग्रान्वदनैर्ज्वलद्भिः तेजोभिरापूर्य्यजगत्
समग्रं भासस्तवोग्राःप्रतपन्तिविष्णो ३० आख्याहिमेकोभवानुग्ररूपो नमोऽस्तुते
देववरप्रसीद विज्ञातुमिच्छामिभवन्तमाद्यं नहिप्रजानामितवप्रवृत्तिं ३१

## शाङ्करभाष्यं

अतिक्रूराकारोनमोस्तुतेतुभ्यंहेदेववर देवानांप्रधान प्रसीदप्रसादंकुरु विज्ञातुं विशेषेणज्ञातुमिच्छामिभवन्तमाद्यमादौभवमाद्यं नहि यस्मात् प्रजानामितवत्वदीयांप्रवृत्तिंचेष्टां ३१ कालोऽस्मीतिकालोऽस्मिलोकक्षयकृत् लोकानांक्षयंकरोतीति लोकक्षयकृत् प्रवृद्धोवृद्धिंगतोयदर्थंप्रवृद्धस्तच्छृणुलोकान्समाहर्त्तुं इहअस्मिन्काले प्रवृत्तःऋतेपिविनापित्वात्वांनभविष्यन्तिभीष्मद्रोणकर्णप्रभृतयःसर्वेयेभ्यस्तवाशङ्का

## आनन्दगिरिकृतटीका।

जिज्ञासेत्याशंक्याह यतइति उपदेशंशुश्रूषमाणेनोपदेष्टुःप्रह्वीभवनंकर्त्तव्यमिति सूचयति नमोस्त्विति क्रौर्य्यत्यागंसमर्थयते प्रसादमिति त्वमेवमांजानीषेमियमि त्वमिदानीमर्थयसेत्वदीयांचेष्टांदृष्ट्वात्वयैवप्रतिपद्यस्वेत्याशंक्याह न हीति ३१

यदर्थाचस्वप्रवृत्तिःतत्सर्वंभगवानुक्तवानित्याह भगवानिति कालःक्रियाशक्त्युपहितःपरमेश्वरःअस्मिन्नितिवर्त्तमानयुद्धोपलक्षितत्वंकालस्यविवक्षितं लोकसंहारार्थंत्वत्प्रवृत्तावपिनासावर्थवतीप्रतिपक्षाणांभीष्मादीनांमत्प्रवृत्तिंविनापिसंहर्त्तुं

## स्वामिकृतटीका।

सत्यःप्रतपन्तिसन्तापयन्ति ३० यतएवंतस्मात् आख्याहीति भगवानुग्ररूपःक इत्याख्याहिकथय तुभ्यंनमोऽस्तुहेदेववरप्रसीदप्रसन्नोभवभवन्तमाद्यंपुरुषंविशेषेण ज्ञातुमिच्छामि यतस्तवप्रवृत्तिंचेष्टांकिमर्थमेवंप्रवृत्तोऽसीतिनजानामि एवंभूतस्यतवप्रवृत्तिंवार्त्तामपि नजानामीतिवा ३१ एवंप्रार्थितःसन्श्रीभगवानुवाच

## भाषा अनुवाद

औरप्रवेशकेअनन्तरफेरिक्याहोतासोकहतेहैं कितुमभीअतिभयानकजिह्वालहलहावतेऊ ग्रसमानोत्रैलोक्यलीलवेकोरसनापसारीहै अपनेतेजसेसमग्रजगतकोसन्तप्तकरतेभय उनसववारोंकोग्रासकहेभक्षणकरनेकोइच्छाकरतेहो ३० हेमहाराजजिससे तुमाराऐसाउग्ररूपहै इससेआपकोहौकहो औरहमतुमकोप्रणाम करतेहैं हेदेवश्रेष्ठतुमसेरेमरप्रसन्नहोउऔआदिपुरुषजोतुमसोमैंतुमकोजानाचाहताहूंऔरएवंभूतजोतुमतुमारीप्रवृत्तिकहेवार्त्ताकुछभीहमनहींजानसकतेहैं३१

श्रीभगवानुवाच कालोस्मिलोकक्षयकृत्प्रवृद्धो लोकान्समाहर्त्तुमिहप्रवृत्तः ऋतेपित्वांनभविष्यन्तिसर्व्वे येऽवस्थिताःप्रत्यनीकेषुयोधाः ३२ तस्मात्त्वमुत्तिष्ठयशोलभस्व जित्वाशत्रुं भुङ्क्ष्वराज्यंसमृद्धं मयैवैतेनिहताःपूर्वमेव निमित्तमात्रंभव सव्यसाचिन् ३३

शाङ्करभाष्यं

येवस्थिताःप्रत्यनीकेष्वनीकमनीकंप्रतिप्रत्यनीकेषुप्रतिपक्षभूतेषु अनीकेषुयोधाःएव योद्धारः ३२ यस्मादेवं तस्मात्त्वमिति तस्मात्वमुत्तिष्ठभीष्मद्रोणप्रभृतयोऽतिरथाअजेयादेवैरप्यर्ज्जुनेनजिताइतियशोलभस्व केवलंपुण्यैर्हितत्प्राप्यते जित्वाशत्रून्दुर्य्योधनप्रभृतीन् भुंक्ष्वराज्यंसमृद्धंअसपत्नमकण्टकं मयाएवैतेनिहतानिश्चयेनहताःप्राणैर्वियोजिताः पूर्व्वमेवनिमित्तमात्रंभवत्वं हेसव्यसाचिन् सव्येनवामेनहस्तेन शराणांक्षेपात् सव्यसाचीत्युच्यतेऽर्जुनः ३३

आनन्दगिरिकृतटीका।

मशक्यत्वादित्याशंक्याह ऋतेपीति ३२ तवौदासीन्येपिप्रतिकूलानीकस्था

स्वामिकृतटीका।

कालइति त्रिभिः लोकानांक्षयकर्त्ताप्रवृद्धोऽत्युत्कटःकालोऽस्मिलोकान्प्राणिनःसंहर्त्तुमिहलोकेप्रवृत्तोऽस्मि अतऋतेत्वांहन्तारंविनानभविष्यन्तिनभविष्यन्तिकेतेप्रत्यनीकेषुअनीकानिअनीकानिप्रतिभीष्मद्रोणादीनांसर्व्वासुसेनासुयेयोद्धारोऽवस्थितास्तेसर्व्वेऽपि ३२ तस्मादिति यस्मादेवंतस्मात्त्वंयुद्धायोत्तिष्ठदेवैरपिदुर्जयाभीष्मा

भाषाअनुवाद

इसप्रकारअर्ज्जुनसेप्रार्थनाकियेगये श्रीभगवानतीनिश्लोकसेकहतेहैं किमैंसकललोककोक्षयकरनेवालाकालरूपहौंऔरप्राणियोंकोसंहारकरनेकीइच्छाकरि इसलोकमेंप्रवृत्तभयाहौं सोएकतुमकोछोडिऔरकोईहमसेनवंचैगे अर्थात् प्रतिसेनामेंजोभीष्मद्रोणआदियोद्धाहैं वेसवमरैंगे ३२ जिसहेतुऐसाहोनहारहै इससेतुमयुद्धकेअर्थउठो औरदेवतोंसेभीअजयजोभीष्मद्रोणआदिनीर सोअर्ज्जुनसेपराजितभयेंइसयशकोलाभकरो औरशत्रुवोंकाविनाशकरिकेसंपूर्णराज्यभोगकरो औरयेजोतुमारेशत्रु तिनकोयुद्धकेपूर्वहीकालरूपमैनेयद्यपिहतकरिराखाहै तौभी हेसव्यसाचिन्अर्जुन तुमनिमित्तमात्रहोउ सव्यसाचीउसकोकहतेहैं जोवांयेहाथसेयुद्धादिकार्यकरिसकेहैं ३३ औरजोपूर्वमेअर्जुननेशंकाकियाकिहमइन

द्रोणञ्च भीष्मञ्च जयद्रथञ्च कर्णं तथान्यानपि योधवीरान् मया हतांस्त्वं जहि माव्य
थिष्ठा युध्यस्व जेतासि रणे सपत्नान् ३४

शाङ्करभाष्यं

द्रोणञ्चेति द्रोणञ्च येषु येषु योधेषु अर्जुनस्याशङ्कासीत् तांस्तान् सर्व्वान् व्यप
दिशति भगवान् मया हतानीति तत्र द्रोणभीष्मयोस्तावत्प्रसिद्धमाशङ्काकारणं द्रोणोध
नुर्व्वेदाचार्य्यो दिव्यास्त्रसंपन्नः आत्मनश्च विशेषतो गुरुर्गरिष्ठो भीष्मः स्वच्छन्दमृत्युर्दिव्या
स्त्रसंपन्नश्च परशुरामेण द्वन्द्वयुद्धमगमन्न च पराजितः तथा जयद्रथो यस्य पिता तपश्चर
ति मम पुत्रस्य शिरो भूमौ पातयिष्यति यस्तस्यापि शिरः पतिष्यतीति कर्णोपि वासवदत्त
या शक्त्यात्वमोघया सम्पन्नः सूर्य्यपुत्रः कानीनो यतोऽतस्तन्नाम्नैव निर्द्देशः मया हतांस्त्वं जहि
निमित्तमात्रेण माव्यथिष्ठास्तेभ्यो भयं माकार्षीः युद्धस्व जेतासि दुर्योधनप्रभृतीन् रणेयु
द्धे सपत्नान् शत्रून् ३४

आनन्दगिरिकृतटीका

मत्यातिकूल्यादेव न भविष्यन्तीत्येवं यस्मान्निश्चितं तस्मात्त्वदौदासीन्यमकिञ्चित्करमि
त्याह यस्मादिति उत्तिष्ठ युद्धाय उन्मुखो भवेत्यर्थः यशोलाभमभिनयति भीष्मे
ति किं तेनापुमर्थेनेत्याशंक्याह पुण्यैरिति राज्यभोगेपेक्षिते किमनपेक्षितेनेत्या
शंक्याह जित्वेति भीष्मादिव्यतिरेकेषु कुतो जयाशङ्केत्याशंक्याह मयैवेतद्विति त
र्हि मृतमारणार्थं न मे प्रवृत्तिस्तत्राह निमित्तेति सव्यसाचिपदं विभजते वामेनेति ३३
मयैवेत्यादिनोक्तं प्रपञ्चयति द्रोणञ्चेति किमिति कतिचिदेवात्र द्रोणादयो

स्वामिकृतटीका।

दयोऽर्जुनेन निर्जिता इत्येवं भूतं यशो लभस्व प्राप्नुहि अयत्नतश्च शत्रून् जित्वा समृद्धं रा
ज्यं भुंक्ष्व एते च तव शत्रवस्त्वदीययुद्धात् पूर्व्वमेव मयैव कालात्मना निहतप्रायास्तथापि
त्वं निमित्तमात्रं भव हे सव्यसाचिन् सव्येन वामेन हस्तेन साचितुं शरान् सन्धातुं शीलं यस्ये
ति व्युत्पत्त्या वामेनापि वाणक्षेपात् सव्यसाचीत्युच्यते ३३ न चैतद्भिः कतरन्नोग
रीयो यद्वा जयेम यदि वा नो जयेयुरिति याश्याशङ्का सापि न कार्य्येत्याह द्रोणमिति ये

भाषाअनुवाद

कोजीतैगे याये हमको यह हम नहीं जानते हैं उसका वारण करते हुये कहते हैं कि
जिनसे तुमको शङ्का भई थी वे मुझसे हतभये जो द्रोण भीष्म जयद्रथ कर्ण तथा और
औरजो वीर उन सबको तुम जय करो और उनसे न डरो तुम अवश्य ही जीतोगे ३४

सञ्जयउवाच एतच्छ्रुत्वावचनंकेशवस्य कृताञ्जलिर्वेपमानःकिरीटी नमस्कृत्वभूयएवाहकृष्णं सगद्गदंभीतभीतःप्रणम्य ३५

## शाङ्करभाष्यम्।

एतच्छ्रुत्वेति एतत्श्रुत्वावचनंकेशवस्यपूर्वोक्तंकृताञ्जलिःसन्वेपमानः कम्पमानःकिरीटीनमस्कृत्वभूयःपुनरेवाहोक्तवान्कृष्णं सगद्गदंसहगद्गदयावाचामंदशब्देनभयाविष्टस्यदुःखाभिघातात् स्नेहाविष्टस्यचहर्षोद्भवात्अश्रुपूर्णनेत्रत्वेसति श्लेष्मणाकण्ठावरोधःततश्चवाचोऽपाटवंमन्दशब्दत्वं यत्सगद्गदस्तेनसहवर्त्ततइतिसगद्गदंवचनमाहेति वचनंक्रियाविशेषणमेतत्भीतभीतःपुनर्भयाविष्टचेताःसन्प्रणम्यप्रह्वीभूत्वाहेतिव्यवहितेनसम्बन्धः अत्रावसरेसञ्जयवचनंसाभिप्रायंकथंद्रोणादिष्वर्जुनेननिहतेष्वजेयेषुचतुर्षुनिराश्रयोदुर्योधनोनिहतएवेतिमत्वाधृतराष्ट्रोजयंप्रतिनिराशःसन्सन्धिंकरिष्यतीति ततःशान्तिरुभयेषांभविष्यतीतितदपिनाश्रौषीत्धृतराष्ट्रोभवितव्यवशात् ३५ स्थानइति स्थानेयुक्तंकिंतवप्रकीर्त्त्यात्वन्माहात्म्यकीर्त्तने

## आनन्दगिरिकृतटीका।

गण्यन्तेतत्रायं येष्वेति द्रोणादिषुकुतःशङ्केत्याशंक्यद्वयोःशङ्कानिमित्तत्वमाह तन्तेत्यादिना जयद्रथेपिशङ्कानिमित्तत्वमाह तथेति दिव्यास्त्रसंपन्नइतिसम्बन्धः तत्रशङ्कायांकारणान्तरमाह यस्येति कर्णेपितत्कारणत्वंकथयति कर्णोपीति पूर्ववदेवसम्बन्धः हेत्वन्तरमाह दासवेति साचक्त्यमोघापुरुषमेकमत्यन्तसमर्थंघातयित्वैवनिवर्त्तते जन्मनापितस्यशङ्कनीयत्वमाह सूर्येति कुन्तीहिकन्यावस्थायांमन्त्रप्रभावंज्ञातुमादित्यमाजुहाव ततस्तस्यामेवावस्थायामयमुद्भूवतदाह कानीनइति एतदेवाभिप्रेत्यकर्णग्रहणमित्याह यतइति उक्तेष्वन्येषुचनत्वयाशङ्कितव्यमित्याह मयेति ३४

## स्वामिकृतटीका

अस्त्वंशङ्कसेतान्द्रोणादीन्मयैवहतांस्त्वजहिघातय माव्यथिष्ठाभयंमाकार्षीःसपत्नान्शत्रून्रणेयुद्धे निश्चितंजेतासि जेष्यसि ३४ ततोयद्वृत्तंतद्धृतराष्ट्रंप्रति सञ्जयउवाच एतदिति एतत्पूर्वोक्तश्लोकत्रयात्मकंकेशवस्यवचनंश्रुत्वावेपमानःक

## भाषाअनुवाद

तिसकेबादिनोभया सोसंजयधृतराष्टसेकहतेहैं किएश्रीकृष्णकेवचनश्रवणकरिकम्पमानकलेवरकिरीटीअर्जुनहुए औभयकेमारेगदगदकण्ठ अतिडरे से हाथ जोडि कृष्णकोप्रणामकरके आगेकहैंगेजो सोबातैंकहतेभये ३५ अथइसश्लोक

अर्जुनउवाच स्थानेहृषीकेशतवप्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यतेच रक्षांसि भीतानिदिशोद्रवन्ति सर्वेनमस्यन्तिचसिद्धसंघाः ३६

## शाङ्करभाष्यं।

नश्रुतेन हृषीकेशयज्जगत्प्रहृष्यतिप्रहर्षमुपैतितत्स्थानेयुक्तमित्यर्थः अथवाविषय विशेषणं स्थानइति युक्तोहर्षादिविषयोभगवान्यतईश्वरःसर्व्वात्मासर्व्वभूतसुहृच्चे ति तथाअनुरज्यतेअनुरागञ्चोपैति तच्चविषयइतिव्याख्येयं किञ्चरक्षांसिभीतानि भयाविष्टानि दिशोद्रवन्तिगच्छन्ति तच्चस्थानेविषयेसर्व्वेनमस्यन्तिनमस्कुर्वन्तिच सिद्धसंघाः सिद्धानांसमुदायाःकपिलादीनांतच्चस्थाने ३६ भगवतोहर्षादिविष यत्वेहेतुं दर्शयति कस्माच्चेति कस्माच्चेहेतोस्तेतुभ्यंननमेरन्ननमस्कुर्युःहेमहात्मन्ग

## आनन्दगिरिकृतटीका।

पराजयाभावात्करिष्यतिसन्धिमिति बुध्वासञ्जयोराज्ञेवृत्तान्तमुक्तवानित्याह सञ्जयइति पूर्वोक्तवचनंकालोस्मीत्यादिविश्वरूपदर्शनदशायामर्जुनस्यभगवतासम्वा दवचनं किमिति सञ्जयोराज्ञेव्यजिज्ञापयदित्याशंक्यतदुक्तेस्तात्पर्य्यमाह अत्रेति तमेवाभिप्रायंप्रश्नद्वाराविशदयति कथमित्यादिना तर्हिसञ्जयवचनंश्रुत्वा किमिति राजासन्धिंनकारयामासेति तत्राह तदपीति ३५

## स्वामिकृतटीका

म्यसानःकिरीटीअर्जुनःकृताञ्जलिःसंपुटीकृतहस्तःकृष्णंनमस्कृत्यपुनरप्याह उक्तवान् कथमाह भयहर्षाद्यावेशवशात्गद्गदेनकण्ठकम्पेनसहवर्त्ततइतिसगद्गदंयथा स्यात्तथा किञ्चभीताद्पिभीतःसन्प्रणम्यअवनतोभूत्वा आह ३५ स्थानेइत्येका दशभिरर्जुनोक्तिःस्थानेइत्यव्ययंयुक्तमित्यस्मिन्नर्थेहेहृषीकेश यतएवंत्वमद्भुतप्रभावो भक्तवत्सलस्मात्तवप्रकीर्त्त्यामाहात्मसंकीर्त्तनेन नकेवलमहमेवप्रहृष्यामीति किन्तु जगत्सर्व्वंप्रहृष्यतिप्रकर्षेणहर्षं प्राप्नोतिएतत्स्थाने युक्तमित्यर्थः तथाजगदनुरज्य

## भाषाअनुवाद

सेअर्जुनकहतेहैं किहेहृषीकेश जिसहेतुतुमऐसेअद्भुतप्रभावसेयुक्त औभक्तवत्सल हौइससेतुमारामाहात्मसंकीर्त्तनकरनेसेकेवलहमनेजोहर्ष पायासोनहीं किन्तु ब्रह्माण्डभरअतिहर्षितऔप्रीतियुक्तहैयहउचितहैऔरइसब्रह्माण्डमेंजो सब स ज्जनप्रसन्नऔराक्षससकलडरकेमारेदशदिशामेभागेफिरतेहैं औरयोगतपमन्त्र आदिकेद्वारा सिद्धगणतुमकोप्रणामकरतेहैं यहकुछआश्चर्य्यनहींहै ३६

कस्माच्चतेननमेरन्महात्मन् गरीयसेब्रह्मणोऽप्यादिकर्त्रे अनन्तदेवेशजगन्निवा
सत्वमक्षरंसदसत्तत्परंयत् ३७

## शाङ्करभाष्यं

रीयसेगुरुतराय यतोब्रह्मणोहिरण्यगर्भस्याप्यादिकर्त्ताकारणमतस्तस्मादादिकर्त्रे
कथमेवतेंननमस्कुर्युः अतोहर्षादीनांनमस्कारस्यचस्थानंत्वमर्होविषयइत्यर्थः हेअनन्त
हेदेवेशहेजगन्निवास त्वमक्षरंतत्परंयद्वेदान्तेषुश्रूयतेकिंतत् सदसत् यत् विद्यमानंत
त्सत् असच्चयत् नास्तीतिबुद्धिस्ते उपधानभूतेसदसतीयस्याक्षरस्ययद्वारेण सदसदि
त्युपचर्यतेपरमार्थतस्तु सदसतःपरंतत् यदक्षरंवेदविदोवदन्तितत्त्वमेवनान्यदित्यभि

## आनन्दगिरिकृतटीका

किंतदर्जुनोभगवन्तंप्रतिसगद्गदंवचनमुक्तवानितितदाह अर्जुनइति विषयवि
शेषणत्वमेवव्यनक्ति युक्तइति भगवतोहर्षादिविषयतेत्ययुक्तमित्यत्रहेतुमाह यतइति
तवप्रकीर्त्यांहर्षवदनुरागञ्चगच्छतिजगदित्याह तथेति तच्चेत्यनुरागगमनंरक्षःसु
जगदेकदेशभूतेषुप्रतिपक्षेषुकुतोजगतोभगवतिहर्षोनुरागावित्याशंक्याह किञ्चेति
इतश्चजगतोभगवति हर्षादियुक्तमित्याह सर्वइति ३६ उक्तेर्थेहेत्वर्थत्वेनोत्तर
श्लोकमवतारयति भगवतइति महात्मत्वमक्षुद्रचेतस्त्वंगुरुतरत्वान्नमस्कारादियो
ग्यत्वमाह गुरुतरायेति तत्रैवहेत्वन्तरमाह यतइति महात्मत्वादिहेतूनामुक्तानां

## स्वामिकृतटीका।

तेचअनुरागमुपैतिइतियत्तथारक्षांसिभीतानिसन्तिदिशःप्रतिद्रवन्तिपलायन्तेइति
यत्सर्वेयोगतपोमन्त्रादिसिद्धानांसङ्घानमस्यन्तिप्रणमन्तीतियत् एतच्चस्थानेयुक्तमे
वनचित्रमित्यर्थः ३६ तत्रहेतुमाह कस्मादिति हेमहात्मन्हेअनन्तहेदेवेशहेज
गन्निवास कस्माद्धेतोस्ते तुभ्यंननमेरन्ननस्कारंकर्युःकथंभूतायब्रह्मणोऽपिगरीयसे
गुरूतरायआदिकर्त्रे चब्रह्मणोऽपिजनकायकिञ्चसद्व्यक्तंअसदव्यक्तञ्चताभ्यांपरं

## भाषा अनुवाद

औरसबकेहर्ष औप्रणामकरनेमेंअबहेतुकहतेहैं किहेमहात्मन्हेअनन्तहे
जगन्निवासश्रीकृष्ण क्योंनयेसबप्रणामकरेंगे किजोतुमब्रह्माकेभीआदिकर्त्ताकहेज
नकऔरगुरूहो औरसत्कहेव्यक्तप्रगटजोजगत् औअसत्जोअव्यक्तप्रकृतिमाया इ
नदोनोसे परअर्थात्मूलकारणरूप अक्षरकहेअविनाशीजोब्रह्म सोभीतुमहो तो
नवधाभक्तिकेद्वारा जोसबतुमकोप्रणामकरतेहैं सोउचितहैं ३७

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानं वेत्तासि वेद्यञ्च परञ्च धाम त्वया ततं विश्वमनन्तरूप ३८

## शाङ्करभाष्यं ।

प्राय: ३७ पुनरपिस्तौति त्वमिति त्वमादिदेवोजगतःस्रष्टृत्वात् पुरुषःपुरिशयनात् पुराणश्चिरन्तनस्त्वमेवास्यविश्वस्यपरंप्रकृष्टंनिधानं निधीयतेऽस्मिन्जगत्सर्वंमहाप्रलयादाविति किञ्चवेत्तासिसर्वस्यैववेद्यजातस्ययच्चवेद्यं वेदनार्हंतच्चासिपरञ्चधामपरमंपदंवैष्णवंत्वयाततंव्याप्तंविश्वंसमस्तंहेअनन्तरूपअन्तोनविद्यते तवरूपाणां ३८

## आनन्दगिरिकृतटीका

फलमाह अतइति तवैवहेत्वन्तराणिसूचयति हेअनन्तेति अनवच्छिन्नत्वंसर्वदेवनियन्तृत्वंसर्वजगदाश्रयत्वञ्चतवनमस्कारादियोग्यत्वेकारणमित्यर्थः तवैवहेत्वन्तरमाह त्वमिति तत्रमानमाह यदिति कथमेकस्यैवसदसद्रूपत्वंतत्राह तेइति कथंसतोसतश्चाक्षरंप्रत्युपाधित्वंतदाह यद्वारेणेति तत्परंयदितितद्व्याचष्टे परमार्थतस्त्विति अनन्तत्वादिनाभगवतोनमस्कारादियोग्यत्वमुक्तं ३७ सम्प्रति जगत्स्रष्टृत्वादिनापितद्योग्यत्वमस्तीति स्तुतिद्वारादर्शयति पुनरपीति जगतःस्रष्टापुरुषोहिरण्यगर्भइतिपक्षंप्रत्याह पुराणइति स्रष्टृत्वंनिमित्तमेवेति तटस्थेश्वरवादिनस्तान्प्रत्युक्तं त्वमेवेति महाप्रलयादावित्यादिपदमवान्तरप्रलयार्थंईश्वरस्योभयथाकारणत्वंसर्वज्ञत्वेनसाधयति किञ्चेति वेद्यवेदितृभावेनअद्वैतानुपपत्तिमाशंक्याह यच्चेति सुतयालम्बनस्यब्रह्मणोर्थान्तरत्वंआशङ्कित्वोक्तं परञ्चेति यत्परमंपदंतदपिचत्वमेवेति सम्बन्धः तस्यपूर्णत्वामाह त्वयेति व्याप्यव्यापकत्वेनभेदंशङ्कित्वाकल्पि

## स्वामिकृतटीका

मूलकारणंयदक्षरं ब्रह्मतच्चत्वमेव एतैर्नवभिर्हेतुभिस्त्वां सर्वेनमस्यन्तीतिनचित्रमित्यर्थः ३७ किञ्च त्वमादिदेवइति त्वमादिदेवोदेवानामादिःयतःपुराणोऽनादिःपुरुस्त्वमतएव त्वमस्यविश्वस्यपरंनिधानंलयस्थानंतथाविश्वस्यवेत्ताज्ञातात्वंयच्च

## भाषाअनुवाद

औरसंपूर्णदेवतोंकेआदिभूतजोअनादिपुरुषतुम सोइसविश्वकेपरनिधानकहे लयस्थानऔविश्वकेज्ञाताओजोकुछजाननेकेयोग्यवस्तु हैं सोतुमहो औरपरमधामजोविष्णुपदसोभीतुमहौ इससेहेअनन्तरूपकृष्ण तुमइसविश्वमेंव्याप्तहौ इनसातहेतुवोंकेद्वाराभी तुम्हींनमस्कारयोग्यहौ ३८ जिसहेतु तुमसर्वदेवरूपहौ इससे

वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च नमोनमस्तेऽस्तु सहस्रकृत्वः पुनश्चभूयोऽपिनमोनमस्ते ३९ नमःपुरस्तादथ पृष्ठतस्ते नमोऽस्तुते

शाङ्करभाष्यं।

किञ्च वायुरिति वायुस्त्वं यमश्चाग्निर्वरुणोऽपांपतिःशशाङ्कश्चन्द्रमाःप्रजापतिस्त्वं कश्यपादिःप्रपितामहश्चपितामहस्यापिपिताप्रपितामहोब्रह्मणोपिपितेत्यर्थः नमोनमस्तेतुभ्यमस्तुसहस्रकृत्वः पुनश्चभूयोपिनमोनमस्तेबहुशोनमस्कारक्रियाभ्यासावृत्तिगणनंकृत्वसुचोच्यते पुनश्चभूयोपीति श्रद्धाभक्त्यतिशयादपरितोषमात्मनोदर्शयति ३९ तथानमःपुरस्तादिति नमःपुरस्तात्पूर्वस्यांदिशितुभ्यमथपृष्ठतोपिच नमोस्तुते सर्वतएवसर्वासुदिक्षुसर्वत्रस्थिताय हेसर्वअनन्तवीर्य्यामितविक्रमः अनन्तं वीर्यमस्यअमितोविक्रमोयस्य वीर्य्यंसामर्थ्यंविक्रमःपराक्रमःवीर्यवानपिकश्चित् शस्त्रा

आनन्दगिरिकृतटीका।

तत्वात्तस्यमेवमित्याह अनन्तेति ३८ तस्यसर्वात्मत्वेहेत्वन्तरमाह किञ्चेति कश्यपादिरित्यादिशब्देनविराट्दक्षादयोगृह्यन्ते पितामहोब्रह्मातस्यापि तासूत्रात्मान्तर्यामोवेत्याह ब्रह्मणोपीति सर्वदेवतास्त्वमेवेत्युक्तेफलितमाह नम इति सहस्रकृत्वइति कृत्वसुचोविवक्षितमर्थमाह बहुशइति पुनरुक्तितात्पर्यमाह पुनश्चेति श्रद्धाभक्त्योरतिशयात्कृतेपिनमस्कारेपरितोषाभावोबुद्धेरात्मनोलंप्रत्ययराहित्यंतद्दर्शनार्थंपुनरुक्तिरित्यर्थः ३९ विद्यान्तरेणभगवन्तंस्तुत्वानम

खामिकृतटीका

वेद्यंवस्तुजातंपरञ्चधामवैष्णवंपदंतदपित्वमेवासि अतएव हेअनन्तरूपत्वयैवेदंविश्वंततंव्याप्तं एतैश्चसप्तभिर्हेतुभिस्त्वमेव नमस्कार्य्यइत्यर्थः ३८ इतश्चसर्वैस्त्वमेवनमस्कार्य्यःसर्वदेवात्मकत्वादिति स्तुवन्स्वयमपिनमस्करोति वायुरिति वाय्वादिरूपस्त्वमितिसर्वदेवात्मकत्वोपलक्षणार्थमुक्तं प्रजापतिःपितामहस्तस्यापिजनकत्वात्प्रपितामहस्त्वंअतस्तेतुभ्यंसहस्रकृत्वः सहस्रशोनमोऽस्तु पुनःसहस्रकृत्वोनमोऽस्तुभूयोऽपिपुनरपिसहस्रकृत्वोनमोनमइति ३९ भक्तिश्रद्धाद्यादरातिशयेनन

भाषाअनुवाद

तुमसबकेनमस्कारयोग्यहौ ऐसेवचनोंसे अर्जुन भगवानकोस्तुतिकरिके अबप्रणामकरतेहैं किवायुयमअग्निवरुणचन्द्रप्रजापतिब्रह्मा औप्रपितामहब्रह्माकेभी जनक तुमको मेरेसहस्रसहस्रप्रणामहैं फेरिफेरिभीसहस्रसहस्रप्रणामहैं ३९

सर्वतएवसर्व अनन्तवीर्यामितविक्रमस्त्वं सर्वसमाप्नोषिततोऽसिसर्वः ४०

## शाङ्करभाष्यं।

दिविषयेनपराक्रमतेमन्दपराक्रमोवा त्वंतुअनन्तवीर्योऽमितविक्रमश्चेत्यनन्तवीर्य्यामि तविक्रमःसर्वंसमस्तंजगत् प्राप्नोषिसम्यगेकेनात्मनाव्याप्नोषि अतस्तस्मादसिभवसिस र्वस्त्वयाविनाभूतं न किञ्चिदस्तीत्यर्थः ४० यतोहं त्वन्माहात्म्यापरिज्ञानादप राधाइतोःसखेति सखासमानवयाइतिमत्वाज्ञात्वा विपरीतबुद्ध्याप्रसभमभिभूयप्र सह्ययदुक्तं हेकृष्णहेयादवहेसखेतिच अजानताअज्ञानिनामूढेनकिमजानतेत्याह महिमानंमहात्म्यंतदेतमीश्वरस्यविश्वरूपंतवेदंमहिमानमजानतेतिवैयधिकरण्येन

## आनन्दगिरिकृतटीका

स्कुर्वन्नभिमुखीकरोति तथेति यस्यांदिशिसवितोदेति सापूर्वादिगुच्यते तस्यां व्यवस्थितंसर्वंत्वमेव तस्मात्तेतुभ्यंनमोस्त्वित्याह नमइति अथशब्दःसमुच्चये पश्चाद पिस्थितंसर्वंत्वमेव तस्मैतेतुभ्यंनमोस्त्वित्याह अथेति किंबहुनायावन्त्योदिशस्तासु स र्वत्रयद्वर्त्तते तदशेषंत्वमेवतस्मैतुभ्यंप्रह्वीभावःस्यादित्याह नमोस्त्विति फलितंसर्वात्म त्वंसूचयति हेसर्वेति वीर्य्यविक्रमयोर्नपौनरुक्त्यमित्याह वीर्यमित्यादिना वीर्यवतो विक्रमाव्यभिचारादर्थपौनरुक्त्यसाम्यंआह वीर्यवानिति भगवतिलोकतोविशेषमा ह त्वंत्विति उक्तंसर्वात्मत्वंप्रपञ्चयति सर्वमिति सप्रपञ्चत्वंवारयति त्वयेति ४०

## स्वामिकृतटीका।

मस्कारेषुतृप्तिमनधिगच्छन्पुनरपिबहुशःप्रणमति नमइति हेसर्व सर्वात्मन् स र्वासुदिक्षुतुभ्यंनमोस्तु सर्वात्मत्वमुपपादयन्नाह अनन्तंवीर्यंसामर्थ्यंयस्यतथाअमितो विक्रमःपराक्रमोयस्यसएवंभूतस्त्वं सर्वंविश्वंसम्यगन्तर्बहिश्चसमाप्नोषि व्याप्नोषि सुवर्णमिवकटककुण्डलादिस्वकार्यंव्याप्यवर्त्तसे ततःसर्वस्वरूपोऽसि ४०

## भाषाअनुवाद

भक्तिश्रौश्रद्धातथाआदरकीअधिकाईसे भगवतकोनमस्कारकरनेसे तृप्तिनपा के पुनर्वारश्रौरभीप्रणामकरतेहैं किहेसर्वात्मन् तुमारेसन्मुखश्रौपृष्ठभागमेंप्रणा मकरताहूं श्रौरतुमारेसबश्रोरभी मेरीनमस्कारपहुंचे श्रौरभगवानकीसर्वात्मक तासिद्धकरनेकीआकांक्षामरकहतेहैं किजिसकीअनन्तसामर्थ्यश्रौअपरिमितपरा क्रम एवंभूतजोतुमविश्वकेभीतरवाहरसम्यक्व्याप्तहो जैसेसुवर्णनानारूपसेभूषणों मेंव्याप्तहै श्रौमृत्तिकाघटआदिपात्रोंमेंव्याप्तहै तैसेविश्वमेंआपव्यापरहे हो ४०

सखेतिमत्वाप्रसभंयदुक्तं हेकृष्णहेयादवहेसखेति अजानतामहिमानंतवेदंमया प्रमादात्प्रणयेनवापि ४१ यच्चावहासार्थमसत्कृतोसि विहारशय्यासनभोज

शाङ्करभाष्यं

सम्बन्धस्तवेदमिति पाठोयद्यस्ति तदासामानाधिकरण्यमेव मयाप्रमादात्विक्षिप्त चित्ततयाप्रणयेनवापि प्रणयोनामस्नेहस्तन्निमित्तोविश्रम्भस्तेनापि कारणेनयदुक्त वानस्मि ४१ यच्चेति यच्चअवहासार्थंपरिहासप्रयोजनाय असत्कृतः परिभूतो सिभवसि क्वचविहारशय्यासनभोजनेषु विहरणंविहारःपादव्यायामःशयनंशय्या आसनंआस्थायिकाभोजनमदनमित्येतेषुविहारशय्यासनभोजनेषुएकःपरोक्षःसन् असत्कृतोसि परिभूतोसि अथवा हेअच्युत तत्समक्षंतच्छब्दःक्रियाविशेषणार्थः अत्यर्थंवाअसत्कृतोसितत्सर्वंमपराधजातंक्षामयेक्षमांकारये त्वमहमप्रमेयंप्रमा णातीतंयतस्त्वं ४२ पितासीति पितासिजनयितासिलोकस्यप्राणिजातस्यचरा

आनन्दगिरिकृतटीका।

अज्ञाननिमित्तमपराधंक्षमयति यत इति इदंशब्दार्थमाह विश्वरूपमिति नहीदमित्यस्यमहिमानमित्यस्यचसामानाधिकरण्यंलिङ्गव्यत्ययादित्याह तवेति पा ठान्तरसम्भावनायां सामानाधिकरण्योपपत्तिमाह तवेत्यादिना यदुक्तवानस्मि तद हंक्षामयेत्वामितिसम्बन्धः ४१ यदयुक्तमुक्तं तत्क्षन्तव्यमित्येवन किन्तुयत्प रीहासार्थंक्रीडादिषु त्वयितिरस्करणंकृतंतदपिसोढव्यमित्याह यच्चेति विहरणं क्रीडाव्यायामोवा शयनंतल्पादिकंआसनंआस्थायिकासिंहासनादेरुपलक्षणमेतेषु विषयभूतेष्विति यावत् एकशब्दोरहसिस्थितमेकाकिनंकथयतीत्याह परोक्षः स

स्वामिकृतटीका।

इदानींभगवन्तंक्षमापयति सखेतिद्वाभ्यां त्वांप्राकृतःसखेत्येवंमत्वाप्रसभंहठा त्तिरस्कारेणयदुक्तं तत्क्षामयेत्वामित्युत्तरेणान्वयःकिंतत् हेकृष्णहेयादवहेसखेति चसन्निरार्थःप्रसभोक्तौ हेतुः तवमहिमानमिदञ्चविश्वरूपमजानतामया प्रमादात् प्रणयेनस्नेहेनवा यदुक्तमिति ४१ किञ्च यच्चेति हेअच्युत यच्चपरिहासार्थंक्री

भाषा अनुवाद

अबदोश्लोककेद्वारा भगवानसेअर्जुनअपनेअपराधक्षमाकरावतेहैं किहेकृष्णहेया दवहेसखे ऐसेवचनोंसेआपकोअपनासखामानि जोहठसेमैंनेतुमारीयहमहिमान जानिके अथवाभूलसे वाप्रणयकहेअतिप्रीतिसे कहा सोमेरोअनजानकीअसावधा नकोअपराधचूकआपक्षमाकरो ४१ औरहेअच्युत विहारशयनभोजनक्रीडाआ

नेषु एकोऽथवाप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ४२

शाङ्करभाष्यं ।

चरस्य स्थावरजङ्गमस्य नकेवलं त्वमस्य जगतः पिता पूज्यश्च पूजार्होयतोगुरुर्गरीयान् गुरुतरः कस्मात् गुरुतरस्त्वमित्याह नत्वत्समस्त्वत्तुल्योऽन्योस्ति नहीश्वरादूयं सम्भवत्यनेकेश्वरत्वव्यवहारानुपपत्तेःत्वत्सम एवतावदन्योनसम्भवति कुतएवान्योऽभ्यधिकःस्यात् कस्माल्लोकत्रयेपिसर्वस्मिन्नप्रतिमप्रभाव प्रतिमीयते यया साप्रतिमा नविद्यते प्रतिमायस्यतवप्रभावस्य सत्वमप्रतिमप्रभावः हे अप्रतिमप्रभाव निरतिशयप्रभाव इत्यर्थः ४३ यतएवं तस्मादिति तस्मात्प्रणम्यनमस्कृत्यप्रणिधायप्रकर्षेण

आनन्दगिरिकृतटीका

न्निति प्रत्यक्षंपरोक्षंवातदसत्कारणंपरिभवनंयथास्यात्तथा यन्मयात्वमसत्कृतोसि तत्सर्वमितियोजनामङ्गीकृत्याह तच्छब्दइति क्षमाकारयितव्येत्वत्वापरिमितत्वं हेतुमाह अप्रमेयमिति वाचनिकंमदीयमपराधजातं त्वयाक्षन्तव्यमित्युक्तं इदानीं मदीयोऽपराधोनत्वयागृहीतव्यो गृहीतोपिसोढव्यइत्याह यत इति ४२

गुणाधिक्यात्पूजार्हत्वंधर्मात्मज्ञानसंप्रदायप्रवर्तकत्वं नियिच्चयितृत्वात्गुरुत्वं गुरूणामपिस्रष्टत्वं दीनांगुरुत्वाद्गरीयस्त्वं तदेवप्रश्नद्वारासाधयति कस्मादिति ईश्वरान्तरंतुल्यंभविष्यतीत्याशंक्याह नहीति ईश्वरभेदेप्रत्येकंस्वातन्त्र्यात्तदैकमत्तेऽन्हे त्वभावान्नानामतित्वे चैकस्यसिसृक्षायामन्यस्यसंजिहीर्षासम्भवाद्व्यवहारलोपादयुक्तमीश्वरनानात्वमित्यर्थः अभ्यधिकासत्त्वंकैमुतिकन्यायेनदर्शयति त्वत्समइति सतत्र हेतुमवतार्य व्याकरोति अप्रतिमेत्यादिना ४३ निरतिशयप्रभावत्वंहेतु कृत्वाप्रति

स्वामिकृतटीका।

डादिषुतिरस्कृतोऽसि एकःकेवलःसखीन्विना रहसिस्थितइत्यर्थः अथवातत्समक्षं तेषांपरिहसतांसखीनांसमक्षंपुरतोऽपि तत्सर्वमपराधजातं त्वामप्रमेयंअचिन्त्यप्रभावं क्षामये क्षमांकारयामि ४२ अचिन्त्यप्रभावत्वमेवाह पितेति न विद्यतेप्रतिमाउपमायस्यसो प्रतिमस्तथाविधः प्रभावोयस्यतव प्रहेअप्रतिमप्रभावत्वमस्यचराचरस्यलोकस्यपिताजनकोसि अतएवपूज्यश्चगुरुश्चगुरोरपिगरीयांश्चगुरुत

भाषाअनुवाद।

दिमे अथवा सखागणरहितनिर्जनस्थानमे जहांहमऔरतुमकोछोड और कोई नया औतोजगहमे अथवा परिहासकरनेवालेमित्रोंकेवीचमे जोहमनेहंसनेकेलियेतिरस्कारआपका कियाहै सोसवअचिन्त्यप्रभावरूपआपसेहमक्षमाकरवावतेहैं ४२

पितासिलोकस्यचराचरस्य त्वमस्यपूज्यश्चगुरुर्गरीयान् नत्वत्समोस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ४३

## शाङ्करभाष्यं

नीचैर्धृत्वा कायंशरीरंप्रसादयेप्रसादंकारये त्वामहमीशमीशितारमीड्यंस्तुत्यं त्वं पुनःपुत्रस्यापराधंपितायथाक्षमतेसर्वंसखाइवसख्युरपराधंयथावा प्रियः प्रियाया अपराधंक्षमते एवमर्हसि हेदेवसोढुंप्रसहितुंक्षन्तुमित्यर्थः ४४ अदृष्टपूर्वंनकदाचिदपिदृष्टपूर्वमिदंविश्वरूपंतवमयान्यैर्वा तदहंदृष्ट्वाहृषितोस्मिभयेनचप्रव्यथितंमनोमेऽतस्तदेवमेमसदर्शय हेदेवरूपंयन्मत्सुखंप्रसीददेवेशजगन्निवास जगतोनिवासोजगन्निवासः हेजगन्निवास ४५ किञ्च किरीटिनमिति किरीटिनंकिरीटवन्तं

## आनन्दगिरिकृतटीका

प्रसादयेप्रणामपूर्वकंत्वामित्याह यतइति प्रसादनानन्तरंभगवताकर्त्तव्यंप्रार्थयते त्वं पुनरिति प्रियइवप्रियायाइतीवकारोनुपज्जते प्रियायार्हसीतिछान्दसःसन्धिः क्षन्तु मदपराधजातमितिशेषः ४४ हेतूकिंपूर्वकंविश्वरूपोपसंहारंप्रार्थयते अदृष्टेति हृषितोहृष्टस्तुष्टइतियावत् भयेनतद्धेतुविकृतदर्शनेनेत्यर्थः४५ तदेवदर्शयेत्युक्तंकिं

## स्वामिकृतटीका

रःअतोलोकत्रयेपित्वत्समएवतावदन्योनास्तिपरमेश्वराद्न्यस्याभावात्त्वत्तोऽधिकः पुनःकुतःस्यात् ४३ यस्मादेवं तस्मादिति तस्मात्त्वामीशंजगतईड्यंस्तुत्यंप्रसादयामि कथंकायंप्रणिधायदण्डवन्निपात्यप्रणम्यप्रकर्षेणनत्वा अतस्त्वं ममापराधंसोढुंक्षन्तुमर्हसि कस्यकइवपुत्रस्यापराधंकृपयापितायथासहतेसख्युर्मित्रस्यापराधंसखा निरुपाधिबन्धुर्यथासहते प्रियश्चप्रियस्यापराधंतत्प्रियार्थं यथातद्वत् ४४ एवंक्षमयित्वाप्रार्थयते अदृष्टेतिद्वाभ्यां हेदेवपूर्वमदृष्टंतवरूपंदृष्ट्वाहृषितोहृष्टोऽस्मितथाभयेनचमेमनःप्रव्यथितंप्रचलितंतस्मात्ममव्यथानिवृत्तये तदेवरूपंदर्शय हेदेवेश हे जगन्निवास प्रसन्नोभव ४५ तदेवरूपंविशेषयन्नाह किरीटिनमिति किरीटवन्तं

## भाषा अनुवाद।

अवभगवत्का अचिन्त्यप्रभावकहतेहैं किहेअप्रतिमप्रभाव नहींहैप्रतिमा कहेउपमा ऐसानिरूपमप्रभावहैजिसका सोतुमइसचराचरात्मकलोकके पिता कहे उत्पत्तिकरनेवाले औपूजनीय तथागुरुकेभीगुरुहौ इसहेतुपरमेश्वरजो तुम तुमारेसमानका त्रिलोकीमेंकोई नहीं तोअधिकफेरिऔरकहांसेहोसकै है ४३

तस्मात्प्रणम्यप्रणिधायकायं प्रसादयेत्वामहमीशमीड्यं पितेवपुत्रस्यसखेवसख्युः प्रियःप्रियायार्हसिदेवसोढुं ४४ अदृष्टपूर्वं हृषितोऽस्मिदृष्ट्वा भयेनचप्रव्यथितं मनोमे तदेवमेदर्शयदेवरूपं प्रसीददेवेशजगन्निवास ४५

## शाङ्करभाष्यं

तथागदिनंगदावन्तं चक्रहस्तमिच्छामित्वांप्रार्थयेत्वांद्रष्टुमहंतथैवपूर्ववदित्यर्थः यत एवंतस्मात्तेनैवरूपेणवसुदेवपुत्ररूपेणचतुर्भुजेनसहस्रबाहोवार्तमानिकेनविश्वरूपेणभव विश्वमूर्तेउपसंहृत्य विश्वरूपंतेनैवरूपेणवसुदेवपुत्ररूपेणभवेत्यर्थः ४६

## आनन्दगिरिकृतटीका।

तदित्यपेक्षायामाह किरीटिनमितीति चक्रंहस्तेयस्यतमितिव्युत्पत्तिंगृहीत्वाह चक्रेति मदीयेच्छाफलपर्यन्ताकर्त्तव्यत्याह यतइति चतुर्भुजत्वेकथंसहस्रबाहुत्वंतत्राह वर्त्तमानिकेनेति सतिविश्वरूपेकथंपूर्वरूपभाक्त्वंतत्राह उपसंहृत्येति ४६

## स्वामिकृतटीका

गदावन्तंचक्रहस्तञ्चत्वांद्रष्टुमिच्छामियथापूर्वंदृष्टोऽसितथैव अतःहेसहस्रबाहो हे विश्वमूर्त्तेइदंविश्वरूपंउपसंहृत्यतेनैवकिरीटादियुक्तेनचतुर्भुजेनरूपेणभवआविर्भव तदनेन श्रीकृष्णमर्जुनःपूर्व्वमपिकिरीटादियुक्तमेवपश्यतीति गम्यतेयत्तुपूर्वमुक्तंविश्वरूपदर्शनेकिरीटिनंगदिनंचक्रिणञ्चपश्यामीति तद्वत्तुकिरीटाद्यभिप्रायेणयद्वाएतावन्तंकालंयंत्वांकिरीटिनंगदिनंचक्रिणञ्चसुप्रसन्नमपश्यंतमेवेदानींतेजोराशिंदुर्निरीक्ष्यंपश्यामीत्येवमलवचनस्यव्यक्तिरित्यविरोधः ४६ एवंप्रार्थितःसंस्तमाश्वासयन्श्री

## भाषाअनुवाद।

इससेहेईसस्वामिन् स्तुतिकेयोग्यईश्वरजोआप तिनकोमैंशरीरसेदण्डकेसमान अष्टाङ्गप्रणामकरिप्रसन्नकरवताहूं किजैसेपुत्रकीअपराध कृपाकरिकेपितासहिलेताऔरमित्रकीअपराधमित्रसमेनहींधरतातथापत्नीकीअपराधपतिभीप्रीतिसेसह्य करताहैतैसेहीहेदेवपिताओमित्रतथास्वामीरूपआपभी मेरीअनजानबालकसमानप्रीतिपालसेवककीअपराधक्षमांकीजिये ४४ इसप्रकारसेक्षमाकरायअब अर्जुनदोश्लोककेद्वाराभगवानसेप्रार्थनाकरतेहैं किहेदेवश्रीकृष्णअदृष्टपूर्वयहआपकारूपदेखिकेमैंअतिप्रसन्नभयाहौं परन्तुभयकेमारेमेरामनथिरनहींहैं इससेहे देवेशजगतकेनिवासअबमेरेपरप्रसनहोउऔरवहीपूर्वरूपदेखावोयहप्रार्थनाकरताहूं ४५ अबसोईपूर्वरूपकहतेहैं किहेसहस्रबाहोहे विश्वमूर्त्तेसोईकिरीट

किरीटिनंगदिनंचक्रहस्त मिच्छामित्वांद्रष्टुमहंतथैव तेनैवरूपेणचतुर्भुजेन सहस्रबाहोभवविश्वमूर्त्ते ४६ श्रीभगवानुवाच मयाप्रसन्नेनतवार्जुनेदं रूपं परं दर्शितमात्मयोगं तेजोमयं विश्वमनन्तमाद्यं यन्मेत्वदन्येन नदृष्टपूर्वं ४७

## शाङ्करभाष्यं

अर्जुनंभीतमुपलभ्यउपसंहृत्यविश्वरूपं प्रियवचनेनाश्वासयन्श्रीभगवान्मयेति मय प्रसन्नेनप्रसादोनामत्वय्यनुग्रहबुद्धिस्तद्वताप्रसन्नेनमयातवहेअर्जुन इदंपरंरूपं दर्शितमात्मयोगात्आत्मनऐश्वर्यस्वसामर्थ्यात्तेजोमयंतेजप्रायंविश्वंसमस्तमनन्तंअन्तरहितंआदौभवमाद्यंयद्रूपंमेममत्वदन्येनत्वत्तोऽन्येनकेनचिन्नदृष्टपूर्वं ४७ आत्मनोममरूपदर्शनेनकृतार्थएवत्वंसंवृत्तइतितत:स्तौति नवेदेति नवेदयज्ञाध्ययनैर्नदानैश्चतुर्णामपिवेदानामध्ययनैर्यथावत्यज्ञाध्ययनैरेव यज्ञाध्ययनस्यसिद्धत्वात्पृथक्यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थं तथानदानै:तुलापुरुषादिभिर्नचक्रियाभिरग्निहोत्रादिभि: श्रौतादिभिर्नापितपोभिरुग्रैश्चान्द्रायणादिभिरुग्रैर्घोरै: एवंरूपोयथादर्शितंविश्वरूपंयस्य सोहमेवंरूप:शक्योनशक्य: अहंनृलोकेमनुष्यलो

## आनन्दगिरिकृतटीका

अर्जुनेनस्थानेहृषीकेशेत्यादिनाकस्थभगवतोवचनमवतारयति अर्जुनमिति भगवत्प्रसादैकोपायलभ्यं तद्दर्शनमित्याशयेनाह मयेति ४७

## स्वामिकृतटीका

भगवानुवाच मयेतित्रिभि: हेअर्जुनकिमिति त्वंवित्रस्तंरूपंदर्शितंआत्मनोममयोगात्योगमायासामर्थ्यात्परत्वमेवाह तेजोमयंविश्वात्मकमनन्तमाद्यञ्चयन्ममरूपंत्वदन्येन त्वाद्दृशाद्भक्तादन्येन पूर्वंनदृष्टं ४७

## भाषाअनुवाद

मुकुटदियेगदाऔचक्रहाथमेलिये आपकोदेखनेकीइच्छाकरताहूं इससेअबआपइसविश्वरूपकोसंहारकरिके वैसहीचतुर्भुजरूपस्वरूपधारणकरो ४६ भगवान श्रीकृष्णजबऐसेप्रार्थनाकियेगये तबअर्जुनकोसमझातेहुये तीनिश्लोकसेयह कहनेलगे किहेअर्जुनतुमभयकिसलिये करतेहो मैतोअतिप्रसन्नहोयअपनी योगमायाकीसामर्थ्यसेयहअपनाअपूर्वउत्तमरूपतुमकोकृपाकरिकेदेखाया औरइसंतेजमयविश्वात्मकआदिअन्तरहितमेरेरूपको तुमारेसमानभक्तकेविना किसीऔर भक्तने कभीभी नहींदेखाहै ४७

नवेदयज्ञाध्ययनैर्नदानैर्नचक्रियाभिर्नतपोभिरुग्रैः एवंरूपःशक्योऽहंनृलोके द्रष्टुंत्वदन्येनकुरुप्रवीर ४८ मातेव्यथामाचविमूढभावो दृष्ट्वारूपंघोरमीदृक्ममेदं व्यपेतभीःप्रीतमनाःपुनस्त्वंतदेवमेरूपमिदंप्रपश्य ४९

## शाङ्करभाष्यं।

केद्रष्टुंत्वदन्येनकुरुप्रवीर ४८ मातेव्यथेति मातेव्यथामाभूत्तेभयं माचविमूढभावो विमूढचित्तता दृष्ट्वोपलभ्यरूपंघोरमीदृक्यथावदृर्शितंममेदंव्यपेतभीर्व्विगतभयःप्रीतमनाश्चसन्पुनर्भूयस्त्वंतदेवचतुर्भुजंरूपंशङ्खचक्रगदाधरंतवेष्टंरूपमिदंप्रपश्य४९

## आनन्दगिरिकृतटीका

तच्छब्देनप्रकृतंदर्शनंपरामृश्यते वेदाध्ययनात्पृथक्यज्ञाध्ययनग्रहणंपुनरुक्तिरयुक्तमित्याशंक्याह नवेदेति नचवेदाध्ययनग्रहणादेव यज्ञविज्ञानमपिगृहीतमध्ययनस्यार्थावबोधान्तत्वादिति वाच्यंतस्यान्तरग्रहणान्ततयावृद्धैःसाधितत्वादिति भावः श्लोकपूरणार्थमसंहितकरणं त्वत्तोन्येनमदनुग्रहविहीनेनेति शेषः ४८

## स्वामीकृतटीका

एतद्दर्शनमतिदुर्लभंलब्ध्वात्त्वंकृतार्थोऽसीत्याह नवेदेति वेदाध्ययनव्यतिरेकेण यज्ञाध्ययनस्याभावात्यज्ञशब्देनयज्ञविद्याःकल्पसूत्राद्यालक्ष्यन्ते वेदानांयज्ञविद्यानाञ्चाध्ययनैरित्यर्थः नचदानैःनचक्रियाभिरग्निहोत्रादिभिर्नचोग्रैस्तपोभिश्चान्द्रायणादिभिरेवंरूपोऽहंत्वत्तोऽन्येनमनुष्यलोकेद्रष्टुंशक्यःअपितुत्वमेवकेवलंमत्प्रसादेन दृष्ट्वाकृतार्थोऽसि ४८ एवमपिचेत्तवेदंघोरंरूपंदृष्ट्वाव्यथाभवतितर्हितद्देवरूपंद

## भाषा अनुवाद

औरयहअति दुर्लभदर्शनपायके तुमअबकृतार्थभयेहो सोईकहतेहैं किनवेदअध्ययनसे नयज्ञअध्ययनकहेयज्ञविद्याजोकल्पसूत्रआदिकर्मकाण्डकेअर्थसंग्रह कियेग्रन्थ तिनसेअर्थात्नयज्ञविद्याध्यायनसेऔरनदानसे नअग्निहोत्रआदिक्रियोंसे नचान्द्रायणआदिउग्रकहेकठिनतपस्योंकेद्वारा यहमेरारूप नरलोकमेंदेखनेकोशक्यहै सोहेकुरुप्रवीरअर्जुन तुमकोछोडिऔरकोईनहींनृलोकमें इसरूपको देखशकाहै सोतुममेरेअनुग्रहसे इसमेरेरूपकादर्शनकरि अपनेको कृतार्थभये जानो ४८ जोऐसाघोरभयानकरूपदेखि तुमकोत्रासहोताहै तोजिसमे तुमे मेरारूपदेखिव्यथाऔमूढतानहोय इससेअबतुमविगतभय प्रसन्नचित्तहोय फेरि हमारासोईवहपूर्वरूप जोदेखाचाहतेहौ सोदेखौ यहभगवाननेकहा४९

सञ्जयउवाच इत्यर्जुनंवासुदेवस्तथोक्त्वा स्वकंरूपंदर्शयामासभूयः आश्वासयामासचभीतमेनं भूत्वापुनःसौम्यवपुर्महात्मा ५० अर्जुनउवाच दृष्ट्वेदंमानुषंरूपं तवसौम्यंजनार्दन इदानीमस्मिसंवृत्तः सचेताःप्रकृतिंगतः ५१

शाङ्करभाष्यं

इत्यर्जुनमिति इत्येवमर्जुनंप्रतिवासुदेवस्तथाभूतंवचनंउक्त्वास्वकंवसुदेवगृहेजातंरूपंदर्शयामासदर्शितवान् भूयःपुनराश्वासयामासचाश्वासितवान् भीतमेनंभूत्वापुनःसौम्यवपुःप्रसन्नदेहोमहात्मा ५० दृष्ट्वेदमिति दृष्ट्वेदंमानुषंरूपंमत्सखंप्रसन्नंभवसौम्यं जनार्दनेत्यर्दतेर्गतिकर्मणोऽसुराणां देवप्रतिपक्षजनानां प्राणवियोगजनरकाद्यर्थप्रयोजनंसर्व्वैर्जनैर्याच्यत इतिवागमयितृत्वाञ्चजनार्दनः अभ्युदयनिःश्रेयसपुरुषार्थायइदानीमधुनास्मिसंवृत्तःसंजातःसचेताः किंप्रसन्नचित्तःप्रकृतिंस्वभावंगतश्चास्मि ५१

आनन्दगिरिकृतटीका।

विश्वरूपदर्शनमेवंस्तुत्वायद्यस्मादृश्यमानाद्बिभेषि तर्हितदुपसंहरामीत्याह मातेव्यथेति वञ्चितयमनुभूतत्वमभिप्रेत्य तदेवेत्युक्तं इदमिति ४९

प्रत्यक्षयोग्यत्वंतदिदंवृत्तंराज्ञेसूतोनिवेदितवानित्याह सञ्जयइति तथाभूतंवचनंमयाप्रसन्नेनेत्यादिचतुर्भुजंरूपंकिंतत्स्वरूपस्यपरिचितपूर्वस्यप्रदर्शनेनप्रसन्नदेहत्वेनचार्जुनंप्रत्याश्वासनंभगवतोयुक्तमित्यत्रहेतुमाह महात्मेति ५० एवंभगवदाश्वासितःसन्नर्जुनस्तंप्रत्युक्तवानित्याह अर्जुनइति ५१

स्वामिकृतटीका।

र्शयामीत्याह मा तेइति ईदृक्ईदृशंघोरंमदीयंरूपंदृष्ट्वातेव्यथामास्तुविमूढभावोविमूढत्वञ्चमास्तुविगतभयःप्रीतमनाश्चसन्पुनस्त्वं तदेवेदंममरूपं प्रकर्षेणपश्य ४९
एवमुक्त्वाप्राक्तनमेवरूपंदर्शितवानिति सञ्जयउवाच इतीति वासुदेवोऽर्जुनमित्युक्त्वा यथापूर्व्वमासीत्तथैव किरीटगदादियुक्तं चतुर्भुजं स्वीयंरूपं पुनर्दर्शयामास

भाषाअनुवाद

ऐसेवचनकहिकर भगवानने अर्जुनकोवहीपूर्व्वरूपअपनादेखाया यह सञ्जयधृतराष्ट्रसेकहतेहैं किमहात्मावासुदेवश्रीकृष्णजीनेअर्जुनकोसोईचतुर्भुजकिरीटधारीअपनाशान्तस्वरूपफेरिदेखाया औरडरेभयेअर्जुनकोआश्वासदिया ५० तिसकेअनन्तरनिर्भयहोयअर्जुननेकहा किहेजनार्दन तुमारायहशान्तमनुष्यस्वरूपदेखि मैंअवप्रसन्नचित्तऔसावधानभयाहौं अवमेरेजीसेभयदूरभई ५१

श्रीभगवानुवाच सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ५२ नाहं वेदैर्न तपसा न दानेन न चेज्यया शक्य एवंविधो द्रष्टुं दृष्टवानसि यन्मम ५३ भक्त्या त्वनन्यया शक्यो अहमेवंविधोऽर्जुन ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं

## शाङ्करभाष्यं

सुदुर्दर्शमिति सुदुर्दर्शं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम देवा अप्यस्य मम रूपस्य नित्यं सर्व्वदा दर्शनाकांक्षिणो दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्तो न द्रक्ष्यन्ति चेत्यभिप्रायः ५२ कस्मात् नाहमिति नाहं वेदैः ऋग्यजुःसामाथर्व्ववेदैश्चतुर्भिरपि न तपसोग्रेण चान्द्रायणादिना न दानेन गोभूहिरण्यादिना न चेज्यया यज्ञेन पूजया वा शक्य एवंविधो यथादर्शितप्रकारो द्रष्टुमन्यैरशक्यो दृष्टवानसि मां यथा त्वं ५३ कथं पुनः शक्य इत्युच्यते भक्तेति भक्त्या तु किंविशिष्टयेत्याह अनन्यया अपृथग्भूतया भगवतोऽन्यत्र पृथक् न कदाचिदपि भवति सा त्वनन्या भक्तिः सर्व्वैरपि करणैर्वासुदेवादन्यन्न लभ्य

## आनन्दगिरिकृतटीका

उपास्यत्वाय विश्वरूपं स्तोतुं भगवदुक्तिमुत्थापयति भगवानिति त्वद्व्यतिरिक्तानामिदं रूपं द्रष्टुमशक्यमित्येतद्विशदयति देवा अपीति ५२ दर्शनोपायाभावात् दुर्दर्शत्वमिति तर्हि दर्शनायोग्यत्वात् द्रष्टुमशक्यत्वमित्याशंक्याह दृष्टवानिति ५३

## स्वामिकृतटीका

एनमर्जुनं भीतमेवं प्रसन्नवपुर्भूत्वा पुनराश्वासितवान् महात्मा विश्वरूपः कृपालुरिति वा ५० ततो निर्भयः सन्नर्जुन उवाच दृष्ट्वेदमिति सचेताः प्रसन्नचित्त इदानीं संवृत्तो जातोऽस्मि प्रकृतिं स्वास्थ्यञ्च प्राप्तोऽस्मि शेषं स्पष्टं ५१ स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन् श्रीभगवानुवाच सुदुर्दर्शमिति यन्मम विश्वरूपं दृष्टवानसि इदं सुदुर्दर्शमत्यन्तं द्रष्टुमशक्यं अतो देवा अप्यस्य रूपस्य नित्यं सर्व्वदा दर्शनमिच्छन्ति केवलं न पुनरिदं पश्यन्ति ५२ तत्र हेतुमाह नाहमिति स्पष्टार्थं ५३ तर्हि केनो

## भाषा अनुवाद

तिसके बाद भगवान् अपनी कृपा की दुर्लभता देखावते हैं कि जो यह हमारा विश्वरूप स्वरूप तुमने देखा इसका दर्शन अति दुर्लभ है देखो देवतागण भी इस रूप के दर्शन की इच्छा सर्वदा करते हैं परन्तु इसका दर्शन नहीं पावते हैं ५२ उस अपने रूप के दुर्लभ दर्शन मे कारण कहते हैं कि तुमने जो रूप मेरा देखा वह वेद अध्ययन औ तपस्या या दान यज्ञ के द्वारा किसी को देखने की सामर्थ्य नहीं है ५३ तो फेरि कौन उपाय से आप

न्त्वपरन्तप ५४ मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः निर्वैरः सर्वभूतेषु

शाङ्करभाष्यं ।

तेयया सानन्याभक्तिस्तयाशक्योहमेवंविधोविश्वरूपप्रकारो हेअर्ज्जुनज्ञातुं शास्त्रतो नकेवलंज्ञातुंशास्त्रतोद्रष्टुञ्च साक्षात्कर्त्तुं तत्वेनतत्त्वतःप्रवेष्टुञ्चमोक्षञ्चगन्तुंपर न्तप ५४ अधुनासर्वस्यगीताशास्त्रस्यसारभूतोऽर्थोनिःश्रेयसार्थोनुष्ठेयत्वेनसमुच्चि त्योच्यते मत्कर्मकृदिति मत्कर्मकृन्मदर्थंकर्ममत्कर्मतत्करोतीति मत्कर्मकृत् मत्परमःकरोतिभृत्यःस्वामिकर्म नत्वात्मनः परमाप्रेत्यगन्तव्यागतिरिति स्वामिनं प्रतिपद्यते अयन्तुमत्कर्मकृन्मामेवपरमांगतिंप्रतिपद्यतइतिमत्परमोऽहंपरमःप रागतिर्यस्य सोयंमत्परमःतथामद्भक्तःमामेवसर्वप्रकारैःसर्वात्मनासर्वोत्साहेन भज तइतिमद्भक्तःसङ्गवर्जितःधनमित्रपुत्रकलत्रबन्धुवर्गेषुसङ्गवर्जितःसङ्गःप्रीतिः स्नेहव र्जितोनिर्वैरोनिर्गतवैरःअतःसर्वभूतेषुशत्रुभावरहितःआत्मनोऽत्यन्तापकारप्रवृत्ते ष्वपियईदृशोमद्भक्तः स मामेत्यहमेव तस्यपरागतिर्नान्या कदाचिद्भवतीति ५५

इतिएकादशोध्यायः ११

आनन्दगिरिकृतटीका

केनोपायेनतर्हिद्रष्टुंशक्योभगवानिति पृच्छति कथमिति शास्त्रीयज्ञानद्वारा तद्दर्शनंसफलंसिद्धप्रतीत्याह उच्यतइति नभक्तिमात्रंतत्रहेतुरिति तुशब्दार्थंस्फुट यति किमित्यादिना अनन्यभक्तिमेवव्यनक्ति सर्वैरिति ५४

भक्त्यात्विति विशेषणादन्येषामहेतुत्वमाशंक्याह अधुनेति समुच्चित्यसंक्षिप्य पुञ्जीकृत्येति यावत् मत्कर्मकृदित्युक्तेमत्परमत्वंआर्थिकं इतिपुनरुक्तिरित्याशंक्याह

स्वामिकृतटीका ।

मायेनद्रष्टुंशक्यसेतत्राह भक्त्यात्विति अनन्ययामदेकनिष्ठयाभक्त्यातुएवंभूतोविश्वरू पोऽहंतत्वेनपरमार्थतोज्ञातुंशक्यःशास्त्रतोद्रष्टुंप्रत्यक्षतःप्रवेष्टुञ्च तादात्म्येन शक्योना न्यैरुपायैः ५४ अतःसर्वशास्त्रार्थसारंपरमरहस्यंसंक्षिप्याह मत्कर्मकृदिति

भाषाअनुवाद

दर्शनदेशकतेहो जोयहकहोतोकहतेहैं किहेअर्जुन अनन्यकहेमदेकचित्तभक्ति हीकेद्वारा ऐसेविश्वरूपसेहमप्रगटहोशकतेहैं औरवहभक्तभीहमें जानिशकेहै औरहेपरन्तपअर्जुन शास्त्रसेप्रत्यक्षऔतदात्मरूपप्रवेशअर्थात् उसरूपमेंलीन हमक राय शकतेहैं औरकोईभीउपाय नहींहै यहतुमनिश्चयसेजानो ५४

यः समामेति पाण्डव ५५ इति श्रीमद्भगवद्गीतासूपनिषत्सु श्रीकृष्णार्जुनसम्वादे विश्वरूपदर्शनो नामैकादशोऽध्यायः ११

## आनन्दगिरिकृतटीका।

करोतीति भगवानेव परमागतिरिति निश्चयवतस्तन्नैवनिष्ठासिध्यतीत्याह तथेति नतत्रैवसर्वप्रकारैर्भजनं धनादिस्नेहाद्युत्वादित्याशंक्याह सङ्गेति द्वेषपूर्वकानिष्टाचरणंवैरं अनपकारिषुतदभावेपिभवत्येवापकारिष्विति शङ्कित्वाह आत्मनइति एतच्च सर्वं संक्षिप्यानुष्ठानार्थमुक्तमेवरूनुतिष्ठतोभगवत्प्राप्तिरवश्यम्भाविनीत्युपसंहरति अयमिति तदेवंभगवतोविश्वरूपस्यसर्वात्मनःसर्वज्ञस्य सर्वेश्वरस्यमत्कर्मकृदित्यादि न्यायेन क्रममुक्तिफलमभिध्यानमभिवदता तत्पदवाच्योऽर्थो व्यवस्थापितः ५५

इति आनन्दगिरिकृतटीकायांएकादशोध्यायः ११

## स्वामिकृतटीका

मदर्थंकर्म करोतीति मत्कर्मकृत् अहमेवपरमःपुरुषार्थोयस्यसः ममैवभक्तःआश्रितः पुत्रादिषुसङ्गवर्जितःनिर्वैरश्चसर्वभूतेषुएवम्भूतोयःसमांप्राप्नोतिनान्यःइति देवैरपि सुदुर्दर्शं तपोयज्ञादिकोटिभिः भक्ताय भगवानेवंविश्वरूपमदर्शयत् ५५

इति श्रीधरस्वामिकृतटीकायां एकादशोध्यायः ११

## भाषाअनुवाद

अवशास्त्रकेअर्थकासारांशपरमरहस्यकहतेहैं किहेपाण्डव मत्कर्मकृतकहे मेरीप्रीतिकेअर्थजोकर्म करै है और मत्परमकहेमहीं हौ परम प्रयोजन जिसको श्रीमद्भक्त कहेमेरेआश्रित यथापुत्रस्त्रीधनमें आशक्तिहीन और भूतकहेप्राणिमात्रमें वैररहितजोहैं सोई हमकोप्राप्तहोतेहैं ५५

इति श्रीजगन्नाथशुक्लविरचितायां मनभावनीटीकायां एकादशोऽध्यायः ११

द्वादशअध्यायः।

## शाङ्करभाष्यं।

द्वितीयप्रभृतिष्वध्यायेषु विभूत्यन्तेषु परमात्मनोब्रह्मणोऽक्षरस्यविध्वस्तसर्व्वविशेषणस्योपासनमुक्तं सर्व्वयोगैश्वर्य्यसर्व्वज्ञानशक्तिमत्सत्वोपाधेरीश्वरस्यतवचोपासनंतत्रतत्रोक्तंविश्वरूपाध्यायेतुऐश्वरमाद्यंसमस्तजगदात्मरूपं विश्वरूपं त्वदीयंदर्शितमुपासनार्थमेवत्वया तच्चदर्शयित्वोक्तवानसि मत्कर्म्मकृदित्याद्यतोऽहमनयोःरुभयोःपक्षयोर्व्विशिष्टतरबुभुत्सयात्वांपृच्छामीतिअर्जुनउवाच एवमिति एवंसततयुक्तानैरन्तर्य्येणभगवत्कर्मादौयथोक्तेर्थेसमाहिताःसन्तःप्रवृत्ताइत्यर्थः येभक्ताःअनन्यशरणाःसन्तस्त्वांयथादर्शितम्विश्वरूपम्पर्युपासतेध्यायन्ति येचाप्यक्षरमिति येचान्येपित्यक्तसर्व्वैषणाःसन्न्यस्तसर्व्वकर्म्माणोयथाविशेषितंब्रह्माक्षरं निरस्तसर्व्वोपाधित्वादव्यक्तमकरणगोचरंयद्धिलोकेकरणगोचरन्तद्व्यक्तमुच्यते अव्ये धातोस्तत्कर्म्मकत्वादिदंत्वक्षरंतद्विपरीतंशिष्टैश्चोच्यमानैर्व्विशेषणैर्व्विशिष्टंतद्येचाप्युपासतेतेषामुभयेषांमध्येकेयोगवित्तमाःकेअतिशयेनयोगविदइत्यर्थः १

## आनन्दगिरिकृतटीका।

अशोच्यानित्यादिषुविभूत्यध्यायावसानेषु अध्यायेषु निरुपाधिकस्यब्रह्मणोज्ञेयत्वेनानुसन्धानमुक्तमितिवृत्तंकीर्त्तयति द्वितीयेति अतिक्रान्तेषु तत्तदध्यायेषु सोपाधिकस्यब्रह्मणोध्येयत्वेनप्रतिपादनंकृतमित्याह सर्व्वेति सर्व्वस्यापिप्रपञ्चस्ययोगोघटनाजन्मस्थितिभङ्गप्रवेशनियमनाख्यातत्रैश्वर्य्यंसामर्थ्यं तेनसर्व्वत्रज्ञेयेप्रतिबन्धविधुरयाज्ञानशक्त्याविशिष्टस्यसत्त्वाद्युपहितस्यभगवतोध्यानंतत्रतत्रप्रसङ्गमापद्यमन्दमध्यमयोरनुग्रहार्थमुक्तमित्यर्थःएकादशेवृत्तमनुद्रवति विश्वरूपेति अध्यायान्तेभगवदुपदेशमनुवदति तच्चेति अतीतानन्तरश्लोकेनोक्तमर्थम्परामृशतिमत्कर्म्मकृदितियथाधिकारंतारतम्योपेतानिसाधनानिनियन्तुमध्यायान्तरमवतारयन्नादौप्रश्नमुत्थापयति अतइति सोपाधिकध्यानस्यनिरुपाधिकज्ञानस्यचोक्तत्वादित्यर्थःएवंशब्दार्थमुक्त्वातमनूद्यसततयुक्ताइतिभागंविभजते एवमिति येभक्ताइत्यनूद्यव्याचष्टे अनन्येति मन्दमध्यमाधिकारिणःसगुणशरणानुक्त्वा निर्गुणनिष्ठानुत्तमाधिकारिणोनिर्द्दिशति येचेति यथाविशेषितमनिर्देश्यंसर्व्वत्रगमचिन्त्यंच कूटस्थमित्यादिवक्ष्यमाणविशेषणविशिष्टमित्यर्थः नक्षरत्यश्नुतेवेत्यक्षरं अव्यक्तमित्येतद्व्याचष्टे निरस्तेति करणागोचरत्वंव्यतिरेकद्वारास्फोरयतिय द्धीति यथाविशेषितमित्युक्तंस्पष्टयति शिष्टैश्चेति पू

अर्ज्जुनउवाच एवंसततयुक्तायेभक्तास्त्वांपर्य्युपासते येचाप्यक्षरमव्यक्तंतेषांके योगवित्तमाः १ श्रीभगवानुवाच मय्यावेश्यमनोयेमांनित्ययुक्ताउपासते श्रद्धया

## शाङ्करभाष्यं ।

श्रीभगवानुवाच येत्वक्षरोपासकाः सम्यग्दर्शिनोनिवृत्तैपणास्तेतावत्तिष्ठन्तु तान्प्रतियद्वक्तव्यंतदुपरिष्टाद्वक्ष्यामः येत्वितरे मयीति मयिविश्वरूपे परमेश्वरेआ वेश्यसमाधायमनःयेभक्ताःसन्तोमांसर्वयोगेश्वराणामधीश्वरंसर्वज्ञंविमुक्तरागादिक्ले शतिमिरदृष्टिंनित्ययुक्ताअतीतानन्तराध्यायान्तोक्तश्लोकार्थन्यायेनसततयुक्ताःसन्त उपासतेश्रद्धयापरयाप्रकृष्टयाउपेताःमेसममताःअभिप्रेतायुक्ततमाइति नैरन्तर्य्येण हितेमच्चित्ततयाऽहोरात्रमतिवाहयन्ति अतोयुक्तं तान्प्रतियुक्ततमाइतिवक्तुं २

## आनन्दगिरिकृतटीका

व्रीडिंगतक्रियापदस्यानुषङ्गंसूचयति तदिति सर्व्वैतावदेतेयोगंसमाधिंविन्दन्तीति योगविदः केपुनरतिशयेनैषांमध्येयोगविदोयोगिनइतिपृच्छति केअतिशयेनेति १

## स्वामिकृतटीका ।

निर्गुणोपासनस्यैवंसगुणोपासनस्यचश्रेयःकतरदित्येतन्निर्णेतुंद्वादशोध्यायः पूर्व्वाध्यायान्तेमत्कर्मकृन्मत्परमोमद्भक्तइत्येवंभक्तिनिष्ठस्यश्रेष्ठत्वमुक्तंकौन्तेयप्रति जानीहीत्यादिनाचतत्रतत्रतस्यैवश्रेष्ठत्वंनिर्णीतंतथातेषांज्ञानीनित्ययुक्त एकभक्तिर्वि शिष्यतइत्यादिनासर्व्वंज्ञानप्लवेनैववृजिनंसंतरिष्यसीत्यादिनाचज्ञाननिष्ठस्यश्रेष्ठमुक्तं एवमुभयोःश्रेष्ठेविशेषजिज्ञासयाभगवन्तमर्जुनउवाच एवमिति एवंसर्व्वकर्मार्पणा दिनासततयुक्तास्तन्निष्ठाःसन्तोयेभक्तास्त्वांविश्वरूपंसर्व्वज्ञंसर्व्वशक्तिंपर्युपासते ध्याय न्ति येचाप्यक्षरंब्रह्मअव्यक्तंनिर्विशेषमुपासते तेषामुभयेषांमध्येकेऽतिशयेनयोगवि

## भाषाअनुवाद

एकादशअध्यायकेअन्तिमश्लोकसेऔनवमअध्यायकेएकतिसश्लोकादिसेभीसगु णभगवद्भक्तहीकोश्रेष्ठकहाऔरतेषांज्ञानीनित्ययुक्तएकभक्तिर्विशिष्यतेंइत्यादिसप्तम अध्यायकेसत्रहेंश्लोकसे औसर्वंज्ञानप्लवेनैववृजिनंसन्तरिष्यसिइत्यादिचतुर्थअध्याय केछत्तिसश्लोकादिसेभीज्ञानीहींकोश्रेष्ठकहासोसगुणनिर्गुण उपासनासेकौनउत्तम नाश्रेयहै अर्थात्जोभक्तसर्वज्ञविश्वरूपसर्वशक्तिमानरूप तुमकोध्यानकरताहै सो कि जोअव्यक्तऔनिर्विशेषअविनाशीब्रह्मकीउपासनाकरताहै सोइनदोनोंकेमध्यमे कौनभक्तअतिशययोगवित् अर्थात्श्रेष्ठहै यहअर्जुनभगवानसे पूछतेभये १

पर्य्युपेतास्तेमेयुक्ततमोमताः २ येत्वक्षरमनिर्देश्यमव्यक्तंपर्य्युपासते सर्व्वत्रग

## शाङ्करभाष्यं।

किमितरेयुक्ततमानभवन्तिनकिन्तुतान्प्रतियद्वक्तव्यन्तत्शृणुयेतुअक्षरमनिर्देश्य मव्यक्तत्वादशब्दगोचरमितिनिर्देष्टं शक्यते अतोऽनिर्देश्यमव्यक्तं नकेनापि प्रमा णेनव्यज्यतइत्यव्यक्तं पर्युपासतेपरिसमन्तादुपासतेउपासनंनामयथाशास्त्रमुपास्या र्थस्यविषयीकरणेनसामीप्यमुपगम्यतैलधारावत्समानप्रत्ययप्रवाहेनदीर्घकालं यदा सनन्तदुपासनमाचक्षतेअक्षरस्यविशेषणमाह सर्व्वत्रगंव्योमवद्व्याप्यचिन्त्यंचाव्यक्तत्वा दचिन्त्यं यद्धिकरणगोचरंतन्मनसापिचिन्त्यंतद्विपरीतत्वादचिन्त्यमक्षरंकूटस्थं दृश्य

## आनन्दगिरिकृतटीका

किमनयोर्योगयोर्मध्येसुशकोयोयोगोवाऽच्छति किम्वासाक्षान्मोक्षहेतुरितिवि कल्पप्रक्रमेणोत्तरंभगवानुक्तवानित्याह श्रीभगवानिति यद्द्वितीयस्तथाविधयोग स्यवक्ष्यमाणत्वात् प्रष्टव्यतेत्याह येत्वक्षरेति यद्याद्यस्तत्राह येत्विति सर्व्वयोगेश्वरा णांसर्व्वेषांयोगमधितिष्ठतांयोगिनामित्यर्थः विमुक्तात्यक्तारागाद्याख्याक्लेशनिमित्त भूतातिमिरशब्दितानाद्यज्ञानकृताद्दृष्टिरविद्यामिथ्याधीर्य्यस्यतमितिविशिनष्टि वि मुक्तेति नित्ययुक्तत्वंसाधयति अतीतेति तल्लोक्तोयोर्थोमत्कर्मकृदित्यादितस्मिन्नि श्चयेनापनयोगमनन्तस्यनियमेनानुष्ठानंतेनेत्यर्थः उपासते मयिस्मृतिंसदाकुर्व्वन्ती त्यर्थःभक्तोपासकानांयुक्ततमत्वंव्यनक्तिनैरन्तर्येणेति तदेवस्फुटयति अहोरात्रमिति अह्निचरात्रौचातिमात्रमतिशयेनमामेवविषयान्तरविमुखाश्चिन्तयन्तीत्यर्थः २

## स्वामिकृतटीका।

दोऽतिश्रेष्ठाइत्यर्थः १ तत्रप्रथमाःश्रेष्ठाइत्युत्तरं श्रीभगवानुवाच मयीति मयिपर मेश्वरेसर्व्वज्ञत्वादिगुणविशिष्टेमनआवेश्य एकाग्रंकृत्वानित्ययुक्तामदर्थकर्मानुष्ठाना दिनामन्निष्ठाःसन्तःश्रेष्ठयाश्रद्धयायुक्तायेमामाराधयन्तितेयुक्ततमाममाभिमताः २

## भाषाअनुवाद।

तिनदोनोकेबीचमेंसगुणउपासनासुखसाध्यहै इसहेतुसेभगवानसगुणउपासक भक्तकोश्रेष्ठकहतेउ येउत्तरदेतेहैं किसर्व्वज्ञत्वआदिगुणविशिष्टपरमेश्वरस्वरूप मेरेमेमनकोएकाग्रकरिकेश्रद्धापूर्व्वकमत्प्रीत्यर्थकर्मअनुष्ठानकरनेसेमेरेमेंनिष्टकहे युक्तहोयजोहमारीआराधनाकरताहै सोईहमारेमतसेयुक्ततमकहेअतिश्रेष्ठहै सोतुमतत्प्रीत्यर्थकर्मकरो २ औरअक्षरब्रह्मका लक्षणऔस्वरूपकहतेहैंकिब्रह्म

मचिन्त्यञ्चकूटस्थमचलंध्रुवं ३ सन्नियम्येन्द्रियग्रामंसर्व्वत्रसमबुद्धयः तेप्राप्नुवन्ति

## शाङ्करभाष्यं

मानगुणमन्तर्दोषंवस्तुकूटरूपंकूटसाच्यमित्यादौकूटशब्दःप्रसिद्धोलोके तथा चावि द्याद्यनेकसंसारवीजमन्तर्दोषंमायाव्याकृत्यादिशब्दवाच्यतयामायान्तुप्रकृतिंविद्यान्मा यिनन्तुमहेश्वरंममामायादुरत्ययेत्यादौप्रसिद्धंयत्तत्कूटंतस्मिन्कूटेस्थितं तदध्यक्षत या अथवाराशिरिवस्थितंकूटस्थमतएवाचलंयस्मादचलंतस्मात्ध्रुवंनित्यमित्यर्थः ३

## आनन्दगिरिकृतटीका

वक्ष्यामस्तदुपरिष्टादित्युक्तंप्रश्नपूर्व्वकंप्रकटयति किमित्यादिना पूर्व्वेभ्यःफलतो विशेषार्थस्तुशब्दः अव्यक्तत्वमनिर्देश्यत्वेहेतुरित्याह अव्यक्तत्वादिति यतोऽव्यक्त मतोऽनिर्देश्यमिति योजना निरुपाधिकेऽक्षरेकथमुपासनेति पृच्छतिउपासनमिति शास्त्रतोऽक्षरंज्ञात्वातदुपेत्यात्मत्वेनोपगम्योपासतेतथैवतिष्ठन्तिपूर्णोऽहंदेकतानमक्ष रमात्मानमेवसदाभावयन्तीत्येतदिहविवक्षितमित्याह यथेति अव्यक्तत्वमेवाचिन्त्य त्वेपिहेतुरित्याह यद्धीतिकूटस्थशब्दस्योरार्थत्वंदृष्टप्रयोगतःसाधयति कूटरूपमिति आदिपदमनृतार्थःप्रकृतेकिन्तदनृतंकूटशब्दितमित्याह तथाचेतिउक्तनीत्याकूटशब्द स्यानृतार्थत्वेयदनेकस्यसंसारस्यवीजन्निरूप्यमाणंनानाविधदोषोपेतंतद्धीदं तच्चव्या कृतंमायान्तुप्रकृतिंममामायेत्यादौमायाशब्दिततयाप्रसिद्धमविद्यादितदिह कूटशब्दि तमित्यर्थः तत्रावस्थानंकेनरूपेणेत्याशङ्कायामाह तदध्यक्षतयेति कूटस्थशब्दस्यनिःक्रि यत्वमर्थान्तरमाह अथवेतिपूर्व्वमुपजीव्यानन्तरविशेषणद्वयप्रवृत्तिमाह अतएवेति ३

## स्वामिकृतटीका।

तर्हीतरेकिंनश्रेष्ठाइत्यतआह येत्वितिद्वाभ्यां येत्वक्षरंपर्य्युपासतेध्यायन्ति तेऽपि मामेवप्राप्नुवन्तीतिद्वयोरन्वयः अक्षरस्यलक्षणमनिर्देश्यमित्यादि अनिर्देश्यशब्देन निर्देष्टुमशक्यंयतोऽव्यक्तंरूपादिहीनंसर्व्वत्रगंसर्व्वव्यापिअव्यक्तत्वादेवाचिन्त्यं कूटस्थं कूटेमायाप्रपञ्चेऽधिष्ठानत्वेनावस्थितंअचलंस्पन्दनरहितंअतएवध्रुवंनित्यं वृद्ध्यादिर हितंस्पष्टमन्यत् ३ ननुतेपित्वामेवप्राप्नुवन्ति तर्हीतरेषां युक्ततमत्वं कुत

## भाषा अनुवाद

अनिर्देश्य अर्थात् यह है ऐसा है इसकहनेके अयोग्य है क्योंकि अव्यक्त कहे रूपादि रहित है औ सर्वव्यापी तथा निराकार है तुसे अचिन्त्य औ कूटस्थ अर्थात् कूट जो माया प्रपञ्च ब्रह्माण्ड तिसका अधिष्ठान कहे आश्रयरूप स्थित है औ अचल कहे व्यापार रहि त तथा ध्रुव कहे अचल नित्य हानि वृद्धि शून्य है तीन चारि के श्लोक का अर्थ एक साथ है ३

मामेवसर्वभूतहितेरताः ४ क्लेशोधिकतरस्तेषामव्यक्तासक्तचेतसाम् अव्यक्ता

शाङ्करभाष्यं

संनियम्येति संनियम्यसम्यक्नियम्यसंहृत्यइन्द्रियग्राममिन्द्रियसमुदायंसर्वत्रसर्वस्मि न्कालेसमबुद्धयःसमातुल्याबुद्धिर्येषामिष्टानिष्टप्राप्तौतेसमबुद्धयःतेयेएवंविधास्ते प्रा प्नुवन्तिमामेवसर्वभूतहितेरताः नतेषांवक्तव्यंकिञ्चित् मांतेप्राप्नुवन्तीति ज्ञानीत्वा त्मैवमेमतमित्युक्तत्वात् नहिभगवत्स्वरूपाणांसतांयुक्ततमायुक्ततमत्वंवा वाच्यं ४

किन्तुक्लेशोधिकतरोयद्यपिसत्कर्मादिपराणांक्लेशोधिकतरस्त्वक्षरात्मनांपर मार्थदर्शिनांनेहाभिमानापरित्यागनिमित्तःअव्यक्तासक्तचेतसामव्यक्तेआसक्तंचित्तं येषां तेअव्यक्तासक्तचेतसस्तेषांअव्यक्तासक्तचेतसां अव्यक्ताहियस्मात्गतिरक्षरा त्मिका दुःखंदेहवद्भिर्देहाभिमानवद्भिरवाप्यते अतःक्लेशोधिकतरः ५

आनन्दगिरिकृतटीका

कथमक्षरमुपासतेतदुपासनेवाकिंस्यादितितदाह सन्नियम्येति तुल्याहर्षविषा दरागद्वेषादिरहितासम्यक् ज्ञानेनाज्ञानस्यापनीतत्वात्परम्परापेक्षयोरसम्भवस्वि वक्षित्वाह तेयइति सर्वेभ्योभूतेभ्योहितमेवचिन्तयन्तस्तदेवाचरन्तिज्ञानवतां यथा ज्ञानस्यभगवत्प्राप्तेर्यसिद्धत्वादनुवादमात्रमित्याह नत्विति ज्ञानिनोभगवत्प्राप्तिः सिद्धैवेत्यत्रप्रमाणमाह ज्ञानीत्विति ज्ञानवतांभगवत्प्राप्तौतएवयुक्ततमावक्तव्याःकथं सगुणब्रह्मोपासकान्युक्ततमानुक्तवानसीत्याशंक्याह नहीति ४ सगुणोपासके ष्वपिकथमित्याह किन्त्विति अक्षरोपासनस्यदुष्करत्वादुपासनान्तरस्यसुकरत्वादि त्यभिप्रेत्याह क्लेशइति अधिकएवेतरेभ्योद्वैतदर्शिभ्यःकामिभ्यइतिशेषः तेषांक्लेशस्या

स्वामिकृतटीका।

इत्यपेक्षायांक्लेशाक्लेशकृतंविशेषमाह क्लेशइतित्रिभिः अव्यक्तेनिर्विशेषेऽक्षरेआसक्तं चेतोयेषांतेषांक्लेशोधिकतरः हियस्मादव्यक्तविषयागतिर्निष्ठादेहाभिमानिभिर्दुः खंयथाभवतिएवमवाप्यतेदेहाभिमानिनांनित्यंप्रत्यक्प्रवणत्वस्यदुर्घटत्वादितिभावः५

भाषा अनुवाद

जोनिर्गुणकेउपासकोंकोक्लेशअधिकहैतोफेरिक्यानिर्गुणकेउपासकश्रेष्ठनहींहैं इसशंकापरदोश्लोककहतेहैं किजोसमदर्शी जन इन्द्रियगणकोअपनेवशीभूतक रके अक्षरकहेअविनाशीब्रह्मकाध्यानकरतेहैं सोसकलभूतोंकेहितकारीनिर्गुण उपासकमनुष्यभी हमकोप्राप्तहोतेहैं ४ जोनिर्गुणोपासकभी तुमकोप्राप्तहोतेहैं

हिगतिर्दुःखंदेहवद्भिरवाप्यते ५ येतुसर्व्वाणिकर्माणिमयिसंन्यस्यमत्पराः अन
न्येनैवयोगेनमांध्यायन्तउपासते ६ तेषामहंसमुद्धर्त्तामृत्युसंसारसागरात् भवामि

## शाङ्करभाष्यं।

अक्षरोपासकानांयद्वर्त्तनंतदुपरिष्टाद्वक्ष्यामः येत्विति येतुसर्व्वाणिकर्माणिमयीश्वरे
संन्यस्यमत्पराअहंपरोयेषांते मत्पराःसन्तःअनन्येनैवअविद्यमानमन्यदालम्बनंवि
श्वरूपंदेवमात्मानंमुक्त्वायस्यसोनन्यस्तेनानन्येनैवकेवलेनयोगेन समाधिनामांध्याय
न्तश्चिन्तयन्तउपासते ६ तेषांकिं तेषामिति तेषांमदुपासनैकपराणांअहमीश्वरः

## आनन्दगिरिकृतटीका।

धिकत्वे हेतुं मत्वाविशिनष्टि देहेति अव्यक्तमत्यन्तसूक्ष्मं निर्विशेषमक्षरन्तस्मिन्ना
सक्तमभिनिविष्टञ्चेतोयेषान्तेषामितियावत् अक्षरोपासकानांक्लेशस्याधिकतरत्वे
भगवानेवहेतुमाह अव्यक्तेति दुःखंदुःखेनकृच्छ्रेणेतियावत्अतोदेहाभिमानत्यागादि
त्यर्थः५ तेकथंवर्त्तते तत्राह अक्षरेति यद्यक्षरोपासकामामेवाप्नुवन्तीति विशिष्यन्ते
तर्हि सगुणोपासकास्त्वांनाप्नुवन्ति नतेषामपिक्रमेणमत्प्राप्तेरित्याह येत्विति तुशब्दः
शङ्कानिरस्त्यर्थः ६ तेषास्मगद्ध्यायिनोर्किंफलतीति शङ्कामनुभाष्य फलमाह तेषा

## स्वामिकृतटीका

सद्भक्तानान्तुमत्प्रसादादनायासेनैवसिद्धिर्भवतीत्याह येत्विति द्वाभ्यां येमयि
परमेश्वरेसर्व्वाणिकर्माणिसन्न्यस्यसमर्प्य मत्परामूत्वा मांध्यायन्तोऽनन्येननविद्यतेऽ
न्योभजनीयोयस्मिन्स्तेनैवैकान्तभक्तियोगेनोपासतइत्यर्थः ६ एवंमय्यावेशितं

## भाषाअनुवाद

तोसगुणोपासकयुक्तकहेअेठजोआपनेकहा सोकैसेसंभवहै इसशंकाको निवारण
करतेहुये तीनिश्लोकसेक्लेशहेतुकविशेषकहतेहैं किअव्यक्तनिर्विशेषअक्षरब्रह्ममे
जिसकाचित्तआशक्तभया उसकोअधिकक्लेशहोयहैक्योंकिअव्यक्तब्रह्मविषयक जो
निष्ठा सोदेहाभिमानीमनुष्यकोअतिदुखसेप्राप्तहोतीहैं कारणयह किस्थूलशरी
रमेआत्मबुद्धिविशिष्टमनुष्योंकेमनकोअन्तर्मुखवृत्तिकाप्रत्यक्चैतन्यमेनिमग्नहोना
सर्वथादुष्करहै ५ परन्तुमेरेभक्तमेरीकृपासे अनायाससेसिद्धहोतेहैं यह
दोश्लोककेद्वारा कहतेहैं किजोमनुष्य परमेश्वरस्वरूपमेरेविषेसकलकर्म अर्पणापू
र्वकमत्परायणकहे अनन्यभावसेमेरेमेतत्परहोतेहैं तेमेराध्यानउपासनाकरतेहैं
अनन्यभावकहे नहींहै अन्यवस्तुमेभावप्रीति जिसमे ६ इसप्रकारसेजिनोनेमेरे

नचिरात्पार्थमय्यावेशितचेतसां ७ मय्येवमनआधत्स्वमयिबुद्धिंनिवेशय निवसि
ष्यसिमय्येवअतऊर्द्ध्वंनसंशयः ८ अथचित्तंसमाधातुं न शक्नोषिमयिस्थिरंअभ्या

शाङ्करभाष्यं

समुद्धर्त्ताकुतइत्याह मृत्युसंसारसागरात् मृत्युयुक्तःसंसारोमृत्युसंसारःसएवसागर
वत् सागरोदुरुत्तरत्वात् तस्मान्मृत्युसंसारसागरादहंतेषांसमुद्धर्त्ताभवामिनचिरा
त् किंतर्हिक्षिप्रमेव हेपार्थमय्यावेशितचेतसांमयिविश्वरूपेआवेशितंसमाहितंचेतो
येषांते मय्यावेशितचेतसस्तेषां ७ यतएवंतस्मात् मय्येवेति मय्येवविश्वरूप
ईश्वरेमनः सङ्कल्पविकल्पात्मकमाधत्स्वस्थापयमय्येवव्यवसायंकुर्वतींबुद्धिंआधत्स्वनि
वेशय ततस्तेनकिंस्यादितिशृणुनिवसिष्यसिनिवत्स्यसिनिश्चयेनमदात्मनामयिनिवा
संकरिष्यस्येवअतःशरीरपातादूर्द्ध्वंनसंशयः संशयोनकर्त्तव्यः ८ अथेति अथएवं

आनन्दगिरिकृतटीका।

मित्यादिना समुद्धर्त्तासम्यगूर्द्ध्वंनेता ज्ञानावष्टम्भदानेनेत्यर्थःमृत्युरज्ञानंमरणाद्यनर्थ
हेतुत्वात्तेनकार्य्यतयायुक्तःसंसारः ७ भगवदुपासनाविशिष्टफलेत्येवंयतःसिद्धमतोभ
गवन्निष्ठायांप्रयतितव्यमित्याह यतइति असंहिताकरणंश्लोकपूरणार्थं मनोबुद्ध्यो
र्भगवत्यस्थापनेप्रश्नपूर्वकंफलमाह ततइति भगवन्निष्ठस्यतत्प्राप्तौ प्रतिबन्धाभावं
सूचयति संशयोनेति ८ तत्प्रदर्शनपूर्वकंभगवत्प्राप्तावुपायान्तरमाह अथेत्या

स्वामिकृतटीका।

चेतोयैस्तेषांमृत्युयुक्तात् संसारसागरादहंसम्यगुद्धर्त्ताअचिरेणभवामि ७ यस्मा
देवंतस्मान्मय्येवेति मय्येवसंकल्पविकल्पात्मकंमनआधत्स्व स्थिरीकुरुबुद्धिमपि
व्यवसायात्मिकांमय्येवनिवेशय एवंकुर्वन्मत्प्रसादेनलब्धज्ञानः सन्नतऊर्द्ध्वंदेहान्ते
मय्येवनिवसिष्यसिनिवत्स्यसिमदात्मनावासंकरिष्यसिनात्र संशयः तथाचश्रुतिः
देहान्तेदेवपरंब्रह्मतारकंव्याचष्टे इति ८ अत्राशक्तंप्रति सुगमोपायमाह

भाषाअनुवाद

मेंचित्तलगायाहै उनका हेपार्थतत्कालइसमृत्युसंसारसागरसेउद्धारकरनेवालामैं
हौंअर्थात् एकाग्रचित्तभक्तजनोंको मैंसंसारदुखसेउद्धारकर्त्ताहूं ७ इससेसंक
ल्पविकल्पात्मकमनकोमेरेमेंथिरकरोऔरव्यवसायात्मिकाबुद्धिकोभीमेरेमेंलगावो
तोदेहकेअन्तमेंमेरीकृपासे तत्त्वज्ञानकोप्राप्तहोयपरमात्मारूपमेरेमेंस्थितिकरहोवा
सकरोगे इसमेंकुछसंशयनहींहै सोईश्रुति कहतीहै किसगुणउपासककोदेहान्त
होनेपर वहउपास्यदेवपरब्रह्मकाउपदेशकरिकेअपरोक्षकहैंसाक्षात्करदेयहै ८

सयोगेनततो मामिच्छाप्तुं धनंजय ९ अभ्यासेऽप्यसमर्थोसि मत्कर्मपरमोभव
मदर्थमपिकर्माणि कुर्व्वन्सिद्धिमवाप्स्यसि १० अथैतदप्यशक्तोऽसि कर्त्तुं

## शाङ्करभाष्यं

यथावोचाम तथामयिचित्तं समाधातुं स्थापयितुं स्थिरमचलंकर्त्तुं नशक्नोषिचेत्ततःप
श्चादभ्यासयोगेनचित्तस्यैकस्मिन्नालम्बनेसर्व्वतः समाहृत्यपुनःपुनः स्थापनमभ्यासस्तत्
पूर्व्वकोयोगःसमाधानलक्षणस्तेनाभ्यासयोगेनमांविश्वरूपमिच्छप्रार्थयस्वआप्तुं प्रा
प्तुं हेधनञ्जय ९ अभ्यासेपीति अभ्यासेप्यसमर्थोसिअशक्तोसितर्हिमत्कर्म्मपरमोभव
मदर्थंकर्म्ममत्कर्म्मतत्परमोभवमत्कर्म्मप्रधानइत्यर्थःअभ्यासेनविनामदर्थमपि कर्म्माणि
केवलंकुर्व्वन्सिद्धिं सत्त्वशुद्धिं योगंज्ञानप्राप्तिद्वारेणावाप्स्यसि १० अथैतदिति

## आनन्दगिरिकृतटीका

दिना ९ एकमालम्बनंस्थूलंप्रतिमादिसमाधानं तमोप्यन्तरेविश्वरूपे चित्तैका
ग्र्यहैताभिनिवेशादभ्यासाधीनेयोगेपिसामर्थ्याभावेपुनरुपायान्तरमाह अभ्यासेपी
ति अभ्यासयोगेनविनाभगवदर्थंकर्म्माणिकुर्व्वाणस्यकिंस्यादित्याशंक्याह अभ्यासेनेति
सिद्धिःब्रह्मभावःअपिरिह अवधिसूचनार्थः १० भगवत्कर्मपरत्वमप्यशक्यमिति

## स्वामिकृतटीका

अथेति स्थिरंयथाभवत्येवंमयिचित्तंधारयितुं यदिशक्तोनभवसितर्हिविक्षिप्तं चित्तंपुनः
पुनःप्रत्याहृत्य मदनुस्मरणलक्षणोयोऽभ्यासयोगस्तेनमांप्राप्तुमिच्छ प्रयत्नंकुरु ९
यदिपुनर्नैवंतत्राह अभ्यासइति यदिपुनरभ्यासेऽप्यशक्तोसि तर्हिमत्प्रीत्यर्थानि
यानिकर्माणिएकादश्युपवासव्रतपूजापरिचर्य्यानामसंकीर्त्तनादीनितदनुष्ठानमेव
परमंयस्यतादृशोभव एवंभूतानिकर्माण्यपिमदर्थंकुर्वन् मोक्षंप्राप्स्यसि १०
अत्यन्तंभगवद्धर्मपरिनिष्ठायामप्यशक्तस्यपक्षान्तरमाह अथेति यद्येतदपिकर्त्तुं

## भाषा अनुवाद

औरसगुणउपासनामेअशक्तपुरुषको सुगमउपायकहतेहैं किजोचित्तकोमेरेमे
थिरकरनेनशकै तोहेधनञ्जयअर्ज्जुनविषयमेविक्षिप्तचित्तकोविषयोंसे पुनःपुनःफेरि
करमेरेस्मरणकीअभ्याससे हमैप्राप्तहोनेकीयत्नकरै ९ औरजोअभ्यास करनेमे
समर्थनहोउ तोमत्प्रीत्यर्थएकादशीउपवासव्रतपूजाऔनामकाकीर्त्तनआदिकर्म
तोधर्म्महैं उनमेतत्परहोउ क्योंकिमत्प्रीत्यर्थकर्मकरनेसेभी मुक्तिकोप्राप्तहोउगे१०
औरइसभगवद्धर्ममेभीअसमर्थपुरुषको दूसरीउपायकहतेहैं किजोमत्प्रीत्यर्थ

मद्योगमाश्रितः सर्व्वकर्मफलत्यागंततःकुरुयतात्मवान् ११ श्रेयोहिज्ञानमभ्यासाद्
ज्ञानाद्ध्यानंविशिष्यते ध्यानात्कर्म्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् १२

शाङ्करभाष्यं ।

अथपुनरेतदप्रियदुक्तं मत्कर्मपरमत्वंतत्कर्त्तुमशक्तोसिमद्योगमाश्रितोमयिक्रियमा
णानिकर्माणिसंन्यस्यतत्करणंतेषामनुष्ठानंमद्योगस्तमाश्रितःसन्सर्वकर्मफलत्यागं
सर्वेषांकर्मणांफलसंन्यासंसर्वकर्मफलत्यागंततोऽनन्तरंकुरुयतात्मवान्सन्नित्यर्थः ११
इदानीं सर्व्वकर्म्मफलत्यागंस्तौति श्रेयोहि प्रशस्यतरंज्ञानंकस्मादविवेकपूर्व्वका
दभ्यासात्तस्मादपिज्ञानात्ज्ञानपूर्व्वकंध्यानंविशिष्यते ज्ञानवतोध्यानादपि कर्म्मफल
त्यागोविशिष्यतइतिअनुषज्यते एवंकर्म्मफलत्यागात्पूर्व्वविशेषणवतःशान्तिरुपशमः

आनन्दगिरिकृतटीका

शङ्कते अथेति वहिर्विषयाकृष्टचेतस्त्वादित्यर्थः तर्हिभगवत्प्राप्त्युपायत्वेनसंयतचि
त्तोभूत्वा कर्मफलसंन्यासंकुर्वित्याह मद्योगमिति ११

स्वामिकृतटीका ।

नशक्तोपितर्हिमद्योगंमदेकशरणत्वमाश्रितःसन्सर्वेषां दृष्टादृष्टार्थानामावश्यकाना
ञ्चाग्निहोत्रादिकर्मणांफलानियतचित्तोभूत्वापरित्यज एतदुक्तंभवतिमया तावदी
श्वराज्ञयाश्रद्धान्निकर्माणिकर्त्तव्यानिफलंतावद्दृष्टमदृष्टम्वापरमेश्वराधीनमित्येवंम
यिभावमारोप्यफलाशक्तिंपरित्यज्यवर्त्तमानोमत्प्रसादेनकृतार्थो भविष्यसीतितात्प
र्य्यं ११ तमिमंफलत्यागंस्तौति श्रेयइति सम्यग्ज्ञानरहितादभ्यासाद्युक्तिसहितोपदे

भाषाअनुवाद

कर्मभीनकरिशकै तौएकमेरीशरणहोय औचित्तवशीभूतकरिकेयावत्कर्मफल
कापरित्यागकरै इसकातात्पर्ययहहै कि अन्तर्यामीरूपईश्वरकीप्रेरणासे हमैक
र्मकर्तव्यहैं औरइनकर्मोंकादृष्टअदृष्टफलपरमेश्वरकेआधीनहै ऐसाभावमेरेमे
आरोपकरिकै फलकीइच्छात्यागपूर्वककर्म करनेसेमेरीकृपासे कृतार्थहोउगे ११
औरउक्तफलत्यागकीप्रसंसाकरतेहैं किसगुणकीउपासनामें सम्यकज्ञानरहि
तजोअभ्यास तिसमें युक्तिसहितउपदेशपूर्वकयहसगुणउपासनाकाअङ्गभूतजोपरो
क्षज्ञान सोश्रेष्ठहै औरउसज्ञानसे भीध्यानअधिकहै औरतिससेभीकर्मफलकात्या
गश्रेष्ठहै क्योंकिकर्मऔकर्मफलमें आसक्ति निवृत्त होनेपरमेरीअनुग्रहसेशीघ्र
संसारकी शान्ति होतीहै १२

शाङ्करभाष्यं

प्राप्तेर्यदि ज्ञातापि ज्ञेयसम्बन्धो ज्ञायेतान्यज्ञाताकल्प्यः स्यात्तस्याप्यन्यइत्यनवस्थापरिहार्य्या यदि पुनरविद्याज्ञेयान्यद्वाज्ञेयं ज्ञेयमेव तथाज्ञातापि ज्ञातैवनज्ञेयम्भवति यदाचैवमविद्यादुःखित्वाद्यैर्न ज्ञातुःक्षेत्रज्ञस्य किञ्चित्दुष्यतिनन्वयमेवदोषोयत्दोषवत्तत्क्षेत्रविज्ञातृत्वंनविज्ञानस्वरूपस्यैवाविक्रियस्यविज्ञातृत्वोपचारात्यथोष्णतामावेशाग्नेस्तप्तिक्रियोपचारस्तद्वत्यथात्रभगवताक्रियाकारकफलात्मत्वाभावश्चात्मनिस्वंतएवदर्शितःअविद्याध्यारोपितैरेवक्रियाकारकाद्यात्मन्युपचर्य्यंते तथातत्रतत्रयएनं

आनन्दगिरिकृतटीका

पूर्व्वेणसम्बन्धः कर्मकाण्डंहिकलुषितं संसारित्वमधिकृत्यसाध्यसाधनसम्बन्धबोधपदार्थवदिष्टंज्ञानकाण्डमपितथाविधंसंसारित्वंपरात्मत्याखण्डैकरसेप्रत्यग्ब्रह्मणिपर्य्यवस्यदर्थवद्भवेदित्यर्थः किञ्चात्मनःशास्त्रसिद्धंब्रह्मत्वंत्यक्त्वा ब्रह्मत्वंकल्पयन्नात्महाभूत्वालोकद्वयवहिर्भूतःस्यादित्याह आत्मक्तेति ननुक्षेत्रज्ञञ्चापिमांविद्धीत्यनेनसर्व्वज्ञोऽन्तर्यामीपरोजीवादन्योनिरुच्यते नजीवस्येश्वरत्वमत्रप्रतिपाद्यते तत्कथमित्थमाक्षिप्यते तत्राह स्वयमिति किञ्चतत्त्वमसीतिवत्प्रसिद्धक्षेत्रज्ञानुवादेनाप्रसिद्धंतस्येश्वरत्वमिहोपदेशतःश्रुतं तस्यहानिमश्रुतस्यचजीवेश्वरयोस्तात्त्विकभेदस्यकल्पनांकुर्व्वन्कथंव्यामूढ़ोनस्यादित्याह श्रुतेति ननुकेचन व्याख्यातारोयथोक्तंपाण्डित्यंपुरस्कृत्यक्षेत्रज्ञञ्चापीत्यादिश्लोकंव्याख्यातवन्तः तत्कथमुक्तंपाण्डित्यमाख्यातव्यामूढ़त्वंतत्राह तस्मादिति क्षेत्रज्ञञ्चापीत्यत्रक्षेत्रज्ञेश्वरयोरैक्यंस्याभीष्टंस्पष्टयितुंप्रत्युक्तमेवचोद्यमनुद्रवति यत्तूक्तमिति तात्त्विकमेकत्वमतात्विकं संसारित्वमित्यङ्गीकृत्योक्तमेवसमाधिंस्मारयति एताविति ईश्वरस्यसंसारित्वंसंसार्य्यभावेनसंसाराभावश्चेत्युक्तौदोषौविद्याविद्ययोर्वैलक्षण्येपिकथंप्रत्युक्ताविति पृच्छति कथमिति कल्पितसंसारेण कल्पनाधिष्ठानमद्वयंवस्तुवस्तुतोनसम्बन्धमितिपरिहरति अविद्येति तद्विषयंकल्पनास्पदमधिष्ठानमितियावत्कल्पितेनाधिष्ठानस्यवस्तुतोऽसंस्पर्शेदृष्टान्तंस्मारयति तथाचेति ईश्वरस्यसंसारित्वाप्रसङ्गंप्रकटीकृत्यप्रसङ्गान्तरनिरासमनुसारयति संसारिणइति नतावदविद्यासंसारंसंसारिणञ्चकल्पयन्तीस्वतन्त्रातत्त्वव्याघातात्पारतन्त्र्येचाश्रयान्तराभावात्क्षेत्रज्ञस्यतद्वत्त्वेसंसारित्वमिति शङ्कते नन्विति नचाविद्यावत्त्वमविद्याकृतमनवस्थानादिति भावः यत्तूत्खातदंष्ट्रोरगवदविद्याकिंकरिष्यतीति तत्राह तत्कृतञ्चेति अविद्यातज्जयोर्ज्ञेयत्वान्नात्मधर्म्मतेत्युत्तरमाह नेत्या

## शाङ्करभाष्यं

वेत्ति हन्तारं प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः नादत्ते कस्यचित्पापमित्या
दिप्रकरणेषु दर्शितस्तथैव च व्याख्यातमस्माभिरुत्तरेषु च प्रकरणेषु दर्शयिष्यामो हन्त
तर्ह्यात्मनि क्रियाकारकफलात्मतायाः स्वतोऽभावेऽविद्यया चाध्यारोपितत्वे कर्माण्य
विद्वत्कर्त्तव्यान्येव न विदुषामिति प्राप्तं सत्यमेवं प्राप्तमेतदेव च न हि देहभृता शक्यमित्यत्र
दर्शयिष्यामः सर्वशास्त्रार्थोपसंहारप्रकरणे च समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परे
त्यत्र विशेषतो दर्शयिष्यामः अलमिह बहुप्रपञ्चेनेत्युपसंह्रियते २

## आनन्दगिरिकृतटीका

दिना तदेव प्रपञ्चयति यावदिति ज्ञेयस्य क्षेत्रधर्मत्वेपि क्षेत्रद्वारा क्षेत्रज्ञस्य तत्कृत
दोषवत्तेत्याशंक्याह नचेति क्षेत्रस्यापि ज्ञेयत्वान्न तेन चितो वस्तुतः स्पर्शोऽस्तीत्युप
पादयति यदीति धर्म्मधर्म्मित्वेन संसर्गेपि ज्ञेयत्वे का क्षतिरित्याशंक्याह यदीति
आत्मधर्म्मस्यात्मना ज्ञेयत्वे स्वस्यापि ज्ञेयत्वापत्त्या कर्तृकर्मविरोधः स्यादित्यर्थः कि
ञ्च विमतं न क्षेत्रज्ञाश्रितं तद्वेद्यत्वाद्रूपादिवदित्याह कथमिति किञ्च महाभूता
नीत्यादिना ज्ञेयमात्रस्य क्षेत्रान्तर्भावान्नाविद्यादेर्ज्ञातृधर्मतेत्याह ज्ञेयं चेति किञ्चै
तद्यो वेत्तीत्युक्तत्वात् क्षेत्रज्ञस्य ज्ञातृत्वनिर्णयान्न तत्ज्ञेयं किञ्चित्प्रविशतीत्याह ज्ञा
तैवेति क्षेत्रक्षेत्रज्ञयोरेवं स्वाभाव्ये सिद्धे सिद्धं क्षेत्रधर्मत्वमविद्यादेरिति फलित
माह इत्यवधारितइति विरोधाच्च न क्षेत्रज्ञधर्मत्वमविद्यादेरित्याह क्षेत्रज्ञेति वि
रुद्धबाधित्वे मूलं दर्शयति अविद्येति मात्रपदस्य व्यावर्त्यमानं युक्त्या स्वमवष्टभ्यान्तर
मिति वस्तु केवलपदं यया विद्यया विरुद्धमपि निर्वोढुं शक्यते तस्याः स्वातन्त्र्याभावा
च्चितोऽन्यस्याविद्यकत्वेन तदाश्रयत्वात्तस्याविद्या स्वभावतया तदाश्रयत्वव्याघातात्तदा
श्रयजिज्ञासया पृच्छति अदाहेति आश्रयमात्रं पृच्छते तद्विशेषो वा प्रथमे प्रश्नस्यानव
काशित्वमत्वाह यस्येति अविद्याद्दृश्याद्दृश्या वा दृश्यत्वे पारतन्त्र्यात्किञ्चिन्निष्ठ
त्वे नैवतद्दृष्टेनाश्रयमात्रं द्रष्टव्यसदृश्यं वा अप्रकाशत्वादसिद्धिरेव स्यादित्यर्थः द्विती
यमालम्बते कस्येति अविद्याया दृश्यमानत्वादाश्रयविशेषस्यात्मनोपि स्वानुभवसिद्ध
त्वात्प्रश्नस्य निरवकाशतेत्युत्तरमाह अनेति प्रश्नानर्थक्यं प्रश्नद्वारा स्फोरयति कथ
मित्यादिना तथापि कथं प्रश्नासिद्धिस्तत्राह नचेति तदेव दृष्टान्तेन स्पष्टयति नहीति
दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं चोदयति नन्विति अज्ञानाश्रयस्य परोक्षत्वेपि प्रश्ननै
रर्थक्यमित्याह अप्रत्यक्षेणेति अविद्यावतोऽप्रत्यक्षत्वेपि तेनाविद्यासम्बन्धे सिद्धे प्र
ष्टुस्तव प्रश्नानर्थक्यसमाधिर्न कश्चिदित्यर्थः अबुद्धपराभिसन्धिः शङ्कते अविद्यायाइति

आनन्दगिरिकृतटीका।

अविद्यावतस्तत्परिहारान्नान्येनप्रयतितव्यमित्याह यस्येति ममैवाविद्यावत्वात्तत्परि
हारेमयाप्रयतितव्यमितिशङ्कते नन्विति तर्हिप्रश्नानर्थक्यमितिसिद्धान्तीस्वाभिस
न्धिमाह जानासीति आत्मानमविद्यावन्तंजानन्नपितद्विषयाध्यत्ताभावात्पृच्छसीति
शङ्कते जानामीति अविद्यावतोऽप्रत्यक्षत्वंवदतातस्याहमविद्यावानविद्याकार्य्यवत्वा
व्यतिरेकेणमुक्तात्मवदित्यनुमेयत्वमिष्टमित्युपेत्यदूषयति अनुमानेनेति आत्मनोवि
द्यासम्बन्धग्रहेकानुपपत्तिरित्याशंक्यज्ञातैवात्मा स्वस्याविद्यासम्बन्धंबुध्यतेऽन्योवाज्ञ
तेतिविकल्पाद्यंदूषयति नहीति तत्कालेस्वस्याविद्यांप्रतिज्ञातृत्वावस्थायामितियाव
त् अविद्याविषयत्वेनगृहीतत्वात्तत्ज्ञातृत्वे नैवोपयुक्तस्यात्मनस्तस्याःस्वात्मनिकृतस
म्बन्धत्वज्ञातृत्वमेकस्यकर्मकर्त्तृत्वविरोधादित्याह अविद्ययेति द्वितीयंनिरस्यति नचे
तियोगृहीतासनसम्भवतीतिसम्बन्धःतद्विषयमितिज्ञातुरविद्यायाश्चसम्बन्धस्तच्छब्दा
र्थः अनवस्थामेवप्रपञ्चयति यदीति आत्मनः स्वपरज्ञेयत्वायोगात्तस्मिन्नविद्यासम्ब
न्धस्याप्रामाणिकत्वान्नित्यानुभवगम्यत्वेस्थितेफलितमाह यदिपुनरिति यदाचैवंतदै
तदध्याहार्यं ज्ञातुरात्मनोनकिञ्चित्दूष्यतीत्येतदक्षम्यमाणःशङ्कते नन्विति किंज्ञा
तृत्वंज्ञानक्रियाकर्त्तृत्वं ज्ञानस्वरूपत्वंवानाद्यस्तदनभ्युपगमात्तत्प्रयुक्तदोषाभावात्द्वि
तीयेज्ञातृत्वस्यौपचारिकत्वान्नतत्कृतोदोषोस्तीत्याहनेत्यादिना असत्यामपिक्रिया
यांक्रियोपचारंदृष्टान्तेनस्फुटयति यथेति आत्मनिवस्तुतोविक्रियाभावेभगवदनुमतिं
दर्शयति यथात्मेति गीताशास्त्रंसमुच्चयार्थःस्तत एवात्मनिक्रियाद्यात्मलाभावोभगवताशा
स्त्रेयथोक्तस्तथैवव्याख्यातमस्माभिरिति सम्बन्धः कथंतर्हिक्रियादिरात्मनिभातितत्रा
ह अविद्येति यथावस्तुतोनास्त्यात्मनिक्रियादिरुपचारात्तुभातितयातत्रतत्रातीतप्रक
रणेषु आहोभगवताकृतोयत्नइत्याह तथेति नकेवलमतीतेष्वेवप्रकरणेषु वास्तवक्रि
याद्यभावादात्मन्याध्यासिकीतत्धीरुक्ताकिन्तुवक्ष्यमाणप्रकरणेष्वपितथैवभगवदभि
प्रायदर्शनंभविष्यतीत्याह उत्तरेषु चेति आत्मनिवास्तवक्रियाद्यभावेऽध्यासाच्चतत्सि
द्धौकर्म्मकाण्डस्याविद्वदधिकारित्वप्राप्तौ विद्वान्यजेतज्ञातकर्मारभेतेत्यादिशास्त्रविरो
धःस्यादितिशङ्कते हन्तेति शास्त्रस्यदेहव्यतिरेकविज्ञानाभिप्रायत्वादर्शनाद्यतो
तात्मधीविधुरस्यैवकर्मकाण्डाधिकारितेत्यङ्गीकरोति सत्यमिति कथमज्ञस्यैवकर्माधि
कारित्वमुपपन्नमित्याशंक्याह एतदेवचेति ज्ञानिनोज्ञाननिष्ठायामेवाधिकारोनि
ष्ठान्तरेत्वज्ञस्यैवेत्युपसंहारप्रकरणेविशेषतोभविष्यतीत्याह सर्वेति तदेवानुक्रामति
समासेनेति जीवब्रह्मणोरैक्याभ्युपगमेनकिञ्चिदवद्यमिदमित्युपसंहरति अलमिति२

तत् क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत्। स च यो यत्प्रभावश्च तत्समासेन मे शृणु ३

### शाङ्करभाष्य

इदं शरीरमित्यादिश्लोकोपदिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोको यमुपन्यस्यते तत्क्षेत्रं यच्चेत्यादि व्याचिख्यासितस्य ह्यर्थस्य संग्रहोपन्यासो न्याय्य इति यन्निर्दिष्टमिदं शरीरं इति तत् क्षेत्रमिति तच्छब्देन पराम्रशति यच्च दं निर्दिष्टं क्षेत्र तद्यादृक् यादृशं स्वकीयैर्धर्मैः चशब्दः समुच्चयार्थो यद्विकारि योविकारोयस्य तद्यद्विकारि यतो यस्माच्च यत्कार्य्यमुत्पद्यते इति वाक्यशेषः स च यः क्षेत्रज्ञो निर्दिष्टः स यत्प्रभावः येप्रभावा उपाधिकृताः शक्तयो यस्य स यत्प्रभावश्च तत् क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं यथाविशेषितं तत् समासेन संक्षेपेण मे मम वाक्यतः शृणु श्रुत्वावधारयेत्यर्थः ३ तत् क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं विव

### आनन्दगिरिकृतटीका।

एवं श्लोकद्वयं व्याख्याय श्लोकान्तरमवतारयति इदमिति कुतः संग्रहोक्तिरुपयुज्यते तत्राह व्याचिख्यासितस्येति प्रतिपत्तिसौकर्यार्थं संग्रहोक्तिरर्थवतीत्यर्थः वक्ष्यमाणेर्थे

### स्वामिकृतटीका

तदेवं संसारिणः स्वरूपमुक्तमिदानीं तस्यैव पारमार्थिकमसंसारिस्वरूपमाह क्षेत्रज्ञमिति तञ्च क्षेत्रज्ञं संसारिणं जीवं वस्तुतः सर्वक्षेत्रेष्वनुगतं मामेव विद्धि तत्त्वमसीति श्रुत्युपलक्षितेन भद्रूपस्योक्तत्वात् आदराय मेतत्ज्ञानं स्तौति क्षेत्रक्षेत्रज्ञयोर्यद्विलक्षणेन ज्ञानं तदेव मोक्षहेतुत्वात् ज्ञानं ममसंमतं अन्यत्तु दृष्टयापाण्डित्यं वन्धहेतुत्वादित्यर्थः तदुक्तं तत्कर्म यन्नवन्धाय साविद्यायाचमुक्तये आयासायापरं कर्म विद्यान्याशिल्पनैपुण्यमिति २

### भाषा अनुवाद

यद्यपि यहां चौविसप्रकारकी प्रकृतिको क्षेत्र कहते हैं तौभी देहरूपपरिणामकहे रूपान्तरप्राप्तिको प्राप्तभई वही प्रकृतिमें अहंरूप अविवेकहेतु से सोई प्रकृतिके विवेकके अर्थ इसशरीरको क्षेत्रमात्र कहा उसीके विस्तारकी इच्छासे प्रतिज्ञा करते हैं कि मेराकियाज्ञ आनो उक्तस्वरूप जड दृश्य आदिस्वभाव और यादृश इच्छादिधर्मयुक्त और जैसे इन्द्रियादिविकारसे युक्त और जैसे प्रकृतिपुरुषके संयोगसे जन्म और जिसप्रकार स्थावरजङ्गमभेदसे नानारूप होय सोई जो क्षेत्रज्ञ स्वरूपसे जो है और अचिन्त्य ऐश्वर्य्यके द्वारा जो जो प्रभावसे सम्पन्न होय है सो सब संक्षेपसे हमसे श्रवणकरो यह भगवान् अर्जुनसे कहा ३ किसके कहे विस्तारवचनका यह संक्षेप है इसपर कहते हैं कि जो इत्यादि

## शाङ्करभाष्यं ।

च्चितं स्तौति श्रोतृबुद्धिप्ररोचनार्थं ऋषिभिरिति ऋषिभिर्वशिष्ठादिभिर्बहुधा बहुप्रकारं गीतं कथितं छन्दोभिः छन्दांसि ऋगादीनि तैश्छन्दोभिर्विविधैर्नानाप्रकारैः पृथक् विवेकतो गीतं किञ्च ब्रह्मसूत्रपदैश्च एव ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते गम्यते ज्ञायते ब्रह्मेति तानि ब्रह्मसूत्रपदेन सूच्यन्ते तैरेव च क्षेत्रक्षेत्रज्ञयोर्याथात्म्यं गीतमिति अनुवर्त्तते आत्मेत्येवोपासीतेत्यादिभिर्हि ब्रह्मसूत्रपदैरात्मा ज्ञायते हेतुमद्भिर्युक्तियुक्तैर्विनिश्चितैर्नसंशयरूपैर्निश्चितप्रत्ययोत्पादकैरित्यर्थः ४

## आनन्दगिरिकृतटीका

श्रोतुर्मनःसमाधानार्थं सूचितो वाक्यार्थौ पाय विवरणप्रतिज्ञामभिप्रेत्याह यन्निर्दिष्टमिति इदं शरीरमिति यन्निर्दिष्टं तच्छरीरं तच्छब्देन परामृशति प्रकृतार्थत्वात्तस्येति योजना तत्क्षेत्रं ज्ञातव्यमित्यध्याहारः यच्चेति येन रूपेण रूपवदिति तदेव क्षेत्रं विशेष्यते तस्य क्षेत्रस्य स्वकीया इच्छाद्यन्यादयस्तैर्विशिष्टस्य ज्ञेयत्वे हेयत्वं फलति चशब्दस्य चकस्येतरेतरसमुच्चयार्थत्वमाह चशब्द इति विकारित्वेनापि हेयत्वं सूचयति यद्विकारीति यत्कार्य्यं तत्सर्व्वं यस्मादुत्पद्यते तत्कारणत्वात् ज्ञातव्यमित्याह यत इति क्षेत्रमेव क्षेत्रज्ञं ज्ञातव्यं दर्शयति स चेति ज्ञातव्यमिति सम्बन्धः चक्षुराद्युपाधिकृतदृष्ट्यादिशक्तिवशात्तस्य ज्ञानवत्त्वं सूचयति यत्प्रभाव इति तेनोक्तेन प्रभावेण तस्य ज्ञातव्यतेति शेषः कथं यथाविशेषितं क्षेत्रं क्षेत्रज्ञो वा शक्यो ज्ञातुमित्याशङ्क्य भगवद्वाक्यादित्याह तदिति ३

स्तौकान्तरस्य तात्पर्य्यमाह तदित्यादिना विवक्षितं जिज्ञासितमित्यर्थः स्तुतिफलमाह श्रोतेति न केवलमाप्तोक्तेरेव क्षेत्रादियाथात्म्यं सम्भावितं किन्तु वेदवाक्यादपीत्याह छन्दोभिश्चेति ऋगादीनां चतुर्णां सपिभेदानां नानाप्रकारत्वं शाखाभेदादृष्टं नकेवलं श्रुतिस्मृतिसिद्धमुक्तं याथात्म्यं किन्तु यौक्तिकञ्चेत्याह किञ्चेति कानि तानि सूत्राणीत्याश

## स्वामिकृतटीका

तत्र यद्यपि चतुर्व्विंशतिभेदभिन्ना प्रकृतिः क्षेत्रमित्यभिप्रेतं तथापि देहरूपेणैव परिणतायामेवतस्यामहंभावेनाविवेकः स्फुट इति तद्विवेकार्थमिदं शरीरं क्षेत्रमित्युक्तं तदेव प्रपञ्चयिष्यन् प्रतिजानीते तदिति यदुक्तं मया तत् क्षेत्रं यत् स्वरूपतो जडदृश्यादिस्वभावं यादृक् यादृशं इच्छादिधर्मकं यद्विकारि यैरिन्द्रियादिविकारैर्युक्तं यतश्च प्रकृति पुरुषसंयोगाद्भवति यदिति यैः प्रकारैः स्थावरजङ्गमादिभेदैर्भिन्नमित्यर्थः स च क्षेत्रज्ञो यत् स्वरूपतो यत्प्रभावश्च अचिन्त्यैश्वर्य्ययोगेन यैः प्रभावैः सम्पन्न स्तत्सर्वं संक्षेपतो मत्तः शृणु ३

ऋषिभिर्बहुधागीतंछन्दोभिर्विविधैःपृथक् ब्रह्मसूत्रपदैश्चैवहेतुमद्भिर्विनिश्चितैः ४

आनन्दगिरिकृतटीका

क्वाह आत्मेत्येवेति आदिपदेनब्रह्मविदाप्नोतिपरमथयोन्यांदेवतामित्यादीनिविद्या विद्यासूत्राण्युक्तानिआत्मेति च ब्रह्मोपादानंतत्रचेबोमलचणंअथातोब्रह्मजिज्ञासेत्या दीन्यपिसूत्राण्यत्रगृह्यीतान्यन्यथाच्छन्दोभिरित्यादिनापौनरुक्त्यादितिमत्वाविशिन ष्टि हेतुमद्भिरिति ४ च त्वादियथात्मश्रुत्याप्तलोभितायकिन्तदितिजिज्ञासवेयथो

स्वामिकृतटीका।

कैःविस्तरेणोक्तमत्रायंसंच मद्गत्यपेचायामाह ऋषिभिरिति ऋषिभिर्वशिष्ठादिभि र्योगशास्त्रेषुध्यानधारणादिविषयत्वेनवैराजादिस्वरूपेणबहुधागीतंनिरूपितं वि विधैर्विचित्रैर्नित्यनैमित्तिककाम्यकर्मादिविषयैःछन्दोभिर्वेदैर्नानापूजनीयदेवतारू पेणगीतंब्रह्मणःसूत्रःपदैश्चब्रह्मसूत्रपतेंसूच्यतेएभिरितिब्रह्मसूत्राणियतोवा इमानि भूतानिजायन्तइत्यादीनितटस्थलचणपराणिउपनिषद्वाक्यानितथाब्रह्मपद्यतेसाचा त्ज्ञायतेएभिरितिस्वरूपलचणपराणिसत्यंज्ञानमनन्तंब्रह्मेत्यादीनितैश्चबहुधागी

भाषाअनुवाद

दिकोंनेयोगशास्त्रमेध्यानधारणादिकाविषयपरमेश्वरकाविराटरूपनानाप्रकार से निरूपणकियाहै औरजोवशिष्टादिकोंनेनित्यनैमित्तिककाम्यकर्मआदिविविधप्रका रसेवेदकेद्वाराभिन्न भिन्नअनेकपूजनीयदेवतारूपसे प्रगटकियाहै औरब्रह्मसूत्रअ र्थात्जिससे ब्रह्मकानिरूपणहोताहैतात्पर्य्ययहकिजिससेसमस्तभूतजन्मतेहैंइत्य दितटस्थलचणरूपउपनिपदवाक्यजोब्रह्मसूत्रऔरजिसकेद्वाराब्रह्मकासाचात्का रज्ञानकियाजाताहै एतावतास्वरूपलचणअर्थात्सोईब्रह्मसत्यअैसाज्ञानऔआ नन्दरूपहैइत्यादिश्रुतियोंनेहेतुयुक्तपदकहाअर्थात्हेसौम्यइससृष्टिकेपूर्वयहजगत्स तमात्रथाअसतसे सतकैसे जन्मैजोइसहृदयआकाशमे आनन्दरूपआत्मानहोता तोअपानऔप्राणवायुकोचेष्टाकोकरता इमसे यहआत्माहीप्राणियोंकोआनन्दय क्तकरैहै इनसवश्रुतिविशिष्टब्रह्मसूत्रादिकोंसे कहाहैसोईसंचेपसे सुनोअथवा नित्यनैमित्तिक प्रायश्चित्तउपासनारूपसाधनचतुष्टयसे सम्पन्नहोनेकेवादिब्रह्म जिज्ञासाकरै इत्यादिवेदव्यासप्रणीतकोब्रह्मसूत्र कहते हैं परमेश्वरकेईचितत्त्व हेतुसे प्रकृतिको जगत्काकारणनहींकहिसकतेऔरसवश्रुतियोंमेआत्माकोआन न्दमयत्वकहाहै इससे येआनन्दमयहैं इत्यादियुक्तियोंसे निश्चितहै अर्थजिनसू त्रोंका सोईकहा हेतुमद्भिर्विनिश्चितैः ४

महाभूतान्यहङ्कारोबुद्धिरव्यक्तमेवच इन्द्रियाणिदशैकञ्चपञ्चचेन्द्रियगोचराः ५

## शाङ्करभाष्यं

स्तुत्याभिमुखीभूतायार्जुनायाह भगवान् महाभूतानिमहान्तिचतानिभूतानिस
र्वविकारव्यापकत्वाद्भूतानिचसूक्ष्माणि नस्थूलानिस्थूलानित्विन्द्रियगोचरशब्देनाभिधायि
ष्यन्तेऽहङ्कारोमहाभूतकारणमहंप्रत्ययलक्षणोऽहङ्कारणंबुद्धिरध्यवसायलक्षणा त
त्कारणमव्यक्तमेवचनव्यक्तमव्यक्तमव्याकृतमीश्वरशक्तिःममायादुरत्ययेत्युक्तंएवश
ब्दःप्रकृत्यवधारणार्थःएतावत्येवाष्टधाभिन्नाप्रकृतिः चशब्दोभेदसमुच्चयार्थः इन्द्रिया
णिदशश्रोत्रादीनिपञ्चबुद्ध्युत्पादकत्वात्बुद्धीन्द्रियाणिवाक्पाण्यादीनिपञ्चकर्मनिर्व
र्तकत्वात्कर्मेन्द्रियाणितानिदशैकञ्चकिंतत्मनएकादशंसङ्कल्पाद्यात्मकं पञ्चचे
न्द्रियगोचराःशब्दादयोविषयास्तान्येतानिसांख्याश्चतुर्विंशतितत्त्वानि आचक्षते ५

## आनन्दगिरिकृतटीका ।

देशंचोक्तंनिर्दिशति स्तुत्येति महत्त्वेहेतुमाह सर्वेति भूतशब्देनस्थूलानामपिविशे
षाभावाद्ग्रहणेकाहानिरित्याशंक्याह स्थूलानिति अहङ्कारोऽहंप्रत्ययलक्षणइति स
म्बन्धः भूतानांप्रातीतिकत्वेनाभिमानमात्रात्मत्वंमत्वाहंकारंविशिनष्टि महाभूतेति

## स्वामिकृतटीका ।

तं किञ्चहेतुमद्भिःसदेवसौम्येदमग्रआसीत्कथमसतःसज्जायेतइति कोह्येवान्यात्
कःप्राण्यात्यदेषआकाशआनन्दोनस्यात्एषह्येवानन्दयातीत्यादियुक्तिमद्भिःअन्यात्अपानचे
ष्टांकःकुर्यात्प्राण्यात्प्राणव्यापारंवाकःकुर्यादिति श्रुतिपदयोरर्थः विनिश्चितैरुप
क्रमोपसंहारैकवाक्यतयाअसन्दिग्धार्थप्रतिपादकैरित्यर्थः तदेवमेतैर्विस्तरेणोक्तं इ
संग्रहंसंक्षेपतस्तुभ्यं कथयिष्यामितत्शृणुइत्यर्थः यद्वाअथातोब्रह्मजिज्ञासे त्यादीनि
ब्रह्मसूत्राणिगृह्यन्ते तान्येवब्रह्मपद्यतेनिश्चीयतेएभिरिति पदानितैर्हेतुमद्भिरीक्षते
र्नाशब्दं आनन्दमयोभ्यासादित्यादियुक्तिमद्भिर्विनिश्चितार्थैःशेषंसमानं　　४

## भाषाअनुवाद

औरक्षेत्रस्वरूपदोश्लोकसेकहतेहैं किमहाभूतकहे क्षितिजलअग्निवायुआ
काश औरइनकाकारणरूपअहङ्कारऔरविज्ञानात्मिकाबुद्धिअर्थात्महत्तत्त्वऔर
अव्यक्तकहेमूलप्रकृति औरपांचज्ञानइन्द्रीतथाएकसङ्कल्पविकल्पात्मकमन औरपां
चइन्द्रियगोचरकहेशब्दआदितन्मात्रा विशेषरूपसेइन्द्रियग्राह्यविषयअर्थात्श
ब्दस्पर्शरूपरसगन्धजोपांचद्रव्यगुणहैंयेईक्षेत्रस्वरूप चौबिसतत्त्वकहेहैं　５

इच्छाद्वेषःसुखंदुःखंसंघातश्चेतनाधृतिः एतत्क्षेत्रंसमासेनसविकारमुदाहृतं ६

## शाङ्करभाष्यं।

अथेदानींआत्मगुणाइतियानाचक्षतेवैशेषिकास्तेपिक्षेत्रधर्माएवनतुक्षेत्रज्ञस्येत्याह भगवान् इच्छाद्वेषइति इच्छायज्जातीयंसुखहेतुमर्थमुपलब्धवान्पूर्वंपुनस्तज्जातीय मुपलभ्यमानस्तमादातुमिच्छति सुखहेतुरितिसेयमिच्छान्तःकरणधर्मोज्ञेयत्वा त्क्षेत्रंतथाद्वेषोयजातीयमर्थंदुःखहेतुत्वेनानुभूतवान्पूर्वं पुनस्तज्जातीयमुपलभ्य मानस्तंद्वेष्टिसोयंद्वेषोज्ञेयत्वात्क्षेत्रमेवतथासुखमनुकूलंप्रसन्नंसत्त्वात्मकं ज्ञेयत्वा त्क्षेत्रमेवदुःखंप्रतिकूलात्मकंज्ञेयत्वात्तदपिक्षेत्रंसंघातोदेहेन्द्रियाणांसंहतिस्तस्या मभिव्यक्तान्तःकरणवृत्तिःतप्तइव लोहपिण्डेग्निरात्मचैतन्याभासरसविद्धाचेतनासा

## आनन्दगिरिकृतटीका

महतःपरमित्यादौप्रसिद्धंमहच्छब्दार्थमहङ्कारहेतुमाह अहङ्कारेति ईश्वरशक्ति रित्युक्तेचैतन्यमपिशङ्कितेतदर्थमाह समेति अवधारणरूपमर्थमेवस्फुटयति एतावत्वे वेति पञ्चतन्मात्राण्यहङ्कारोमहदव्याकृतमित्यष्टधाभिन्नत्वंमूलप्रकृत्यासह तन्मात्रा दिभेदानांसमुच्चयश्चकारार्थः दशेन्द्रियाण्येवविभज्यव्युत्पादयति श्रोत्रेत्यादिना त देवप्रश्नद्वारास्फुटयति किन्तदिति शब्दादिविषयशब्देनस्थूलानिभूतानिगृह्यन्ते उक्तेषुतन्मात्रान्तरीयसम्मतिमाह तानीति ५ मूलप्रकृतिरविकृतिर्महदाद्याः

## स्वामिकृतटीका

ततक्षेत्रस्वरूपमाह महाभूतानीतिद्वाभ्यां महाभूतानिभूम्यादीनिपञ्चअहङ्का रस्तत्कारणभूतःबुद्धिर्ज्ञानात्मकंमहत्तत्त्वंअव्यक्तंमूलप्रकृतिः इन्द्रियाणिदशवाक्ज्ञानि ज्ञानकर्मेन्द्रियाणिएकञ्चमनःइन्द्रियगोचराश्चपञ्चतन्मात्ररूपाएवशब्दादयआका शादिविशेषगुणतयाव्यक्ताःसन्तइन्द्रियविषयाःपञ्चतदेवंचतुर्विंशतितत्त्वान्युक्तानि५

## भाषा अनुवाद

औरइच्छाद्वेषसुखदुखऔसंघातकहेशरीर औचेतनाकहे ज्ञानात्मकअन्तः करणकीवृत्तिजोबुद्धि औधैर्य येसबदृश्यहैं इससेयेआत्माकेधर्मनहीं हैं अन्तःकर णहींकेधर्महैं तोशरीरधर्महींइनकोकहाचाहिये सोश्रुतिमेकहाहै किकामनास ङ्कल्पसंशयश्रद्धाअश्रद्धाधैर्यअधैर्यलज्जाबुद्धिभययेसबअन्तःकरणकेव्यापारहैं इस वचनसे इसीअध्यायकेतीसरेश्लोकमेजोकहाक्षेत्रधर्म सोदेखायाहै औरइन्द्रिय आदिविकारसहितक्षेत्र मैनेसंक्षेपरूप तुमसेकहा ६ अबउक्तक्षेत्रसेपृथक

## शाङ्करभाष्यं।

चचेतनं ज्ञेयत्वात् धृतिर्ययावसादंप्राप्तानिदेहेन्द्रियाणिध्रियन्तेसाचज्ञेयत्वात्चे तनंस र्व्वान्तःकरणधर्मोपलक्षणार्थमिच्छादिग्रहणंयतउक्तंतदुपसंहरति एतत्चे तंसमा सेनसविकारंसहविकारेणमहदादिनोदाहृतमुक्तंयस्यचे त्रमेदजातस्यसंहतिरि दंशरीरं चे तंइत्युक्तंतत्चे तंव्याख्यातं महाभूतादिभेदभिन्नं इत्यन्तं ६

## आनन्दगिरिकृतटीका

प्रकृतिविकृतयःसप्तषोडशकस्तुविकारइतिपठन्ति अव्यक्ताहङ्कारादीनान्त्रैगुण्याभि मानादिधर्मकत्वंप्रसिद्धमिति शब्दादीनामेवग्रहणेकर्मेन्द्रियाणां विषयानुक्तेर्वैरूप्य प्रसङ्गात्चे तेनिरूपणस्यचप्रकृतत्वात्स्वरूपनिर्देशेनैवतत्चे तंयच्चयादृक्चेतिव्या ख्यातमिदानीमिच्छादीनामात्मविकारत्वनिवृत्तयेच्चे त्रविकारत्वनिरूपणेनयद्विका रीत्येतन्निरूपयन्मतान्तरनिवृत्तिपरत्वेनश्लोकमवतारयति अथेति सर्वज्ञोक्तिविरो धाद्वेयंवैशेषिकमतमितिमत्वोक्तंभगवानिति उपलब्धजातीयस्योपलभ्यमानस्यादाने च्छायांहेतुमाह सुखेति इतिशब्दोहेत्वर्थःसुखहेतुत्वात्तस्मिन्निच्छेत्यर्थः इच्छांसुखत द्धेतुविषयत्वेनव्याख्यायात्मधर्मत्वंतस्याव्युदस्यति सेयमिति तथापिकथंचे त्रान्तर्भूत त्वंतत्राह ज्ञेयत्वादिति इच्छावतद्वेषोपिधर्मोबुद्धेरित्याह तथेति कोसौद्वेषोयस्य बुद्धिधर्मत्वं तत्राह यज्जातीयमिति तस्यापीच्छावत्चे त्रान्तर्भावमाह सोयमिति इच्छाद्वेषवद्बुद्धिधर्मःसुखमपीत्याह तथेति तस्यापिस्वरूपोक्त्याच्चे त्रान्तःपातित्वमाह अनुकूलमिति दुःखस्यापिस्वरूपोक्त्याचेत्रमध्यवर्त्तित्वमाह दुःखमिति देहेन्द्रिया त्मवादौव्युदसितुंचेत्रान्तर्भूतमेवसंघातंविभजते देहेति विज्ञानवादंप्रत्याह तस्यामि ति तप्तेलौहपिण्डेवह्नेरभिव्यक्तिवदुक्तसंहतौबुद्धिवृत्तिरभिव्यज्यते तत्रचाग्निरभि व्यक्तोलोहपिण्डमेवाग्निबुद्ध्याग्राहयति तथात्मचैतन्यंबुद्धिवृत्तावभिव्यक्तंतामेवात्मतया ग्राहयत्यतस्तदाभासानुविद्धासैवचेतनेत्युच्यते साचमुख्यचेतनंप्रतिज्ञेयत्वादतद्रूपत्वा त्चेत्रमेवेत्यर्थः धृतिस्वरूपोक्त्याच्चे त्रत्वंतस्यादर्शयति धृतिरित्यादिना नन्वन्येपिस ङ्कल्पादयोयेमनोधर्माःसन्ति तेकिमित्यत्रचे त्रत्वेननोच्यन्तेतत्राह सर्व्वेति तस्योप लक्षणार्थत्वेहेतुमाह यतइति इच्छादिवदस्मिन्नवसरेसङ्कल्पादीनामपिदर्शितत्वंसि द्धवत्कृत्यप्रकरणविभागार्थंयतोभगवदुक्तंचेत्रमुपसंहरत्यतोयुक्तमिच्छादिग्रहस्यसर्व्वा नुक्तबुद्धिधर्मोपलक्षणार्थत्वमित्यर्थः विरक्तस्यज्ञानाधिकारायवैराग्यार्थंचे तंव्याख्यात मित्यनुवदति यस्येति चे त्रभेदजातस्यव्यष्टिदेहविभागस्यसर्व्वस्येत्यर्थः संहतिःसम ष्टिःशरीरं ६ ननु उक्तंचे त्रंचे त्रज्ञोवक्तव्यस्तंहित्वा किमित्यन्यदुच्यतेतत्राह

अमानित्वमदम्भित्वमहिंसाक्षान्तिरार्जवं आचार्य्योपासनंशौचंस्थैर्य्यमात्मविनिग्रहः ७

## शाङ्करभाष्यं।

क्षेत्रज्ञोवक्ष्यमाणविशेषणोयस्यक्षेत्रज्ञस्यपरिज्ञानादमृतत्वंभवति तंज्ञेयंतत्प्र वक्ष्यामीत्यादिनासविशेषणंस्वयमेववक्ष्यति भगवानधुनातुतत्ज्ञानसाधनगुणममानि त्वादिलक्षणंयस्मिन्सति तत्ज्ञेयविज्ञानयोग्योधिकृतोभवति यत्परःसंन्यासीज्ञान निष्ठउच्यतेतममानित्वादिगुणंज्ञानसाधनत्वात्ज्ञानशब्दवाच्यंविदधाति भगवान् अमानित्वमिति अमानित्वंमानिनोभावोमानित्वमात्मनःश्लाघनन्तदभावोऽमानित्व मदम्भित्वंस्वधर्मप्रकटीकरणंदम्भित्वंतदभावोदम्भित्वमहिंसाअहिंसनंप्राणिनामपी डनं क्षान्तिःपरापराधप्राप्तावविक्रियार्जवमृजुभावोऽवक्रतयाचार्य्योपासनं मोक्षसा धनोपदेष्टुराचार्य्यस्यशुश्रूषादिप्रयोगेनसेवनं शौचंकायमलानांमृज्जलाभ्यांप्रक्षालन मन्तश्चमनसःप्रतिपक्षभावनयारागादिमलानामपनयनंशौचंस्थैर्य्यंस्थिरभावोमोक्ष मार्गएवकृतव्यवसायित्वमात्मविनिग्रहआत्मनउपकारकस्यात्मशब्दवाच्यस्यकार्यका रणसंघातस्यविनिग्रहःस्वभावेनसर्व्वतःप्रवृत्तस्यसन्मार्गएवनिरोधआत्मविनिग्रहः ७

## स्वामीकृतटीका

इच्छेति इच्छादयःप्रसिद्धाःसंघातःशरीरंचेतनाज्ञानात्मिकामनोवृत्तिःधृतिर्धै र्य्यंएतेचेच्छादयोदृश्यत्वान्नात्मधर्माः अपितुमनोधर्माःअतःक्षेत्रान्तःपातिनएवोपल क्षणञ्चैतत्सङ्कल्पादीनां तथाचश्रुतिः कामःसङ्कल्पोविचिकित्साश्रद्धाअश्रद्धाधृति रधृतिर्ह्रीर्धीर्भीरित्येतत्सर्व्वंमनएवेति अनेनयाहृगितिप्रतिज्ञाताःक्षेत्रधर्मादर्शिताः एतत् क्षेत्रंसविकारमिन्द्रियादिविकारसहितं संक्षेपेणतुभ्यंमयोक्तमिति क्षेत्रोप संहारः ६ इदानीममानित्वमित्यादिपञ्चभिरुक्तलक्षणात् क्षेत्रादतिरिक्तं तयाज्ञेयं शुद्धंक्षेत्रज्ञंविस्तरेणवर्णयिष्यन्तत्त्वज्ञानसाधनान्याह अमानित्वमिति अ मानित्वंस्वगुणश्लाघाराहित्यं अदम्भित्वंदम्भराहित्यंअहिंसापरपीडावर्जनंक्षान्तिः

## भाषाअनुवाद।

जोज्ञेयक्षेत्रज्ञ तिसकोबिस्तारसेवर्णनकीइच्छाकरि क्षेत्रज्ञकेज्ञानहोनेकेसाधन पांचश्लोकसेकहतेहैं किअमानित्वअदम्भित्वअहिंसाकहे मानकपटपरपीडाराहि त्यऔक्षान्तिकहेक्षमा औआर्जवजोसीधापन औआचार्य्योपासनजोगुरुसेवनऔर शौचकहे वाहरअन्तरशुद्धि औभावशुद्धसेअन्तःशुद्धिजानो औरस्थैर्यकहेसत्मार्ग मेप्रवृत्त औउसीएकमेतत्परता तथाआत्मविनिग्रहकहे शरीरसंयमकरना ७

इन्द्रियार्थेषुवैराग्यमनहङ्कारएवच जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं ८

आनन्दगिरिकृतटीका

ज्ञेयञ्चेति अनादिमदित्यादिना वक्ष्यमाणविशेषणञ्चेवञ्चस्वयमेव भगवान्विवक्षितविशेषणसहितंज्ञेयंयत्तदित्यादिनावक्ष्यतीतिसम्बन्धः किमितिज्ञेयज्ञोवक्ष्यतेतत्राह यस्येति ज्ञेयंयत्तदित्यतःप्राक्तनग्रन्थस्यतात्पर्यमाह अधुनेति अमानित्वादिलक्षणंविदधातीत्युत्तरत्रसम्बन्धः ज्ञानसाधनसमुदायबोधनंकुत्रोपयुज्यतेतत्राह यस्मिन्निति योग्यमधिकृतमेवविदृणोति यत्परइति एतत्ज्ञानमितिवचनात्कथमिदंज्ञानसाधनमित्याशंक्याह तमिति तद्विधानस्यवक्तृद्वारादार्ढ्यं सूचयति भगवानिति अमानित्वादिनिष्ठस्यान्तर्धियोज्ञानमिति नियमार्थमाह अमानित्वमिति मानस्तिरोहितो विलेपःसचात्मन्युत्कर्षारोपहेतुसोस्येतिमानी नमान्यमानीतस्यभावोमानित्वमिति व्याकरोति अमानित्वमित्यादिना प्रतियोगिमुखेनादम्भित्वंविदृणोति अदम्भित्वमिति वाङ्मनोदेहैरपीडनंप्राणिनामहिंसनं तदेवाहिंसेत्याह अहिंसेति परापराधस्यचित्तविकारकारणस्य प्राप्तावेवाविकृतचित्तत्वेनापकारसहिष्णुत्वंक्षान्तिरित्याह क्षान्तिरिति अवक्रत्वमकौटिल्यं यथाहृदयव्यवहारःसदैकरूपप्रवृत्तिनिमित्तत्वंचेत्यर्थः उपनीयतुयःशिष्यमित्यादिनोक्तमाचार्यंव्यवच्छिनत्ति मोक्षेति शुश्रूषादिद्वारादिपदंनमस्कारादिविषयं बाह्यमाभ्यन्तरञ्चद्विःप्रकारंशौचंक्रमेणविभजते शौचमित्यादिना मनसोरागादिमलानामिति सम्बन्धः तदपनयोपायमुपदिशति प्रतिपक्षेति रागादिप्रतिकूलस्यभावनाविषयेषु दोषदृष्ट्याप्रवृत्तिस्तयेतियावत् स्थिरभावमेवविपदयति मोक्षेति आत्मनोनित्यसिद्धस्यानाधेयातिशयस्यकुतोविनिग्रहस्तत्राह आत्मनइति ७

स्वामिकृतटीका।

सहिष्णुत्वंआर्जवमवक्रताआचार्योपासनंसद्गुरुसेवनंशौचंबाह्यमाभ्यन्तरञ्चतत्रबाह्यंमृज्जलादिनाआभ्यन्तरञ्चरागादिमलक्षालनं तथाचस्मृतिः शौचञ्चद्विविधंप्रोक्तंबाह्यमाभ्यन्तरंतथा मृज्जलाभ्यांस्मृतंबाह्यंभावशुद्धिस्तथान्तरमिति स्थैर्यं सन्मार्गप्रवृत्तस्यतदेकनिष्ठताआत्मविनिग्रहःशरीरसंयमःएतज्ज्ञानमितिप्रोक्तमिति पञ्च

भाषाअनुवाद

औरइन्द्रियार्थजोरूपआदिविषय तिनमेवैराग्यऔअनहङ्कारता तथाजन्ममृत्युजराव्याधिदुखदोषइनकोवारवारदेखनाचाहियेविषयभोगसेनिवृत्तिहो ८

### शाङ्करभाष्य

किञ्चइन्द्रियेति इन्द्रियार्थेषु शब्दादिषु दृष्टादृष्टेषु भोगेषु विरागभावो वैराग्यमनहङ्का रोऽहङ्काराभावएवच जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्मचमृत्युश्चजराच व्याधयश्चदुःखानिचतेषुजन्मादिदुःखान्तेषुप्रत्येकंदोषानुदर्शनंआलोचनंजन्मनिगर्भ वासयोनिद्वारानिःसरणंदोषस्तस्यानुदर्शनंआलोचनंतथामृतौदोषानुदर्शनंतथाज रायांप्रज्ञाशक्तितेजोनिरोधदोषानुदर्शनं आलोचनंपरिभूततांचेति तथाव्याधिषु शिरोरोगादिषु दोषानुदर्शनं तथादुःखेष्वध्यात्माधिभूताधिदैवनिमित्तेष्वथवादुःखा न्येवदोषोदुःखदोषस्तस्यजन्मादिषु पूर्व्ववदनुदर्शनंदुःखंजन्मदुःखंजरादुःखंमृत्युदुःखं व्याधयोदुःखनिमित्तत्वाज्जन्मादयोदुःखंदुःखानिनपुनःस्वरूपेणैवदुःखमित्येवंजरादि षुदुःखदोषानुदर्शनात्देहेन्द्रियविषयभोगेषु वैराग्यमुपजायते ततःप्रत्यगात्मनिप्रवृ त्तिःकरणानामात्मदर्शनायएवंज्ञानहेतुत्वात्ज्ञानमुच्यतेजन्मादिदुःखदोषानुदर्शनं ८

### आनन्दगिरिकृतटीका ।

नकेवलममानित्वादीन्येवज्ञानस्यान्तरङ्गसाधनानिकिन्तुवैराग्यादीन्यपितथा विधानिसन्तीत्याह किञ्चेति दृष्टादृष्टेष्वनेकार्थेषुरागेतत्प्रतिबन्धंज्ञानंनोत्पद्यतेइति मत्वाव्याकरोति इन्द्रियेति आविर्भूतोगर्व्वोऽहङ्कारस्तदभावोपिज्ञानहेतुरित्याह अ नहङ्कारइति इन्द्रियार्थेषुवैराग्यमुक्तमुपपादयति जन्मेतिप्रत्येकंदोषानुदर्शनमित्युक्तं तत्रजन्मनिदोषानुदर्शनंविशदयति जन्मनीतियथाजन्मनिकोपानुसन्धानन्तथामृत्यौ दोषस्यसर्व्वमर्मनिकृन्तनादेरालोचनंकार्य्यमित्याह तथेति जन्मनिमृत्यौचदोषानुस न्धानवज्जरादिष्वपिदोषानुसन्धानंकर्त्तव्यमित्याह तथेति व्याधिषुदोषस्यासह्यतारू पस्यानुसन्धानंदुःखेषुत्रिविधेष्वपिदोषानुसन्धानंप्रसिद्धंव्याख्यानान्तरमाह अथवेति यथाजन्मादिषुदुःखान्तेषुदोषदर्शनमुक्तं तथातेष्वेवदुःखाख्यदोषस्यदर्शनंस्फुटयति दुःखमित्यादिना कथंजन्मादीनांबाह्येन्द्रियग्राह्याणांदुःखत्वंतत्राह दुःखेति जन्मादि षुदोषानुदर्शनकृतंफलमाह एवमिति वैराग्येसत्यात्मदृष्ट्यर्थंकरणानांतदाभिमुख्येन प्रवृत्तिरिति वैराग्यफलमाह ततइति जन्मादिदुःखदोषानुदर्शनंज्ञानहेतुत्वेऽपिकिमि त्युपसंख्यातमित्याशंक्यवैराग्यद्वाराहेतुत्वादित्याह एवमिति ८ ज्ञानस्यान्तरङ्ग

### स्वामिकृतटीका ।

भेनान्वयः ७ किञ्च इन्द्रियार्थेष्विति जन्मादिषुदुःखदोषयोरनुदर्शनंपुनःपुनरा लोचनंदुःखरूपस्यदोषस्यानुदर्शनमितिवास्पष्टमन्यत् ८ किञ्च असक्तिरिति

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु नित्यञ्च समचित्तत्वमिष्टानिष्टोपपत्तिषु ९

## शाङ्करभाष्यं

किञ्च असक्तिरिति असक्तिः सक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रं तदभावोऽसक्तिरनभिष्वङ्गोऽभिष्वङ्गाभावोऽभिष्वङ्गो नाम सक्तिविशेष एवानन्यात्मभावनालक्षणो यथाऽन्यस्मिन्सुखिनि दुःखिनि चाहमेव सुखी दुःखी च जीवति मृते चाहमेव जीवामि मरिष्यामि चेति सक्तोत्याह पुत्रदारगृहादिषु पुत्रेषु दारेषु आदिग्रहणादन्येष्वप्यत्यन्तेष्टेषु दासवर्गादिषु तच्चोभयं ज्ञानार्थत्वात् ज्ञानमुच्यते नित्यञ्च समचित्तत्वं तुल्यचित्तता क्व इष्टानिष्टोपपत्तिषु इष्टानामनिष्टानाञ्चोपपत्तयः संप्राप्तयस्तास्विष्टानिष्टोपपत्तिषु नित्यमेव तुल्यचित्तता इष्टोपपत्तिषु न हृष्यति न कुप्यति चानिष्टोपपत्तिषु तच्चैतन्नित्यं समचित्तत्वं ज्ञानं ९ किञ्च मयि चेति मयि चेश्वरेऽनन्ययोगेनापृथक्समाधिना नान्यो भगवतो वासुदेवात्परोऽस्त्यतः स एव नो गतिरित्येवं निश्चिताऽव्यभिचारिणी बुद्धिरनन्ययोगस्तेन भजनं भक्तिर्न व्यभिचरणशीला अव्यभिचारिणी सा च ज्ञानं विविक्तदेशसेवित्वं विविक्तः स्वभावतः संस्कारेण वाशुच्यादिभिः सर्पव्याघ्रादिभिश्च रहितः अरण्यनदीपुलिनदेवगृहादिभिर्विविक्तो देशस्तं सेवितुं शीलमस्येति विविक्तदेशसेवी तद्भावो विविक्तदे

## आनन्दगिरिकृतटीका

मेव हेत्वन्तरमाह किञ्चेति नन्वसक्तिरेवाभिष्वङ्गाभावस्तथा च पुनरुक्तिरित्याशङ्क्याभिष्वङ्गोक्तिद्वारा निरस्यति अभिष्वङ्गो नामेति अन्यस्मिन्नेव पुत्रादावनन्यत्वधिया तद्गते सुखादावात्मनि तद्भावनाख्यं सक्तिविशेषमेवोदाहरति उक्तविशेषणयोराकाङ्क्षाद्वारा विषयमाह सक्तेत्यादिना उक्तविशेषणयोर्ज्ञानशब्दस्योपपत्तिमाह तच्चेति सदा हर्षविषादशून्यमनस्त्वमपि ज्ञानहेतुरित्याह नित्यञ्चेति तदेव विभजते इष्टेति तस्य ज्ञानहेतुत्वन्निगमयति तच्चैतदिति ९

## स्वामिकृतटीका ।

किं पुत्रदारादिषु असक्तिः प्रीतित्यागः अनभिष्वङ्गः पुत्रादीनां सुखे दुःखे वा अहमेव सुखी दुःखी चेत्यध्यासातिरेकाभावः इष्टानिष्टयोरुपपत्तिषु प्राप्तिषु नित्यं सर्व्वदा समचित्तत्वं ९

## भाषाअनुवाद ।

और पुत्रदाराधन आदिमे असक्ति कहे प्रीतित्याग और पुत्रादिमे सुखदुःख देखि जो मै सुखी अथवा दुःखी हूं ऐसा मानिलेना अभिष्वङ्ग है तिसका त्याग और इष्टअनिष्ट दोनोकी प्राप्तिमे सर्व्वदा समचित्त कहे चित्तकी एकरूपता अर्थात् सावधानचित्त रहै ९

मयिचानन्ययोगेनभक्तिरव्यभिचारिणी विविक्तदेशसेवित्वमरतिर्जनसंसदि १०
अध्यात्मज्ञाननित्यत्वंतत्त्वज्ञानार्थदर्शनं एतज्ज्ञानमितिप्रोक्तमज्ञानंयदतोऽन्यथा ११

### शाङ्करभाष्यं

शसेवित्वंविविक्तेषुहिदेशेषुचित्तंप्रसीदतियतस्ततआत्मादिभावनाविविक्ते उपजाय
तेऽतोविविक्तदेशसेवित्वेज्ञानमुच्यतेअरतिररमणंजनसंसदितज्जनानांप्राकृतानां
संस्कारशून्यानामविनीतानांकलहोन्मुखितचित्तानांसंसत्समवायोजनसंसन्नसंस्का
रवतांविनीतानांसंसत्तस्याज्ञानोपकारकत्वात्अतःप्राकृतजनसंसद्यरतिर्ज्ञानार्थत्वा
त्ज्ञानं १० किञ्च अध्यात्मेतिअध्यात्मज्ञाननित्यत्वमात्मादिविषयंज्ञानमध्यात्मज्ञानं
तस्मिन्नित्यभावोनित्यत्वममानित्वादीनांज्ञानसाधनानांभावानांपरिपाकनिमित्ततत्त्व
ज्ञानंतस्यार्थोमोक्षःसंसारोपरमस्तस्यालोचनंतत्त्वज्ञानार्थदर्शनं तत्त्वज्ञानफलालो
चनेहितत्साधनानुष्ठानेप्रवृत्तिःस्यादितिएतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तमुक्त
ज्ञानमितिप्रोक्तं ज्ञानार्थत्वात्अज्ञानपदेतस्मात्यथोक्तादन्यथाविपर्ययेणमानित्वंद
म्भित्वंहिंसाक्षान्तिरनार्जवमित्याद्यज्ञानंविज्ञेयं परिहरणायसंसारप्रवृत्तिकारण
त्वादिति ११ यथोक्तेनज्ञानेनज्ञातव्यंकिमित्याकांक्षायमाह ज्ञेयंयत्तदित्यादि ननु

### आनन्दगिरिकृतटीका

साधनान्तरमाह किञ्चेति अनन्ययोगमेवसंक्षिप्य व्यनक्ति नेत्यादिनाउक्तधीद्वा
राजातायाभक्तेर्भगवतिस्थैर्यंदर्शयति नेति तत्रापिज्ञानशब्दस्तद्धेतुत्वादित्याह माचे
ति देशस्यविविक्तत्वंद्विविधमुदाहरति विविक्तइति तदेवस्पष्टयति अरण्येति उक्तदे
शसेवित्वंकथंज्ञानेहेतुस्तत्राह विविक्तेष्विति आत्मादीत्यादिशब्देनपरमात्मा वाक्यार्थ

### भाषाअनुवाद

औरपरमेश्वरस्वरूपमेंरेमे अनन्ययोगअर्थात्सर्वत्रआत्मदृष्टिसे अव्यभिचारि
णीएकान्तभक्तिऔरविविक्तकहेशुद्धअथवाचित्तप्रसन्नकारीजोनिर्जनदेश वहांकी
बास औसंसारीव्यवहारीदुष्टमनुष्योंकीसभामेंअरुचि १० औरआत्माको अधिका
रकरिके वर्त्तमानजोज्ञानतिसमेंनित्यभावअर्थात् तत्त्वमसिमहावाक्यके तत्पदऔ
त्वंपदकेअर्थपरविश्वास औरतत्वज्ञानकाफलजोमुक्तितिसीकोश्रेष्ठरूपसे आलोचन
करनाइससेअमानित्त्वंअदंभित्त्वआदिजोबीसकहेगये सोईज्ञानकेसाधनस्वरूपहैं
यहवशिष्ठादिकोनेकहाहै औरइनबीसोंकेविपरीतजोमानदम्भहिंसाआदिबीसहैं
तेईज्ञानकेविरोधीहैं औअज्ञानकेस्वरूपजानो इससेवेसदावर्जनीयहैं ११

शाङ्करभाष्यं ।

यमानियमाच्चामानित्वादयोनतैर्ज्ञेयाः तेनह्यमानित्वादिकस्यचिद्वस्तुनःपरिच्छेदकंदृष्टं सर्वत्रैवयद्विषयंज्ञानंतदेवतस्यज्ञेयस्यपरिच्छेदकंदृश्यतेनह्यन्यविषयेणज्ञानेनान्यदुपलभ्यते यथाघटविषयेणज्ञानेनाग्निर्नैदोषःज्ञाननिमित्तत्वात् ज्ञानमुच्यते इतिह्यवोचाम ज्ञानसहकारिकारणत्वाच्च ज्ञेयमिति ज्ञेयंज्ञातव्यंयत्तत्प्रवक्ष्यामिप्रकर्षेणयथावद्वक्ष्यामि किंफलंतदितिप्ररोचनेनश्रोतुरभिमुखीकरणायाह यत्ज्ञेयं ज्ञात्वाऽमृतत्वमश्नुतेनपुनर्म्रियतइत्यर्थः अनादिमत् आदिरस्यास्तीत्यादिमत् नआदिमदनादिमत् किंतत्परंनिरतिशयंब्रह्मज्ञेयमिति प्रकृतमत्रकेचित् अनादिमत्परमितिपदंछिन्दन्ति बहुव्रीहिणोक्तेर्थेमतुपआनर्थक्यमनिष्टंस्यादित्यर्थविशषञ्चद

आनन्दगिरिकृतटीका ।

श्रोच्यन्ते नन्वरतिविषयत्वेनाविषयत्वेनाविशेषतोजनसंसन्माव किमितिनगृह्यतेतत्राह तस्येति सन्तःसङ्गस्तुभेषजमित्युपलम्भादित्यर्थः १० साधनान्तरमाह किञ्चेति आत्मादीत्यादिशब्दोऽनात्मार्थस्तद्विषयंज्ञानंविवेकस्तन्नित्यत्वंतन्नैवनिष्ठावत्वं विवेकनिष्ठोहिवाक्यार्थज्ञानसमर्थोभवति तेषांभावनापरिपाकोनामयत्नेनसाधितानांप्रकर्षपर्यन्तत्वं तन्निमित्तंतत्वज्ञानमैक्यसाक्षात्कारस्तत्फलालोचनं किमर्थमित्याशङ्क्याह तत्वेति प्रवृत्तिःस्यादित्यतस्तत्त्वज्ञानार्थदर्शनमर्थवदितिशेषः ज्ञानस्यान्तरङ्गहेतुमुक्तमुपसंहरति एतदिति किमितितस्यविज्ञेयत्वमित्याशङ्क्याह परिहरणायेति तत्रहेतुः संसारेति तस्यप्रवृत्तिरुत्पत्तिस्तद्धेतुत्वान्मानित्वादित्याज्यंज्ञातेंचत्याज्यत्वं तेनतस्यज्ञेयतेत्यर्थःइतिशब्दःसाधनाधिकारसमाप्त्यर्थः ११ उत्तरग्रन्थमवतारयति

स्वामिकृतटीका

किञ्चमयीति मयिपरमेश्वरेऽनन्ययोगेनसर्वात्मदृष्ट्याऽव्यभिचारिणीएकान्तभक्तिः विविक्तःशुद्धश्चित्तप्रसादकरस्तंदेशंसेवितुंशीलंयस्यतस्यभावस्तत्वंप्राकृतानांजनानांसंसदिसभायामरतीरत्यभावः १० किञ्चअध्यात्मेति आत्मानमधिकृत्यवर्त्तमानंज्ञानंतस्मिन्नित्यत्वंनित्यभावःतत्त्वम्पदार्थशुद्धिनिष्ठत्वमित्यर्थः तत्वज्ञानस्यार्थःप्रयोजनंमोक्षस्तस्यदर्शनंमोक्षस्यसर्वोत्कृष्टत्वालोचनमित्यर्थः एतदमानित्वमदम्भित्वमित्यादिविंशतिसंख्याकंयदुक्तमेतज्ज्ञानमिति प्रोक्तं वशिष्ठादिभिर्ज्ञानसाधनत्वात् अतोऽन्यथाअस्माद्विपरीतंमानित्वादिमत्तदज्ञानमिति ज्ञानविरोधित्वादतःसर्वथात्याज्यमित्यर्थः ११ एभिःसाधनैर्यज्ज्ञेयंतदाह ज्ञेयमितिषड्भिः यज्ज्ञेयंतत्प्रवक्ष्यामि

ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते १२

## शाङ्करभाष्यं

ज्ञेयं यत्तत्प्रवक्ष्यामि अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते इति सत्यमेवमपुनरुक्तं स्यादर्थश्च तत्र भवति न त्वर्थः सम्भवति ब्रह्मणः सर्वविशेषप्रतिषेधेनैव विजिज्ञापयिषितत्वान्न सत्तन्ना सदुच्यत इति विशिष्टशक्तिमत्त्वप्रदर्शनं विशेषप्रतिषेधश्चेति विप्रतिषिद्धं तस्मा न्मतुपो बहुव्रीहिणा समानार्थत्वेपि प्रयोगः श्लोकपूरणार्थः अमृतत्वफलं ज्ञेयं मयोच्य त इति प्ररोचनेनाभिमुखीकृत्याह न सत्तज्ज्ञेयमुच्यत इति नाप्यसत्तदुच्यते ननु मह तापरिकरबन्धेन कण्ठरवेणोद्घोष्य ज्ञेयं प्रवक्ष्यामीत्यननुरूपमुक्तं न सत्तन्नासदुच्य त इति न अनुरूपमेवोक्तं कथं सर्वासु उपनिषत्सु ज्ञेयं ब्रह्म नेति नेत्यस्थूलमनण्वित्या दिविशेषप्रतिषेधेनैव निर्दिश्यते नेदं तदिति वाचोगोचरत्वान्ननु तदस्तिशब्देनोच्यते अथास्तिशब्देन नोच्यते यन्नास्ति तज्ज्ञेयं विप्रतिषिद्धं च ज्ञेयं तदस्तिश ब्देन नोच्यत इति च न तावन्नास्ति नास्तिबुद्ध्यविषयत्वान्ननु सर्वा बुद्धयोस्तिनास्तिबुद्ध्य नुगता एव तत्रैवं सति ज्ञेयमप्यस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नास्तिबुद्ध्यनुगतप्रत्य यविषयं वा स्यान्नातीन्द्रियत्वेनोभयबुद्ध्यनुगतप्रत्ययविषयत्वात् यद्धीन्द्रियगम्यं वस्तु घ टादिकं तदस्तिबुद्ध्यनुगतप्रत्ययविषयं वा स्यान्नास्तिबुद्ध्यनुगतप्रत्ययविषयं वा इदन्तु ज्ञे यमतीन्द्रियत्वेन शब्दैकप्रमाणगम्यत्वान्न घटादिवदुभयबुद्ध्यनुगतप्रत्ययविषयमित्यतो न सत्तन्नासदित्युच्यते यत्तूक्तं विरुद्धमुच्यते ज्ञेयं न सत्तन्नासदुच्यते इति न विरुद्धम न्यदेव तद्विदितादथो अविदितादधीति श्रुतेः श्रुतिरपि विरुद्धार्थेति चेत् यथा यज्ञाय शालामारभ्य कोहि तद्वेद यद्यमुष्मिन् लोकेस्ति वा न वेतीत्येवमिति चेत् न विदिताविदि ताभ्यामन्यत्वश्रुतेरवश्यविज्ञेयार्थप्रतिपादनपरत्वात् यद्यमुष्मिन्नित्यादि तु विधिशेषो र्थवादः उपपत्तेश्च सदादिशब्दैर्ब्रह्म नोच्यत इति सर्वो हि शब्दोर्थप्रकाशनाय प्रयुक्तः

## भाषाअनुवाद

और इस सब साधान से जिसको जानना होता है तिसको इस श्लोक से कहते हैं कि जो जान ने जोग है सोई मैं कहूंगा परन्तु अभी श्रोता के आदर सिद्ध होने के लिये वही ज्ञान का फल देखावते हैं कि मैं जो ज्ञान की बात कहूंगा सो जानि के लोग मुक्ति पावते हैं और सो ज्ञेय पदार्थ क्या है इस पर कहते हैं कि वह अनादि औ परक है निरतिशय ब्रह्मरूप ही ज्ञेय ब्रह्म न सत् न असत् अर्थात् सत असत् शब्द से नहीं कहा जाता तात्पर्य यह कि सत कहे जो विधिमुख से प्रमाण का विषय औ असत् कहे जो निषेध का विषय सोई सत् असत् कहावता है यह तो ब्रह्म अविषय है तुसे उन दोनों से भी भिन्न होहै १२

## शाङ्करभाष्यं

श्रूयमाणश्शब्दोऽर्थमभिजातिक्रियागुणसम्बन्धद्वारेण सङ्केतग्रहणं सव्यपेक्षोऽर्थं प्रत्याययति नान्यथा दृष्टत्वात्तत् यथा गौरश्व इति वा जातितः पचतीति वा क्रियातः शुक्लः कृष्ण इति वा गुणतो धनी गोमानिति च सम्बन्धतो न तु ब्रह्म जातिमत् अतो न सदादिशब्दवाच्यं नापि गुणवत् येन गुणशब्देनोच्यते निर्गुणत्वात् नापि क्रियाशब्दवाच्यं निःक्रियत्वान्निष्कलं निष्क्रियं शान्तमिति श्रुतेः न च सम्बन्ध्येकत्वादद्वयत्वादविषयत्वादात्मत्वाच्च न केनचिच्छब्देनोच्यत इति युक्तं यतो वाचो निवर्त्तन्त इत्यादिश्रुतिभिश्च १२

## आनन्दगिरिकृतटीका

यथोक्तेति अमानित्वादीनां ज्ञानत्वमाक्षिपति नन्विति वस्तुपरिच्छेदकत्वात् ज्ञानत्वमाशङ्क्याह नहीति परिच्छेदकत्वात् ज्ञानत्वं ज्ञानत्वात् परिच्छेदकत्वमित्यन्योन्याश्रयमित्यभिप्रेत्याह सर्वत्रेति स्वार्थस्यैव ज्ञानं परिच्छेदकमित्येतद्व्यतिरेकद्वारा विशदयति नहीति व्यतिरेकदृष्टान्तमाह यथेति अमानित्वादीनां ज्ञानत्वमाक्षिप्तं प्रतिक्षिपति नैष दोष इति तत्र हेतुत्वेनोक्तं स्मारयति ज्ञानेति तेन ज्ञानशब्दे हेत्वन्तरमाह ज्ञानेति अमानित्वादीनां ज्ञानत्वमुक्त्वा ज्ञातव्यमवतारयति ज्ञेयमिति प्रश्नद्वारा ज्ञेयप्रवचनस्य फलमुक्त्वा प्ररोचनं कृत्वा तेन श्रोतुराभिमुख्यमापादयितुं प्ररोचनफलोक्तिमनन्तरवाक्यमित्याह किमित्यादिना तदेव विशिनष्टि अनादिमदिति आदिमत्त्वराहित्यमव्याकृतस्यापि ततो विशेषं दर्शयति किन्तदिति शोक्तुरपि भोग्यात् परत्वमित्यतो विशिनष्टि ब्रह्मेति अनादीत्येकं पदं मत्परमिति पदच्छेदान्न पुनरुक्तिरिति मतान्तरमध्यापयति अत्रेति एकपदत्वसम्भवे किमिति पदद्वयमित्याशङ्क्याह बहुव्रीहिणेति आदिरस्य नास्तीति यो बहुव्रीहिणोक्तोऽर्थस्तस्मिन्नादिमत्त्वनिषेधेनास्ति मतुपोऽर्थवत्त्वमिति मतुपानर्थक्यमनिष्टं स्यादिति मत्वा ये छन्दन्तीति पूर्वेण सम्बन्धः आदिरस्य नास्तीत्यनादीत्युक्तं मत्परमित्युच्यमाने कोऽर्थः स्यादित्याशङ्क्याह अर्थेति उक्तव्याख्यानस्यायुक्तत्वान्नायं पुनरुक्तिसमाधिरित्याह सत्यमिति अर्थासम्भवं समर्थयते ब्रह्मण इति तथापि विशिष्टशक्तिमत्त्वं किं न स्यादित्याशङ्क्याह विशिष्टेति तथापि मतुपो बहुव्रीहिणा तुल्यार्थस्य कथमानर्थक्यं तत्राह तस्मादिति अनादिमत् परं ब्रह्मेत्यत्र पक्षान्तरं प्रतिक्षिप्य स्वपक्षः समर्थितः सम्प्रति ब्रह्मणो ब्रह्मत्वादेव कार्यकारणात्मकत्वप्राप्तावुक्तानुवादद्वारा न सदित्याद्यवतारयति अमृतत्वेति सत्कार्यमभिव्यक्तनामरूपत्वादसत्कारणं तद्विपर्ययादिति भावः ज्ञेयप्रवचनमनिर्वाच्यविषयत्वात् प्रक्रमप्रतिकूलमित्याक्षिपति नन्विति नि

आनन्दगिरिकृतटीका

र्व्विशेषस्यवस्तुनोज्ञेयत्वात्तद्विपर्य्यप्रवचनंप्रक्रमानुकूलमित्युत्तरमाह नेत्यादिना अ
निर्व्वाच्यत्वेनसत्त्वन्नासदित्युच्यमानेकथमिदमनुरूपमितिपृच्छति कथमिति ब्रह्मा
त्मप्रकाशस्यासिद्धत्वात्तदर्थं विधिमुखेनोपदेशायोगादध्यस्ताशेषविशेषनिषेधद्वा
रोपदेशस्यवेदान्तेषुप्रसिद्धेरारोपितविशेषनिषेधरूपमिदंप्रवचनमुचितमितिपरिह
रति सर्व्वास्विति ज्ञेयस्यब्रह्मणोविधिमुखोपदेशायोगेहेतुमाह वाचइति ब्रह्मणो
स्तिशब्दावाच्यत्वे नरविषाणवन्नास्तित्वमित्यनिष्टमाशङ्कते नन्विति एवमुत्सर्गेपि
ब्रह्मणिकिमायातमित्याशंक्याह अथेति ज्ञेयस्यास्तिशब्दावाच्यत्वेव्याघातश्चेत्याह वि
प्रतिषिद्धञ्चेति अस्तिशब्दावाच्यत्वादवस्तुब्रह्मेत्यत्राप्रयोजकत्वमाह नतावदिति ना
स्तिबुद्धिविषयत्वमेवावस्तुत्वेनिमित्तमतस्तदभावाद्ब्रह्मणोनावस्तुतेत्येतदेव व्यक्तीक
र्त्तुं चोदयति नन्विति सर्व्वासान्धियामस्तिधीत्वेननास्तिधीत्वेनवानुगतत्वेन्यतरधीगो
चरत्वाभावेब्रह्मणोनिर्व्वाच्यंदुर्व्वारमितिफलितमाह तन्नेति ब्रह्मणोघटादिवैलक्ष
ण्यादुभयबुद्ध्यविषयत्वेपिनानिर्व्वाच्यतेत्याह नेत्यादिना घटादेरिन्द्रियग्राह्यस्योभय
बुद्धिविषयत्वेपिब्रह्मणस्तदग्राह्यस्यनोभयधीविषयत्वं तथापिनानिर्व्वाच्यत्वं सद्विदेक
तानस्यशब्दप्रमाणादविषयत्वेनदृष्टत्वादित्युक्तमेवप्रपञ्चयति यद्धीति परोक्तं विरोध
मनुवदति यत्त्विति श्रुत्यवष्टम्भेननिराचष्टेनविरुद्धमिति सापिविरुद्धार्थस्यानुमानं
बोधकत्वात्स्याविरोधापेक्षत्वादिति शङ्कते श्रुतिरिति तस्याविरुद्धार्थत्वेनाप्रामाण्येदृ
ष्टान्तमाह यथेति प्राचीनवंशंकरोतीतिपारलौकिकफलयज्ञानुष्ठानार्थंशालानिर्मा
णंप्रस्तुत्यकोहितद्वेदेत्याद्यापरलोकसत्वं सन्दिहानायथाविरुद्धार्थाश्रुतिरप्रमाणमेवं
विदिताविदितान्यत्वश्रुतिरपीत्यर्थः नेयंश्रुतिविरुद्धार्थत्वेनामानतयाहातव्याब्रह्मण्य
द्वितीयेप्रत्यक्षप्रतिपादनेनमानत्वादित्युत्तरमाह नविदितेति यत्तुविरुद्धार्थत्वं को
हीत्युदाहृतंतदसदर्थवादस्यविधिशेषस्यस्वार्थेतात्पर्य्यादित्याह यदीति यत्नात्यादिम
त्वंतत्रवाच्यत्व यथागवादौनब्रह्मणि जात्यादिमत्त्वमतस्तस्यावाच्यत्वान्निषेधेनैवबोध्य
त्वमित्याह उपपत्तेश्चेति नोच्यतइति निषेधेनैवतस्योपदेशइतिशेषः जात्यादिमतोर्थ
स्यैववाच्यत्वंतत्रैवसङ्गतिग्रहादिति प्रपञ्चयतिसर्व्वोहीति अश्रुतस्यजात्यादिद्वारेणा
ज्ञातसङ्गतेर्व्वाशब्दस्यनबोधकत्वमदृष्टेरित्याह नान्यथेति जात्यादेःसच्छब्दविषय
त्वमुदाहरति तत्यथेत्यादिना ब्रह्मणस्त्वगोत्रमवर्णमित्यादिश्रुतेः जात्यादिमत्वाभा
वान्नशब्दवाच्यतेत्याह नन्विति केवलोनिर्गुणश्चेतिश्रुतेर्गुणद्वाराब्रह्मणोनवाच्यते
त्याहनत्विति केवलोनिर्गुणमितिनिःक्रियत्वेमानमाह निष्कलमिति ब्रह्मणोद्वितीय

सर्वतःपाणिपादन्तत्सर्वतोऽक्षिशिरोमुखं सर्वतश्श्रुतिमल्लोकेसर्वमावृत्यतिष्ठति१३

## शाङ्करभाष्यं।

सच्छब्दप्रत्ययाविषयत्वादसत्त्वाशङ्कायांज्ञेयस्यसर्वप्राणिकरणोपाधिद्वारेणतद स्तित्वंप्रतिपादयंस्तदाशङ्कानिवृत्त्यर्थमाह सर्वतइति सर्वतःपाणिपादन्तत्सर्वत्रपा णयःपादाश्चास्येतिसर्वतःपाणिपादन्तत्ज्ञेयंसर्वप्राणिकरणोपाधिभिःक्षेत्रज्ञास्तित्वं विभाव्यतेतत्क्षेत्रज्ञश्चक्षेत्रोपाधितउच्यतेक्षेत्रञ्चपाणिपादादिभिरनेकधाभिन्नंक्षे त्रोपाधिभेदकृतंविशेषजातंमिथ्यैवक्षेत्रज्ञस्येतितदपनयनेनज्ञेयत्वमुक्तं नसत्तन्ना सदुच्यतेइति उपाधिकृतंमिथ्यारूपमप्यस्तित्वाधिगमायज्ञेयधर्मवत्परिकल्प्योच्यते सर्वतःपाणिपादमित्यादितथाहिसम्प्रदायविदांवचनमध्यारोपापवादाभ्यांनिःप्रपञ्चंप्र पञ्च्यतेइतिसर्वत्रसर्वदेहावयवत्वेनगम्यमानाःपाणिपादादयोज्ञेयशक्तिसद्भावनिमि

## आनन्दगिरिकृतटीका।

त्वस्याशेषोपनिषत्सुसिद्धत्वाद्विशिष्टस्यसम्बन्धस्य तस्मिन्नसिद्धेर्नतद्वारापितस्यवाच्य तेत्याह नचेति ब्रह्मण्यभिधावृत्त्याशब्दाप्रवृत्तौहेत्वन्तरमाह अद्वयत्वादिति ब्र ह्मणोवाच्यत्वे श्रुतिमपिसम्वादयति यतइति १२

## स्वामिकृतटीका।

ज्ञेयोतुरादरसिद्धयेज्ञानफलंदर्शयति यद्ज्ञेयमार्यज्ञात्वाअमृतंमोक्षंप्राप्नोति किंतत् अनादिमत् आदिमन्नभवतीत्यनादिमत्परंनिरतिशयंब्रह्मअनादीत्येतावतैवबहुव्री हिणाअनादिमत्त्वेसिद्धेऽपिपुनर्मतुपप्रत्ययश्छान्दसः यद्वाअनादीतिमत्परञ्चेतिपद द्वयंममविष्णोःपरंनिर्विशेषरूपंब्रह्मेत्यर्थःतदेवाह नसदित्यादिविधिमुखेनप्रमाणस्य विषयःसच्छब्देनोच्यते निषेधविषयस्त्वसच्छब्देनोच्यते इदन्तुतदुभयविलक्षणम विषयत्वादित्यर्थः १२

## भाषा अनुवाद।

औरजोऐसाकहो किब्रह्मसत्असत्मेभिन्नहैतोयहचराचरात्मकब्रह्माण्डब्र ह्महैइत्यादिश्रुतिसेविरुद्धहोयहैयहशङ्काकरि इसब्रह्मकीनानाप्रकारशक्ति औ ज्ञानक्रियाबलक्रियाआदिस्वभावसिद्ध नानामतमेश्रुतियोंसेकहाजायहैं इसतरह ब्रह्मकीसर्वात्मतादिखाय पांचश्लोकमेकहतेहैं किसर्व्वत्रहस्तपादचक्षुमस्तकमुख हैंजिसके सोसर्वत्रहीश्रवणइन्द्रियसेयुक्तहोयसबलोककोव्याप्तकरकेस्थितहैं अर्था त्यावत्प्राणीयोंमेवर्त्तमान करचरणआदिउपाधियोंसे व्यवहारकरैहै १३

शाङ्करभाष्यम् ।

त्तस्वकार्याइतिज्ञेयसद्भावेलिङ्गानिज्ञेयस्येत्युपचारतउच्यन्ते तथाव्याख्येयमन्यत्सर्व
तःपाणिपादंतत् ज्ञेयंसर्वतोऽक्षिशिरोमुखंसर्वतोऽक्षीणिशिरांसिमुखानिचयस्यतत्स
र्वतोऽक्षिशिरोमुखं सर्वतःश्रुतिमत् सर्वतःश्रुतिमच्छ्रुतिःश्रवणेन्द्रियंतत्यस्यतत्श्रु
तिमल्लोकेप्राणिनिकायेसर्वमावृत्यसंव्याप्य तिष्ठति स्थितिंलभते १३

आनन्दगिरिकृतटीका

सर्वविशेषरहितस्यावाङ्मनसगोचरस्यअद्दष्टेःदृष्टेश्चविपरीतस्यप्राप्ते ब्रह्मणः
शून्यत्वेप्रत्यक्तेनेन्द्रियप्रवृत्त्यादिहेतुत्वेनकल्पितद्वैतसत्तास्फूर्त्तिप्रदत्वेनेश्वरत्वेनच
सत्वंदर्शयन्नादौ देहादीनांवृत्तिमतां रथादिवच्चेतनानांप्रेक्षापूर्वकप्रवृत्तिमत्वात् चेत
नाधिष्ठितत्वमनुमिमानस्तत्प्रत्यक्चेतनंब्रह्मेत्याह सच्छब्देति तदस्तित्वमितितच्छ
ब्दोज्ञेयब्रह्मार्थःतदाशङ्केतितच्छब्देनासत्वमुच्यते ननुसर्वदेहेषुपाणिपादमस्येति
कथंप्राणीनाञ्चपादानाञ्चदेहस्यत्वेनात्मधर्मत्वंतत्राह सर्वेति करणप्रवृत्तीरथादि
प्रवृत्तिवत्प्रेक्षापूर्वकप्रवृत्तिमत्वाच्चेतनाधिष्ठानपूर्विकेत्यर्थः उक्तप्रवृत्त्याचेतनास्ति
त्वसिद्धावपिकथंक्षेत्रज्ञास्तित्वमित्याशंक्यचेतनस्यैवक्षेत्रोपाधिना क्षेत्रज्ञत्वाच्चेतना
स्तित्वं तदस्तित्वमेवेत्याह क्षेत्रज्ञेति तस्यक्षेत्रोपाधित्वेपिकथं पाणिपादाक्षिशिरो
मुखादिमत्वमित्याशंक्याह क्षेत्रेति अतश्चोपाधितस्मिन्विशेषोक्तिरितिशेषः
कथंतर्हि नसत्तन्नासदितिनिर्विशेषत्वोक्तिरित्याशंक्याह क्षेत्रेति पाणिपादादिमत्व
मौपाधिकंमिथ्याचेत्ज्ञेयप्रवचनाधिकारेकथंतदुक्तिरित्याशंक्याह उपाधीति मिथ्या
रूपमपिज्ञेयवस्तुज्ञानोपयोगीत्यत्रवृद्धसंमतिमानयतितथाहीति पाणिपादादीनाम
न्यगतानामात्मधर्मत्वेनारोप्यव्यपदेशेकोहेतुरितिचेत्तत्राह सर्वत्रेति ज्ञेयस्यब्र
ह्मणःशक्तिसन्निधिमात्रेण प्रवर्त्तनसामर्थ्यं तत्सत्वं निमित्तीकृत्यस्वकार्य्यवन्तोभवन्ति
पाण्यादयइति शेषेतियोजना सर्वतोऽक्षीत्यादावुक्तमतिदिशति तथेति तत्ज्ञेयंय
थासर्वतःपाणिपादमितिव्याख्यातंतथेत्युक्तमेवस्पष्टयति सर्वतइति सर्वतोऽक्षीत्यादे
रक्षरार्थमाह सर्वतोऽक्षीति अक्षिश्रवणवत्वमवशिष्टज्ञानेन्द्रियवत्वस्यपाणिपादमु
खवत्वञ्चावशिष्टकर्मेन्द्रियवत्वस्य मनोबुद्ध्यादिमत्वस्यचोपलक्षणएकस्यसर्वत्रपाण्या
दिमत्वंसाधयति सर्वमिति १३

स्वामिकृतटीका ।

नन्वेवंब्रह्मणःसदसद्विलक्षणत्वेसति सर्वंखल्विदंब्रह्मैवेदंसर्वमित्यादिश्रुतिर्वि
त्याहनेत्याशंक्य पराऽस्यशक्तिर्विविधैवश्रूयतेस्वभाविकीज्ञानबलक्रियाचेत्यादिश्रुतिप्र

सर्वेन्द्रियगुणाभासंसर्वेन्द्रियविवर्जितं असक्तंसर्वभृच्चैवनिर्गुणंगुणभोक्तृच १४

## शाङ्करभाष्यं

उपाधिभूतपाणिपादादीन्द्रियाध्यारोपणानुज्ञेयस्य तद्वत्ताशंकामाभूदित्येवमर्थ:श्लोकारम्भ: सर्वेन्द्रियेति सर्वेन्द्रियगुणाभासं सर्वाणिचतानीन्द्रियाणिश्रोत्रादीनिबुद्धीन्द्रियकर्मेन्द्रियाख्यान्यन्त:करणेचबुद्धिमनसीज्ञेयोपाधित्वस्यतुल्यत्वात् सर्वेन्द्रियग्रहणेनगृह्येते अपिचान्त:करणोपाधिद्वारेणैवश्रोत्रादीनामपिउपाधित्वमित्यतोऽन्त:करणवहि:करणोपाधिभूतै: सर्वेन्द्रियगुणैरध्यवसायसङ्कल्पश्रवणवचनादिभिरवभासतइति सर्वेन्द्रियगुणाभासंसर्वेन्द्रियव्यापारैर्व्यापृतमिवतत्ज्ञेयमित्यर्थ:ध्यायतीवलेलायतीवेतीतिश्रुते: कस्मात्पुन:कारणान्नव्यापृतमेवेतिगृह्यतइत्यतआह सर्वेन्द्रियविवर्जितंसर्वकरणरहितमित्यर्थ:अतोनकरणव्यापारैर्व्यापृतंतत्ज्ञेयंयस्त्वयंमन्त्रोऽपाणिपादोजवनोग्रहीतापश्यत्यचक्षु:सशृणोत्यकर्णइत्यादि सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमत्तत्ज्ञेयमित्येवंप्रदर्शनार्थं नतुसाक्षादेवजवनादिक्रियामत्त्वप्रदर्शनार्थ: अन्धोमणिमविन्ददित्यादिमन्त्रार्थवत्तस्यमन्त्रस्यार्थोयस्मात्सर्वकरणवर्जितंज्ञेयंतस्मादसक्तंसर्वसंश्लेषवर्जितंयद्यप्येवंतथापिसर्वभृच्चएवसदास्पदंहि

## स्वामिकृतटीका

सिद्ध्याअचिन्त्यशक्त्यासर्वात्मत्वंतस्यदर्शयन्नाह सर्वतइति पञ्चभि: सर्वत:सर्वत्रपाणय:पादाश्चयस्यतत् सर्वतोऽक्षीणिशिरांसिमुखानिचयस्यतत् सर्वत:श्रुतिमत्श्रवणेन्द्रियैर्युक्तंसत्लोकेसर्वमावृत्यव्याप्यतिष्ठति सर्वप्राणिप्रवृत्तिभि:पाण्यादिभिरुपाधिभि: सर्वव्यवहारास्पदत्वेन तिष्ठतीत्यर्थ: १३

## भाषा अनुवाद

औरचक्षुआदिइन्द्रियोंकेगुणस्वरूप अर्थात् रूपादिविषयमे तिसतिसआकारसे वहीप्रकाशमानहै अथवा इन्द्रियऔरगुणकहेइन्द्रियोंकेविषयरूपादिसमस्तमेसो ईप्रकाशकरताहै इससेसर्वइन्द्रीगुणआभासस्वरूपहै औरसम्पूर्णइन्द्रीयोंसेरहितहै सोईश्रुतिकहतीहै किसोईजोब्रह्म सोहस्तरहितहोकेभीग्रहणकरतेऔपादविनाभीवेगवानतथाचक्षुहीनद्रष्टा औकर्णविहीनश्रोता औरइनविषयसकलकोवेंजानतेहैं परउनकोकोईभीनहींजानताहै वहीपरमात्माको वेदसवआदिपुरुषऔपूर्ण तथासर्वव्यापीकहतेहैं औरवेअसक्तकहेसत्तादिगुणरहित औगुणकेभोक्ताअर्थात् सत्तादिगुणसमूहकेप्रतिपालकहैं यहभगवान अर्जुनसेकहा १४

शांकरभाष्यं

सर्व्वंसर्व्वत्रसत्बुद्ध्यनुगमान्नहि मृगतृष्णिकादयोपिनिरास्पदाभवन्त्यतःसर्व्वभृत्स र्वंबिभर्त्तीदूति स्यादिदञ्चान्यत् ज्ञेयस्यसत्त्वाधिगमद्वारंनिर्गुणंसत्त्वरजस्तमांसिगुणा स्तैर्वर्जितंतत्ज्ञेयं तथापिगुणभोक्तृचगुणानांसत्त्वरजस्तमसांशब्दादिद्वारेणसुख दुःखमोहाकारपरिणतानांभोक्तृचोपलब्धृतत्ज्ञेयमित्यर्थः १४

आनन्दगिरिकृतटीका ।

आरोपादृतेसाक्षादेवज्ञेयस्यपाण्यादिमत्वमाशंक्याह उपाधीति इन्द्रियवि शेषणीभूतसर्व्वशब्दात्ज्ञेयोपाधित्वन्यायविशेषाच्चान्नबुद्ध्यादेरपिग्रहणमित्याह अ न्तःकरणेचेति श्रोत्रादीनांज्ञेयोपाधित्वस्यमनोबुद्धिद्वारत्वादपि तयोरिहग्रहण मित्याह अपिचेति तयोरपीहोपादानेफलितमाह इत्यतइति अक्षरार्थमुक्त्वावा क्यार्थमाह सर्वेति उपाधिद्वाराकल्पितव्यापारवत्वेमानमाह ध्यायतीति कल्पि तमेवास्यव्यापारवत्वंनवास्तवमित्यत्रभगवतोपिसम्मतिमाकांक्षाद्वारादर्शयति कस्मा दित्यादिना सर्वकरणराहित्येफलितमाह अतइति साक्षादेवज्ञेयस्यवेगवद्विहरणा दिक्रियावत्तायां मान्त्रवर्णिकत्वात्कुतोस्यकरणव्यापारैर्व्यापारैर्व्याप्टत्वमित्या शङ्क्यानुवादपूर्व्वकं मन्त्रस्यप्रकृतानुगुणत्वमाह यस्त्विति करणगुणानुगुण्यअजनम न्तरेणसाक्षादेवजवनादिक्रियावत्वप्रदर्शनपरत्वे मन्त्रस्यमुख्यार्थत्वंस्यादित्याशंक्य तदसम्भवान्नैवमित्याह अन्धइति अर्थवादस्यश्रुतेर्यैतात्पर्य्याभावान्नप्रकृतप्रतिकूलेने त्यर्थः सर्वकरणराहित्यंतद्व्यापारराहित्यस्योपलक्षणमित्यङ्गीकृत्योक्तमेवहेतुंकृत्वाव स्तुतःसर्व्ववर्जितत्वमाह यस्मादिति वस्तुतःसर्व्वसङ्गाभावेपिसर्व्वाधिष्ठानत्वमाह य द्यपीति स्वसत्तामात्रेणाधिष्टानतयासर्व्वंपुष्णातीत्येतदुपपादयति सदिति त्रिम तंसति कल्पितंप्रत्येकंसदनुविद्धधीवोध्यत्वात् प्रत्येकञ्चन्द्रभेदानुविद्धधीवोध्यञ्चन्द्रभे दवदित्यर्थः सर्वंसदास्पदमित्ययुक्तं मृगतृष्णिकादीनां तदभावादित्याशंक्याह न हीति तेषामपिकल्पितत्वेननिरधिष्टानत्वायोगान्निरूप्यमाणे तदधिष्टानंसदेवेति सर्वस्यसति कल्पितत्वमविरुद्धमित्यर्थः सर्वाधिष्टानत्वेनज्ञेयस्यब्रह्मणोऽस्तित्वमुप संहरति अतइति इतश्चज्ञेयंब्रह्मास्तीत्याह स्यादिदञ्चेति नहि तस्योपलब्धृत्व मसत्त्वमसत्त्वेसिध्यतीत्यर्थः १४

स्वामिकृतटीका

किञ्च सर्वेन्द्रियेति सर्वेषांचक्षुरादीनामिन्द्रियाणांगुणेषुरूपाद्याकारिवृत्तिषु

वहिरन्तश्चभूतानामचरंचरमेवच सूक्ष्मत्वात्तदविज्ञेयंदूरस्थंचान्तिकेचतत् १५

## शाङ्करभाष्यं।

किञ्च वहिरन्तरिति वहिस्त्वक्पर्यन्तंदेहमात्मत्वेनाविद्याकल्पितमपेक्ष्यतमेवाव धिंकृत्वावहिरुच्यतेतथाप्रत्यगात्मानमपेक्ष्यदेहमेवावधिंकृत्वान्तरुच्यतेवहिरन्तश्चेत्यु क्तेमध्येऽभावेप्राप्तइदमुच्यते अचरमेवचयच्चराचरंदेहाभासमपितदेवज्ञेयं यथारज्जु सर्पाभासंयद्यचरञ्चरमेवचव्यवहारविषयंसर्वंज्ञेयं किमर्थमिदमितिसर्वैर्न ज्ञेयमि त्युच्यतेसत्यं सर्वाभासंतथापिव्योमवत्सूक्ष्मम्अतःसूक्ष्मत्वात्स्वेनरूपेणतत्ज्ञेयमप्यवि ज्ञेयमविदुषांत्वात्मैवेदंसर्वंब्रह्मैवेदंसर्वमित्यादिप्रमाणतोहिसम्विज्ञातंअविज्ञातत या दूरस्थंवर्षसहस्रकोट्याप्यविदुषामप्राप्यत्वादन्तिकेचतदात्मत्वात् विदुषां १५

## आनन्दगिरिकृतटीका

इतोपिज्ञेयंब्रह्मास्तीत्याह किञ्चेति वहिरिति व्याख्येयमादायव्याचष्टे त्वगिति भूतेभ्योवहिर्वाह्यंविषयाद्यात्मकमित्यर्थः कथमनात्मएवात्मत्वंकल्पनयेत्याह आत्मत्वे नेति अन्तःशब्दार्थमाह तथेति भूतानाञ्चराचराणामन्तर्मध्ये प्रत्यगभूतमित्यर्थः द्वि

## स्वामीकृतटीका

तत्तदाकारेणाभासतइति तथासर्वेन्द्रियाणिगुणांश्चतत्तद्विषयानाभासयतीतिवा सर्वैरिन्द्रियैर्विवर्जितञ्च तथाचश्रुतिः अपाणिपादोजवनोग्रहीतापश्यत्यचक्षुःस शृणोत्यकर्णइत्यादि असक्तःसङ्गशून्यःतथापिसर्वंविभर्त्तीतिसर्वभृत्सर्वस्याधारभूतं तदेवनिर्गुणंसत्त्वादिगुणरहितंगुणभोक्तृच गुणानांसत्त्वादीनांभोक्तृपालकं १४

## भाषाअनुवाद।

औरजैसेसुवर्णकेकार्यकड़ाकंगनकुण्डलआदिआभूषणोंमेसोनाउपादानकारणरू पसेभीतरवाहरवर्त्तमानहै औरजैसेजलतरंगमेभीजलछोडिऔरनहीहै तथाआ काशजैसेसकलवस्तुकेवहिरन्तरवर्त्तमानहै तैसेहीब्रह्मकेकार्यस्वरूपचराचरादि भूतसमूहमे अन्तरवाहिरभीसोईब्रह्महीवर्त्तमानहैं क्योंकि तावतकार्यकेकारण सोईब्रह्महैं परन्तुऐसेहोकरभीरूपादिविहीनहेतुसे यह इतनाऐसेस्पष्टरूपजान वेयोग्यनहींहै औरयहीब्रह्मअज्ञानियोंकोलक्षयोजनकेसमानदूरहै क्योंकि विकारसहितजोप्रकृतितिससेपरहै औरज्ञानियोंकोअपरोक्षरूपसेनियनिकट है सूक्ष्मताकेकारणअज्ञानियोंकोअविज्ञेय औवेदशास्त्रमार्गसेचलनेवालेज्ञा नियोंकोविज्ञेयहै अर्थात् जानवेयोग्यहै आकाशकेसमान इसकोभीजानो १५

## शाङ्करभाष्यं।

किञ्च अविभक्तमिति अविभक्तञ्च प्रतिदेहं व्योमवत् तदेकं भूतेषु सर्वप्राणिषु विभक्तमिव
च स्थितं देहेष्वेव विभाव्यमानत्वात् भूतभर्त्तृ च भूतानि विभर्त्तीति तत् ज्ञेयं भूतभर्त्तृ च स्थि
तिकाले प्रलयकाले ग्रसिष्णु ग्रसनशीलं उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं यथा रज्वा
दिः सर्पादेर्मिथ्याकल्पितस्य १६ किञ्च सर्वत्र विद्यमानं सन्नोपलभ्यते चेत् ज्ञेयं तमस्त

## आनन्दगिरिकृतटीका।

तीयं पादमवतार्य व्याचष्टे वहिरित्यादिना यच्च भूतात्मकं नानाविधदेहात्मना भास
मानं तदपि ज्ञेयान्तर्भूतं न त्वसदित्यर्थः कथञ्चराचरात्मनो भूतजातस्य ज्ञेयत्वं तत्राह
यथेति अधिष्ठाने रज्वां कल्पितसर्पादेरन्तर्भाववद्देहाभासस्यापि ज्ञेयान्तर्भावान्नासत्वं
मध्ये ज्ञेयस्य शङ्कितव्यमित्यर्थः सर्वात्मकञ्चेत् ज्ञेयं सर्वैरिदमितिकिमिति न गृह्य
तेतिशङ्कते यदीति इदमिति ग्राह्यत्वयोग्यत्वाभावान्नेत्याह उच्यतइति सर्ववस्त्वात्म
नाभासतस्तदयोग्यत्वं कथमित्याशंक्याह सत्यमिति सूक्ष्मत्वेपि किं स्यादित्याशंक्याह ख
तइति सूक्ष्मत्वमतीन्द्रियत्वं तस्याविज्ञेयत्वे कुतस्तज्ज्ञानान्मुक्तिस्तत्राह अविदुषामिति
विशेषणफलमाह विदुषान्त्विति विदुषां हि तेषामात्मत्वेन ज्ञातञ्चेत् कथं दूरस्थत्वमि
त्याशंक्याह अविज्ञाततयेति कथं तर्हि तस्य प्रत्यक्त्वं तत्राह अन्तिके चेति विद्वदविद्वद
पेक्षया दूरात् सुदूरे तदिहान्तिके चेति श्रुतिः तदर्थोन प्रसंगादनूदित इत्यर्थः १५
ज्ञेयस्यास्तित्वे हेत्वन्तरमाह किञ्चेति तद्धि प्रतिदेहं नभोवदेकं तद्धि देहाना
मावात् भिन्नत्वे च घटवदनात्मत्वापातादतोऽद्वितीयं सर्वत्र प्रत्यग्भूतं ज्ञेयं नास्तीत्यति
साहसमित्याह अविभक्तञ्चेति कतं तर्हि देहभेदधीरित्याशंक्य कल्पनयेत्याह भू
तेष्विति तत्र हेतुः देहेष्विति कार्याणां स्थितिहेतुत्वाच्च ज्ञेयमस्तीत्याह भूतेति नि

## स्वामिकृतटीका।

किञ्च वहिरिति भूतानां चराचराणां स्वकार्याणां वहिश्चान्तश्च तदेव सुवर्णमिव
कटककुण्डलादीनां जलतरङ्गानामन्तर्वहिर्जलमिव अचरं स्थावरं चरञ्च जङ्गमं भूत
जातं तदेव कारणात्मकत्वात् कार्यस्य एवमपि सूक्ष्मत्वात् रूपादिहीनत्वात्तदविज्ञेयं दूरं
तदिति स्पष्टज्ञानार्हं न भवति एतदविदुषां योजनलक्षान्तरितमिव दूरस्थञ्च सविका
रायाः प्रकृतेः परत्वात् विदुषां पुनः प्रत्यगात्मत्वादन्तिके च तत् नित्यसन्निहितं तथा च
मन्त्रः तदेजति तन्नैजति तद्दूरे तदन्तिके तदन्तरस्य सर्वस्य तदु सर्वस्यास्य वाह्यतइति
एजति चलति नैजति न चलति तत् उ अन्तिके इति च्छेदः १५ किञ्च अविभक्त

अविभक्तञ्चभूतेषुविभक्तमिवचस्थितं भूतभर्तृचतज्ज्ञेयंग्रसिष्णुप्रभविष्णुच १६

## शाङ्करभाष्यं।

हिंनकिंतर्हिज्योतिषामपीति ज्योतिषामादित्यादीनामपितज्ज्ञेयंज्योतिरात्मचैत न्यज्योतिषेद्धानिहिआदित्यादीनिज्योतींषिदीप्यन्तेयेनसूर्य्यस्तपतितेजसेद्धस्तस्यभास सर्वमिदंविभातीत्यादिश्रुतिभ्यःस्मृतेश्च इहैवयदादित्यगतंतेजइत्यादे स्तमसोऽज्ञाना त् परमस्पृष्टमुच्यते ज्ञानमिति ज्ञानादेर्दुःखाद्यनवुद्ध्याप्राप्तावसादस्योत्तंभनार्थ माहज्ञानममानित्वादिज्ञेयंज्ञेयंयत्तत्प्रवक्ष्यामीत्यादिनोक्तंज्ञानगम्यंज्ञेयमेवज्ञातं सत्ज्ञानफलमिति ज्ञानगम्यमुच्यतेज्ञायमानन्तज्ज्ञेयंतदेतत्त्रयमपिहृदिबुद्धौसर्वस्य प्राणिजातस्यविष्ठितंविशेषेणस्थितं१७ तत्रैवंहिएवंविभाव्यतेयथोक्तार्थोपसंहारार्थो

## आनन्दगिरिकृतटीका

भिन्नोपादानतयातेषांप्रलयेप्रभवेचकारणत्वाच्चतदस्तीत्याह प्रलयेति तर्हिकार्य्यका रणत्वस्यवस्तुत्वान्नाद्वैतमित्याशंक्याह यथेति १६ इतोपिज्ञेयस्यास्तित्वमित्याह किञ्चेति केवलमस्येत्यवगमयितुंशङ्कयति सर्वत्रेति नतत्तमोमन्तव्यमित्याह नेति तर्हिकिन्तत्स्वरूपमितिपृच्छति किंतर्हीति तत्रोत्तरंज्योतिषामिति सूर्या दीनांबुद्ध्यादीनाञ्चप्रकाशकत्वात्अस्तिज्ञेयमस्त्येत्याह ज्योतिषामिति तदेवोपपा दयति आत्मेति तत्रश्रुतिद्वयंप्रमाणयति येनेति उक्तेऽर्थेवाक्यशेषमपिदर्शयति स्मृते श्चेति ज्ञेयस्यात्मनःतमस्त्वेपितमश्रस्पृष्टत्वमाशंक्योक्तं तमसइति उत्तराद्धस्यतात् पर्य्यमाह ज्ञानादिरिति उत्तम्भनमुद्दीपनंप्रकटीकरणमितियावत् ज्ञानममानि

## स्वामिकृतटीका

किञ्च अविभक्तमिति भूतेषुस्थावरजङ्गमात्मकेष्वविभक्तंकारणात्मनाऽभिन्नंका र्य्यात्मनाविभक्तंभिन्नमिवस्थितंच समुद्रात्जातंफेनादिसमुद्रादन्यन्नभवति तत् स्व रूपमेवोक्तं ज्ञेयंभूतानांभर्तृचपोषकंस्थितिकाले प्रलयकालेच ग्रसिष्णुग्रसनशी लं सृष्टिकालेच प्रभविष्णु नानाकार्य्यात्मनाप्रभवनशीलं १६

## भाषाअनुवाद

औरइसअध्यायकेबारहवेंश्लोकसेकहाजोज्ञेयमदवाच्यब्रह्मभूताख्य सोस्थावरज ङ्गमसमूहमे अविभक्तअर्थात्कारणरूपसेअभिन्न औरकार्यरूपसेसमुद्र फेनकेसमा नभिन्नवर्त्तमानहै औरसमस्तभूतोंकेभर्त्ता अर्थात्स्थितिकालमेप्रतिपालक औप्र लयमेसंहारक तथासृष्टिकालमे स्वयंआप नानाकार्यरूपसे प्रगटहोतेहैं १६

ज्योतिषामपितज्ज्योतिस्तमसःपरमुच्यते ज्ञानंज्ञेयंज्ञानगम्यंहृदिसर्वस्यविष्ठितं१७

शाङ्करभाष्यं।

यंश्लोकआरभ्यतेइतिक्षेत्रमितिइत्येवंक्षेत्रंमहाभूतादिधृत्यन्तंतथाज्ञानममानित्वादित
त्त्वज्ञानार्थदर्शनपर्य्यन्तंज्ञेयञ्चज्ञेयंयत्तदित्यादितमसःपरमुच्यतइत्येवमन्तमुक्तं स
मासतः संक्षेपत एतावान्सर्वोहिवेदार्थोगीतार्थश्चोपसंहृत्योक्तोस्मिन्सम्यक्दर्शने
कोधिक्रियतइत्युच्यते मद्भक्तोमयीश्वरेसर्वज्ञेपरमगुरौवासुदेवेसमर्पितसर्वात्मभा
वेयत्पश्यति शृणोति स्पृशतिवा सर्वमेवभगवान्वासुदेवइत्येवंग्रहाविष्टबुद्धिर्मद्भक्तः
सन् एतत्यथोक्तंसम्यक्दर्शनंविज्ञायमद्भावायममभावोमद्भावः परमात्मभावस्तस्मैप
रमात्मभावायोपपद्यते युज्यते घटते मोक्षंगच्छति १८ तत्रसप्तमेईश्वरस्यद्वे

आनन्दगिरिकृतटीका।

त्वादिकरणव्युत्पत्तेरविशेषः ज्ञानगम्यंज्ञेयमितिपुनरुक्तिंशङ्कित्वोक्तं ज्ञेयमिति
उक्तात्रयस्यबुद्धिस्थतयाप्राकट्यंप्रकटयति तदेतदिति १७

स्वामिकृतटीका।

किञ्च ज्योतिषामपीति ज्योतिषांसूर्य्यादीनामपि तत्ज्योतिःप्रकाशकंयेनसू
र्य्यस्तपतितेजसेद्धःनतत्रसूर्य्योभाति नचन्द्रतारकं नेमाविद्युतोभान्तिकुतोऽयमग्निस्त
मेवभान्तमनुभातिसर्वं तस्यभासासर्वमिदंविभातीत्यादिश्रुतेः अतएवतमसोऽज्ञा
नात्परंतेनासंस्पृष्टमुच्यते आदित्यवर्णंतमसःपरस्तादित्यादिश्रुतेः ज्ञानञ्चतदेव
बुद्धिवृत्तावभिव्यक्तं तदेवरूपाद्याकारेणज्ञेयञ्चज्ञानगम्यञ्चतदेवअमानित्वादिलक्ष
णेनपूर्वोक्तज्ञानसाधनेनप्राप्यमित्यर्थःज्ञानगम्यंविशिनष्टि सर्वस्यप्राणिमात्रस्यहृदिवि
शेषेणप्रच्युतस्वरूपेणनियन्तृतयास्थितं धिष्ठितमितिपाठेअधिष्ठायस्थितमित्यर्थः१७

भाषा अनुवाद

औरसोब्रह्म जोतिरूपजोसूर्यचन्द्रतारागणविद्युतऔअग्नि इनसबकाजोति
कहेप्रकाशकहैं जिससेयेसबप्रकाशमानहैं औरयेसबजिसब्रह्मकोनहींप्रकाश
करिसकतेहैं ऐसेब्रह्मसेयहसमस्तजगतप्रकाशितहै यहश्रुतिकहतीहैं इसी
से तमजोअज्ञानतिससेपरहै अर्थात्अज्ञानका लेशभीवहांनहींहै आदित्यवर्ण
स्तमसःपरस्तात् इसश्रुतिनेकहाहै औरसोईब्रह्मबुद्धिवृत्तिमे ज्ञानरूपप्रगटहै
औरसोईरूपादिआकाररूपसे ज्ञेयकहेज्ञानयोग्यहै औरज्ञानगम्यअर्थात् पूर्वो
क्तअमानित्वआदिलक्षण ज्ञानकेसाधनोंसेप्राप्यहै क्योंकि प्राणीमात्रकेहृदयमे
नियन्ता अन्तर्यामी चेतनरूपसे स्थितहै इसकोज्ञानदृष्टिसेदेखो १७

इतिक्षेत्रंतथाज्ञानंज्ञेयञ्चोक्तंसमासतः मद्भक्तएतद्विज्ञायमद्भावायोपपद्यते १८

शाङ्करभाष्यं

प्रकृतीउभन्यस्तेपरापरेक्षेत्रक्षेत्रज्ञलक्षणेएतद्योनीनि भूतानीतिचोक्तं च क्षेत्र न ज्ञप्रकृतिद्वयजोनित्वकथंभूतानामित्ययमर्थोऽधुनोच्यते प्रकृतिमिति प्रकृतिपुरुष श्चैवेश्वरस्यप्रकृती तौप्रकृतिपुरुषावुभावप्यनादी नविद्यतेआदिर्ययोस्तावनादी

आनन्दगिरिकृतटीका ।

तत्रानुभवमनुकूलयति तत्रैवेति तमर्थंशुद्धमर्थंसविकारंक्षेत्रं पदवाक्यार्थविवेक साधनञ्चामानित्वादितत्पदार्थञ्चशुद्धंतद्भावोतत्ययमुक्तातेषांफलमुपसंहरति यथो क्तेति पूर्वार्द्धंविभजते इत्येवमिति वक्तव्यान्तरेसति किमितिनितयमेवसंक्षिप्योप हृतंतत्राह एतावानिति उत्तरार्द्धमाकांक्षाद्वारावतारयति अस्मिन्निति ईश्वरेस मर्पितसर्वात्मभावमेवाभिनयति यत्पश्यतीति विज्ञाय लब्ध्वेत्यर्थः १८

प्रकृतिमित्यादि वक्ष्यमाणमनन्तरपूर्वग्रन्थसम्बन्धीत्याशंक्यव्यवहितेनसम्बन्धा र्थंव्यवहितमनुवदति तत्रेति तयोश्चप्रकृत्योरपिप्रकृत्योरुक्तभूतकारणत्वमित्याह एतदिति भूतानामिवप्रकृत्योरपिप्रकृत्यन्तरापेक्षाभूतयोनित्वेतिशङ्कते क्षेत्रेति तत्राकृताभ्यागमादिवारणाय बन्धस्यनिदानज्ञानार्थमात्मनोविक्रियावत्त्वादृष्टोपनि रासार्थञ्चप्रकृतिपुरुषयोरनादित्वं क्षेत्रत्वेनोक्तांप्रकृतिं प्रकृतिविकारभावत्वञ्च दर्शयति अयमर्थइति सचयोयत्स्वभावश्चेत्युद्दिष्टंव्याचष्टे प्रकृतिमिति ईश्वरस्याप राप्रकृतिशब्देनोक्ता परातु प्रकृतिर्जीवाख्यापुरुषशब्देन विवक्षितेति व्याकरोति

स्वामिकृतटीका ।

उक्तंक्षेत्रादिकमधिकारिफलसहितमुपसंहरति इतीति इत्येवंक्षेत्रंमहाभू तादिधृत्यन्तं तथाज्ञानञ्चअमानित्वादितत्त्वज्ञानार्थदर्शनान्तं ज्ञेयञ्चअनादिमत्प रंब्रह्मेत्यादि विष्ठितमित्यन्तं वशिष्ठादिभिर्विस्तरेणोक्तं सर्व्वमपिमयासंक्षेपेणोक्तं एतच्चपूर्वाध्यायोक्तलक्षणोमद्भक्तवाय ब्रह्मत्वायोपपद्यते योग्योभवति १८

भाषाअनुवाद ।

अबअधिकारी औफलसहित कहाजोक्षेत्रादि उसकातात्पर्यकहतेहैं किइस अध्यायकेपंचयेश्लोकसेलेकर औरसत्रहेंतक गेयस्वरूप जोवसिष्ठादिऋषियोंनेवि स्तारसेकहाहै सोसबमैनेंसंक्षेपसेकहा सोमेरेभक्त यहजानिकरिके ब्रह्मताकीप्रा प्तिहोनेकेयोग्यहोतेहैं अर्थात्मेरेभावकोपावतेहैं अर्जुनसोतुमजानो १८

प्रकृतिंपुरुषञ्चैवविद्ध्यनादीउभावपि विकारांश्चगुणांश्चैवविद्धिप्रकृतिसम्भवान् १९

### शाङ्करभाष्यं

नित्यत्वादीश्वरस्यतत्प्रकृत्योरपि युक्तंनित्यत्वेनभवितुंप्रकृतिद्वयत्त्वमेवहि ईश्वरस्येश्वरत्वंयाभ्यांप्रकृतिभ्यांईश्वरोजगदुत्पत्तिस्थितिप्रलयहेतुस्तेद्वेअनादीसत्यौसंसारस्यकारणंनआदीअनादीइति ततपुरुषसमासंकेचिद्वर्णयन्ति तेनहिकेवलेश्वरस्यकारणत्वंसिध्यति यदिपुनःप्रकृतिपुरुषावेवनित्यौस्यातांतत्कृतमेवजगन्नेश्वरस्यजगतःकर्त्तृत्वंतदसत्प्राक्प्रकृतिपुरुषयोरुत्पत्तेरीशितव्याभावात् ईश्वरस्यानीश्वरत्वप्रसङ्गात् संसारस्यनिर्निमित्तत्वेनिर्मोक्षत्वप्रसङ्गात् शास्त्रानर्थक्यप्रसङ्गात् बन्धमोक्षाभावप्रसङ्गाच्च नित्यत्वेपुनरीश्वरप्रकृत्योःसर्वमेतदुपपन्नंभवेत्कथंविकारांश्चगुणांश्चैववक्ष्यमाणान्बुद्ध्यादिदेहेन्द्रियान्तान्गुणांश्चसुखदुःखमोहप्रत्ययाकारपरिणतान् विद्धिजानीहि प्रकृतिसम्भवान्प्रकृतिरीश्वरस्यविकारकारणंशक्तिःगुणात्मिकाम या सासम्भवोयेषांविकाराणांगुणानाञ्चतान्विकारान्गुणांश्चविद्धिजानीहि प्रकृतिसंभवान् प्रकृतिपरिणामान् १९ केपुनस्तेविकारागुणाश्चप्रकृतिसम्भवाःकार्येति कार्यंकारणकर्त्तृत्वेकार्यंशरीरं कारणानितत्स्थानिलयोदशदेहस्यारम्भकाणि भूतानिविषयाश्च प्रकृतिसम्भवाविकाराःपूर्वोक्ताइहकार्यग्रहणेनगृह्यन्ते गुणाश्च प्रकृतिस

### भाषाअनुवाद

चेतस्वरूपओजोजडआदिओस्वभावओजैसाइच्छादिधर्मविशिष्टसोसवपूर्व होविस्ताररूपसेकहचुके अवपूर्वअङ्गीकृतयहोच्च तजैसेइन्द्रियआदिविकारसेयुक्त औरजैसेप्रकृतिपुरुषसंयोगसेप्रगटहोयहैं औजिसप्रकारस्थावरजंगम आदिभेदसेभिन्नभिन्नस्वरूपहोवहै औरसोईचेतनजोस्वरूपऔजैसेप्रभावविशिष्टहैंसोसवप्रकृतिपुरुषकोसंसारहेतुत्व कहनेकेद्वारापांचस्लोकसेविस्ताररूपकहतेहैं किसोईप्रकृति औपुरुषदोनोअनादिहैं जोइनकाकारणऔरढूंढोगेतोअनवस्थादोषपडेगाअर्थातउसाकारणतिसकाकारणऐसेठिकानानलगैगाइससेसोइप्रकृतिपुरुषकोअनादिजानोतोईश्वरशक्तिप्रकृतिभीअनादिहै औईश्वरकाअंशभूतपुरुषभीअनादिहै औरदेहइन्द्रियआदिविकारतथागुणरूपपरिणामकोप्राप्तजोसुखदुखमोहआदिसोसवप्रकृतिसेहोतेहैंयहजानो परमेश्वरऔतदीयशक्तियोंकोअनादित्वभाष्यकारश्रीशङ्कराचार्यनेविस्तारसेकहा इससेइहांग्रन्थवढनेकेडरसेमैनेनहीं कहादेहइन्द्रीसुखदुखसवप्रकृतिहीकेकार्यहैं १९ भगवानश्रीकृष्णजीसकलविकारप्र

## शाङ्करभाष्यं

भवाः सुखदुःखमोहात्मकाः कारणाश्रयत्वात् कारणग्रहणेनगृह्यन्ते तेषां कार्यकारणानांकर्तृत्वमुत्पादकत्वं यत्तत् कार्यकारणकर्तृत्वं तस्मिन्कार्यकारणकर्तृत्वेहेतुःकारणमारम्भकत्वेनप्रकृतिरुच्यतेएवंकार्यकारणकर्तृत्वेनसंसारस्यकारणंप्रकृति कार्यकारणयोःकर्तृत्व इत्यस्मिन्नपिपाठेकार्यंयद्यस्यविपरिणामन्तत्तस्यकार्यंविकारः

## आनन्दगिरिकृतटीका

ईश्वरस्येति तयोरनादित्वं व्युत्पादयति नेत्यादिना तत्रयुक्तिमाह नित्यत्वादीश्वरस्येति ईश्वरस्योक्तप्रकृतिद्वयवत्त्वं कथमित्याशंक्याह प्रकृतीति तस्यजगज्जन्मादीश्वरत्वमेवईश्वरत्वं नप्रकृतिद्वयवत्त्वमित्याशंक्याह याभ्यामिति प्रकृत्योरनादित्वंक्वोपयुक्तमित्याशंक्याह तेइति मतान्तरमाह नेत्यादिना तयोर्मूलकारणत्वाभावेकस्यतदेष्टव्यमित्याशंक्याह तेनहीति प्रकृत्योरेवमूलकारणत्वेश्रुतिस्मृतिसिद्धमीश्वरस्यतथात्वंन स्यादित्याह यदीति प्रकृतिद्वयस्यकार्यत्वपक्षं प्रत्याह तदासदिति किञ्चप्रकृतिद्वयमनपेक्ष्यईश्वरस्यसंसारहेतुत्वेस्यातन्त्रान्मुक्तानामपिततःसंसाराप्तेरनिषेधान्मोक्षशास्त्रप्रामाण्यान्नतस्यैवसंसारहेतुतेत्याह संसारस्येति निर्निमित्तत्वं प्रकृतिद्वयापेक्षान्तरेपरस्यैवनिमित्तत्वमितियावत् किञ्चकार्यत्वेप्रकृत्योस्तदुदयात्पूर्वं बन्धाभावेतद्विश्लेषात्मनोमोक्षस्याभावात् कदाचिदुभयाभावेपुनस्तदप्रसङ्गान्नप्रकृतिद्वयस्यकार्यतेत्याह बन्धेति प्रकृत्योर्मूलकारणत्वेनानुपपत्तिरित्याह नित्यत्वइति स्वपक्षेदोषाभावंप्रश्नपूर्वकंप्रपञ्चयति कथमित्यादिना सम्भवःसत्ताप्रापकोहेतुः प्रकृतेरनादित्वेविकाराणांगुणानाञ्चतत् कार्यत्वादात्मनोनिर्विकारत्वंनिर्गुणत्वञ्चसिध्यतीतिभावः १९ विकाराणांगुणानांप्रकृतेश्चस्वरूपमाकांक्षाद्वारानिर्णेतुमुत्तरश्लोक

## स्वामिकृतटीका।

तदेवं तत्क्षेत्रंयच्चयादृक्चेत्येतावत्प्रपञ्चितमिदानीन्तु यद्विकारियतश्चयत्सचयोयत्प्रभावश्चेत्येतत् पूर्वंप्रतिज्ञातमेप्रकृतिपुरुषयोः संसारहेतुत्वकथनेनप्रपञ्चयतिप्रकृतिमितिपञ्चभिःतत्रप्रकृतिपुरुषयोरादिमत्त्वेतयोरपिप्रकृत्यन्तरेणभाव्यमित्यनवस्थापत्तिःस्यादतस्तावुभावनादीविद्धि अनादेरीश्वरस्यशक्तित्वात्प्रकृतेरनादित्वं पुरुषोपितदंशत्वादनादिरेव अत्रचपरमेश्वरस्यतच्छक्तीनाञ्चानादित्वं श्रीमच्छङ्करभगवत्पादैःस्फुटीकृतंभगवत्पूज्यपादैर्ग्रन्थवाहुल्यान्नास्माभिःप्रपंच्यते विकारांश्च देहेन्द्रियादीन्गुणांश्चगुणपरिणामान्सुखदुःखमोहादीन्प्रकृतेःसंभूतान्विद्धि १९

शाङ्करभाष्यं

विकारिकारणंतयोर्विकारविकारिणोःकार्य्यकारणयोःकर्त्तृत्वइति तान्येवकार्यकारणान्युच्यन्तेअथवाषोडशविकाराःकार्यंसप्तप्रकृतिविकृतयःकारणान्तान्येव कार्य्यकारणानिउच्यन्ते तेषांकर्त्तृत्वेहेतुःप्रकृतिरुच्यतेआरम्भकत्वेनैवपुरुषश्चसंसारस्यकारणंयथास्यात्तदुच्यते पुरुषःजीवःक्षेत्रज्ञःभोक्ताइतिपर्यायः सुखदुःखानां भोग्यानांभोक्तृत्वउपलब्धृत्वेहेतुरुच्यते कथंपुनरनेनकार्यकारणकर्त्तृत्वेनसुखदुःखभोक्तृत्वेनचप्रकृतिपुरुषयोःसंसारकारणत्वमुच्यतइति अत्रोच्यतेकार्य्यकारणसुखदुःखरूपेणहेतुफलात्मनाप्रकृतेःपरिणामाभावेपुरुषस्यचैतन्यस्यासतितदुपलब्धृत्वेकुतः संसारःस्यात्यदापुनःकार्यैःकारणहेतुफलात्मनापरिणततयातयाप्रकृत्याभोग्ययापुरुषस्यतद्विपरीतस्यभोक्तृत्वेनाविद्यारूपःसंयोगःस्यात्तदासंसारःस्यादित्यतोयत्प्रकृतिपुरुषयोःकार्य्य कारणकर्तृत्वे नसुखदुःखभोक्तृत्वे नचसंसारकारणत्वमुक्तं तत्युक्तमुक्तं कःपुनरयंसंसारोनाम सुखदुःखसंभोगःसंसारःपुरुषस्यच सुखदुःखानांसम्भोक्तृत्वंसंसारित्वमिति २० यत्पुरुषस्यसुखदुःखानांभोक्तृत्वंसंसारित्वमित्युक्तं तस्यतत्

आनन्दगिरिकृतटीका

पूर्वार्द्धंपातयति केपुनरिति पुरुषस्यानादित्वकृतबन्धहेतुत्वमाह पुरुषइति पूर्वार्द्धं व्याचष्टे कार्य्यमित्यादिना ज्ञानेन्द्रियपञ्चकंकर्मेन्द्रियपञ्चकं मनोबुद्धिरहङ्कारश्चेति त्रयोदशकरणानि तथाभिभूतानांविषयाणाञ्चाग्रहणात्कथन्तेषांप्रकृतिकार्यतेत्याशंक्याह देहेतितथापिगुणानामिहाग्रहणान्नप्रकृतिकार्य्यत्वंतत्राह गुणाश्चेतिउक्तारीत्यानिःप्रसमर्थमाह एवमितिपाठान्तरमनूद्यव्याख्यापूर्वकमर्थभेदायाह कार्येत्यादिना व्याख्यान्तरमाह अथवेतिएकादशेन्द्रियाणिपञ्चविषयाइतिषोडशसंख्याकविकारोत्रकार्य्यशब्दार्थःमहानहंकारोभूततन्मात्राणीतिप्रकृतिविकृतयःसप्तकारणं तेषां आरम्भकत्वेनकर्त्तृत्वे नहेतुराश्रयोमूलप्रकृतिरित्यर्थः उत्तरार्द्धस्यतात्पर्यमाह पुरुषश्चेति तस्यपरमात्मत्वं व्यवच्छिनत्ति जीवइति तस्यप्राणधारणनिमित्तस्यतदर्थञ्चतत्रमाह क्षेत्रज्ञइति तस्यानौपाधिकत्वं वारयति भोक्तेति तयोःसंसारकारणत्वमुपपादयितुंशंकयति कथमिति अन्वयव्यतिरेकाभ्यांतयोस्तथात्वमित्याह अत्रेति तत्रव्यतिरेकंदर्शयति कार्येति नहिनित्यमुक्तस्यात्मनःस्वतःसंसारोस्तीत्यर्थः इदानीमन्वयमाह यदेति अन्वयादिफलमुपसंहरति अतइति आत्मनोविक्रियस्यसंसरणंनोचितमित्याक्षिपति कःपुनरिति सुखदुःखान्यतरसाक्षात्कारोभोगःसचाक्रियस्यैवदृष्ट

कार्य्यकारणकर्तृत्वेहेतुःप्रकृतिरुच्यते पुरुषःसुखदुःखानांभोक्तृत्वेहेतुरुच्यते २०

## आनन्दगिरिकृतटीका

संसारःतथाविधंभोक्तृत्वमस्यसंसारित्वमित्युत्तरमाह सुखेति स्लोकव्याख्यासमाप्ताविति शब्दः २० स्लोकान्तरंप्रश्नोत्तरत्वेनावतारयति यदिति निमित्तंवक्तुमादौसंसारित्वमस्यविद्याध्यासादित्याह पुरुषइति यस्मात्प्रकृतिमात्मत्वेनगतस्तस्मादुक्तइतियोजना गुणविषयंभोगमभिनयति सुखीति अविद्यायाभोगहेतुत्वात्किंकारणा

## स्वामिकृतटीका।

विकाराणांप्रकृतिसम्भवत्वंदर्शयन्पुरुषस्यसंसारहेतुत्वंदर्शयति कार्येति कार्यं शरीरंकारणानिसुखदुःखसाधनानीन्द्रियाणितेषांकर्त्तृत्वतदाकारपरिणामेप्रकृतिहेतुरुच्यतेकपिलादिभिः पुरुषोजीवस्तु तत्कृतसुखदुःखानांभोक्तृत्वेहेतुरुच्यते अयंभावःयद्यप्यचेतनायाःप्रकृतेःस्वतःकर्तृत्वंनसंभवति तथापुरुषस्याप्यविकारिणोभोक्तृत्वंनसम्भवति तथापिकर्त्तृत्वंनामक्रियानिर्वर्त्तकत्वंतच्चाचेतनस्यापि चेतनादृष्टवशात्चैतन्याधिष्ठितत्वात्सम्भवति यथावह्नेरूर्द्ध्वज्वलनंवायोस्तिर्य्यग्गमनं वत्साद्दृष्टवशात्स्तन्यपयसःक्षरणमित्यादि अतःपुरुषसन्निधानात्प्रकृतेःकर्त्तृत्वमुच्यते भोक्तृत्वञ्चसुखदुःखसंवेदनं तच्चचेतनधर्म्मएवेतिप्रकृतिसन्निधानात् पुरुषस्यभोक्तृत्वमुच्यतइति २० तथाप्यविकारिणोजन्मरहितस्यचभोक्तृत्वंकथमित्यत्राह पुरुषइति

## भाषा अनुवाद

सेउत्पन्नहैं यहदेखायअबपुरुषकोसंसारहोनेकाहेतुइसस्लोकसेदेखावतेहैं किकार्य्यंजोशरीरऔरकारणजोसुखदुखकेसाधनस्वरूपकहेकरनेवालीइन्द्रीसब औरइन्द्रियोंकोकर्तृत्वकहेसोसोरूपहोजानाइनसबकीकारणप्रकृतिहै यहकपिलआदिऋषियोंनेकहा औरपुरुषजोजीवसोशरीरइन्द्रीआदिकृतसुखदुखसबकाकारणस्वरूपकहाहै तात्पर्ययहकियद्यपिअचेतनप्रकृतिआपसेकुछनहींकरशकतीऔरविकारीपुरुषकोभीभोक्तृत्वकहेभोगकरनायहअसंभवहै तौभीकर्तृत्वशब्दकाअर्थयहहै किक्रियाकरनाअचेतनप्रकृतिकोभीचैतन्यरूपजीवकेअदृष्टवशतसम्भवहै जैसेअचेतनहोकेभीअग्निज्वालाकाऊर्ध्वगमनऔवायुकातिर्य्यग्गमनऔरवच्चोंको जैसे दूधरचणकरैहै तैसेहीपुरुषकीसान्निध्यकहेअवलंबसेप्रकृतिकोकर्त्तृत्वहै औरभोक्तृत्वजोसुखदुखकाज्ञान सोचेतनकाधर्महैइससेप्रकृतिसंनिधानकहेमायाकीनिकटताकोप्राप्तहोय पुरुषकोभीभोक्तृत्वकहाहै२० जोकहोकिअविकारीऔजन्मरहित

पुरुषःप्रकृतिस्थोहिभुंक्तेप्रकृतिजान्गुणान् कारणंगुणसङ्गोस्यसदसद्योनिजन्मसु२१

## शाङ्करभाष्यं

किन्निमित्तमित्युच्यतेपुरुषइति पुरुषोभोक्ताप्रकृतिस्थःप्रकृतावविद्यालक्षणायांकार्यकारणरूपेणपरिणतायांस्थितःप्रकृतिस्थःप्रकृतिमात्मत्वेनगतइत्येवंहियस्मात्तस्माद्भुंक्तेउपलभतइत्यर्थःप्रकृतिजान्प्रकृतितोजातान्सुखदुःखमोहाकाराभिव्यक्तान्गुणान्सुखीदुःखीमूढःपण्डितोऽहमित्येवंसत्यामप्यविद्यायांसुखदुःखमोहेषुगुणेषु भुज्यमानेषुयःसङ्गआत्मभावःसंसारस्य सप्रधानंकारणंजन्मनःसयथाकामोभवति तत्क्रतुर्भवतीत्यादिश्रुतेःतदेतदाहकारणहेतुर्गुणसंगःगुणेषुसंगोस्यभोक्तुःसदसद्योनिजन्मसुसतश्चासतश्च योनयःसदसद्योनयस्तासुसदसद्योनिषुजन्मानितानिसदसद्योनिजन्मानितेषुसदसद्योनिजन्मसुविषयभूतेषुकारणगुणसंगोथवासदसद्योनिजन्मस्यस्यसंसारस्यकारणंगुणसंगइतिसंसारपदमध्याहार्यंसद्योनयोदेवादियोनयःअसद्योनयःपश्वादियोनयःसामर्थ्यात्सदसद्योनयोमनुष्ययोनयोऽप्यविरुद्धाद्द्रष्टव्याःएतदुक्तंभवतिप्रकृतिस्थत्वाख्याविद्यागुणेषुचसङ्गःकामःसंसारस्यकारणमिति तच्चपरिवर्जनायोच्यतेअस्यचनिवृत्तिकारणंज्ञानवैराग्ये ससन्न्यासेगीताशास्त्रेप्रसिद्धं तच्चज्ञानंपुरस्तादुपन्यस्तंक्षेत्रक्षेत्रज्ञविषयंयत्ज्ञात्वाऽमृतमश्नुतइत्युक्तञ्चान्यापोहेनातद्धर्माध्यारोपेणच २१

## आनन्दगिरिकृतटीका

न्वेषणयेत्याशंक्याह सत्यामपीति संगस्यजन्मदौसंसारेप्रधानहेतुत्वेमानमाह सयथेति उक्तार्थेद्वितीयार्द्धमवतार्य्य व्याचष्टे तदेतदित्यादिना साध्याहारंयोजनान्तरमाह अथवेति सदसद्योनीर्विविच्यव्याचष्टे सद्योनयइति योनिद्वयनिर्देशान्मध्यवर्त्तिन्योमनुष्ययोनयोपिध्वनिताइत्याह सामर्थ्यादिति संगस्यसंसारकारणत्वेनाविद्याया.

## भाषाअनुवाद

जोआत्मा तिसकोभोक्तृत्वकहेभोगनाकैसेसंभवहैकिजिसहेतुसोईपुरुषप्रकृतिस्थ अर्थात्प्रकृतिकाकार्यजोशरीर तिसमेतदात्मरूपहोवासकरैहै इससेउसशरीरसेप्रगटजोसुखदुखआदि तिनकोभूत्रसेभोगकरैहै जैसेमनुष्यकोईवस्तुयाद्रव्यपाय अपनीकरमानि फेरिउसकेजानेसेदुखीहोताहै कहोयहांदुखकाकारणअभिमान छोडऔरक्याहै औरसतजोदेवमनुष्यजोनि औअसत्जोपशुपक्षीआदिजोनि तिनमेजोइसपुरुषकाजीवरूपजन्म सोगुणकहेशुभअशुभकर्मकारीइन्द्रीगण तिनकेसंसर्गसेहोय है संगहीऊंचीनीचीदेहधारणमे कारणरूपहै यह जानो २१

उपद्रष्टानुमन्ताचभर्त्ताभोक्तामहेश्वरः परमात्मेतिचाप्युक्तोदेहेस्मिन्पुरुषःपरः२२

## आनन्दगिरिकृतटीका ।

स्तत्कारणत्वमेकस्मादेवहेतोस्तदुपपत्तेरित्याशंक्याह एतदिति अविद्योपादानसंगो निमित्तमित्युभयोरपिकारणत्वंसिध्यतीत्यर्थः द्विविधहेतूक्तेर्विवक्षितंफलमाह त स्येति संसर्गस्याज्ञानस्य स्ततोनिवृत्तेस्तन्निवर्त्तकंवाचप्रभित्यशंक्याह अस्येति वैराग्ये सतिसंन्यासस्तत्पूर्वकम्ब्रह्मज्ञानंसासंगाज्ञाननिवर्त्तकमित्यर्थः उक्तेज्ञानेमानमाह गी तेति अध्यायादौचोक्तंज्ञानमुदाहृतमित्याह तत्रेति तदेवज्ञानंयज्ज्ञात्वेत्यादिना नसत्तन्नासतदित्यन्तेनान्यनिषेधेनसर्वतःपाणिपादमित्यादिनाचातद्धर्माध्यासेनोक्त मित्याह यज्ज्ञात्वेति २१ प्रकृतस्यैवमोक्षहेतोर्ज्ञानस्यसाक्षान्निर्देशायोत्तर

## स्वामिकृतटीका ।

द्वियस्मात्प्रकृतिस्थस्तत्कार्यदेहेतादात्म्येनस्थितःपुरुषःअतस्तज्जनितान् सुखदुःखा दीन्भुङ्क्ते अस्यचपुरुषस्यसतीषुदेवादियोनिषुअसतीषुतिर्यगादियोनिषुयानिज न्मानि तेषुगुणसङ्गोगुणैःशुभाशुभकर्मकारिभिरिन्द्रियैःसङ्गःकारणमित्यर्थः २१

## भाषा अनुवाद

उक्तरीतिसे प्रकृतिजो माया तिसकेअविवेकवशतेजीवको अहंकर्त्ता अहं भोक्ता इत्यादिकल्पितमात्रसंसारहै परविचाररूपसेतो इसजीवकोसंसारनहींहै इ सीआशापरअवपुरुषकास्वरूपकहतेहैं किइसप्रकृतिकाकार्यरूपजोशरीर तिसमे वर्त्तमानहोकेभीजीव प्रकृतिसे भिन्नकहेप्रकृतिकेगुणोंसेयुक्तनहीं उनसेअलगहै क्यों।कईश्वरअंशजीवउपद्रष्टाअर्थात्भिन्नरूपसेसमीपमेरहकरदेखनेवाला साक्षी मात्रहै औरअनुमन्ताअर्थात्समीपसम्बन्धसेअनुग्राहककहेअनुमोदनकर्त्ता मान नेवालाहै सोईश्रुतिकहतीहै किएकस्वयंप्रकाशरूपजोपरमात्मा सोभूतमात्रसेनि गूढ़भावसेस्थितहै औरसर्वव्यापीतावतप्राणीकाअन्तर्यामीहै औरसकल कर्मका नियन्ताऔभूतमात्रकाअधिष्ठानरूपऔ द्रष्टाऔसमस्तभूतोंकाचैतन्यकारीऔअद्वि तीय तथागुणोंसेअतीतकहेअलगहै औरयहपुरुषईश्वरसम्बन्धरूपसे भर्त्ताकहेपो षणकारीप्रतिपालकहै औरमहेश्वरकहेब्रह्मादिकोंकाभीअधिपतिअर्थात्स्वामीहै सोईश्रुतिहै कियहपुरुषसबकाईश्वरऔरसर्वभूतकाअधिपति तथाभूतमात्रका प्र तिपालक है २२

शाङ्करभाष्यं

तस्यैवपुनःसाक्षान्निर्देशःक्रियते उपद्रष्टेति उपद्रष्टासमीपस्थःसन्द्रष्टा स्वयम व्यापृतोयथार्त्त्विग्यजमानेषु यज्ञकर्म्मव्यापृतेषुतटस्थोन्योऽव्यापृतोयज्ञविद्याकुश लःऋत्विग्यजमानव्यापारगुणदोषाणामीक्षिता तद्वत्कार्यकारव्यापारेषु अव्या पृतोऽन्योविलक्षणस्तेषांकार्यकारणानांसव्यापाराणां सामीप्येनद्रष्टृत्वादुपद्रष्टा अ थवादेहचक्षुर्म्मनोबुद्ध्यात्मानोद्रष्टारस्तेषांवाह्योद्रष्टा देहस्ततआरभ्यान्तरतमश्चप्रत्य क्समीपेआत्माद्रष्टा यतःपरोन्तरोनास्तिद्रष्टा सोतिशयसामीप्येनद्रष्टृत्वादुपद्रष्टा स्यात् यज्ञोपद्रष्टृत्वाद्वासर्व्वविषयीकरणादुपद्रष्टाअनुमन्ताच अनुमोदनमनुमन नंकुर्व्वत्सुतत्क्रियासुपरितोषस्तत्कर्त्तानुमन्ताचाथवाअनुमन्ताकार्यकारणप्रवृत्ति षुस्वयमप्रवृत्तोपिप्रवृत्तइवतदनुकूलोविभाव्यतेतेनानुमन्ताथवाप्रवृत्तान् स्वव्यापारेषु तत्साक्षिभूतःकदाचिदपिननिवारयतीत्यनुमन्ताभर्त्ताभरणंनामदेहेन्द्रियमनोबुद्धी नांसंहतानांचैतन्यात्मपरार्थेननिमित्तभूतेनचैतन्याभासानांयत् स्वरूपावधारणं तच्चै तन्यात्मकृतमेवेतिभर्त्तात्मेत्युच्यते भोक्तात्युष्णवन्नित्यचैतन्यस्वरूपेणबुद्धेःसुखदुःखमो हात्मकाःप्रत्ययाः सर्व्वविषयविषयाश्चैतन्यात्मग्रस्ताइवजायमानाविभक्ताविभाव्यन्त इतिभोक्तात्मोच्यते महेश्वरःसर्व्वात्मत्वात्स्वतन्त्रत्वाच्चमहानीश्वरश्चेति महेश्वरःप रमात्मादेहादीनां बुध्यन्तानांप्रत्यगात्मत्वेनकल्पितानामविद्ययापरमउपद्रष्टृत्वादि लक्षणआत्मेति परमात्मासोऽतःपरमात्मेत्यनेनशब्देनचाप्युक्तःकथितः श्रुतौक्वासौअ स्मिन्देहेपुरुषःपरोव्यक्तादुत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतइतियोवक्ष्यमाणः क्षे त्रज्ञञ्चापिमाम्विद्धिइत्युपन्यस्तोव्याख्यायोपसंहृतस्तमेतंयथोक्तलक्षणमात्मानं २२

आनन्दगिरिकृतटीका

श्लोकमुत्थापयति तस्येति कार्यकारणानांव्यापारवतांसमीपेस्थितःसन्निधिमात्रेण तेषांसाक्षीत्येवमर्थत्वेनउपद्रष्टेतिपदंव्याचष्टे समीपस्थइति लौकिकस्यैवद्रष्टुरस्यापि स्वव्यापाराविष्टतयानिःक्रियत्वविरोधमाशंक्याह स्वयमिति स्वव्यापाराद्वतेसन्निधि रेवद्रष्टृत्वंदृष्टान्तेनस्पष्टयति यथेति उपद्रष्टेत्यस्यार्थान्तरमाहअथवेति बहूनांद्रष्टृत्वे पिकस्योपद्रष्टृत्वंतत्राह तेषामिति उपोपसर्गस्यसामीप्यार्थत्वेनप्रत्यगर्थत्वात्तत्रैवसा मीप्यावसानात् प्रत्यगात्माचद्रष्टाचेत्युपद्रष्टासर्व्वसाक्षीप्रत्यगात्मेत्यर्थः उक्तमेवव्यनक्ति य तइतियथायजमानस्यऋत्विजाञ्चयज्ञकर्म्मणिगुणस्वादोषस्वासर्व्वयज्ञाभिज्ञःसन्नुपद्र ष्टाविषयीकरोति तथायमात्माचिन्मात्रस्वभावःसर्व्वंगोचरयतीत्युपद्रष्टेति पक्षान्तर

शाङ्करभाष्यं

य एवमिति य एवं यथोक्तप्रकारेण वेत्ति पुरुषं साक्षादात्मभावेनायमहमिति प्रकृतिञ्च यथोक्तामविद्यालक्षणां गुणैः स्वविकारैः सह निवर्त्तितामाभासमापादितां विद्यया सर्वथा सर्वप्रकारेण वर्त्तमानोपि स भूयः पुनः पतितेऽस्मिन् विद्वच्छरीरे देहान्तराय नाभिजायते नोत्पद्यते देहान्तरं न गृह्णातीत्यर्थः अपिशब्दात् किमु वक्तव्यं स्ववृत्तस्थो न जायत इत्यभिप्रायः ननु यद्यपि ज्ञानोत्पत्त्यनन्तरं पुनर्जन्माभाव उक्तस्तथापि प्राक् ज्ञानोत्पत्तेः कृतानां कर्म्मणामुत्तरकालभाविनाञ्च यानि चातिक्रान्तान्यनेकजन्मकृतानि तेषां फलमदत्वा नाशो न युक्त इति स्युस्त्रीणि जन्मानि कृतविप्रनाशो हि न युक्त इति यथा फले प्रवृत्त

आनन्दगिरिकृतटीका

माह यश्चेति अनुमन्ता चेत्येतत् व्याकरोति अनुमन्तेति ये स्वयं कुर्व्वन्तो व्यापारवन्तो भवन्ति तेषु कुर्व्वत्सु सत्सु यास्तेषां क्रियास्तासु पार्श्वस्थस्य परितोषोऽनुमननन्तच्चानुमोदनं तस्य सन्निधिमात्रेण कर्त्तायः सोऽनुमन्तेत्यर्थः व्याख्यान्तरमाह अथवेति तदेव स्फुटयति कार्य्येति अर्थान्तरमाह अथवेत्यादिना भर्त्तेति पदमादाय भरणं किं नामेति पृच्छति भर्त्तेति तद्रूपं निरूपयन्नात्मनो भर्त्तृत्वं साधयति देहेति भोक्तेत्युक्तक्रियावस्थे प्राप्ते भोगश्चिदवसानतेतिन्यायेयमिभजते अस्तीति विशेषणान्तरमादाय व्याचष्टे महेश्वर इति परमात्मत्वमुपपादयति देहादीनामिति अविद्ययाकल्पितानामिति सम्बन्धः परमत्वं प्रकृष्टत्वं सः पूर्व्वोक्तविशेषणवानितियावत् परमात्मशब्दस्य प्रकृतात्मविषयत्वे श्रुतिमनुकूलयति अत इति तस्य तटस्थं प्रश्नद्वारा प्रत्याचष्टे क्वेति कस्मात् परत्वन्तदाह अव्यक्तादिति तत्रैव वा क्षेपानुकूल्यमाह उत्तम इति सोऽस्मिन् देहे परः पुरुष इति सम्बन्धः शोभितार्थयोरैक्यज्ञानं प्रागुक्तं कृ तोतत्यास्तोति जेवज्ञश्चेति २२

स्वामिकृतटीका।

तदनेन प्रकारेण प्रकृत्यविवेकादेव पुरुषस्य संसारो न तु स्वरूपत इत्याशयेन तस्य स्वरूपमाह उपद्रष्टेति अस्मिन् प्रकृतिकार्य्ये देहे वर्त्तमानोऽपि पुरुषः परो भिन्न एव न तद्गुणैर्युज्यत इत्यर्थः तत्र हेतवः यस्मादुपद्रष्टा पृथग्भूत एव समीपे स्थित्वा द्रष्टा साक्षीत्यर्थः तथा अनुमन्ता अनुमोदिता तत्सन्निधिमात्रेणानुग्राहकः साक्षी चेता केवलो निर्गुणश्चेत्यादि श्रुतेः तथा ऐश्वर्य्येण रूपेण भर्त्ता विधायकः भोक्ता पालक इति च महांश्चासावीश्वरश्चेति ब्रह्मादीनामधिपतिरिति च परमात्मा अन्तर्यामी चेत्युक्तः श्रुत्या तथा च श्रुतिः एष सर्व्वेश्वर एष भूताधिपतिरेष लोकपाल इत्यादि २२

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह सर्वथा वर्त्तमानोऽपि न स भूयोऽभिजायते २३

## शाङ्करभाष्यं

त्तानामारब्धजन्मनां कर्मणां न च कर्मणां विशेषोऽवगम्यते तस्मात् त्रिप्रकाराण्यपि कर्माणि क्षीणानि जन्मान्यारभेरन् संहतानि वा सर्वाण्येकं जन्मारभेरन् अन्यथा कृतविनाशे सति सर्वत्रानाश्वासप्रसङ्गः शास्त्रानर्थक्यञ्च स्यादित्यत इदमयुक्तमुक्तं न स भूयोऽभिजायत इति न क्षीयन्ते चास्य कर्माणि ब्रह्म विद् ब्रह्मैव भवति तस्य तावदेव चिरमिषीकातूलवत् सर्वकर्माणि प्रदूयन्त इत्यादिश्रुतिभ्यः उक्तो विदुषः सर्वकर्मदाहः इहापि चोक्तो यथैधांसी त्यादिना सर्वकर्मदाहो वक्ष्यति चोपपत्तेश्चाविद्याकामक्लेशबीजनिमित्तानि हि कर्माणि फलारम्भकानि जन्मान्तराङ्कुरमारभन्ते इहापि च साहङ्काराभिसन्धीनि कर्माणि फलारम्भकाणि नेतराणीति तत्र तत्र भगवतोक्तं बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनरिति अस्तु तावत् ज्ञानोत्पत्त्युत्तरकालकृतानां कर्मणां ज्ञानेन दाहो ज्ञानसहभावित्वात् न त्विह जन्मनि ज्ञानोत्पत्तेः प्राक्कृतानां ज्ञानेन दाहो नत्वतीतानामनेकजन्मान्तरकृतानां दाहो युक्तः न सर्वकर्माणीति विशेषणात् ज्ञानोत्तरकालभाविनामेव सर्वकर्मणामिति चेन्न संकोचत्वे कारणानुपपत्तेः यत्तूक्तं यथा वर्त्तमानशरीरजन्मारम्भकाणि कर्माणि न क्षीयन्ते फलदानाय प्रवृत्तान्येव सत्यपि ज्ञाने तथा अनारब्धफलानामपि कर्मणां क्षयो न युक्त इति तदसत् कथं तेषां मुक्तेषुवत् प्रवृत्तफलत्वात् यथा पूर्वं लक्ष्यवेधाय मुक्त इषुर्धनुषो लक्ष्यवेधोत्तरकालमप्यारब्धवेगक्षयात् पतनेनैव निवर्त्तते एवं शरीरारम्भकं कर्म शरीरस्थितिप्रयोजने निवृत्तेऽप्यासंस्कारवेगक्षयात् पूर्ववद्वर्त्तत एव यथा स एवेषुः प्रवृत्तिनिमित्तानारब्धवेगस्त्वमुक्तो धनुषि प्रयुक्तोऽप्युपसंह्रियते तथा नारब्धफलानि कर्माणि स्वाश्रयस्थान्येव ज्ञानेन निर्बीजीक्रियन्त इति पतति तस्मिन् विद्वच्छरीरे न स भूयोऽभिजायत इति युक्तमेवोक्तमिति सिद्धं २३

## भाषाअनुवाद

ऐसो जो प्रकृति औ पुरुष तिनके विवेक के ज्ञानवान मनुष्यों की प्रशंसा करते हैं कि जो लोग ऐसे उपद्रष्टारूप पुरुष को जानते हैं तथा प्रकृति को औ प्रकृति के गुणरूप परिणामको अर्थात् कहे रूपान्तरको प्राप्त सुखदुखसहित को जानि सके हैं ते ई मनुष्य संसार में रहते सम्पूर्ण विधिको उल्लंघन कर के भी पुनर्जन्मग्रहण नहीं करते मुक्त ही होते हैं यह जानो २३ ऐसी जो प्रकृति तिससे भिन्न जो आत्मा तिसके ज्ञान होने के विषय में अनेक

## आनन्दगिरिकृतटीका।

यथोक्तेनप्रकारेणजीवेश्वरादिसर्वकल्पनाधिष्ठानत्वेनेत्यर्थः साक्षादपरोक्षत्वेनेति
यावत् यथोक्तामनाद्यनिर्वाच्यांसर्वानर्थोपाधिभूतामित्यर्थः विद्ययाप्रागुक्तैकत्वगोच
रयाप्रकृतिमविद्यारूपांसकार्य्यामभावमापादितांयोवेत्तीति सम्बन्धः सर्वप्रकारेण
विहितेननिषेधेनचेत्यर्थः पुनर्नकारोऽन्वयार्थः निपातसूचितंन्यायमाह अपीति नसम्भ
वोऽस्मिजायतइत्युक्तमाक्षिपति नन्विति ज्ञानोत्पत्तेरनन्तरंजन्माभावस्योक्तत्वात्पुनर्दे
हारम्भमुपेत्यनाक्षेपः स्यादित्याशङ्क्याह यद्यपीति तथापित्रीणिजन्मानीतिसम्बन्धः
वर्त्तमानेदेहेज्ञानात्पूर्वोत्तरकालीनानांकर्मणांफलमदत्वानाशायोगाज्जन्मद्वयमाव
श्यकमतीतानेकदेहेष्वर्पिकृतकर्मणामभुक्तंक्षीयतेकर्मेतिस्मृतेः अदत्वाफलमनाशा
दस्तितृतीयमपिजन्मेत्याह प्रागिति फलदानमविनापिकर्मनाशेदोषमाह कृतेति
नयुक्तइतिकृत्वाफलमदत्वाकर्मनाशोनेतिशेषः विमतानिकर्माणिफलमदत्वा नक्षीय
न्तेवैदिककर्मत्वादारब्धकर्मवदितिमत्वाह यथेति नाशोनज्ञानादितिशेषः नन्वना
रब्धकर्मणांज्ञानान्नाशोयुक्तोऽप्रवृत्तफलत्वादारब्धकर्मणान्तुप्रवृत्तफलवत्वेन बलव
त्वान्नज्ञानात्तन्निवृत्तिरित्याह नचेति अज्ञानोत्थत्वेनज्ञानविरोधित्वाविशेषात् प्रवृ
त्ताप्रवृत्तफलत्वमनुपयुक्तमिति भावः कर्मणांफलमदत्वानाशाभावेफलितमाह तस्मा
दिति ननुकर्मणांबहुत्वात्तत्फलेषुजन्मसुकुतस्त्रित्वमारब्धकर्मणांत्रिःप्रकारत्वादि
चेन्नानारब्धत्वेनैकप्रकारत्वसम्भवात्तत्राह संहतानीति नास्ति ज्ञानस्यैकान्तिकफ
लत्वमितिशेषः उक्तकर्मणांजन्मनारम्भकत्वेप्रागुक्तंदोषमनुभाष्यतस्यातिप्रसञ्जकत्व
माह अन्यथेति सर्वथेत्यारब्धकर्मस्वपीतियावत् फलजनकत्वानिश्चयोऽनाश्वासः कर्म
णांजन्मनारम्भकत्वेकर्मकाण्डानर्थक्यंदोषान्तरमाह शास्त्रेति अनारब्धकर्मणांसत्यपि
ज्ञानेजन्मान्तरारम्भकत्वध्रौव्येफलितमाह इत्यतइति श्रुत्यवष्टम्भेनपरिहरति नेत्या
दिना ज्ञानादनारब्धकर्मदाहेभगवतोपिसम्मतिमाह इत्यपीति ज्ञानाधीनसर्वकर्म
दाहेसर्वधर्मान् परित्यज्येति वाक्यशेषोपिप्रमाणीभवतीत्याह वक्ष्यति चेति ज्ञानाद
नारब्धाशेषकर्मक्षयेयुक्तिरपिवक्तुं शक्येत्याह उपपत्तेश्चेति तामेवविवृणोतिअविद्येति
अज्ञस्याविद्यास्मितारागद्वेषाभिनिवेशाख्यक्लेशात्मकानिसर्वानर्थवीजानितानिनिमि
त्तीकृत्य यानिधर्माधर्मकर्माणि तानिजन्मान्तरारम्भकानि यानिविदुषोविद्यादग्ध
क्लेशवीजस्यप्रतीतिमात्रशरीराणिकर्माणि नतानिशरीरारम्भकाणि दग्धपटवदर्थ
क्रियासामर्थ्याभावादित्यर्थः प्रतीतिमात्रदेहानांकर्माभासानांनफलारम्भकतेत्यस्मि

शाङ्करभाष्यं

अत्रात्मदर्शनेऽपायविकल्पाइमे ध्यानादयउच्यन्ते ध्यानेनेति ध्यानेनध्यानंनामश
ब्दादिभ्योविषयेभ्यःश्रोत्रादीनिकरणानिमनस्युपसंहृत्यमनश्चप्रत्यक्चेतयितर्येकाग्र
तयायच्चिन्तनंतद्ध्यानंतथाध्यायतीव कःध्यायतीवपृथिवीध्यायन्तीवपर्वताः इत्युपमो
पादानात्तैलधारावत्सन्ततोविच्छिन्नप्रत्ययोध्यानन्तेनध्यानेनात्मनिबुद्धौ पश्यन्त्या
त्मानंप्रत्यक्चेतनमात्मनाध्यानसंस्कृतेनान्तःकरणेनकेचित्योगिनः अन्ये सांख्येन

आनन्दगिरिकृतटीका

न्यर्थभगवतोपिसम्मतिमाह इहापीति तत्वज्ञानादूर्ध्वंप्रातीतिकक्षे यानांकर्मद्वारादे
हानारम्भकत्वेवाक्यान्तरमपिप्रमाणयति वीजानीति ज्ञानानन्तरभाविकर्मणांज्ञा
नेनदाहमङ्गीकरोति अस्त्विति विरोधिग्रस्तानामेवोत्पत्तेरिति हेतुमाह ज्ञानेति
अस्मिन्जन्मनिजन्मान्तरेवाज्ञानात्पूर्वभाविकर्मणां नततोदाहोविरोधिनंविनाप्र
वृत्तेरित्याह नत्विति श्रुतिस्मृतिविरोधान्नैवमितिपरिहरति नेत्यादिना सर्वशब्दश्रु
तेःसङ्कोचंशङ्कते ज्ञानेति प्रकरणादिसंकोचकाभावान्नैवमित्याह नेतिआद्यपदशा
यामुक्तमनुमानमनुवदतियत्विति आभासत्वादिदंमसाधकमिति दूषयति तदसदिति
व्याप्त्यादिमत्वेकथमाभासत्वमितिपृच्छति कथमिति प्रवृत्तफलत्वोपाधिनाहेतोर्व्या
प्तिभङ्गादाभासत्वधीरित्याह तेषामिति तदेवप्रपञ्चयति यथेत्यादिनाधनुषःसकाशा
दिषुर्मुक्तोबलवत्प्रतिबन्धकाभावेमध्येनपततितथाप्रबलप्रतिबन्धकंविनाप्रवृत्तफलानां
कर्मणांभोगात्तेनच्चयोनचतत्वज्ञानंतादृक्प्रतिबन्धकंउत्पत्तावेवपूर्वप्रवृत्तेनकर्मणा
प्रतिबन्धप्रशक्तित्वादित्यर्थः यत्रज्ञानेनादाह्यत्वंतत्रप्रवृत्तफलत्वमित्यन्वयेपियत्राप्रवृ
त्तफलत्वंतत्रज्ञानदाह्यत्वमिति नव्यतिरेकसिद्धिरित्याशंक्याह सएवेति प्रवृत्तौनि
मित्तभूतोनारब्धोवेगोऽनेनेतिविग्रहःसाश्रयस्थानिसाभासान्तःकरणनिष्ठानीतियाव
त्विमतानितत्त्वधीनिमित्तनिवृत्तानिततुकृतकारणनिवृत्तत्वाद्रज्जुसर्पादिवदिति व्य
तिरेकसिद्धिरितिभावः विदुषोवर्तमानदेहपातेदेहान्तरेहेत्वभावात्तत्वधीरैकान्ति
कफलेत्युपसंहरति पतितइति२३ ज्ञेयंयत्तदित्यादिनातत्पदार्थस्त्वंपदार्थज्ञानन्तर

स्वामिकृतटीका

एवंप्रकृतिपुरुषविवेकज्ञानिनंस्तौति यएवमिति एवमुपद्रष्टत्वादिरूपेणपुरुषंयोवे
त्तिप्रकृतिञ्चगुणैःसुखदुःखादिपरिणामैःसहितांयोवेत्तिसपुरुषःसर्वथाविधिमभिल
ङ्घ्यवर्तमानोऽपिपुनर्नाभिजायते मुच्यते एवेत्यर्थः २३ एवम्भूतविविक्तात्मज्ञानसा

ध्यानेनात्मनिपश्यन्तिकेचिदात्मानमात्मना अन्ये सांख्येनयोगेनकर्मयोगेनचापरे२४

## शाङ्करभाष्यं।

योगेन सांख्यंनामइमेसत्वरजस्तमांसिगुणामयादृश्याअहन्तेभ्योन्यस्तद्व्यापारसा क्षिभूतोनित्योगुणविलक्षणआत्मेति चिन्तनमेपसांख्योयोगस्तेनपश्यन्तिआत्मानमात्म नेतिवर्त्तन्तेकर्मयोगेनकर्मैवयोगईश्वरार्पणबुद्ध्यानुष्ठीयमानं घटनरूपत्वंयोगार्थात् योग उच्यते गुणतस्तेनसत्त्वशुद्धिज्ञानोत्पत्तिद्वारेणचापरे २४

## आनन्दगिरिकृतटीका।

मेवयोधितौतयोरैक्यञ्चवेदञ्चापि मामिद्धीत्युक्तमिदानींतद्दृष्टिहेतून् यथाधि कारंकथयति अत्रेति ध्यानाख्यसाधनं किं रूपमितिपृच्छति ध्यानंनामेति तद्रूपंवद न्नुत्तरमाह शब्दादिभ्यइति एकाग्रतयोपसंहृत्येतिसम्बन्धः यच्चिन्तनंप्रत्यक्चेतयि तरिइति पूर्वेणान्वयः किंतच्चिन्तनमित्युक्तेदृष्टान्तद्वाराश्रुत्यवष्टम्भेनध्यानं प्रपञ्चयति तथेति विवक्षितध्यानानुरोधेनेतियावत् आत्मानंपश्यन्तिपरमात्मतयेतिशेषःकेचि दित्युत्तमाधिकारिणोगृह्यन्ते मध्यमाधिकारिणोनिर्दिशति अन्यइति सांख्यशब्दि तंसाधनंकिन्नामेत्युक्ते विचारजन्यं ज्ञानन्तदेवज्ञानहेतुतमोयोगतुल्यत्वाद्योगशुद्धि हेतोरनेनगौण्यावृत्त्यायोगशब्दितंकर्मेत्याह सांख्यमिति अधमानधिकारिणःसंगि रतेकर्मेति चित्तैकाग्र्यंयोगःतादर्थ्यं कर्मणःशुद्धिहेतोरस्ति तेनगौण्यावृत्त्या योगश ब्दितंकर्मेत्याह गुणतइति अपरेपश्यान्त्यात्मानमात्मनेति पूर्ववदनुपङ्गमङ्गीकृत्याह तेनेति २४ अधमतमानधिकारिणोमोक्षमार्गेप्रवृत्तिं प्रतिलम्भयति अन्येत्विति

## स्वामिकृतटीका।

धनविकल्पानाह ध्यानेनेतिद्वाभ्यांध्यानेनात्माकारप्रत्ययावृत्त्याआत्मनिदेहएवआत्म नामनसाएवमात्मानंकेचित्पश्यन्ति अन्येतुसांख्येनप्रकृतिपुरुषवैलक्षण्यालोचनेनयो

## भाषाअनुवाद

अनेककल्पनारूपसाधनदोश्लोकसेकहतेहैंकिकोईतोध्यानकहेआत्माकाराकारित ज्ञानरूपधारावाहिकअन्तःकरणकीवृत्तिसेइसीशरीरमेमनकेद्वाराआत्माकादर्शन करतेहैं औरकोईसांख्यअर्थात्प्रकृतिपुरुषकाभेदआलोकनकेद्वारादेखतेहैं कोई यमनियमआसनप्राणायामप्रत्याहारधारणाध्यानसमाधिरूपअष्टांगयोगकेक्रमसेजा नतेहैं औरकितनेएकनिःकामकर्मरूपभक्तियोगअनुष्ठानकरकेशुद्धसतोगुणहोय तत्वज्ञानकेद्वाराआत्माकोदेखतेरहतेहैं यद्यपिध्यानादियथायोग्यक्रमसेएकहीहैं तोभीतीनतीननिष्ठाकेभेदसेभिन्ननानामतकहाहै २४ औरअबअतिमन्दअधि

अन्येत्वेवमजानन्तः श्रुत्वान्येभ्यउपासते तेपिचातितरन्त्येवमृत्युं श्रुतिपरायणाः २५

## शाङ्करभाष्यं।

अन्येत्विति अन्येत्वेतेषुविकल्पेषु अन्यतरेणाप्येवंयथोक्तमात्मानमजानन्तोऽन्येभ्य आचार्येभ्यःश्रुत्वाइदमेवचिन्तयेतेत्युक्ता उपासतेश्रद्दधानाःसन्तश्चिन्तयन्ति तेपिचा तितरन्त्येवातिक्रामन्त्येवमृत्युं मृत्युयुक्तंसंसारमित्येतत्श्रुतिपरायणाः श्रुतिःश्रवणं परमयनंगमनंमोक्षमार्गप्रवृत्तौपरंसाधनंयेषांतेश्रुतिपरायणाः केवलपरोपदेशप्र माणाःस्वयंविवेकरहिताइत्यभिप्रायः किमुवक्तव्यंप्रमाणंप्रति स्वतन्त्राविवेकिनोमृत्यु मतितरन्तीत्यभिप्रायः२५ यत्क्षेत्रज्ञेश्वरैकत्वविषयंज्ञानंमोक्षसाधनं यत्ज्ञात्वामृत तमश्नुतइत्युक्तंतत्कस्माद्धेतोरितितद्धेतुदर्शनार्थंश्लोकआरभ्यतेयावदिति यावत्यत् किञ्चित्सञ्जायतेसमुत्पद्यतेसत्वंवस्तुकिमविशेषेणेत्याह स्थावरंजङ्गमंस्थावरंजङ्गम ञ्चक्षेत्रक्षेत्रज्ञसंयोगात्तज्जायतेइत्येवंविद्धिजानीहिहेभरतर्षभकःपुनरयंक्षेत्रक्षेत्र ज्ञयोःसंयोगोऽभिप्रेतोनतावत्रज्ज्वेवघटस्यावयवसंश्लेषद्वारकःसम्बन्धविशेषःसंयोगः

## आनन्दगिरिकृतटीका।

आचार्याधीनांश्रुतिमेवाभिनयति इदमिति उपासनमेवविवृणोति श्रद्दधानाइति प रोपदेशात्प्रवृत्तानामपिप्रवृत्तेःसाफल्यमाह तेपीति तेषांमुख्याधिकारित्वंव्यावर्तय तिश्रुतीति तेपीत्यादिनासूचितमर्थमाह किमिति २५ ऐक्यधीर्मुक्तिहेतुरितिप्रागु

## स्वामिकृतटीका

गेनाष्टाङ्गेनापरेचकर्मयोगेनपश्यन्तीति सर्वत्रानुषङ्गःएतेषाञ्चध्यानादीनांयथायो गंक्रमसमुच्चयेसत्यपितत्तन्निष्ठाभेदाभिप्रायेण विकल्पोक्तिः २४

अतिमन्दाधिकारिणांनिस्तारोपायमाह अन्येत्विति अन्येतुसांख्ययोगादिम र्गेणएवमुपद्रष्टृत्वादिलक्षणमात्मानं साक्षात्कर्तुमजानन्तोऽन्येभ्यआचार्येभ्यउपदे शतःश्रुत्वाउपासतेध्यायन्ति तेपिचश्रद्धयाउपदेशश्रवणपरायणाःसन्तोमृत्युं संसारं शनैरतितरन्त्येव २५ तत्र कर्मयोगस्यतृतीयचतुर्थपञ्चमेषुप्रपञ्चितत्वात्ध्यानयो

## भाषा अनुवाद

कारियोंकोउपायकहतेहैं किसांख्ययोगआदिमार्गसेऐसेउपद्रष्टारूपआत्माकोसा क्षात्कारकरनेमेअर्थात्देखनेमेजोअज्ञहैं परन्तुऔरकिसीआचार्यकाउपदेशश्रवण करिके ध्यानमात्रकरतेहैं तेउश्रद्धापूर्वकउपदेशश्रवणमेतत्परहोक्रमसेमृत्युयुक्तसं सारसेअवश्यमुक्तहोतेहैं यहजानो २५ अबतृतीयचतुर्थपञ्चमअध्यायमे कर्मयोग

यावत्संजायतेकिञ्चित्सत्त्वंस्थावरजङ्गमं क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धिभरतर्षभ २६

शाङ्करभाष्यं।

क्षेत्रेणक्षेत्रज्ञस्यसम्भवति आकाशवन्निरवयवत्वान्नापिसमवायलक्षणःतन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमादित्युच्यते क्षेत्रक्षेत्रज्ञयोर्विषयविषयिणोर्भिन्नस्वरूपयोरितरेतरतद्धर्माध्यासलक्षणःसंयोगःक्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनोरज्जुशुक्तिकादीनांतद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत्सोयमध्यासस्वरूपःक्षेत्रक्षेत्रज्ञसंयोगोमिथ्याज्ञानलक्षणोयथाशास्त्रं क्षेत्रक्षेत्रज्ञलक्षणभेदपरिज्ञानपूर्वकंप्राक्दर्शितरूपात्क्षेत्रात्मुञ्जादिवेषीकां यथोक्तलक्षणंक्षेत्रज्ञंप्रविभज्यनसत्तन्नासदुच्यतेइत्यनेननिरस्तसर्वोपाधिविशेषंज्ञेयंब्रह्मस्वरूपेणयःपश्यतिक्षेत्रञ्चमायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगरादिवदसदेवसदिवावभासतेइतिएवंनिश्चितविज्ञानोयस्तस्ययथोक्तसम्यक्दर्शनविरोधादवगच्छति मिथ्याज्ञानंतस्यजन्महेतोरपगमात्यएवंवेत्तिपुरुषंप्रकृतिञ्चगुणैःसहइत्यनेनविद्वान्भूयोनाभिजायतइतियदुक्तं तदुपपन्नमुक्तंनसभूयोऽभिजायतइति सम्यक्दर्शनफलमविद्यायानिवर्त्तकंसम्यग्दर्शनंफलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभाव उक्तः जन्मकारणञ्चाविद्यानिमित्तकःक्षेत्रक्षेत्रज्ञसंयोगउक्तः २६

आनन्दगिरिकृतटीका।

क्तमनूद्यप्रश्नपूर्वकंजिज्ञासितहेतुपरत्वेनश्लोकमवतारयति क्षेत्रेति सर्वस्यप्राणिजातस्यक्षेत्रक्षेत्रज्ञसम्बन्धाधीनायस्मादुत्पत्तिस्तस्मात्क्षेत्रज्ञात्मकपरमात्मातिरेकेण प्राणिनिकायस्याभावादैक्यज्ञानादेवमुक्तिरित्याह कस्मादिति क्षेत्रक्षेत्रज्ञसम्बन्धमुक्तमाक्षिपति कःपुनरिति क्षेत्रज्ञस्यक्षेत्रेणसम्बन्धःसंयोगोवासमवायोवेति विकल्प्याद्यं दूषयति नतावदिति द्वितीयंनिरस्यति नापीति वास्तवसम्बन्धाभावेपितयोरध्यासस्वरूपःसोस्तीति परिहरति उच्यतइति भिन्नस्वभावत्वेहेतुमाह विषयेति इतरेतरत्व

भाषाअनुवाद

विस्तारसेकहा औछठयेंअठयेंअध्यायमेध्यानयोगकाविस्तारकहा औसांख्यकेद्वाराभिन्नकियाजोआत्मा सोईध्यानआदिकाविषयहै इसहेतुसांख्यहीकोअध्यायसमाप्तिपर्यन्तविस्तारकरिकेभगवानकहतेहैं किहेभरतर्षभअर्जुन जोकुछस्थावरजङ्गमआदिवस्तुउत्पन्नहै सोसबक्षेत्रक्षेत्रज्ञदोनोकेयोगसेहै अर्थात्अविवेककृतजोआत्माकाअध्यासहै तिसहेतुसेउत्पन्नमानहै यहनिश्चयसेजानो २६

समंसर्व्वेषुभूतेषुतिष्ठन्तंपरमेश्वरं विनश्यत्स्वविनश्यन्तं यःपश्यतिसपश्यति २७

## शाङ्करभाष्यं।

अतस्तस्याअविद्यायानिवर्त्तकंसम्यग्दर्शनमुक्तमपिपुनःशब्दान्तरेणोच्यते समंसर्व्वे ष्वित्यादिसममिति समंनिर्विशेषंतिष्ठन्तं स्थितिंकुर्व्वन्तं कःसर्वेषुभूतेषुब्रह्मादिस्थाव

## आनन्दगिरिकृतटीका

क्षेत्रक्षेत्रज्ञयोवातद्धर्मस्यक्षेत्रानभिकरणस्यक्षेत्रज्ञगतस्य चैतन्यस्यक्षेत्रज्ञानाधार स्यचक्षेत्रनिष्ठस्यजाड्यादेरारोपरूपोयोगस्तयोरित्याह इतरेति तत्रनिमित्तमाह क्षेत्रेतिअविवेकादारोपितसंयोगेदृष्टान्तमाह रज्ज्विति उक्तंसम्बन्धंनिगमयति सो यमिति तस्यनिवृत्तियोग्यत्वंसूचयति मिथ्येति कथंतर्हिमिथ्याज्ञानस्यनिवृत्तिरित्याशं क्याह यथेति योयंविज्ञानमयःप्राणेष्वित्यादि त्वंपदार्थविषयंशास्त्रमनुसृत्य विवेक ज्ञानमापाद्यमहाभूतादिधृत्यन्तात्क्षेत्रादुपद्रष्टृत्वादिलक्षणंप्रागुक्तं क्षेत्रज्ञंमुज्ञेयी कान्यायेनविविच्यसर्वोपाधिविनिर्मुक्तब्रह्मस्वरूपेणज्ञेयंयोनुभवतितस्यमिथ्याज्ञानम पगच्छतीति सम्बन्धः कथमस्यनिर्विशेषवत्त्वं क्षेत्रज्ञस्यसविशेषत्वहेतोःसत्त्वादित्या शंक्याह क्षेत्रज्ञेति वज्रदृष्टान्तोक्तेर्मङ्गविवर्त्तंक्षेत्रस्यद्योत्यते उक्तज्ञानान्मिथ्याज्ञा नापगमेहेतुमाह यथोक्तेति तथापिकथंपुरुषार्थसिद्धिःकालान्तरेतुल्यजातीयमिथ्या ज्ञानोदयसम्भवादित्याशंक्याह तस्येति सम्यग्ज्ञानादज्ञानकार्यनिवृत्त्यामुक्तिरिति स्थितेफलितमाह यएवमिति उत्तरग्रन्थमवतारयितुंव्यवहितंवृत्तं कीर्त्तयति नेत्या दिनाअविद्यानाद्यनिर्वाच्यमज्ञानंमिथ्याज्ञानंतत्संस्कारआदिशब्दार्थःव्यवहितमनू द्याव्यवहितमनुवदति जन्मेति २६ व्यवधानाव्यवधानाभ्यांसर्वानर्थमूलत्वादज्ञानस्य

## स्वामिकृतटीका।

गस्यचषष्ठाष्टमयोःप्रपञ्चितत्वात्ध्यानादेश्चसांख्यविविज्ञात्मविषयत्वात्सांख्यमेवप्रप ञ्चयन्नाह यावदिति यावदध्यायसमाप्ति यावत्यत्किञ्चित्वस्तुमात्रंसमुत्पद्यते त त्सर्व्वंक्षेत्रक्षेत्रज्ञयोर्योगादविवेककृतात्तादात्म्याध्यासाद्भवतीति जानीहि २६

## भाषाअनुवाद।

अविवेकसेसंसारकीउत्पत्तिकहिकर अबसंसारकीनिवृत्तिकेअर्थप्रकृतिसेभिन्न स्वरूपजोआत्मा उसकाशोभनदर्शनकहतेहैं किस्थावरजंगमात्मकसर्व्वभूतमे निर्वि शेषकहेसमानसत्रूपसमभावसेस्थायीपरमात्माकोजोमनुष्यदेखतेहैं औरभूतोंके विनाशमे आत्माकोअविनाशीरूपदेखतेहैं तेईशोभनदेखतेहैं औरकोईनहीं२७

शाङ्करभाष्यं

रान्तेषुप्राणिषुकम्परमेश्वरं देहेन्द्रियमनोबुद्ध्यव्यक्तात्मनोऽपेक्ष्यपरंपरमश्चासावीश्वरश्चईशनशीलश्चेतिपरमेश्वरस्तं सर्व्वेषुभूतेषुसमन्तिष्ठन्तंतानिविशिनष्टि विनश्यत्स्विति तञ्चपरमेश्वरमविनश्यन्तंइतिभूतानांपरमेश्वरस्यचात्यन्तवैलक्षण्यंप्रदर्शनार्थः कथंसर्वेषांहिभावविकाराणांजनिलक्षणोभावविकारोमूलंजन्मोत्तरभाविनोऽन्ये सर्वेभावविकाराविनाशान्ताविनाशात्परोनकश्चिदस्तिभावविकारःभावाभावात् सति हिधर्मिणिधर्माभवन्त्यतोन्त्यभावविकारानुवादेनपूर्वभाविनःसर्वेभावविकाराःप्रतिषिद्धाभवन्तिसहकार्यैःतस्मात्सर्वभूतैर्वैलक्षण्यमत्यंतमेवपरमेश्वरस्यसिद्धं निर्विशेषत्वमेकत्वञ्च कथञ्चयएवंयथोक्तंपरमेश्वरंपश्यतिसपश्यति ननुसर्वोपिलोकःपश्यति किंविशेषेणेति सत्यंपश्यति किन्तुविपरीतंपश्यत्यतोविशिनष्टिसएवपश्यती तियथातिमिरदृष्टिरनेकंचन्द्रंपश्यतितमपेक्ष्यैकचन्द्रदर्शीविशिष्यतेसएवपश्यतीति तथैवेहाप्येकमविभक्तंयथोक्तमात्मानंपश्यति सविभक्तानेकात्मविपरीतदर्शिभ्योविशिष्यते सएवपश्यतीतिइतरेपश्यन्तोपिनपश्यन्तिविपरीतदर्शित्वादनेकचन्द्रदर्शिवदित्यर्थः२७

आनन्दगिरिकृतटीका

तन्निवर्त्तकंसम्यग्ज्ञानंवक्तव्यमित्याह अतइति तस्याशब्दइदुक्तत्वात्तदुक्तार्थप्रवृत्तिरर्थेत्याशंक्यातिसूक्ष्मार्थस्यशब्दभेदेनपुनःपुनर्वचनमधिकारिभेदानुग्रहायेतिमत्वाह उक्तमिति सर्वत्रपरस्यैकत्वात्नोत्कर्षापकर्षवत्वमित्याह सममिति परमत्वमीश्वरत्वञ्चोपपादयति देहेति आत्माजीवस्तमित्यादिनान्वयोक्तिः आश्रयनाशादाश्रितस्यापिनाशमाशंक्याह तञ्चेति अविनश्यन्तमितिविशिनष्टि इतिसम्बन्धः उभयत्रविशेषणद्वयस्यतात्पर्यमाह भूतानामिति नाशानाशाभ्यांवैलक्षण्येपिकथमत्यन्तवैलक्षण्यंसविशेषत्वभिन्नत्वयोस्तुल्यत्वादितिशङ्कतेकथमिति भूतानांत्वविशेषत्वादिभावेपिपरस्यतदभावादत्यन्तवैलक्षण्यमितिवक्तुंजन्मनोभावविकारेसादित्वमाह सर्वेषामिति तत्रहेतुमाह जन्मेति नहिजन्मान्तरेणोत्तरेविकारायुज्यन्ते जन्मवतस्तदुपलम्भादित्यर्थः विनाशानन्तरभाविनोपि विकारस्यकस्यचिदुपपत्तेर्न तस्यान्त्यविकारत्वमित्याशंक्याह विनाशादिति तस्यान्त्यविकारत्वेसिद्धेफलितमाह अतइति तेषांजन्मादीनांकार्याणिकादाचित्कसत्त्वानितदधिकरणानितैः सहेति यावत् परमेश्वरस्यभूतेभ्योऽत्यन्तवैलक्षण्यमुक्तमुपसंहरतितस्मादितिनिर्विशेषत्वंसर्वभावविकारविरहित्वंकूटस्थत्वमेकत्वमद्वितीयत्वं यःपश्यतीत्यादिव्याचष्टे यएवमिति उक्तविशेषणमीश्वरं

समंपश्यन्हिसर्वत्रसमवस्थितमीश्वरं नहिनस्त्यात्मनात्मानंततोयातिपरांगतिं २८

## शाङ्करभाष्य

यथोक्तस्यसम्यगदर्शनस्यफलवचनेनस्तुतिकर्त्तव्येतिश्लोकआरभ्यतेसमंपश्यन्नितिस मंपश्यन्नुपलभमानोहितस्मात्सर्वत्रसर्वभूतेषुसमवस्थितंतुल्यतयावस्थितमीश्वरंअती तानन्तरश्लोकोक्तलक्षणमित्यर्थःसमंपश्यन्किन्नहिनस्तिहिंसांनकरोति आत्मनास्वे नैवस्वमात्मानंततस्तस्मात्अहिंसनात्यातिपरांप्रकृष्टांगतिंमोक्षाख्यां ननुनैव कश्चित् प्राणीस्वयंस्वमात्मानंहिनस्ति कथमुच्यतेऽप्राप्तंनहिनस्तीति यथानपृथिव्यामग्निश्चे तव्योनान्तरिक्षइत्यादिनैषदोषःअज्ञानामात्मतिरस्कारणोपपत्तेः सर्वोह्यज्ञोत्यन्तप्र सिद्धंसाक्षादपरोक्षादात्मानंतिरस्कृत्यानात्मानमात्मत्वेनपरिगृह्य तमपिधर्माधर्मैः

## आनन्दगिरिकृतटीका

पश्यन्नेवपश्यतीत्युक्तमाक्षिपति नन्विति ईश्वरपराङ्मुखस्यानात्मनिष्ठस्यतद्दर्शित्वेपि विपरीतदर्शित्वादीश्वरप्रवणस्यैवसम्यगदर्शित्वमितिविवक्षित्वाविशेषणमितिपरिह रति सत्यमिति उक्तमेवदृष्टान्तेनविवृणोति यथेत्यादिना यःपश्यतीत्यादेरर्थमुपसं हरति इतरइति परवस्तुनिष्ठेभ्योव्यतिरिक्ताइत्यर्थः २७ प्रकृतसम्यकज्ञानेनकि

## स्वामिकृतटीका।

अविवेककृतंसंसारोद्भवमुक्त्वातन्निवृत्तये विविक्तात्मविषयंसम्यगदर्शनमाह सम मिति स्थावरजङ्गमात्मकेषुभूतेषु निर्विशेषसद्रूपेणसमंयथाभवत्येवंतिष्ठन्तंपरमा त्मानंयःपश्यतिअतएवतेषुविनश्यत्स्वप्यविनश्यन्तंयःपश्यति सएवसम्यकपश्यति नान्यइत्यर्थः २७कुतइत्यतआहसमंपश्यन्निति सर्वत्रभूतमात्रेसमंसम्यक्प्रच्युतस्वरू

## भाषाअनुवाद

औरउसशोभनदर्शनहोनेकाकारणक्याहै इसपरकहतेहैं किसोईशोभनदेख नेवालामनुष्ययावत्भूतमात्रमेंसम्यकप्रकारसेअक्षरस्वरूपअवस्थितपरमात्माका द र्शनकरिके आपअपनेकोनष्टनहींकर्त्ताअर्थात्सच्चिदानन्दआत्मास्वरूपको अविद्या अज्ञानसेआवरणकरिकेनाशनहींकरताहै तिससेश्रेष्ठगतिमुक्तिरूपकोप्राप्तहोता हैऔरजोइसपूर्वोक्तरूपसेनहींदेखताहैसोशरीरहीकोआत्माकरिकेदेखनेवाला शरीरकेसहितअपनेकोअवश्यहीनष्टकर्त्ताहैसोईश्रुतिकहतीहैं किजोउक्तप्रकार सेआत्महाहोताहै सोईमरणकेअनन्तरप्रकाशशून्यअन्धकारसे आवृतजोस्थानत हांकोजाताहै २८ जोकहोकिशुभअशुभकर्मकेकर्तृत्वहेतुसेवैषम्यदेखपड़तीहै

शाङ्करभाष्यं

कृत्वोपात्तमात्मानं हत्वान्यमात्मानमुपादत्तेनवं पुनस्तं चैवं हत्वान्यमेवन्तमपि हत्वान्य मित्येवं नवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा सर्वोऽज्ञोयस्तु परमार्थात्मा असावपि सर्वदाऽविद्यया हतइवविद्यमानफलाभावादितिसर्वे आत्महनाएवाविद्वांसो यस्त्वित रोयथोक्तात्मदर्शीसतुउभयथात्मनात्मानंनहिनस्तिततोयातिपराङ्गतिंयथोक्तंफलंतस्य भवतीत्यर्थः २८

सर्वभूतस्थमीशं सममपश्यन्नहिनस्त्यात्मनात्मानमित्युक्तं तदनुपपन्नं स्वगुणकर्मवैलक्षण्य भेदभिन्नेष्वात्मसु इत्येतदाशंक्याह प्रकृत्यैवेतिप्रकृत्याप्रकृतिर्भगवतोमायात्रिगुणात्मि

आनन्दगिरिकृतटीका ।

मित्यपेक्षायांतत्फलोक्त्यातस्यैवस्तुत्यातद्धेतौपुरुषंप्रवर्त्तयितुं श्लोकान्तरमित्याह यथो क्तस्येति यस्मादित्यस्यततःशब्देनसम्बन्धः सर्वभूतेषु तुल्यतयास्थितं पूर्वोक्तलक्षण मीश्वरंनिर्विशेषं पश्यन्नात्मानमात्मनायस्मान्नहिनस्तिततस्तस्मान्मोक्षाख्यांपरांगतिं यातिइतियोजना तत्रपादत्रयेणज्ञानादज्ञानध्वस्तप्रध्वस्त्यनर्थध्वस्तोक्ताज्ञानसिध्याज्ञा नावर्णयोर्नाशे सर्वोत्कृष्टांगतिंपरमपुरुषार्थंपरमानन्दमनुभवतिविद्वानिति च तुर्थपदार्थः नहिनस्त्यात्मनात्मानमितियथाश्रुतमादायचोदयति नन्विति नष्टयिव्या मिति प्राप्तिद्वारानिषेधवन्नान्तरिक्षेगादित्वीति प्राप्त्यभावाच्चयन्निषेधोमुख्योनेष्यते तथेहाभिप्राप्तिं विनानिषेधोनयुक्तिमानित्याह यथेति अज्ञानामात्मनैवात्महिंसास म्भवाद्विदुषांतद्भावोक्तिर्युक्तेति समाधत्ते नैषदोषइति संग्रहवाक्यं विवृणोति सर्वोही ति अनात्मशब्दोदेहादिविषयः अविदुषामारोपितात्महन्तृत्वंनिगमयति इत्यात्म हेति तथापिपारमार्थिकस्यात्मनोहननाभावान्नतेषांसर्वेषांआत्महन्तृत्वमित्याशं क्याह यस्त्विति उक्तरीत्यासर्वेषामविदुषामात्महन्तृत्वं सिद्धंइत्युपसंहरति सर्व इति आत्मनैवात्महननमविदुषांदृष्टं तदिहविद्वद्विषयेशक्यं निषेद्धुमित्याह यस्त्वितरइति उभयथापीत्यारोपानारोपाभ्यामित्यर्थः ज्ञानादनर्थध्वंसे पूर्वोक्तपरमानन्दप्रा प्तिरापरिहृतत्वंयुक्तमित्याह ततइति २८

स्वामिकृतटीका

षेणावस्थितंपरमात्मानंपश्यन्हियस्मादात्मनास्वेनैवात्मानंनहिनस्ति अविद्ययासच्चि दानन्दरूपमात्मनंतिरस्कृत्यनविनाशयति ततश्चपरांगतिंमोक्षंप्राप्नोति यस्त्वेवंनप श्यति सहिदेहात्मदर्शी देहेनसहात्मानंहिनस्ति तथाचश्रुतिःअसूर्यानामते लो लोकाअन्धेनतमसावृताः तांस्तेप्रेत्याभिगच्छन्ति येकेचित्महनोजनाइति २८

प्रकृत्यैवचकर्माणिक्रियमाणानिसर्वशः यःपश्यतितथात्मानमकर्त्तारंसपश्यति २९

## शाङ्करभाष्यं ।

कामायान्तुप्रकृतिंविद्यादितिमन्त्रवर्णात्तयाप्रकृत्यैवचनान्येवमहदादिकार्य्यकारणाकारपरिणततया तान्येवकर्माणिवाङ्मनःकायारभ्याणिक्रियमाणानिनिवर्त्तमानानि सर्वशःसर्वप्रकारैर्यः पश्यत्युपलभ्यते तथात्मानंच्चेत्रज्ञमकर्त्तारंसर्वोपाधिविवर्ज्जितंपश्यति सपरमार्थदर्शीत्यभिप्रायः निर्गुणस्याकर्त्तुर्निर्विशेषस्याकाशस्येवभेदेप्रमाणानुपपत्तिरित्यर्थः २९ पुनरपितदेवसम्यग्दर्शनंशब्दान्तरेणप्रपञ्चयते यदेति

## आनन्दगिरिकृतटीका

श्लोकान्तरंशङ्कोत्तरत्वेनावतारयितुमनुवदति सर्वेति प्रतिदेहं धर्माधर्मादिमत्त्वेनात्मनोभेदभानान्नसम्यक्दर्शनमितिशङ्कते तदिति स्वगुणैःसुखदुःखादिभिः स्वकर्मभिश्चधर्माधर्माख्यैर्वै लक्षण्यात्प्रतिदेहं भेदेतद्विशिष्टेष्वात्मसुकथंसाम्येनदर्शनमित्येतदाशंक्यपरिहरतीत्याह एतदिति प्रकृतिशब्दस्यस्वभाववाचित्वंव्यावर्त्तयति प्रकृतिरिति मायाशब्दस्यसम्बित्पर्य्यायत्वंप्रत्याह त्रिगुणेति उक्तपरस्यशक्तिर्मायेत्यत्रश्रुतिसंमतिमाह मायान्त्विति अन्येनकेनचित्क्रियमाणानिनभवन्तिकर्माणीत्येवकारार्थमाह नान्येनेति किन्तदन्यन्निषेध्यमित्युक्ते सांख्याभिप्रेताप्रधानाख्याप्रकृतिरित्याह महदादीति सर्वप्रकारत्वंकाय्यत्वनिषिद्धत्वादिना प्रकारवाञ्छत्यमात्मानमुक्तविशेषणं सः पश्यतीति पूर्वेणसम्बन्धः सपश्यतीत्ययुक्तं पुनरुक्तेरित्याशंक्याह सपरमार्थेति आत्मानंप्रतिदेहंभिन्नत्वे तेषुसमदर्शनमयुक्तमित्युक्तस्य कःसमाधिरित्याशंक्याह निर्गुणस्येति २९ प्रकृतेर्विकाराणाञ्चसांख्यवत्पुरु

## स्वामिकृतटीका

ननु शुभाशुभकर्मकर्तृत्वे नवैषम्ये दृश्यमानेकथमात्मनः समत्वमित्याशंक्याह प्रकृत्यैवेति प्रकृत्यैवदेहेन्द्रियाकारेणपरिणतया सर्वशःसर्वैःप्रकारैःक्रियमाणानिक

## भाषाअनुवाद ।

फेरिआत्माकासमत्वकैसेहै इसपरकहतेहैं किजोदेहइन्द्रियआकारमेरूपान्तरकोअर्थात्भिन्नरूपकोप्राप्तप्रकृतिकेद्वारानानाप्रकारक्रियमाणकर्म्महोतेहैं ऐसेजोमनुष्यदेखैहै औअपनेकोअकर्त्तादेखैहै अर्थात्स्थूलशरीरमेअहंबुद्धिसेआत्माकर्त्ताहोताहै औरस्वरूपसेउसकोकर्तृत्वनहींहै ऐसे जोमनुष्यदेखैहै सोसम्यक्देखैहै सोईकहाहै कियःपश्यतिसपश्यति इति २९ अबप्रकृतिकेसकलकार्यभूतऔर

यथाभूतपृथग्भावमेकस्थमनुपश्यति अतएवचविस्तारंब्रह्मसम्पद्यतेतदा ३०

## शाङ्करभाष्यं

यदायस्मिन्कालेभूतपृथग्भावंभूतानांपृथग्भावंपृथक्त्वमेकस्थमेकस्मिन्नात्मनि स्थितमेकस्थमनुपश्यतिशास्त्राचार्य्योपदेशतोमत्वात्मानंप्रत्यक्षत्वेनपश्यत्यात्मैवेदंस र्व्वमिति अतएवचतस्मादेवचविस्तारमुत्पत्तिमनुपश्यतिआत्मनःप्राणआत्मनआशाआ त्मनःस्वरआत्मनआकाशआत्मनस्तेजआत्मनःआपआत्मनआविर्भावतिरोभावौ आ त्मनोमूलात्मनोऽन्नमित्येवमादिप्रकारैर्विस्तारंयदापश्यतितदाब्रह्मसंपद्यतेब्रह्मैवभवति तदातस्मिन्कालेइत्यर्थः ३० एकस्यात्मनःसर्व्वदेहात्मत्वेतद्दोषसम्बन्धेप्राप्तमिदमुच्यते

## आनन्दगिरिकृतटीका

पादन्यत्वप्रसक्तौप्रत्याह पुनरपीति उपदेशजनितंप्रत्यक्षदर्शनमनुवदति आत्मेति भूतानांविकाराणांनानात्वंप्रकृत्यासहात्मभावतयाप्रलीनंपश्यतिनहिभूतपृथक्त्वं स त्यांप्रकृतौकेवलेपरस्मिन्विलापयितुंशक्यतइत्यर्थः परिपूर्णादात्मनएव प्रकृत्यादेर्व्विशे पान्तस्यस्वरूपलाभमुपलभ्यतन्मात्रतांपश्यतीत्याह अतएवेति उक्तमेवविस्तारं श्रुत्य वष्टम्भेनस्पष्टयति आत्मनइति ब्रह्मसंपत्तिर्नामपूर्णत्वेनाभिव्यक्तिरपूर्णत्वहेतोः सर्व्व स्यात्मसात्कृतत्वादित्याह ब्रह्मैवेति ज्ञानसमानकालेमुक्तिरिति सूचयति तदेति ३०

## स्वामिकृतटीका।

सोऽपियःपश्यति तथात्मानञ्चाकर्त्तारंदेहाभिमानेनैवात्मनः कर्त्तृत्वंनस्वतइत्येवंयः पश्यति सएवसम्यक्पश्यति नान्यइत्यर्थः २९ इदानींभूतानामपि प्रकृतितावन्मात्र त्वेनाभेदाद्भूतभेदकृतमप्यात्मनोभेदमपश्यन्ब्रह्मत्वमुपैतीत्याह यदेति यदाभूतानां स्थावरजङ्गमानांपृथग्भावंभेदंएकस्थंएकस्यामेवेश्वरशक्तिरूपायांप्रकृतौप्रलयेस्थित मनुपश्यति आलोचयति अतएवतस्याएवप्रकृतेःसकाशाद्भूतानांविस्तारं सृष्टि समयेअनुपश्यति तदाप्रकृति तावन्मात्रत्वेनभूतानामप्यभेदंपश्यन् परिपूर्णंब्रह्म संप द्यतेब्रह्मैवभवतीत्यर्थः ३० तथापिसंसारावस्थायांदेहसम्बन्धनिमित्तः कर्म्मभिस्तत्फ

## भाषा अनुवाद

नकीकारणस्वरूप प्रकृतिमात्रइसभेदकेअभावहेतुसेजोमनुष्यभूतगतभेदजनितआ त्माकाभेदनहींदेखैहैं ऐसेमनुष्योंकोब्रह्मभावप्राप्तिकहतेहैं किजवस्थावरजङ्गस भूतकापृथकभावकहे भेदकोऐसेदेखतेहैं किएकवहीपरमेश्वरकीशक्तिरूपप्रकृति सेसृष्टिस्थितिप्रलयकालमेभूतोंकीउत्पत्तिपालननाशनिरन्तरदेखतेहैं औरतत्तत् कालमेप्रकृतिस्वरूपमात्रदेखतेभूतोंकेअभेददर्शीलोगपरिपूर्णस्वरूपब्रह्महोतेहैं३०

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः शरीरस्थोपिकौन्तेयनकरोतिनलिप्यते३१

## शाङ्करभाष्यं।

अनादीति अनादित्वादनादेर्भावोऽनादित्वमादिःकारणंयद्यस्यनास्तितदनादियद्धा दिमत्तत्स्वेनात्मनाव्येत्ययन्त्वनादित्वान्निरवयवइतिकृत्वानव्येति तथानिर्गुणत्वात् सगुणोहिगुणव्ययादव्ययन्तुनिर्गुणत्वाच्चनव्येतीति परमात्मायमव्ययोनास्यव्ययोवि द्यतइत्यव्ययोयतएवमतःशरीरस्थोपिशरीरेष्वात्मनउपलब्धिर्भवतोशरीरस्थउच्य तेतथापिनकरोतितदकरणादेवतत्फलेननलिप्यतेयोहिकर्तासकर्मफलेनलिप्यतेअय न्त्वकर्तातोआत्मानफलेनलिप्यतइत्यर्थः।कः पुनर्देहेषुकरोतिलिप्यतेचयदितावदन्यःपर मात्मनोदेहीकरोति।लिप्यतेचततइदमनुपपन्नमुक्तंक्षेत्रज्ञेश्वरैकत्वं क्षेत्रज्ञंचापिमां विद्धीत्याद्यथनास्तीश्वरादन्योदेहीकःकरोतिलिप्यतेचेतिवाच्यंपरोवानास्तीतिसर्वं यादुर्विज्ञेयंदुर्वाच्यञ्चेतिभगवत्प्रोक्तामौपनिषदंदर्शनंपरित्यक्तंवैशेषिकैः सांख्यार्ह तबौद्धैश्चतत्रायंपरिहारोभगवतास्वेनैवोक्तःस्वभावस्तुप्रवर्ततइत्यविद्यामात्रं स्वभा वोहिकरोतिलिप्यतइतिव्यवहारोभवतिनतुपरमार्थतएकस्मिन्परमात्मनितदस्यत एकस्मिन्परमार्थसांख्यदर्शनेस्थितानांज्ञाननिष्ठानांपरमहंसपरिव्राजकानांतिरस्कृ ताविद्याव्यवहाराणांकर्माधिकारोनास्तीतितत्रतत्रदर्शितंभगवता३१ किमिवनकरोति

## आनन्दगिरिकृतटीका

परिपूर्णत्वेनसर्वात्मत्वेप्राप्तमात्मनोदेहादिगतेनकर्तृत्वादिनातद्दत्त्वंदृष्टंहि पवित्रस्या पि पञ्चगव्यादेरपवित्रसंसर्गात्तद्दोषेणदुष्टत्वमित्याशङ्कामनूद्योत्तरत्वेन श्लोकमव तारयति एकस्येति अनादित्वमेवसाधयतिआदिरितितथापिकिंस्यादित्याशंक्यकार्य त्वकृतव्ययाभावःसिध्यतीत्याह यद्धीतितथापिगुणापकर्षद्वारकोव्ययोभविष्यतिनेत्याह

## भाषाअनुवाद

औरजोकहोकिपूर्वोक्तरूपआत्माकेभेदकाअभावहोनेसेभीसंसारावस्थामेदेह संबन्धसेजोकर्मऔर उन्हीकर्मोंकाफलरूपजोसुखदुखआदितिनकेद्वारावैषम्यभाव तोनहींदूरहोसकैहै इससेवैसेआत्माकासम्यकदर्शनकैसेसंभवहोय इसशङ्कापर कहतेहैं किजिसकीउत्पत्तिहोती उसकाअवश्यआदिहै औरजोगुणयुक्तवस्तुहै उसीकोगुणनाशहोनेसे रूपान्तरप्राप्तिरूपविकारभीहोताहै किन्तु जिसहेतुय हजीवपरमात्माओअनादितथानिर्गुणहेतुसेअव्ययअर्थात् अविकारीहै इससेहे कौन्तेय शरीरमेरहिकेभीकोईकर्मनहींकर्ता औरकर्मफलमेभी लिप्तनहींहोता अर्थात् इसकोकोईकर्मनहींलगते हैं ३१

यथासर्व्वगतंसौक्ष्म्यादाकाशंनोपलिप्यते सर्वत्रावस्थितोदेहेतथात्मानोपलिप्यते ३२

आनन्दगिरिकृतटीका

तथेति निरवयवत्वादेवअवयवद्वारकस्यनिर्गुणत्वाद्गुणद्वारकस्यच व्ययस्याभावेपि स्वभावतोव्ययःस्यादित्याशंक्याह परमात्मेति परमात्मनःस्वतःपरतोवाव्ययाभावेफलितमाह यतइति स्वमहिम्निप्रतिष्ठस्यकथंशरीरस्थत्वंतत्राह शरीरेष्विति सर्व्वगतत्वेनसर्व्वात्मत्वेनचदेहादौस्थितोपिस्वतोदेहाद्यात्मनावानकरोति कूटस्थत्वाद्देहादेश्चकल्पितत्वादित्यर्थः कर्तृत्वाभावेपिभोक्तृत्वंस्यादित्याशंक्याह तदकरणादिति तदेवोपपदयति योहीति परस्यकर्तृत्वादेरभावेकस्यतदिष्टमितिपृच्छति कःपुनरितिपरस्मादन्यस्यकस्यचिज्जीवस्यकर्तृत्वादीत्याशङ्कामनुवदति यदीतितस्मिन्पक्षेपक्रमभङ्गःस्यादितिदूषयति तदिति ईश्वरातिरिक्तजीवानङ्गीकारान्नोपक्रमविरोधोस्तीति शङ्कते अथेतितर्हिप्रतीतकर्तृत्वादेरधिकरणंवक्तव्यमितिपूर्ववाद्याह कइति परस्यैव कर्तृत्वाद्याधारत्वान्नास्तिवक्तव्यमित्याशंक्याह परोवेतिनास्तीतिवाच्यमितिपूर्व्वेणसम्बन्धःनहिकर्तृत्वादिसाक्षीपरस्मादाद्विवदीश्वरत्वमितिभावः परस्यान्यस्यवाकर्तृत्वादावविशिष्टेशरीरस्थोपीत्यादिश्रुतिमूलमपिज्ञातुं वक्तव्याशक्यत्वात् त्याज्यमेवेतिपरीक्षकसंमत्योपसंहरतिसर्वथेति परस्यवस्तुनोकर्तुरभोक्तुश्चाविद्ययातद्वारोपादादेयमेवभगवन्मतमितिपरिहरति तत्रेति तमेवपरिहारंप्रपञ्चयति अविद्येतिव्यावहारिकेकर्तृत्वादावविशिष्टेपारमार्थिकमेवकिंनेष्यतेतत्राह नत्विति वास्तवकर्तृत्वाद्यभावेलिङ्गमुपन्यस्यति अतइति ३१ सूक्ष्माभावादप्रतिहतस्वभावत्वादित्यर्थःनसम्बध्यते

स्वामिकृतटीका

लैश्चसुखदुःखादिभिर्व्यैपथ्य दुःपरिहारमितिकृतःसमदर्शनंतत्राह अनादित्वादिति यदुत्पत्तिमत्तदेवहिसादियच्चगुणवद्वस्तुतस्यगुणनाशेव्ययोभवति अयंन्तुपरमात्माअनादिर्निर्गुणश्चअतोऽव्ययःअविकारीत्यर्थःतस्मात्शरीरेस्थितोपिनकिञ्चित् करोतिनचकर्मफलैर्लिप्यते ३१ तत्रहेतुंसदृष्टान्तमाह यथेति यथासर्व्वगतपङ्कादि

भाषाअनुवाद

अबआत्माकेकर्मनकरनेऔकर्मफलमेंलिप्तनहोनेमे दृष्टान्तदेतेऊयेहेतुकहते हैं किजैसेसूक्ष्मताकेहेतुसेसर्वगतआकाशपङ्कआदिमेरहतेभीअसंगहेतुसेपङ्कआदिउसकोनहींलगतेअर्थात्पङ्कसेवहलिप्तनहीं होताहै तैसेहीयावतउत्तम मध्यम औअधमशरीरोंमेरहिकेभीआत्मालिप्तनहींहोताहै अर्थात्शरीरसंबंधीपुण्यपाप आदिसेयुक्तनहींहोताहै ३२ असंगहेतुसेपरमात्माकीनिर्लेपताआकाशकेदृष्टान्त

यथाप्रकाशयत्येकःकृत्स्नंलोकमिमंरविः क्षेत्रंक्षेत्रीयथाकृत्स्नंप्रकाशयतिभारत ३३

## शाङ्करभाष्यं

नलिप्यतइत्यत्रदृष्टान्तमाह यथासर्व्वगतमिति यथासर्व्वगतंसर्वव्याप्यपिसत्सौक्ष्म्यात् सूक्ष्मभावादाकाशंनोपलित्यतेनसम्बध्यतेसर्व्वत्रअवस्थितोदेहेतथात्मानोपलिप्यते३२

किञ्च यथाप्रकाशयतीति यथाप्रकाशयत्यवभासयत्येकःकृत्स्नं लोकमिमं रविः सवितादित्यःतथातद्वन्महाभूतादिधृत्यन्तंक्षेत्रमेकःसन्प्रकाशयति कःक्षेत्रीपरमात्मे त्यर्थः रविदृष्टान्तोत्रात्मनउभयार्थोपिभवति रविवत्सर्वक्षेत्रेष्वेकःआत्माअलेपक श्चेति ३३ समस्ताध्यायार्थोपसंहारार्थोयंश्लोकःक्षेत्रक्षेत्रज्ञयोरिति क्षेत्रक्षेत्र ज्ञयोर्यथाव्याख्यातयोरेवंयथाप्रदर्शितप्रकारेणअन्तरमितरेतरवैलक्षण्यविशेषंज्ञा नचक्षुषाशास्त्राचार्य्योपदेशजनितमात्मप्रत्यायिकंज्ञानंचक्षुस्तेनज्ञानचक्षुषाभूतप्रकृ तिमोक्षञ्चभूतानांप्रकृतिरविद्यालक्षणाव्यक्ताख्यातस्याभूतप्रकृतेर्मोक्षणमभावगम नञ्चयेविदुर्विजानन्तियान्ति गच्छन्तितेपरंपरमार्थतत्वंब्रह्म नपुनर्देहमाददति इ त्यर्थः ३४ इति श्रीभगवद्गीताभाष्येत्रयोदशोऽध्यायः १३

## आनन्दगिरिकृतटीका

पङ्कादिभिरितिशेषः ३२ नकरोति नलिप्यतेचेत्यत्रदृष्टत्वेनदृश्यधर्म्मशून्यत्वं हेतु माह किञ्चेति दृष्टान्तेनविवक्षितमर्थन्दर्शयति रवीति उभयविधधर्म्मार्थमेवस्फुटय ति रविवदिति ३३ अध्यायार्थं सफलमुपसंहरतिसमस्तेति विशेषकौटस्थ्यमपरि

## स्वामिकृतटीका।

व्यपिस्थितमाकाशंसौक्ष्म्यादसङ्गत्वात्पङ्कादिभिर्नोपलिप्यतेतथासर्वत्र उत्तमेमध्यमे अधमेवादेहेस्थितोऽप्यात्मानोपलिप्यतेदैहिकैर्दोषगुणैर्नयुज्यतइत्यर्थः ३२ असङ्गत्वा ल्लेपोनास्तीत्याकाशदृष्टान्तेनदर्शितंप्रकाशकत्वाच्चप्रकाश्यधर्म्मैर्नयुज्यतइतिरविदृष्टा न्तेनाह यथाप्रकाशयतीति स्पष्टोऽर्थः ३३ अध्यायार्थमुपसंहरति क्षेत्रक्षेत्रज्ञयो

## भाषाअनुबाद

सेदिखाया अबप्रकाशकहोकेभीजोप्रकाश्यवस्तुवोंकेधर्म्मसेआत्मायुक्तनहींहै यहसू र्यकेदृष्टान्तसेकहतेहैं किहेभारतअर्जुन एकयहीसूर्यजैसेसमस्तलोककोप्रकाशक रतेहैं परन्तुप्रकाश्यवस्तुकेगुणदोषसेलिप्तनहींहोतेऐसेहीक्षेत्रीजोआत्मासोक्षेत्र कहेशरीरआदिसबकोप्रकाशकरतेभीदेहादिकेगुणदोषसेलिप्तनहींहोताहै यह तुमहमारीबातसत्यकरकेमानोहेभारत ३३ अबअध्यायकेअर्थकाउपसंहारकरते

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा भूतप्रकृतिमोक्षञ्चये विदुर्यान्तितेपरम् ३४
इतिश्रीमहाभारतेभीष्मपर्वणिश्रीभगवद्गीतासूपनिषत्सुब्रह्मविद्यायांयोगशास्त्रेश्रीकृष्णार्जुनसम्वादे प्रकृतिपुरुषविवेकयोगोनाम त्रयोदशोऽध्यायः १३

आनन्दगिरिकृतटीका

णामादिलक्षणन्तदेवमसानित्वादिनिष्ठतयाक्षेत्रक्षेत्रज्ञयाथात्म्यविज्ञानवतःसर्वानर्थनिवृत्तपरिपूर्णपरमानन्दाविर्भावलक्षणपुरुषार्थसिद्धिरितिसिद्धं ३४

इति आनन्दगिरिकृतटीकायांत्रयोदशोध्यायः १३

स्वामिकृतटीका

रिति एवमुक्तप्रकारेणक्षेत्रक्षेत्रज्ञयोरन्तरंभेदं विवेकज्ञानलक्षणेनचक्षुषा येविदुःतथायेयमुक्ताभूतानांप्रकृतिस्तस्याःसकाशात्मोक्षंमोक्षोपायंध्यानादिकञ्चयेविदुस्तेपरंपदं यान्ति विविक्तौयेनतत्त्वेनसिथौप्रकृतिपूरुषौ तंवन्देपरमानन्दं नन्दनन्दनमीश्वरं ३४ इति श्रीधरस्वामिकृतटीकायांत्रयोदशोध्यायः १३

भाषा अनुवाद।

हैं अर्जुनइसप्रकारसेउक्तजोक्षेत्रऔक्षेत्रज्ञ तिनकाभेद जोमनुष्यविवेकज्ञानरूपचक्षुकेद्वारादेखतेहैं औरयहीपूर्वकहीहुईजोप्रकृति तिससेमोक्षअर्थात्मुक्तिकाउपायरूपध्यानधारणआदि जोजानतेहैं तेईपरमपदकोजातेहैं ३४ अध्यासवशतेअर्थात्निकटतासंगहेतुसे एकभावकोप्राप्तजोप्रकृतिऔपुरुष तिनदोनोकोजिसने स्वरूपभेदसेपृथककरकेप्रविभक्तकिया अर्थात्निश्चयकरजाना सोईपरमानन्दस्वरूपनन्दनन्दनश्रीकृष्णभगवानको मैंजगन्नाथसुकुलनामाप्रणामकरता हूं

इति जगन्नाथसुकुलविरचितमनभावनीभाषाटीकायां त्रयोदशोऽध्यायः १२

## चतुर्दशोऽध्यायः

श्रीभगवानुवाच परं भूयः प्रवक्ष्यामि ज्ञानिनां ज्ञानमुत्तमं यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः १

### शाङ्करभाष्यं

सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगादुत्पद्यत इति उक्तं तत्कथमिति तत्प्रदर्शनार्थं परं भूय इत्यादिरध्याय आरभ्यते अथवा ईश्वरपरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोर्जगत्कारणत्वं न तु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थं प्रकृतिस्थत्वं गुणेषु च सङ्गः संसारकारणमित्युक्तं कस्मिन् गुणे कथं संगः के वा गुणाः कथं वा बध्नन्तीति गुणेभ्यश्च मोक्षणं कथं स्यात् मुक्तस्य च लक्षणं वक्तव्यमित्येवमर्थञ्च श्रीभगवानुवाच परमिति परं ज्ञानमिति व्यवहितेन सम्बन्धः भूयः पुनः पूर्वेषु सर्वेषु अध्यायेषु असकृदुक्तमपि प्रवक्ष्यामि तच्च परं परवस्तुविषयत्वात् किं तत् ज्ञानं सर्वेषां ज्ञानानामुत्तमं उत्तमफलत्वात् ज्ञानानामिति नामानित्वादीनां किं तर्हि यज्ञादिज्ञेयवस्तुविषयाणामिति तानि न मोक्षायेदन्तु मोक्षायेति परोत्तमशब्दाभ्यां स्तौति श्रोतृबुद्धिरुच्युत्पादनार्थं यत् ज्ञात्वा यत् ज्ञानं ज्ञात्वा प्राप्य मुनयः संन्यासिनो मननशीलाः सर्वे परां सिद्धिं मोक्षाख्यामितोऽस्माद्देहबन्धनादूर्द्ध्वंगताः प्राप्ताः १

### भाषाअनुवाद

तेरहें अध्यायके छब्बीसयें श्लोकसे जो कहा कि प्रकृति औ पुरुषके संयोगसे संसारकी उत्पत्ति होती है निरीश्वरवादी सांख्यमतके अवलम्बियोंको ऐसी निश्चयके अनुसार संसारको स्वाधीनता नहीं है किन्तु ईश्वरकी इच्छाके क्रमहीसे सो होता है यह कहते हुये भगवान श्रीकृष्ण प्रकृति पुरुषकी स्वाधीनताके निवारणपूर्वक सत्त्वआदि गुणोंके संगसे संसारकी विचित्रता होती है और तेरहें अध्याहके एकइसयें श्लोकमें कहा जो सत्त्वादि गुणसे संसारकी चित्रता सो अब चौदहें अध्यायमें विस्तारसे भगवान कहते हैं कि और जो कहे गे उसकी प्रशंसा दो श्लोकसे कहते हैं कि परम जो परमार्थनिष्ठ जिसके द्वारा जाना जाय ऐसा जो ज्ञान उपदेश सो फेरि तुमसे कहूंगा सो ज्ञान किस प्रकारका है इस अपेक्षापर कहते हैं कि यह ज्ञान मोक्षका हेतु है इससे तप औ कर्म आदि विषयक सकल ज्ञानोंके बीच यह उत्तम है जिसको जानिके मुनिलोग स्थूल सूक्ष्म शरीरबन्धनसे छूटि श्रेष्ठ सिद्धिरूप मुक्तिको प्राप्त भये हैं इससे ज्ञानीयोंका यह उत्तम ज्ञान है यह जानो १

## आनन्दगिरिकृतटीका।

क्षेत्रक्षेत्रज्ञसंयोगस्य सर्वोत्पत्तिनिमित्तत्वमज्ञातं ज्ञापयितुमध्यायान्तरमवतारयन्नध्याययोरुत्पाद्योत्पादकत्वरूपां संगतिमाह सर्वमिति विधान्तरेणाध्यायारम्भं सूचयति अथवेति तदेव वक्तुमुक्तमनुवदति ईश्वरेति प्रकृतिस्थत्वं पुरुषस्य प्रकृत्या सहैक्याध्यासः तस्यैव गुणेषु संगोऽभिनिवेशः पडविवामाकांक्षां निक्षिप्य तदुत्तरत्वेनाध्यायारम्भे पूर्ववदेव पूर्वाध्यायसम्बन्धसिद्धिरित्याह कस्मिन्निति पूर्वोक्तेनार्थेनास्याध्यायस्य समुच्चयार्थश्चकारः परमित्यस्य भाविकालार्थत्वं व्यावर्त्तयितुं संगतिमाह परमितिभूयशब्दस्याभिकार्थत्वमिहनास्तीत्याह पुनरिति पुनःशब्दार्थमेव विवृणोति पूर्वेष्विति पुनरुक्तिस्तर्ह्यत्यागं स्यस्त्वत्वेन दुर्बोधत्वात् पुनर्वचनमर्थवदित्याह तच्चेति विशेष्यं प्रश्नद्वारा निर्दिशति किन्तदिति निर्द्धारणार्थां षष्ठीमादाय तस्य प्रकर्षं दर्शयति सर्वेषामिति परमुत्तममिति पुनरुक्तिमाशंक्य विषयफलभेदान्नैवमित्याह उत्तमेति ज्ञानं ज्ञेयमित्यादौ ज्ञानशब्देनामानित्वादीनामुक्तत्वात्तन्मध्ये च ज्ञानस्य ज्ञानिनामिति साध्यत्वेनोक्तत्वान्न तस्य वक्तव्यतेत्याशंक्याह ज्ञानिनामिति ज्ञानिनामितिनामानित्वादीनां ग्रहणमिति शेषः इतिशब्दादूर्द्धं पूर्ववदेव शेषो द्रष्टव्यः यथोक्तज्ञानापेक्षया कुतस्तज्ज्ञानस्य प्रकर्षस्तत्राह तानीति स्तुतिफलमाह श्रोतृबुद्धीति ज्ञानं ज्ञात्वा ज्ञानस्य ज्ञेयत्वोपगमादनवस्थेत्याशंक्याह आप्येतिमुनिशब्दस्य चतुर्थाश्रमविषयत्वे तन्मात्रादेव ज्ञानयोगात् कुतस्तेषां मुक्तिरित्याशंक्याह मननेति सिद्धेर्ज्ञानत्वं परामितिविशेषणाद्व्यावर्त्यमुक्तित्वमाह मोक्षाख्यामिति देहास्यस्य बन्धनस्याध्यक्षत्वमाह अस्मादिति १

## स्वामिकृतटीका

पुंप्रकृत्योः स्वतन्त्रत्वं वारयन् गुणसङ्गतः प्राह संसारवैचित्र्यं विस्तरेण चतुर्दशे यावत्संजायते किञ्चित्सत्वं स्थावरजङ्गमं क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धीत्युक्तं स च क्षेत्रक्षेत्रज्ञयोः संयोगो निरीश्वरसांख्यानामिव न स्वातन्त्र्येण किन्त्वीश्वरेच्छयैवेति कथनपूर्वकं कारणं गुणसंगोऽस्य सदसद्योनिजन्मस्वित्यनेनोक्तं सत्वादिगुणकृतं संसारवैचित्र्यं प्रपञ्चयिष्यन्नेवंभूतं वच्यमाणमर्थं स्तौति परंभूय इति द्वाभ्यां परं परमात्मनिष्ठं ज्ञायतेऽनेनेति ज्ञानमुपदेशं भूयोऽपि तुभ्यं प्रकर्षेण वच्यामि कथंभूतं ज्ञानिनां तपःकर्मादिविषयाणां मध्ये उत्तमं मोक्षहेतुत्वात् तदेवाह यज्ज्ञात्वा मुनयो मननशीलाः सर्वे इतो देहबन्धनात् परां सिद्धिं मोक्षं प्राप्ताः १ किञ्च इदमिति इदं वच्यमाणं ज्ञानमुपाश्रि

इदंज्ञानमुपाश्रित्यममसाधर्म्यमागताः सर्गेपिनोपजायन्तेप्रलयेनव्यथन्तिच २

## शाङ्करभाष्यम्।

तस्याश्चसिद्धेरैकान्तिकत्वंदर्शयति इदमिति इदंज्ञानंयथोक्तमुपाश्रित्यज्ञानसा
धनमनुष्ठायेत्येतन्ममपरमेश्वरस्यसाधर्म्यंमत्स्वरूपतामागताः प्राप्ताइत्यर्थोनतुसमा
नधर्मतांसाधर्म्यंक्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमात्गीताशास्त्रेफलवादश्चायंस्तुत्यर्थमुच्य
ते सर्गेपिसृष्टिकालेपिनोपजायन्तेनोत्पद्यन्ते प्रलयेब्रह्मणोपिविनाशकालेनव्यथन्ति
चव्यथांनापद्यन्तेनच्यवन्तीत्यर्थः २ क्षेत्रक्षेत्रज्ञसंयोगइदृशोभूतकारणमित्याह
ममेति ममस्वभूतामदीयामायात्रिगुणात्मिकाप्रकृतियोनिःसर्वभूतानांसर्वकार्येभ्योम
हत्वात्भरणाच्चस्वविकाराणांमहद्ब्रह्मेति योनिरेवविशिष्यते तस्मिन्महतिब्रह्मणि
योनौगर्भंहिरण्यगर्भस्यजन्मनोबीजंसर्वभूतजन्मकारणंबीजंदधामिनिक्षिपामिक्षेत्र
क्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोहमविद्याकामकर्मोपाधिस्वरूपानुविधायिनंक्षे
त्रज्ञंक्षेत्रेणसंयोजयामीत्यर्थः सम्भवउत्पत्तिःसर्वभूतानांहिरण्यगर्भोत्पत्तिद्वारेण
ततस्तस्मात्योनेर्मूलकारणाद्गर्भाधानात्भवति ३ सर्व्वयोनिष्विति देवपितृमनुष्य

## आनन्दगिरिकृतटीका

ज्ञानफलस्यकर्म्मफलवैलक्षण्यमाह तस्याश्चेति कथंज्ञानाश्रयणंतद्धेतुश्रवणादि
सम्पत्तिद्वारेत्याह ज्ञानेति साधर्म्यंगोगवयोरिवविद्वदीश्वरयोरपिभेदःस्यादित्याशं
क्याह मत्स्वरूपतामिति साधर्म्येऽस्यमुख्यत्वेभेदधौव्याद्गीताशास्त्रविरोधःस्यादित्याह
नत्वितिज्ञानस्तुतयेतत्फलस्यविवक्षितत्वाच्चनात्रसारूप्यमिष्टमित्याह फलेतिसारूप्ये
धीफलंहित्वाध्यानफलमप्रस्तुतंप्रसज्यतेत्यर्थःईश्वरात्मतांगतानामेवअवान्तरसर्गादौ
जन्माद्यभावेपिमहासर्गादौतद्भविष्यतीत्याशंक्याह सर्गेपीति २ ज्ञानस्तुत्यातदभि

## स्वामिकृतटीका

त्वज्ञानसाधनमनुष्ठायममसाधर्म्यंमद्रूपत्वंप्राप्ताःसन्तःसर्गेऽपि ब्रह्मादिषूत्पद्यमाने
ष्वपिनोत्पद्यन्ते तथाप्रलयेऽपिनव्यथन्तिप्रलयदुःखंनानुभवन्तिपुनर्नावर्त्तन्तइत्यर्थः२

## भाषाअनुवाद

औरयहीज्ञानअर्थात्ज्ञानकासाधनजोअवतुमसेकहूंगातिसकाअनुष्ठान करिकेक
हेअाश्रयलेके सारूप्यमुक्तिकोप्राप्तसकलमुनिजन सर्गकहेब्रह्मादिककीउत्पत्ति
होनेसे भीउतपन्ननहींहोतेहैं औरप्रलयकालमेंभीप्रलयकेदुखकोनहीं भोगतेहैं
अर्थात्पुनरागमनसेरहितहोजाते हैं २ उसीज्ञानसाधनकीप्रशंसाकरिश्रोता

ममयोनिर्महद्ब्रह्मतस्मिन्गर्भंदधाम्यहं सम्भवःसर्व्वभूतानांततोभवति भारत ३

## आनन्दगिरिकृतटीका

सुखायाव्यवहितचेतसेविवक्षितमर्थमाह ममेति स्वरूपत्वेनस्वभूतत्वंवारयति मदी येति ईश्वरींचिच्छक्तिंव्यावर्त्तयतित्रिगुणात्मिकेति सांख्यीयप्रकृतिरपिमदीयेतिव्या वर्त्तितायोनिशब्देनसर्व्वाणिभवनयोग्यानिकार्य्याणिप्रत्युपादानत्वभिप्रेतमित्याहसर्व्व भूतानामिति प्रकृतेर्म्महत्त्वंसाधयति सर्व्वेति सर्वकार्यव्याप्तिमादाययोनावेवब्रह्मश ब्दः नलिङ्गवैपम्यान्महद्ब्रह्मेत्यर्थान्तरंकिञ्चिदित्याशंक्याह योनिरिति तस्मिन्नित्यादि व्याचष्टेतस्मिन्नितिईदृशस्यक्षेत्रक्षेत्रज्ञसंयोगस्यभूतकारणत्वमितिवक्तुमुपक्रम्यकिमि दमन्यदादर्शितमित्याशंक्याह क्षेत्रेतिगर्भशब्देनोक्तसंयोगस्यफलंदर्शयति सम्भवइति आदिकर्त्तासभूतानांइति स्मृत्वाहिरण्यगर्भकार्यत्वावगमाद्भूतानांकथंयथोक्तगर्भाधान निमित्तत्वमित्याशंक्याह हिरण्यगर्भेति ३ ननुकथमुक्तकारणानुरोधेनहिरण्यगर्भोद्भ

## स्वामिकृतटीका ।

तदेवंप्रशंसयाश्रोतारमभिमुखीकृत्य परमेश्वराधीनयोःप्रकृतिपुरुषयोःसर्व्वभूतो त्पत्तिंप्रतिहेतुत्वंनतुस्वतन्त्रयोरितीमंविवक्षितमर्थंकथयति ममेति देशतःकालतश्चा परिच्छिन्नत्वान्महत्बृंहितत्वात्स्वकार्य्याणांवृद्धिहेतुत्वाद्वाब्रह्मप्रकृतिरित्यर्थः तन्म हद्ब्रह्ममसपरमेश्वरस्ययोनिर्गर्भाधानस्थानं तस्मिन्नहंगर्भंजगद्विस्तारहेतुंचिदाभा संदधामिनिःक्षिपामि प्रलयेमयिलीनंसन्तमविद्याकामकर्मानुशयवन्तं क्षेत्रज्ञंसृ

## भाषा अनुवाद

अर्जुनकोश्रवणकीअभिलाषबढ़ाय परमेश्वरकेआधीनजोप्रकृतिऔपुरुषयेदोनोसक लभूतमात्रकीउत्पत्तिकेकारणहैं परन्तुस्वाधीनप्रकृतिपुरुषकोकारणत्वनहींहै य हीतात्पर्यअबकहतेहैं कि प्रकृतिदेशकालसेअपरिच्छिन्नअर्थात्सबसेभिन्नमहतक हेअनन्तसमस्तकार्यकीहेतुरूपब्रह्महै सोयहीमहतब्रह्मनामजोप्रकृति सोपरमे श्वरस्वरूपहमारीजोनि है अर्थात्गर्भधारणकास्थानहै सोइसीप्रकृतिमेंमैंगर्भ कहेजगतकेविस्तारकाहेतुचिदाभास कहेचेतनअंशवीजरूपकोस्थापनकरताहूं औप्रलयकालमेंहमारेहीमेंलीनहोयहै औरअविद्यासेउत्पन्नजोकाम्यकर्म्म तिनके संस्कारसेयुक्तक्षेत्रज्ञआत्माकोसृष्टिकालमेंभोग्यजोक्षेत्रकहेनानाप्रकारदेहतिन मेंसम्यकप्रकारसेयोगकरताहूंऔरवहीगर्भआधानसेब्रह्माआदिसमस्तभूतकीउत् पत्तिहोतीहै हेभारत अर्जुन श्रवणकरो ३ केवलसृष्टिकालहीमेंप्रकृतिपुरुष के

सर्वयोनिषुकौन्तेयमूर्त्तयःसम्भवन्तिया: तासांब्रह्ममहद्योनिरहंबीजप्रदःपिता ४

## शाङ्करभाष्यं

पशुमृगादिसर्वयोनिषुकौन्तेयमूर्तयोदेहसंस्थानलक्षणामूर्च्छिताङ्गावयवामूर्त्तयःस म्भवन्तियास्तासांमूर्त्तीनांब्रह्ममहत्सर्वावस्थंयोनिःकारणमहमीशोबीजप्रदोगर्भा धानस्यकर्त्तापिता ४ केगुणाःकथंबध्नन्तीत्युच्यते सत्वमिति सत्वंरजस्तमइत्येवना मानोगुणाइति पारिभाषिकःशब्दोनरूपादिवत्द्रव्याश्रिताः नचगुणगुणिनोरन्यत्त्व मत्रविवक्षितंतस्माद्गुणाइवनित्यपरतन्त्राः क्षेत्रज्ञंप्रत्यविद्यात्मकत्वात्क्षेत्रज्ञंनिबध्न न्तीवतमास्पदीकृत्यात्मानंप्रतिलभ्यतइतिनिबध्नन्तीत्युच्यते तेचप्रकृतिसम्भवाभग वन्मायासम्भवानिबध्नन्तीवहेमहावाहोमहान्तौसमर्थतरावाजानुप्रलम्बौबाहू यस्य समहावाहुःहेमहावाहो देहेशरीरेदेहिनंदेहवन्तंअव्ययमव्ययत्वञ्चोक्तमनादि त्वादित्सोके ५ ननुनदेहीलिप्यते इत्युक्तं तत्कथमिहनिबध्नन्तीत्यन्यथाउच्यते प

## आनन्दगिरिकृतटीका।

वमभ्युपेत्यभूतानामुत्पत्तिरुच्यते देवादिजातिविशेषेषुदेहविशेषाणांकारणान्तरसम्भ वात्तत्राह सर्वयोनिष्विति तत्रतत्रहेत्वन्तरप्रतिभापेक्षतोस्यहेतुत्वमित्याशंक्यनतद्रू पेणास्यैवावस्थानादित्याह सर्वावस्थमिति ४ एवंक्षेत्रक्षेत्रज्ञसंयोगाज्जगदुत्पत्तिंद र्शयताब्रह्मैवाविद्ययासंसरतीत्युक्तं इदानीमध्यायादावुक्तमाकांक्षाद्वयं पूर्वमनूद्यान न्तरश्लोकेनोत्तरमाह केगुणाइति सत्वादिषुकथंगुणशब्दप्रवृत्तिरित्याशंक्यपरतन्त्र

## स्वामिकृतटीका।

ष्टिसमयेभोग्येनक्षेत्रेणसंयोजयामीत्यर्थः ततोगर्भाधानात्सर्वभूतानांब्रह्मादीनांस म्भवउत्पत्तिर्भवतीति ३ नकेवलंसृष्ट्युपक्रमएवसदधिष्ठानेनाभ्यांप्रकृतिपुरुषाभ्याम यंभूयोत्पत्तिप्रकारोऽपितुसर्वदैवेत्याह सर्वेति सर्वासुयोनिषुमनुष्याद्यासुयामूर्त्तयः स्थावरजङ्गमात्मिकाउत्पद्यन्तेतासांमूर्त्तीनांमहद्ब्रह्मप्रकृतियोनिर्मातृस्थानीया अहञ्चबीजप्रदःपितागर्भाधानकर्त्तापिता ४ तदेवंपरमेश्वराधीनाभ्यां प्रकृतिपुरु

## भाषा अनुवाद

द्वाराभूतोंकाजन्महोताहै ऐसानजानो परन्तुसदासर्वदाप्रकृतिपुरुषसेप्राणीप्रगट हुआकरतेयहकहतेहैं किहेकौन्तेयअर्जुन जितनेमनुष्यआदियोनिस्थावरजंगमस्व रूपउतपन्नहोतेहैं उनकीनिरन्तरवढावनेवालीप्रकृतियोनिहै अर्थात्माताहूप है औबीजप्रदातापिताहूपगर्भाधानकर्त्तापुरुषरूपमैंहौं ४ परमेश्वराधीनप्रकृ

सत्वंरजस्तमइतिगुणाःप्रकृतिसम्भवाः निबध्नन्तिमहाबाहोदेहेदेहिनमव्ययं ५

## शाङ्करभाष्यं

रिहृतंअस्माभिरिवशब्देननिबध्नन्तीवेति तत्रसत्त्वमिति तत्रसत्त्वादीनांसत्वस्यैवताव
ल्लक्षणमुच्यते निर्मलत्वात्स्फटिकइवमणिः१ काशकमनामयंनिरुपद्रवंसत्वं तन्निव
ध्नातिकथंसुखसङ्गेनसुख्यहमितिविषयभूतस्यसुखस्यविषयिण्यात्मनिसंश्लेषापादनंमृषै
वसुखेनसंजननमिति सैषाअविद्यानहिविषयधर्मोविषयिनोभवतिइच्छादिचधृत्यन्तं
क्षेत्रस्यैवविषयस्यधर्मइत्युक्तंभगवताअतोऽविद्ययैवस्वकीयधर्मभूतया विषयविषय्य

## आनन्दगिरिकृतटीका

त्वादित्याह गुणाइतिरूपादिष्विवगुणशब्दःसत्त्वादिषुद्रव्याश्रितत्वंनिमित्तीकृत्यकिं
नस्यादित्याशंक्याह पारिभाषिकइति प्रकृत्यात्मकानांतेषांसर्व्वाश्रयत्वान्नैवमित्याह
नरूपादिवदितिगुणानांप्रकृतेश्चपृथगुक्तेरन्यत्वे कुतस्तेषां प्रकृत्यात्मत्वमित्याशंक्याह
नचगुणेति अत्यन्तभेदेगवाश्ववत्तद्भावासम्भवादित्यर्थः भेदाभेदेचतद्भावासम्भवाद्विशे
षात्कुतस्तेषुगुणपरिभाषेत्यशंक्याहतस्मादिति चेतनंप्रतिनित्यपारतन्त्र्यहेतुना
हअविद्येति केगुणाइत्यस्योत्तरमुक्तं कथंबध्नन्तीत्यस्योत्तरमाहत्वेतत्त्वमिति तदेवोप
पादयतितमास्वदेीकृत्येति सम्भवत्यस्मादितिसम्भवःप्रकृतिःसम्भवोयेषांतेतथेतिप्राकृ
तानांगुणानांप्रकृत्यात्मकत्वमाह तेचेतिसांख्यीयांप्रकृतिंप्रधानाख्यांव्यावर्त्तयतिभग
वदिति इवकारानुबन्धेननितरांबध्नन्तिस्वविकारवत्तयोपदर्शयन्तीतिक्रियापदंव्या
ख्यायमहाबाहुशब्दंव्याचष्टे महान्तावितिदेहवन्तदेहमात्मानंमन्यमानंदेहस्वामि
नमित्यर्थः कूटस्थस्यकथंबध्यमानत्वमित्याशंक्यकुर्यामेरावणधियमितिन्यायेनमाहा
त्मिदमित्याहअव्ययमिति स्वतोधर्मतोवाव्ययोराहित्यापेक्षायामाहअव्ययत्वञ्चेति५

## भाषाअनुवाद

तिपुरुषकेद्वाराप्राणियोंकीउत्पत्तिनिरूपणकरिकेअवप्रकृतिकेसंयोगसे पुरुषकी
संसारअवस्थाइसश्लोकसेलेकरचारिश्लोकपर्यन्तक्रमसेविस्तारकरिकहतेहैं किहेम
हाबाहोअर्जुन सत्त्वरजऔतमयेतीनगुणोंकीसमानअवस्थारखनेवालीजोप्रकृति ति
ससेजिसकीउत्पत्तिहैं उसमेंगुणोंकेधर्म्मआवहींगेदेखोप्रकृतिसेगुणोंकेअनुसार
भिन्नभिन्नप्रगटहोप्रकृतिकेकार्यरूपशरीरमेंअहंबुद्धियुक्तास्थितदेहीस्वरूपचिदंश
आत्माजोसचभुचअव्ययनिर्विकाररूपहै उसकोभीगुणअच्छीतरहबद्धकरतेहैं अ
र्थात् अपने कार्य्यसुखदुखमोहआदि से युक्त करदेतेहैं ५ तिनगुणोंकेबीचमेंसतो

तत्रसत्त्वंनिर्मलत्वात्प्रकाशकमनामयं सुखसङ्गेनबध्नातिज्ञानसङ्गेनचानघ ६

## शाङ्करभाष्यं

विवेकलक्षणयाऽस्यात्मभूते सुखेसंजयतीवासक्तमिवकरोत्यसुखिनंसुखिनमिवतथाज्ञानसंज्ञेनचदेहिनंज्ञानमिति सुखसाहचर्य्यात् चेत्रस्यैवान्तःकरणस्यधर्म्मोनात्मनःआत्मधर्म्मत्वेसङ्गानुपपत्तेर्बन्धानुपपत्तेश्चसुखदृवज्ञानादौसङ्गोमन्तव्यःअनघअव्यसन ६

## आनन्दगिरिकृतटीका ।

लिप्यतेनसपापेनेत्यनेनविरुद्धमिदंनिबध्नन्तीतिवचनमिति शङ्कतेनन्विति इद्वकारानुबन्धेनक्रियापदंव्यचक्षाणैरस्माभिरस्यचोद्यस्यपरिहृतत्वान्नैवमित्याह परिहृतमिति किंलक्षणोगुणःकेनबध्नातीत्यपेक्षायामाह तत्रेति निर्द्धारणार्थतयासप्तमींव्याचष्टे तत्रसत्त्वादीनामिति पुनस्तत्रेत्यनुवादमात्रं निर्म्मलत्वंस्वच्छत्वमावरणत्तमत्वंतस्मात्प्रकाशञ्चैतन्याभिव्यञ्जकंनिरुपद्रवमितिनिर्मलंसत् सुखस्याभिव्यञ्जकमित्यर्थः केनद्वारेणतदात्मानंनिबध्नातीतिपृच्छति कथमिति सुखसङ्गेनबध्नातीत्युत्तरन्तदेवविवृणोति सुख्यहमित्यादिना सुखसुखस्याभिव्यञ्जकसत्त्वपरिणामोत्वविषयभूतंसुखमुच्यते संश्लेषापादनमेवविशदयति स्वपैवेति किमितिस्वपैवेतिविशेषणं

## स्वामिकृतटीका

षाभ्यांसर्वभूतोत्पत्तिंनिरुप्येदानींप्रकृतिसंगेनपुरुषस्यसंसारंप्रपञ्चयति सत्त्वमित्यादिचतुर्भिः सत्वंरजस्तमइत्येवंसंज्ञकास्त्रयोगुणाप्रकृतिसम्भवाःप्रकृतेःसम्भवउद्भवोयेषांतेतथोक्ताःगुणसाम्यंप्रकृतिस्तस्याःसकाशात्पृथक्त्वेनाभिव्यक्ताःसन्तः प्रकृतिकार्य्येदेहेतादात्म्येनस्थितंदेहिनंचिदंशंवस्तुतोऽव्ययंनिर्विकारमेवसन्तंनिबध्नन्तिस्वकार्य्यैःसुखदुःखमोहादिभिःसंयोजयन्तीत्यर्थः ५

## भाषा अनुवाद ।

गुणकास्वरूपऔरउसकेबन्धकत्वकीप्रकारकहतेहैं किसतोगुणनिर्म्मलताकेहेतुसे स्फटिककेसमानप्रकाशककहेदीप्तियुक्तऔर अनामयअर्थात्निरुपद्रवशान्तस्वरूपहैं इसीसेहेअनघनिःपापअर्जुन शान्तस्वरूपसतोगुणअपनेकार्यरूपसुखमेजोआशक्तिकेद्वाराबन्धकरताहै औरप्रकाशकहै इसहेतुसे अपनेकार्य्यरूपज्ञानमेजोआशक्तिउसमेभीबद्धकरताहै अर्थात्हमसुखीहमज्ञानीइत्यादिमनकेसकलकर्म्मकोतिसकेअभिमानीक्षेत्रज्ञरूपआत्माकेसाथसम्पूर्णरूपसेयोगकरदेताहै अनघपदसेजानायाकिगीताकाअधिकारीपुण्यात्मापुरुषहै ६

रजोरागात्मकं इति रजोर
ञ्जिटष्णासङ्गसमुद्भवं तृष्णारू
प:तृष्णासंगसमुद्भवं तृष्णासं
य कर्मसङ्गेन दृष्टादृष्टार्थेषु कर
तमस्त्विति तमस्तृतीयो

आनन्दगिरिकृतटीका

सङ्गस्यवस्तुत्वमस्मवादित्याशंक्याह सैवेति ननिच्छासङ्गोभिनिवेशश्चेत्येकोर्थस्तवेच्छा
देरात्मधर्मत्वात्किमविद्ययेत्याशंक्यमनोधर्मत्वादिच्छादेर्नात्मधर्मतेत्याह नहीति इ
च्छादेरनात्मधर्मत्वे किंप्रमाणमित्याशंक्याह इच्छादिचेति तस्यात्मधर्मत्वासम्भवे फ
लितमाह अतइति संजयतीवसत्त्वमितिशेषः इवकारप्रयोगे हेतुमाह अविद्ययेति
तस्मात्स्तुतोनात्मसम्बन्धस्तथापिसम्बन्धान्तराभावादस्यातन्त्ररात्र आत्मधर्मत्वनाया
द्यदृष्टमाचष्टे स्वकीयेति कृतिमदन्तःकरणस्यविषयत्वादात्मनःसाधकत्वेनतद्विषयत्वे
पितदविवेकरूपाविद्येतितत्स्वरूपमाह विषयेति यथोक्ताविद्यामाश्रात्मप्रसिद्धंयद्
स्वरूपेतद्धर्मचग्रन्थिसम्पादनमित्याह अस्येति तदेवस्फुटयति असक्तमिवेतिप्रकारा
न्तरेणसत्त्वस्यनिबन्धत्वमाह तथेति ज्ञायतेऽनेनेति सत्वपरिणामोज्ञानंतेनज्ञान्यह
मिति विपरीताभिमानेनसत्त्वमात्मानंनिबध्नातीत्याह ज्ञानमित्यादिना विधत्तेशेष
माह आत्मेति स्वाभाविकत्वेनप्राप्तत्वात्तवस्तुतःसंयोगात्तद्द्वाराबन्धेचतन्निवृत्त्यनुपप
त्तेर्नात्मधर्मत्वमित्यर्थः ज्ञानैश्वर्यादावपिचित्तधर्मेसङ्गस्यपूर्ववदाविद्यकत्वंसूचयति
सुखइवेति मायादिदोषहीनस्यैवावगाहनेऽधिकारइति द्योतयति अनघेति ६
रजस्तर्हि किंलक्षणंकथंवापुरुषंनिबध्नातीत्याशंक्याह रजइति रज्यतेसंरज्यतेऽ
नेनपुरुषोदृश्यैरिति रागोऽस्यावात्माऽस्येति रागात्मकंरजोजानीहीत्याहरञ्जनादि

स्वामिकृतटीका।

तत्रसत्त्वस्यलक्षणंबन्धकत्वप्रकारञ्चाह तत्रेति तत्रतेषांगुणानांमध्ये सत्त्वंनिर्मलत्वा
त्स्वच्छत्वात् स्फटिकमणिरिवप्रकाशकंभास्वरंअनामयञ्चनिरुपद्रवंशान्तमित्यर्थः
अतःशान्तत्वात्स्वकार्येणसुखेनयःसङ्गस्तेनबध्नाति प्रकाशकत्वाच्चस्वकार्येणज्ञानेनयः
सङ्गस्तेनचबध्नातिहेअनघअपापअहंसुखीज्ञानीचेतिमनोधर्मास्तदभिमानिनि क्षेत्र
ज्ञेसंयोजयतीत्यर्थः ६ रजसोलक्षणंबन्धकत्वञ्चाह रजइति रजःसंज्ञकंगुणंरागात्म

होता।

न्वभातिकौन्तेयकर्म्मसङ्गेनदेहिनं ७

ध्यं

ादालस्यनिद्राभिःप्रमादश्चालस्यश्चनि

भारत ८ पुनर्गुणानांव्यापारःसंक्षे

...गिरिकृतटीका

ति ... ...ादिति समुद्भवःतृष्णाचासङ्गश्चतृष्णासङ्गौतयोःसमुद्भवःतमिति वि ग्रहंगृहीत्वाकार्यद्वारारजोविवृणुतृष्णासङ्गयोरर्थभेदमाह तृष्णेत्यादिनारजसोल क्षणमुक्त्वानिबन्धत्वप्रकारमाहतद्रजइतिकर्मसङ्गंविभजते दृष्टेति अकर्त्तारमेवपुरुषं करोमिइत्यभिमानेनप्रवर्त्तयतीत्यर्थः ७ तमस्तर्हिकिंलक्षणंकथंवापुरुषंनिबध्नाति तत्राह तमस्त्विति गुणानांप्रकृतिसम्बन्धत्वाविशेषेपितमसोऽज्ञानजत्वविशेषणंतद्वि परीतस्वभावाप्तेरितिमत्वाह अज्ञानादिति मुह्यति हिताहितेनविविच्यतेत्यनेन इतिमोहनम्विवेकप्रतिबन्धकमिति कार्यद्वारातमोनिर्दिशति मोहनमित्यादिना लक्ष णमुक्त्वातमसोबन्धनकरत्वंदर्शयति प्रमादेति कार्यान्तरासक्ततयाचिकीर्षितस्य क र्त्तव्यस्याकरणंप्रमादःनिरीहतयोत्साहप्रतिबन्धस्त्वालस्यंस्वापोनिद्रातामिरात्मालम विकारमेवतमोपिविकारयतीत्यर्थः ८ उक्तानांमध्ये कस्मिन्कार्येकस्यगुणस्योत्क

स्वामिकृतटीका।

कामबुरञ्जनरूपंविद्धि अतएवतृष्णासङ्गसमुद्भवंतृष्णाअप्राप्ताभिलाषः सङ्गःप्राप्तेऽर्थे प्रीतिर्विशेषेणासक्तिस्तयोस्तृष्णासङ्गयोःसमुद्भवोयस्मात्तद्रजोदेहिनं दृष्टादृष्टार्थेषु कर्मसुसंगेनासक्त्यानितरांबध्नाति तृष्णासङ्गाभ्यांहिकर्मस्वासक्तिर्भवति इत्यर्थः ७ तमसोलक्षणंबन्धकत्वञ्चाह तमइति तमस्त्वज्ञानाज्जातंआवरणशक्तिप्रधाना त्प्रकृत्यंशादुद्भूतंविद्धीत्यर्थः अतःसर्वेषांदेहिनांमोहनंभ्रान्तिजनकंअतएव प्रमादेना लस्येननिद्रयाचतत्तमोदेहिनंनिबध्नाति अत्रप्रमादोऽनवधानंआलस्यमनुद्यमःनिद्रा चित्तस्यावसादःलयः ८ सत्वादीनामेवस्वस्वकार्यकरणेसामर्थ्यातिशयमाह सत्व

भाषाअनुवाद

अबरजोगुणकास्वरूपऔरबन्धकत्वकहतेहैं किहेकौन्तेयअर्जुन रजोगुणकोरागा त्मककहेअनुरागस्वरूपजानो इसमेंतृष्णाजोअप्राप्तवस्तुमेंअभिलाषऔसंगकहेप्रा प्तविषयमेंजोसम्पूर्णआशक्तिइनदोनोंकारजोगुणसेउद्भवहोताहैसोईरजोगुणदेही जीवकोदृष्टऔअदृष्टअर्थकर्मोंकीआशक्तिमेंनिश्चयबन्धकरैहैं क्योंकितृष्णाऔसंगके द्वारासमस्तकर्मसेआशक्तिहोतीहै ७ अबतमोगुणकास्वरूपऔबन्धकत्वकहतेहैं

तमस्त्वज्ञानजंविद्धिमोहनंसर्वदेहिनां प्रमादालस्यनिद्राभिस्तन्निबध्नातिभारत ८
सत्त्वंसुखेसञ्जयति रजःकर्मणिभारत ज्ञानमावृत्यतुतमःप्रमादेसञ्जयत्युत ९

## शाङ्करभाष्यं।

पतउच्यते सत्वमिति सत्वंसुखेसंजयतिसंश्लेषयतिरजःकर्मणिहेभारत संजयतीतिवर्त्ततेज्ञानंसत्वकृतंविवेकमावृत्याच्छाद्यतुतमःस्वेनावरणात्मनाप्रमादेसंजयत्युतप्रमादोनामप्राप्तकर्त्तव्याकरणं ९ उक्तकार्यंकदाकुर्व्वन्तिगुणाइत्युच्यते रजइति रजस्तमश्चोभावप्यभिभूयसत्वंभवत्युद्भवति वर्द्धतेयदातदालब्धात्मकंसत्वंस्वकार्यंज्ञानसुखाद्यारभतेहेभारत तत्तथारजोगुणःसत्वंतमश्चैवोभावप्यभिभूयवर्द्धतेयदातदाकर्म

## आनन्दगिरिकृतटीका।

यस्त्वत्राह पुनरिति सुखसाध्येविषयेसमुत्कम्पतेसत्त्वमित्याह सत्वमिति सञ्जयतीत्यस्यार्थमाह संश्लेषयतीति कर्मणिसाध्येरजःसमुत्कम्पतइत्याह रजइति प्रमादेप्राधान्यस्तमसोदर्शयति ज्ञानमिति ९ इतरेतराविरोधेनवा सत्वाद्योगुणायुगपदुत्

## स्वामिकृतटीका

मिति सत्वंसुखेसञ्जयतिसंश्लेषयतिदुःखशोकादिकारणेसत्यपिसुखाभिमुखमेवदेहिनंकरोतीत्यर्थः एवंसुखादिकारणेसत्यपिरजःकर्मण्येवसञ्जयति तमस्तुमहत्संगेनोत्पद्यमानमपिज्ञानमानमपिज्ञानमावृत्याच्छाद्य प्रमादेसञ्चयतिमहद्भिरुपदिश्यमानस्यार्थस्यानवधानेयोजयति उतअपिआलस्यादावपिसंयोजयतीत्यर्थः ९ तत्क्षेतुमा

## भाषाअनुवाद।

कितमोगुणअज्ञानसेप्रगटहै अर्थात्आवरणशक्तिप्रधानप्रकृतिकेअंशसेप्रगटजानोइससेहेभारतअर्जुन यावत्जीवकामोहकारीअर्थात्भ्रमउत्पन्नकरैहै तो कौन यहतमोगुण प्रमादआलस्यऔनिद्राआदि दोष जीवको करैगा ८

सत्वआदितीनोगुणोंकेस्वकार्यकरनेमेसामर्थकीआधिक्यकहतेहैं कि हेभारत अर्जुनसतोगुणसुखमेयुक्तकरताहै अर्थात्यद्यपिविषयसुख ईर्षाअसूयाजोगसे प्रगटसुखदुखशोकआदिकाकारणस्वरूपहै तौभीजीवकोसुखहीकीओरउन्मुख करताहै औररजोगुणसुखआदिकाकारणहोकेभीसर्व्वकर्मोंमेयुक्तकरताहै औरतमोगुणमहात्मोकेसंगसेउत्पन्नज्ञानकोआवरणकरिकेअसावधानकरदेयहै अर्थात्महात्मोंकेउत्तमउपदेशकोनहीसमझनेदेयहै औरआलस्यआदिमे अच्छीतरहयुक्तकरदेताहै ९ अबसत्वादितीनोगुणोंकेप्रवृत्तहोनेकीरीति कहतेहैं किरजोगुणत

रजस्तमश्चाभिभूय सत्वं भवतिभारत रजःसत्वं तमश्चैव तमःसत्त्वंरजस्तथा १०
सर्व्वद्वारेषुदेहेऽस्मिन्प्रकाशउपजायते ज्ञानंयदातदाविद्याद्विवृद्धंसत्त्वमित्युत ११

## शाङ्करभाष्यं।

तृष्णादिस्वकार्यमारभतेतमआख्योगुणःसत्त्वंरजश्चोभावप्यभिभूयतथैववर्द्धते यदा तदाज्ञानावरणादिस्वकार्यमारभते १० यदायोगुणःसमुद्भूतोभवतितदातस्यकिं लिङ्गंउच्यते सर्व्वद्वारेषुइतिसर्वद्वारेष्वात्मनउपलब्धिद्वाराणिश्रोत्रादीनिसर्व्वाणिक रणानितेषुद्वारेषुअन्तःकरणस्यवुद्धेर्वृत्तिःप्रकाशोदेहेस्मिन्प्रकाशशब्दवाच्यःसर्व्वद्वा

## आनन्दगिरिकृतटीका।

कृष्यन्तेविरोधेनवाक्रमेणवेतिसन्देहात्पृच्छति उक्तमिति सत्वोत्कर्षार्थिनामितरा भिभवार्थंक्रमप्रश्नमाश्रित्योत्तरमाह उच्यतेइति सत्वाभिवृद्धिमेवविवृणोति तदेति रजस्तमसोस्तिरोधानदशायामिति यावत्रजसोवृद्धिप्रकारान्तत्कार्यञ्चकथयति तथेति तमसोपिवृद्धिन्तत्कार्यञ्चनिर्दिशति तमइति १०

## स्वामिकृतटीका

-ह रजईति रजश्चसश्चेतिगुणद्वयमभिभूयतिरस्कृत्यसत्वंभवति अदृष्टवशादुद्भवति अतःस्वकार्यसुखादौसञ्जयतीत्यर्थः एवंरजोऽपिसत्वंतमश्चेतिगुणद्वयमभिभूयोद्भव ति अतःस्वकार्येतृष्णासंगादौसञ्जयति एवंतमोऽपिसत्वंरजश्चोभावपिगुणावभिभूयो द्भवति अतः स्वकार्येप्रमादालस्यादौसञ्जयतीतर्थः १० इदानींसत्वादीनांविवृद्धानां

## भाषाअनुवाद

सोगुणकोतिरस्कारकहेपराभवकरिकेसतोगुणप्रगटहोयहै अर्थात्जीवके अदृष्टवश तेसत्वजन्मै है और अपनेकार्यसुखआदिमेजीवकोयुक्तकरैहै ऐसेहीसत्वऔतमो गुणकापराभवकरिरजोगुणजन्मै है और अपनेकार्यतृष्णाआदिमेयुक्त करताहै तैसेहीसत्वरजकोपराभवकरिकेतमोगुणप्रगटहोयहै और अपनेकार्यप्रमादआल स्यमेयुक्तकरिदेताहै १० अबविशेषसेंवढ़ेहुये सत्वआदितीनोंगुणोंकेलक्षण कहेचिह्न तीनश्लोकसेकहतेहैं कि इसभोगायतनकहेभोगभाण्डशरीरमे श्रोत्र आदिसंमस्तद्वारमे जिससमय शब्दआदिज्ञानस्वरूप उत्पन्नहोताहैं उससमयप्र काशरूपचिह्नकेद्वारा सतोगुनकोविशेषवढ़ाजानोऔसुखआदिचिह्नसेभी सत्वकी वृद्धिजानोतात्पर्य्ययह किइन्द्रियोंकेद्वाराजोज्ञानहोतासोसतोगुणहीसेहोयहै ११

लोभःप्रवृत्तिरारम्भःकर्मणामशमःस्पृहा रजस्येतानिजायन्तेविवृद्धेभरतर्षभ १२

## शाङ्करभाष्यं

देषुउपजायतेतदेवज्ञानंयदैवंप्रकाशोज्ञानाख्यउपजायतेतदाज्ञानप्रकाशेन लिङ्गेन विद्याद्विवृद्धंउद्भूतंसत्वमित्युतापि ११ रजसउद्भूतस्येदंचिह्नं लोभइति लोभपरद्रव्यादित्विच्छाप्रवृत्तिःप्रवर्त्तनंसामान्यचेष्टाआरंभःउद्यमःकस्यकर्मणामशमः अनुपशमःहर्षःरागादिप्रवृत्तिः स्पृहासर्वसामान्यवस्तुविषयातृष्णारजसिगुणेविवृद्धेएतानिलिङ्गानिजायन्ते हेभरतर्षभ १२

## आनन्दगिरिकृतटीका

उत्तरश्लोकत्रयस्याकांक्षांदर्शयति यदेति सत्वोद्भवलिङ्गदर्शनार्थमनन्तरश्लोकमुत्थापयति उच्यतइति सर्वद्वारेष्वित्यादिसप्तमीनिमित्तेनेतव्या उतशब्दोपिशब्दपर्यायोप्यतिशयार्थः ११ अतिशयेनोद्भूतस्यरजसोलिङ्गमाह रजसइति उपक्रमपर्यायस्यारम्भस्यविषयंपृच्छति कस्येति काम्यानिनिषिद्धानिचलौकिकानि कर्माणि विषयत्वेननिर्दिशति कर्मणामिति अनुपशमोवाह्यान्तःकरणानामितिशेषः लोभाद्युपलम्भाद्रजोवृद्धिर्वोधव्येति भावः १२

## स्वामिकृतटीका

लिंगान्याह सर्वद्वारेष्वितित्रिभिः अस्मिन्नात्मनोभोगायतनेदेहेसर्वेष्वपिद्वारेषुश्रोत्रादिषुयदाशब्दादिज्ञानात्मकःप्रकाशउपजायते उत्पद्यते तदानेनप्रकाशलिङ्गेन सत्वंविवृद्धंविद्यात्जानीयात् उतशब्दात्सुखादिलिंगेनापिजानीयादित्युक्तं ११
किञ्च लोभइति लोभोधनाद्यागमेवहुधाजायमानेऽपियःपुनःपुनर्वर्द्धमानोभिलापःप्रवृत्तिर्नित्यंकुर्वद्रूपता कर्मणामारम्भोमहागृहादिनिर्माणोद्यमः अशमःइदं

## भाषा अनुवाद

औरहेभरतर्षभअर्जुनलोभकहेवहुतधनरहते औरपैदाहोतेभीधनकीवारवार वृद्धि करनेकी लापलापअभिलाप औप्रवृत्तिकहेसदाकींव्यापारमेमनदियेरहना औआरम्भअर्थात्कर्मोकाआरम्भ घरवगीचाअभूपणादिवनानेमेउद्यम औरअशमकहेमैयहकर्मकरिकेफेरिवहकर्मकरूंगा यहजोसंकल्पसेमनकाअसन्तोप औ स्पृहाकहे उत्तम अधम वस्तुदेखनेहीसे जिसतरहहोतिसतरहलेनेकीइच्छा येसवचिह्नरजोगुणकेवढनेसेहोतेहैं अर्थात्इनलक्षणोसे रजोगुणकीवृद्धिजानो हे भरतर्षभअर्जुन यहलक्षणकहा १२

अप्रकाशोऽप्रवृत्तिश्चप्रमादोमोहएवच तमस्येतानिजायन्तेविवृद्धेकुरुनन्दन १३
यदासत्त्वेप्रवृद्धे तुप्रलयंयातिदेहभृत् तदोत्तमविदांलोकानमलान्प्रतिपद्यते १४

## शाङ्करभाष्यं।

अप्रकाशइति अप्रकाशोऽविवेकोऽत्यन्तमप्रवृत्तिश्चप्रवृत्त्यभावःतत्कार्यंप्रमादो मोहएवचअविवेकोमूढतेत्यर्थः तमसिगुणेविवृद्धेएतानिलिङ्गानिजायन्तेहेकुरुनन्दन १३ मरणद्वारेणापियत्फलंप्राप्यतेतदपिसंगरागहेतुकं सर्वंगौणमेवेति दर्शयन्नाह यदेति यदासत्त्वेप्रवृद्धे उद्भूतेतुप्रलयंमरणंयातिप्रतिपद्यते देहभृदात्मा तदाउत्तमविदांमहदादितत्त्वविदामित्येतल्लोकानमलान्मलरहितान् प्रतिपद्यतेप्राप्नोतीत्येतत् १४ रजसिगुणेविवृद्धेप्रलयंमरणंगत्वाप्राप्य कर्मसंगिषु

## आनन्दगिरिकृतटीका।

उद्भूतस्यतमसोलिंगमाह अप्रकाशइति सर्वथैवज्ञानकर्मणोरभावोविशेषणाभ्यामुक्तस्तत्कार्यमिति तच्छब्दोदर्शिताविवेकार्थः प्रमादोव्याख्यातःमोहोवेदितव्यस्यान्यथावेदनं तस्यैवमौढ्यान्तरमाह अविवेकइति अविवेकातिशयादिनाप्रवृद्धन्तमोज्ञेयमितिभावः १३ सात्त्विकादीनांभावानांपारलौकिकंफलविभाग

## स्वामिकृतटीका।

कृत्वेदंकरिष्यामीत्यादिसङ्कल्पविकल्पानुपरमः स्पृहाउच्चावचेषुदृष्टमात्रेषुवस्तुषु इच्छा तस्ततोजिवृद्धारजसिविवृद्धे सति एतानिलिंगानिजायन्ते एभिर्लिङ्गैरजोगुणस्य विवृद्धिं जानीयादित्यर्थः १२ किञ्च अप्रकाशइति अप्रकाशोविवेकभ्रंशःअप्रवृत्तिरनुद्यमःप्रमादःकर्त्तव्यार्थानुसन्धानराहित्यंमोहोमिथ्याभिनिवेशःतमसिप्रवृद्धेसत्येतानिलिङ्गानिजायन्तेएतैस्तमसोवृद्धिं जानीयादित्यर्थः १३ मरणसमयेविवृद्धानांसत्त्वा

## भाषाअनुवाद

और अप्रकाशकहेविचारकानाश औअप्रवृत्तिकहेनिरुद्यम औप्रमादकहे हरकामहरबातमे बेखबरऔमोहकहे मिथ्याअभिनिवेशअर्थात्दुर्चितई याकूटे कारखानेमेमनदेना येसबचिह्नतमोगुणसेहोतेहैं औरइनलक्षणोंसेतमोगुणकी वृद्धिजानो १३ अबमरणकालमे विशेषसेवर्द्धमानसत्त्वआदिगुणोंकाफलविशेष दोश्लोकसेकहतेहैं किजोसतोगुणकीवृद्धिकेसमयमे देहधारीजीवशरीरछोडै तोहिरण्यगर्भआदिकीउपासनाकरनेवालेमनुष्योंके प्रकाशमयसुखउपभोगकरनेकेजोस्थानहैं उनस्थानविशेषोंकोप्राप्तहोतेहैं १४ औररजोगुणकीवृद्धिकेस

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते। तथा प्रलीनस्तमसि मूढयोनिषु जायते॥ १५॥

शाङ्करभाष्यं

स्वकर्मासक्तियुक्तेषु मनुष्येषु जायते तथा तद्वदेव प्रलीनोऽस्तं तमसि विवृद्धे मूढयोनिषु पश्वादियोनिषु जायते॥ १५॥ अतीतश्लोकार्थस्यैव संक्षेप उच्यते कर्मणः सुकृतस्य सात्त्विकस्येत्यर्थः आहुः शिष्टाः सात्त्विकमेव निर्मलं फलमिति रजसस्तु फलं दुःखं राजसस्य कर्मण इत्यर्थः कर्माधिकारात् फलमपि दुःखमेव कारणानुरूप्याद्राजसमेव तथाऽज्ञानं तमसस्तामसस्य कर्मणोऽधर्मस्य पूर्ववत्॥ १६॥ किञ्च गुणेभ्यो भवति सत्त्वादिति सत्त्वा

आनन्दगिरिकृतटीका

मुदाहरति भरणेति सङ्गः सक्तो रागः तृष्णा तद्वलादनुष्ठानद्वारा लभ्यमानमित्यर्थः गौणं सत्त्वादिगुणप्रयुक्तमिति यावत् तत्र सत्त्वगुणवृद्धिकृतफलविशेषमाह यदेति मलरहितान् रजस्तमसोरन्यतरस्योद्भवो मलं तेन रहितानागमसिद्धान् ब्रह्मलोकादीनित्यर्थः॥ १४॥ रजःसमुद्रेके कृतस्य फलविशेषं दर्शयति रजसीति जायते शरीरं गृह्णातीत्यर्थः यथा सत्त्वे रजसि च प्रवृद्धे कृतो ब्रह्मलोकादिषु मनुष्यलोके च जायते देवादिषु मनुष्येषु च जायते तथैवेत्याह तद्वदिति॥ १५॥ भावानां फलमुक्त्वा सात्त्विकादीनां कर्मणां फलमाह अतीतेति सुकृतस्य शोभनस्य कृतस्य पुण्यस्येत्यर्थः सात्त्विकस्याशुद्धिरहितस्येति यावत् सात्त्विकं सत्त्वेन निर्वृत्तं निर्मलं रजस्तमः समुद्भवान्मलान्निष्क्रान्तं रजःशब्दस्य राजसे कर्मणि वृत्तिरुक्तिस्तदाह कर्मेति दुःखमेव दुःखबहुलं गुणमेवेत्यर्थः कथमित्यं व्याख्यायते तत्राह कारणेति पापमिश्रस्य पुण्यस्य रजोनिमित्तस्य कारणत्वात्तदनुरोधात् फलमपि रजोनिमित्तं यथोक्तं युक्तमित्यर्थः अ

स्वामिकृतटीका।

दीनां फलविशेषमाह यदेति द्वाभ्यां सत्त्वे विवृद्धे सति यदा जीवो मृत्युं प्राप्नोति तदा उत्तमान् हिरण्यगर्भादीन् विदन्ति उपासत इत्युत्तमविदस्तेषां ये अमलाः प्रकाशमया लोकाः सुखोपभोगस्थानविशेषास्तान् प्रतिपद्यते प्राप्नोति॥ १४॥ किञ्च रजसीति रजसि विवृद्धे सति मृत्युं प्राप्य कर्मासक्तेषु मनुष्येषु जायते तथा तमसि विवृद्धे सति प्रलीनो मृतो मूढयोनिषु पश्वादिषु जायते॥ १५॥ इदानीं सत्त्वादीनां स्वानुरूपकर्मद्वारेण विचि

भाषाअनुवाद

प्रथमे मृत्युप्राप्त होनेसे कर्ममें आशक्त जो मनुष्यलोक तिसमें जीवोंका जन्म होता है और तमोगुणके वृद्धिकालमें देहछूटनेसे पशुपक्षी आदि मूढ़जोनिमें जन्मपावते हैं॥ १५॥

कर्म्मणःसुकृतस्याहुःसात्विकंनिर्मलंफलं रजसस्तुफलंदुःखमज्ञानंतमसःफलं १६
सत्वात्संजायतेज्ञानंरजसोलोभएवच प्रमादमोहौतमसोभवतोऽज्ञानमेवच १७

शाङ्करभाष्यं ।

तत्वात्मकात्सञ्जायतेसमुत्पद्यतेज्ञानंरजसोलोभएवच प्रमादमोहौचोभौतमसो
भवतोऽज्ञानमेवभवति १७ किञ्च ऊर्द्ध्वमिति ऊर्द्ध्वंगच्छन्तिदेवलोकादिषु उत्पद्य

आनन्दगिरिकृतटीका

ज्ञानमविवेकप्रायंदुःखंतामसाधर्मफलमित्याह तथेति १६ विहितप्रतिषिद्धज्ञानकर्मा
णिसत्वादीनांलक्षणानिसंक्षिप्यदर्शयति किञ्चेति ज्ञानंसर्वकरणद्वारकंअज्ञानंविवे
काभावः १७ सात्विकादिज्ञानकर्मफलान्युक्तान्यनुक्तसंग्रहार्थंसामान्येनोपसंहरति

स्वामिकृतटीका

लफलहेतुत्वमाह कर्मणइति सुकृतस्यसात्विकस्यकर्मणःसात्विकंसत्वप्रधानं निर्मलं
प्रकाशबहुलंसुखंफलमाहुःकपिलादयः रजसइति राजसस्यकर्मणइत्यर्थःकर्मफलक
थनस्यप्रकृतत्वात्तस्यदुःखंफलमाहुःतमसइति तामसस्यकर्मणइत्यर्थःतस्याज्ञानंमूढ
त्वंफलमाहुःसात्विकादिकर्मलक्षणञ्चनियतंसङ्गरहितमित्यादिनाष्टादशेध्याये व
क्ष्यति १६ तत्रैवहेतुमाह सत्वादिति सत्वात्ज्ञानंसंजायते अतःसात्विकस्यकर्मणः
प्रकाशबहुलंसुखंफलंभवति रजसोलोभोजायतेतस्यचदुःखहेतुत्वात्तत्पूर्वकस्य क
र्मणोदुःखफलंभवति तमसस्तुप्रमादमोहाज्ञानानिभवन्ति अतस्तामसस्यकर्मणोऽज्ञान
मात्रप्रायःफलंभवतीतियुक्तमेवेत्यर्थः १७ इदानींसत्वादिवृत्तिशीलानांफलभेदमा

भाषाअनुवाद

अबसत्वआदिगुणत्रयकेअनुरूपकर्मोंकेद्वाराविचित्रफलप्राप्तिमेंगुणोंकोहेतुक
हतेहैं किकपिलआदिऋषिसुकृतकहेसात्विककर्मकाफलसत्वप्रधानप्रकाशमय सु
खफलकहतेहैं औरराजसकर्मकाफलदुखकतेहैं औरतामसकर्मकाफल अज्ञान
अर्थात्मूढताकहतेहैं किन्तुसात्विकादिकर्मकास्वरूप भगवान्श्रीकृष्णअठारहें
अध्यायकेतेईसयेंश्लोकमेंकहैंगे १६ अबपूर्वोक्तसत्वादिगुणकेफलस्वरूप सुखआ
दिकाहेतुकहतेहैं किसतोगुणसेज्ञानउत्पन्नहोताहै इससेसात्विककर्मकाप्रकाश
जोसुखसोईहोताहै औ रजोगुणसेलोभजन्य है इससेलोभपूर्वकसर्वकर्मकादुख
हीफलहोताहै औतमोगुणसेप्रमादमोहतथाअज्ञानप्रगटहै इससेअज्ञानजडताय
हीफलहोनाउचितहै १७ अबसतोगुणआदिआचरणशीलोंके फलभेदकहतेहैं

ऊर्द्ध्वंगच्छन्तिसत्वस्थामध्येतिष्ठन्तिराजसाः जघन्यगुणवृत्तिस्थाअधोगच्छन्तितामसाः१८

शाङ्करभाष्यं ।

र्द्धगच्छन्तिसत्वस्थाःसत्वगुणवृत्तिस्थामध्येतिष्ठन्तिमनुष्येषुउत्पद्यन्तेराजसाःजघन्यगुणवृत्तिस्थाजघन्यश्चासौगुणश्चजघन्यगुणस्तमस्तस्यवृत्तिंनिद्रालस्यादितस्मिन्स्थिताजघन्यगुणवृत्तिस्थामूढाअधोगच्छन्तिपश्वादिषुउत्पद्यन्तेतामसाः १८ पुरुषस्यप्रकृतिस्थत्वस्वरूपेणमिथ्याज्ञानेनयुक्तस्यभोग्येषु गुणेषुसुखदुःखमोहात्मकेषुसुखीदुःखीमूढोहमस्मीत्येवंरूपोयःसङ्गस्तत्कारणंपुरुषस्यसदसद्योनिजन्मप्राप्तिलक्षणस्यसंसारस्येति समासेनपूर्वाध्यायेयदुक्तंतदिहसत्वंरजस्तमइतिगुणाःप्रकृतिसम्भवाइत्यतआरभ्यगुणस्वरूपंगुणवृत्तत्वंस्ववृत्तेनचगुणानांबन्धकत्वंगुणवृत्तिबद्धस्यचपुरुषस्ययागतिरित्येतत्सर्वंमिथ्याज्ञानमज्ञानमूलंचबन्धकारणंविस्तरेणोक्त्वाऽधुनासम्यक्दर्शनात् मोक्षोवक्तव्यइत्याह भगवान्नान्यमितिनान्यंकार्यकारणविषयाकारपरिणतेभ्यो गुणेभ्यःकर्त्तारमन्यंयदाद्रष्टाविद्वान्सन्नानुपश्यतिगुणाएवसर्वावस्थाःसर्वकर्मणांकर्त्तार

आनन्दगिरिकृतटीका

किञ्चेति वक्ष्यमाणफलद्वारापिसत्वादिषुज्ञानमित्यर्थःसत्वगुणस्यवृत्तंशोभनंज्ञानंकर्मवा तत्रतिष्ठन्तीति तथाराजसारजोगुणनिमित्तेज्ञानेकर्मणिवानिरताः १८

स्वामिकृतटीका ।

ऊर्द्धमितिसत्वस्थाःसत्ववृत्तिप्रधानाऊर्द्धंगच्छन्तिसत्वोत्कर्षादुत्तरोत्तरतारतम्यादुत्तरोत्तरगतगुणानन्दान्मनुष्यगन्धर्वपितृदेवादिलोकान्सत्यलोकपर्यन्तान्प्राप्नुवन्तीत्यर्थःराजसास्तृष्णाद्याकुलामध्येतिष्ठन्तिमनुष्यलोकएवोत्पद्यन्तेजघन्योनिकृष्टस्तमोगुणस्तस्यवृत्तिःप्रमादमोहादिःतत्रस्थिताअधोगच्छन्तितमसोवृत्तितारतम्यात्तामिस्रादिषुनिरयेषूत्पद्यन्ते १८ तदेवंप्रकृतिगुणसङ्गकृतंसंसारप्रपञ्चमुक्त्वा इदानीं

भाषाअनुवाद

किसत्वस्थकहे सतोगुणप्रधानपुरुषोंको ऊर्द्ध्वलोकप्राप्तहोते अर्थात्सत्वकेप्रतापसेपुण्यकी आधिक्यहोतीहै उत्तरोत्तरसौगुनआनन्दस्वरूपहोतेजाये मनुष्यलोकगन्धर्वलोकपितृलोकदेवलोकसत्यलोकपर्य्यन्तप्राप्तहोतेहैं और रजोगुणप्रधानमनुष्य लोभग्रस्तमध्यलोकमेरहतेहैं अर्थात्मनुष्यलोकमेजन्मैहैं और जघन्यकहेनिकृष्टजोतमगुणीमनुष्य प्रमादमोहसेभरेपूरे उनकीअधोगतीहोतीहै अर्थात्तमोगुणउनकोतामसाकरअन्धतमनरकमेपहुंचायदेताहै १८ पूर्वोक्तप्रकारप्रकृति

नान्यंगुणेभ्यःकर्त्तारंयदाद्रष्टानुपश्यति गुणेभ्यश्चपरंवेत्तिमद्भावंसोऽधिगच्छति १६

## शाङ्करभाष्य

इत्येवंपश्यतिगुणेभ्यश्चपरंगुणव्यापारसाक्षीभूतञ्चेति मद्भावंममभावंवासुदेवत्वंवासु देवःसर्वमित्येवंपश्यन्सद्रष्टाधिगच्छति १६ कथमधिगच्छतीत्युच्यते गुणेति गुणाने तान्यथोक्तानतीत्यजीवन्नेवातिक्रम्यमायोपाधिभूतांस्त्रीन्देही देहसमुद्भवान्देहो त्पत्तिबीजभूतान् जन्ममृत्युजरादुःखैः जन्मचमृत्युश्चजराचदुःखानिच तैर्जीवन्नेव मुक्तःसन्विद्वानमृतमश्नुते एवंमद्भावमधिगच्छतीत्यर्थः २० जीवन्नेवगुणानतीत्या

## आनन्दगिरिकृतटीका

कस्मिन्गुणे कथमित्यादि प्रश्नान्प्रत्याख्याय गुणेभ्योमोक्षणंकथमितिप्रत्याख्या नार्थंवृत्तानुवादपूर्वकंमिथ्याज्ञाननिवर्त्तकंसम्यग्ज्ञानंप्रस्तौति पुरुषस्येत्यादिनापुरुष स्ययागतिः साचेतिशेषः मोक्षोगुणेभ्योविश्लेषपूर्वकोब्रह्मभावः सम्यग्ज्ञानोक्तिप रंश्लोकंव्याख्यातुंप्रतीकमादत्ते नान्यमिति सत्वादिकार्यविषयस्यगुणशब्दस्यविवक्षि तमर्थमाह कार्येति विद्वानन्तर्यमनुशब्दार्थश्चत्तरार्धलब्धा पूर्वार्द्धस्यार्थिकमर्थमाहगु णएवेति सर्वावस्थास्तत्कार्यकरणाकारपरिणताइतियावत् सर्वकर्मणांकायिकवा चिकमानसानांविहितप्रतिषिद्धानामित्यर्थः परंव्यतिरिक्तं व्यतिरेकमेवस्फोरयति गुणेति निर्गुणंब्रह्मात्मानमित्यर्थः मद्भावंब्रह्मतामसौप्राप्नोति ब्रह्मभावस्याभिव्य ज्यतइत्यर्थः १६ अनर्थव्रातरूपमपोह्य विद्वान्ब्रह्मत्वंप्राप्नोत्येतत् प्रश्नद्वाराववि वृणोति कथमित्यादिना यथोक्तानीत्येतदेवव्याचष्टे मायेति मायैवोपाधिस्तद्भूतान्

## स्वामिकृतटीका

तद्व्यतिरेकेणमोक्षंदर्शयति नान्यमिति यदातुद्रष्टाविवेकीभूत्वाबुद्ध्याद्याकारपरिण तेभ्योगुणेभ्योऽन्यंकर्त्तारंनानुपश्यति अपितुगुणाएवकर्माणिकुर्वन्तीति पश्यतिगुणे भ्यश्चपरंव्यतिरिक्तंतत्साक्षिणमात्मानंवेत्तिसतुमद्भावंब्रह्मत्वमधिगच्छतिप्राप्नोति १६

## भाषा अनुवाद

केगुणसंगसेसंसारकोवाञ्छत्यकहिके अवप्रकृतिसेपुरुषकाविवेककरनेहीसे मोक्ष होतीहै यहदेखावतेहैं किजिसकालमेद्रष्टाजीवविवेकीहोके बुद्धिआदिरूपकोप्रा प्तसत्वआदिगणोंकोछोड दूसरेकिसीको कर्त्तानहींदेखता वल्किगुणहीं सवकर्म करतेहैं यहीदेखताहै औरसत्वआदिगणोंसेपरकहेभिन्नस्वरूप सोईगुणादिकों कासाक्षीआपअपनेकोजानै तवसोजीव मद्भावकोप्राप्तहोय अर्थात्ब्रह्मपदपावै १६

गुणानेतानतीत्यत्रीन्देहीदेहसमुद्भवान् जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नु
ते २० अर्जुनउवाच कैर्लिङ्गैस्त्रीन्गुणानेतानतीतोभवतिप्रभो किमाचारःकथं
चैतांस्त्रीन्गुणानतिवर्त्तते २१

## शाङ्करभाष्यं

म्तमश्नुतइतिप्रश्नवीजंप्रतिलभ्य अर्जुनउवाच कैरिति कैर्लिङ्गैश्चिह्नैस्त्रीनेतान्व्या
ख्यातान्गुणानतीतोतिक्रान्तोभवतिप्रभो किमाचारःकोस्याचारइति किमाचारःक
थंकेनचप्रकारेणएतांस्त्रीन्गुणान्अतिवर्त्तते २१ गुणातीतस्यलक्षणं गुणातीतत्वो

## आनन्दगिरिकृतटीका

तदात्मनःसत्वादीननर्थरूपानित्यर्थः समुद्भवन्तीति समुद्भवादेहस्यसमुद्भवादेहस
मुद्भवाःतानिति व्युत्पत्तिंगृहीत्वाव्याचष्टे देहोत्पत्तीति योविद्वान्अविद्यामयान्गु
णान्जीवन्नेवातिक्रम्यस्थितस्तमेवविशिनष्टि जन्मेति पुरस्ताद्विस्तरेणोक्तस्यप्रसङ्गाद
नसंचिप्तस्यसम्यक्ज्ञानस्यफलमुपसंहरति एवमिति २०

## स्वामिकृतटीका

ततश्चगुणकृतसर्वानर्थनिवृत्या कृतार्थोभवतीत्याह गुणानिति देहाद्याकारः
समुद्भवःपरिणामोयेषांतेदेहसमुद्भवास्तानेतान्त्रीनपि गुणानतीत्यातिक्रम्यतत्कृतै
र्जन्मादिभिर्विमुक्तः सन्नमृतंपरमानन्दंप्राप्नोति २०

## भाषाअनुवाद

तिसकेअनन्तर सत्वआदिगुणकृतसम्पूर्णअनर्थनिवृत्तहोनेहीसे जोकृतार्थहो
ताहै सोईकहतेहैं किसम्यक्प्रकारसे जिसकादेहादिरूपमेंउद्भव अर्थात्देहरू
पपरिणामकोप्राप्तहैं सोईदेहसमुद्भवकहावैहै इससेदेहीजोजीवात्मा सोदेहरूप
परिणामकोप्राप्तयेईसत्वादितीनगुणोंकेअतिक्रमणकरनेसेपरहै अर्थात्गुणकृतज
न्ममरणजरादुखआदिसेअच्छीप्रकारमुक्तहो अमृतजोपरमआनन्द सोलाभकरता
है२०जीवगुणत्रयसेअतिक्रान्तकहेअलगहोनेसेमुक्तिपावताहै यहभगवानकृष्णके
मुखसेश्रवणकरि गुणातीतमनुष्यकेलक्षणऔउनमनुष्योंकाआचरणऔगुणोंकेअ
तिक्रमकीउपाय सम्यकप्रकारसेजाननेकीइच्छाकरि अर्जुनभगवानसेकहतेहैं कि
हेप्रभोदेहीजोजीवसोकिसप्रकारआपसेउत्पन्नलक्षणकेद्वारागुणातीतहो यहलक्ष
णपूछा औरकिसचारकहेउसकेआचरणकैसेअर्थात्किसप्रकारकेव्यवहारमेवर्त्त
मानरहताहै औरकिसउपायसे इनगुणोंकोअतिक्रमणकरिकेस्थिरहोय सोसब
कृपाकरि कहियेजोमेरीसन्देहजाय २१ स्थितप्रज्ञस्यकाभाषा यहदूसरे अध्यायके

श्रीभगवानुवाच प्रकाशञ्चप्रवृत्तिञ्चमोहमेवचपाण्डव नद्वेष्टिसंप्रवृत्तानिन निवृत्तानिकांक्षति २२

## शाङ्करभाष्यं

यायस्त्वार्जुनेनपृष्टोऽस्मिन्श्लोकेप्रश्नद्वयार्थंप्रतिवचनंभगवान्यत्तावत्कैर्लिङ्गैर्युक्तोगुणा तीतोभवति तच्छृणु प्रकाशमिति प्रकाशञ्चसत्त्वकार्यंप्रवृत्तिञ्चरजःकार्यं मोहमेवच तमःकार्यमित्येतानिनद्वेष्टिसंप्रवृत्तानि सम्यग्विषयभावेनोद्भूतानिममतामसःप्रत्ययो

## आनन्दगिरिकृतटीका।

सम्यग्धीफलंगुणातिक्रमणपूर्वकमस्तत्वमुक्तंश्रुत्वामुक्तस्यलक्षणंवक्तव्यमितिप्रकृतंवि वक्षितत्वात्प्रश्नमुत्थापयति जीवन्नेवेति येव्याख्याताःसत्वादयोगुणास्तत्परिणामभूता न्ध्यासानतिक्रान्तःसन्कैर्लिङ्गैर्ज्ञातोभवतिइतितानिवक्तव्यानिसिद्ध्यर्थंपूर्व्वमनुष्ठेया निपश्चाद्यत्नलभ्यानिलिङ्गानिकानितानीति पृच्छति कैरिति यथेष्टचेष्टाव्यावृत्यर्थंप्र श्नान्तरंकिमाचारइति ज्ञानस्यगुणात्ययोपायस्योक्तत्वादुपायप्रकारजिज्ञासयाप्रश्ना न्तरंकथमिति २१प्रश्नस्वरूपमनूद्यतदुत्तरंदर्शयतिगुणातीतस्येति पृष्टोभगवानिति

## स्वामिकृतटीका।

गुणानेतानतीत्यास्ततमश्नुतइत्येतच्छ्रुत्वा गुणातीतस्यलक्षणंतदाचारञ्चगुणा त्ययोपायञ्चसम्यग्बुभुत्सुरर्जुनउवाच कैरिति हेप्रभो कैर्लिङ्गैःकीदृशैरात्मचिह्नै र्गुणातीतोदेहीभवतीतिलक्षणःप्रश्नः कश्चाचारोऽस्येतिकिमाचारःकथंवर्त्ततइत्यर्थः कथञ्च केनोपायेनैतांस्त्रीनपिगुणानतीत्य वर्त्तते तत्कथयेत्यर्थः २१

## भाषाअनुवाद

चौबिसपचीसश्लोकआदिसेयहीबातअर्जुननेपूछाभीथा औरउसकाउत्तरभीभगवा देचुकेहैं तौभीफेरिविशेषरूपसेजाननेकीइच्छासे अर्जुनपूछतेहैं यहविचारक रि भगवान दूसरेप्रकारसे उनकालक्षणआदि इसश्लोकसेलेकरछश्लोकसेकहते हैं औरउनकेबीचयहएकश्लोककेद्वारा उनकेलक्षणजनावतेहैं किसत्वआदिगु णोंकोउपलक्ष्यकरिकेकहाजोप्रकाशअर्थात् सर्व्वद्वारेषुदेहेऽस्मिन् यहइसअध्यायके एकादशश्लोकसेकहाजोसतोगुणकाकार्यऔरप्रवृत्ति जोरजोगुणकाकार्यतथामोहा दिजोतमोगुणकाकार्ययेसमस्तकार्ययथाक्रमसेआपसेप्रवृत्तहोनेपर दुखविचारिके जोपुरुषद्वेषहेतुसेऔनिवृत्तिहोनेसे सुखजानिइच्छानकरे सोईगुणातीतमनुष्य है यह जानो ३१ उक्तरूपअनायासबोधसेगम्यजोगुणातीतकेलक्षणसोकहि

उदासीनवदासीनोगुणैर्योनविचाल्यते गुणावर्त्तन्तइत्येवंयोऽवतिष्ठतिनेङ्गते २३

## शाङ्करभाष्यम्।

जातस्तेनाहंमूढस्तथाराजसीप्रवृत्तिर्ममोत्पन्नादुःखात्मिकातेनाहंरजसाप्रवर्त्तितःप्रच लितःस्वरूपात्कष्टंममवर्त्तते योयंयत्स्वरूपावस्थनात्म्भंशस्तथासात्त्विकोगुणःप्रका शात्मामांविवेकित्वमापादयन्सुखं नचसंजनयन्मांवध्नातीतितानि द्वेष्टाऽसम्यग्द र्शित्वेनतदेवंगुणातीतोनद्वेष्टिसंप्रवृत्तानियथाचसात्त्विकादिपुरुषःसात्त्विकादिकार्य्या ण्यात्मानंप्रतिप्रकाश्यनिवृत्तानिकांक्षतिनतथागुणातीतोनिवृत्तानिकांक्षतीत्यर्थः २२

एतन्नपरप्रत्यक्षंलिङ्गं किंतर्हिस्वात्मप्रत्यक्षत्वादात्मविषयमेवएतत्लक्षणं नहि

## आनन्दगिरिकृतटीका

सम्बन्धःकिंवृत्तस्याविधाप्रयोगदर्शनात्प्रश्नद्वयार्थमित्युपलक्षणं प्रश्नत्रयार्थमितिद्रष्ट व्यं उत्तरमवताय्यौनन्तरश्लोकतात्पर्यमाह यत्तावदिति तानिसम्यग्दर्शीनद्वेष्टि इ त्युक्तमेवस्पष्टयितुंनिषेध्यमसम्यग्दर्शिनोद्वेषंतेषुप्रकटयति ममेत्यादिना सम्यग्द र्शिनःसंप्रत्तेषुप्रकाशादिषु द्वेषाभावमुपसंहरति तदेवमिति ननिवृत्तानि इत्यादि व्याचष्टे यथाचेति तेषामनात्मीयत्वंमत्यकपश्यन्नात्मानुकूलप्रतिकूलतारोपणेनना द्विजते तेभ्यश्चनस्पृहतीत्यर्थः २२ स्वानुभवसिद्धंगुणातीतस्यलक्षणमुक्तमित्याह ए

## स्वामिकृतटीका

स्थितप्रज्ञस्य का भाषा इत्यादिना द्वितीयाध्याये दृष्टमेव दत्तोत्तरम पि पुनर्विशेषबुभुत्सया पृच्छतीति ज्ञात्वा प्रकारान्तरेण तस्य लक्षणादिकं श्री भगवानुवाच प्रकाशञ्चेत्यादि सप्तभिस्तत्रैकेन लक्षणमाह प्रकाशमिति प्रका शञ्च सर्व्वद्वारेषुदेहेऽस्मिन्निति पूर्वोक्तं सत्त्वकार्यं प्रवृत्तिञ्च रजःकार्यं मोह ञ्च तमःकार्यंउपलक्षणार्थमेतत्सत्त्वादीनांसर्व्वाण्यपि कार्य्याणि यथायथं संप्रवृ त्तानि स्वतःप्रवृत्तानिसन्तिदुःखबुध्यायोनद्वेष्टिनिवृत्तानिचसन्तिसुखबुद्ध्यायोनकां क्षति गुणातीतःसउच्यतइति चतुर्थेनान्वयः २२ तदेवंसुस्वेद्यंगुणातीतस्य लक्षण

## भाषा अनुवाद।

गुणातीतकाआचरणकैसाहै इसदूसरेप्रश्नकाउत्तरतीनश्लोकसेकहतेहैंकि उदा सीनकेसमान साक्षीरूपस्थितहोसत्वआदिगुणकेकार्यसुखदुखआदिसे जोमनुष्य अविचलितहै अर्थात्अपनेद्रष्टास्वरूपसेच्युतनहोवलुसत्वादिगुणअपनेअपनेकाम मेवर्त्तमानहैं इनसेहमसेकुछभीसम्बन्धनहींहै ऐसेविवेकज्ञानसे जोपुरुषचुपचाप मौनहोयस्थितरहै औइसवातसेविचलितनहोय सो गुणातीतपुरुषहै २३

समदुःखसुखःस्वस्थःसमलोष्टाश्मकाञ्चनःतुल्यप्रियाप्रियोधीरस्तुल्यनिन्दात्मसंस्तुतिः २४

शाङ्करभाष्य

स्वात्मविषयइह प्रश्नोऽकाचाचापरःप्रश्यति अथइदानीगुणातीतःकिमाचारइतिप्रश्नस्य प्रतिवचनमाह उदासीनेति उदासीनवद्यथोदासीनोनकस्यचित्पक्षंभजते नतथायं गुणातीतत्वोपायमार्गेऽवस्थितआसीनआत्मवित्गुणैर्यःसमासीनःविचाल्यते विवेक दर्शनावस्थातःतदेतत्स्फुटीकरोति गुणाः कार्यकारणविषयाकारपरिणताअन्योन्य स्मिन्वर्त्तन्तइति योवतिष्ठति छन्दोभंगभयात्परस्मैपदप्रयोगःयोनुतिष्ठतीति पाठा न्तरंनेंगतेनचलति स्वरूपावस्थएवभवतीत्यर्थः २३ किञ्च समदुःखेति समदुःख

आनन्दगिरिकृतटीका

तन्नेति परप्रत्यक्षत्वाभावंप्रपञ्चयति नहीति आश्रयोविषयः कैर्लिङ्गैरित्यादि परि हृत्य द्वितीयप्रश्नं परिहरति अथेति दृष्टान्तंव्याचष्ठे यथेति उपेक्षकस्यपक्षपातत्वा योगादित्यर्थः आत्मविदात्मनःकौटस्थ्यज्ञानेनासीनोनिवृत्तकर्तृत्वाभिमानोऽप्रयत मानोभवतीति दार्ष्टान्तिकमाह तथेति गुणातीतत्वोपायमार्गोज्ञानमेवशब्दादिभि र्विषयैरस्यकूटस्थत्वज्ञानातप्रच्यावनमाशंक्याह गुणैरिति उपनतानांविषयाणां रागद्वेषद्वाराप्रवर्त्तकत्वमित्य तत्प्रपञ्चयति तदेतदिति योवतिष्ठतिसगुणातीतइ त्युत्तरत्रसम्बन्धः आपूर्व्वस्यतिष्ठतेरात्मनेपदेप्रयोक्तव्येकथंपरस्मैपदमित्याशंक्याह छ न्दोभंगेति पाठान्तरेतुर्वाचितानुवर्त्तिसात्मनुष्ठानंकरणाकारपरिणतानां गुणानां विषयाकारपरिणतेषुतेषु प्रवृत्तिर्न ममेतिपश्यन्अचलतयाकूटस्थदृष्टिमात्मनोनज हातीत्याह नेङ्गतइति २३ गुणातीतस्यलिंगान्तरमाह किञ्चेतितयोःसमत्वंरागद्वे

स्वामिकृतटीका

मुक्तार्द्धद्वितीयप्रश्नस्यकिमाचारइत्यस्योत्तरमाह उदासीनइतिद्विभिः उदासीनवत्सा क्षितयाआसीनःसन्गुणैर्गुणकार्यैःसुखदुःखादिभिर्नयोविचाल्यते स्वरूपान्नप्रच्या व्यते अपितुगुणाएवस्वकार्येषुवर्त्तन्ते एतैर्ममसम्बन्धएवनास्तीति विवेकज्ञानेनयस्तू ष्णीमवतिष्ठति परस्मैपदमार्षं नेङ्गते न चलति २३ अपिच समेति समेदुःखसुखे

भाषा-अनुवाद।

और जोमनुष्य सुखदुखमेसमान औरमाटीपात्थरसोनाआदिमी जिसकेनिकट समानहै औरसुखदुखकेहेतुस्वरूपप्रअप्रियविषयमे जिसकीबुद्धितुल्यहै औरधीर धीमानजोहै तथाअपनीस्तुतिऔनिन्दामेभीतुल्यबुद्धिहै २४ औरजोमनुष्य मान

मानापमानयोस्तुल्यस्तुल्योमित्रारिपक्षयोः सर्वारम्भपरित्यागीगुणातीतःसउच्यते २५

## शाङ्करभाष्यं

सुखःसमेदुःखसुखे यस्यससमदुःखसुखःस्वस्थःस्वात्मनिस्थितःप्रसन्नःअविक्रियः समलोष्टाश्मकाञ्चनःलोष्टञ्चअश्मचकाञ्चनञ्चसमानियस्यससमलोष्टाश्मकाञ्चनःतुल्यप्रियाप्रियःप्रियञ्चाप्रियञ्चप्रियाप्रियेसमेयस्यसोयंतुल्यप्रियाप्रियोधीरोधीमान्तुल्यनिन्दात्मसंस्तुतिःनिन्दाचआत्मसंस्तुतिश्चतुल्येनिन्दात्मसंस्तुतीयस्ययतिःसतुल्यनिन्दात्मसंस्तुतिः २४ किञ्चमानापमानयोरिति मानापमानयोस्तुल्यःसमोनिर्विकारः तुल्योमित्रारिपक्षयोःयद्यप्युदासीनाभवन्तिकेचित्स्वाभिप्रायेणतथापिपराभिप्रायेणमित्रारिपक्षयोरिवभवन्तीति अयन्तुतुल्योमित्रारिपक्षयोरित्याह सर्वारम्भपरित्यागीदृष्टार्थानिकर्माण्यारभते इत्यारम्भा सर्वानारम्भान्परित्यक्तुंशीलंअस्येति सर्वारम्भपरित्यागीदेहधारणमात्रनिमित्तव्यतिरेकेणसर्वकर्मपरित्यागीत्यर्थःगुणातीतःसउच्यते २५ उदासीनवदित्यादिगुणातीतःसउच्यते इत्येतदन्तमुक्तं यावद्यत्नसाध्यं

## आनन्दगिरिकृतटीका

पानुत्पादकतयास्वकीयत्वाभिमानानास्पदत्वं प्रसन्नत्वंस्वास्थ्यादपिचुरतिरविक्रियत्वंविदुषोप्रियाप्रिययोरसंभवेपिलोकदृष्टिमाश्रित्याह प्रियञ्चेति प्रियाप्रियग्रहणेनगृहीतानांकाञ्चनादीनांब्राह्मणपरिव्राजकवत्पृथग्ग्रहणं निन्दादोषोक्तिरात्मनोगुणकीर्तनं २४ इतश्चगुणातीतःशक्योज्ञातुमित्याह किञ्चेति मानःसत्कारस्तिरस्कारोऽपमानः परेच्छायोसम्बन्धतयोःपक्षयोर्निर्विशेषोनकस्यचित्पक्षेतिष्ठतीत्याह तुल्यइति विदुषोमित्रादिबुद्ध्यभावात्तुल्यमित्रारिपक्षयोरित्ययुक्तमित्याशंक्याह यद्यपीति सर्वकर्मत्यागेदेहधारणमपिनिमित्ताभावान्नस्यादित्याशंक्याह देहेति उक्तविशेषणोगुणातीतोज्ञातव्यइत्याह गुणेति २५ यदुक्तमुपेक्षकत्वादि तद्विद्योद

## स्वामिकृतटीका।

प्रसन्नःस्वस्थःस्वरूपएवस्थितःअतएवसमानिलोष्टाश्मकाञ्चनानियस्य तुल्येप्रियाप्रियेसुखदुःखहेतुभूते यस्य धीरोधीमान्तुल्यानिन्दाचआत्मनःस्तुतिश्चयस्य २४

## भाषाअनुवाद

अपमानमेएकभाव औमित्रशत्रुपक्षमेसमबुद्धिःतथाजोदृष्टअदृष्टसंपूर्ण अर्थकेउद्यमकोत्यागकरनेमेसमर्थहै ऐसेआचरणयुक्तपुरुषकोगुणातीतकहतेहैंयहजानो २५

मांचयोऽव्यभिचारेणभक्तियोगेनसेवते सगुणान्समतीत्यैतान्ब्रह्मभूयायकल्पते २६

## शाङ्करभाष्यं

तावत्संन्यासिनानुष्ठेयंगुणातीतत्वसाधनंमुमुक्षोःस्थिरीभूतन्तुस्वसंवेद्यंसद्गुणातीत स्यतेलक्षणंभवतीति अधुनाकथञ्चत्रीन्गुणान् अतिवर्त्ततइतिप्रश्नस्य प्रतिवचनमा ह मांचेति मांच ईश्वरंनारायणंसर्वभूतहृदयाश्रितंयोयतिःकर्मीवाअव्यभिचारेण कदाचित्योव्यभिचरतिनभक्तियोगः भजनंभक्तिःसैवयोगस्तेनविवेकज्ञानात्मकेन भक्तियोगेनज्ञानसमुद्भवेनसेवते सगुणान्समतीत्यएतान्यथोक्तान्ब्रह्मभूयाय भ वनंभूयःब्रह्मभूयायब्रह्मभवनायमोक्षायकल्पतेसमर्थोभवतीत्यर्थः २६ कुतएतदि

## आनन्दगिरिकृतटीका ।

यात्पूर्व्वंयत्नसाध्यंविद्याधिकारिणाज्ञानसाधनत्वेनानुष्ठेयमुत्पन्नायान्तुविद्यायांजीव न्मुक्तस्योक्तधर्म्मजातंस्थिरीभूतंस्वानुभवसिद्धंलक्षणत्वेनतिष्ठतीत्युक्तेधर्म्मजातेविभागं दर्शयति उदासीनवदित्यादिनाप्रश्नद्वयमेवंपरिहृत्यतृतीयंप्रश्नंपरिहरति अधुनेति मच्छब्दस्यसंसारिविषयत्वंव्यावर्त्तयति ईश्वरमिति तत्रैवनारायणशब्दान्मूर्त्तिभेदो व्यावर्त्त्यते तस्यताटस्थ्यंव्यवच्छिनत्तिसर्व्वेति मुख्यामुख्याधिकारिभेदेनविकल्पःभक्ति योगस्ययादृच्छिकत्वंव्यवच्छेत्तुमव्यभिचारेणेत्युक्तंतद्व्याचष्टेनेति भजनंपरमप्रेमस एवयुज्यतेऽनेनेतियोगःतेनसेवतेपराकृचित्ततांविनासदानुसन्दधातीत्यर्थःसभगवद नुग्रहकृतसम्यग्धीसम्पन्नोविद्वान्जीवन्नेवेत्यर्थः २६ विद्वान्ब्रह्मैवेत्यत्रहेतुंदृच्छति

## स्वामिकृतटीका

अपिच मानेति मानेअपमानेचतुल्यःमित्रपक्षेअरिपक्षेचतुल्यःसर्व्वान् दृष्टादृष्टार्था नारम्भानुद्यमान्परित्यक्तुं शीलंयस्य सएवंभूताचारयुक्तोगुणातीतउच्यते २५

कथञ्चैतांस्त्रीन्गुणानतिवर्त्त तइत्यस्यप्रश्नस्योत्तरमाह मांचेति चशब्दोवधा रणार्थःमामेवपरमेश्वरमव्यभिचारेणएकान्तेनभक्तियोगेनयःसेवतेसएतान्गुणान् समतीत्य सम्यगतिक्रम्यब्रह्मभूयायब्रह्मभावायमोक्षायकल्पते समर्थोभवति २६

## भाषा अनुवाद

किसप्रकारसत्वादिगुणोंकोअतिक्रमकरिकेवर्त्तमानरहैं इसप्रश्नकाउत्तरकरते हैं किपरमेश्वरस्वरूपहमारीहीसेवाअव्यभिचारिणीऐकान्तिकभक्तिकेद्वारा जो मनुष्यकरताहै सोईमनुष्य गुणत्रयकोअच्छीतरहसे अतिक्रमकरिके मुक्तिप्राप्ति केयोग्यहोताहै २६ अवपूर्वोक्तभगवद्भक्तकेमोक्षप्राप्तिकेविषयमेहेतुकहते हैं

ब्रह्मणोहिप्रतिष्ठाहममृतस्याव्ययस्यच शाश्वतस्यचधर्मस्यसुखस्यैकान्तिकस्यच २७

इतिश्रीमद्भगवद्गीतायां गुणत्रयविभागयोगोनाम चतुर्दशोऽध्यायः १४

## साङ्करभाष्यं

तुच्यतेब्रह्मणःपरमात्मनःहियस्मात्प्रतिष्ठासंप्रतितिष्ठत्यस्मिन्नितिप्रतिष्ठाहंप्रत्यगात्मा कीदृशस्यब्रह्मणःअमृतस्याविनाशिनःअव्ययस्याविकारिणःशाश्वतस्यचनित्यस्यधर्मस्य ज्ञानयोगधर्मप्राप्यस्यसुखस्यानन्दरूपस्यैकान्तिकस्याव्यभिचारिणःअमृतादिस्वभावस्यपरमानन्दरूपस्यपरमात्मनःप्रत्यगात्माप्रतिष्ठासम्यक्ज्ञानेनपरमात्मतया निश्चीयतेइतितदेतद्ब्रह्मभूयायकल्पतेइत्युक्तंययाचेश्वरशक्त्याभक्तानुग्रहादिप्रयोजनायब्रह्मप्रतिष्ठतेप्रवर्त्ततेसाशक्तिःब्रह्मैवाहं शक्तिशक्तिमतोरनन्यत्वादित्यभिप्रायोऽथवाब्रह्मशब्दवाच्यत्वात् सविकल्पकंब्रह्मतस्यब्रह्मणोनिर्विकल्पकोहमेव नान्यःप्रतिष्ठाश्रयः किंविशिष्टस्यामरणधर्मकस्याव्ययस्यव्ययरहितस्य किञ्चशाश्वतस्यचनित्यस्यधर्मस्यज्ञाननिष्ठालक्षणस्यसुखस्यतज्जनितस्यैकान्तनियतस्यच प्रतिष्ठाहमितिवर्त्तते २७ इति श्रीशाङ्करभाष्ये चतुर्दशोऽध्यायः १४

## आनन्दगिरिकृतटीका

कुतइति तत्रोत्तरमाह उच्यतइति ब्रह्मशब्दस्यासतिबाधके मुख्यार्थग्रहणमभिप्रेत्याह परमात्मनइति तंप्रति प्रत्यगात्मनोयत्प्रतिष्ठात्वं तदुपपादयति प्रतितिष्ठतीति यद्ब्रह्मप्रत्यगात्मनिप्रतितिष्ठतीति ततकिं विशेषणमित्यपेक्षायामुक्तममृतस्येत्यादितत्रामृतशब्देनाव्ययशब्दस्यपुनरुक्तिंपरिहरतिअविकारिणइति नित्यत्वमपक्षयराहित्यंतेनपूर्व्वाभ्यामपौनरुक्त्यं प्रतिपिद्धार्थस्यधर्मशब्दस्यब्रह्मण्यनुपपत्तिमाशंक्याह ज्ञानेति अर्थेन्द्रियसम्बन्धोत्थंसुखंव्यावर्त्तयितुमैकान्तिकस्येत्युक्तं अक्षरार्थमुक्त्वावाक्या

## भाषाअनुवाद

किजिसहेतुब्रह्मकीप्रतिष्ठा जोप्रतिमा सोमैहूं अर्थात्घनीभूतप्रकाशमात्रजैसे सूर्यमण्डलतद्रूप हमघनीभूतब्रह्महैं औरनित्यमुक्तअव्ययऔअमृतजोमुक्ति तिसकेभीप्रतिमा हमहैं औशुद्धसत्त्वमुक्तिकेसाधनस्वरूप सनातनधर्मकेभीप्रतिमामूर्त्ति हमहैं औपरमानन्दसुखकेभीमूर्त्तिहमेजानो इससेमेरेसेवकको सद्भावरूपब्रह्मत्वप्राप्तिकोअवश्यसम्भावनाहै जिसकेआश्रयहेतुसेअसतजोसतकेसमानप्रतीयमान यहसंसार तिससेहमारेभक्तअनायासहीतरतेहैं यहीचौदहें अध्यायमेभगवाननेकहाहै २७ इति जगन्नाथसुकुलविरचितभाषाटीकायां चतुर्दशोऽध्यायः १४

आनन्दगिरिकृतटीकाच।

र्थमाह अमृतादिति प्रतिष्ठायस्मादिति पूर्वेण सम्बन्धः तस्मात्प्रत्यगात्मा परमात्मतयानिश्चीयते सम्यक्ज्ञानेनेति योजना अस्य श्लोकस्य पूर्वश्लोकेनैकवाक्यतामाह तदेतदिति विवक्षितं वाक्यार्थं प्रपञ्चयति यथेति आसक्तिः ब्रह्मैवेति कथं सामानाधिकरण्यं तत्राह शक्तीति व्याख्यानान्तरमाह अथवेति विशेषणानि पूर्ववदपौनरुक्त्यानि नेतव्यानि तदनेनाध्यायेन क्षेत्रक्षेत्रज्ञसंयोगस्य संसारकारणत्वं प्रपञ्चप्रश्ननिरूपणद्वारेण च सम्यग्ज्ञानस्य सकलसंसारनिवर्तकत्वमित्येतदुपपादयता मुमुक्षोर्यत्नसाध्यं गुणैरचाल्यत्वादिसुक्तम्यावलसिद्धं लक्षणमिति निर्द्धारितः २७

इति आनन्दगिरिकृतटीकायां चतुर्दशोऽध्यायः १४

स्वामिकृतटीका

तत्र हेतुमाह ब्रह्मणोहीति हि यस्माद्ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभूतं ब्रह्मैवाहं यथा घनीभूतप्रकाश एव सूर्यमण्डलं तद्वदित्यर्थः तथा अव्ययस्य नित्यस्य अमृतस्य च मोक्षस्य नित्यमुक्तत्वात् तथा तत्साधनस्य शाश्वतस्य धर्मस्य च शुद्धसत्वात्मकत्वात् तथा ऐकान्तिकस्य अखण्डितस्य सुखस्य च प्रतिष्ठाहं परमानन्दरूपत्वात् अतो मत्सेविनो मद्भावस्यावश्यम्भावित्वाद्युक्तमेवोक्तं ब्रह्मभूयाय कल्पत इति कृष्णाधीनगुणासङ्गप्रसञ्जितभावाम्बुधिं सुखं तरति मद्भक्त इत्यभाषि चतुर्दशे २७

इति श्रीधरस्वामिकृतटीकायां चतुर्दशोऽध्यायः १४

पञ्चदशोऽध्यायः

श्रीभगवानुवाच ,ऊर्द्ध्वमूलमधःशाखमश्वत्थंप्राहुरव्ययं छन्दांसियस्यपर्णानि यस्तंवेदसवेदवित् १

भाषाअनुवाद

वैराग्यकेविना ज्ञानभीदुर्लभहै इसलियेपंद्रहें अध्यायमे भगवान वैराग्यसहितज्ञानकाउपदेश अर्जुनकोदियाहै औरपूर्वचौदहें अध्यायकेअन्तमे जोकहा सिद्धांतयोऽव्यभिचारेणभक्तियोगेनसेवते इत्यादिछविशवेंश्लोकादिसे किएकान्तभक्तिसेपरमेश्वरकाभजनकारीमनुष्यभगवतकीकृपासे ज्ञानलाभकेद्वारा मुक्तहोताहै सोविषयोंसे विरागसहितपुरुषको एकान्तभक्तिअथवाज्ञानहोतानहीं इसीहेतुसेवैराग्यकथनपूर्वकज्ञानउपदेशकरनेकेमनोरथसेप्रथमछेढश्लोककरिकेसंसारस्वरूपकोवृक्षरूपरूपकअलङ्कारमे वर्णनकरतेहुये भगवानश्रीकृष्ण अर्जुनसे कहतेहैं किउर्धमूलकहेउत्तमअर्थात् चरअचरसेभीउत्कृष्ट जोपुरुषोत्तमपरमेश्वर सोसंसारके मूलकारणहैं इसीसेसंसार उर्धमूलहै औरअधःशाखकहेपरमेश्वरकीअपेक्षा अधःअर्थात्कार्यरूपउपाधियुक्त हिरण्यगर्भआदि जोसंसारकीशाखास्वरूप सोईसंसारको अधःशाखकहा औरयहसंसार विनश्वरहेतुसे परदिनप्रभाततौरहैगा ऐसीविश्वासकेयोग्यनहीं है इसमेअश्वत्थकहा औरअठयें अध्यायके उनीशवेंश्लोककी उक्तअभिप्रायसे यह संसार प्रलयके अनन्तर पुनःपुनःउत्पन्नहोताहै तोहोनाजाना इसहेरफेरलगेरहनेसे धारावाहिक वृत्तिरूप इससंसारका विच्छेदनहीं है अर्थात्सदाहीवनारहता इससेअव्ययऔअनादिभीहै औरऐसेहीश्रुतियोंमेभीकहाहै औरछन्दकहेवेदसकल इससंसारवृक्षके पत्रहैं अर्थात् धर्मअधर्मका प्रतिपादनकरिके छायाकेतुल्यहैं औरकर्मफलकेहेतुसंसारवृक्षके आश्रितजीवसमूहहै वहकहतेहुये वेदपत्रसमानहैं जोमनुष्यऐसेकरके संसारवृक्षअश्वत्थरूपकोजानतेहैं सोईवेदकेअर्थवित्है तात्पर्ययह किप्रपंचरूपसंसारवृक्षकेमूल परमेश्वरऔरपरमेश्वरके अंशस्वरूपजोब्रह्मादिक सोसवशाखासमानहैं सोईवृक्षविनश्वरऔप्रवाहरूपसे नित्यभीहै औरवेदविहितकर्मोकेद्वारा संसारवृक्षकीसेवाकरनाभीकहाहै इतनाहीवेदोंका निश्चितअर्थहै इससेइसवृक्षके ज्ञानीको वेदवित्कहनाचाहिये १

## शाङ्करभाष्यं

यस्मान्मदधीनंकर्म्मिणांकर्मफलंज्ञानिनाञ्च ज्ञानयोगधर्मप्राप्यंसुखञ्च ज्ञानफलम तोभक्तियोगेनमांयेसेवन्ते मत्प्रसादात्ज्ञानप्राप्तिक्रमेणगुणातीतामोक्षंगच्छन्तिकिमुवक्तव्यमात्मनस्तत्वंसम्यक्विजानन्तइत्यतोभगवानर्ज्जुनेनापृष्ठमप्यात्मनस्तत्त्वं विवक्षुरुवाच ऊर्द्ध्वमूलमित्यादि तत्रतावद्वृक्षरूपककल्पनयावैराग्यहेतोःसंसारस्वरूपं वर्णयति विरक्तस्यहिसंसारात्भगवत्तत्वज्ञानेधिकारोनान्यस्येति ऊर्द्ध्वमूलमिति ऊर्द्ध्वं मूलं कालतःसूक्ष्मत्वात्कारणत्वात्नित्यत्वान्महत्वाच्चोर्द्ध्वमुच्यते ब्रह्माव्यक्तमायाशमित्तन्मूलमस्येति सोयंसंसारवृक्षऊर्द्ध्वमूलःश्रुतेश्च ऊर्द्ध्वमूलोऽवाक्शाखइति पुराणे चाव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः महाभूतप्रशाखश्चविषयैःपत्रवांस्तथा धर्माधर्मसुपुष्पश्चसुखदुःखफलोदयः आजीव्यःसर्व्वभूतानांब्रह्मवृक्षःसनातनः एतद्ब्रह्मवनञ्चैवब्रह्माचरतिनित्यशः एतत्छित्वाचभित्वा चज्ञानेनपरमासिना ततश्चात्मरतिंप्राप्ययस्मान्नावर्त्ततेपुनः इत्यादि तमूर्द्ध्वमूलं संसारंमायामयंवृक्षमधःशाखंमहदहङ्कारतन्मात्रादयः शाखाइवास्याधोभवन्तीति सोयमधःशाखस्तमधःशाखंनश्वोपिस्थास्यतेइत्यश्वत्थस्तंक्षणप्रध्वंसिनमश्वत्थंप्राहुःकथयन्तिश्रुतिवादाइत्यव्ययंसंसारं मायामयंअनादिकालप्रवृत्तत्वात् सोयंसंसारवृक्षोव्ययःअनाद्यनन्तदेहादिसन्तानाश्रयोहिसुप्रसिद्धस्तमव्ययंतस्यैवसंसारवृक्षस्यइदमन्यद्विशेषणान्तरं छन्दांसियस्यपर्णानिछन्दांसिछादनादृग्यजुःसामलक्षणानियस्यसंसारवृक्षस्यपर्णानि यथावृक्षस्यरक्षणार्थानिपर्णानितथावेदाःसंसारवृक्षपरिरक्षणार्था धर्मतद्धेतुफलप्रकाशनार्थत्वात्यथाव्याख्यातंसंसारवृक्षंसमूलं यस्तंवेद स वेदविद्वेदार्थविदित्यर्थः १

## आनन्दगिरिकृतटीका

ज्ञानेनगुणात्ययेदर्शितेनाशित्वेनैषांविज्ञानेनात्ययादनाशित्वे तेनापितद्योग्यत्वान्न ज्ञानंगुणात्ययहेतुरित्याशङ्क्यानिरस्यसाक्षादेवश्रवणादिहेतुसंन्यासंविधित्सुःब्रह्मत्वस्यपरमपुरुषार्थतांविवक्षुरध्यायान्तरमारभ्यतेयस्मादिति कर्म्मिणोज्ञानिनश्चशास्त्रेधिकृताः तत्रकर्म्मिणांकर्म्मानुकूलंफलमीश्वरायत्तंफलमतउपपत्तेरितिन्यायात्ज्ञानिनामपितत्फलमीश्वरायत्तमेव ततोह्यस्यबन्धविपर्ययावित्युक्तत्वात् यस्मादेवंतस्माद्येभक्त्याख्येनयोगेनमामेवसेवन्ते तेमत्प्रसादद्वाराज्ञानंप्राप्यतेनगुणातीतामुक्ताभवन्तीति स्थितमित्यर्थः येत्वात्मनस्तत्वमेवसन्देहाद्यपोहेनजानन्ति तेज्ञानेनगु,णा

आनन्दगिरिकृतटीका

तीताः सन्तोमुक्तिंगच्छन्तीति किमवक्तव्यमित्यर्थः सिद्धमर्थमाह किमुवक्तव्यमिति आत्मतत्वाज्ज्ञानंयतः संसारहेतुः ज्ञानंमोक्षानुकूलमतोर्ज्जुनेनकिन्तदित्यपृष्टमपितत्वं भगवानुक्तवान्प्रश्नाभावेपितस्यतद्व्युत्पादनाभिमानादित्याह अतइतितत्वेतिवक्ष्यते किमितिसंसारोवर्ण्यतेतत्राह तत्रेति अध्यायादिःसम्बन्धार्थः वैराग्यमपिकिमितिसृज्यतेतत्राह विरक्तस्येतिइतिवैराग्यायसंसारवर्णनमितिशेषः नाशसम्भावनायैश्च रूपकंवृक्षहेतोर्दर्शयति ऊर्द्ध्वमूलमिति कथंकालतःसूक्ष्मत्वंतदाह कारणत्वादिति तदेवकथंकार्य्यापेक्षया नियतपूर्व्वभावित्वादनादित्वादित्याह नित्यत्वादिति सर्व्वव्यापित्वाच्चोत्कर्षंसम्भावयति महत्वाच्चेति ऊर्द्ध्वमुच्छ्रितमुत्कृष्टमितियावत् तस्य कूटस्थस्यकथंमूलत्वमित्याशंक्याह अव्यक्तेति स्मृतिमूलत्वेन श्रुतिमुदाहरति श्रुतेश्चेतिअर्वाचीनोनिकृष्टाःशाखाइव महदाद्यायस्य सतथा प्रकृतेसंसारवृक्षेपुराणसम्मतिमाह पुराणेचेति अव्यक्तमव्याकृतंतदेवमूलंतस्मात् प्रभवनंप्रभवोयस्य सतथा तस्यैवमूलस्याव्यक्तस्यानुग्रहादतिदृढत्वादुत्थितः सम्वृद्धः तस्यलौकिकवृक्षसाधर्म्यमाह बुद्धीत्यादिना वृक्षस्यविशाखाःस्कन्धादुद्भवन्ति संसारस्यचबुद्धेःसकाशान्नानापरिणामाजायन्ते तेनबुद्धिरेवस्कन्धस्तन्मयस्तत्प्रचुरोयंसंसारतरुःइन्द्रियाणामन्तराणिछिद्राणिकोटराणिवस्य सतथा महान्तिभूतानि पृथिव्यादीन्याकाशान्तानिविशाखस्तम्भोयस्य तथाआजीव्यत्वमुपजीव्यत्वंब्रह्मणाधिष्ठितोवृक्षोब्रह्मवृक्षस्तथापिज्ञानंविनाच्छेत्तुमशक्यतयासनातनःचिरन्तनः एतद्ब्रह्मणः परस्यात्मनोवनंवननीयंसम्भजनीयमत्रहि ब्रह्मप्रतिष्ठितंतस्यवृक्षस्यसंसाराख्यस्यतदेवब्रह्मसारभूतंअथवास्यवृक्षस्यानवच्छिन्नस्यसंसारमण्डलस्यतदेतद्ब्रह्मवनमिववनंवननीयंसम्भजनीयं नहिब्रह्मातिरिक्तंसंसाराख्यास्पदमस्ति ब्रह्मैवाविद्ययासंसरतीत्यभ्युपगमादित्यर्थः अहं ब्रह्मेतिदृढज्ञानेनोक्तं संसारवृक्षंछित्वाप्रतिबन्धकाभावादात्मनिष्ठोभूत्वा पुनरावृत्तिरहितंकैवल्यंप्राप्नोतीत्याह एतदिति अधःशाखमित्येतद्व्याचष्टे महदिति आदिशब्देनेन्द्रियादिसंग्रहः संसारवृक्षस्यातिचञ्चलत्वेप्रमाणमाह प्राहुरिति क्षणध्वंसिनोव्ययत्वंविरुद्धमित्याशंक्याह संसारेति तदेवोपपादयति अनादीति छादनंरक्षणंप्रावरणंवा कर्म्मकाण्डानिस्वर्गादिहावरोहफलानिनानाविधार्थवादयुक्तानि संसारवृक्षंरक्षन्ति तन्निष्ठंदोषञ्चाद्दृश्यन्ति तेनतानिच्छन्दांसिपर्णानीवभवन्तीत्यर्थः तदेवप्रपञ्चयति यथेति उक्तेर्थेहेतुमाह धर्म्मेति कर्म्मकाण्डानांवेदानामितिशेषः कर्म्मब्रह्माख्यसर्व्ववेदार्थस्य तत्रान्तर्भावमुपेत्य व्याचष्टे वेदार्थेति १

## शाङ्करभाष्यं

नाहं संसारवृक्षादस्मात् समूलात् ज्ञेयोन्योऽणुमात्रोऽप्यवशिष्टोऽस्त्यतः सर्वज्ञः स यो वेद सवेदार्थविदिति यस्मात् संसारवृक्षे समूले सर्वं ज्ञेयं अन्तर्भवतीति तस्मात् समूलवृक्षज्ञानं स्तौति तस्यैव संसारवृक्षस्यापरावयवव्यापारकल्पनोच्यते अधोमनुष्यादिभ्यो यावत् स्थावरमूर्द्ध्वञ्च यावद्ब्रह्मा विश्वसृजो धाम इत्येतदन्तं यथाकर्म यथाश्रुतं ज्ञानकर्मफलानि तस्य वृक्षस्य शाखा इव शाखाः प्रसृताः प्रकृतागुणप्रवृद्धाः गुणैः सत्वरजस्तमोभिः प्रवृद्धाः स्थूलकृताउपादानभूतैर्विषयप्रवालाः विषयाः शब्दादयः प्रवालाइव देहादिकर्मफलेभ्यः शाखाभ्यः अंकुरीभवन्तीवतेनाविषयप्रवालाः शाखाः संसारवृक्षस्य परममूलमुपादानं पूर्व्वमुक्तमथेदानीं कर्मफलजनितरागद्वेषादिवासनामूलानीवधर्माधर्मप्रवृत्तिकारणान्यवान्तरभावीनितान्यधस्ताद् देहाद्यपेक्षयामूलान्यनुसन्ततानि अनुप्रविष्टानि कर्मानुवन्धीनि कर्मधर्माधर्मलक्षणमनुवन्धः पश्चाद्भावी येषामुद्भूतिमनुभवन्तीति तानि कर्मानुवन्धीनि मनुष्यलोके विशेषतोऽत्र हि मनुष्याणांधर्माधिकारः प्रसिद्धः २

## स्वामिकृतटीका

वैराग्येण विना ज्ञानं न च भक्तिरतः स्फुटं वैराग्योपस्करं ज्ञानमीशः पञ्चदशेऽदिशत् पूर्व्वाध्यायान्ते माञ्च योऽव्यभिचारेण भक्तियोगेन सेवत इत्यादिना परमेश्वरमेकान्तभक्त्या भजतस्तत्प्रसादलब्धज्ञानेन ब्रह्मभावो भवति इत्युक्तं न चैकान्तभक्तिर्ज्ञानं वा अविरक्तस्य सम्भवतीति वैराग्यपूर्व्वकं ज्ञानमुपदेष्टुकामः प्रथमं तावत् सार्द्धश्लोकाभ्यां संसारस्वरूपं वृक्षरूपकालङ्कारेण वर्णयन् श्रीभगवानुवाच ऊर्द्ध्वमूलमिति ऊर्द्ध्वं सत्तमः क्षराक्षराभ्यामुत्कृष्टः पुरुषोत्तमो मूलं यस्य तं अधइति ततोऽर्व्वाचीनाः कार्य्योपाधयो हिरण्यगर्भादयो गृह्यन्ते ते तु शाखाइव शाखायस्य तं विनश्वरत्वेन श्वः प्रभातपर्यन्तमपि न स्थास्यतीति विश्वासानर्हत्वादश्वत्थं प्राहुः प्रवाहरूपेणाविच्छेदादव्ययञ्च प्राहुः ऊर्द्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातन इत्याद्याः श्रुतयः छन्दांसि वेदायस्य पर्णानि धर्म्माधर्मप्रतिपादनद्वारेण छायास्थानीयैः कर्मफलैः संसारवृक्षस्य सर्वजीवाश्रयणीयत्वप्रतिपादनात् पर्णस्थानीया वेदाः यस्तमेवम्भूतमश्वत्थं वेद स एव वेदार्थवित् संसारप्रपञ्चवृक्षस्य मूलमीश्वरो ब्रह्मादयस्तदंशाः शाखास्थानीयाः स च संसारवृक्षो विनश्वरः प्रवाहरूपेण नित्यश्च वेदोक्तैः कर्मभिः सेव्यतामापादितश्च इत्येतावानेव हि वेदार्थः अतएवं विद्वान् वेदविदिति स्तूयते १

अधश्चोर्द्ध्वम्प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके २

आनन्दगिरिकृतटीका

संमूलसंसारवृक्षच्छेदनाद्यानेतुफलं हित्वामूलमेवानिःश्रेयस्याद्य श्रयमिति तत् ज्ञानार्थं प्रयतितव्यमितिमत्वा तत्ज्ञानस्तुतिरद्धविवचितेत्याह नहीति अवयवसम्बन्धिन्यपरा प्रागुक्तादतिरिक्त कल्पनादृतियावत् आमनुष्यलोकादाविरिञ्चेरित्यधःशब्दार्थमाह मनुष्यादिष्विदृति तस्मादेवारभ्यासत्यलोकादित्यूर्द्ध्वशब्दार्थमाह यावदिति शाखाशब्दार्थंदर्शयति ज्ञानेति तेषांहेत्वनुगुणत्वेनवृद्धविधत्वंसूचयति यथेतिप्रत्यक्षाणांशब्दादिविषयाणांप्रवालत्वंशाखासुपल्लवत्वंअङ्कुरत्वंस्फोरयति देहादीति उर्द्ध्वमूलमित्यत्र संसारवृक्षस्य मूलमुक्तं किमिदानीमधश्च मूलानीत्युच्यते तत्राह संसारेति अनुप्रविष्टत्वंसर्वेषु लिङ्गेष्वनुगततयासन्ततत्वमविच्छिन्नत्वंरागादीनाञ्च कर्मफलजन्यत्वंप्रकटयति कर्मेति कर्मणांरागादीनांमिथोहेतुहेतुमत्वंतेषांतथात्वेनानवच्छिन्नत

भाषाअनुवाद

और कार्यरूपउपाधिविशिष्ट हिरण्यगर्भआदिजोसकलजीव सोईशाखारूपपूर्व्वलोकमेंकहाहै तिनकेमध्यमे जोअकर्मकारी अर्थात्कुत्सितकर्मकरतेहैं तेअधःअर्थात्पशुआदियोनिमेजातेहैं औरजोसत्कर्मकरते वेउर्द्ध्वकहे देवयोनिमेप्राप्तहोतेहैं येईसंसारवृक्षकेशाखारूपसत्त्वआदिगुणोंकीवृत्तिसे जलसेचनके समान यथायोगवढ़तेहैं औशाखाकेअग्रतुल्यइन्द्रियऔइन्द्रियोंकेविषयजोरूप रस आदि सोईप्रधानअर्थात्पत्रतुल्यहैं औरअधोभागउर्द्ध्वभागमेऔसमस्तमूलमे परमेश्वरहीमुख्यमूलहैं औरतद्भोगवासनारूपअवान्तरवासनासव अवान्तर मूलहैं औरअवान्तरवासनाकेकार्यकहतेहैं किकर्ममात्रहीसकलवासनाकेअनुबन्धअर्थात् उत्तरभावीकहेहोनहार सोईवासनासमस्तमनुष्यलोकमे कर्मअनुवन्धीहोतीहै अर्थात्उर्द्ध्वअधोलोकमेभुक्तिजोनानाप्रकारकेभोग सोईसोईभोगवासनाकेद्वाराहीकर्मक्षयहोनेसेमनुष्यलोककोप्राप्तलोगोंकोमोईसोईवासनाअनुरूपसकलकर्मोंमेप्रवृत्तिहोतीहै औरजिसहेतुमनुष्यलोकहीमेकर्मकाअधिकारहै औरकोईलोकमेनहीं है इससेमनुष्यलोकहीमे वासनारूपमूलकोकर्मकाअनुवन्धीकहाहै सोचहै किचणभङ्गसकलसाधनमनुष्यदेहमायके नकुछकरशकैइसभूलकोभीमूलगयेकिसीकोदेख याकिसीकेउपदेशमेआंखअंगेऔकानवहरेहोरहे २ इससंसारमेवर्त्तमान

नरूपमस्येह तथोपलभ्यते नान्तोनचादिर्नचसंप्रतिष्ठा । अश्वत्थमेनंसुविरूढ मूल मसङ्गशस्त्रेणदृढ़ेनछित्त्वा ३

### शाङ्करभाष्य

यस्त्वयंवर्णितःसंसारवृक्षःनरूपेति नरूपमस्यइहयथावर्णितंतथा नैवोपलभ्यते स्वप्नमरीच्युदकमायागन्धर्वनगरसमत्वात्दृष्टनष्टस्वरूपोहि सइत्यतएवानन्तोनपर्यन्तोनिष्ठासमाप्तिर्वाविद्यतेतथानचादिरितआरभ्यायंप्रवृत्तइति नकेनचिद्गम्यते नचसंप्रतिष्ठास्थितिर्मध्यमस्यनकेनचिदुपलभ्यते अश्वत्थमेनंयथोक्तंसुविरूढमूलंसुदृवि

### आनन्दगिरिकृतटीका

याप्रवृत्तिःविशेषतोमनुष्यलोकेभवतीत्यत्रहेतुमाह अत्रहीति कर्मव्युत्पत्याप्राणिनिकायोलोकः मनुष्यश्चासौलोकश्चेत्यधिकृतोब्राह्मण्यादिविशिष्टोदेहोमनुष्यलोकः २

### स्वामिकृतटीका ।

किञ्चअधश्चेति हिरण्यगर्भादयः कार्योपाधयोजीवाः शाखास्थानीयत्वेनोक्तास्तेषुचयेदुष्कृतिनस्तेऽधःपश्वादियोनिषु प्रसृताविस्तारंगताः सुकृतिनश्चोर्द्ध्वं देवादियोनिषुप्रसूतास्तस्यसंसारवृक्षस्यशाखाः किञ्चगुणैः सत्वादिवृत्तिभिर्जलसेचनैरिव यथायथंप्रवृद्धावृद्धिंप्राप्ताःकिञ्चविषयारूपादयःप्रवालाःपल्लवस्थानीया यासांशाखाग्रस्थानीयाभीरिन्द्रियवृत्तिभिःसंयुक्तत्वात् किञ्चअधश्च चशब्दादूर्द्ध्वंचमूलानिअनुसन्ततानिविरूढ़ानिमुख्यं मूलमीश्वरएव इमानित्वन्तराणिमूलानितत्तद्भोगवासनालक्षणानि तेषांकार्यमाह मनुष्यलोकेकर्मानुबन्धीनिइति कर्मएवअनुबन्धि उत्तरंभावियेषां तानिजर्द्धाधोलोकेपूपभुक्ततत्तत्भोगवासनादिभिर्हिकर्म्मक्षयेमनुष्यलोकंप्राप्तानांतत्तदनुरूपेषुकर्म्मसुप्रवृत्तिर्भवति तस्मिन्नेवहिकर्माधिकारोनान्येषुलोकेषु अतोमनुष्यलोकइत्युक्तं २ किञ्च नरूपमिति इहसंसारेस्थितैःप्राणिभिरस्यसं

### भाषा अनुवाद

जोप्राणीहैं वेसंसारवृक्षकाऊर्द्ध्व मूलआदिभेदनहींजानतेहैं औरअत्यन्तबड़ेपनके हेतुसे इसकाअन्तभीनहींजानाजायहै तथाअनादिहेतुसेआदिभीनहींकोईजानिसकैहै औरस्थिति अर्थात्यहसंसारकिसतरहस्थितऔकैसाहै सोभी खबर किसीकोनहींहै इससेयहसंसारवृक्षदुःखदायकहैइसकाकाटनाकठिनहै औ अनर्थकारीहै इसीहेतु इससंसारकोदृढ़वैराग्यरूपशस्त्रसेछेदनकरके तत्वज्ञानकीयत्नकरनाचाहिये यहडेढ़श्लोकसेभगवानकहतेहैं कियहअश्वत्थरूपदृढ़मूलसंसारको अहंममतात्यागरूपदृढ़अस्त्रस्वरूपसम्यक्विचारसेछेदनअर्थात्पृथककरके ३

ततःपदंतत्परिमार्गितव्यं यस्मिन्गतानिवर्त्तन्तिभूयः तमेवचाद्यंपुरुषंप्रपद्ये यतःप्रवृत्तिःप्रसृतापुराणी ४ निर्मानमोहाजितसङ्गदोषा अध्यात्मनित्या

शाङ्करभाष्य ।

रूढानिविरोहंगतानिसुदृढानियस्यतमेनंसुविरूढमूलमसङ्गशस्त्रेणअसंगः असंगता पुत्रवित्तलोकैषणादिभ्योव्युत्थानन्तेनासङ्गशस्त्रेणदृढेन परमात्माभिमुखनिश्चयदृढी कृतेनपुनःपुनर्विवेकाभ्यासाश्मनिशितेनच्छित्त्वासंसारवृक्षंसबीजमुद्धृत्य ३

आनन्दगिरिकृतटीका

पुनःपुनःरागादिनाप्रवृत्तत्वेनानादित्वान्नसंसारवृक्षःस्वयमुच्छिद्यते नचोच्छे त्तुंशक्यतेकेनापीत्याशंक्याह यस्त्विति यथापूर्वंवर्णितंयथाचलोकेप्रसिद्धं तथास्वरू पमिह शास्त्रेनुमीयते तथाचास्यज्ञानापनोद्यत्वंयुक्तमित्याह यथेति तस्याप्रमितत्वे हेतुमाह स्वप्नेतितस्यस्वप्नादिसमत्वेदृष्टनष्टस्वरूपत्वंहेतुंकरोति दृष्टेतिइत्यमेयतेति शेषः तमेवामेयत्वंहेतुंकृत्वावसानमपितस्यनभातीत्याह अतएवेति ज्ञानंविनाभ्रान्ति वासनाकर्मणामन्योन्यनिमित्तत्वान्नावसानमस्तीत्यर्थः इदंप्रथमत्वमपिनास्यपरि च्छेत्तुंशक्यमित्याह तथेति आद्यन्तवन्मध्यमपिनास्यप्रामाणिकमित्याह मध्यमिति संसारवृक्षस्याश्वत्थशब्दितस्यक्षणभङ्गुरस्यस्वयमेवोच्छेदसम्भवात्तदुच्छेदार्थंनप्रयति तव्यमित्याशंक्याह अश्वत्थमिति व्युत्थानंवैराग्यपूर्वकंपारिव्राज्यंदृढीकृतत्वमेवविवे कपूर्वकत्वेनस्फुटयति पुनःपुनरिति ३

स्वामिकृतटीका

सारवृक्षस्यतथाऊर्ध्वमूलत्वादिप्रकारेणरूपंनोपलभ्यतेनचान्तोऽवसानमपर्यन्तत्वात् नचादिरनादित्वात् नचसंप्रतिष्ठास्थितिःकथंतिष्ठतीति नोपलभ्यतेयस्मादेवम्भूतोऽ यंसंसारवृक्षोदुरवच्छेदोऽनर्थकरश्चतस्मादेनंदृढेनवैराग्यशस्त्रेणच्छित्वा तत्व ज्ञानेयतेतेत्याह अश्वत्थमेनमिति सार्द्धेन एनमश्वत्थंसुविरूढमूलमत्यन्तबद्धमूलंस न्तंअसङ्गोहंममतात्यागस्तेनशस्त्रेणदृढेनसम्यग्विचारेणच्छित्वापृथक्कृत्य ३

भाषाअनुवाद

तदनन्तरसंसारकेमूलकारणस्वरूपतत्पदसे कहेजातेभयेजिसईश्वरपदकोअन्वे षणकरनाउचितहै सोपदकैसाहै इसअपेक्षापरकहतेहैं किजहांजायकरफेरऔर संसारआवर्त्तनकहेआवागमनहोतानहीं औरभगवत्पदढूंढनेकीरीतिकहतेहैं किजिससेइसपुरानेसंसारकीप्रवृत्तिभईहै उसीआदिपुरुषकेशरणागतहोतेहैं इ सीतरह एकान्तभक्तिकेद्वाराढूंढै ४ सोईपरमेश्वरकीप्राप्तिकेविषयमेदूसरी

विनिवृत्तकामाः द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैः गच्छन्त्यमूढाः पदमव्ययंतत् ५

## शाङ्करभाष्यं।

ततइति ततःपश्चात्यत्पदंवैष्णवंतत्परिमार्गितव्यंपरिमार्गणमन्वेषणं ज्ञा
तव्यमित्यर्थः यस्मिन्पदेगताःप्रविष्टानिवर्त्तन्तिनावर्त्तन्तेभूयःपुनःसंसाराय कथंप
रिमार्गितव्यमित्याह तमेवचाद्यःपदशब्देनोक्तआद्यमादौभवंआद्यंपुरुषंप्रपद्यइत्येवं
परिमार्गितव्यंतच्छरणतयेत्यर्थःकोसौपुरुषइत्युच्यतेयतोयस्मात्पुरुषात्संसारमा
यावृक्षप्रवृत्तिःप्रसृतानिःसृतैन्द्रजालिकादिवत्मायापुराणीचिरन्तनी ४ कथंभूता
स्तत्पदंगच्छन्तीत्युच्यतेनिर्मानेति निर्मानमोहामानश्चमोहश्चमानमोहौतौनिर्गतौ
येभ्यस्तेनिर्मानमोहाःमानमोहवर्जिताःजितसङ्गदोषाःसङ्गएवदोषःसङ्गदोषःजितस
ङ्गदोषोयैस्तेजितसङ्गदोषा अध्यात्मनित्याःपरमात्मस्वरूपालोचनेनित्यास्तत्परानिवृ
त्तकामाःविशेषतोनिर्लेपेननिवृत्ताःकामायेषांते विनिवृत्तकामायतयः सन्यासिनो
द्वन्द्वैःप्रियाप्रियादिभिर्विमुक्तासुखदुःखसंज्ञैःपरित्यक्तागच्छन्त्यमूढामोहवर्जिताः प
दमव्ययंतद्यथोक्तं ५ तदेवपदंपुनर्विशिष्यते नेति तद्धामेतिव्यवहितेनधाम्ना सम्ब

## आनन्दगिरिकृतटीका

ऊर्द्ध्वमित्यर्थिकिंकर्त्तव्यंतदाह ततइति पश्चादश्वत्थादूर्द्ध्वंव्यवस्थितमित्यर्थः किन्तत्पदंयद
न्विष्यज्ञातव्यंतदाह यस्मिन्निति येनसर्वंपुरंपुरिषुवाशयानंपुरुषंप्रपद्येशरणंगतो
स्मीत्यर्थः विवर्त्तवादानुरोधिनंदृष्टान्तमाह ऐन्द्रेति ४ परिमार्गणपूर्वकंवैष्णवं

## स्वामिकृतटीका

ततइति ततस्तस्यमूलभूतंतत्पदंवस्तुपरिमार्गितव्यंअन्वेष्टव्यं कीदृशं यस्मिन् ग
तायत्पदंप्राप्ताःसन्तोभूयोननिवर्त्तन्तिनावर्तन्तइत्यर्थः अन्वेषणप्रकारमेवाह तमे
वेति यतएषापुराणीचिरन्तनी संसारप्रवृत्तिःप्रसृताविस्तृतातमेवचाद्यंपुरुषंप्रप
द्येशरणंव्रजामिइत्येवमेकान्तभक्त्याअन्वेष्टव्यमित्यर्थः ४ तत्प्राप्तौसाधनान्तराणि

## भाषाअनुवाद

उपायदेखावतेऊये कहतेहैं किजिनमनुष्योंकेमानअहंकारऔमिथ्यावस्तुमेंरुचि
नहींहै अर्थात्मानादिदूरहोगयेहैं औरजिनकेपुत्रइस्त्रीधनआदिसेआसक्तिरूप
दोषनिवृत्तभयेहैं औरजिनकोआत्मज्ञानसेभलीप्रकारसेनिष्ठाहै औरजिनकीवा
सनाअच्छीतरहनिवृत्तहोगईहैं औरसुखदुखकेहेतुरूपशीतउष्णहानिलाभआदि
द्वन्दसेअच्छीतरहछूटगयेहैं ऐसेजोनिवृत्तअविद्या कहेज्ञानीजनहैं तेईअव्यय रू
पकोप्राप्तहोतेहैं ५ अवउसीअव्ययपदकोविशेषरूपसेकहतेहैं किउसपद को

नतद्भासयते सूर्यो नशशाङ्कोनपावकः यद्गत्वाननिवर्त्तन्ते तद्धामपरमंमम ६

## शाङ्करभाष्यं

न्यःधामतेजोरूपंपदंनभासयतेसूर्यआदित्यःसर्व्वावभासनशक्तिमत्त्वेपिसतितथान श शाङ्कश्चन्द्रोनचपावकोनाग्निरपियद्धामवैष्णवंपदंगत्वाप्राप्यननिवर्त्तन्तेयच्चसूर्यादिभिर्नभासयतेतद्धामपदंपरमंविष्णोर्ममपदंयत्गत्वा ननिवर्त्तन्त इत्युक्तं ६

ननुसर्व्वाहिगतिरागत्यन्तासंयोगाविप्रयोगान्ताः इति प्रसिद्धंहिकथमुच्यते तद्धामगतानांनास्तिनिवृत्तिरितिशृणु तत्रकारणंममैवेति ममैवपरमात्मनोनारायणस्यांशोभागोऽवयवएकदेशइत्यनर्थान्तरंजीवलोकेजीवानांलोकेसंसारेजीवभूतः भोक्ताकर्तेति प्रसिद्धःसनातनःपुरातनःयथाजलसूर्यकः सुर्यांशोजलनिमित्तापायेसूर्यमेवगत्वाननिवर्ततेतथाऽयमप्यंशः तेनैवात्मनासङ्गच्छत्येवमेवयथावाघटाद्युपाधिपरिच्छिन्नोघटाद्याकाशःआकाशांशः सन्घटादिनिमित्तापायेआकाशंप्राप्य ननिवर्तत

## आनन्दगिरिकृतटीका

पदंगच्छतांसंज्ञान्तरान्याकाङ्क्षापूर्व्वकंकथयति कथमित्यादिना मानोहङ्कारःमोहस्त्वविवेकःजितसङ्गदोषाःशत्रुमित्रसन्निधावपिद्वेषप्रीतिवर्जिताइत्यर्थः तत्परत्वंश्रवणादिनिष्ठत्वंसंन्यासिनोवैराग्यद्वारा त्यक्तसर्व्वकर्म्माणइत्यर्थःआदिशब्देनतद्धेतुग्रहः मोहवर्जितत्वमुक्तंहेतुतःसंजातसम्यग्धीत्वं ५ तच्चेत्पदंवेद्यंकर्त्तुरन्यत्कर्म्मेति हैतापात्ततोऽवेद्यंचेदप्रसक्तत्वात्प्रेप्सितत्वासिद्धिरित्याशंक्याह तदेवेति उक्तमनूद्याजिपति यद्गत्वेति ६ तत्रप्रसिद्धिंप्रमाणयति संयोगाइति गमनस्यागमनान्तत्व

## स्वामिकृतटीका

दर्शयन्नाह निर्मानेति निर्गतौमानमोहौअहङ्कारमिथ्याभिनिवेशौयेभ्यस्तेजितःपुत्रादिसङ्गरूपोदोषोयैस्तेअध्यात्मेआत्मज्ञानेनित्याःपरिनिष्ठिताःविशेषेणनिवृत्तः कामो येभ्यस्ते सुखदुःखहेतुत्वात्सुखदुःखसंज्ञानिशीतोष्णादीनिद्वन्द्वानि तैर्विमुक्ताअतएवामूढानिवृत्ताविद्याःसन्तस्तदव्ययंपदंगच्छन्ति ५ तदेवगन्तव्यंपदंविशिनष्टि नतदिति तत्पदंसूर्यादयोनप्रकाशयन्तियत्प्राप्यननिवर्तन्तेयोगिनस्तद्धाम स्वरूपं परंमम अनेनसूर्यादिप्रकाशाविषयत्वेनजडत्वशीतोष्णादिदोषप्रसङ्गोनिरस्तः ६

## भाषा अनुवाद

सूर्यचन्द्रअग्निभीप्रकाशनहींकरशकतेहैं औरयोगीजनजिसपदकोप्राप्तहो फेरि संसारमेंआवर्त्तन कहेगमनागमननहींकरतें हैं सोईवामकहेतेजरूप हमराश्व रूपहै जहांसूर्यादिकोभीगतिनहींतहांदुखद्वन्दजडताकाकौनप्रसङ्गहै ६ जोकहो

ममैवांशोजीवलोकेजीवभूतःसनातनः मनःषष्ठानीन्द्रियाणिप्रकृतिस्थानिकर्षति ७

शाङ्करभाष्यं ।

इत्येवमतउपपन्नमुक्तंयद्गत्वाननिवर्त्तन्तइति ननुनिरवयवस्यपरमात्मनः कुतोऽवयव एकदेशोंशइति सावयवत्वेचविनाशप्रसङ्गोऽवयवविभागान्नैषदोषोऽविद्याकृतोपाधि परिच्छिन्नएकदेशोंशइवकल्पितोदर्शितस्त्रायमर्थः क्षेत्राध्यायेविस्तरशःसचजीवोम दंशत्वेनकल्पितःकथंसंसरतीत्युक्तमिति चेदुच्यते मनःषष्ठानीन्द्रियाणिश्रोत्रादीनि प्रकृतिस्थानि स्वस्थानेकर्णशष्कुल्यादौ प्रकृतौस्थितानि कर्षत्याकर्षति ७

आनन्दगिरिकृतटीका ।

प्रसिद्धेरप्युक्तंयद्गत्वेत्यादिइत्युपसंहरति कथमिति आक्षेपंपरिहरति शृणिवति भगव त्प्राप्तेर्निष्टत्यंतत्वाभावःसप्तम्यर्थः जीवस्यपरांशत्वेपिकथमुक्तदोषसमाधिरित्याशंक्य प्रतिबिम्बपक्षमादायदृष्टान्तेनप्रत्याचष्टे यथेति अवच्छेदपक्षमाश्रित्यदृष्टान्तान्तरेणो क्तदोषसमाधिंदर्शयति यथावेति आक्षेपसमाधिमुपसंहरति अतइति परस्य निरव यवत्वात्तदंशत्वंजीवस्यायुक्तमिति शङ्कते नन्विति तस्यनिरवयत्वंसाधयति सावयव त्वेचेति वस्तुतोनिरंशस्यापिपरस्यकल्पनयाजीवोंशोभविष्यतीतिपरिहरति नैष दोइति वस्तुतस्तुजीवस्यनांशत्वंपरमात्मतावन्मात्मतयादर्शितत्वादित्याह दर्शितश्चेति यदिपरस्यांशत्वेनकल्पितोजीवोवस्तुतस्तदात्मैवनतर्हितस्यसंसारित्वं उत्क्रान्तिर्वे तिशङ्कते कथमिति जीवस्यसंसरणमुत्क्रमणञ्चोपपादयितुमुपक्रमते उच्यतइति ७

स्वामिकृतटीका ।

ननुचत्वदीयंधामप्राप्ताःसन्तोयदिननिवर्तन्ते तर्हिसतिसंपद्यनविदुःसति सं

भाषाअनुवाद

किंतुमेरेधामकोप्राप्तहो फेरिसंसारनहींहोता सोसत्यहै सकलजीवसतस्वरूपस म्पन्नहोकेइ तदृष्टिनहीकरतेहैं औरसुषुप्तिसमयमेंब्रह्मभावकोप्राप्तहोतेहैं ऐ सेश्रुतिविधानकरैहैं औप्रलयकालमेभी सवजीवतिसधामकोप्राप्तहोतेहैं तोफेरि संसारीऔरकिसकानामहै इसआशङ्कापरपाञ्चश्लोकसेसंसारीस्वरूप देखावते हैं किहमाराअंशजीवअविद्यासेसुषुप्तितथाप्रलयकेसमयप्रकृतिमेंलीनहोकेरहतेहैं औरमनसमेतइन्द्रियइनछवोंको मेरेहीअंशसनातनजीवभूतसंसारके उपभोगार्थ फेरभीमनुष्यलोकमेंखैंचेहैं यहांयहजाननाचाहियेकिइन्द्रियशब्दसेज्ञानकर्मइन्द्री औपञ्चप्राणलेतेहैं इसीसेसंसारीहोते हैं ७ औरसोईइन्द्रियोंकोआका

शरीरंयदवाप्नोतियच्चाप्युत्क्रामतीश्वरः गृहीत्वैतानिसंयातिवायुर्गन्धानिवाशयात् ८

## शाङ्करभाष्यं

कस्मिन्काले शरीरमितियच्चापियदाचाप्युत्क्रामतीश्वरोदेहादिसंघातस्वामीजो वस्तदाकर्षतीति श्लोकस्यद्वितीयपादार्थत्वात्प्राथम्येनसम्बध्यते यदाचपूर्वस्मात्श रीरात्शरीरान्तरमाप्नोतितदागृहीत्वैतानिमनःषष्ठानीन्द्रियाणिसंयातिसम्यक्या तिगच्छतिकिमिवेत्याह वायुःपवनोगन्धानिवाशयात्पुष्पादेः ८ कानिपुनस्तानीति

## आनन्दगिरिकृतटीका

स्वस्थानेस्थितानामिन्द्रियाणांजीवेनाकर्षणस्यकालंपृच्छति कस्मिन्नितिजीव स्योत्क्रान्तिर्नेश्वरस्येत्याशंक्येश्वरशब्दार्थमाह देहादीति उत्क्रान्त्यनन्तरभावि नीगतिरित्येतदर्थवशादित्युक्तं अवशिष्टानिश्लोकाक्षराण्याचष्टे यदाचेति ८

## स्वामिकृतटीका

पश्यामहइत्यादिश्रुतेःसुषुप्तिप्रलयसमयेनतत्प्राप्तिःसर्वेषामस्तीतिकोनामसंसारीस्या दित्याशंक्यसंसारिणंदर्शयति ममैवेति पञ्चभिः ममैवांशोयमविद्ययाजीवभूतःसना तनःसर्वदासंसारित्वेनप्रसिद्धः असौसुषुप्तिप्रलययोःप्रकृतौलीनतयास्थितानिमनः षष्ठानितानीन्द्रियाणिपुनर्जीवलोके संसारोपभोगार्थमाकर्षति एतच्चकर्मेन्द्रिय णांप्राणस्यचोपलक्षणार्थमयम्भावःसत्यंसुषुप्तिप्रलययोरपिमदंशत्वात्सर्वस्यापिजीव मात्रस्यमयिलयादस्त्येवमत्प्राप्तिस्तथाप्यविद्यावृतस्यसानुशयस्यसप्रकृतिकेमयिलयो नतुशुद्धे तदुक्तंअव्यक्ताद्व्यक्तयःसर्वाःप्रभवन्तीत्यादिना अतःपुनःसंसारायनिर्गच्छ न्नविद्वान्प्रकृतौलीनतयास्थितानिस्वोपाधिभूतानीन्द्रियाण्याकर्षति विदुषान्तुशुद्ध स्वरूपप्राप्तेर्निवृत्तिरिति ७ तान्याकृष्यकिंकरोतीत्याह शरीरमिति यत्यदाशरी रान्तरंकर्मवशादवाप्नोतियतश्चशरीरादुत्क्रामतिईश्वरोदेहादीनांस्वामी तदापू र्वस्मात् शरीरादेतानिगृहीत्वातच्छरीरान्तरंसम्यग्याति शरीरेसत्यपिइन्द्रियग्र

## भाषाअनुवाद

औरसोईइन्द्रियोंकोआकर्षणकरिके जीवक्याकरतेहैं जोयहशङ्काकरो तोसु नोकिजुवईश्वरनाम देहआदिकास्वामीरूप व्यावहारिकजीवकर्मवशते दूसरीश रीरकोप्राप्तहोतेहैं अथवाजवशरीरकोछोड़िकेगमनकरतेहैं तवपूर्व्वशरीर सेइन्द्रियादिकोंको ग्रहणकरिकेगमनकरैहैं इसमेंदृष्टान्तयह किजैसेवायुफूलों केस्थानसे सुगन्धरूपसूक्ष्मअंशपरमाणुग्रहकरगमनकरैहैतैसेहीयहभीजानो ८

श्रोत्रञ्चक्षुःस्पर्शनञ्चरसनंघ्राणमेवच अधिष्ठायमनश्चायंविषयानुपसेवते ९
उत्क्रामन्तंस्थितंवापिभुञ्जानंवागुणान्वितं विमूढानानुपश्यन्तिपश्यन्तिज्ञानचक्षुषः१०

## शाङ्करभाष्यं

श्रोत्रमिति श्रोत्रंचक्षुःस्पर्शनञ्चत्वगिन्द्रियंरसनंजिह्वाघ्राणमेवचमनश्चषष्ठंप्रत्येकंइ न्द्रियेणसहाधिष्ठायदेहस्थोविषयान्शब्दादीनुपसेवते ९

एवंदेहगतंदेहात्उत्क्रामन्तमिति उत्क्रामन्तंपरित्यजन्तंदेहंपूर्वोपात्तंस्थितं वादेहेतिष्ठन्तं भुञ्जानंवाशब्दादींश्चोपलभमानंगुणान्वितंसुखदुःखमोहाद्यैःगुणैर न्वितमनुगतंसंयुक्तमित्यर्थःएवम्भूतमप्येनमत्यन्तंदर्शनगोचरप्राप्तंविमूढा दृष्टादृष्ट विषयभोगबलाकृष्टचेतस्तयाऽनेकधामूढानानुपश्यन्तअहोकष्टंवर्त्तन्तइत्यनुक्रोशतिच भगवान् येतुपुनःप्रमाणजनितज्ञानचक्षुषस्तएनंपश्यन्ति ज्ञानचक्षुषोविविक्तदृष्टयइ त्यर्थः १० केचित्तुयतन्तःप्रयत्नंकुर्वन्तोयोगिनश्चसमाहितचित्ताएनंप्रकृतमात्मानं

## आनन्दगिरिकृतटीका

मनःषष्ठानीन्द्रियाण्येवप्रश्नद्वाराविशेषतोदर्शयति कानीति ९

शरीरमित्यादिश्लोकेदेहादात्मनोतिरेकमुक्त्वाश्रोत्रंचक्षुरित्यादौ स्वाभिलषितेवि षयेयथायथंकरणानांप्रवर्त्तकत्वात्तेभ्योतिरिक्तश्चात्मेत्युक्तंतर्हितमुत्क्रान्तरादि कुर्व

## स्वामिकृतटीका

हणेदृष्टान्तः आशयात्स्वस्थानात्कुसुमादेःसकाशात्गन्धान्गन्धवतः सूक्ष्मानंशा न्गृहीत्वावायुर्यथागच्छतितद्वत् ८ तान्येवेन्द्रियाणिदर्शयन्यदर्थंगृहीत्वाग च्छतितदाह श्रोत्रमिति श्रोत्रादीनिबाह्येन्द्रियाणिमनश्चान्तःकरणमधिष्ठायाश्रि त्यशब्दादीन्विषयानयंजीवउपभुङ्क्ते ९ ननुकार्यकारणसंघातव्यतिरेके

## भाषाअनुवाद

इन्द्रियोंकेसमाचारकहके अबजिसलियेउनइन्द्रियोंकोग्रहणकरिके गमनकर तेहैं सोकहतेहैं कियेजीवश्रोत्रचक्षुस्पर्शजिह्वाऔरघ्राणसे बाह्यइन्द्रियऔरअ न्तःकरण कोआश्रयकरिके शब्दआदिविषयोंको उपभोगकरैं हैं ९

जोकहोकिऐसेआत्माकोकार्यकारणसमूहसे भिन्नरूपसबकोईक्योंनहींदेखते इसपरकहतेहैं किदेहान्तरगामीअथवाउसीदेहमेंस्थितयाविषयभोगीकिम्वाइन्द्रि यादियुक्तभीजोविशेषमूढबुद्धिसबनहींदेखतेहैं परन्तुज्ञानहींजिसकेचक्षुहैं ऐसे विवेकीमनुष्यहीदेखतेहैं १० औरयहआत्मादुर्विज्ञेयहै क्योंकि विवेकियों केबीच

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितं यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ११

## शाङ्करभाष्यं

पश्यन्त्ययमस्मीति उपलभन्ते आत्मनि स्वस्यां बुद्धाववस्थितं यतन्तोऽपि शास्त्रादिप्रमाणै रकृतात्मानोऽसंस्कृतात्मानः तपसेन्द्रियजयेन च दुश्चरितादनुपरताः अशान्तदर्पाः प्रयत्नं कुर्वन्तोऽपि नैनं पश्यन्त्यचेतसोऽविवेकिनः ११ यत्पदं सर्वस्यावभासकमप्यग्न्यादित्यादिकं ज्योतिर्नावभासयते यत्प्राप्य च मुमुक्षवः पुनः संसाराभिमुखा न निवर्तन्ते यस्य च पदस्योपाधिभेदमनुविधीयमाना जीवा घटाकाशादय इवाकाशस्यांशा तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं च विवक्षुश्चतुर्भिः श्लोकैः विभूतिसंक्षेपमा

## आनन्दगिरिकृतटीका

त्मस्वरूपत्वात् किमिति सर्वे न पश्यन्तीत्याशंक्याह एवमिति सन्निहिततमत्वेन दर्शनयोग्यस्यापि विषयपरवशादात्मानं सर्वे न पश्यन्तीति भगवतोऽनुक्रोशं दर्शयति एवम्भूतमिति तर्हि केषामात्मदर्शनं तदाह येत्वितिपुनरिति १० ज्ञानचक्षुःशब्देन न्यायानुगृहीतं शास्त्रं ज्ञानसाधनमुक्तं तत् किमिदानीं शास्त्रमात्रेण न्यायानुगृहीतेनात्मानं पश्यन्ति नेत्याह केचिदिति प्रयत्नः श्रवणमननात्मकः शास्त्रादिप्रमाणैर्यतन्तोऽपीति सम्बन्धः असंस्कृतात्मत्वं प्रकटयति तपसेति दुश्चरितादविरतिफलं कथयति अशान्तेति अशुद्धबुद्धीनामविवेकिनां सदपि श्रवणादि न फलवदिति मत्वाह प्रयत्नमिति ११

## स्वामिकृतटीका

एवम्भूतमात्मानं सर्वेऽपि किं न पश्यन्ति तत्राह उत्क्रामन्तमिति उत्क्रामन्तं देहाद्देहान्तरं गच्छन्तं तस्मिन्नेव देहे स्थितं वा विषयान्भुञ्जानं वा गुणान्वितमिन्द्रियादियुक्तं जीवं विमूढा नालोकयन्ति ज्ञानमेव चक्षुर्येषां ते विवेकिनः पश्यन्ति १०

दुर्ज्ञेयश्चायं यतो विवेकिष्वपि केचित्पश्यन्ति केचिन्न पश्यन्तीत्याह यतन्त इति यतन्तो ध्यानादिभिः प्रयतमाना योगिनः केचिदेनमात्मानमात्मनि देहेऽवस्थितं विविक्तं पश्यन्ति शास्त्राभ्यासादिभिर्यत्नं कुर्वाणा अकृतात्मानोऽविशुद्धचित्ता अत एवाचेतसो मन्दमतय एनं न पश्यन्ति ११ तदेवं न तद्भासयते सूर्य इत्यादिना पारमेश्वरं परं धामो

## भाषाअनुवाद

भी कोई देखते और कोई नहीं देख सकते हैं सो कहते हैं कि ध्यान आदि के द्वारा यत्नकारी योगीजन अपने शरीर में इस आत्मा को पृथक्रूप से देखते हैं और शास्त्र अभ्यास से यत्न करके भी अकृतात्मा अशुद्धचित्त मन्दमति लोग इस आत्मा को नहीं देखते हैं ११

यदादित्यगतंतेजोजगद्भासयतेऽखिलं यच्चन्द्रमसियच्चाग्नौतत्तेजोविद्धिमामकं १२

## शाङ्करभाष्यं

ह भगवान्यदेति यदादित्यगतमादित्याश्रयंकिन्तत्तेजोदीप्तिःप्रकाशोजगद्भासयते प्रकाशयत्यखिलंसमस्तं यच्चन्द्रमसियच्चशशभृतितत्तेजोऽवभासकंवर्त्ततेयच्चाग्नौहु तवहेतत्तेजोऽद्धिविजानीहिमामकंमदीयं ममविष्णोस्तत्ज्योतिः अथवायदादित्यग तंतेजश्चैतन्यात्मकंज्योतिश्चन्द्रमसियच्चाग्नौतत्तेजोविद्धिमामकंमदीयंममविष्णोस्तत् ज्योतिरित्यादि ननुस्थावरेषुजङ्गमेषुचतत्समानं चैतन्यात्मकंज्योतिस्तत्रकथमिदं विशेषणंयदादित्यगतमित्यादिनैषदोषः सत्वाधिक्यादाधिक्योपपत्तेरादित्यादिषुहि सत्वमत्यन्तप्रकाशमत्यन्तभास्वरमतस्तत्रैवाविस्तरां ज्योतिरिति तद्विशिष्यते ननुत त्रैवतदधिकमिति यथाहिलोकेतुल्येऽपिमुखसंस्थानेनकाष्ठकुड्यादौमुखमाविर्भवति आदर्शादौतुस्वच्छेस्वच्छतरेतारतम्येनाविर्भवति तद्वत् १२

## आनन्दगिरिकृतटीका

अनन्तरश्लोकचतुष्टयस्यवृत्तानुवादद्वारातात्पर्य्यार्थमाह तत्पदमिति जीवात्म त्वेनचिद्रूपत्वमुक्त्वातदीयचैतन्येनादित्यादीनामवभासकत्वाच्चब्रह्मणश्चिद्रूपत्वमित्या ह यदादित्येति चिद्रूपस्यैवब्रह्मणःसर्वात्मकत्वप्रतिपादकत्वेनश्लोकंव्याचष्टे यदित्या दिना आदित्यादौतत्रतत्र स्थितंब्रह्मचैतन्यज्योतिःसर्वावभासकमित्यर्थःब्रह्मणःस

## स्वामिकृतटीका।

त्वं तत्प्राप्तानाञ्चापुनरावृत्तिरुक्तातत्रसंसारिणोऽभावमाशंक्यसंसारिस्वरूपं देहा दिव्यतिरिक्तंदर्शितं इदानींतदेवपारमेश्वरंरूपमनन्तशक्तित्वेन निरूपयति यदि त्यादिचतुर्भिः आदित्यादिषुस्थितंयदनेकप्रकारंतेजोविश्वंप्रकाशयति तत्सर्वंतेजो

## भाषा अनुवाद।

इससे नतद्भासयतेसूर्य्यइत्यादि इसीअध्यायकेसप्तमआदिश्लोककेद्वारा परमेश्वर काजोपरमधाम सोकहागयाहै औतद्धामप्राप्तजीवोंकोअपुनरावृत्तिकहीगईहै औतद्विषयकसंसारीकेअभावआशङ्कापर देहसेभिन्नसंसारीस्वरूपकोभी देखाया है अबसोईपरमेश्वरसम्बन्धीरूपइहांसेलेकरचारश्लोसेअनन्तशक्तिक्रमसे निरूपण करतेहैं किसूर्यादिमेंस्थित अनेकप्रकारतेज जोविश्वकोप्रकाशकरैहैं ऐसेहीचन्द्र मेंस्थितजोतेज अखिलसंसारकोप्रकाशकरतेहैं तैसेहीअग्निस्थकहे अग्निमेंटिका हुआतेज ब्रह्माण्डदीप्तकरैहै सोसबतेज हमाराहीहै यहजानो१ २

गामाविश्य च भूतानि धारयाम्यहमोजसा। पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः॥१३॥

### शाङ्करभाष्यं

किञ्च गामिति गां पृथिवीमाविश्य प्रविश्य धारयामि भूतानि जगदहमोजसा बलेन यद्बलं कामरागविवर्जितमैश्वरं जगद्विधारणाय पृथिव्यां प्रविष्टं येन गुर्वी पृथिवी नाधः पतति न विदीर्यते तथा च मन्त्रवर्णः येन द्यौरुग्रा पृथिवी च दृढेति स दाधार पृथिवीमित्यादिश्च अतो गामाविश्य भूतानि चराचराणि धारयामीति युक्तमुक्तं किञ्च पृथिव्यां जाता व्रीह्याद्या ओषधीः सर्वा व्रीहियवाद्याः पुष्णामि पुष्टिमतीः रसस्वादमतीश्च करोमि सोमो भूत्वा रसात्मकः सोमः सन् रसात्मको रसस्वभावः सर्वरसानामाकरः सोमः स हि सर्वा ओषधीः स्वात्मरसानुप्रवेशेन पुष्णाति १३ किञ्च अहमिति अहमेव वैश्वानरो उदरस्थोऽग्निर्भूत्वा अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते इत्यादिश्रुतेर्वैश्वा

### आनन्दगिरिकृतटीका।

वेद्यत्वेन चिद्रूपत्वमत्र विवक्षितमिति व्याख्यान्तरमाह अथवेति चैतन्यज्योतिषः सर्वत्राविशेषादादित्यादिगतविशेषणमयुक्तमिति शङ्कते नन्विति सर्वत्र सत्त्वेपि क्वचिदेवाभिव्यक्तिविशेषाद्विशेषणमिति परिहरति नैष दोष इति तदेव प्रपञ्चयति आदित्यादिष्विति सर्वत्र चैतन्यज्योतिषस्तुल्यत्वेपि क्वचिदेवाभिव्यक्त्या विशेषणोपपत्तिं दृष्टान्तेन स्पष्टयति यथा हीति १२

इतश्च सर्वात्मत्वं प्रकृतपदस्य युक्तमित्याह किञ्चेति ईश्वरो हि पृथिवीदेवतारूपेण पृथिवीं प्रविश्य भूतग्राद्दितं जगदैश्वरेणैव बलेन बिभर्ति ततो गुर्व्यपि पृथिवी विदीर्य नाधः पततीत्यत्र प्रमाणमाह तथा चेति परस्यैव हिरण्यगर्भात्मना स्थानात् मन्त्रवर्णयोरन्यपरतेति भावः देवतात्मना द्यावापृथिव्योरुग्रत्वसुदृढत्वसामर्थ्यं तथापीश्वरायत्तमेव स्वरूपधारणं तदपेक्षयादुर्बलत्वादिति द्रष्टव्यं ईश्वरस्य सर्वात्मत्वे हेत्वन्तरमाह किञ्चेति रसात्मकसोमरूपतापत्तावपि कथमौषधीरीश्वरः सर्वाः पुष्णातीत्याशंक्याह सर्वेति १३ भगवतः सर्वात्मत्वे हेत्वन्तरमाह किञ्चेति अहमेवेत्य

### स्वामिकृतटीका

मदीयमेव जानीहि १२ किञ्च गामिति गां पृथ्वीमोजसा बलेनाधिष्ठायाहमेव चराचराणि भूतानि धारयामि अहमेव च रसमयः सोमो भूत्वा व्रीह्याद्या ओषधीः सर्वाः संवर्द्धयामि१३

### भाषा अनुवाद

और पृथिवीको अपने बलके द्वारा आश्रित करके मै चराचरात्मक सकल भूतोंको धारण करता हूं और अमृतात्मक चन्द्रस्वरूप हो वृक्ष आदि सम्पूर्ण शस्यको भी बढावता हूं १३

अहंवैश्वानरोभूत्वाप्राणिनांदेहमाश्रितः प्राणापानसमायुक्तःपचाम्यन्नंचतुर्व्विधं १४

## शाङ्करभाष्यं ।

नरःसन्प्राणिनांप्राणवतांदेहमाश्रितःप्रविष्टःप्राणापानसमायुक्तःप्राणापानाभ्यांसमायुक्तःसंयुक्तःपचामिपक्तिंकरोमि अन्नंचतुर्व्विधंचतुःप्रकारं अन्नमशनंभोज्यञ्च भक्ष्यञ्चोष्यंलेह्यञ्चभोक्तावैश्वानरोऽग्निर्भोज्यमन्नं सोमस्तदेतदुभयमग्नीषोमौसर्व्वमिति पश्यतोन्नदोषलेपोनभवति १४ किञ्च सर्वेति सर्वस्यप्राणिजातस्याहमात्मा

## आनन्दगिरिकृतटीका

हंशब्देनपरोलक्ष्यतेभूत्वापचामीति सम्बन्धः परस्यैवजाठरात्मनास्थितौश्रुतिं प्रमाणयति अयमिति वाह्यंभौममग्निंव्यावर्त्तयति योयमिति देहान्तरारम्भकत्वतीयंसूतंव्यवच्छिनत्ति येनेति जाठरात्मनापरःस्थितश्चेत्तस्यदेहाश्रितत्वंसिद्धमितिन पृथग्वक्तव्यमित्याशंक्यपुरुषविधंपुरुषेन्तःप्रतिष्ठितंवेदेतिश्रुतिमाश्रित्याह प्रविष्टइति परस्यजाठरात्मनोन्नपाकेसहकारिकारणमाह प्राणेति संयुक्तत्वंसंधुक्षितत्वं अन्नस्यचातुर्विध्यंप्रकटयति भोज्यमिति भोक्तरिवैश्वानरमिति दृष्टिर्भोज्येसोमदृष्टिरेवंभोक्तृभोज्यरूपंसर्व्वंजगदग्निसोमात्मनाभुक्तिकालेध्यायतोभोक्तुरन्नकृतोदोषोनेति प्रासंगिकंसफलंध्यानंदर्शयति भोक्तेति १४

## स्वामिकृतटीका

किञ्च अहमिति वैश्वानरोजाठराग्निर्भूत्वाप्राणिनांदेहस्यान्तःप्रविश्यप्राणापानाभ्याञ्चतदुद्दीपकाभ्यांसहितःप्राणिभिर्भुक्तंभक्ष्यंभोज्यंलेह्यंचोष्यंचेति चतुर्विधमन्नंपचामि तत्रयद्दन्तैरवखण्ड्यावखण्ड्यभक्ष्यतेअपूपादितद्भक्ष्यंयत्तुकेवलंजिह्वयाविलोड्यनिगीर्यतेपायसादितद्भोज्यंयज्जिह्वायांनिःक्षिप्यरसास्वादेनक्रमशोनिगीर्यतेद्रवीभूतंगुडादितल्लेह्यंयत्तुदंष्ट्राभिर्निष्पीड्यरसांशंनिगीर्य्यावशिष्टंत्यजतिइक्षुदण्डादितच्चोष्यमितिचतुर्विधस्यभेदः १४ किञ्च सर्वस्येति सर्वस्यप्राणिजातस्यहृदिसम्यगन्तर्यामी

## भाषाअनुवाद

औरमैंहीवैश्वानरनाम जठराग्निस्वरूपहोके प्राणियोंकीशरीरके मध्यमेंप्रवेशकरके प्राणअपानवायुकेसाथहो जीवोंकाभुक्तजोभक्ष्यभोज्यलेह्य चोष्यचतुर्विधअन्न तिसकोपरिपाककरताहूं भक्ष्यवहहै जोदांतोंसेपीसकरखायाजाय दालभातचर्वनवगैरःऔरभोज्यजोजिह्वाकेद्वारेसेनिगलाजाय खीरहलुआआदि औरलेह्यवहहै द्रवरूपआस्वादनपूर्वकपानकियाजाय सहतदुग्धआदि औचोष्यकहे जोचूसकरघूंटलियाजाय ऊखवगैरःयहचारप्रकारअन्नकीजानो १४

सर्वस्यचाहंहृदिसन्निविष्टो मत्तःस्मृतिर्ज्ञानमपोहनञ्च वेदैश्चसर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेवचाहं १५

## शाङ्करभाष्यं

सन्हृदिबुद्धौसन्निविष्टोऽतोमत्तः आत्मनः सर्वप्राणिनांस्मृतिर्ज्ञानञ्चतदपोहनञ्चये पांपुण्यकर्मिणाञ्चपुण्यकर्मानुरोधेन ज्ञानस्मृतीभवतस्तथापापकर्मिणांपापकर्मानु रूपेणस्मृतिज्ञानयोरपोहनञ्चअपोहनमपगमनञ्च वेदैश्चसर्वैरहमेवचपरमात्मावे द्योवेदितव्यः वेदान्तकृत्वेदान्तार्थसम्प्रदायकृदित्यर्थ. वेदविद्वेदार्थविदेवचाहं १५

## आनन्दगिरिकृतटीका

इतश्चसर्वात्मत्वेनसर्वव्यवहारास्पदत्वमीश्वरस्येत्याह किञ्चेति प्राणिजातंब्र ह्मादिपुत्तिकान्तमात्मतयाबुद्धौसन्निविष्टत्वंतद्गुणदोपाणामशेषेणद्रष्टृत्वमतोबुद्धिम ध्यस्थगुणदोपद्रष्टृत्वादिति यावत् मत्तःसर्वकर्माध्यक्षाज्जगदयन्त्वस्मृतेधारादित्यर्थः प्राणिनांस्मृतिज्ञानयोस्तदपायस्यचभगवदधीनत्वेभगवतोवैपम्यंस्यादित्यशंक्याह ये पामिति स्मृतिर्जन्मान्तरादावनुभूतस्यपरामर्शःदेशकालस्वभावविप्रकृष्टस्यापिज्ञानम नुभवःधर्माधर्माभ्यांविचित्रकार्यंकुर्वतोनेश्वरस्यवैपम्यमिति भावः वेदवेद्यंपरंब्रह्म भगतोन्यदिति शङ्कांवारयति वेदैरिति वेदात्मनांपौरुपेयत्वंपरिहरति वेदेति तद र्थसम्प्रदायप्रवर्त्तकत्वार्थं तदर्थयाथातथ्यज्ञानवत्त्वमाह वेदार्थेति १५

## स्वामिकृतटीका

स्वरूपेणप्रविष्टोऽहमतश्चमत्तएवहेतो.प्राणिमात्रस्यपूर्वानुभूतार्थविपयास्मृति र्भवति ज्ञानञ्चविपयेन्द्रियसंयोगजंभवति अपोहनञ्चतयोःप्रमोषोभवतिवेदैश्चसर्वैस्तत्तदेव तारूपेणाहमेववेद्यःवेदान्तकृत् तत्सम्प्रदायप्रवर्त्तकोज्ञानदोगुरुरहमित्यर्थः वेदवि देवचवेदार्थविदप्यहमेव १५ इदानींतद्धामपरमंममेति यदुक्तंस्वकीयसर्वोत्तमत्वं

## भाषा अनुवाद

औरमैहीयावतप्राणीकेहृदयमे अन्तर्यामीरूपसेप्रवेशकरताहूं इसीसेसवप्रा णीयोंकोपूर्वकृतअर्थविपयकास्मरणहोताहै औरइन्द्रियोंकेसंयोगसेजोरूपादिविष योंकाज्ञानसोहमीसेहोताहै औरअपोहनकहेस्मरण औविपयोंकाज्ञानइनदोनो काअभावभीहमसेहीहोयहै और वेदोंमेकहेजुयेतौनतौनदेवतारूपभीहमहैं औरवेदान्तकृतअर्थात् शिष्यप्रशिष्यरूपसे सम्प्रदायकेप्रवर्त्तककहेज्ञानदातागुरु रूपभीमैहौं औवेदार्थवित्भीमैहीहूं१५ अवतद्धामपरमंममयहजोइसअध्याय

द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच क्षरःसर्व्वाणिभूतानिकूटस्थोक्षरउच्यते १६

## साङ्करभाष्यं

भगवतईश्वरस्यनारायणाख्यस्यविभूतिसंक्षेपउक्तोविशिष्टोपाधिकृतःयदादित्य गतंतेजइत्यादिनातथाधुनातस्यैवक्षराक्षरोपाधिप्रविभक्ततयानिरुपाधिकस्य केवल स्यस्वरूपनिर्दिधारयिषयोत्तरस्लोकाआरभ्यन्तेतत्रसर्वमेवातीतानागतानन्तराध्याया र्थजातंत्रिधाराशीकृत्याह द्वाविमाविति द्वाविमौपृथग्राशीकृतौपुरुषौइत्युच्यते लो केसंसारेक्षरश्चक्षरतीति क्षरःविनाशीकोराशिरपरः पुरुषोऽक्षरस्तद्विपरीतोभ गवतोमायाशक्तिःक्षराख्यस्य पुरुषस्योत्पत्तिबीजमनेकसंसारिजन्तुकामकर्म्मादिसं स्काराश्रयोऽक्षरःपुरुषउच्यते कौतौपुरुषावित्याह स्वयमेवभगवान्क्षरंसर्व्वाणिभू तानिसमस्तंविकारजातमित्यर्थःकूटस्थःकूटोराशिरिवस्थितःअथवा कूटमायावञ्चना जिह्मंकुटिलतावेतिपर्य्यायाःअनेकमायावञ्चनादिप्रकारेणस्थितःकूटस्थः संसारबी जानन्तान्नक्षरतीत्यक्षरउच्यते १६ आभ्यांक्षराक्षराभ्यांविलक्षणःक्षराक्षरोपा

## आनन्दगिरिकृतटीका

उत्तरस्लोकानांतात्पर्यंवक्तुंवृत्तंकीर्त्तयति भगवतइतिविशिष्टोपाधिरादित्यादिः संप्रत्यध्यायसमाप्तेरुत्तरसन्दर्भस्यतात्पर्यमाह अथेति नकेवलंनिरुपाधिकात्मस्वरू पंनिर्द्धारणायोत्तरग्रन्थःकिन्तुसर्व्वस्यैव गीताशास्त्रस्य अर्थनिर्णयार्थमित्याह तत्रेति क्षराक्षरोपाधिभ्यांपरमात्मनाचराशित्रयमुक्तंनसर्व्वात्मत्वेनाशुद्ध्यादिदोषप्रसक्तावुक्तं द्वाविमौइति पुरुषोपाधित्वात्पुरुषत्वंनसाक्षादिति विवक्षित्वाह पुरुषाविति परपु रुषंव्यावर्त्तयति भगवतइति तत्रकार्यलिङ्गकमनुमानंसूचयति क्षराख्यस्येति मा याशक्तिविनाभोक्तृणांकर्मादिसंस्कारादेवोक्तकार्योत्पत्तिरित्याशंक्य तस्यनिमित्तत्वे पिमायाशक्तिरुपादानमितिमत्वाह अनेकेति कामकर्मादीत्यादिशब्देनज्ञानंगृह्यते प्रकृतिंपुरुषंचैवेतिप्रकृतयोरिहग्रहणमिति शंकामाकांक्षाद्वारानिवारयति कौतावि

## भाषाअनुवाद

केसप्तमस्लोकमेकहा अपनासर्वोत्तमत्व सोतीनस्लोकसेदेखातेहैं किजोक्षरऔअक्ष रस्वरूपदुइपुरुषलोकमेप्रसिद्धहैंइनकाविशेष यहहै किब्रह्माआदिस्थावरपर्यन्त जोदेहधारीतिनकानामक्षरपुरुष क्योंकिअविवेकियोंकोस्थूलशरीरसेपुरुषत्वप्रसिद्ध है औकूटस्थकहेशिलाराशिपर्वतकेसमानदेहनाशसमयेभीनिर्विकाररूपस्थितिकरै ऐसाजोचैतन्यस्वरूपभोक्ताहै देखोविवेकीजनोकेविचारसेसोईअक्षरपुरुषहै १६

उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः १७

## शाङ्करभाष्यं

भिद्वयदोषेणास्पृष्टोनित्यशुद्धबुद्धमुक्तस्वभावः उत्तमइति उत्तमःउत्कृष्टतमःपुरुषस्त्व
न्यःअत्यन्तविलक्षणःआभ्यां परमात्मेति परमश्चासौदेहाद्यविद्याकृतात्मभ्यःअन्नम
यादिभ्यःपञ्चकोशेभ्यःआत्माचसर्वभूतानांप्रत्यक्चेतनइत्यतःपरमात्मेत्युदाहृतः उ
क्तोवेदान्तेषु सएवविशिष्यते योलोकत्रयंभूर्भुवःस्वराख्यं स्वकीययाचैतन्यबलशक्त्या
विश्यबिभर्त्तिस्वरूपसद्भावमात्रेण बिभर्त्तिधारयत्यव्ययोनव्ययोविद्यतइत्यव्ययईश्वरः
सर्वज्ञोनारायणाख्यईशनशीलःयथाव्याख्यातश्चेश्वरस्सपुरुषोत्तमइत्येतन्नामप्रसिद्धं१७

## आनन्दगिरिकृतटीका।

तिं कूटशब्दार्थमुक्त्वातेनस्थितस्यकूटस्थतेतिसपिण्डितमर्थमाह अनेकेतितस्यकथम
क्षरत्वंविनाब्रह्मज्ञानमनाशादित्याह संसारेति १६ कार्य्यकारणाख्यौराशीदर्श
यित्वाराश्यन्तरंदर्शयति आभ्यामिति वैलक्षण्यफलमाह क्षरेति उपाधिद्वयकृतगु
णदोषास्पर्शेफलितमाह नित्येतिआभ्यांक्षराक्षराभ्यामिति यावत् उत्तमोन्यइति
पदद्वयं वस्तुतःसर्वार्थंक्षराक्षरात्मत्वाभावद्योतनार्थं जडवर्गस्यान्यत्वकृतंस्वातन्त्र्यं निर
स्यति सएवेति लोकत्रयमित्युपलक्षणंसर्वं जगदपिविवक्षितञ्चैतन्यमेव बलंतत्र श
क्तिर्मायातयेतियावत् जगद्धारणे परस्यव्यापारान्तरं वारयति स्वरूपेतिनचास्यान्यो
धारयितास्वतोचलत्वादित्याह अव्ययइति संयुक्तमेतत्क्षरमक्षरञ्चव्यक्ताव्यक्तंभरते

## स्वामिकृतटीका।

तत्दर्शयति द्वाविति त्रिभिः क्षरश्चाक्षरश्चेति द्वाविमौपुरुषौलोकेप्रसिद्धौ तावेवाह
तत्रक्षरःपुरुषोनामसर्वाणिभूतानिब्रह्मादिस्थावरान्तानिशरीराणिअविवेकिलोकस्य
शरीरेष्वेवपुरुषत्वप्रसिद्धेः कूटोराशिःशिलाराशिःपर्वतइवदेहेष्वपिनश्यत्स्वपिनिर्वि
कारतयातिष्ठतीति कूटस्थश्चेतनोभोक्तासत्वक्षरःपुरुषउच्यतेविवेकिभिः १६

## भाषाअनुवाद

जिसहेतुक्षरऔअक्षरदोनोपुरुषलक्षितभयेहैं इससेजोउत्तमपुरुषसोइनदोनो
सेभिन्नहै उसकीविलक्षणताकहतेहैं किसोपरमात्मास्वरूपहै यहश्रुतियोंमेकहा
है औरआत्माअचेतनरूपक्षरसे तथापरमात्माअक्षररूपभोक्तासेभीभिन्नहैं अब
उनकापरमात्मत्वदेखावतेहैं किसोईश्वरपदवाच्यनियन्ताऔअव्ययकहेनिर्विकार
स्वरूपहोकेभीत्रैलोक्यकेहृदयमेंप्रवेशकरि प्राणीमात्रकाप्रतिपालनकरतेहैं १७

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥ १८॥

## शाङ्करभाष्य

यथानामनिर्वचनप्रसिद्धार्थवत्त्वेनात्मनो दर्शयन्निरतिशयोऽहमीश्वर इत्यात्मानं दर्शयति भगवान् यस्मादिति यस्मात् क्षरमतीतोऽहं संसारमायावृक्षमतिक्रान्तोऽहमक्षरादपि संसारवृक्षबीजभूतादपि चोत्तम उत्कृष्टतम ऊर्ध्वतमो वा अतः क्षराक्षराभ्यामुत्तमत्वादस्मि भवामि लोके वेदे च प्रथितः प्रख्यातः पुरुषोत्तम इत्येवं मां भक्तजना विदुः कवयः काव्यादिषु च पुरुषोत्तम इत्यनेनाभिधानेनाभिगृणन्ति॥ १८॥ अथेदानीं यथानिरुक्तमात्मानं यो वेद तस्येदं फलमुच्यते यो मामिति। यो मामीश्वरं यथोक्तविशेषणमेवं य

## आनन्दगिरिकृतटीका

विश्वमीश इति श्रुत्यर्थं गृहीत्वाह ईश्वर इति किञ्च लोकवेदयोर्भगवतो नामप्रसिद्धत्वात् सिद्धमप्रपञ्चत्वमित्याह यथेति॥ १७॥ अश्वकर्णादिवद्यथानाम्नारूढत्वादर्थविशेषाभावाद्भगवतोऽपि लौकिकेश्वरवदीश्वरत्वं सातिशयमिति नेत्याह तथेति यस्मादित्यस्यापेक्षितं निक्षिपति अत इति उत्तमः पुरुष इति वाक्यशेषः॥ १८॥ आत्मनोऽप्रपञ्चत्वं ज्ञानफलो

## स्वामिकृतटीका।

यदर्थमेतौ लक्षितौ तदाह उत्तम इति एताभ्यां क्षराक्षराभ्यामन्यो विलक्षणस्तूत्तमः पुरुषः वैलक्षण्यमेवाह परमश्चासावात्मा चेति उदाहृत उक्तः श्रुतिभिः आत्मत्वेन क्षरादचेतनाद्विलक्षणः परमत्वेनाक्षराद्भोक्तुर्विलक्षण इत्यर्थः परमात्मत्वमेव दर्शयति यो लोकत्रयमिति य ईश्वर ईशनशीलः अव्ययश्च निर्विकार एव सन् लोकत्रयहृदयमाविश्य बिभर्ति पालयति॥ १७॥ एवंभूतं पुरुषोत्तमत्वमात्मनो नामनिर्वचनेन दर्शयति यस्मादिति यस्मात् क्षरं जडवर्गमतिक्रान्तोऽहं नित्यमुक्तत्वादक्षराच्चेतनवर्गादप्युत्तमश्च नियन्तृत्वादतो लोके वेदे च पुरुषोत्तम इति प्रथितः प्रख्यातोऽस्मि तथा च श्रुतिः स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वमिदं प्रशास्तीत्यादि॥ १८॥ एवंभूतेश्वरज्ञातुः फलमाह

## भाषा अनुवाद

एवम्भूत पुरुषोत्तमत्व अपना नाम कहनेसे देखावते हैं कि जिसहेतु हम क्षर जो जड समूह तिनको अतिक्रमण करते औ नियन्ता रूप चेतन जो अक्षर उससे भी उत्तम हैं इससे सकल लोक औ वेदमें हम पुरुषोत्तम नामसे प्रसिद्ध हैं सोई श्रुति कहती हैं कि सोई जो पुरुषोत्तम वे आत्मा औ तीनों लोकके वशकरनेवाले औ तीन लोकके ईश्वर सबके शासनकर्त्ता हैं यह भगवानने कहा॥ १८॥ ऐसे ईश्वरका जाननेहारा ज्ञानी पुरुषको

योमामेवमसम्मूढोजानातिपुरुषोत्तमं ससर्वविद्भजतिमांसर्वभावेनभारत १९

शाङ्करभाष्यम्।

योक्तेनप्रकारेणासंमूढःसंमोहवर्ज्जितःसन्जानात्ययमहमस्मीति पुरुषोत्तमं ससर्व वित्सर्वात्मनासर्वंवेत्तीतिसर्वज्ञः सर्वभूतस्थं भजति मांसर्व भावेन सर्वात्मचिन्तया हेभारत १९ अस्मिन्नध्याये भगवत्तत्वज्ञानंमोक्षफलमुक्त्वाऽथेदानींतत्स्तौति इतिगुह्यतममिति इत्येतत्गुह्यतमंगोप्यतमंअत्यन्तंरहस्यमित्येतत्किन्तच्छास्त्रं य द्यपिगीताख्यंसमस्तंशास्त्रमुच्यतेतथाप्ययमेवाध्यायःइहशास्त्रमित्युच्यतेस्तुत्यर्थं प्रक रणात्सर्वोहिगीताशास्त्रार्थोस्मिन्नध्यायेसमासेनोक्तोर्नकेवलंसर्वश्चवेदार्थइह परिस माप्तोयस्तंवेदसवेदवित्वेदैश्चसर्वैरहमेववेद्यइति योक्तमिदमुक्तं कथितंमया हेअ नघएतच्छास्त्रंयथादर्शितार्थंबुद्ध्वाबुद्धिमान्स्याद्भवेत्नान्यथाकृतकृत्यश्चभारत कृतंकृत्यं कर्त्तव्यंयेनसकृतकृत्यःविशिष्टजन्मप्रसूतेनब्राह्मणेनयत्कर्त्तव्यंततसर्वंभगवत्तत्त्वेविदि तेकृतंभवेदित्यर्थः नचान्यथाकर्तव्यंपरिसमाप्यतेकस्यचिदित्यभिप्रायः सर्वं कर्माखि लंपार्थज्ञानेपरिसमाप्यते इतिचोक्तं एतद्धिजन्मसामर्थ्यंब्राह्मणस्यविशेषतः प्राप्यैतत् कृतकृत्योहिद्विजोभवतिनान्यथा इतिच मानवंवचनं यतएतत्परमार्थतत्त्वमतःश्रुत वानसि अतः कृतार्थस्त्वंभारतेति २० इति शाङ्करभाष्येपञ्चदशोध्यायः १५

आनन्दगिरिकृतटीका।

तयास्तौति अथेति यथोक्तविशेषणंसर्वात्मत्वादिविशेषणोपेतमिति यावत्चराचरा तोनत्वं यथोक्तप्रकारःसंमोहवर्जितःसंमोहेनदेहादिष्वात्मात्मीयत्वबुद्ध्यारहितइत्यर्थः भगवन्तंजानतःसर्वविच्वंतस्यैवसर्वात्मनामेयत्वादित्याह ससर्वविदिति सर्वात्मनिमय्ये वासक्तचित्तेनेत्यर्थः १९ अध्यायार्थमनूद्योपसंहारश्लोकमवतारयति अस्मिन्निति सर्वस्यांगीतायांशास्त्रशब्देवक्तव्येकथमस्मिन्नध्यायेतत्प्रयोगःस्यादित्याशंक्याह यद्यपी

स्वामिकृतटीका

यइति एवंनियुक्तप्रकारेणासम्मूढोनिश्चितमतिःसन्योमांपुरुषोत्तमंजानाति ससर्व भावेनसर्व्वप्रकारेणमामेवभजति ततश्चसर्वज्ञोभवति १९ अध्यायार्थमुपसंहरति

भाषाअनुवाद

ज्ञानकाफलकहतेहैं किहेभारतअर्जुन इसतरहपूर्वोक्तनिश्चितप्रकारसेअसंमूढक हेनिश्चितमतिहोकेजोपुरुषोत्तमस्वरूपहमकोजानिशकैहै सोईमनुष्यसर्व्वकप्रका रसेहमकोभजैहै तिसके अनन्तरसर्वज्ञहोताहै हयजानो १९ अब अध्यायकेअर्थ

इतिगुह्यतमंशास्त्रमिदमुक्तंमयाऽनघ एतद्बुद्ध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारत २०

इतिश्रीमद्भारतेशतसाहस्र्यांसंहितायांवैयासिक्यांभीष्मपर्वणि श्रीभगवद्गीतासूपनिषत्सुयोगशास्त्रेश्रीकृष्णार्जुनसम्वादेपुरुषोत्तमयोगोनामपञ्चदशोध्याय:१५

## आनन्दगिरिकृतटीका

ति सन्निहितमध्यायंस्तोतुमपिकृतस्त्रशास्त्रशब्दस्तदर्थाभावात्तत्राह सर्वामीति गीताशास्त्रार्थस्यसर्वस्यात्रसंक्षिप्तत्वादेवकेवलंशास्त्रशब्दोनभवतिकिन्तुवेदार्थस्यापि सर्वस्यात्रसमाप्तेर्युक्तंशास्त्रपदमित्याह नेति तत्रगमकमाह यस्मिन्निति भगवत्तत्त्वज्ञाने कृतकृत्यतेत्य तदुपपादयति विशिष्टेति नान्यथेत्युक्तंप्रपञ्चयति नचेति सत्यमितत्त्वज्ञानेकर्मणांकर्त्तव्यत्वान्नकर्तव्यसमाप्तिरित्याशंक्याह सर्वमिति तत्त्वज्ञानेकृतार्थतेति तत्रमनोरपिसम्मतिमाह एतद्धीति भारतेतिसम्बोधनतात्पर्यमाह यतइति तदनेनात्मनादेहाद्यतिरिक्तत्वंचिद्रूपत्वं सर्वात्मत्वं कार्यकारणविनिर्मुक्तत्वेनाप्रपञ्चत्वं तस्याखण्डैकरसब्रह्मतत्त्वज्ञानादशेषपुरुषार्थपरिसमाप्तिरित्युक्तं २० इतिसमाप्तं

## स्वामिकृतटीका

इतीति इत्यनेनसंक्षेपप्रकारेणगुह्यतममतिरहस्यंसंपूर्णंशास्त्रमेवमयोक्तं नतु पुनर्विंशतिश्लोकमध्यायमात्रंहेअनघ व्यसनशून्य अतएव तन्मदुक्तंबुद्ध्वाबुद्धिमानसम्यक्ज्ञानीस्यात्कृतकृत्यश्चस्यात्योऽपिकोपिहेभारत त्वंकृतकृत्योऽसीति किंवक्तव्यमिति भावः संसारशाखिनंभित्त्वास्पष्टंपञ्चदशेविभुः पुरुषोत्तमयोगाख्यं परंपदसुमादिशत् २० इति श्रीधरस्वामिकृतटीकायां पञ्चदशोऽध्यायः १५

## भाषाअनुवाद

काउपसंहारकरतेहैं किहेअनघनिःपापअर्जुन यहसंक्षेपसे अतिरहस्यस्वरूपजोसंपूर्णशास्त्रोंकासारांशसोमैनेकहाकेवलबीशश्लोकयुक्तएकअध्यायछोडकेइससेजोकोईहोययहमेरीकहीवाक्यकोबोधकरिके बुद्धिमानकहावताऔज्ञानीहोचरितार्थकृतार्थहोताहै तोहेभरत श्रीअर्जुन तुमजोचरितार्थहोउगेइसमेऔरकुछकहनावाकीहै सर्वत्रपरिपूर्णपरमात्मारूप श्रीकृष्णजीसंसारवृक्षकोभिन्नकरके पुरुषोत्तमयोगनाम इसपंद्रहेंअध्यायमे अपनापरमपद अर्जुनको उपदेशकियाहै २०

इति श्रीजगन्नाथसुकुलविरचितमनभावनीटीकायां पञ्चदशोध्यायः १५

## षोडश अध्यायः

श्रीभगवानुवाच अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवं १

### शाङ्करभाष्य

दैव्यासुरी राक्षसीचेति प्राणिनां प्रकृतयोनवमेध्यायेसूचितास्तासां विस्तारप्रदर्शनायाभयं सत्त्वसंशुद्धिरित्यादिरध्याय आरभ्यते तत्र संसारमोक्षाय दैवी प्रकृतिर्निबन्धनायासुरी राक्षसी चेति दैव्या आदानाय प्रदर्शनं क्रियते इतरयोः परिवर्जनाय श्रीभगवानुवाच अभयमिति अभयमभीरुतासत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य संव्यवहारेषु परवञ्चनमायानृतादिपरिवर्जनं शुद्धभावेन व्यवहार इत्यर्थः ज्ञानयोगव्यवस्थितिः ज्ञानं शास्त्रत आचार्यतश्चात्मादिपदार्थानामवगमोऽवगतानामिन्द्रियाद्युपसंहारेणैकाग्रतया स्वात्मसम्वेद्यतापादनं योगस्तयोर्ज्ञानयोगयोर्व्यवस्थितिः व्यवस्थानं तन्निष्ठता एषा प्रधाना दैवी सात्त्विकी संपत् यत्र यचयेषामधिकृतानां याप्रकृतिः सम्भवति सात्त्विकी सोच्यते दानं यथाशक्तिसम्विभागोन्नादीनां दमश्च बाह्यकरणानांउपशमो

### भाषा अनुवाद

अब इस अध्यायका तात्पर्य कहते हैं कि आसुरी सम्पत् त्यागकरके दैवीसम्पत्के आश्रय लेनेवाले मनुष्य मुक्त होते हैं इसीकी निर्णय करनेके अर्थ सोरहें अध्यायमें उसका विस्तार करते हैं कि हे अर्जुन सकल शास्त्रके अनुरूपमें रेकहेउ ये इस वृत्तान्तके जाननेसे लोग सम्यक ज्ञानी औ कृतार्थ होते हैं यह भगवानने पन्द्रहें अध्यायके अन्तमें कहा है तो कौन मनुष्य वह तत्त्व समझ सकते हैं और कौन नहीं इस अपेक्षापर तत्त्वज्ञानके अधिकारी औ अनधिकारीकी निर्णय करनेके लिये सोरहें अध्यायका आरम्भ होता है क्योंकि जिसमें जिसका अधिकार है वह उसीसे पूरा परता है इससे अब तत्त्वके अधिकारीपुरुषकागुणस्वरूपसम्पूर्ण औ दैवीसंपतको इस श्लोकसे ले तीन श्लोकसे कहते हैं कि अभय औ सत्त्वसंशुद्धि कहे बुद्धिकी प्रसन्नता औ ज्ञानयोग जो आत्मज्ञानकी उपायमें व्यवस्थिति कहे परिनिष्ठा औ दान कहे अपने भोजनकी वस्तु अन्न आदिका भी यथाउचित देना तथा दम अर्थात् बाह्यइन्द्रियोंका संयम करना औ यज्ञ कहे यथाविधिसे दर्शपौर्णमास आदि याग करना औ स्वाध्याय कहे ब्रह्मयज्ञ औ तप जो सत्रहें अध्यायके चौदहें श्लोकमें कहेंगे देव द्विज गुरु पण्डित ज्ञानीका पूजन तथा शौच सीधापनको मसाता ब्रह्मचर्य अहिंसा इनको शारीरतप कहते हैं सो औ आर्यव कहे सीधास्वभाव १

## शाङ्करभाष्यं

ऽन्तःकरणस्योपशमं शान्तिं वक्ष्यति । यज्ञश्च श्रौतोऽग्निहोत्रादिः स्मार्तश्च देवयज्ञादिः स्वाध्यायऋग्वेदाद्यध्ययनमदृष्टार्थं तपो वक्ष्यमाणं शारीरादि आर्जवमृजुत्वं सर्वदा ॥ १ ॥

किञ्च अहिंसेति । अहिंसा अहिंसनं प्राणिनां पीडावर्जनं सत्यमप्रियानृतवर्ज

## आनन्दगिरिकृतटीका

व्यवहितेन सम्बन्धं वदन्नध्यायान्तरमवतारयति दैवीति दैवीमुचितां राक्षसीमासुरीञ्चैव प्रकृतिं मोहिनीमित्यादावितिशेषः प्रकृतीनां विस्तरेण दर्शनं कृतमपयोगीत्याशङ्क्य विभजेशम्ययोगमाह संसारेति अतीते चाध्याये कर्मानुबन्धीन्यधश्च मूलान्यनुसन्ततानीत्यत्र कर्मव्यंग्या वासनाः संसारस्यावान्तरमूलत्वेनोक्तास्ता मनुष्यदेहे प्राग्भावीयकर्मानुसारेणाव्यज्यमानाः सात्त्विकादिभेदेन दैव्यादिप्रकृतित्रयत्वेन विभक्ता अविस्तीर्षुर्भगवानुक्तवानित्याह भगवानिति अभीरुता शास्त्रोपदिष्टेऽर्थे सन्देहं हित्वानुष्ठाननिष्ठत्वं परवञ्चनापरस्य व्याजेन वशीकरणं माया हृदयेऽन्यथा कृत्वा बहिरन्यथा व्यवहरणं अनृतमयथादृष्टं कथनमादिपदेन विप्रलम्भविभ्रमादिग्रहः उक्तमर्थं संक्षिप्याह शुद्धेति एषेत्यभयाद्यज्ञानादिष्वित्यन्ता विधोक्तेति यावत् तामेव सात्त्विकीं प्रकृतिं प्रकटयति यदेति ज्ञानेकर्मणि वाधिकृतानामभीरुताद्या या प्रकृतिः सा तेषां स्वसात्त्विकी सम्पदित्यर्थः महाभाग्यानामत्युत्तमा दैवीसम्पदुक्ता सम्प्रति सर्वेषां यथासम्भवं सम्पदं व्यपदिशति दानमिति बाह्यकरणविशेषणेकारणमाह अन्तःकरणस्येति देवयज्ञादिरित्यादिशब्देन पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति त्रयमुक्तं ॥ १ ॥ ब्रह्मयज्ञस्स्वाध्याये

## स्वामिकृतटीका ।

आसुरीं सम्पदं त्यक्त्वा दैवीमेवाश्रिता नराः मुच्यन्त इति निर्णेतुं तद्विवेकोऽयं षोडशे पूर्वाध्यायान्ते एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारतेत्युक्तं तत्र कएतत्तत्त्वं बुध्यते को वा न बुध्यत इत्यपेक्षायां तत्त्वज्ञानेऽधिकारिणोऽनधिकारिणश्च विवेकार्थं षोडशाध्यायस्यारम्भः निरूपिते हि कार्यार्थे चाधिकारिजिज्ञासा भवति तदुक्तं भट्टैः भारो यो येन वोढव्यः स प्रागान्दोलितो यदा तदा कस्तस्य वोढेति शक्यं कर्तुं निरूपणमिति । तत्राधिकारिविशेषणभूतां दैवीं सम्पदमाह अभयमिति त्रिभिः । अभयं भयाभावः सत्त्वस्य चित्तस्य संशुद्धिः सुप्रसन्नता ज्ञानयोगे आत्मज्ञानोपाये व्यवस्थितिः परिनिष्ठा दानं स्वभोज्यस्यान्नादेर्यथोचितसंविभागः दमो बाह्येन्द्रियसंयमः यज्ञो यथाधिकारं दर्शपौर्णमासादिः स्वाध्यायो ब्रह्मयज्ञादिः तपउत्तराध्याये वक्ष्यमाणं शारीरादि आर्जवमवक्रता ॥ १ ॥

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनं दयाभूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलं २

शाङ्करभाष्यं।

सत्यंयथाभूतार्थवचनं अक्रोधः परैराक्रुष्टस्याभिहतस्य वा प्राप्तस्य क्रोधस्योपशमनं त्यागः संन्यासः पूर्वं दानस्योक्तत्वात् शान्तिरन्तःकरणस्योपशमः अपैशुनमपिशुनता परस्मै पररन्ध्रप्रकटीकरणं पैशुनं तदभावोऽपैशुनं दया भूतेषु दुःखितेषु अलोलुप्त्वमिन्द्रियाणां विषयसन्निधावविक्रिया मार्दवं मृदुता अक्रौर्यं ह्रीर्लज्जा अचापलमसति प्रयोजने वाक्पाणिपादादीनामव्यापारयितृत्वं॥२॥

किञ्च तेजइति तेजः प्रागल्भ्यं नत्वक्गतादीप्तिः क्षमा आक्रुष्टस्य ताडितस्य वान्तर्विक्रियानुत्पत्तिः उत्पन्नायां विक्रियायां प्रशमनमक्रोध इत्यवोचाम इत्थं क्षमायाअक्रोधस्य च विशेषः धृतिर्देहेन्द्रियेष्ववसादं प्राप्तेषु तस्य प्रतिषेधकोऽन्तःकरणवृत्तिविशेषो येनोत्तम्भितानि करणानि देहश्च नावसीदन्ति शौचं द्विविधं मृज्जलाभ्यां कृतं बाह्यमाभ्यन्तरञ्च मनोबुद्ध्योर्नैर्मल्यं मायारागादिकालुष्याभावः एवं द्विविधं शौचं अद्रोहः परजिघांसाभा

आनन्दगिरिकृतटीका।

नष्टयक्करणाद्देवीं सम्पदमभिजातस्य विशेषणान्तराणि दर्शयति किञ्चेति त्यागशब्देन यागदानं कस्मान्नोच्यते तत्राह पूर्वमिति लज्जाकार्यं निवृत्तिहेतुगर्हानिमित्तामनोवृत्तिः २ दैवीमसम्पदं प्राप्तस्य विशेषणान्तराण्यपि सन्तीत्याह किञ्चेति व्या

स्वामिकृतटीका

किञ्च अहिंसेति अहिंसा परपीडावर्जनं सत्यं यथादृष्टार्थभाषणं अक्रोधस्ताडितस्यापि चित्ते क्रोधानुत्पत्तिः त्यागः औदार्यं शान्तिश्चित्तोपरतिः पैशुनं परोक्षे परदोषप्रकाशनं तद्वर्जनमपैशुनं भूतेषु दीनेषु दया अलोलुपत्वं लोभाभावः अलुप्त्वं लोपत्वाप मार्दवं मृदुत्वं अक्रूरता ह्रीः कार्याप्रवृत्तौ लोकलज्जा अचापलं व्यर्थक्रियाराहित्यं २

भाषाअनुवाद

अहिंसा कहे परपीड़ाका त्याग औ सत्य अर्थात् देखासुना ज्योंका त्योंकहना औ अक्रोध कहे कोई मारै या कुवाच्य कहै तौभी चित्तक्रोधवश न होने देना तथा त्याग कहे प्रिय अप्रियमें उदासीनता औ शान्ति अर्थात् विषयोंसे चित्तकी निवृत्ति औ अपैशुन्य कहे पराविन्दा वर्जन पीठि पीछे निन्दा करनेको पैशुन्य कहते हैं औ दीन दरिद्रपर दया तथा अलोलुपत्व कहे निर्लोभता औ मार्दव कोमलता औ ह्री कहे कुकर्म करनेमें लोकलज्जित या अचापल अर्थात् वृथा बोलना या वृथा कुकर्म करना जो चञ्चलता है सो न होय २

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता भवन्ति सम्पदं दैवीमभिजातस्य भारत ३

## शाङ्करभाष्य

वोऽहिंसनं नातिमानितात्यर्थं मानोतिमानः स यस्य विद्यते सोऽतिमानी तद्भावोऽतिमानिता आत्मनः पूज्यतातिशयभावनाभाव इत्यर्थः भवन्त्यभयादीन्येतदन्तानि सम्पदमभिजातस्य किंविशिष्टां सम्पदं दैवीं देवानां सम्पदं तामभिलक्ष्य जातस्य दैवीविभूत्यर्हस्य भाविकल्याणस्येत्यर्थो हे भारत ३ अथेदानीमासुरी सम्पदुच्यते दम्भो धर्मध्वजित्वं दर्पो धनस्वजनादिनिमित्त उत्सेकोऽभिमानः पूर्वोक्तः क्रोधश्च पारुष्यमेव परुषवचनं यथा काणञ्चक्षुष्मान्विरूपं रूपवान् हीनाभिजनमुत्तमाभिजन इत्यादि अज्ञानञ्चाविवेकज्ञानं मिथ्याप्रज्ञानं कर्तव्याकर्तव्यादिमिथ्याप्रत्ययविषयं अभिजातस्य पार्थ किमभिजातस्येत्याह असुराणां सम्पदासुरी तामभिजातस्येत्यर्थः ४ अनयोः सम्पदोः कार्यमुच्यते

## आनन्दगिरिकृतटीका

वक्तारं कीर्तयति नेति अध्यात्माधिकारादिति शेषः क्षमाक्रोधयोरेकार्थत्वेन पौनरुक्त्यमाशङ्क्य परिहरति उत्पन्नायामिति तयोरेवं विशेषान्न पौनरुक्त्यं फलतीत्याह इत्थमिति वृत्तिविशेषमेव विशदयति येनेति शौचस्य द्वैविध्यमेव प्रकटयति मृज्जलेत्यादिना नैर्मल्यमेव स्फोरयति मायेति उक्तमुपसंहरति एवमिति अतिमानित्वभावमेव व्यनक्ति आत्मन इति कस्यैतानि विशेषणानीत्यपेक्षायामाह भवन्तीति साधकस्य मनुष्यदेहस्यैवकथं दैवीं सम्पदमभिलक्ष्य जातत्वमित्याशङ्क्याह दैवीमिति ३

## स्वामिकृतटीका

किञ्च तेज इति तेजः प्रागल्भ्यं क्षमा परिभवादिषूत्पद्यमानेषु क्रोधप्रतिबन्धः धृतिर्दुःखादिभिरवसादे चित्तस्य स्थिरीकरणं शौचं बाह्याभ्यन्तरशुद्धिः अद्रोहो जिघांसाराहित्यं अतिमानिता आत्मन्यति पूज्यत्वाभिमानस्तदभावो नातिमानिता एतान्यभयादीनि षड्विंशतिप्रकाराणि दैवीं सम्पदमभिजातस्य भवन्ति देवयोग्यां सात्त्विकीं सम्पदमभिलक्ष्य तदाभिमुख्येन जातस्य भाविकल्याणस्य पुंसो भवन्तीत्यर्थः ३

## भाषाअनुवाद

और तेज कहे ढिठाई और क्षमा और धृति कहे हानि तथा दुःखमें धीरज रखना और शौच अर्थात् बाहिर भीतर शुद्धता अद्रोह कहे हिंसा ईर्षारहित होना अतिमानिता कहे अपनी पूजा मान प्रशंसा का अभाव ये ई अभय आदि जो छब्बीस प्रकार की दैवी सम्पत् हैं सो उसी को होती हैं जिसको कल्याण भावी है अर्थात् आगे भला होनहार है ३

दम्भोदर्पोऽभिमानश्चक्रोधःपारुष्यमेवच अज्ञानंचाभिजातस्यपार्थसम्पदमासुरीं४

## शाङ्करभाष्यं

दैवीति दैवीसम्पत्या साविमोक्षायसंसारवन्धनात् नियन्धायनियतोवन्धोनिवन्धस्त दर्थमासुरीसम्पन्मताभिप्रेता तथाराक्षसीतवैवमुक्त सत्यर्जुनस्यान्तर्गतंभावं किमहमासुरसम्पत्युक्तःकिम्वादैवीसंपत्युक्त इत्येवमालोचनारूपमालक्ष्याह भगवान् माशुचःशोकंमाकार्षीः सम्पदंदैवीमभिजातोसि हेपाण्डव अभिलक्ष्यजातोसि भाविकल्याणस्त्वमसीत्यर्थः ५

## आनन्दगिरिकृतटीका

आदेयत्वेन दैवींसम्पदमुक्त्वा हेयत्वेनासुरींसम्पदमाह अथेति उत्सेकोमदो महद्वधीरणेहेतुः आत्मन्युत्कृष्टत्वाध्यारोपोतिमानःक्रोधस्तुकोपापरपर्य्यायः स्वपरापकारप्रकृतिहेतुर्नेत्रादिविकारलिङ्गोन्तःकरणवृत्तिविशेषः परुषोनिष्ठुरः प्रत्यक्षरूक्षवाक्तत्स्वभावःपारुष्यन्तदुदाहरति यथेति तामभिजातस्यदम्भादीन्यज्ञानान्तानि भवन्ति इत्यनुषज्यते ४ अनयोरिति कार्यफलविभागः आसुरीत्युपलक्षणं राक्षसी चेतिद्रष्टव्यमित्याह तथेति फलविभागेसम्पदोरेवमुक्ते प्रतीत्यार्जुनस्याभिप्रायं भगवतोवचनमित्याह तत्रेति तत्राभिजात्यंहेतुंकरोति पाण्डवेति ५

## स्वामिकृतटीका

आसुरींसम्पदमाह दम्भइति दम्भोधर्म्मध्वजित्वं दर्पोधनविद्यादिनिमित्त चित्तस्यौत्सुक्यं अभिमानोव्याख्यातएव क्रोधःप्रसिद्धः पारुष्यं निष्ठुरत्वं अज्ञानमविवेकः आसुरीमित्युपलक्षणं असुराणांराक्षसानाञ्च यासम्पत्तिस्तामभिलक्ष्य जातस्यैतानि दम्भादीनिभवन्ति ४ एतयोःसम्पदोःकार्य्यंदर्शयन्नाह दैवीति दैवीयासम्पत्तयायुक्तो मयोपदिष्टेतत्वज्ञानेऽधिकारीआसुर्य्यासम्पदायुक्तस्तुनित्य संसारीत्यर्थः एतच्छ्रुत्वा

## भाषा अनुवाद

अबआसुरीसम्पत्कहते हैं किदम्भकहे लोगोंकेसामने अपनी धार्म्मिकता प्रकाशकेहेतु मनभावतेकल्पितधर्मोंकी ध्वजादेखलाना औदर्पकहेधनउपार्जन तथाविद्याआदिमे चित्तकीउत्साहकहेउंचाई औअभिमानकहेअपनेहरतरहकेमहत्वसेदूसरेकोन कुछसमझना औक्रोधतथापारुष्यकठोरता निठरता औअज्ञान कहे अविवेक ये आसुरीकहेअसुरराक्षसोंकी जोसंपत् इनमेरुचिजिनकेहै वै असुरराक्षसहैं ४ अबइनदोनोंसंपदोंकेकामआचारदेखावतेहुयेकहतेहैं कि

दैवीसंपद्विमोक्षायनिबन्धायासुरीमता माशुचःसम्पदंदैवीमभिजातोसिपाण्डव ५

## शाङ्करभाष्यं।

द्वौभूतेति द्वौद्विःसंख्याकौभूतसर्गौ भूतानांमनुष्याणांसर्गौसृष्टिर्भूतसर्गौ सृजेतें इतिसर्गौ भूतान्येवसृज्यमानानिदैवासुरसम्पद्युक्तानि द्वौभूतसर्गाविल्युच्यते द्वयाह प्रजापत्यादेवाश्चासुराश्चेतिश्रुतेः लोकेस्मिन्संसारेइत्यर्थः सर्वेषांद्वैविध्योपपत्तेःक्वौ तौभूतसर्गौ इत्युच्यते प्रकृतावेवदैवआसुरएवच उक्तयोरेवपुनरनुवादप्रयोजनमा ह दैवोभूतसर्गोऽभयंसत्त्वसंशुद्धिरित्यादिना विस्तरशोविस्तरप्रकारैःप्रोक्तः कथि तोनत्वासुरोविस्तरशोऽतस्तत्परिवर्जनार्थमासुरं पार्थमे ममवचनादुच्यमानंविस्तर शः शृणु अवधारय ६ अध्यायपरिसमाप्तेरासुरीसम्पत् प्राणिविशेषणत्वेन

## आनन्दगिरिकृतटीका

निर्द्दिष्टानांराक्षसीसम्पत्तृतीयास्ति सांकस्मान्नोक्तेत्याशंक्यासुर्यामन्तर्भावादित्या ह द्वाविति भूतानांद्वैविध्येमानत्वेनोद्गीथब्राह्मणमुदाहरति द्वयाहेति सम्पत्द्वय युतेभ्योतिरिक्तानामपि प्राणिभेदानांसम्भवात् कुतोभूतानांद्वित्वनियतिरित्याशंक्या ह सर्वेषामिति ६ नन्वध्यायशेषेणासुरीसम्पद्दर्शनमयुक्तं तस्यास्त्याज्यत्वेनप्

## स्वामिकृतटीका

किमहमत्राधिकारीनवेतिसन्देहाद्व्याकुलमर्जुनमाश्वासयति हेभारत माशुचः शोकंमाकार्षीः यतस्त्वंदैवींसम्पदमभिजातोऽसि ५

असुरीसम्पत्सर्वात्मनावर्जयितव्येत्येतदर्थमासुरींसम्पदं प्रपञ्चयितुमाह द्वा विति द्वौद्विःप्रकारौभूतानांसर्गौमेवचनाच्छृणु आसुरराक्षसप्रकृत्योरेकीकरणे नद्वावित्युक्तं अतोराक्षसीमासुरींचैवप्रकृतिंमोहनींश्रिता इत्यादिना नवमाध्यायो क्तप्रकृतित्रैविध्येनाविरोधः स्पष्टमन्यत् ६ आसुरींविस्तरशोनिरूपयति प्रवृत्ति

## भाषाअनुवाद

दैवीसंपदसेयुक्तमनुष्यही मेरेकहेतत्त्वज्ञानके अधिकारीहैं औरजोमनुष्य आसुरी संपदसेयुक्तहैं तेसदाही संसारीहोतेहैं अवयेवचनभगवानके श्रवणकरके मैतत्त्व ज्ञानका अधिकारी हौंकिनहीं इससन्देहसेव्यग्रचित्तअर्जुनको समझावतेंहुयेभ गवानकहतेहैं कि हेपरन्तप तुमशोचनकरो क्योंकि तुमदैवीसम्पदकेअभिमुख जन्मेहौ औरदैवीसम्पदसंयुक्तहौ यहतुमारे आचरणोंसे प्रसिद्धहैदेखपडै ५

द्वौभूतसर्गौलोकेऽस्मिन्दैवआसुरएवच दैवोविस्तरशःप्रोक्तआसुरंपार्थमेशृणु ६
प्रवृत्तिञ्चनिवृत्तिञ्चजनानविदुरासुराः नशौचंनापिचाचारोनसत्यंतेषुविद्यते ७

## शाङ्करभाष्य।

प्रदर्श्यते प्रत्यक्षीकरणेनचशक्यते अस्याःपरिवर्जनंकर्त्तुमिति प्रवृत्तिमिति प्रवृत्तिञ्च प्रवर्त्तनं यस्मिन्पुरुषार्थसाधनेकर्त्तव्येप्रवृत्तिस्तांनिवृत्तिञ्च तद्विपरीतां यस्मादनर्थ हेतोर्निवर्त्तितव्यं सानिवृत्तिस्ताञ्चजनाआसुरानविदुःनजानन्ति नकेवलंप्रवृत्तिनि वृत्तीएवनविदुर्नशौचंनापिचाचारोनसत्यन्तेषु विद्यतअशौचानाचारमायाविनोऽनृत वादिनोह्यासुराः ७ किञ्च असत्येति असत्यं यथावयमनृतप्रायास्तथेदंजगत्

## आनन्दगिरिकृतटीका

क्षप्रक्षालनन्यायावतारादित्याशंक्याह प्रत्यक्षीकरणेनेति वर्जनीयामासुरींसम्पदंवि वृणोति प्रवृत्तिञ्चेति तांविहितांप्रवृत्तिंनजानन्तीत्यर्थः ताञ्चनिषिद्धांक्रियांनजान न्तीतिसम्बन्धः नशौचमित्यादेस्तात्पर्य्यमाह अनाचारेति शौचसत्ययोराचारा न्तर्भावेपि ब्राह्मणपरिव्राजकन्यायेन पृथगुपादानं ७

## स्वामिकृतटीका।

ञ्चेत्यादिद्वादशभिः धर्मेप्रवृत्तिमधर्मान्निवृत्तिञ्चासुरस्वभावा जना नजानन्ति अ तःशौचमाचारः सत्यञ्चतेषु नास्तिएव ७ ननुवेदोक्तयोर्द्धर्माधर्मयोःप्रवृत्तिंनिवृ

## भाषाअनुवाद

आसुरीसम्पद अच्छीप्रकारसे वर्जनकरनाहीकर्त्तव्यहै इससेआसुरीसम्पद कोविस्तारकरिकहतेहैं किजोदोप्रकारकी भूतोंकीसृष्टिहै सोमेरेमुखसेश्रवण करो इसजगहअसुरराक्षससम्बन्धी दोनोप्रकृतिकोएकताकरके देवप्रकृतिकेसाथ दोनोमतकहाहै इससे नवयेंअध्यायके बारहेंश्लोकमे आसुरींराक्षसींचैवइत्या दित्रिविधप्रकृतिकेसाथ विरोधनहींहै हेअर्जुन इसलोकमे देवऔअसुरसम्पदसे युक्त जोदोप्रकारभूतोंकीसृष्टि तिसकेमध्य दैवीसम्पदयुक्तसृष्टि मैने पूर्व्वविस्तार सेकहाहै अबआसुरीसंपदसेयुक्त जोसृष्टि सोहमसे सुनो ६ आसुरीसंपदइस श्लोकसेले बारहश्लोकतक दृष्टांकरि निरूपणकरतेहैं किअसुरस्वभाववालेमनुष्य सकलधर्ममे प्रवृत्ति औअधर्मसेनिवृत्तिकैसोहोतीहै सोजानतेहीनहीं इसीसेइन लोगोंमे शौचआचार औसत्यताका लेशमात्रभी नहींरहताहै यहजानो ७

असत्यमप्रतिष्ठन्तेजगदाहुरनीश्वरं अपरस्परसम्भूतंकिमन्यत्कामहैतुकं ८

## शाङ्करभाष्यं

सर्वंअसत्यमप्रतिष्ठञ्च नास्यधर्माधर्मौप्रतिष्ठातोऽप्रतिष्ठञ्चेति तेआसुराजनाजगदा हुरनीश्वरंनचधर्माधर्मसव्यपेक्षकोस्यशासितेश्वरोविद्यतइति अतोऽनीश्वरंजगदा हुः किञ्चअपरस्परसम्भूतंकामप्रयुक्तयोःस्त्रीपुरुषयोरन्योन्यसंयोगात्जगत्सर्वंस म्भूतं किमन्यत्कामहैतुकंकामहैतुकमेव कामहैतुकमन्यज्जगतःकारणंनकिञ्चित् अदृष्टंधर्माधर्मादिकारणान्तरंविद्यते जगतः कामएवप्राणिनांकारणमितिलोका यति काद्दृष्टिरियं ८

## आनन्दगिरिकृतटीका

असुराणांजनानांविशेषणान्तराण्यपिसन्तीत्याह किञ्चेति विद्यतइत्याहुरिति पूर्वेणसम्बन्धः शास्त्रैकगम्यमदृष्टंनिमित्तीकृत्याधिष्ठावात्मकेनब्रह्मणारहितंजगदि ष्यतेचेत्कथन्तदुत्पत्तिरित्याशंक्याह किञ्चेति किमन्यदित्यादेराक्षेपस्यतात्पर्यमा ह किञ्चिदिति ८ यथोक्तादृष्टिर्ब्रह्मदृष्टिवद्दिष्टैवेत्याशंक्याह एतामिति प्रागुपदि

## भाषाअनुवाद

वेदविहित जोधर्मअधर्म तिसमेप्रवृत्तिजोअसुरस्वभाववेमनुष्यक्योंनहीजानते औधर्मअधर्मकोअङ्गीकारनकरनेसे संसारिकसुखऔ दुखआदिहोना किसप्रकार निरूपणकियाजाय औशौचतथाआचारआदिसे ईश्वरकी आज्ञाकोवा कैसेलङ्घन करतेहैं औरईश्वरकोनमानिकै जगतकीउत्पत्तिकिससेकहतेहैं सोईकहतेहैं जो वेदपुराणइतिहासको प्रमाणनहींमानते औकहतेहैं किमुनिऔभांड तथाराक्ष स येईतीनोनेवेदकोवनायाहै औजिनकोधर्मअधर्मकीप्रतिष्ठा अर्थात्व्यवस्थानहीं है तेईअप्रतिष्ठकहेनास्तिकलोग अपनीपूर्वोक्तवाक्यकोपुष्टकरनेकेलिये इसज गतकोअप्रतिष्ठकहतेहैं अर्थात्यहजगतकीविचित्रता स्वभावसिद्धमानकहतेहैंऔ रजिनकेमतमे ईसजगतकाईश्वरनहींहै इससे यहसंसारअनीश्वरहै ऐसेनास्तीक लोग अपनीवातकापक्षकरके जगतकोअनीश्वरकहतेहैं जोपूछोकि तौफेरिवेलो ग इसजगतकीउत्पत्तिकिससेमानतेहैं इसपरउनकीकहावत कहतेहैं किअपर स्परकहे परअपरसेभिन्न जोस्त्रीपुरुष इनदोनोकेसंयोगसे संसारकीउत्पत्तिहो तीहै इसका औरकोईकारणनहींहै यहजगत कामहैतुक अर्थात्स्त्रीपुरुष इन दोनोकाजोकामसोईधारप्रवाहक्रमसे इससंसारका कारणस्वरूप चलाआवताहै नास्तीकलोग ऐसेहीकहतेहैं परकार्यविनाकारणकेनहींहै ८

एतांदृष्टिमवष्टभ्यनष्टात्मानोऽल्पबुद्धयः प्रभवंत्युग्रकर्माणःक्षयायजगतोऽहिताः ९

## शाङ्करभाष्यं

एतामिति एतांदृष्टिमवष्टभ्याश्रित्यनष्टात्मानोनष्टस्वभावाविभ्रष्टपरलोकसाधनाःअल्पबुद्धयोविषयविषयाअल्पैवबुद्धिर्येषान्ते अल्पबुद्धयःप्रभवंत्युद्भवन्ति उग्रकर्माणः क्रूरकर्माणोहिंसात्मकाः क्षयायजगतःप्रभवन्तीतिसम्बन्धःजगतोऽहिताः शत्रवइत्यर्थः ९ तेच कामेति कामंइच्छाविशेषमाश्रित्यावष्टभ्यदुष्पूरमशक्यपूरणं दृश्यमानम

## आनन्दगिरिकृतटीका

ष्टामेतांलोकायतिकदृष्टिमवलम्ब्येति यावत् नष्टस्वभावत्वमेवस्पष्टयति विभ्रष्टेति विषयबुद्धेरल्पत्वं दृष्टमात्रोद्देशेन प्रवृत्तत्वं जगतःप्राणिजातस्येतियावत् ९

## स्वामिकृतटीका

त्तिश्चकथंनविदुःकुतोवाधर्माधर्मयोरनङ्गीकारेजगतःसुखदुःखादिव्यवस्थास्यात् कथंवाशौचाचारादिविषयामीश्वराज्ञामतिवर्त्तेरन् ईश्वरानङ्गीकारेचकुतोजगदुत्पत्तिःस्यादतआह असत्यमिति नास्तिसत्यंवेदपुराणादिप्रमाणंयस्मिंस्तादृशंजगदाहुः वेदादीनांप्रामाण्यंनमन्यन्तइत्यर्थः तदुक्तं त्रयोवेदस्यकर्त्तारोमुनिभण्डनिशाचराइत्यादि अतएवनास्तिधर्माधर्मरूपाप्रतिष्ठाव्यवस्थाहेतुर्यस्यतत्स्वाभाविकंजगद्वैचित्र्याहुरित्यर्थः अतएवनास्तीश्वरःकर्त्ताव्यवस्थापकश्चयस्यतादृशंजगदाहुः तर्हिकुतोऽस्यजगतउत्पत्तिंवदन्तीत्यतआह अपरस्परसम्भूतमिति अपरश्चपरश्चेतिअपरस्परंअपरस्परतोऽन्योन्यतःस्त्रीपुंसयोर्मिथुनात्सम्भूतंजगत् किमन्यत्कारणमस्यनास्त्यन्यत्किञ्चित् किन्तुकामहेतुकमेवस्त्रीपुंसयोरुभयोःकामएवप्रवाहरूपेणहेतुरस्येत्यर्थः ८ किञ्च एतामिति एतांलोकायतिकानांदृष्टिंदर्शनमाश्रित्यनष्टात्मानोमलीमसचित्ताःसन्तोऽल्पबुद्धयोदृष्टार्थमात्रमतयःअतएवोग्रंहिंसंकर्मयेषांतेअहिता वैरिणोभूत्वाजगतःक्षयायप्रभवन्तिउद्भवन्तीत्यर्थः ९ अपिच काममाश्रित्येति दुष्पूरं

## भाषाअनुवाद

देखोनिरीश्वरवादीयोंकीदृष्टिकहेतजवीजऔरकल्पनासेकल्पितवातोंऔउनकेदर्शन कहेमतग्रन्थोंका आश्रयणकरके मलिनचित्तअल्पबुद्धिअर्थात् जोदेखैंसुनैउसपरतुर्त्त वेविचारविश्वासकरोमनुष्य जिनकोहिंसाहीकरनामात्रकामहै वेश्वशुरूपहोके संसारके नाशकेहेतु प्रगटहोतेहैं ९ औरजोकामनाभोगादिकरनेसेभी

काममाश्रित्यदुःपूरंदम्भमानमदान्विताः मोहाद्गृहीत्वासद्ग्राहान्प्रवर्त्तन्तेऽशुचिव्रताः१०
चिन्तामपरिमेयाञ्चप्रलयान्तामुपाश्रिताः कामोपभोगपरमाएतावदितिनिश्चिताः११

## शाङ्करभाष्यं

दान्विताःदम्भश्चमानश्चमदश्चदम्भमानमदास्तैरन्विताः मोहादविवेकतः गृहीत्वोपा दायअसद्ग्रहानशुभनिश्चयान्प्रवर्त्तन्ते लोकेऽशुचिव्रताःअशुचीनिव्रतानि येषान्ते अशुचिव्रताः १० किञ्च चिन्तेति चिन्तामपरिमेयाञ्चनपरिमातुंशक्यतेयस्या चिन्तायाइयत्तासाऽपरिमेयातामपरिमेयांप्रलयान्तांमरणान्तामुपाश्रिताः सदाचि न्तापराइत्यर्थःकामोपभोगपरमाः काम्यन्तइति कामाःशब्दादयस्तदुपभोगपरमाः अयमेवपरमःपुरुषार्थो यःकामोपभोगइत्येवंनिश्चितात्मानएतावदितिनिश्चिताः ११

## आनन्दगिरिकृतटीका

तानेवदुराचारानसुरान् प्रकारान्तरेणविशिनष्टि तेचेति १० तानेवविधान्त

## स्वामिकृतटीका

पूरयितुमशक्यंकाममाश्रित्यदम्भादिभिर्युक्ताःसन्तः क्षुद्रदेवताराधनादौप्रवर्त्तन्ते कथं असदग्राहान्गृहीत्वा अनेनमन्त्रेणैतांदेवतमाराध्य महानिधीन्साधयामइत्यादीन् दुराग्रहान्मोहमात्रेणस्वीकृत्यप्रवर्त्तन्ते अशुचिव्रताःअशुचीनिमद्यमांसादिविषयाणि व्रतानि येषांते १० किञ्च चिन्तामिति प्रलयोमरणमेवान्तोयस्यास्तामपरिमेयां

## भाषा अनुवाद

कभीपूरीनहींहोतीऐसीकामनाको अवलम्बनकरके दम्भपाखण्डसेयुक्तहो क्षुद्रदे वताभूतप्रेतआदिकी आराधनामेंप्रवृत्तहोतेहैं सोई कहतेहैं किअसतग्राहग्रहण अर्थात्इसमन्त्रकेद्वाराइसदेवताकीआराधनासे बहुतधनप्राप्तहोगाऐसादुराग्रह सोहवश्यतें जोमनुष्यअङ्गीकारकरलेतें अल्पबुद्धियोंकेअशुचिकहेमद्यमांस आदि युक्तव्रतहोतेहैं तेईमनुष्य इननिषिद्धकर्मोंमेंप्रवृत्तहोते हैं१० औरप्रलयकहेमरण कालपर्य्यन्तहै जिसकाअन्त ऐसीजोअपरिमेयचिन्ता अर्थात्कितनीहै इसकाठि कानानहीं तिसकेआश्रितकहेचिन्तापरायणमनुष्यजिनकोकामभोगकरनाही पर मप्रयोजनहै औकामभोगछोड़ दूसराऔरकोई परमपुरुषार्थनहींहै इतनीही कियेहैंनिश्चय जोलोग तेक्षुद्रकर्मकेद्वारा धनसञ्चयकरनेकीइच्छाकरतेहैं इसकी परलोकसेसाथ अन्वयहोतीहै बृहस्पतिका सूत्रप्रमाणदेतेहैं कामएवैकःपुरुषार्थ इति इसकाअर्थयहहै किचैतन्यविशिष्ट जोकाम उसीकोपुरुषपदसेकहते हैं ११

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् १२

## शाङ्करभाष्यं

आशापाशेति आशापाशशतैः आशा एव पाशास्तच्छतैराशापाशशतैर्बद्धा नियन्त्रिताः सन्तः सर्वतः आकृष्यमाणाः कामक्रोधपरायणाः कामक्रोधौ परमयनं परमाश्रयो येषान्ते कामक्रोधपरायणाः ईहन्ते चेष्टन्ते कामभोगार्थं कामभोगप्रयोजनाय न धर्मार्थमन्यायेनार्थसञ्चयानर्थप्रचयान् परः स्वापहरणादिनेत्यर्थः १२

ईदृशश्च तेषामभिप्रायः इदमिति इदं द्रव्यं अद्य इदानीं मया लब्धं इदञ्च अन्यत् प्राप्स्ये मनोरथं मनस्तुष्टिकरं इदञ्चास्ति इदमपि मे भविष्यत्यागामिनि संवत्सरे पुनर्धनं तेनाहं धनी विख्यातो भविष्यामि १३ असौ मयेति असौ देवदत्तनामा मया हतः दु

## आनन्दगिरिकृतटीका

रेणविशिनष्टि किञ्चेति चिन्तामात्मयोयोगक्षेमोपायालोचनात्मिकामपरिमेयविषयत्वात् परिमातुमशक्यामाश्रिताइति सम्बन्धः एषकामोपभोगः परमयनं सुखमेतावत् पारत्रिकंतु नास्ति सुखमिति निश्चयवन्तइत्याह एतावदितीति ११

आसुरानेवपुनः विशिनष्टि आशेति अशक्योपायार्थविषयाअनवगतोपायार्थविषयाप्रार्थनाआशास्ताः पाशाइवपाशास्तेषां शतैर्बद्धाइवश्रेयसः प्रच्याव्येत ततोनीयमानाइत्याह आशाएवेति १२

## स्वामिकृतटीका

परिमातुमशक्यांचिन्तामाश्रितानित्यचिन्तापराइत्यर्थः कामोपभोगएवपरमोयेषांते एतावदितिकामोपभोगएव परमःपुरुषार्थोनान्यदस्तीतिकृतनिश्चया अर्थसञ्चयानीहन्तइत्युत्तरेणान्वयः तथाचवार्हस्पत्यसूत्रं काम एवैकः पुरुषार्थइति चैतन्यविशिष्टः कामःपुरुषइति च ११ अतएव आशेति आशाएवपाशास्तेषांशतैर्बद्धाइतस्ततआकृष्यमाणाः कामक्रोधपरायणाः कामक्रोधौपरमयनमाश्रयोयेषांते कामभोगार्थमना तेनचौर्य्यादिनार्थानांसञ्चयान्राशीनीहन्तइच्छन्ति १२

## भाषा अनुवाद

इसीसे आशारूपसैकडों रसोयोंसेबन्धे इधरउधर खैंचेजाते ऊ ये लोग कामक्रोधके आश्रयस्वरूपभूत कामउपभोगकेअर्थ अन्यायकहेचोरीलवारीदगावाजीठगीवटपारीसे धनवटारनेकीइच्छाकरतेहैं इसीसे वहधनकुकर्मछोड सुकर्ममेनहीं लगैहै देखो अज्ञानीआपअपनेहाथ गलेमे सैकडों फांसी लगाय लेते है १२

इदमद्यमयालब्धमिदंप्राप्स्येमनोरथं इदमस्तीदमपिमेभविष्यतिपुनर्धनं १३
असौमयाहतःशत्रुर्हनिष्येचापरानपि ईश्वरोहमहंभोगीसिद्धोहंवलवान्सुखी १४

शाङ्करभाष्यं ।

जेयःशत्रुःहनिष्येचान्यान्वराकान्परानपिकिमेतेंकरिष्यन्तितपस्विनःसर्वथापिनास्तिमत्तुल्यईश्वरोहमहंभोगीसर्व्वप्रकारेणचसिद्धोहंसम्पन्नः पुत्रैःपौत्रैर्नप्तृभिर्नकेवलंमानुषोहंवलवान्सुखीचाहमेव अन्येतुभूमिभारायावतीर्णाः १४

आनन्दगिरिकृतटीका

तेषामभिप्रायोपिविवेकविरोधीत्याह इदमद्येति द्रव्यञ्जोहिरण्यादि इदमन्यदुर्द्धांप्राप्यमानत्वेनविपरिवर्त्तमानमित्येतत् १३ यथोक्तेमदभिप्रायेप्रतिवन्धकःशत्रुरपिनसम्भवतीत्याह असाविति त्वत्तोविहीनानांत्वयापरिभवेपि त्वत्तुल्यानांशत्रूणांपरिभवोनिश्चितो नभवतीत्याशंक्याह सर्वथेति ऐश्वर्य्यातिरेकेपिकुतस्तेषांभोगसामर्थ्यमित्याशंक्याह अहमिति सिद्धत्वमेवस्फुटयति सम्पन्नइति वलवानोजस्वीसुखीरोगरहितः १४ विद्यावृत्तधनाभिजनैःमत्तुल्योनास्तीत्याह आढ्यइति

स्वामिकृतटीका

तेषांमनोरथंकथयन्नरकप्राप्तिमाह इदमद्येति चतुर्भिःप्राप्स्येप्राप्स्यामिमनोरथंमनसःप्रियंस्पष्टमन्यत्एतेंषाञ्चतयाणांश्लोकानामित्यज्ञानविमोहिताः सन्तोनरकेपतन्तीति चतुर्थेनान्वयः १३ किञ्च असाविति सिद्धः कृतकृत्यःस्पष्टमन्यत् १४

भाषाअनुवाद

अवऐसेलोगोंके मनोरथकाहिकर उनकोनरकप्राप्तिका वृत्तान्तइसश्लोकसेलेकर चारश्लोकसेकहतेहैं किइसीअज्ञानसे विशेषमोहप्राप्तहोके नरकमेंपडतेहैं देखो उनकीरुचीऔमनोरथयेहैं किआजहमको यहलाभभई औरयह मनभावतीप्यारीवस्तु परेकहेआगेपावेंगे औयहधनहमाराहै जनहमारेहैं औफेरभीतनवीजखनायेहैं किवहधनभीहमाराहोगा परन्तुयहनहींशोचते किहमकिसकेहवालेहोंगे औकिसगतिकोजायंगे १३ औरइसशत्रुको हममारडालेंगे औ इसको मारलियाहै औरहमजोचाहैंसोकरें हमकर्त्ता औहमभोगीहैं हमसिद्धहैं जोकुछ करनाथाकरचुकेहैं हमवलवान हमसुखीहैं इनसववातोंका स्मरणतोक्षणभरभीनहीं भूलतें परकालवलवानकी सुधकोतो एकवारगीहीभूलगयेहैं किवहक्याकरेगा १४ औरहमधनीहैं हमअभिजनवान्अर्थात्कुलीन तथायज्ञदानआ

आढ्योऽभिजनवानस्मि कोऽन्योऽस्तिसदृशोमया यक्ष्येदास्यामिमोदिष्य इत्य ज्ञानविमोहिताः १५ अनेकचित्तविभ्रान्ता मोहजालसमावृताः प्रसक्ताः कामभोगेषु पतन्तिनरकेऽशुचौ १६

## शाङ्करभाष्यं

आढ्यइति आढ्योधनेनाभिजनवान्सप्तपुरुषंश्रोत्रियत्वादिसम्पन्नस्तेनापिनमम तुल्योस्तिकश्चित्कोन्योस्तिसदृशस्तुल्योमया किञ्चयक्ष्येयागेनाप्यन्यानभिभविष्यामि दास्यामिनटादिभ्यःमोदिष्येहर्षातिशयंप्राप्स्यामीत्येवंअज्ञानेनविमोहिताः अविवेक भावमापन्नाः १५ अनेकेति अनेकचित्तविभ्रान्ता उक्तप्रकारैरनेकैश्चित्तैर्विविधं भ्रान्ताअनेकचित्तविभ्रान्तामोहजालसमावृताःमोहोऽविवेकोऽज्ञानन्तदेव जालमि वावरणात्मकत्वात्तेनसमावृताःप्रसक्ताः कामभोगेषुकाम्यन्तइतिकामाःविषयास्तेषामु पभोगेषुकामभोगेषुतत्रैवनिषण्णाःसन्तस्तेनोपचितकल्मषाःपतन्तिनरकेऽशुचौवैत रण्यादौ१६ आत्मेति आत्मसम्भाविताःसर्वगुणविशिष्टतयात्मनैवात्मनि सम्भावि

## आनन्दगिरिकृतटीका।

तथापियागदानाभ्यान्तत्फलेनवाकश्चिदधिकोभविष्यतीत्याशंक्याह किञ्चेति नचतेषामेषोऽभिप्रायःसाधीयानित्याह इत्येवमिति १५ उक्तप्रकारत्रिपर्ययेण कृत्याकृ

## स्वामिकृतटीका

किञ्च आढ्यइति आढ्योधनादिसम्पन्नःअभिजनवान्कुलीनःयक्ष्ये यागाद्यनुष्ठानेनापिदीक्षितान्तरेभ्यःसकाशान्महतीं प्रतिष्ठांप्राप्स्यामिदास्यामिस्तावकेभ्यश्चमोदिष्येहर्षंप्राप्स्यामिइत्येवमज्ञानेनविमोहितामिथ्याभिनिवेशंप्रापिताः १५ एवम्भूतायत्

## भाषाअनुवाद

दिजोकभीकियातोसमझतेहैं किहमारीबराबरऔरकिसीनेनहीं किया लोगोंमेहमबडीप्रतिष्ठापावेंगेअर्थात्प्रसंसाहोगी औजोकोईहमारीस्तुतिकरेगाउसको हमधनवस्त्रादिदेंयगे औउसपरप्रसन्नहोंयगे इसप्रकारकेमनुष्य अज्ञानसे विमोहित मिथ्याअभिनिवेशकोप्राप्तकहेंभूठेमनोरथोंमेडूवेहैं १५ ऐसेमनुष्य जिस प्रकारकाफलपावतेहैं सोसुनो किअनेकचित्तकहेंमनकीलापोंअभिलापोंमें प्रवृत्त जोचित्त तिससेविक्षेपकोप्राप्तयेलोग सोईसोईमोहजालसेघेरेहुयेअर्थात्सूतकेजालसेज्ञद्गमत्स्यकेसमानबन्धेहैं औरकामभोगमेंआसक्तहो अशुचिजोमलमूत्रयुक्त नरक तिसमेंहीपडतेहैं १६ यज्ञकरिकेऔरोंसे हमबडीप्रतिष्ठापावेंऐसेजो उन

आत्मसम्भाविताःस्तब्धाधनमानमदान्विताः। यजन्तेनामयज्ञैस्ते दंभेनाविधिपूर्वकं १७

शाङ्करभाष्यं

ताःआत्मसम्भाविताःनसाधुभिःस्तब्धाअप्रणतात्मानोधनमानमदान्विताधननिमित्तो मानमदश्चताभ्यांधनमानमदाभ्यामन्वितायजन्तेनामयज्ञैनीममात्रैर्यज्ञैस्तेदंभेनधर्म ध्वजितया अविधिपूर्वकंविहिताङ्गेतिकर्तव्यतारहितैः १७ अहमिति अहङ्कारम

आनन्दगिरिकृतटीका

त्यविवेकविकल्पानांकिंस्यादित्यपेक्षायामाह अनेकेति कामाविषयास्तेषांभोगेषुतत्प्र युक्तेषूपभोगेष्विति यावत् १६ ननुतेषामपिकेषाञ्चिद्वैदिकेकर्मणि यागदानादौ प्रवृत्तिप्रतीतेरयुक्तंवैतरण्यादौपतनमितिचेत्तत्राह आत्मेति आसुरीसम्पदमभिजा तैरधर्मजातमेवसञ्चीयते प्रवृत्तेरपि वैदिकेकर्मणि नैवपुण्यमित्युक्तं १७

स्वामिकृतटीका

प्राप्नुवन्तितच्छृणु अनेकेति अनेकेषुमनोरथेषुप्रवृत्तंचित्तं अनेकचित्तं तेनविभ्रान्ता विक्षिप्ताः तेनैवमोहमयेनजालेनसमावृतामत्स्याइवसूत्रमयेनजालेनयन्त्रिताः एवं कामभोगेषु प्रसक्ताअभिनिविष्टाः सन्तोऽशुचौ कश्मलेनरके पतन्ति १६

यच्चद्दृतिच यस्तेषांमनोरथउक्तःसकेवलंदम्भाहङ्कारादिप्रधानएव नतुसात्त्वि कइत्यभिप्रायेणाह आत्मे तिद्वाभ्यां आत्मनैवसम्भाविताःपूज्यतांनीताःनतुसाधुभिःकै श्चित्अतएवस्तब्धाअनम्राःधनेनयोमानोमदश्चताभ्यांसमन्विताःसन्तःते नाममात्रेण येयज्ञास्तेनामयज्ञाःयद्वादीक्षितःसोमयाजीत्येवमादिनामनामात्रप्रसिद्धये येयज्ञास्तै र्यजन्तेकथंदम्भेन नतुश्रद्धयाअविधिपूर्वकम्चयथाभवतितथा १७ अविधिपूर्वकत्वमेव

भाषाअनुवाद

कमनोरथ जोपीछेपंद्रहेंश्लोकमेकहा वहअभिलाष केवलदम्भअहंकारआदिप्रधा नहै सतोगुणप्रधाननहींहै इसअभिप्रायपर दोश्लोकसेकहतेहैं किआपअपने मनसेसम्भावित कहेमहात्मावनेहैं परकोईसाधु उनकीप्रतिष्ठानहींकरतेहैं इसी से वेस्तब्ध अर्थात्अनम्रस्वभाव कहेकठोरचित्तमनुष्यधन दिसेजोमानऔअहङ्कार तिससेसंयुक्तहो यज्ञदानआदिकातो केवलनाममात्रहीहै परकरतेहैं इसवास्ते किफलानाआदमी बडापूजाकरनेवालाऔदानीहै ऐसेनामप्रसिद्धहोय इसवासना सेयज्ञदानकरतेहैं वहयज्ञकरनाकैसाहै सोकहतेहैं कि वेखालीअपनीख्याति लाभकोछोड औरकुछश्रद्धासेनहींकरतेहैं तोअविधिपूर्वकयज्ञदानजैसेहैं यह भीतैसेहीनिःफलहै यहजानो १७ अबअविधिपूर्वकत्वको प्रकाशकरतेहैं कि

अहङ्कारं बलं दर्पं कामं क्रोधञ्च संश्रिताः मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः १८

शाङ्करभाष्यं

हङ्करणमहङ्कारः विद्यमानैरविद्यमानैश्च गुणैरात्मन्यध्यारोपितैर्विशिष्टमात्मानमहमिति मन्यते सोऽहङ्कारोऽविद्याख्यः कष्टतमः सर्वदोषाणां मूलं सर्वानर्थप्रवृत्तीनाञ्च मूलं तं परिगृह्य तथा बलं पराभिभवनिमित्तं कामरागान्वितं दर्पं दर्पो नाम यस्योद्भवे धर्ममतिक्रामतीति सोऽयमन्तःकरणाश्रयो दोषविशेषः कामं स्त्र्यादिविषयं क्रोधमनिष्टविषयं एतानन्यांश्च महतो दोषान् संश्रिताः किञ्च ते मामीश्वरं आत्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षीभूतं मां प्रद्विषन्तो मच्छासनातिवर्त्तित्वं प्रद्वेषं कुर्वन्तोऽभ्य

आनन्दगिरिकृतटीका।

अन्यज्ज्ञानात् पुनरासुरा दूरादेवाद्विजन्त इत्याह अहङ्कारमिति अहङ्कारमेव स्फोरयति विद्यमानैरिति अध्यारोपितवैशिष्ट्यविषयत्वादहङ्कारस्याविद्यामूलत्वे नाविद्यात्मत्वमाह अविद्याख्य इति विवेकिभिस्तस्यातियत्नादेव हेयत्वं सूचयति कष्टतम इति तदेव स्पष्टयति सर्वेति तं संश्रिता इति सम्बन्धः कार्यकारणसामर्थ्यमुक्तविशेषणं बलं अहङ्कार एव महदवधीरणापर्यन्तत्वेन परिणतो दर्पस्तं व्याकरोति दर्पो

स्वामिकृतटीका।

प्रपञ्चयति अहङ्कारमिति अहङ्कारादीन् संश्रिताः सन्त आत्मपरदेहेषु आत्मदेहेपरदेहेषु च चिदंशेन स्थितं मां प्रद्विषन्तो यजन्ते दम्भयज्ञेषु श्रद्धाया अभावादात्मनो दृष्टैव पीडा भवति तथा पश्वादीनामप्यविधिना हिंसायां चैतन्यद्रोह एवावशिष्यत इति प्रद्विषन्त इत्युक्तं अभ्यसूयकाः सन्मार्गवर्त्तिनां गुणेषु दोषारोपकाः १८

भाषा अनुवाद

अभ्यसूयक कहे निन्दा करनेवाले मनुष्य अर्थात् भगवान कहते हैं कि मेरे पथके अवलम्बी पुरुषोंके गुणोंमें दोष लगानेहारे मनुष्य अहङ्कार बल औ प्रगल्भता जो ढीठापन तथा काम औ क्रोधका आश्रय कर अर्थात् वश हो अपनी देह औ परकी देहमें चेतन ज्ञानरूपसे टिका जो मैं हूं सो सम्पूर्णरूपसे मेरे प्रति द्रोह कारी यज्ञ आदि करते रहते हैं परन्तु मारे दम्भके यज्ञादि में श्रद्धाके बिना अपने को दृष्टिशाला पीडा देते हैं और पशु आदिकोंको भी अविधिपूर्वक हिंसा करनेसे चैतन्य जीवका द्रोह मात्र ही फल उत्पन्न होता है और तो कुछ हाथ लगता नहीं इसीसे ये मनुष्य मेरे द्रोह करनेवाले मेरे शत्रु तुल्य हैं इससे इन हत्यारों को जो फल मिलेगा वह जानलो १८ औ उनका आसुरी स्वभाव कभी

तानहंद्विषतःक्रूरान्संसारेषुनराधमान् क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु १६
आसुरींयोनिमापन्नामूढाजन्मनिजन्मनि मामप्राप्यैवकौन्तेयततोयान्त्यधमांगतिं २०

## शाङ्करभाष्यं

सूयकाःसन्मार्गस्थानांगुणेषुअसहमानाः १८ तानहमिति तानहंसर्वान्सन्मार्ग प्रतिपक्षभूतान्साधुद्वेषिणोद्विषतश्चमांक्रूरान्संसारेष्वेवनरकसंसरणमार्गेषु न राधमान्अधर्मदोषवत्वात्क्षिपामिप्रक्षिपामिअजस्रंसन्ततमशुभानशुभकर्मकारि णआसुरीष्वेवक्रूरकर्मप्रायासुव्याघ्रसिंहादियोनिषुक्षिपामीत्यनेनसम्बन्धः १६ आसु रीमिति आसुरीं योनिमापन्नाःप्रतिपन्नामूढाजन्मनिजन्मनिअविवेकिनः प्रतिजन्म

## आनन्दगिरिकृतटीका

नामेत्यादिना अन्यांश्चदोषानमात्सर्यादीन्नकेवलंउक्तमेवतेषांविशेषणंकिन्तुकष्टतम मस्तिविशेषणान्तरमित्याह किञ्चेति यद्यपीश्वरंप्रतिद्वेषस्तेषांसम्भाव्यते तथापि कथंस्वदेहेपरदेहेषुच तंप्रतिद्वेषः नहितत्रभोक्तारमन्तरेणेश्वरस्यावस्थानमित्याशं क्याह तद्बुद्धीति तेषामीश्वरंप्रतिद्वेषमेवप्रकटयति मच्छासनेति ईश्वरस्यशासनंश्रुति स्मृतिरूपन्तदतिवर्त्तित्वंतदुक्तार्थज्ञानानुष्ठानपराङ्मुखत्वं १८ तेषामुक्तविशेषण वतामासुराणांकिंस्यादितितदाह तामिति भगवतोनैर्घृण्यप्रसङ्गंअत्यादिशति अध मेति १६ ननुतेषामपिक्रमेणबहूनांजन्मनामन्तेश्रेयोभविष्यति नेत्याह आसुरी

## स्वामिकृतटीका।

तेषाञ्चकदाचिदप्यासुरस्वभावप्रच्युतिर्नभवतीत्याह तानितिद्वाभ्यांतानहंमांद्वि षतः क्रूरान्संसारेषुजन्ममृत्युमार्गेषुतत्राप्यासुरीष्वेवातिक्रूरासु व्याघ्रसर्पादियोनि ष्वजस्रमनवरतंक्षिपामितेषांपापकर्मणांतादृशंफलंददामीत्यर्थः १६ किञ्च आसु

## भाषाअनुवाद

जातानहींयहदोश्लोकमेकहतेहैं कि हमसेद्वेषकरनेवाले क्रूरस्वरूप नराधमों को मैजन्ममृत्युकीमार्गरूपसंसारमे आसुरीकहेअतिक्रूरव्याघ्रसर्पआदि दुष्टयोनि मे हमेसाफेंकाकरताहूं अर्थात् उनकोवहीनिषिद्धयोनिमिलाकरतीहैं १६ औरएव कहनेसे इसश्लोकमे यहकहाकिहेकौन्तेयअर्जुन वहुतजन्मआसुरीयोनिमे प्राप्त जोमूढ़जनउनकोमेरीप्राप्तिकीशङ्काकहांहै वल्किमेरीप्राप्तिकीउपायजोसतमार्ग उसकोभीनपाके असुरादियोनिसेभीअधम जोकृमिकीटादिगति तिसदुर्गतिको वे जाते हैं २० पूर्वकहेहुयेसबआसुरीदोषोंकेमध्यमे सकलदोषकेकारणस्वरू

त्रिविधंनरकस्येदंद्वारंनाशनमात्मनः कामःक्रोधस्तथालोभस्तस्मादेतत्त्रयंत्यजेत् २१

शाङ्करभाष्यं।

तमोवहुलास्वेवयोनिषुजायमानाअधिगच्छन्तितेमूढामामीश्वरंअप्राप्यअनासाद्यैव हेकौन्तेयततस्तस्मादपियान्तिअधमांनिकृष्टतमाङ्गतिंमामप्राप्येतिनमत्प्राप्तौकाचि दप्याशङ्का ततोमच्छिष्टितसाधुमार्गप्राप्तिमप्राप्येत्यर्थः२० सर्वस्याःआसुर्याःसम्पदः संक्षेपोयमुच्यते यस्मिंस्त्रिविधेसर्वआसुरसम्पद्भेदोनन्तोप्यन्तर्भवति यत्परिहारेणप रिहृतश्चभवति यन्मूलंसर्वस्यानर्थस्यतदेतदुच्यते त्रिविधमिति त्रिविधंनरकद्वारं त्रिःप्रकारंनरकस्यप्राप्तिद्वारंनाशनमात्मनः यद्द्वारंप्रविशन्नेवनश्यतिआत्माकस्मै चित् पुरुषार्थायेयोग्योनभवतीत्येतदुच्यते द्वारंनाशनमात्मनइति किंतत्कामःक्रो धस्तथालोभस्तस्मादेतत्त्रयंत्यजेत् यतएतद्द्वारंनाशनमात्मनस्तस्मात् कामादित्रय मेतत्त्यजेत् त्यागस्तुतिरियं २१ एतैरिति एतैर्विमुक्तःकौन्तेय तमोद्वारैस्तमसोनर कस्यदुःखमोहात्मकस्यद्वाराणिकामादयस्तैरेतैस्त्रिभिर्विमुक्तोनरआचरत्यनुतिष्ठति

आनन्दगिरिकृतटीका।

मिति तेषामीश्वरप्राप्तिशङ्काभावेकथन्तन्निषेधःस्यादित्याशंक्याह मामित्यादिना य स्मादासुरीसम्पदनर्थपरम्परयासर्वपुरुषार्थपरिपन्थिनी तस्माद्यावत्पुरुषःस्वतन्त्रोन काञ्चित्पारवश्यकरींयोनिमापन्नस्तावदेवतेनासौपरिहरणीयेतिसमुदायार्थः २० कथमासुरीसम्पदनन्तभेदवतीपुरुषायुषेनापिपरिहर्तुंशक्येत्याशंक्याह सर्वस्ये ति संक्षेपोक्तिफलमाह यस्मिन्निति कामादौत्रिविधेसर्वस्यासुरसम्पद्भेदस्यान्तर्भा वेपिकथमसौपरिह्रियतेतत्राह यत्परिहारेणेति कामादिपरिहारेणासुरीसम्पद्भे दपरिहारेपिकथंसर्वानर्थपरिवर्जनमित्याशंक्याह यन्मूलमिति कथमात्मनोनित्यस्य नाशाशङ्केतितत्राह कस्मैचिदिति त्रिविधमपिसामान्यतोदर्शितमाकांक्षाद्वाराविशे

स्वामिकृतटीका।

रीमिति तेचमामप्राप्यैवेत्येवकारेणमत्प्राप्तिशङ्कापिनकुतस्तेषांमत्प्राप्त्युपायंसन्मा र्गमप्राप्य ततोप्यधमांकृमिकीटादिगतिं यान्तीत्युक्तं शेषंस्पष्टं २० उक्तानामासुरदो

भाषाअनुवाद

षको तीनिदोष तिनकोसदाहीत्यागकरनायोग्य है सोईकहतेहैं किकामक्रोधऔलो भयेतीनदोष नरककेद्वारस्वरूपहैं तोकोनोचयोनिप्राप्तिकारकहोयं इसीसेमु मुक्षुकहेंमुक्तिकीइच्छारखनेवाले इनतीनोदोषोंकोसवतरहसेत्यागकरैं येअनर्थके मूलहैं औदेखो दुखदाईहैं २१ अवइनतीनदोषोंकेत्यागकरनेमे विशेषफलकहते

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः आचरत्यात्मनः श्रेयस्ततो याति परां गतिं २२
यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः न स सिद्धिमवाप्नोति न सुखं न परां गतिं २३

शाङ्करभाष्यं

किमात्मनः श्रेयो यत् प्रतिबद्धः पूर्व्वं नाचरति तदपगमादाचरति ततस्तदाचरणात्तथा याति परां गतिं मोक्षमपीति २२ सर्व्वस्यैतस्यासुरीसम्पत्परिवर्जनस्य श्रेयआचरणस्य च शास्त्रं कारणं शास्त्रप्रमाणादुभयं शक्यं कर्त्तुं नान्यथा अतः शास्त्रेति यः शास्त्रविधिं शास्त्रं वेदः तस्य विधिं कर्त्तव्याकर्त्तव्यज्ञानकारणं विधिप्रतिषेधाख्यमुत्सृज्य त्यक्त्वा वर्त्तते कामकारतः कामप्रयुक्तः सन् न स सिद्धिं पुरुषार्थयोग्यतामाप्नोति नाप्यस्मिन् लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा २३ तस्मादिति तस्मात् शास्त्रं प्रमाणं ज्ञानसाधनन्ते तव कार्य्याकार्य्यव्यवस्थितौ कर्त्तव्याकर्तव्यव्यवस्थायामतो ज्ञात्वा

आनन्दगिरिकृतटीका।

यतो दर्शयति किं तदिति तस्मादिति व्याचष्टे यतइति कामादित्यागे सति अनर्थाचरणश्रेयः प्रतिबन्धनिवृत्तौ स्यातामिति भावः २१ न केवलं श्रेयः समाचरन्नासुरीं च सम्पदं वर्जयन् मोक्षमेव सम्यग्धीद्वारा लभते किन्तु लौकिकमपि सुखमित्यपेरर्थः २२

स्वामिकृतटीका।

यासां मध्ये सकलदोषमूलभूतदोषत्रयं सर्वथा वर्जनीयमित्याह त्रिविधमिति कामः क्रोधो लोभश्च इतीदं त्रिविधं नरकस्य द्वारं अतएवात्मनो नाशनं नीचयोनिप्रापकं तस्मादेतत्त्रयं सर्व्वात्मना त्यजेत् २१ त्यागे विशिष्टं फलमाह एतैरिति तमसो नरकस्य द्वारभूतैरेतैस्त्रिभिः कामादिभिर्विमुक्तो नरः आत्मनः श्रेयः साधनं तपोयोगादिकमाचरति ततश्च मोक्षं प्राप्नोति २२ कामादित्यागश्च स्वधर्माचरणं विना न सम्भवतीत्याह यइति शास्त्रविधिं वेदविहितं धर्ममुत्सृज्य यः कामचारतो यथेष्टं वर्त्तते स सिद्धिं तत्त्वज्ञानं न

भाषाअनुवाद

है कि हे कौन्तेय अर्जुन तम कहे नरकके द्वाररूप काम आदि तीन दोषसे अच्छी तरह मुक्त पुरुष अपने कल्याणके साधनस्वरूप तपयोग आदि आचरण करते हैं और तिसके अनन्तर मुक्ति पावते हैं २२ कामादित्याग करना भी स्वधर्म आचरणके विना नहीं हो सके है यही कहते हैं कि शास्त्र औ विधि कहे वेदविहित धर्म त्याग करके जो मनुष्य अपनी इच्छाके अनुसार कर्म करते हैं वे सिद्धि कहे तत्त्वज्ञानको नहीं पावते हैं और उपशम अर्थात् शान्तिरूप सुख भी नहीं पावते और न उत्तम गति जो मुक्ति तिसको पावते हैं २३ अब तात्पर्य कहते हैं कि यह काज औ यह अकाज इसकी व्यवस्था कहे

तस्माच्छास्त्रंप्रमाणन्तेकार्य्याकार्य्यव्यवस्थितौ ज्ञात्वाशास्त्रविधानोक्तंकर्मकर्त्तुमिहा
र्हसि २४ इतिदैवासुरसम्पद्विभागयोगोनाम षोडशोऽध्यायः १६

## शाङ्करभाष्यम्।

ज्ञा शास्त्रविधानोक्तंविधिर्विधानंशास्त्रमेवविधानंशास्त्रविधानंकुर्य्यान्नकुर्यादित्येवं लक्षणंतेनोक्तंस्वकर्मयत्तत्कर्त्तुमिहार्हसिइहइतिकर्माधिकारभूमिप्रदर्शनार्थंइति२४

## आनन्दगिरिकृतटीका।

आसुर्य्याः सम्पदोवर्जने श्रेयसःकारणं किंकारणंतदाह सर्वस्येति तस्यकारणत्वंसा धयति शास्त्रेति उक्तमुपजीव्यान्तरश्लोकंप्रवर्त्तयति अतइति शिष्यते बोध्यतेऽनेनापू र्वोर्थइति शास्त्रं तच्चविधिनिषेधात्मकमित्युपेत्यव्याचष्टे कर्त्तव्येति कामस्यकरणंकाम कारःतस्माद्धेतोरित्युपेत्यकामाधीना शास्त्रविमुखस्यप्रवृत्तिरित्याह कामेतिकामाधी नप्रवृत्तेःसदापुमर्थायोग्यस्यसर्वपुरुषार्थासिद्धिरित्याह नाप्नोति २३ शास्त्राद्दते कर्म्म गोनिस्यात्तत्वेफलितमाह तस्मादिति कर्त्तव्याकर्त्तव्यौ धर्माधर्मौ तत्रशास्त्रस्यप्रमाण त्वेपि मत्किंकर्त्तव्यमित्याशंक्याह अतइति स्वकर्मक्षत्रियस्ययुद्धादि इतिशब्दोऽध्या यसमाप्त्यर्थः तदनेनाध्यायेन प्राग्भवीयकर्म्मवासनानुसारेणाभिव्यज्यमानसात्त्वि कादि प्रकृतित्रयविभागेनदैव्यासुरीतिसम्पद्द्वयमादानहानाभ्यामुपदिश्य कामक्रोध लोभानपहाय पुरुषार्थिना शास्त्रप्रवणेनतदुक्तकारिणाभवितव्यमिति निर्द्धारितं२४

## स्वामिकृतटीका

कामादित्यागश्च स्वधर्माचरणंविनानसम्भवतीत्याह यइति शास्त्रविधिंवेद विहितं धर्ममुत्सृज्य यःकामचारतोयथेष्टंवर्त्तते ससिद्धिंतत्त्वज्ञानंनप्राप्नोति न चसुखमुपशमं नचपरांगतिं मोक्षं प्राप्नोति २३ फलितमाह तस्मादिति इदं कार्यमिदमकार्यञ्चेत्यस्यांव्यवस्थायांते तवशास्त्रश्रुतिस्मृतिपुराणादिकमेवप्रमाणं अ तःशास्त्रविधिनोक्तंकर्म्मज्ञात्वा इहकर्म्माधिकारेवर्त्तमानः यथाधिकारंकर्म्मकर्त्तुम र्हसि तन्मूलत्वात् सत्त्वशुद्धिसम्यग्ज्ञानमुक्तीनामित्यर्थः देवदैतेयसम्पत्तिसंविभा गेन षोडशे तत्त्वज्ञानेऽधिकारस्तुसात्त्विकस्येतिदर्शितं २४ इतिषोडशोध्यायः १६

## भाषाअनुवाद

निर्णयमे तुमको शास्त्रअौवेदस्मृतिकहे धर्मशास्त्रपुराण प्रमाणस्वरूपहैं इससेशा स्त्रकीविधिमे कहेजोकर्मतिनकोजानिकर इसकर्मअधिकारमेवर्त्तमान तुमअपने अधिकारके अनुरूप कर्मकरनेकोयोग्यहोउ जिसहेतुसत्त्वशुद्धिऔसम्यक्ज्ञानऔ मुक्तिकेविषयमेभी कर्महीमूलकहे कारणस्वरूपहै २४ षोडशोध्यायः १६

## सप्तदशोऽध्यायः

अर्जुन उवाच येशास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः तेषां निष्ठातुका
कृष्णसत्त्वमाहोरजस्तमः १

### शाङ्करभाष्य

तस्माच्छास्त्रंप्रमाणान्तइतिभगवद्वाक्यात्लब्धप्रश्नबीजोऽर्जुनउवाच येशास्त्रे ति येके
चित्अविशेषिताःशास्त्रविधिंशास्त्रविधानंश्रुतिस्मृतिशास्त्रचोदनामुत्सृज्य परित्यज्य
यजन्ते देवादीन्पूजयन्तिश्रद्धयान्विताः श्रद्धयास्तिक्यबुध्यान्विताःसंयुक्ताःसन्तःश्रुति
स्मृतिलक्षणंवाकञ्चित्शास्त्रविधिंपश्यन्तोवृद्धव्यवहारदर्शनादेवश्रद्धधानतयादेवादी
न्पूजयन्तितेइहशास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विताः इत्येवंगृह्यन्ते येपुनःक
ञ्चित्शास्त्रविधिमुपलभमानाएव तमुत्सृजन्त्ययथाविधिदेवादीन्पूजयन्ति तेइह
येशास्त्रविधिमुत्सृज्ययजन्तइतिनपरिगृह्यन्ते कस्मात्श्रद्धयान्वितत्वविशेषणात्देवा
दिपूजाविधिपरंकञ्चित्शास्त्रं पश्यन्तएव तदुत्सृज्याश्रद्धधानतयातद्विहितायांदेवा
दिपूजायांश्रद्धयान्विताःप्रवर्त्तन्तेइतिनशक्यंपरिकल्पयितुं यस्मात्तस्मात्पूर्वोक्ताएवये
शास्त्रविधिमुत्सृज्ययजन्तेश्रद्धयान्विताःइत्यत्रगृह्यन्तेतेषामेवम्भूतानांनिष्ठातुअवस्था
नंकाकृष्णसत्त्वमाहोरजस्तमःकिंसत्त्वनिष्ठावस्थानमाहोस्वित्रजोऽथवातमइति १

### भाषाअनुवाद

तत्वज्ञानकेअधिकारीहोनेमेजोसात्वकीश्रद्धाहै सोईमुख्यकारणहै यहपूर्वक
हाहै इससेअवसरहैअध्यायमे भगवानश्रद्धाकेतीनिभेदकहैंगे औरजोसोरहें अ
ध्यायमे यःशास्त्रविमुत्सृज्यवर्त्तते कामचारतः इसतेईसयेंश्लोकसेकहा किवेदशा
स्त्रकीविधिछोडि अपनीइच्छाकेअनुसार कर्मकरनेवालेको तत्वज्ञानन हींहोताहै
तोविधित्यागकरि श्रद्धासेकर्ममे वर्त्तमानजनोकोतत्वज्ञानकाअधिकारहै कि न
हीं यहीज्ञातहोनेकीइच्छासे अर्जुनकहतेहैं किजोमनुष्य वेदशास्त्रकीविधिको
दुखसमझमर अथवा आलस्यसेत्यागकरिके केवललोकाचारकेअनुसारश्रद्धायुक्त
होय यज्ञदानआदिकर्मकरतेहैं उनकीनिष्ठाकहे स्थितिकैसीहोतीहै इसीको
पूछतेहैं किहेकृष्ण उनकोजोदेवपूजा अथवा यज्ञआदिहै सोसात्विकीराजसी
किम्वा तामसीहै यहतीनप्रकारकी शंकाहोतीहै जोयेपूर्वोक्तकर्मकारीलोग सत
गुणीहोयं तो सात्विकहेतुसेतत्वज्ञानमे उनकाअधिकारहोसकैहै औरजोसतो
गुणयुक्तनहोय तोनहीहोसकताहै यहअर्जुनकेपूछनेका तात्पर्यहै १

## आनन्दगिरिकृतटीका ।

आस्तिकानांनास्तिकानाञ्चशास्त्रैकचक्षुपांगतिरुक्तासम्प्रत्यास्तिकानामेव शा
स्त्रानभिज्ञानांगतिंजिज्ञासयापृच्छतीत्याह तस्मादिति यजन्तइतियागग्रहणं दानादे
रुपलक्षणंयदिवेदोक्तंविधिमपश्यन्तस्तमुत्सृजन्तिकथंतर्हिश्रद्धानायागादिकुर्वन्ति
नहि मानंविना श्रद्धयायागादिकर्त्तुं शक्यमित्याशंक्याह श्रुतोतिननुशास्त्रीयंविधिंपश्य
न्तोपिवैचित्तमुपेक्ष्य स्रोतपेक्षयायागादिकुर्वन्तोदृश्यन्ते तेपामिह येशास्त्रविधिमु
त्सृजेत्रतिग्रहोभविष्यति नेत्याह येपुनरिति तेपामेवापरिग्रहेप्रश्नपूर्वकंहेतुमाह क
स्मादिति शास्त्रज्ञानान्तदुपेक्षावतांग्रहेपिविशेषणमविरुद्धमित्याशंक्याव्याघातान्मैव
मित्याह देवादीति श्रद्धधानतयातदुत्सृज्येतिसम्बन्धः शास्त्रोक्तं विधिमविगच्छ
तामपितमवधीर्यस्वेच्छयादेवपूजादौ प्रवृत्तानामासुरेष्वेवान्तर्भावोयस्मादनन्तरा
ध्यायेसिद्धस्तस्मादास्तिकाधिकारेतेपांप्रसङ्गोनास्तीत्युपसंहरति यस्मादिति पूर्वोक्ता
शास्त्रानभिज्ञाश्चव्यवहारानुसारिणइतियावत् तैःश्रद्धयाक्रियमाणंकर्म कृतपर्यव
स्यतीतिपृच्छति तेपामिति कानिष्ठेत्येतद्विवृणोति सत्त्वमिति १

## स्वामिकृतटीका ।

उक्ताधिकारहेतूनांश्रद्धामुख्याचसात्त्विकी इतिसप्तदशेगौणश्रद्धाभेदस्त्रिधोच्य
ते पूर्वाध्यायान्तेयःशास्त्रविधिमुत्सृज्यवर्त्ततेकामचारतः नससिद्धिमवाप्नोतीत्यने
नशास्त्रोक्तविधिमुत्सृज्यकामचारेणवर्त्तमानस्यज्ञानेऽधिकारोनास्तीत्युक्तं तत्रशास्त्र
विधिमुत्सृज्यकामचारंविनाश्रद्धयावर्त्तमानानांकिमधिकारोऽस्तिनास्तिवेति बुभु
त्सया अर्जुनउवाच यइति अत्रचशास्त्रविधिमुत्सृज्ययजन्तइत्यनेनशास्त्रार्थंबुद्धातमुल्ल
ङ्घ्यवर्त्तमाना नगृह्यन्तेतेपांश्रद्धयायजनानुपपत्तेःआस्तिक्यबुद्धिर्हिश्रद्धानचासौशा
स्त्रविरुद्धेऽर्थेशास्त्रज्ञानवतांसम्भवतितानेवाधिकृत्यत्रिविधाभवतिश्रद्धेतियजन्तेसात्त्वि
कादेवानित्याद्युत्तरानुपपत्तेश्च अतोनात्रशास्त्रलङ्घिनोगृह्यन्ते अपितुक्लेशबुद्ध्यावा
आलस्याद्वाशास्त्रार्थज्ञानेप्रयत्नमकृत्वाकेवलमाचारपरम्परावशेनश्रद्धयाक्वचिद्देवता
राधनादौप्रवर्त्तमानागृह्यन्तेअतोऽयमर्थः येशास्त्रविधिमुत्सृज्यदुःखबुद्ध्याआलस्याद्वा
अनादृत्य केवलमाचारप्रामाण्येनश्रद्धयान्विताःसन्तोयजन्ते तेपान्तुकानिष्ठाकास्थि
तिःकआश्रयः तामेवविशेषेणपृच्छति किंसत्त्वंआहोकिंरजःअथवातमइति तेपांताद
शीदेवपूजादिप्रवृत्तिःकिंसत्त्वसंश्रितारजःसंश्रितातमःसंश्रितावेत्यर्थः श्रद्धायाःसात्त्वि

श्रीभगवानुवाच त्रिविधाभवतिश्रद्धादेहिनांसास्वभावजा सात्विकीराजसीचैव तामसीचेतितांशृणु २

## शाङ्करभाष्यं

एतदुक्तंभवति यातेषांदेवादिविषयापूजासाकिंसात्विकाऽहोस्विद्राजस्युत तामसीति सामान्यविषयोयंप्रश्नोनाप्रविभज्यप्रतिवचनमर्हतीति त्रिविधेति श्रीभगवानुवाच त्रिविधात्रिःप्रकाराभवतिश्रद्धायस्यांनिष्ठायांत्वंपृच्छसि देहिनांसास्वभावजा जन्मान्तरकृतोधर्मादिसंस्कारोमरणकालेभिव्यक्तःस्वभावउच्यते ततोजातास्वभावजासात्विकीसत्वनिर्वृतादेवपूजादिविषया राजसीरजोनिर्वृतायक्षरक्षःपूजादिविषयातामसीतमोनिर्वृता प्रेतपिशाचादिपूजाविषयैवंत्रिविधान्तासुच्यमानां श्रद्धां शृणु सैवं त्रिविधाभवति २

## आनन्दगिरिकृतटीका

कार्य्याणां कारणैर्व्यपदेशमाश्रित्य तात्पर्यमाह एतदिति विशेषनिष्ठमुत्तरंसामान्येनवक्तुंनशक्यमित्याशयेन परिहरति सामान्येति किमिति श्रद्धात्रैविध्यंप्रश्नानुपयुक्तमुच्यते तत्राह यस्यामिति श्रद्धापूर्व्विकायां क्रियायामिति यावत् श्रद्धात्रैविध्येहेतु

## स्वामिकृतटीका

कत्वात्क्लेशबुद्ध्याआलस्येनचशास्त्रानादरस्यराजसतामसत्वात्त्रिधासन्देहः यदिसत्वसंस्थितातर्हिकेषामपिसात्विकत्वाद्द्वयोज्ञानात्मज्ञानेधिकारःस्यादन्यथानेतितात्पर्यार्थः

## भाषाअनुवाद

इसकाउत्तर भगवानश्रीकृष्णकहतेहैं कियहजोवेदशास्त्रकेक्रमसेभगवदर्चनकरनेवालोंकी सात्विकीश्रद्धा एकहीप्रकारकीहै परहां लोकाचारअनुसारकर्म अनुष्ठानकरनेवालोंकी जोश्रद्धासोईसात्विकीराजसीतामसी तीनप्रकारकीहोती है तिसकाकारणयह किस्वभावकहेपूर्व्वकर्म्मकेसंस्कारवशते उत्पन्नजोश्रद्धाउसकोस्वभावजा कहतेहैं इससेस्वभावको अन्यथाकरनेमेनिश्चितसमर्थजोशास्त्रोक्तविवेकज्ञान सोलोकाचारकर्मकरनेवालोंकोनहींहै इससेशुद्धपूर्व्वस्वभावकेक्रमसेउत्पन्नजोश्रद्धा सोतीनप्रकारकीहोतीहै सोतीनभेद हमसेसुनो परन्तुभगवतअर्च्चनविषयक सात्विकीश्रद्धा जोएकहीप्रकारहै सोभी व्यवसायात्मिकाबुद्धिरेकेहकुरुनन्दनइसदूसरेअध्यायके एकतालीशयेंश्लोकमे कहीगईहै यहजानो २

## शाङ्करभाष्यं

सत्त्वेति सत्वानुरूपाविशिष्टसंस्कारोपेतान्तःकरणानुरूपा सर्वस्यप्राणिजात स्यश्रद्धाभवति भारत यद्येवन्ततः किंस्यादित्युच्यते श्रद्धामयःश्रद्धाप्रायः अयंपुरुषःसं सारीजीवःकथंयोयच्छ्रद्धोयाश्रद्धायस्यजीवस्यसयत्श्रद्धःस एवततश्रद्धानुरूपःसएव सजीवः ३ ततश्च कार्येण लिंगेन देवादिपूजया सत्त्वादिनिष्ठानुमेयेत्याह

## आनन्दगिरिकृतटीका

माह शास्त्रभावजेति स्वभावशब्दार्थंप्रकृतोपयोगितयाकथयति जन्मान्तरेति कथं त्रिविधेत्यपेक्षायामाह सात्त्विकीत्यादिना कथमुक्ताश्रद्धास्वभावजेति तत्राह ता मिति २ प्राचीनकर्मोद्बोधिता त्रिविधावासना स्वभावशब्दिता त्रिविधायाः श्रद्धायानिमित्तमित्युक्तमिदानीमुपादानन्तस्यादर्शयति सत्वमिति विशिष्टचित्तो पादानाश्रद्धातत्त्रैविध्येत्रिविधेति पूर्वार्द्धस्यार्थः कथंनिष्ठायांसात्विकादिप्रश्नद्वारा श्रद्धायास्त्रैविध्यनिरूपणमुपयुक्तमिति मन्वानःशङ्कते यद्येवमिति श्रद्धेयंविषयम भिध्यायंस्तथातत्त्वैववक्त तद्गति मन्वानःपरिहरति उच्यतइति श्रद्धामयत्वंप्रश्नपूर्व कंकथयति कथमिति श्रद्धास्वत्वधिकृतेपुरुषेप्राचुर्येणप्रवृत्तं मितस्यश्रद्धामयत्वसि द्धिरित्यर्थः ३ तथापिकथंसत्वादिनिष्ठा यथोक्तस्यपुरुषस्यज्ञातुंशक्येत्याशंक्याह

## स्वामिकृतटीक

अत्रोत्तरं श्रीभगवानुवाच त्रिविधेति अयमर्थःशास्त्रतत्वज्ञानतः प्रवर्त्त मा नानांपरमेश्वरपूजाविषया सात्विकीएकविधैवभवति श्रद्धालोकाचारमात्रेणतुप्रवर्त्त मानानांदेहिनां याश्रद्धासातुसात्विकीराजसीतामसीचेति त्रिविधाभवति तत्रहेतुः स्वभावजा स्वभावःपूर्वसंस्कारस्तस्माज्जाता स्वभावमन्यथाकर्त्तुं सामर्थ्यं हिशास्त्रोत्थं विवेकज्ञानंतेषांनास्ति अतःकेवलंपूर्वस्वभावेनभवन्ती श्रद्धा त्रिविधाभवति ताभि मांत्रिविधांश्रद्धांश्रृणुइति तदुक्तं व्यवसायात्मिकाबुद्धिरेकेह कुरनन्दनेत्यादिना २

ननुश्रद्धासात्विक्येवसत्वकार्यत्वेनत्वयैवश्रीभागवतेउद्धवंप्रतिनिर्दिष्टत्वात् य थोक्तंशमोदमस्तितिक्षेत्यातपःसत्यंदयास्मृतिः तुष्टिस्त्यागोऽस्पृहाश्रद्धाह्रीर्दयादिः स्वनिर्वृतिः इत्येताःसत्वटत्तयइति अतःकथंतस्यास्त्रैविध्यमुच्यते सत्यंतथापिरजस्त मोमिश्रितत्वेनसत्वस्य त्रैविध्यात् श्रद्धायाअपित्रैविध्यंघटतइत्याह सत्वेति सत्वानु रूपासत्वतारतम्यानुसारिणी सर्वस्यविवेकिनोऽविवेकिनोवा लोकस्यश्रद्धाभवति त स्मादयंपुरुषोलौकिकःश्रद्धाविकारःत्रिविधयाश्रद्धयाविक्रियतइत्यर्थः तदेवाह योय

सत्त्वानुरूपासर्व्वस्यश्रद्धाभवतिभारत श्रद्धामयोऽयंपुरुषोयोयच्छ्रद्धःसएवसः ३

### शाङ्करभाष्यं।

यजन्तइति यजन्ते पूजयन्ति सात्त्विकाः सत्वनिष्ठादेवान्यक्षरक्षांसिराजसोः प्रेतान्भूतगणांश्चसप्तमातृकादींश्चअन्ये जयन्ते तामसाजनाः ४

### आनन्दगिरिकृतटीका

तथापिकथंसत्वादिनिष्ठा यथोक्तस्यपुरुषस्यज्ञातुं शक्येत्याशंक्याह ततश्चेति अधिकृतस्यपुरुषस्यश्रद्धाप्रधानत्वादितियावत् देवा वस्वादयोयक्षाः कुवेरादयोरक्षां

### स्वामिकृतटीका

च्छ्रद्धःयादृशीश्रद्धायस्यसएवसःतादृशश्रद्धायुक्तः सएवसइति यःपूर्व्वंसत्वोत्कर्षेणसात्विकश्रद्धायुक्तःपुरुषःसपुनस्तत्संस्कारेण सात्विकश्रद्धायुक्तएवभवतियस्तुरजसउत्कर्षेणराजसश्रद्धायुक्तःसपुनस्तादृशएवभवति यस्तुतमसउत्कर्षेण तामसश्रद्धयायुक्तःसपुनस्तादृशएवभवतीति लोकाचारमात्रेणप्रवर्त्तमानेएवं सात्विकराजसतामसश्रद्धाव्यवस्थाशास्त्रजनितविवेकज्ञानयुक्तानान्तुस्वभावविजयेनसात्विकी एकैवश्रद्धेतिप्रकरणार्थः ३

### भाषाअनुवाद

पूर्व्वपक्षकहतेहैं किहां श्रद्धासात्विकीहै क्योंकि श्रीभगवानने एकादशस्कन्धकेपचीशयेंअध्यायकेद्वितीयश्लोकसेसत्वकार्य्यरूपहीउद्धवकेप्रतिनिर्देश कियाहैं किशमदमतितिक्षाज्ञानतपसत्यदयास्मृतितुष्टित्यागअनिच्छाश्रद्धालज्जाऔआत्मनिष्टि कहेआत्मसुख येसवहतीसतोगुणहीकीहैं इससेश्रद्धातीनप्रकार कैसेकहतेहैं जोऐसाकहो तोसुनो किहां सत्यकहतेहोपरतथापिरजोगुणऔतमोगुणके संयोगसेसत्वगुणकीतीनप्रकारताहेतुकसात्विकश्रद्धाभीजोतीनप्रकारहोतीहै सोईकहतेहैं किजोपूर्व्वसात्विकस्वभावथासोउसकेसंस्कारसेफेरभीसात्विकश्रद्धायुक्तहोताहै औरजो रजोगुणप्रकाशथासोरजोगुणस्वभावहोता औतमोगुणवालोंकीतमोगुणी श्रद्धाहोतीअर्थात्तामसयुक्तहोताहै इसकारणलोकाचारकर्मकारी ऐसेसात्विक राजसतामसस्वरूप तीनप्रकारश्रद्धाकानिर्देशमात्रकहेदेखायाहै परन्तुजोलोगशास्त्रज्ञानसे प्रगटविवेकज्ञानसेयुक्तहैं तिनकास्वभावसत्वोत्तमहोनेकेवास्तेएकहीप्रकारश्रद्धाहोतीहै इतनाहीइसप्रकरणका तात्पर्य्यार्थ है ३ सात्विकआदिजोगुण

यजन्तेसात्त्विकादेवान्यक्षरक्षांसिराजसाः प्रेतान्भूतगणांश्चान्येयजन्तेतामसाजनाः ४
अशास्त्रविहितंघोरंतप्यन्तेयेतपोजनाः दम्भाहङ्कारसंयुक्ताकामरागबलान्विताः ५

शाङ्करभाष्यं

एवंकार्य्यतोनिर्णीताःसत्वादिनिष्ठाःशास्त्रविध्युत्सर्गेतत्रकश्चिदेवसहस्त्रेषु पूजा दितत्परःसत्त्वनिष्ठोभवतिबाहुल्येनतुरजोनिष्ठाःतमोनिष्ठाश्चैवप्राणिनोभवन्तिकथं अशास्त्रेतिअशास्त्रविहितंनशास्त्रविहितंअशास्त्रविहितं घोरंपीडाकरंप्राणिनामा त्मनश्चतपस्तप्यन्तेनिर्वर्त्तयन्तियेतपोजनास्तेचदम्भाहङ्कारसंयुक्तादम्भश्चाहङ्कारश्च

आनन्दगिरिकृतटीका

सिनैर्ऋतादयः स्वधर्मात्प्रच्युता विप्रादयोदेहपातादूर्द्ध्वं वायुदेहमापन्नाः प्रेताः एथ्वश्चयथायथमाराध्यदेवादयःसात्विकराजसतामसान्प्रकामान्प्रयच्छन्तीति सा मर्थ्यादवगन्तव्यं ४ ननुसत्त्वादिनिष्ठाःशास्त्रेणज्ञातुं शक्यन्ते कुतःकार्यलिङ्गकानुमा

स्वामिकृतटीका

सात्विकादिभेदमेवकार्य्यभेदेनप्रपञ्चयति यजन्तइति सात्विकाजनाः सत्वप्रकृ तीन्देवानेवयजन्तेपूजयन्तिराजसास्तुरजःप्रकृतीन्यक्षान्राक्षसांश्चयजन्ते एतेभ्यो न्ये विलक्षणास्तामसाजनास्तामसानेवप्रेतान्भूतगणांश्चयजन्ते सत्वादिप्रकृतीनांत त्तदेवादीनांपूजारुचिभिस्तत्तत्पूजकानांसात्विकादित्वंज्ञातव्यमित्यर्थः ४ राजस

भाषा अनुवाद

भेद उसीकोकार्य्यभेदसे विस्तारकरकहतेहैं किसात्विकस्वभावजन सत्वप्रकृतिदेव तोंकोपूजतेहैं ऐसेहीराजसस्वभाव रजःप्रकृतिदेवतायक्षराक्षसादिकोंको पूजते औतामसी तमोगुणीभूतप्रेतोंकोपूजतेहैं ४ औरराजसतामसकेमध्यमेभीजो विशेषहै सोफिरदोश्लोकसेकहतेहैं किशास्त्रबिनजानेभी पूर्वसंस्कारबलसे कोईको ई उत्तमपुरुषसात्विकस्वभावहोतेहैं कोईमध्यमजनराजसस्वभाव औकोईअधम लोगतामसस्वभावहोते हैं औरजोअत्यन्तमन्दभाग्यलोग अन्धपरम्परामेंपाख ण्डियोंकेसङ्गसे पाखण्डआचारकेअनुवर्तीहो शास्त्रविधानसे भिन्न लोकभयङ्कररूप तपस्याकरतेहैं तिनकेविषयमेंहेतुस्वरूप दम्भ औअहङ्कारसेसंयुक्तथाकामक हैं अभिलाषऔरागकहेअभिलषितवस्तुमे चित्तरञ्जनकेअनुरूप जोअधिकआश क्ति औबलकहेविषयोंकाआग्रह इससबसेयुक्तहो इसश्लोककाअर्थदूसरेश्लोककेसा थ है ५ शरीरस्थकहे शरीरकेकारणरूप देहमेवर्त्तमानजोपृथिवीअपतेजवायुआ

कर्षयन्तः शरीरस्थं भूतग्राममचेतसः मांचैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ६

## शाङ्करभाष्यं

दम्भाहङ्कारौताभ्यांसंयुक्तादम्भाहङ्कारसंयुक्ताः कामरागबलान्विताःकामश्चरागश्च कामरागौतत्कृतंबलङ्कामरागबलन्तेनान्विताः कामरागबलैर्न्विताः ५ कर्षयन्त इति कर्षयन्तःकृशीकुर्वन्तःशरीरस्थम्भूतग्रामङ्करणसमुदायमचेतसोऽविवेकिनोमा ञ्चैवतत्कर्मबुद्धिसाक्षिभूतमन्तःशरीरस्थंकर्षयन्तःमदनुशासनाकरणमेवमत्कर्ष णंतान्विद्ध्यासुरनिश्चयान्आसुरोनिश्चयोयेषान्तेआसुरनिश्चयास्तान्परिहरणार्थं विद्धीत्युपदेशः ६ आहाराणाञ्चरसस्निग्धादिवर्गत्रयरूपेणभिन्नानांयथाक्रमं

## आनन्दगिरिकृतटीका

नेनेति तत्राह एवमिति सत्वादिनिष्ठानांजन्तूनामवान्तरविशेषंप्रचुरत्वाप्रचुरत्वरू पंदर्शयतितत्रेत्यादिनाराजसानाञ्चतामसानाञ्चप्राचुर्य्यंप्रश्नद्वाराविवृणोति कथमि त्यादिना कामश्चकाम्यमानविषयोरागश्चतद्विषयभोगाभिलाषःतत्कृतंतन्निमित्तमि तियावत् ५ रजोनिष्ठान्प्राधान्येनप्रदर्श्यतमोनिष्ठान्प्राधान्येनदर्शयति कर्षयन्त इतिकथंशरीरादिसाक्षिणमीश्वरंप्रतिकृशीकरणंप्राणिनांप्रकल्प्यते तत्राह मदनुशा सनेति तेषांविपर्य्यासनिश्चयवतांपरिज्ञानंक्वोपयुज्यतेतत्राह परिहरणार्थमिति ६

## स्वामिकृतटीका

तामसेष्वपिपुनर्विशेषान्तरमाह अशास्त्रविहितमितिद्वाभ्यांशास्त्रविधिमजानन्तोऽपि केचित्प्राचीनपुण्यसंस्कारेणोत्तमाःसात्विकाएवभवन्ति केचिन्मध्यमाराजसाभव न्तिअधमास्तुतामसाभवन्ति येपुनरत्यन्तमन्दभाग्यास्तेगतानुगत्यापाषण्डसङ्गेनच तदाचारानुवर्त्तिनःसन्तोऽशास्त्रविहितंघोरंभूतभयङ्करंतपस्तप्यन्तेकुर्वन्ति तत्रहेत वःदम्भाहङ्काराभ्यांसंयुक्ताःतथाकामोऽभिलाषःरागश्चासक्तिर्बलमाग्रहःएतैरन्विताः सन्तस्तानासुरनिश्चयान्विद्धीत्युत्तरेणान्वयः ५ किञ्च कर्षयन्तइति शरीरस्थंआर म्भकत्वेनदेहेस्थितंभूतानांपृथिव्यादीनांग्रामंसमूहंकर्षयन्तोवृथैवोपवासादिभिःकृशंकु

## भाषा अनुवाद

कायप्रंचभूत तिनकोवृथाउपासकरनेसे दुर्बलकर औअन्तर्यामीरूपदेहकेबीचटि केउन्हयमेरेकोभी लङ्घनकरदुखदाईहो जोअविवेकीलोग तपकरतेहैं तिनकोआ सुरीनिश्चयकहेअतिक्रूरबुद्धिजानो तात्पर्य्ययहकिमेरीआज्ञालङ्घनकरनाही मुझे दुखदेनाहै ६ औरआहारादिभेदसे भी सात्विकादिगुणभेददेखानेके मनोरथसे

आहारस्त्वपिसर्वस्यत्रिविधोभवतिप्रियः यज्ञस्तपस्तथादानंतेषांभेदमिमंशृणु ७

## शाङ्करभाष्यं

सात्विकराजसतामसपुरुषप्रियत्वदर्शनमिहक्रियते यतोरस्यस्निग्धादिष्वाहारविशे षेष्वात्मनःप्रीत्यतिरेकेणलिङ्गेनसात्विकत्वंराजसत्वन्तामसत्वञ्चबुद्ध्वा रजस्तमोलि ङ्गानामाहाराणांपरिवर्जनार्थंसत्वलिङ्गानाञ्चोपादानार्थंतथायज्ञादीनामपि सत्वा दिगुणभेदेनत्रिविधत्वप्रतिपादनमिहराजसतामसान्बुद्ध्वाकथंनु नामपरित्यजेत्सा त्विकानेवानुतिष्ठेदित्येवमर्थमाह आहारस्त्विति आहारस्त्वपिसर्वस्यभोक्तुस्त्रिविधो भवति प्रियइष्टस्तथायज्ञस्तपस्तथादानंतेषामाहारादीनाम्भेदमिमंवक्ष्यमाणंशृणु ७ आयुरिति आयुश्चसत्वञ्चबलञ्चआरोग्यञ्चसुखञ्चप्रीतिश्चतासांविवर्द्धनाःआयु सत्वबलारोग्यसुखप्रीतिविवर्द्धनाःरस्यास्निग्धाःतेचरस्यारसोपेताःस्निग्धाःस्नेहवन्तः स्थिराश्चिरकालस्थायिनोदेहेहृद्याहृदयप्रियाआहाराःसात्विकस्येष्टाः भवन्ति ८

## आनन्दगिरिकृतटीका

उत्तरश्लोकद्वयस्यतात्पर्यमाह आहाराणामितिरस्यादिवर्गस्यसात्विकपुरुष प्रियत्वंकट्वादिवर्गस्य राजसप्रियत्वंयातयामादिवर्गस्यतामसप्रियत्वमिति दर्शनंक्व लोपयुज्यतेतत्राह रस्येतिश्लोकोत्तरार्द्धतात्पर्यमाह तथेति आहारत्रैविध्यवदिति यावत् कथमेतेषांप्रत्येकं त्रैविध्यन्तत्राह तेषामिति ७ सात्विकप्रीतिविषयमाह

## स्वामिकृतटीका।

न्तोऽचेतसोऽविवेकिनः माञ्चान्तर्यामितयाअन्तःशरीरस्थंदेहमध्येस्थितंमदाज्ञाल ङ्घनेनैवकर्षयन्तोयेतपश्चरन्तितानासुरनिश्चयान्आसुरोऽतिक्रूरोनिश्चयोयेषां तान् विद्धि ६ आहारादिभेदादपिसात्विकादिभेदंदर्शयितुमाह आहारस्त्वित्यादित्रयोद शभिः सर्वस्यापिजनस्यआहारोऽन्नादिःसतुयथायथंत्रिविधःप्रियोभवति तथायज्ञत पोदानानित्रिविधानिभवन्ति तेषांवक्ष्यमाणंभेदमिमंशृणु एतच्चराजसतामसाहारय ज्ञादिपरित्यागेनसात्विकाहारयज्ञादिसेवयासत्ववृद्धौयत्नःकर्त्तव्यइत्येतदर्थंकथ्यते७

## भाषाअनुवाद

इसश्लोकसे लेकरत्रयोदशश्लोकपर्य्यन्तकहतेहैं किसकलमनुष्योंकाआहार जोअन्न आदिसोभी यथायोगतीनप्रकारसेप्रियलगताहै औयज्ञतपतथादानादिभीतीनप्र कारकेहोतेहैं सोसबभेदसुनो किराजसतामसआहार औयज्ञदानादिपरित्यागक रके सतोगुणकीवृद्धिकेनिमित्त सात्विकआहार औयज्ञादिकेविषयमे जोयत्नक रना कर्त्तव्यहै यहभगवानकहतेहैं ७ अबपूर्वोक्तसात्विकादिआहारके तीन

आयु:सत्वबलारोग्य सुखप्रीतिविवर्द्धना: रस्याःस्निग्धाःस्थिराहृद्या आहाराः सात्विकप्रियाः ८ कट्वम्ललवणात्युष्णातीक्ष्णरूक्षविदाहिनःआहाराराजसस्येष्टादुःखशोकामयप्रदाः ९

## शाङ्करभाष्यं

कट्विति कटु अम्ललवणअत्युष्णः अतिशब्दःकट्वादिषुसर्वत्रयोज्याऽतिकटु रति तीक्ष्णइत्येवंकट्वम्ललवणात्युष्णातीक्ष्णरूक्षविदाहिनःएवम्विधाआहाराराजसस्येष्टा दुःखशोकामयप्रदा दुःखञ्चशोकञ्चआमयञ्चप्रयच्छन्तीति दुःखशोकामयप्रदाः ९

## आनन्दगिरिकृतटीका

रविशेषमुदाहरति आयुरिति आयुर्जीवनं सत्वञ्चित्तस्थैर्य्यंवीर्य्यंवाबलंकार्य्यकारण सामर्थ्यं आरोग्यन्नीरोगता सुखंअन्तराह्लादः प्रीतिःपरेषामपिसम्पन्नानांदर्शनात् परमोहर्षस्तासांविवर्द्धनाः विवर्द्धयन्तीति व्युत्पत्ते रसोपेतारसयितव्याःसरसाःदे हेचिरकालस्थायित्वंचिरशरीरोपकारहेतुत्वं ८ राजसप्रीतिविषयमाहार

## स्वामिकृतटीका

तत्राहारत्रैविध्यमाह आयुरिति त्रिभिः आयुर्जीवनं सत्त्वमुत्साहः बलंशक्तिः आरोग्यं रोगराहित्यं सुखं चित्तप्रसादः प्रीतिरभिरुचिः आयुरादीनांविवर्द्धनाः विशेषेण वृद्धिकराः तेचरस्यारसवन्तःस्निग्धाःस्नेहयुक्ताः स्थिरादेहेसारांशेनचि रकालावस्थायिनः हृद्याःदृष्टिमात्रादेवहृदयङ्गमा एवम्भूताआहारा भक्ष्यभोज्या दयःसात्विकप्रियाः ८ तथाकट्विति अतिशब्दः कट्वादिषुसप्तस्वपि सम्बध्यते

## भाषाअनुवाद

प्रकारभेद तीनश्लोकसेकहतेहैं किआयुकहेजीवन सत्वकहेउत्साह बलकहेसक्ति औआरोग्य सुखकहेचित्तकीप्रसन्नता प्रीतिकहेअभिरुचि इससेयहआयाकिआयु सत्वआदिकेबढ़ानेवाले औरस्यकहेरसयुक्त औस्निग्धकहेंचिकनेघृतयुक्तऔस्थि रकहेरसांशकेद्वारा चिरकालदेहमेरहनेवाले औहृद्यकहेदेखतेमात्र भोजनकी इच्छाहो ऐसेसुन्दरस्वरूप आहार भक्ष्यभोज्यआदि सात्विकरूप सात्विकस्वभा व पुरुषोंको प्रियहोतेहैं ८ औरअतिकटुनींबआदिऔअतिअम्लऔअतिल वणऔअतिउष्णकहेगरमऔअतितीक्ष्णमरिचादिऔअतिरूक्षऔअतिउग्ररसों आदि येसबराजसस्वभावमनुष्यको प्रियहोते हैं परन्तु येसबवस्तु दुखकहे भोज नसमयमे हृदयकोसन्तापआदि औशोककहे भोजनकेअनन्तर अप्रसन्नता औ आमयकहेरोग येसबखानेवालेकोदेतेहैं क्योंकि येसबदुखशोकमयहैं ९

यातयामंगतरसंपूतिपर्य्युषितञ्चयत् उच्छिष्टमपिचामेध्यंभोजनंतामसप्रियं १०

शाङ्करभाष्यं

यातयाममिति यातयामंमन्दपक्वंनिर्वीर्यस्यगतरसेनोक्तत्वात् गतरसंरसवियुक्तंपूति दुर्गन्धिपर्युषितञ्चपक्वंसत्रात्रन्तरितञ्चयत् उच्छिष्टमपिचभुक्तशिष्टमप्यमेध्यम यज्ञार्हंभोजनमीदृशन्तामसप्रियं १० अथेदानींयज्ञस्त्रिविधउच्यते अफलेति अफ लाकांक्षिभिरफलार्थिभिर्यज्ञोविधिदृष्टःशास्त्रचोदनादृष्टोयोयज्ञइज्यते निर्वर्त्त्यते यष्टव्यमेवेति यज्ञस्वरूपनिर्व्वर्त्तनयेवकार्यमितिमनःसमाधाय नानेनपुरुषार्थोमम कर्त्तव्यइत्येवंनिश्चित्य ससात्त्विकोयज्ञउच्यते ११ अभिसन्धायेति अभिस

आनन्दगिरिकृतटीका

विशेषं दर्शयति कट्विति कटुकन्तिक्तःकटुकस्यतीक्ष्णशब्देनोक्तत्वात् रुक्षोविस्नेहः विदाहीसन्तापकः अतिशब्दस्यसर्व्वयोजनामेवाभिनयति अति कटुरिति दुःखंता त्कालिकीपीडा इष्टवियोगजंदुःखं शोकः आमयोरोगः ९ तामसप्रियमाहा रमुदाहरति यातयाममिति ननु निर्वीर्यं यातयाममुच्यते न पुनःत्वाभिपक्वमिति नेत्याह निर्वीर्य्येति १० हानादानार्थं आहारत्रैविध्यमेवंविभज्य क्रमप्राप्तंय

स्वामिकृतटीका ।

तेनअतिकटुर्निम्बादिःअत्यम्लोऽतिलवणोऽत्युष्णश्चप्रसिद्धःअतितीक्ष्णोमरिचादिःअ तिरूक्षःकंगुकोद्रवादिःअतिविदाही सर्षपादिःअतिकट्वादय आहाराराजसस्ये ष्टाःप्रियाः दुःखंतात्कालिकहृदयसन्तापादि शोकः पश्चाद्भाविदौर्म्मनस्यं आमयोरो गःएतान्प्रददति प्रयच्छन्तीति तथा ९ यातयाममिति यातोयामःप्रहरोयस्य पक्वस्यौदनादेःतद्यातयामं शैत्यावस्थांप्राप्तमित्यर्थः गतरसंनिष्पीडितसारं पूतिदु र्गन्धंपर्युषितं दिनान्तरपक्वं उच्छिष्टंअन्यभुक्तावशिष्टं अमेध्यंअभक्ष्यंकलञ्जादिए वम्भूतं भोजनंभोज्यं तामसस्यप्रियं १० यज्ञोऽपि त्रिविधस्तत्रसात्विकं यज्ञमा

भाषा अनुवाद

औरजोअन्न यातयामकहे जिस्को एकपहरवीतगया औठंढाहोगया औगतरस कहेजिसकारससूखगया औपूतिकहे दुर्गन्धयुक्तजोहै औपर्युषितकहे बासीअन्न औउच्छिष्टकहे दूसरेकाजूठा औअमेध्यकहेअपवित्र अभक्ष्यमांसआदि ऐसेआ हार तामसस्वभावमनुष्योंको प्रियलगतेहैं १० औयज्ञभी तीनप्रकारहैं तिनके

अफलाकांक्षिभिर्यज्ञोविधिदिष्टोयइज्यते यष्टव्यमेवेतिमनःसमाधायससात्त्विकः ११
अभिसन्धायतुफलंदम्भार्थमपिचैवयत् इज्यतेभरतश्रेष्ठ तंयज्ञंविद्धिराजसं १२
विधिहीनमसृष्टान्नंमन्त्रहीनमदक्षिणं श्रद्धाविरहितंयज्ञंतामसंपरिचक्षते १३

शाङ्करभाष्यं

न्धायोद्दिश्यफलंदम्भार्थमपि चैवयत्इज्यते भरतश्रेष्ठ तंयज्ञंविद्धिराजसं १२
विधिहीनमिति विधिहीनं यथाचोदितविधिविपरीतं असृष्टान्नं ब्राह्मणेभ्योन
सृष्टमन्नंयस्मिन्यज्ञेसोऽसृष्टान्नस्तमसृष्टान्नं मन्त्रहीनंमन्त्रतः स्वरतोवर्णतश्चवियुक्तं

आनन्दगिरिकृतटीका

ज्ञत्रैविध्यंकथयति अथेति तत्रसात्त्विकंयज्ञंज्ञापयति अफलेति फलाभिसन्धिं वि
नायज्ञस्वरूपमेवशास्त्रव्यवस्थितिबुद्ध्याशास्त्रतोनुष्ठीयमानोयज्ञः सात्त्विकइत्यर्थः ११
राजसंयज्ञंहानार्थंदर्शयति अभिसन्धायेति स्वर्गाद्युद्दिश्य धार्मिकत्वख्यापनार्थ
ञ्चयद्यजनंक्रियते तद्यज्ञंराजसानिर्दिष्टं त्याजग्रसवगच्छेत्यर्थः १२

स्वामिकृतटीका

ह अफलाकांक्षिभिरिति त्रिभिः फलाकांक्षारहितैःपुरुषैर्विधानादिष्टआवश्यक
तया विहितोयोयज्ञइज्यते अनुष्ठीयतेससात्त्विकोयज्ञःकथमिज्यते यष्टव्यमेवेतिय
ज्ञानुष्ठानमेव कार्य्यंनान्यत्फलंसाधनीयमित्येवंमनःसमाधायैकाग्रंकृत्वेत्यर्थः ११
राजसंयज्ञमाह अभिसन्धायेति फलमभिसन्धायउद्दिश्ययस्त्विज्यते यज्ञःक्रिय
तेदम्भार्थञ्च स्वमहत्त्वख्यापनायतंयज्ञंराजसंविद्धि १२ तामसंयज्ञमाह विधीति

भाषाअनुवाद

वोचमेसात्त्विकजोयज्ञ सोतीनश्लोकसेकहतेहैं किजोपुरुष फलकी आकांक्षारहि
तअवश्यकर्त्तव्यहैयहजानियज्ञकरते सोसात्त्विककहावतीहै औवेमनुष्यकिसका
रणसेयज्ञअनुष्ठानकरतें इसपरकहतेहैं कियज्ञकर्म्मकरनाहीचाहियेऔरकोई
फलकेअर्थ कर्त्तव्यनहीं है ऐसाविचारि मनकोएकाग्रकरके यज्ञकरतेहैं ११
राजस यज्ञकहतेहैं किहेभरतश्रेष्ठअर्जुन फलकीकामनापूर्वक अपनेमहत्व
को जनावनेकेअर्थ जोयज्ञकीजाय सोराजस यज्ञजानो १२
अबतामसयज्ञकहतेहैं किविधिहीन औअसृष्टान्नकहे जोयज्ञकेअर्थ अन्नब्रा
ह्मणनिमित्तनियवैश्यसे नहींमिलाहो सोअन्न औमन्त्रहीन औदक्षिणादानरहितहो
तथाश्रद्धावर्जित यज्ञको तामसयज्ञ कहतेहैं १३ तपस्याकोभी सात्त्विकादिभेद

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवं ब्रह्मचर्य्यमहिंसाचशारीरं तपउच्यते १४

शाङ्करभाष्य।

मन्त्रहीनंस्वरतोवर्णतोवायथोक्तदक्षिणारहितं यज्ञंतामसंपरिचक्षते तमोनिर्वृत्तंकथयन्ति १३ अथेदानीं तपस्त्रिविधमुच्यते देवेति देवाश्चद्विजाश्चगुरवश्चप्राज्ञाश्चदेवद्विजगुरुप्राज्ञास्तेषांपूजनंशौचमार्जवंऋजुत्वं ब्रह्मचर्य्यमहिंसाचशरीरनिर्वर्त्यंशारीरंशरीरप्रधानैःसर्वैरेवकार्यकारणैः कर्त्रादिभिःसाध्यं शारीरन्तपउच्यते १४ यच्चैते तस्यहेतवइति वक्ष्यति अनुद्वेगेति अनुद्वेगकरंप्राणिनामदुःखकरंवाक्यं सत्यंप्रियंहितञ्चयत्प्रियहिते दृष्टादृष्टार्थे अनुद्वेगकरत्वादिभिर्धर्मैर्वाक्यं विशिष्यते विशेषणधर्मसमुच्चयार्थश्चशब्दः परप्रत्ययनार्थंप्रयुक्तस्यवाक्यस्यसत्यप्रियहितानुद्वेगकरत्वादीनामन्यतमेनद्वाभ्यांत्रिभिर्वाहीनतास्यात्यदितद्वाङ्मयन्तपस्तन्त

आनन्दगिरिकृतटीका

तामसंयज्ञंव्याख्यानार्थमेवोदाहरति विधीति १३ सात्त्विकादिभावंनिरूपयितुंसर्व्वस्यतपसःस्वरूपंत्रिविधंनिरूपयति अथेति तत्रशारीरन्तपोनिर्दिशति देवेति देवाब्रह्मविष्णुशिवादयःद्विजाःपूज्यत्वात्द्विजोत्तमाःगुरवःपित्रादयःप्राज्ञाःप्रसिद्धाविदितवेदितव्यास्तेषांपूजनंप्रणामशुश्रूषादिशौचंमृज्जलाभ्यांशरीरशोधनंआर्जवमृजुत्वंविहितप्रतिषिद्धयोरेकरूपप्रवृत्तिनिवृत्तिमत्वं ब्रह्मचर्य्यंमैथुनासमाचरणं अहिंसाप्राणिनामपीडनं शरीरमात्रस्यनिर्वर्त्तकत्वमस्यतपसो नसंभवतीति मत्वा विशिनष्टि शरीरेति १४ कथंकर्त्रादिसाध्यत्वेतपसःशरीरत्वं शारीरत्वेवाकथंक

स्वामिकृतटीका

विधिहीनंशास्त्रोक्तविधिशून्यंअसृष्टान्नंब्राह्मणादिभ्योऽसृष्टंननिष्पादितमन्नंयस्मिंस्तं मन्त्रहीनंयथोक्तदक्षिणारहितं यद्धाशून्यञ्चयज्ञंतामसंपरिचक्षतेकथयन्तिशिष्टाः १३ तपसःसात्विकादिभेदंदर्शयितुंप्रथमंतावच्छारीरादिभेदेनतस्यत्रैविध्यमाह देवेत्यादित्रिभिः तत्रशारीरमाह देवेति प्राज्ञा गुरुव्यतिरिक्ता अन्येऽपितत्वविदः देवब्राह्मणादिपूजनशौचादिकञ्च शारीरं शरीरनिर्व्वर्त्यं तपउच्यते १४

भाषाअनुवाद

देखाने केमानससे प्रथमशरीरादिकेभेद क्रमसेत्रिविधहैं सोतीनश्लोकसे कहते हैं किप्राज्ञकहेगुरुजनसेभिन्न औरऔरतत्वज्ञानी औबाह्मणतथागुरुजनकीपूजा औशौचआदिक्रिया इनसबको शिष्टपुरुषशरीरसम्पादित तपस्याकहतेहैं १४

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्। स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते १५

## शाङ्करभाष्यं

यासत्यवाक्यस्येतरेषामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनतायां नवाङ्मयं तपस्तं तथाप्रियवाक्यस्यापीतरेषामन्यतमेनद्वाभ्यां त्रिभिर्हीनस्य नवाङ्मयतपस्त्वं तथाहितवाक्यस्यापीतरेषामन्यतमेनद्वाभ्यां त्रिभिर्वा वियुक्तस्य नवाङ्मयतपस्त्वं किंपुनस्तत्तमोयत् सत्यं वाक्यमनुद्वेगकरं प्रियं हितं च यत् तत्परमतपोवाङ्मयं यथाशान्तोभगवत्सस्वाध्यायं योगंवानुतिष्ठतथातेश्रेयोभविष्यतिस्वाध्यायाभ्यसनञ्चैवयथाविधिवाङ्मयंतपउच्यते १५

## आनन्दगिरिकृतटीका।

कोदृिसाध्यत्वमित्याशंक्याह यज्ञेतिसम्प्रतिवाङ्मयं तपोव्यपदिशति अनुद्वेगकरमिति सत्यंयथादृष्टार्थवचनं प्रियं श्रुतिसुखं हितं परिणामपथ्यं प्रियहितयोर्विधान्तरेण विभागमाह प्रियेतिकथमत्र विशेषणविशेष्यत्वं तदाह अनुद्वेगेति विशेषणानांधर्माणामनुद्वेगकरत्वादीनांविशेषणवाक्येनसमुदितानांपरस्परमपिसमुच्चयद्योतीचकार इत्याह विशेषणेति किमितिवाक्यमेतैर्विशेष्यते किमितिवातेषांमिथःसमुच्चयस्तत्राह परेतियद्यपिविधायकवाक्यमात्रस्याविशेषितस्यवाङ्मयतपस्त्वानुपपत्तिस्तथापिसत्यवाक्यस्यवाक्यविशेषणान्तराभावेपिवाङ्मयतपस्त्वमित्याशंक्याह तथेतितथापिप्रियवाक्यमात्रस्यतथात्वंस्यादित्याशंक्याह तथेति तथापिपरिणामपथ्यंवाक्यमात्रन्तथाभविष्यति नेत्याह तथाहितेति कोदृक्तर्हितयोर्वाङ्मयत्वमिति प्रश्नपूर्वकंविशदयति किंपुनरिति विशिष्टेवाङ्मयेतपसिदृष्टान्तमाह यथेति प्रांसुखत्वंपवित्रपाणित्वमित्यादि विधानमनतिक्रम्यस्वाध्यायस्यावर्त्तनमपि वाङ्मयेतपस्यान्तर्भवतीत्याह स्वाध्यायेतिवाक्प्राचुर्येणप्रस्तुताश्मिन्निति वाङ्मयंवाक्प्रधानमित्यर्थः १५ मानसन्तपः

## स्वामिकृतटीका

वाचिकंतपआह अनुद्वेगकरमिति उद्वेगंभयं नकरोतीत्यनुद्वेगकरं वाक्यंसत्यंश्रोतुःप्रियं हितञ्चपरिणामेसुखकरं स्वाध्यायमभ्यसनंवेदाभ्यासश्चवाङ्मयं वाचानिर्वर्त्त्यं तपः १५ मानसंतपआह मनइति मनःप्रसादःस्वच्छतासौम्यत्वमक्रूरता

## भाषाअनुवाद

औरवचनसम्बन्धी तपस्याकहतेहैं किकोईमनुष्य जिनसेंभयनहो ऐसेअनुद्वेगकरवचन औसत्य तथाश्रोताको प्रियलगें औ परिणामकहे अन्तकोसुखदाईहों औरवेदअभ्यासकरनेवाले वचनोकोभी वाङ्मतपस्या कहतेहैं १५

मनःप्रसादःसौम्यत्वंमौनमात्मविनिग्रहः भावसंशुद्धिरित्येतत्तपोमानसमुच्यते १६

शाङ्करभाष्य

मनइति मनःप्रसादोमनसःप्रशान्तिः स्वच्छतापादनं मनसःप्रसादसौम्यत्वंयत् सौमनस्यमाहुर्मुखादिसंप्रसादकार्य्योन्तःकरणस्यवृत्तिःमौनंवाक्संयमोपि मनःसंयमपूर्व्वकोभवति इति कार्य्येणकारणमुच्यते मनःसंयमोमौनमिति आत्मविनिग्रहोमनोनिरोधः सर्वतःसामान्यरूपआत्मविनिग्रहोवाग्विषयस्यैवमनसः संयमोमौनमिति विशेषः भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्वं भावसंशुद्धिरित्येतत्तपोमानसमुच्यते १६ यथोक्तं कायिकंवाचिकंमानसञ्च तपस्तप्तंनरैः सत्वादिभेदेनकथंत्रिविधंभवतीत्युच्यते श्रद्धयास्तिक्यबुद्ध्यापरयाप्रकृष्टयातप्तमनुष्ठितंतपस्तत्प्रकृतंत्रिविधंत्रिःप्रकारंअधिष्ठानंनरैरनुष्ठातृभिरफलाकाङ्क्षिभिः फलाकांक्षारहितैर्युक्तैः समाहितैर्यदीदृशन्तपस्तत् सात्विकंसत्वनिर्वृत्तंपरिचक्षते कथयन्ति शिष्टाः १७ सत्कारेति सत्कारःसाधुकारःसाधुरयंतपस्वीब्राह्मणःइत्येवमर्थंमानोमान

आनन्दगिरिकृतटीका

संक्षिपतिमनइतिप्रशान्तिफलमेवव्यनक्तिस्वच्छतेतिमनसःस्वाच्छ्यमनाकुलतानैश्चिन्त्यमित्यर्थः सौमनस्यंसर्वेष्वोहितैषित्वमहिताचिन्तनञ्चतत्कथंगम्यते तत्राह मुखादीति तस्यस्वरूपमाह अन्तःकरणस्येति ननु मौनंवाङ्नियमनंवाङ्मयेतपस्यन्तर्भवति तत्कथंमानसेतपसिव्यपदिश्यते तत्रवाचःसंयमस्य कार्यत्वान्मनःसंयमस्यकारणत्वात्कार्य्येणकारणग्रहणात् मानसेतपसिमौनमुक्तमित्याह वागिति यद्वामौनंमुनिभावोमननंआत्मनोमनसोविनिग्रहोनिरोधः नन्वेवंसौमनस्यमनोनिग्रहस्यचमनःसंयमत्वेनैकत्वात् पौनरुक्त्यंनेत्याह सर्वतइति भावस्यहृदयस्यसंशुद्धीरागादिमलविकलतेतिव्याचष्टे परैरिति मानसंमनसाप्रधानेन निर्वर्त्यमित्यर्थः १६

स्वामिकृतटीका

मौनंमुनेर्भावोमननमित्यर्थः आत्मनोमनसोविनिग्रहोविषयेभ्यःप्रत्याहारः भावसंशुद्धिर्व्यवहारे मायाराहित्यमित्येतन्मानसंतपः १६ तदेवंशरीरवाङ्मनोभि

भाषाअनुवाद

अवमानसिक तपस्या कहतेहैं किमनकी निर्मलता औसौम्यत्वकहे अक्रूरता औमौनकहे मुनिधर्म्म जोमननकरना आत्मविनिग्रहकहे विषयोंसे इन्द्रियोंकोनिग्रह जोरोकना औभावसंशुद्धिकहे व्यवहारमे निष्कपटरहना येसबमानसिकतपस्या स्वरूप कहेजातेहैं १६ शरीरवचनमनकेद्वारा तीनप्रकारतपदेखा

श्रद्धयापरयातप्तंतपस्तत्त्रिविधंनरैः अफलाकांक्षिभिर्युक्तैःसात्त्विकंपरिचक्षते १७
सत्कारमानपूजार्थंतपोदम्भेनचैवयत् क्रियतेतदिहप्रोक्तं राजसंचलमध्रुवं १८

## शाङ्करभाष्य

नंप्रत्युत्थानाभिवादनादिस्तदर्थं पूजापादप्रक्षालनार्चनाशयितृत्वादितदर्थञ्चतपः सत्कारमानपूजार्थंदम्भेनैवचक्रियतेतपस्तदिह प्रोक्तं कथितं राजसञ्चलकादाचित्क फलत्वेनाध्रुवं १८ मूढेति मूढग्राहेण विवेकनिश्चयेनात्मनःपीड़या क्रियते

## आनन्दगिरिकृतटीका।

त्रिविधस्यतपसोयथासम्भवंसात्त्विकादिभावेनतत्त्रैविध्यमाकांक्षाद्वारानिक्षिप ति यथोक्तमिति तत्रैवअधिष्ठानंदेहवाङ्मनोनिर्वर्त्यमित्यर्थःसमाहितैः सिद्ध्यसिद्ध्यो र्निर्विकारैरिति यावत् १७ राजसन्तपोनिर्दिशति सत्कारेति साधुकार मेवस्फोरयति साधुरिति दम्भेनचैवनास्तिक्येनकेवलधर्मध्वजित्वेनेत्यर्थः तदिहप्रो क्तमस्मिन्नेवलोकेफलप्रदमित्यर्थःकादाचित्कफलत्वंक्षणिकफलत्वमध्रुवमनियतमनै कान्तिकफलमितियावत् १८ तामसन्तपः संगृह्णाति मूढेति मूढोत्थन्ता

## स्वामिकृतटीका।

निर्वर्त्यंत्रिविधंतपोदर्शितं तस्यत्रिविधस्यापितपसःसात्त्विकादिभेदेनत्रैविध्यमाह श्रद्धयेत्यादित्रिभिः तत्त्रिविधमपितपःश्रेष्ठयाश्रद्धयाफलाकांक्षाशून्यैर्युक्तैरेकाग्रचि त्तैर्नरैस्तप्तं सात्त्विकं कथयन्ति १७ राजसमाह सत्कारेति सत्कारःसाधुकारः साधुरयमितितापसोऽयमित्यादिवाक्पूजा मानःअभ्युत्थानाभिवादनादिर्दैहिकीपू जा पूजाअर्थलाभादिः एतदर्थंदम्भेनचतपःक्रियते अतएवचलमनियतं अध्रुवञ्च क्षणिकं यदेवम्भूतंतपस्तदिह राजसंप्रोक्तं १८ तामसतपआह मूढेति मूढग्राहे

## भाषाअनुवाद

यासोईतीनप्रकारतपजोसात्त्विकादिगुणभेदसेभी तीनप्रकारहै सोतीनश्लोकसे क हतेहैं किजोउत्कृष्टश्रद्धासेफलकी कामनारहित औएकाग्रचित्तहो मनुष्यलोग त्रिविधप्रकारकरते तिनकोपण्डितलोग सात्त्विककहतेहैं १७ राजसकहतेहैं कि जोसत्कार अर्थात् यहपुरुषसाधुऔयहतपस्वी ऐसेप्रतिष्ठावचनोंसे जोपूजाऔमा नकहेउनकोदेख उठखड़होनाऔप्रणामकरनाआदिजोदैहिकपुजा औपूजाकहे अर्थलाभादि इनसबकेनिमित्त औअपनेमहत्वके प्रकाशकेअर्थ कीजाय जोअनि त्य औक्षणिकरूप तपस्या उसीको इसलोकमे शिष्टलोग राजस कहतेहैं १८

मूढग्राहेणात्मनोयत्पीड़याक्रियतेतपः परस्योत्सादनार्थंवातत्तामसमुदाहृतं १९
दातव्यमितियद्दानंदीयतेऽनुपकारिणे देशेकालेचपात्रेचतद्दानंसात्विकंस्मृतं २०

## शाङ्करभाष्यं ।

तत्तपःपरस्यउत्सादनार्थं विनाशायवा तत्तामसन्तप उदाहृतं १९ इदानीन्दानभेदमुच्यते दातव्यमिति दातव्यमितिएवंमनःकृत्वायद्दानंदीयतेऽनुपकारिणेप्रत्युपकारासमर्थाय समर्थायादिनिरपेक्षन्दीयते देशेपुण्येकुरुक्षेत्रादौ कालेसंक्रान्त्यादौ पात्रेचषडङ्गविद्वेदपारगइत्यादौ आचारनिष्ठायइत्यर्थः तद्दानंसात्विकंस्मृतं २०

## आनन्दगिरिकृतटीका

विवेकी तस्यग्रहोनामाग्रहाभिनिवेशस्तेनेत्याह अविवेकेति आत्मनःस्वस्यदेहादेरित्यर्थः १९ क्रमप्राप्तंदानस्यगुणनिमित्तभेदमाह इदानीमिति दातव्यमित्येवंमनःकृत्वादानमेवमयाभाव्यंनफलमित्यभिसन्धायेत्यर्थः २० राजसताम

## स्वामिकृतटीका

णाविवेककृतेनदुराग्रहेणात्मनःपीड़यायत्तपःक्रियते परस्योत्सादनार्थंवाअन्यस्यविनाशार्थमभिचाररूपं तत्तामससुदाहृतंकथितं १९ पूर्वंप्रतिज्ञातमेव दानस्यत्रैविध्यमाह दातव्यमिति दातव्यमेवेत्येवंनिश्चयेन यद्दानंदीयते अनुपकारिणेप्रत्युपकारासमर्थायदेशेकुरुक्षेत्रादौकालेग्रहणादौपात्रेचेतिदेशकालसाहचर्यात् सप्तमीप्रयुक्तापात्रेपात्रभूतायतपःश्रुतादिसम्पन्नायब्राह्मणायेत्यर्थः यद्वाचतुर्थ्येवैपापात्रेइतिकृजन्तंरक्षकाय इत्यर्थः सहिसर्वस्मादापद्गणाद्दातारंपातीतिपाता तस्मैयद्देवंभूतंदानंतत् सात्विकं २० राजसंदानमाह यत्त्विति कालान्तरेऽयंमांप्रत्युपकरि

## भाषाअनुवाद

तामसतपस्या कहतेहैं किअविवेकसे कुचेष्टाकर शरीरकोक्लेशदेयकिम्बाऔर किसीके विनाशदुखकेअर्थ अभिचारस्वरूपजोतपतिसकोपण्डितजनतामसतपकहतेहैं १९ पूर्वकथितअङ्गीकृत दानके विषयमेभी सात्विकादि तीनप्रकार कहतेहैं किदानकरनाहीं चाहियेऐसीनिश्चयसे जोदानऔरउससेप्रत्युपकारनहो अर्थात्अपनाउपकार नचाहै नवहउपकारकेजोग्यहो जिसकोदानदेय औरकुरुक्षेत्रकाशीप्रयागतीर्थस्थानमे तथाग्रहणसंक्रान्तिपर्वआदिमे औरवेदशास्त्रयुक्तब्राह्मणोंकोअथवायहपात्रसकलआपदोंसे दाताकीरक्षाकरैएवंभूतपात्राकहेपात्रको जोदानदियाजाय उसीकोपण्डितजनसात्विकदानकहतेहैं २० राजसदानकहते

यत्तुप्रत्युपकारार्थंफलमुद्दिश्यवापुनः दीयतेचपरिक्लिष्टंतद्दानंराजसंस्मृतं २१
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते असत्कृतमवज्ञातं तत्तामसमुदाहृतं २२

## शाङ्करभाष्यम्।

यत्विति यत्तुदानंप्रत्युपकारार्थंकालेत्वयंमांप्रत्युपकरिष्यतीत्येवमर्थं फलंवास्यदानस्यमेभविष्यत्युद्दिष्टमिति तदुद्दिश्यपुनर्दीयतेचपरिक्लिष्टंखेदसंयुक्तंतद्राजसंस्मृतं २१
अदेशेति अदेशकालेऽपुण्यदेशेम्लेच्छाशुच्यादिसङ्कीर्णेअकालेपुण्यहेतुत्वेनाऽप्रख्यातेसंक्रान्त्यादिविशेषरहिते अपात्रेभ्यश्चमूर्खतस्करादिभ्योदेशादिसंयतौवा असत्कृतंप्रियवचनपादप्रक्षालनपूजादिरहितमवज्ञातं पात्रपरिभवयुक्तञ्चतद्दानं तामससमुदाहृतं २२ यज्ञदानतपःप्रभृतीनां साङ्गुण्यकरणायायमुपदेशउ

## आनन्दगिरिकृतटीका।

सदानविभजनं स्पष्टार्थं २१ विहितानां कर्मणांप्रमादयुक्तो वैगुण्ये कथंपरिहारःस्यादित्याशंक्याह यज्ञेति ओमिति ब्रह्मेत्यादिश्रुतेः ओमिति तावद्ब्रह्मणो नामनिर्देशः तत्त्वमसीतिश्रुतेःतदित्यपि ब्रह्मणोनामनिर्देशःसदेवसोम्येदमितिश्रुतेः सदित्यपि तस्यनामेतिमत्वाह ओमिति कथंनिर्देशेनतेषांविधानमित्याशंक्याह निर्देशेति यज्ञादीनांवैगुण्यप्रतीतिकालेयथोक्तनामान्यतमोच्चारणादवैगुण्यंसिध्यतीतिभावः कर्मसाद्गुण्यकारणंत्रिविधनामस्तौति ब्राह्मणाइति २२ । २३

## स्वामिकृतटीका

ष्यतीत्येवमर्थंफलंवास्वर्गादिकमुद्दिश्ययत्पुनर्दानंदीयतेपरिक्लिष्टं चित्तक्लेशयुक्तं यथाभवत्येवंभूतंतत्दानंराजससमुदाहृतंकथितं २१ तामसंदानमाह अदेशेति अदेशेऽशुचिस्थानेअकालेअशौचादिसमये अपात्रेभ्योविधनटादिभ्योयद्दानंदीयतेतत्देशकालपात्रसम्पत्तावपिअसत्कृतं पादप्रक्षालनादिसत्कारशून्यं अवज्ञातंपात्रतिरस्कारयुक्तं एवम्भूतं तामससमुदाहृतं २२

## भाषाअनुवाद

है किसमयकेअनुसार यहमेराप्रत्युपकारकरेगाइससे अथवास्वर्गफलभोगकेअर्थचित्तक्लेशयुक्तकहदेतेसमयकष्टहोऐसाजोदानतिसकोशिष्टलोगराजसकहते २१
अबतामसदानकहतेहैं किअदेशकहे अपवित्रस्थानमेअकालकहे अशौचादिसमयमे औअपात्रकहे चोरलबारनाचनेगावनेनकलकरनेवालोंको जोदानअथवादेशकालविद्यावानकेरहतेभी असत्कृतकहे पादप्रक्षालनआदिसत्काररहित या अनादरसेजोदानसुपात्रकोभीदियाजाय तिसकोशिष्टलोग तामसकहतेहैं २२

ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधःस्मृतः ब्राह्मणास्तेनवेदाश्च यज्ञाश्च विहितापुरा २३

शाङ्करभाष्यं

च्यते ओंतत्सदिति एषनिर्देशः निर्दिश्यतेऽनेनेति निर्देशः त्रिविधोनामनिर्देशो ब्रह्मणःस्मृतश्चिन्तितोवेदान्तेषु ब्रह्मविद्भिर्ब्राह्मणास्तेन निर्देशेनत्रिविधेनवेदाश्च यज्ञाश्चविहितानिर्मिताःपुरा पूर्वमिति २३ निर्देशस्तुत्यर्थमुच्यते तस्मादोमि

स्वामिकृतटीका

नन्वेवंविचार्यमाणेसर्वमपियज्ञतपोदानादि राजसतामसप्रायमेवेति व्यर्थोय ज्ञादिप्रयासइत्याशंक्य तथाविधस्यापिसात्विकत्वोपपादनप्रकारंदर्शयितुमाह ओमि ति ओंतत्सदिति त्रिविधोब्रह्मणःपरमात्मनोनिर्देशोनाम्नाव्यपदेशःस्मृतःशिष्टैःत त्रतावदोमिति निष्ठब्रह्मेत्यादिश्रुतिप्रसिद्धेरोमिति ब्रह्मणोनामजगत्कारणत्वेनाति प्रसिद्धत्वात् विदुषांअपरोक्षत्वाच्चतच्छब्दोऽपिब्रह्मणोनामपरमार्थसत्वसाधुत्वप्रशस्त त्वादिभिःसच्छब्दोऽपिब्रह्मणोनाम सदेवसौम्येदमग्रआसीदित्यादिश्रुतेः अयंत्रि विधोऽपिनामनिर्देशोविगुणमपि सगुणंकर्त्तुंसमर्थइत्याशयेनस्तौति तेनत्रिविधेन

भाषाअनुवाद

जोकहोकि ऐसाविचारकरनेसे प्राय सबयज्ञऔतप तथादानआदि राजस औतामससमानहोते हैं इसकारणयज्ञआदिकर्म्ममे यत्नकरनाव्यर्थहै इसशङ्काप र पूर्वोक्तयज्ञदानआदि बहुधाराजसतामसहोनेसेभी सात्विकत्वप्रतिपादनकीउ पाय देखायकरकहतेहैं कि ओंतत्सत् येजोतीनशब्द सोपरमात्माकेनामके अनु रूपनिर्दिष्टहैं इनकेमध्यमे अकारउकारऔमकारका स्वरूप जोओंकार सोब्रह्म है यहश्रुतियोंसेप्रसिद्धहै सोओंशब्द ब्रह्महींकानामहै औरजगत्कारणहेतुसे ज्ञानियोंकोअपरोक्षहै तत्भीब्रह्मऔपरमार्थऔविद्यमानत्वऔसाधुत्वऔप्रशस्त त्वादिप्रयुक्त औरहेसौम्य इसजगतकीसृष्टिकेपूर्वसत्स्वरूपथैया ऐसेश्रुतियोंकेक हनेसेसत्शब्दभीब्रह्महींकानामहै औरयह त्रिविधनामकहनेसे निकृष्टकोभीउ त्कृष्टकरनेकों नामसमर्थहैं इसअभिप्रायसे प्रशंसाकरतेहैं किविधातानेसृष्टि केप्रथम इसपरमात्माके त्रिविधनामकाउदेशकर ब्राह्मणऔ वेदऔयज्ञकानिर्मा णकिया अथवाजोपरमात्माकायहतीनप्रकारनिर्देश सोई परमात्मानेब्राह्मणअति पवित्रको सृष्टकिया इससे ओंतत्सत् यहकहना अतिप्रशस्त कहेंउत्तमहै २३

तस्मादोमित्युदाहृत्ययज्ञदानतपःक्रियाः प्रवर्त्तन्तेविधानोक्ताःसततंब्रह्मवादिनां २४
तदित्यनभिसन्धायफलंयज्ञतपःक्रियाः दानक्रियाश्वविविधाःक्रियन्तेमोक्षकांक्षिभिः २५

शाङ्करभाष्यं

त्युदाहृत्योच्चार्य्ययज्ञदानतपःक्रियाःयज्ञादिस्वरूपाःक्रियाःप्रवर्त्तन्ते विधानोक्ताःशास्त्रचोदिताः सततंसर्व्वदा ब्रह्मवादिनांब्रह्मवदनशीलानां २४ तदिति तदित्यनभिसन्धाय तदितिब्रह्माभिधानमुच्चार्य्य अनभिसन्धायचकर्मणःफलंयज्ञतपःक्रियाःयज्ञक्रियास्तपःक्रियाश्च यज्ञतपःक्रियाश्चदानक्रियाश्वविविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः क्रियन्ते निर्व्वर्त्त्यन्ते मोक्षकांक्षिभिः २५

आनन्दगिरिकृतटीका

पूर्व्वंसर्गादौनिर्माणञ्चप्रजापतिकर्त्तृकं यस्माद्ब्राह्मणादीनांकारणंयस्माच्चब्रह्मणोनिर्देशस्तस्मादित्युपसंहरति तस्मादिति ब्रह्मवादिनामित्यत्रब्रह्मवेदः २४
ओंशब्दस्य विनियोगमुक्त्वा तच्छब्दस्य विनियोगमाह तदित्यादिना २५

स्वामिकृतटीका

ब्रह्मणोनिर्देशेनब्राह्मणाश्ववेदाश्वयज्ञाश्वपुरासृष्ट्यादौविहिताविधानानिर्म्मिताः सगुणीकृताइतिवा यद्वायस्यायंत्रिविधोनिर्देशस्तेनपरमात्मना ब्राह्मणादयः पवित्रतमाःसृष्टाश्व तस्मात्तस्यायंनिर्देशोऽतिप्रशस्तइत्यर्थः २३ इदानींप्रत्येकमोङ्कारादीनां प्राशस्त्यंदर्शयिष्यन्नोंकारस्यतदेवाह तस्मादिति यस्मादेवंब्रह्मणोनिर्देशःप्रशस्तस्तस्मादोमित्युदाहृत्यतदुच्चार्य्यकृतावेदवादिनांयज्ञाद्याः शास्त्रोक्ताश्वक्रियाःसततंसर्व्वदाअङ्गवैकल्येऽपि प्रकर्षेणवर्त्तन्ते सगुणाभवन्तीत्यर्थः २४ द्वितीयंनामस्तौति

भाषाअनुवाद

अबओंकारआदिशब्दोंकी प्रसस्तादेखानेके मनोरथसे ओंकारका प्रसस्त्व कहतेहैं किजिसहेतुपरमात्माकानिर्देश इसीरूपसेप्रसस्तहै इससेओंमात्रउच्चारणपूर्व्वक वेदादिकृतयज्ञदानऔतपस्याआदि शास्त्रोक्तक्रियासकलयथावत् संपूर्ण नहोनेसे अर्थात् हीनहोनेसेभी अच्छीतरह गुणसंपन्नसर्वाङ्गपूर्णहोतीहैं २४
दूसरेनामकी प्रसंशाकरतेहैं किइसस्थलमेंपूर्व्वोक्तओंशब्दकेसाथ तत्पदकासम्बन्धहै शुद्धचित्तमुमुक्षुपुरुषोंकी अकृतफलरूपकामना ब्रह्मरूपयज्ञआदिक्रिया तत्शब्दउच्चारणपूर्व्वक कीजातीहैं इसीसेचित्तशुद्धिकेद्वारा फलसङ्कल्पत्यागपूर्व्वक मुमुक्षुत्वसम्पादकत्वहेतुसे तत्शब्दकानिर्देशकरना भीप्रसस्तहै २५ सत्शब्द

सद्भावेसाधुभावेचसदित्येतत्प्रयुज्यते प्रशस्तेकर्म्मणितथासच्छब्दःपार्थयुज्यते २६
यज्ञेतपसिदानेचस्थितिःसदितिचोच्यते कर्म्मचैवतदर्थीयंसदित्येवाभिधीयते २७

### शाङ्करभाष्य

ओंतच्छब्दयोर्विनियोगउक्तोऽथेदानींसच्छब्दस्यविनियोगःकथ्यते सद्भावइति सतःसद्भावेयथाअविद्यमानस्यपुत्रस्यजन्मनि तथासाधुभावेअसद्वृत्तस्यासाधोःसद्वृत्ततासाधुभावस्तस्मिन्साधुभावेच सदित्येतदभिधानंब्रह्मणःप्रयुज्यते तत्प्रोच्यतेऽभिधीयतेप्रशस्तेकर्म्मणि विवाहादौच तथासच्छब्दःपार्थयुज्यते प्रयुज्यतइत्येतत् २६
यज्ञेयज्ञकर्मणि यास्थितिस्तपसिच यास्थितिर्दानेच यास्थितिः साच सदित्युच्यते

### आनन्दगिरिकृतटीका।

वृत्तमनूद्यानन्तरश्लोकतात्पर्य्यमाह ओंतच्छब्दयोरिति २६ प्रकारान्तरेण

### स्वामिकृतटीका।

तदिति उदाहृत्येति पूर्व्वस्यानुषङ्गः तदित्युदाहृत्यउचार्य्यशुद्धचित्तैर्मोक्षाकाङ्क्षिभिःपुरुषैःफलाभिसन्धिमकृत्वायज्ञाद्याःक्रियाःक्रियन्ते अतोऽस्यतत्त्वबोधनद्वाराफलसंकल्पत्यागेन मुमुक्षुत्वसम्पादकत्वात्तच्छब्दनिर्देशः प्रशस्तइत्यर्थः २५
सच्छब्दस्यप्राशस्त्यमाह सद्भावइति द्वाभ्यां सद्भावेअस्तित्वेदेवदत्तस्यपुत्रादिकमस्तीत्यस्मिन्नर्थेसाधुभावेचसाधुत्वेदेवदत्तस्यपुत्रादिश्रेष्ठमित्यस्मिन्नर्थेसदित्येतत्पदं प्रयुज्यते प्रशस्तेमाङ्गलिकेविवाहादिकर्मणिचसदिदंकर्मेति सच्छब्दोयुज्यतेप्रयुज्यते सङ्गच्छत इति वा २६ किञ्चयज्ञइति यज्ञादिषुयास्थितिस्तात्पर्येणाव

### भाषाअनुवाद

जोप्रसस्तहै यहदोश्लोकमे कहतेहैं किसत्भावकहे अस्तित्वऔ साधुभावकहेसाधुत्व इनदोनोअर्थको सत्शब्दकहताहै औरहेअर्जुन प्रसस्तकहे माङ्गलिक विवाहादिकर्ममेभी यहसत्कर्म इनविषयोंमे सत्शब्दका प्रयोगयोग्यहै औमङ्गलादिअर्थकोभीकहताहै २६ औरयज्ञतपदानमे जोस्थितिकहे इनकातात्पर्यजानिज अवस्थानहै उसकोभी विद्वानजन सत्कहतेहैं औपरमात्माकेअर्थ अथवा यज्ञतपदानकेअर्थ जोकर्मकियेजां वेभीसत्कहेजातेहैं जोयज्ञदानतपआदिकर्म परमात्माकीसेवाकेअर्थ औजोकर्मसवअसात्विक किम्वाविगुणअङ्गहीनभीहों पर श्रद्धापूर्वककियेहों औब्रह्मकेनाम जोओंतत्सत् इनसेयुक्तकियेहों तोसगुणसात्विकहोतेहैं २७ अवमनुष्य श्रद्धापूर्वक कर्ममेप्रवृत्तहोंय इसलियेअश्रद्धाकृतक

अश्रद्धयाहुतंदत्तं तपस्तप्तंकृतञ्चयत् असदित्युच्यतेपार्थनचतत्प्रेत्यनोइह २८
इति श्रीभगवद्गीतायां ब्रह्मविद्यायां श्रद्धात्रयविभागयोगोनाम सप्तदशोऽध्यायः १७

## शाङ्करभाष्यं

विद्वद्भिःकर्मचएवतदर्थीयंयज्ञदानतपोर्थी यमथवा यस्याभिधानत्रयंप्रकृतं तदर्थीय
मीश्वरार्थी यमित्येतत् सदित्येवाभिधीयते तदेतत्यज्ञदानतपआदिकर्मअसात्त्विकं
विगुणमपि श्रद्धापूर्वकंब्रह्मणोभिधानत्रयप्रयोगेणसगुणंसात्त्विकंसम्पादितम्भवति
२७ तत्रचसर्वत्रश्रद्धाप्रधानतयासर्वंसम्पाद्यते यस्मात्अश्रद्धयेति तस्मात्अ

## आनन्दगिरिकृतटीका

सच्छब्दस्यविनियोगमाह यज्ञइति नामत्रयोच्चारणेनसाङ्गुण्यंसिध्यतीति प्रक
रणार्थमुपसंहरति तदेतदिति २७ अश्रद्धान्वितस्यापि कर्मणोनामत्रयोच्चा

## स्वामिकृतटीका

स्यानंतदपिसदित्युच्यते यस्यचेदंनामत्रयंसएवपरमात्माअर्थःफलंयस्यतत्तदर्थंकर्म
पूजोपहारगृहाङ्गणपरिमार्जनोपलेपनरङ्गमाङ्गलिकादिक्रिया तत्सिद्धयेयदन्यत्
कर्मक्रियतेउद्यानशालिक्षेत्रधनार्जनादिविषयंतत्कर्म तदर्थीयं तच्चातिव्यवहितम
पि सदित्येवाभिधीयते यस्मादेवमतिप्रशस्तमेतन्नामत्रयंतस्मादेतत्सर्वंकर्मसाङ्गुण्या
र्थंसङ्कीर्त्तयेदिति तात्पर्यार्थः अत्रचार्थवादानुपपत्त्याविधिःकल्प्यतेविधेयंस्तूयते
वस्त्विति न्यायात् अपरेतु प्रवर्त्तन्तेविधानोक्ताःक्रियते मोक्षकाङ्क्षिभिरित्यादिवर्त्त
मानोपदेशःसमिधोयजतीत्यादिवद्विधितयापरिणमनीयइत्याहुस्तत्तुसद्भावेसाधुभा
वेचेत्यादिषु प्राप्तार्थत्वान्नसंगच्छतइति पूर्वोक्तक्रमेणविधिकल्पनैवज्यायसी २७

## भाषाअनुवाद

मंकीनिन्दाकरतेहैं किअश्रद्धासे होमतपदानऔपूजाआदिकर्म जोकियेजातेहैं
उनको ज्ञानीशिष्टकहे भलेलोग असत्मावकहतेहैं क्योंकि श्रद्धविकलहोनेसे इ
नकर्मोकाफल परलोकमेभी नहीहोताहै औअयशकरनेवालेहैं इसमेइहलोकमे
भीकुछफलनहींहै तोशरीरकाक्लेश औधनकीखराबीकरनेसेभी क्याफलहै अ
यशतोकरके नकारकेभी मिलेहीगाजोइसफलकोइच्छातुमकोहोय २८
इति श्रीजगन्नाथसुकुलविरचितमनभावनीनामभाषाटीकायांसप्तदशोऽध्यायः १७

शाङ्करभाष्यं।

श्रद्धयाहुतंहवनंकृतंदत्तञ्चब्राह्मणेभ्योऽश्रद्धयातपस्तप्तमनुष्ठितमश्रद्धया तथाऽश्रद्धयैवकृतंयत्स्तुतिनमस्कारादितत्सर्व्वमसदित्युच्यते मत्प्राप्तिसाधनमार्गवाह्यत्वात् पार्थ नचतद्बहुलायासमपिप्रेत्यफलाय नाऽपीहार्थंसाधुभिर्निन्दितत्वादिति २८

इति शाङ्करभाष्येसप्तदशोऽध्यायः १७

आनन्दगिरिकृतटीका

रणाद्वैगुण्येयज्ञाप्राधान्यंनस्यादित्याशंक्याह तत्रचेति सप्तमोऽथ्यांप्रकृतंयज्ञादिगृह्यतेसर्वंयज्ञादिसगुणमितिशेषः तस्यासत्वंसाधयति मत्प्राप्नोति ऐहिकामुष्मिकस्याफलमश्रद्धितेनापिकर्मणासम्पत्स्यतेकुतोऽस्यासत्त्वमित्याशंक्याह नचेति तस्योभयविधफलाहेतुत्वेहेतुमाह साधुभिरिति निन्दन्तिहिसाधवःश्रद्धारहितंकर्मअतो नैतदुभयफलोपयिकमित्यर्थः तदनेनशास्त्रानभिज्ञानामपिश्रद्धावतांश्रद्धयासात्विकत्वादित्रैविध्यभाजांराजसतामसाहारादित्यागेन सात्विकाहारादिसेवयासत्वैकशरणानांप्राप्तमपियज्ञादिवैगुण्यंब्रह्मनामनिर्देशेनपरिहरतांपरिशुद्धबुद्धीनां श्रवणादिसामग्रीसञ्जाततत्वसाक्षात्कारवतांमोक्षोपपत्तिरितिस्थितं २८

इति आनन्दगिरिकृतटीकायां सप्तदशोऽध्यायः १७

स्वामिकृतटीका

इदानींसर्वकर्मसु श्रद्धयैवप्रवृत्त्यर्थमश्रद्धयाकृतं सर्वंनिन्दति अश्रद्धयेति अश्रद्धयाहुतंहवनंदत्तंदानंतपस्तप्तंनिवर्त्तितंयच्चान्यदपिकृतंतत्सर्वमसदित्युच्यते यतस्तत्प्रेत्यलोकान्तरेनफलतिविगुणत्वात् नोइह नचास्मिन्लोकेफलतिअयशस्करत्वात् रजस्तमोमयींत्यक्त्वाश्रद्धांसत्वमयींश्रितः तत्वज्ञ नेऽधिकारीस्यादितिसप्तदशेस्थितं २८

इति स्वामिकृतटीकायां सप्तदशोऽध्याय १७

## अष्टादशोऽध्यायः ।

अर्जुनउवाच संन्यासस्यमहाबाहो तत्त्वमिच्छामिवेदितुं त्यागस्यचहृषीकेश पृथक्केशिनिसूदन १

### शाङ्करभाष्यं

सर्वस्यैवगीताशास्त्रस्यार्थोऽस्मिन्नध्यायेउपसंहृत्यसर्वश्चवेदार्थोवक्तव्यइत्येवमर्थोयमध्यायआरभ्यतेसर्वेषुह्यतीतेष्वध्यायेषु उक्तोर्थोऽस्मिन्नध्यायेवगम्यतेऽर्जुनस्तुसन्न्यासत्यागशब्दार्थयोरेवविशेषंबुभुत्सुरुवाच सन्न्यासस्येति सन्न्यासशब्दार्थस्यइतेतिहेमहाबाहोतत्त्वन्तस्यभावस्तत्त्वं याथात्म्यमित्येतत्इच्छामिवेदितुं ज्ञातुं त्यागस्यचत्यागशब्दार्थस्येत्य तत्हृषीकेशपृथक् इतरेतरविभागंकेशिनिसूदनकेशिनामाकश्चित् असुरस्तन्निसूदितवान्भगवान् वासुदेवस्तेन तन्नाम्नासम्बोध्यतेऽर्जुनेन १

### भषा अनुवाद

अबप्रथमसमग्रअष्टादशअध्यायका तात्पर्य्यसंक्षेपसेश्रीधरस्वामीकहतेहैं कि भगवानश्रीकृष्णने समग्रगीताशास्त्रकाजोसंग्रहार्थ सोईपरमार्थहै यहनिर्णयकरनेकेअर्थ अठारहें अध्यायमे न्यासऔत्यागभिन्नभिन्नकरके स्पष्टरूपसेकहाहै औ सर्वकर्म्माणिमनसासंन्यस्यास्तेसुखंवशी यह ५ अध्यायका १३ श्लोकऔशुभाशुभफलैरेवंमोक्ष्यसेकर्मबन्धनैः संन्यासयोगयुक्तात्माविमुक्तोमामुपैष्यसियह ९ अध्यायका २८ श्लोकऔत्यक्त्वाकर्मफलासङ्गंनित्यतृप्तोनिराश्रयःयह ४ अध्यायका २० श्लोकऔसर्वकर्मफलत्यागंततःकुरुयतात्मवान्यह १२ अध्यायका ११ श्लोकइनसबश्लोकोंसेऔरऔरअध्यायमेभीतौनतौनश्लोकोंसेफलमात्रत्यागकरकेनिष्कामसमस्तकर्मकरनेकाउपदेशदियाहै परन्तुपरमकरुणामयसर्वज्ञ जोभगवानश्रीकृष्ण सोपरस्परविरुद्धवचनकभीभीउपदेशनकरैंगे इसीसेकर्मोंकेत्यागऔकर्मोंकेकरनेकेविषयमेजिसप्रकारसेविरोधनपड सोईजाननेकीइच्छाकरिअर्जुनकहतेहैं किहेहृषीकेशअर्थात्इन्द्रियोंकेनियामकप्रवर्त्तक औहेकेशिनिषूदनकेशीनामदैत्यब्रजलीलाकेसमैअश्वरूपधरकेआया तोभगवानउसकेमुखमे अपनाहाथडाल ककरीकेसमानचीरके डालदियाथा सोईकहाकिहेमहाबाहो श्रीकृष्ण संन्यासऔ त्यागशब्दका तत्त्वअर्थ मैभिन्नभिन्नकरके जानाचाहताहौं सोदयाकरके कहिये १

## शाङ्करभाष्यं

तत्र तत्र निर्द्दिष्टौ संन्यासत्यागशब्दौ न निर्लुण्ठितार्थौ पूर्वेष्वध्यायेष्वतोऽर्जुनाय पृष्टव
ते तन्निर्णयाय भगवानुवाच काम्येति काम्यानां अश्वमेधादीनां कर्मणां न्यासम्परित्या
गं संन्यासं संन्यासशब्दार्थमनुष्ठेयत्वेन प्राप्तस्यानुष्ठानं कवयः पण्डिताः केचिद्विद्वविजा
नन्ति नित्यनैमित्तिकानामनुष्ठीयमानानां सर्वकर्मणामात्मसम्बन्धितया प्राप्तस्य फल
स्य त्यागः सर्वकर्मफलत्यागः तमाहुः कथयन्ति त्यागं त्यागशब्दार्थं विचक्षणाः पण्डिताः २

## आनन्दगिरिकृतटीका

पूर्व्वैरध्यायैर्व्विस्तरेण यतस्ततो विक्षिप्ततयोक्तमर्थं सुखप्रतिपत्त्यर्थं संक्षेपेणोप
संहृत्याभिध्यातुमध्यायान्तरमवतारयति सर्व्वस्यैवेति उपसंहृत्य वक्तव्य इति सम्बन्धः
किञ्चोपनिषत्सु यतस्ततो विस्मृतस्यार्थस्य बुद्धिसौकर्य्यार्थमस्मिन्नध्याये संक्षिप्ताभिधा
नं कर्त्तव्यमुपनिषदां गीतानाञ्चैकार्थत्वादित्याह सर्वश्चेति कथं सर्व्वोऽपि शास्त्रार्थोऽस्मि
न्नध्याये संक्षिप्योपसंह्रियते तत्राह सर्वे पुन्नीति ननु वेदार्थश्चेदशेषतोऽत्र संजिहीर्षि
तस्तर्हि किमिति त्यागेनैके संन्यासयोगादिति च वेदार्थैकदेशविषयं प्रश्नप्रतिवचनन्त
त्राह अर्जुनस्त्विति पृथगनयोस्तत्त्वं वेदितुमिच्छामीति विशेषणात्पृथगर्थत्वयोरस्ती
ति गम्यते बुभुत्सितस्य प्रष्टव्यत्वादेकदेशे तदभावादुक्तप्रश्नोपपत्तिरितिभावः १

ननु पूर्वेष्वध्यायेषु तत्र संन्यासत्यागयोरुक्तत्वात् किमिति पुनस्तौ पृच्छ्येते ज्ञानेत
द्योगात् तत्राह तत्र तत्रेति न निर्लुण्ठितार्थौ न निकृष्टार्थौ न विविक्तार्थावित्यर्थः बुभु

## स्वामिकृतटीका

न्यासत्यागविभागेन सर्वगीतार्थसंग्रहं स्फुटमष्टादशे प्राह परमार्थविनिर्णये अ
त्र च सर्वकर्म्माणि मनसा संन्यास्यास्ते सुखं वशी संन्यासयोगयुक्तात्मेत्यादिषु कर्म्मसंन्या
स उपदिष्टस्तथा त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः सर्वकर्मफलत्यागं ततः कुरु
यतात्मवानित्यादिषु च फलमात्रत्यागेन कर्म्मानुष्ठानमुपदिष्टं न च परस्परविरुद्धं सर्वज्ञः
परमकारुणिको भगवानुपदिशेत् अतः कर्म्मसंन्यासस्य तदनुष्ठानस्य चाविरोधप्रकारं बु
भुत्सुरर्जुन उवाच संन्यासस्येति भो हृषीकेश सर्वेन्द्रियनियामक हे केशिनिसूदन के
शिनाम्नो महतो हयाकृतेर्दैत्यस्य युद्धे मुखं व्यादाय भक्षितुमिच्छतोऽत्यन्तं व्यात्तमुखे वाम
बाहुं प्रवेश्य तत्क्षणमेव विवृद्धेन तेनैव बाहुना कर्कटिकाफलवत्तं विदार्य्य निसूदितवा
नत एव हे महाबाहो इति सम्बोधनं संन्यासस्य त्यागस्य च तत्त्वं पृथग्विवेकेन वेदितुमिच्छा
मि १ अत्रोत्तरं श्रीभगवानुवाच काम्यानामिति काम्यानां पुत्रकामो यजेतस्व

श्रीभगवानुवाच काम्यानांकर्मणांन्यासं संन्यासंकवयोविदुः सर्वकर्मफल त्यागंप्राहुस्त्यागं विचक्षणाः २

आनन्दगिरिकृतटीका

तथाप्रश्नस्यप्रवृत्तत्वात्प्रष्टुरभिप्रायंप्रश्नेनप्रतिपद्यभगवानुत्तरमुक्तवानित्याह अत इति पक्षद्वयोपन्यासेनसन्न्यासत्यागशब्दयोरर्थभेदंकथयति काम्यानामिति २

स्वामिकृतटीका

र्गकामोयजेतेत्यादिकामोपबन्धेनविहितानांकर्मणां न्यासंपरित्यागंसन्न्यासंकवयो विदुःसम्यक्फलैःसह कर्मणामपिन्यासंसन्न्यासंपण्डिताजानन्तीत्यर्थःसर्वेषांकाम्या नांनित्यनैमित्तिकानांचकर्मणांफलमात्रत्यागंप्राहुस्त्यागंविचक्षणानिपुणाः नतुस्व रूपतःकर्मत्यागं ननुनित्यनैमित्तिकानांफलाश्रवणादविद्यमानस्यफलस्यकथंत्यागः स्यात्नहिवन्ध्यायाःपुत्रत्यागःसंभवतिउच्यतेयद्यपिस्वर्गकामःपशुकामइत्यादिवत् अ हरहः सन्ध्यामुपासीतयावज्जीवमग्निहोत्रं जुहोतीत्यादिषुफलविशेषोनश्रूयते त थाप्यपुरुषार्थेव्यापारेप्रेक्षावन्तंप्रवर्त्तयितुमशक्नुवन् विधिर्विश्वजितायजेतेत्यादि ष्विवसामान्यतःकिमपिफलमाक्षिपत्येव नचातीवगुरुमतश्रद्धयास्वसिद्धिरेवविधेः प्रयोजनंमन्तव्यं पुरुषप्रवृत्त्यनुपपत्तेदुःपरिहरत्वात् श्रूयतेचनित्यादावपिपरंसर्वं

भाषा अनुवाद

इसअर्जुनकोप्रश्नकाउत्तरभगवानकहतेहैं किदेखोपुत्रकोकामनाकरिपुत्रइष्टियज्ञ करैऔस्वर्गकीकामनाकरिअश्वमेधयज्ञकरै तथाऔरऔरकामनाकरिजोजोकर्म विहितहैं ऐसेजोकाम्यकर्म तिनसबकेपरित्यागकरनेकोहीपण्डितलोगसंन्यास जानतेहैं अर्थात्फलसहितसकलकर्मकेत्यागको संन्यासज्ञानकरतेहैं औरजि तनेकर्मअकर्मकहे कुत्सितकर्मऔनित्यनैमित्तिककर्मोंकेफलमात्रत्यागकोविचक्ष णकहे निपुणलोग त्यागकहतेहैं परविचारसेतो कर्मत्यागकरनेकोतोत्यागनहीं कहतेहैं फलत्यागवस्तुत्यागहोसकैहै क्योंकि वहुतेरेकर्मऐसेहैं किजिन का शरीररहतेत्यागनहींहोसकताहै तोशास्त्रोक्तकर्मनित्यनैमित्तकउपासनाआ दिजिनसेवुद्धिकीशुद्धिऔज्ञानकीयोग्यताहोतीउनकात्यागलोकत्रिकइसंसारअवस्था मेंअनुचितहै परन्तुजिसकोतत्त्वज्ञान नहींभयाहैं उसकोकर्मफलकेत्यागकरने हीकोत्यागजानो औजिसकोतत्वज्ञानहै उसीकोसमस्तकर्मका संन्यासहोसकैहै औरउचितहै यहभगवाननेकहा २ मतान्तरकोनिषेधकरतेहुये उक्तविष

शाङ्करभाष्यं ।

यदि काम्यकर्मपरित्यागः फलपरित्यागो वार्थो विवक्षितः सर्वथा परित्यागमात्रं स न्यासत्यागशब्दयोरेकोऽर्थः स्यात् तद्घटपटशब्दादिवज्जात्यन्तरभूतार्थौ ननु नित्यनैमित्तिकानां कर्मणां फलमेव नास्तीत्याहुः कथमुच्यते तेषां फलत्यागः यथा वन्ध्यायाः पुत्रत्यागो नैष दोषः नित्यानामपि कर्मणां भगवता फलवत्त्वस्येष्टत्वात् वक्ष्यति भगवान् अनिष्टमिति न तु सन्न्यासिनामिति च सन्न्यासिनामेव हि केवलं कर्मफलासम्बन्धं दर्शयन्न सन्न्यासिनां नित्यकर्मफलप्राप्तिर्भवत्यत्यागिनां प्रेत्येति दर्शयति त्याज्यं दोषवदिति त्याज्यं त्यक्तव्यं दोषवत् दोषोऽस्यास्तीति दोषवत् किं तत् कर्म बन्धहेतुत्वात् सर्वमेव अथवा दोषो यथा रागादिस्त्यज्यते तथा त्याज्यमित्येके कर्म प्राहुर्मनीषिणः पण्डिताः सांख्यादिदृष्टिमाश्रिता अधिकृतानान्तु कर्मिणामपीति तत्रैव यज्ञदानतपःकर्म न त्याज्यमिति चापरे कर्मिण एवाधिकृतास्तानपेक्ष्यैते विकल्पाः न तु ज्ञाननिष्ठान् व्युत्थायिनः सन्न्या

स्वामिकृतटीका

एते पुण्यलोका भवन्तीति कर्मणा पितृलोक इति धर्मेण पापमपनुदतीत्यादिश्रुतस्वाद्युक्तमुक्तं सर्वं कर्मफलत्यागं प्राहुस्त्यागं विचक्षणा इति ननु फलत्यागे पुनरपि निष्फलेषु कर्मसु प्रवृत्तिरेव न स्यात् तन्न सर्वेषां कर्मणां संयोगपृथक्त्वेन विविदिषार्थतया विनियोगात् तथा च श्रुतिः तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेति ततश्च श्रुतिपदोक्तं सर्वं फलं बन्धकत्वेन त्यक्त्वा विविदिषार्थं सर्वकर्मानुष्ठानं घटत एव विविदिषा च नित्यानित्यवस्तुविवेकेन निवृत्तदेहाद्यभिमानतया बुद्धेः प्रत्यक्प्रवणता तावत्पर्यन्तञ्च सत्त्वशुद्ध्यर्थं ज्ञानाविरुद्धं यथोचितमावश्यकं कर्म कुर्वतस्तत्फलत्याग एव कर्मत्यागो नाम न स्वरूपेण तथा च श्रुतिः कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा इति ततः परन्तु सर्वकर्मनिवृत्तिः स्वत एव भवति तदुक्तं नैष्कर्म्यसिद्धौ प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव उक्तञ्च भगवता यस्त्वात्मरतिरेव स्यादित्यादि वशिष्ठेन चोक्तं न कर्माणि त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसाविति ज्ञाननिष्ठाविक्षेपकत्वमालक्ष्य त्यजेद्वा तदुक्तं श्रीभागवते तावत् कर्माणि कुर्वीत न निर्विद्येत यावता मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचर इत्यादि अलमतिप्रसङ्गेन प्रकृतमनुसरामः अविदुषः फलत्यागमात्रमेव त्यागशब्दार्थो न कर्मत्याग इति २

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः यज्ञदानतपःकर्म न त्याज्यमिति चापरे ३

शाङ्करभाष्यं

सिनोपेक्ष्य ज्ञानयोगेन सांख्यानां निष्ठा मया पुरा प्रोक्ता इति कर्माधिकाराद्प्राप्तत्वाद्ये तान् प्रति विहिता चिन्ता ननु कर्मयोगेन योगिनामिति अभिहिताः एवं विभक्ता निष्ठा अपीह सर्वशास्त्रोपसंहारप्रकरणे यथा विचार्यन्ते तथा सांख्या अपि ज्ञाननिष्ठा विचार्यन्ता मिति न तेषां मोहहेतुः शदुःखनिमित्तत्यागानुपपत्तेर्न कायक्लेशनिमित्तानि दुःखनि सांख्या आत्मनि पश्यन्ति इच्छादीनां चेतनधर्मत्वेनैव दर्शितत्वात् अतस्ते न कायक्लेशदुःखभावात् कर्म परित्यजन्ति नापि ते कर्माण्यात्मनि पश्यन्ति येन नियतं कर्म मोहात् परित्यजेयुर्गुणानां कर्म नैव किञ्चित्करोमीति हि ते सन्न्यस्यन्ति सर्वकर्माणि मनसा सन्न्यस्येत्यादिभिर्हि तत्त्वविदः संन्यासप्रकार उक्तस्तस्माद्येऽन्येऽभिहिताः कर्मण्यनात्मविदो ये षाञ्च मोहात्त्यागः सम्भवति कायक्लेशभयाच्च त एव तामसास्त्यागिनो राजसाश्चेति निन्द्यते कर्मिणामनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थं सर्वारम्भपरित्यागी मौनी सन्तुष्टो येन केनचिदनिकेतः स्थिरमतिरिति परमार्थसंन्यासिनो विशेषितत्वात् वक्ष्यति च ज्ञानस्य या परा निष्ठेति तस्मात् ज्ञाननिष्ठाः संन्यासिनो नेह विवक्षिताः कर्मफलत्याग एव सात्त्विकत्वेन गुणेन तामसत्वाद्यपेक्षया संन्यास उच्यते न मुख्यः सर्वकर्मसंन्यासः सर्वकर्मसंन्यासासम्भवे च न हि देहभृतेति हेतुवचनान्मुख्य एवेति चेन्न हेतुवचनस्य स्तु

भाषा अनुवाद

एतदेव मतान्तरनिरासेन दृढीकर्त्तुं मतभेदं दर्शयति यह दृढ करनेकी इच्छासे मतभेद देखाते हैं कि हिंसादिकसे दोषयुक्त जो अनर्थ हेतु से बन्धस्वरूप है इसलिये सब कर्म का त्याग करना उचित यह सांख्यमतवाले विवेकी मा हिंस्यात्सर्व्वभूतानि इससे कहते हैं और अग्नीषोमीयं पशुमालभेत इस श्रुतिसे अग्निष्टोमयज्ञमे पशुहिंसाको यज्ञक्रियाका अङ्गविधान कियाहै और सकलकर्मोके करनेमे जीवहिंसा ज्ञान अज्ञानपूर्व्वक होती हीहै इससे कर्म्ममात्रका त्याग कहाहै औ कर्मकाण्डी मीमांसामतवाले अग्नीषोमीयं पशुमालभेत् इस विधिसे कहते हैं कि यज्ञकर्ममें हिंसा हिंसा नहीं है तो करनी ही चाये औ यज्ञ छोडकर हिंसा करनेसे पुरुषको पाप होताहै इस अभिप्रायपर भगवान कहते हैं कि कोई बुद्धिमान तो कहते कि दोषवत कहे दोषयुक्त कर्म त्याग करना चाहिये औ कोई यज्ञ दान तप कर्म का त्याग नहीं कहते हैं क्योंकि विधिकृत हिंसासे दोष नहीं होताहै परं अहिंसा परमधर्म है ३ इस प्रकारसे अन्यमत कहिकर अब अपने मत कहनेकी इच्छासे भगवान

शाङ्करभाष्यं।

व्यर्थत्वात् यथा त्यागाच्छान्तिरनन्तरमिति कर्मफलत्यागस्तुतिरेव यथोक्तानेकपक्षानुष्ठानाशक्तिमन्तं अर्जुनं प्रति विधानात् तथेदमपि निर्दिदिक्षिततामक्षयमिति कर्मफलत्यागस्तुत्यर्थं न सर्वाणि कर्माणि मनसा संन्यस्यैव कुर्वन्न कारयन्नास्ते इत्यस्य पक्षस्यापवादः केनचिद्दर्शयितुं शक्यस्तस्मात् कर्मस्वधिकृतान् प्रत्येवैष संन्यासत्यागविकल्पः येतु परमार्थदर्शिनः सांख्यास्तेषां ज्ञाननिष्ठायामेव सर्वकर्मसंन्यासलक्षणायामधिकारो नान्यत्रेति न ते विकल्पार्हास्तथोपपादितमस्माभिर्वेदाविनाशिनमित्यस्मिन् प्रदेशे तृतीयादौ च ३ तत्र तेषु विकल्पभेदेषु निश्चयमिति निश्चयं शृणु अवधारयमे

आनन्दगिरिकृतटीका

तत् किमिदानीं संन्यासत्यागशब्दयोरात्यन्तिकं भिन्नार्थत्वं तथा च प्रसिद्धिविरोधः स्यादित्याशंक्यावान्तरभेदेपि नात्यन्तिकभेदोस्तीत्याह यदीति पुनाभावाद्वन्ध्यात्वात्तत्त्यागायोगवन्नित्यनैमित्तिककर्मणामफलानां फलत्यागानुपपत्तेरुक्तस्त्यागशब्दार्थो न सिध्यतीति शङ्कते नन्विति नित्यनैमित्तिककर्मफलस्य वन्ध्यापुत्रसादृश्याभावात्तत्त्यागसंभवादुक्तत्त्यागशब्दार्थः सम्भवतीति समाधत्ते नैष दोष इति भगवता तेषां फलवत्त्वमिष्टमित्येववाक्यशेषमनुकूलयति वक्ष्यतीति तर्हि संन्यासिनामसंन्यासिनाञ्च नित्याद्यनुष्ठायिनामविशेषेण तत्फलं स्यादिति चेन्नैवेत्याह नत्विति वक्ष्यतीत्यनुकर्षणञ्चकारार्थः प्रसक्तस्य वचसोर्थं प्रकृतोपयोगित्वेन संगृह्य स्मारयति संन्यासिनामिति काम्यानि वर्जयित्वा नित्यनैमित्तिकानि फलाभिलाषाद्दते कर्त्तव्यानीत्युक्तं पक्षं प्रतिपक्षनिरासेन दृढयितुं विप्रतिपत्तिमाह त्याज्यमिति कर्मणः सर्वस्य दोषवत्त्वे हेतुमाह बन्धेति दोषवदित्येतद्दृष्टान्तत्वेन व्याचष्टे अथवेति कर्मण्यनधिकृतानामकर्मिणामेव कर्म त्याज्यं कर्मिणान्तत्त्यागे प्रत्यवायादित्याशंक्याह अधिकृतानामिति नहि तेषामपि कर्म त्यजतां प्रत्यवायो हिंसादियुक्तस्य कर्मणोनुष्ठाने परं प्रत्यवायादिति भावः सांख्यादिपक्षसमाप्ताविति शब्दः मीमांसकपक्षमाह तत्र वेति कर्माधिकृतेष्वेवेति यावत् कर्म नित्यनैमित्तिकञ्च काम्यानां कर्मणामित्यारभ्य श्लोकाभ्यां कर्मिणोधिकृतानमनधिकृतांश्चापेक्ष्य दर्शितविकल्पानां प्रवृत्तिरित्याशंक्याह कर्मिण इति एवकारव्यवच्छेद्यमाह नत्विति तदेव स्फुटयति ज्ञानेति कर्माधिकृतानां ज्ञाननिष्ठातो विभक्तनिष्ठावत्त्वेन पूर्वोक्तानामपि शास्त्रार्थोपसंहारे पुनर्विचार्यत्ववज्ज्ञातनिष्ठानामपि विचार्यत्वमत्राविरुद्धमिति शङ्कते नन्विति सांख्यानां परमार्थज्ञाननिष्ठानां नाव

## आनन्दगिरिकृतटीका

विचार्य्यतेऽउत्तरमाह नतेषामिति ननुतेषामपिस्वात्मनिक्लेशदुःखादिपश्यतान्तद नुरोधेनराजसकर्मत्यागसिद्धेर्व्विचार्यत्वंनेत्याह नकार्येति तवच्चेबाध्यायोक्तंहेतूक रोति इच्छादीनामिति स्वात्मनिसांख्यादीनांक्लेशाद्यप्रतिपत्तौफलितमाह अतइ ति ननुतेषांक्लेशाद्यदर्शनेपिस्वात्मनिकर्माणि पश्यतान्तत्त्यागोदुक्तस्तेषांकायक्लेशादिकरत्वान्नेत्याह नापीति अज्ञानान्मोहमाहात्म्यात्नियतमपिकर्मत्यक्तुंश क्यंनतत्त्वविदांस्वात्मनिकर्मादर्शनेतत्त्यागेहेत्वभावादित्याह मोहादिति कथंत र्हितेषामात्मनि कर्माण्यपश्यताप्राप्तप्रमावेतत्त्यागःसंन्यासस्तत्राह गुणानामिति अ विवेकप्राप्तानांकर्मणांत्यागस्तत्त्वविदामित्युक्तंस्मरयन्नप्राप्तप्रतिषेधंप्रत्यादिशति सर्व्वेति तत्त्वविदामत्राविचार्यत्वेफलितमाह तस्मादिति येनात्मविदस्तएवेत्युत्तरग्रन्थसम्बन्धः कर्मण्यधिकृतानामनात्मविदांकर्मत्यागसम्भावनांदर्शयति येषाञ्चेति तन्निन्दाकु तोपयुक्तेत्याशंक्याह कर्मिणामिति किञ्चपरमार्थसंन्यासिनांप्रशस्तत्वोपलम्भान्नि न्दाविषत्वमित्याह सर्वेति किञ्चात्रापिसिद्धिंप्राप्तोयथेत्यादिना ज्ञाननिष्ठायावच्यमाणत्वात्तद्गतानेहविचार्य्यतेत्याह वच्यतीति कर्माधिकृतानामेवात्रविवचितत्वान्नज्ञाननिष्ठानामित्युपसंहरति तस्मादिति ननुसंन्यासशब्देनसर्वकर्मसंन्यासस्यग्राह्यत्वात्त याविधसंन्यासिनामिह विवच्चितत्वंप्रतिभातितत्राह कर्मेति संन्यासशब्देनमुख्यस्यैव संन्यासस्यग्रहणंगौणमुख्ययोर्मुख्येसम्प्रत्ययादन्यथातदसम्भवे हेतूक्तिवैयर्थ्यादप्राप्तप्र तिषेधादितिशङ्कते सर्वेति नेदंहेतुवचनंसर्वकर्मसंन्यासासम्भवसाधकंकर्मफल त्यागस्तुतिपरत्वादिति परिहरति नेत्यादिना एतदेवदृष्टान्तेनस्पष्टयति यथेति दृ ष्टान्तेपियथाश्रुतार्थत्वंकिंनस्यादित्याशंक्याह यथोक्तेति नहिफलत्यागादेवज्ञानंवि नामुक्तिर्युक्तामुक्तेर्ज्ञानैकाधीनत्वसाधकश्रुतिस्मृतिविरोधादद्वेष्टेत्यादिनाचानन्तरमेव ज्ञानसाधनविधानानर्थक्यात्त्यागस्तुतिरेवात्रग्राह्येत्यर्थः दृष्टान्तगतमर्थंदार्ष्टान्तिके योजयति तथेति प्रागुक्तपत्तापवादविवक्षयाहेतूक्तौमुख्यार्थत्वमेवकिंनस्यादित्याश क्य तदपवादेहेत्वभावान्नैवमित्याह नसर्व्वेति नचेत्थमेवहेतूक्तिस्तदपवादिकान्यथा सिद्धेरुक्तत्वादितिभावः मुख्यसंन्यासापवादासम्भवेसंन्यासत्यागविकल्पस्यकथंसाव काशतेत्याशंक्याह तस्मादिति ज्ञाननिष्ठान्प्रत्युक्तविकल्पानुपपत्तौकुतस्तेषामधि कारस्तत्राह येत्विति संन्यासिनांविकल्पानर्हत्वेनज्ञाननिष्ठायामेवाधिकारस्यभूयः सुप्रदेशेषुसाधितत्वान्नसाधनीयत्वापेक्षेत्याह तथेति ॥

निश्चयंशृणुमेतत्रत्यागेभरतसत्तम त्यागोहिपुरुषव्याघ्रत्रिविधःसंप्रकीर्त्तितः ४

शाङ्करभाष्यम्।

ममवचनात्तत्रत्यागेत्यागसंन्यासविकल्पेयथादर्शितेभरतसत्तमभरतानांसाधुतम त्यागोहि त्यागसंन्यासशब्दवाच्योहि योर्थःसएकएवेत्यभिप्रेत्याह त्यागोहीति पुरु षव्याघ्रत्रिविधस्त्रिप्रकारस्तामसादिप्रकारैःसंप्रकीर्त्तितःशास्त्रेषुसम्यक्कथितःयस्मा त्तामसादिभेदेन त्यागसंन्यासशब्दवाच्योऽर्थोविहितस्यकर्मणोऽनात्मज्ञस्यत्रिविधःस म्भवति नपरमार्थदर्शिनइत्ययमर्थो दुर्ज्ञानस्तस्मात् अत्रतत्त्वन्नान्योवक्तुंसमर्थस्तस्मा न्निश्चयंपरमार्थशास्त्रार्थविषयमध्यवसायमैश्वरं मेममशृणु ४ कःपुनरसौ

स्वामिकृतटीका

त्याज्यमिति दोषवद्हिंसादिदोषवत्त्वेनबन्धकमिति हेतोःसर्व्वमपिकर्मत्याज्यमित्ये केसांख्याःप्राहुर्मनीषिणइति अस्यायंभावःमाहिंस्यात्सर्व्वाभूतानीतिनिषेधःपुरुष स्यानर्थहेतुर्हिंसेत्याह अग्नीषोमीयंपशुमालभेतेत्यादिप्राकरणिकोविधिस्तुहिंसा याःक्रतूपकारकत्वमाह अतोभिन्नविषयत्वेनसामान्यविशेषन्यायागोचरत्वात्द्रव्य साध्येषुसर्व्वेष्वपिकर्मसुहिंसादेःसम्भवात्सर्वमपिकर्मत्याज्यमेवेति तदुक्तं दृष्टवदा नुश्रविकःसह्यविशुद्धिक्षयातिशययुक्तइति अपरेतुमीमांसका यज्ञादिकंकर्मनत्या ज्यमेवेतिप्राहुः अयंभावःक्रत्वर्थापिसतीयंहिंसापुरुषेणकर्त्तव्या साचान्योद्देशेनापि कृतापुरुषस्यप्रत्यवायहेतुरेवतथाहिविधिर्विधेयस्यतदुद्देशेनानुष्ठानंविधत्तेतादर्थ्यस्य लक्षणत्वात्तच्छेषस्यनत्वेवंनिषेधोनिषेधस्यतादर्थ्यमपेक्षतेप्राप्तिमात्रापेक्षकत्वात् अन्य थाअज्ञानप्रमादादिकृतेदोषाभावप्रसङ्गात् तदेवंसमानविषयत्वेनसामान्यशास्त्रस्य विशेषेणबाधानास्ति दोषवत्त्वं अतोनित्यंयज्ञादिकर्म नत्याज्यमिति ३

भाषाअनुवाद

कहतेकिहेभरतसत्तमभरतवंशीअर्जुन इसपूर्वोक्तपरस्परविरुद्धमतकेविषयमेंनिश्च यरूप जोमेरेवचनसोसुनो औरत्यागकीलोकमेंप्रसिद्धिहै तौउसकेविषयमेंऔरक्या सुनैं ऐसाअनादरनकरना यहीकहतेहैं किहेपुरुषव्याघ्रकहेपुरुषश्रेष्ठअर्जुन त्या गपदार्थबडाकठिनदुर्व्बोधहै जिसहेतु इसकाम्यकर्मकात्याग तत्वदर्शीलोगोंनेअ च्छीतरहसेविचारकर तामसादिभेदसेत्रिविधकहेतीनप्रकारकहाहै सोत्यागविष यकतीनप्रकार इसीअध्यायकेसतयें श्लोकसेकहेंगे किनियतस्यतुसंन्यासःइति ४

यज्ञदानतपःकर्मनत्याज्यंकार्य्यमेवतत् यज्ञोदानंतपश्चैवपावनानिमनीषिणां ५

## शाङ्करभाष्य

निश्चयइत्याह यज्ञइति यज्ञोदानन्तपइत्येतत्त्रिविधंकर्मनत्याज्यंनत्यक्तव्यंकार्यंकरणीयमेवतत् यस्मात्यज्ञोदानंतपश्चैवपावनानिविशुद्धिकारणानिमनीषिणांफलानभिसन्धीनामित्येतत् ५ एतान्यपीति एतान्यपितुकर्माणि यज्ञदानतपांसिपावनान्युक्तानिसङ्गमासक्तिन्तेषुत्यक्त्वा फलानिचतेषांपरित्यज्यकर्त्तव्यानीतिअनुष्ठेयानीति मेममनिश्चितंमतमुत्तमंनिश्चयंशृणुमेतवेतिप्रतिज्ञायपावनत्वंचसहेतुमुक्त्वा

## आनन्दगिरिकृतटीका।

कर्माधिकृतान्प्रत्येवोक्तविकल्पप्रवृत्तावपिकृतोनिर्द्धारणसिद्धिस्तत्राह तत्रेति तमेवनिश्चयंदर्शयितुमादौत्यागगतमवान्तरविभागमाह त्यागोहीति ननुत्यागसंन्यासयोरुभयोरपिप्रकृतत्वाविशेषेत्यागस्यैवावान्तरविभागाभिधाने संन्यासस्योपेक्षितत्वमापद्येतनेत्याह त्यागोहीति सात्त्विकोराजसस्तामसश्चेत्युक्तेर्थेत्रैविध्ये विस्मयमेवनिश्चयस्यवोक्तिमत्रभागवतेननिश्चयेनेत्याशंक्याह यस्मादिति भगवतोन्येनोक्तविभागेतत्वानिश्चयाद्भागवतनिश्चयस्यश्रोतव्यतेतिनिगमयति तस्मादिति ४

तमेवभगवतोनिश्चयंविशेषतोनिर्द्धारयितुंप्रश्नपूर्वकमनन्तरश्लोकप्रवृत्तिंदर्शयति कःपुनरिति यज्ञादीनांकर्त्तव्यत्वेहेतुमाह यज्ञइति नकेवलंनत्याज्यंकिन्तुकर्त्तव्यमेवेत्याह कार्य्यमिति प्रतिज्ञामेवंविभज्यहेतुंविभजते कस्मादिति ५

## स्वामिकृतटीका।

एवंमतभेदमुपन्यस्यस्वमतंकथयितुमाह निश्चयंशृणुइति तत्रैवंविप्रतिपन्नेत्यागेनिश्चयंमेवचनाच्छृणु त्यागस्यलोकप्रसिद्धत्वात्किमत्रश्रोतव्यमितिमावमंस्थाइत्याह हेपुरुषव्याघ्रपुरुषश्रेष्ठ त्यागोहिदुर्बोधःहियस्मादयंकर्मत्यागस्त्रिविधस्तामसादिभेदेनत्रिविधःसम्यग्विवेकेनप्रकीर्त्तितः त्रैविध्यञ्चनियतस्यतुसंन्यासःकर्मणइत्यादिनावक्ष्यति ४ प्रथमंतावन्निश्चयमाह यज्ञेतिद्वाभ्यां मनीषिणांविवेकिनांपावनानि चित्तशुद्धिकराणि ५ येनप्रकारेणकृतान्येतानिपावनानिभवन्ति

## भाषाअनुवाद

अबप्रथम अपनेनिश्चितवचनको दोश्लोकसेकहतेहैं कियज्ञदानऔतपरूपकर्म त्यागकरनेयोगनहींहैं वरन्अवश्यहीकर्त्तव्यहैं क्योंकि येयज्ञदानतपपूजनआदिसत्कर्म विवेकीपुरुषोंकोपावनकरतेहैं अर्थात्चित्तकेशुद्धिकरनेवालेहैं ५

एतान्यपितुकर्माणिसङ्गंत्यक्त्वाफलानिच कर्त्तव्यानीतिमेपार्थनिश्चितंमतमुत्तमं ६

### शाङ्करभाष्य

एतान्यपिकर्माणिकर्त्तव्यानीत्येतन्निश्चितंमतंमनुत्तममिति प्रतिज्ञातार्थोपसंहारएव नापूर्वार्थंवचनमेतान्यपीति प्रकृतसन्निकृष्टार्थतोपपत्तेः सासङ्गस्यफलार्थिनोवन्धहेतून्येतान्यपिकर्माणिमुमुक्षोःकर्त्तव्यानीति अपिशब्दस्यार्थःनत्वन्यानि कर्माण्यपेक्ष्यैतान्यपीत्युच्यन्तेअन्येवर्णयन्तिनित्यानांकर्मणांफलाभावात्सङ्गंत्यक्त्वाफलानिचेति नोपपद्यते एतान्यपीतियानिकाम्यानिकर्माणि नित्तेभ्योऽन्यानि एतानिअपिकर्त्तव्यानिकिमुतयज्ञदानतपांसिनित्यानिइति तदसत्नित्यानामपिकर्मणांफलवत्त्वस्योपपादितत्वात् यज्ञोदानंतपश्चैवपावनानीत्यादिवचनेननित्यान्यपिकर्माणिवन्धहेतुत्वाशङ्कयाजिहासोर्मुमुक्षोःकुतःकाम्येषुप्रसङ्गः दूरेणह्यवरङ्कर्मेतिचनिन्दितत्वात् यज्ञार्थात्कर्मणोन्यत्रेति चकाम्यकर्मणां वन्धहेतुत्वस्यनिश्चितत्वात् त्रैगुण्यविषयावेदास्त्रैविद्यामांसोमपाःक्षीणेपुण्येमर्त्त्यलोकंविशन्तीतिच दूरव्यवहितत्वाच्चनकाम्येष्वेतान्यपीतिव्यपदेशः ६ तस्मादज्ञस्याधिकृतस्यमुमुक्षोः नियतस्येतिनियत

### आनन्दगिरिकृतटीका

प्रतिज्ञातमर्थमुपसंहरति एतान्यपीति उपसंहारश्लोकाक्षराणिव्याकरोति एतानीत्यादिना अक्षरार्थमुक्त्वा तात्पर्यार्थमाह निश्चयमिति प्रकृतार्थोपसंहारेगमकमाह एतान्यपीति अपिशब्दस्यविवक्षितमर्थंदर्शयति सासङ्गस्येति व्यावर्त्त्यंकीर्त्तयति नत्विति एतान्यपीत्यादिवाक्यं ननित्यकर्मविषयमितिमतमुपन्यस्यति अन्यइति नचेदिदन्नित्यकर्मविषयन्तर्हिंइत्याशंक्यवाक्यमवतार्य्य व्याकरोति एतानीत्यदिना नित्यानामफलत्वमुपेत्ययच्चोद्यन्तदयुक्तमितिदूषयति तदसदिति यत्तुकाम्यान्यपिकर्त्तव्यानीतितन्निरस्यति नित्यान्यपीति किञ्चकाम्यानांभगवतानिन्दितत्वा

### भाषाअनुवाद

जिसप्रकारसेकियेगये येकर्म विवेकीजनोकेचित्तको शुद्धकरतेहैं सोईप्रकारसेइनकर्मोका अनुष्ठानदेखावतेहुयेकहतेहैं किहेपार्थअर्जुन सङ्गकहेकर्टत्वाभिनिवेश अर्थात्हमकर्त्ताइसकर्मकोकरतेहैं इसअहङ्कारकोछोड़कर केवलईश्वरकेआधीनरूपसे कर्मकाअनुष्ठानकरनाउचितहै औरफलकीकामनाकोभीत्यागकरके जोकर्मकाकरनाहै यहीहमारानियतअभिमतसिद्धान्तहै इसीसेवहकर्मउत्तमहैं यहभगवान अर्जुनसेकहाहै ६ अवइसश्लोकसे देखावतेहैं

नियतस्य तु संन्यासः कर्म्मणो नोपपद्यते मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ७

## शाङ्करभाष्यं

स्य तु नित्यस्य संन्यासः परित्यागः कर्म्मणो नोपपद्यते अज्ञस्य पावनत्वस्येष्टत्वात् मोहादज्ञा नात्तस्य नियतस्य परित्यागो नियतञ्चावश्यं कर्त्तव्यं त्यजते चेति विप्रतिषिद्धमतो मोह निमित्तः परित्यागस्तामसः परिकीर्त्तितो मोहश्च तम इति ७

## आनन्दगिरिकृतटीका।

न्न तेषु मुमुक्षोरनुष्ठानमित्याह दूरेणेति किञ्च मुमुक्षोरपेक्षितमोक्षापेक्षया विरुद्ध फलवत्त्वात् काम्यकर्मणां न तेषु तस्यानुष्ठानमित्याह यज्ञार्थादिति काम्यानां बन्धहेतुत्वं निश्चितमित्यत्र पूर्वोत्तरवाक्यानुकूल्यं दर्शयति त्रैगुण्येति किञ्च पूर्वश्लोके य ज्ञादिनित्यकर्मणां प्रकृतत्वादेतच्छब्देन सन्निहितवाचिना परामर्शात् काम्यकर्मणा ञ्च काम्यानां कर्मणामिति व्यवहितानां सन्निहितपरामर्शके तच्छब्दाविषयत्वान्न काम्य कर्माण्येतान्यपीति व्यपदेशमर्हन्तीत्याह दूरेति ६ नित्यकर्मणामवश्यकर्त्त व्यत्वमुक्तमुपजीव्यापेक्षितं पूरयन्ननन्तरश्लोकमवतारयति तस्मादिति ननु कश्चिन्न यतमपि कर्म त्यजन्नुपलभ्यते तत्राह मोहादिति अज्ञानं पावनत्वापरिज्ञानं अज्ञस्य नित्यकर्मत्यागो मोहादित्येतदुपपादयति नियतञ्चेति नित्यकर्मत्यागस्य मोहकृतत्वे कुतस्तामसत्वमित्याशङ्क्याह मोहश्चेति ७ इतश्च नित्यकर्मत्यागो नाज्ञस्य सम्भ

## स्वामिकृतटीका

तत्प्रकारं दर्शयन्नाह एतान्यपीति यानि यज्ञादीनि कर्माणि मया पावनानीत्युक्ता न्येतान्यप्येवं कर्त्तव्यानि कथं सङ्गं कर्त्तृत्वाभिनिवेशं त्यक्ता केवलमीश्वराधीनतया क र्त्तव्यानि फलानि च त्यक्ता कर्त्तव्यानीति मे मतं निश्चितं अतएवोत्तमं ६

प्रतिज्ञातं त्यागत्रैविध्यमिदानीं दर्शयति नियतस्येति त्रिभिः काम्यस्य कर्मणो व

## भाषाअनुवाद।

कि सकल काम्यकर्मों को बन्धकत्व है अर्थात् कामना करिके किये कर्म बन्धन करते हैं इस हेतु से उनका त्याग करना ही कर्त्तव्य है परन्तु नियत कहे नित्यकर्मों का त्याग कर ना योग्य नहीं है क्योंकि नित्यकर्म सत्वशुद्धि के द्वारा मोक्ष के साधनस्वरूप हैं इससे यद्यपि कर्म का परित्याग करना ठीक है तौभी नित्यकर्म का त्याग मोह से ही होता अ र्थात् तामस है क्योंकि मोह तमोगुण से होता है इससे उस त्याग को शिष्ठलोगों ने ता मस हो कहा है ७ राजस त्याग को कहते हैं कि जो मनुष्य आत्मज्ञान विना के

दुःखमित्येवयत्कर्म्मकायक्लेशभयात्त्यजेत् सकृत्वाराजसंत्यागंनैवत्यागफलंलभेत् ८

## शाङ्करभाष्य

किञ्च दुःखमितिदुःखमित्येवयत्कर्मकायक्लेशभयात्शरीरदुःखभयात्त्यजेत् सकृत्वाराजसंराजोनिर्वर्त्यत्यागं नैवत्यागफलंज्ञानपूर्वकस्यसर्व्वकर्मत्यागस्यफलंमोक्षाख्यंनलभेन्नैवलभते ८ कःपुनःसात्विकस्त्यागःकार्यमिति कार्यंकर्त्तव्यमित्येव यत्कर्म्मनियतंनित्यंक्रियतेनिर्वर्त्त्यतेहेअर्जुनसङ्गंफलञ्चएवनित्यानांकर्म्मणांफलवत्वे भगवद्वचनंप्रमाणमवोचामाथवायद्यपिफलंनश्रूयतेनित्यस्यकर्मणस्तथापिनित्यकर्म्म कृतमात्मसंस्कारंप्रत्यवायपरिहारंवाफलंकरोत्यात्मनइतिकल्पयत्येवाज्ञस्तत्रतामपि कल्पनांनिवारयति फलंत्यक्त्वेत्यनेनातः साधूक्तंसङ्गंत्यक्त्वाफलञ्चेति सत्यागोनित्य कर्म्मसुसङ्गफलपरित्यागःसात्विकः सत्वनिर्वृत्तोमतोऽभिमतः ९

## आनन्दगिरिकृतटीका ।

वतीत्याह किञ्चेति ननुमोहंविनैवदुःखात्मकंकर्मकायक्लेशभयात्त्यजतिकरणानि हि कार्यंजनयन्तिश्राम्यन्तितथाचनतत्त्यागस्तामसोयुक्तस्तत्राह दुःखमित्येवेति यत् कर्मदुःखात्मकमशक्यसाध्यमित्येवालोच्यतन्निर्व्वर्त्ततेदेहस्येन्द्रियाणाञ्चक्लेशात्मनो भयात्त्यजति सतत्त्यक्त्वाराजोनिमित्तंत्यागंकृत्वापिनतत्फलंमोक्षंलभतेकिन्तुकृते नैवराजसेनत्यागेनतदनुरूपंनरकंप्रतिपद्येतेत्याह दुःखमित्येवेत्यादिना कर्मत्या गस्तामसोराजसश्चेति द्विविधोदर्शितः ८ सम्प्रतिसात्विकंत्यागंप्रश्नपूर्व्वकंवर्णयति

## स्वामिकृतटीका ।

न्धकत्वात्संन्यासोयुक्तः नियतस्यतुनित्यस्यपुनःकर्मणः संन्यासस्त्यागोनोपपद्यते स त्त्वशुद्धिद्वारा मोक्षहेतुत्वात् अतस्तस्यपरित्यागउपादेयत्वेऽपि त्याज्यमित्येवंलक्ष णान्मोहादेवभवेत् सचमोहस्तामसत्वात्तामसः परिकीर्त्तितः ७

राजसंत्यागमाह दुःखमिति यःकर्त्तात्मबोधंविनाकेवलंदुःखमित्येवंमत्वाश रीरायासभयान्नित्यंकर्मत्यजेदितियत्तादृशस्त्यागोराजसोदुःखस्यराजसत्वात् अत स्तंराजसंत्यागंकृत्वासराजसःपुरुषस्त्यागफलंज्ञाननिष्ठालक्षणंनैवलभतइत्यर्थः ८

## भाषाअनुवाद

वलकर्मकरना दुखमात्रविचारिके शरीरक्लेशकेभयसे नित्यकर्मकात्यागकरताहै सोत्याग राजसहै क्योंकि दुखरजोगुणका धर्महै इसीसे राजसत्यागकारीरजो गुणीपुरुषको ज्ञानसेनिष्ठा जोत्यागकाफल सोकभूं नहींमिलैहै ८

कार्य्यमित्येवयत्कर्मनियतंक्रियतेऽर्जुन सङ्गंत्यक्त्वाफलञ्चैवसत्यागःसात्त्विकोमतः ९

## शाङ्करभाष्यं ।

ननुकर्मपरित्यागस्त्रिविधःसंन्यासइति चप्रकृतस्तत्रतामसोराजसश्चोक्तस्त्यागः कथमिहसङ्गफलत्यागस्तृतीयत्वेनोच्यते यथात्रयोब्राह्मणाआगतास्तत्रषडङ्गविदौ द्वौन्यायवित्तृतीयइति तद्वत् नैषदोषस्त्यागसामान्येनस्तुत्यर्थत्वात्अस्तिहि कर्मसंन्यासस्यफलाभिसन्धित्यागस्यचत्यागत्वसामान्यन्तत्रराजसतामसत्वेन कर्म्मत्यागनिन्दया कर्मफलाभिसन्धित्यागःसात्त्विकत्वेनस्तूयते सत्यागःसात्त्विकोमतइति यस्त्वधिकृतःसङ्गंत्यक्त्वाफलाभिसन्धिञ्चनित्यंकर्मकरोति तस्यफलरागादिनाकलुषीक्रियमाणमन्तःकरणंनित्यैश्चकर्म्मभिःसंस्क्रियमाणंविशुध्यति तत्विशुद्धंप्रसन्नमात्मालोचनक्षमंभवति तस्यैवनित्यकर्मानुष्ठानेनविशुद्धान्तःकरणस्यात्मज्ञानाभिमुखस्यक्रमेणयथातन्निष्ठस्यात्तद्वक्तव्यमित्याह नद्वेष्टिअकुशलंअशोभनंकाम्यंकर्म्मशरीरारम्भद्वारेणसंसारकारणंकिमनेनेत्येवंकुशलेशोभनेनित्यकर्म्मणि सत्वशुद्धिज्ञानोत्पत्तितन्निष्ठाहेतुत्वेनमो

## आनन्दगिरिकृतटीका

कःपुनरितिकर्त्तव्यमित्येवेत्येवकारेण नित्यस्यभाव्यान्तरंनिषिध्यते नित्यानांविध्युद्देशेफलाश्रवणात् तेषांफलंत्यक्त्वा त्ययुक्तमित्याशङ्क्याह नित्यानामिति फलंत्यक्त्वेत्यस्यविधान्तरेणतात्पर्यमाह अथवेति नहिविधानाकृतंकर्म अनर्थकं विध्यानर्थक्यात्त नश्रौतफलाभावेपिनित्यंकर्म विधितोनुतिष्ठन्नात्मानमजानन्ननुपहतमनस्त्वात्तया तस्मिन्कर्मण्यात्मसंस्कारंफलंकल्पयति तदकरणेप्रत्यवायस्मृत्या तत्कारणंकर्तुरात्मनस्तन्निवृत्तिंकरोतीतिवा नित्यकर्मण्युक्तांकल्पनामनुनिष्पादितफलकल्पनाञ्चफलंत्यक्त्वेत्यनेनभगवान्निवारयतीत्यर्थः नित्यकर्मसुफलत्यागोक्तेः सम्भवेफलितमाह अत इति ९ कर्मतत्फलत्यागस्य त्यागसंन्यासशब्दाभ्यां प्रकृतस्यत्यागोहीतित्रैवि

## स्वामिकृतटीका

सात्त्विकंत्यागमाह कार्यमिति कार्यमित्येवबुद्ध्या नियतमवश्यंकर्त्तव्यतया विहितंकर्मसङ्गंफलञ्चत्यक्त्वाक्रियतइति यस्ताहृशस्त्यागः ससात्त्विकोमतः ९

## भाषाअनुवाद

अबसात्त्विकरूप त्यागकहतेहैं किहेअर्जुन कर्म सबकर्त्तव्यहैं ऐसेविचारसे नियतकहेअवश्यकर्त्तव्यरूप विहितकर्मोंको कर्तृत्वअभिनिवेशकहे अहंबुद्धि औ फलकी कामनारहित जोत्यागकरना सोसात्त्विकत्यागकहे उत्तमत्यागहै ९

नद्वेष्ट्यकुशलंकर्म कुशलेनानुषज्जते त्यागीसत्त्वसमाविष्टोमेधावीच्छिन्नसंशयः १०

## शाङ्करभाष्यं

त्वकारणमिदमित्येवंनानुषज्जते तत्रापिप्रयोजनमपश्यन्ननुसङ्गंप्रीतिंनकरोतीत्येतत्
कःपुनरसौत्यागीपूर्व्वोक्तेनसङ्गफलपरित्यागेनतद्वांस्त्यागी यःकर्म्मणिसङ्गंत्यक्त्वातत्
फलेचनित्यकर्मानुष्ठायी सत्यागीकदापुनरसावकुशलंकर्म नद्वेष्टि कुशलेचनानुषज्ज
तइत्युच्यतेसत्त्वसमाविष्टोयदासत्त्वेनात्मानात्मविवेकविज्ञानहेतुनासमाविष्टःसंव्या
प्तःसंयुक्तइत्येतत् अतएवचमेधावीमेधयात्मज्ञानलक्षणयाप्रज्ञया संयुक्तस्तद्वान्मेधा
वीमेधावित्वादेवच्छिन्नसंशयःच्छिन्नोऽविद्याकृतः संशयोयस्यआत्मस्वरूपावस्थानमेव
परंनिःश्रेयससाधनं नान्यत्किञ्चिदित्येवंनिश्चयेन च्छिन्नसंशयः १०

## आनन्दगिरिकृतटीका

ध्यंप्रतिज्ञायप्रतिज्ञानुरोधेनद्विविधेव्युत्पाद्यद्वतीयां विधान्तद्विरोधेनव्युत्पादयतोभग
वतोऽकौशलमापतितमितिशङ्कते नन्विति प्रक्रमप्रतिकूलमुपसंहारवचनमनुचि
तमित्यत्र दृष्टान्तमाह यथेति पूर्व्वोत्तरविरोधेनप्राप्तमकौशलंप्रत्यादिशति नैष
दोषइति कर्मत्यागफलत्यागयोस्त्यागत्वेनसादृश्यात्कर्मत्यागनिन्दयातत्फलत्याग
स्तुत्यर्थमिदम्वचनमित्युपगमात् नविरोधोस्तीत्युक्तमेवव्यक्तीकुर्व्वन्नादौत्यागसामान्यं
विशदयति अस्तीति सतिसामान्येनिर्देशस्यस्तुत्यर्थत्वंसमर्थयते तत्रेति एवंपूर्व्वाप
रविरोधंपराकृत्यअनन्तरश्लोकतात्पर्यमाह यस्त्विति फलरागादिनेत्यादिशब्देन
कर्मस्वरूपासङ्गोगृह्यते अन्तःकरणमकलुषीक्रियमाणमितिच्छेदः विशुद्धेन्तःकर
णेकिंस्यादित्याशंक्याह विशुद्धमिति मलविकलत्वंविशुद्धत्वंसंस्कारत्वंप्रसन्नत्वमिति

## भाषा अनुवाद

एवम्भूतसात्त्विकत्यागमे प्रकृष्टनिष्ठायुक्तपुरुषके लक्षणकहतेहैं किसतोगुण
सेसात्त्विकत्यागीपुरुष अकुशलकहेदुखदायीअर्थात् शिशिरकहे जाडेमेप्रातःस्ना
नआदिकर्मसेद्वेषनहींकरते औअकुशलकहे ग्रीष्मकालकेमध्यानस्नानआदिकर्म्ममे
प्रीतिनहीरखतेहैं इसकाकारणयह किवेलोगस्थिरबुद्धिअर्थात्विवेकसे अन्यकृतप
राभवअनादरआदि महादुखभी सहतेहैं औस्वर्गादिसुखकोभी त्यागकरतेहैं
फेरिसुखऔदुख जोक्षणिककहेक्षणमात्र रहनेवालाहै यहनिश्चयजानतेहैं औ
जिसकादैहिकसुखदुखका ग्रहणऔत्यागकाइच्छारूप जोमिथ्याज्ञान नष्टहोगया
है सोछिन्नसंशयपुरुषहैं १० जोकहोकि पूर्वोक्तकर्मोकेफल त्यागसेकर्मोंहीं

### शाङ्करभाष्यं

योऽधिकृतः पुरुषः पूर्वोक्तेन प्रकारेण कर्मयोगानुष्ठानेन क्रमेण संस्कृतात्मा सन् जन्मादिविक्रियारहितत्वेन निःक्रियमात्मानमात्मत्वेन सम्बुद्धः स सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नासीनो नैष्कर्म्यलक्षणां ज्ञाननिष्ठामश्नुत इत्येतत् पूर्वोक्तस्य कर्मयोगस्य प्रयोजनमनेन श्लोकेनोक्तं यः पुनरधिकृतः सन्देहात्माभिमानित्वेन देहभृदज्ञो वाधितात्मकर्तृत्वविज्ञानतयाहं कर्त्तेति निश्चितबुद्धिस्तस्याशेषकर्मपरित्यागस्याशक्यत्वात् कर्मफलत्यागेन चोदितकर्मानुष्ठान एवाधिकारो न त्याग इत्येतमर्थं दर्शयितुमाह नहीति नहि यस्मादेहभृता देहं बिभर्त्तीति देहभृद्देहात्माभिमानवान्देहभृदुच्यते न हि विवेकी सहि वेदाविनाशिनमित्यादिना कर्तृत्वाधिकारान्निवर्त्तितोऽतस्तेन देहभृताऽज्ञेन न शक्यं त्यक्तुं संन्यसितुं कर्माण्यशेषतो निःशेषेण तस्मादज्ञस्याधिकृतो नित्यानि

### आनन्दगिरिकृतटीका

भेदः क्रमेण श्रवणाद्यावृत्तिद्वारेणेत्यर्थः तन्निष्ठेत्यात्मज्ञाननिष्ठोक्ता काम्यकर्मणि त्याज्यत्वेन द्वेषमभिनयति किमिति उभयत्र द्वेषं प्रीतिञ्च न करोतीति सामान्येनोक्तं कर्त्तारं प्रश्नपूर्वकं विशेषतो निर्दिशति कः पुनरिति त्यागीत्युक्तं त्यागिनमभिव्यनक्ति पूर्वोक्तेनेति कर्मणि सङ्गस्य तत्फलस्य च त्यागेनेति यावत् उक्तमेव त्यागिनं विशिनष्टि यः कर्मणीति तत्फलं त्यक्त्वेति सम्बन्धः काम्ये निषिद्धे च कर्मणि बन्धहेतुरिति न द्वेष्टि नित्ये नैमित्तिके च मोक्षहेतुरिति न प्रीयते तत्र कालविशेषं पृच्छति कदेति नित्यादिकर्मणा फलाभिसन्धिवर्जितेन क्षयितकल्मषसम्पन्नत्वं यथार्थग्रहणसमर्थं बुद्ध्यते तेन समावेशदशायामुक्तप्रीतिद्वेषयोरभावो भवतीत्याह उच्यत इति चतुर्थपादं व्याकरोति अत एवेति सम्बुद्धयथार्थग्रहणसामर्थ्ये समाविष्टत्वादित्यर्थः छिन्नसंशयत्वमेव विशदयति आत्मेति परनिःश्रेयसस्य च साधनं सम्यग्ज्ञानमेवेति योजना १०

### स्वामिकृतटीका

एवंभूतसात्त्विकत्यागपरिनिष्ठितस्य लक्षणमाह नद्वेष्टीत्यादि सत्त्वसमाविष्टः सत्त्वेन व्याप्तः सात्त्विकत्यागी अकुशलं दुःखावहं शिशिरे प्रातःस्नानादिकं कर्म न द्वेष्टि कुशले च सुखकरे कर्मणि निदाघे मध्याह्नस्नानादौ नानुषज्जते प्रीतिं न करोति तत्र हेतुः मेधावी स्थिरबुद्धिः यतः परपरिभवादिमहदपि दुःखं सहते स्वर्गादिसुखञ्च त्यजति तत्र कियदेतत्तात्कालिकं सुखं दुःखञ्चेत्येवमनुसन्धानवानित्यर्थः अत एव छिन्नः संशयो मिथ्याज्ञानं दैहिकसुखदुःखयोरुपादित्सा परिजिहीर्षा लक्षणं यस्य सः १०

नहिदेहभृताशक्यंत्यक्तुंकर्माण्यशेषतः यस्तुकर्मफलत्यागीसत्यागीत्यभिधीयते ११

शाङ्करभाष्यं।

कर्माणिकुर्वन् कर्मफलत्यागीकर्मफलाभिसन्धिमात्रसंन्यासीसत्यागीत्यभिधीयतेक
र्माण्यपिसन्नितिस्तुत्यभिप्रायेणतस्मात्परमार्थदर्शित्वेनैवदेहभृत देहात्मभावरहि
तेनाशेषकर्मसंन्यासःशक्यतेकर्त्तुं ११ किंपुनस्तत्प्रयोजनं यत्सर्व्वकर्मपरि

आनन्दगिरिकृतटीका

नदेहीत्यादिनाश्लोकेनोक्तमर्थंसङ्क्षिप्यानुवदति योऽधिकृतइति पूर्व्वोक्तप्र
कारेणेतिकर्माणितत्फलेचसङ्गत्यागेनेत्यर्थःकर्मात्मयोगस्यानुष्ठानेनसंस्कृतात्मासन्
क्रमेणश्रवणाद्यनुष्ठानद्वारेणकूटस्थंब्रह्मप्रत्यक्त्वेनसम्पद्यइति सम्बन्धः परस्यनिः
क्रियत्वेहेतुमाह जन्मादीति उक्तज्ञानवतःसर्वकर्मत्यागद्वारामुक्तिभाक्त्वंदर्शयति
ससर्व्वेति आत्मज्ञानवतःसर्वकर्मत्यागसम्भावनामुक्त्वातद्धीनस्यतदसम्भवेहेतुवचन
त्वेनअनन्तरश्लोकमवतारयति यःपुनरिति नवाधितमात्मनिकर्त्तृत्वविज्ञानमस्येत्य
ज्ञस्तथातस्यभावस्तत्ता तयेतियावत् एतमर्थंदर्शयितुमज्ञस्य सर्वकर्मसंन्यासासम्भवे
हेतुमाहेतियोजना यस्मादित्यस्यतस्मादित्युत्तरेणसम्बन्धः विवेकिनोपिदेहधारि
तयादेहभृत्वाविशेषेकर्माधिकारःस्यादित्याशंक्याह नहीति कर्त्तृत्वाभिकारस्तत्पू
र्वकंकर्मानुष्ठानंतस्मादितियावत् ज्ञानवतोदेहधारणेपितदभिमानित्वाभावोऽतःश
ब्दार्थः अज्ञस्यसर्वकर्मत्यागायोगमुक्तंहेतूक्त्यफलितमाह तस्मादिति कर्मानु
ष्ठायिनस्त्यागित्वोक्तिरयुक्तेत्याशंक्याह कर्मणीति कर्मिणोपिफलत्यागेनत्यागित्वव
चनंफलत्यागस्तुत्यर्थमित्यर्थः कस्यतर्हिसर्वकर्मत्यागः सम्भवतीत्याशंक्य विवेकवैरा
ग्यादिमतोदेहाभिमानहीनस्येत्युक्तंनिगमयति तस्मादिति ११

स्वामिकृतटीका

नन्वेवंभूतात्कर्मफलत्यागाद्वरंसर्वकर्मत्यागस्तथासतिकर्मविक्षेपाभावेनज्ञाननि

भाषाअनुवाद

कात्यागकर्नाहीश्रेष्ठक्योंनहोय जिसहेतुविक्षेपकरनेवालेकर्मदूरहोनेसे अविक्षेप
क्रमसेज्ञाननिष्ठारूपजोसुख सोसम्पन्नहोगा इसपरकहतेहैं किदेहअभिमानयुक्त
मनुष्य तावत्सर्व्वकर्मोका सम्पूर्णत्यागनहींकरसकतेहैं इसमेप्रमाण तीसरेअध्या
यकेपञ्चयेंश्लोकादिमेंकहाहै किनकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृत्इति इससे
जोसकलकर्मका अनुष्ठानकरकेभी फलकेत्यागीहैं वेइपुरुष प्रधानत्यागीहैं ११

अनिष्टमिष्टंमिश्रञ्चत्रिविधंकर्मणःफलं भवत्यत्यागिनांप्रेत्यनतुसंन्यासिनांक्वचित् १२

## शाङ्करभाष्यं

त्यागात् स्यादित्युच्यते अनिष्टं नरकतिर्यगादिलक्षणं इष्टं देवादिलक्षणं मिश्रंइष्टा
निष्टसंयुक्तंमनुष्यलक्षणञ्चैवंत्रिविधंत्रिःप्रकारं कर्मणोधर्माधर्मलक्षणस्यफलंबाह्या
नेककारकरूपं व्यापारनिष्पन्नंसदविद्याकृतमिन्द्रजालमायोपमं महामोहकरंप्रत्य
गात्मोपसर्पीव फल्गुतयालयमदर्शनंगच्छतीतिफलनिर्वचनं तदेतद्देवलक्षणंफलं भ
वत्यत्यागिनामज्ञानां कर्मिणामपरमार्थसंन्यासिनां प्रेत्यशरीरपातादूर्द्ध्वं नतुपर
मार्थसंन्यासिनां परमहंसपरिव्राजकानां केवलज्ञाननिष्ठानांक्वचिन्नहिकेवलं स
म्यक्दर्शननिष्ठाऽविद्यादिसंसारवीजं नोन्मूलयन्ति कदाचिदित्यर्थः १२

## आनन्दगिरिकृतटीका

उक्ताधिकारिणःसर्वकर्मसंन्यासासम्भवेपिफलाभावेकुतस्तस्यकर्त्तव्यतेतिशङ्क
तें किंपुनरिति गौणस्यमुख्यस्यवासंन्यासस्यफलंपिष्टच्छिषितमितिविकल्पयति उच्य
तइति सर्वकर्मत्यागोनामतदनुष्ठानेपितत्फलाभिसन्धित्यागःसत्वामुख्यसंन्यासस्य
फलमाह अनिष्टमिति मुख्येतुसंन्यासेसर्वकर्मत्यागेसम्यग्धीद्वारासर्वसंसारोच्छित्ति

## स्वामिकृतटीका।

ष्ठासुखंसंपद्यतेतत्राह नहीति देहभृतादेहाभिमानवतानिःशेषेणसर्वाणिकर्माणि
त्यक्तुंनहिशक्यानि तदुक्तं नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृदित्यादिना तस्मा
द्यस्तुकर्माणिकुर्वन्नपि कर्मफलत्यागी सएवमुख्यःत्यागीत्यभिधीयते ११

## भाषाअनुवाद

अवपूर्वोक्तत्यागका फलकहतेहैं किअनिष्टकहेनरक औइष्टकहेदेवत्व तथामि
श्रकहेमनुष्यत्व येईपापपुन्यमिलेऊये कर्मोकेफलहैं सोकाम्यकर्मकरनेवालोंको दे
हान्तहोनेपर प्राप्तहोतेहैं क्योंकि सकाममनुष्योंको पापपुन्यऔदोनोसे मिलेत्रिवि
धकर्मसम्भवहैं परन्तु येकर्मसंन्यासीपुरुषको किसीतरहसम्भवनहीं होते औसं
न्यासीइसप्रसङ्गमे कर्मफलकात्यागीही लेतेहैं यहांप्रमाणसुनोकि अनाश्रितःकर्म
फलंकार्यंकर्मकरोतियः ससंन्यासीचयोगीचइतिछठेअध्यायकेप्रथमश्लोकसेलेकरक
हाहै औकर्मफलत्यागीपुरुषको सबजगहसंन्यासीकहा इससेयहफलत्यागी सात्वि
कमनुष्यको पापकेअसम्भवहेतुसे औभगवतकोअर्पणकरनेसे पुन्यफलकेत्यागहो
नेसे त्रिविधजोकर्मफल वेकिसीप्रकारसेभी नहीं होतेहैं १२

शाङ्करभाष्यं

अतःपरमार्थदर्शिन एवाशेषकर्मसंन्यासित्वं सम्भवत्यविद्याध्यारोपितत्वादात्मनि क्रियाकारकफलानां नत्वज्ञस्याधिष्टानादीनि क्रियाकर्तृणि कारकान्यात्मत्वेन पश्यतोऽशेषकर्मसंन्यासः सम्भवति तदेतदुत्तरैः श्लोकैर्दर्शयति पञ्चेति पञ्च इमानि वक्ष्यमाणानि हे महाबाहो कारणानि निवर्त्तकानि निबोध मेममइत्युत्तरत्र चेतः समाधानार्थं वस्तुवैषम्यप्रदर्शनार्थंच तानि च कारणानि ज्ञातव्यतया स्तौति सांख्ये ज्ञातव्याः पदार्थाः संख्यायन्ते यस्मिन् शास्त्रे तत् सांख्यं वेदान्तः कृतान्त इति तस्यैव विशेषणं कृतमिति कर्मोच्यते त

आनन्दगिरिकृतटीका।

देवफलमित्याह नत्विति पादत्रयं व्याकरोति अनिष्टमित्यादिना तिर्यगादीत्यादिपदमवशिष्टनिकृष्टयोनिसंग्रहार्थं देवादीत्यादिपदं विशिष्टोत्कृष्टयोनिग्रहणार्थेति विभागः फलशब्दं व्युत्पादयति बाह्येति कारणद्वारकमनेकविधत्वमुक्त्वा मिथ्यात्वमाह अविद्येति तत्कृतत्वेन दृष्टिमात्रदेहत्वे दृष्टान्तमाह इन्द्रेति प्रतीतितो रमणीयत्वं सूचयति महामोहेति अविद्योत्थाद्याविद्याश्रितत्वादात्माश्रितत्वं वस्तुतो नास्तीत्याह प्रत्यगिति उक्तं फलं कर्मिणामिष्यते चेदमुख्यसंन्यासफलोक्तिपरत्वं पादत्रयस्य कथमिष्टमित्याशंक्याह अपरमार्थेति फलाभिसन्धिविकलानां कर्मिणां देहपाताद्रूर्द्धं कर्मानुरोधिफलमावश्यकमित्यर्थः कर्मिणामेव सतामफलाभिसन्धीनाममुख्यसंन्यासित्वात्तदीयामुख्यसंन्यासस्य फलमुक्त्वा चतुर्थपादं व्याचष्टे नत्विति अमुख्यसंन्यासमनन्तरप्रकृतं व्यवच्छिनत्ति परमार्थेति तेषां प्रधानं धर्ममुपदिशति केवलेति क्वचिद्देशे काले वा नास्ति यथोक्तं फलं तेषामिति सम्बन्धः तर्हि परमार्थसंन्यासोऽफलत्वात् नानुष्ठीयेतेत्याशंक्य तस्य मोक्षावसायित्वान्नैवमित्याह नहीति १२

स्वामिकृतटीका

एवंभूतस्य कर्मफलत्यागस्य फलमाह अनिष्टमिति अनिष्टं नारकित्वं इष्टं देवत्वं मिश्रं मनुष्यत्वं एवं त्रिविधं पापस्य पुण्यस्य चोभयमिश्रस्य च कर्मणो यत् फलं प्रसिद्धं तत् सर्वमत्यागिनां सकामानामेव प्रेत्य परत्र भवति तेषां त्रिविधकर्मसम्भवात् नतु संन्यासिनां क्वचिदपि भवति संन्यासिशब्देनात्र फलत्यागसाम्यात् प्रकृताः कर्मफलत्यागिनो गृह्यन्ते अनाश्रितः कर्मफलं कार्य्यं कर्म करोति यः स संन्यासी च योगी चेत्येवमादौ कर्मफलत्यागिषु संन्यासिशब्दप्रयोगदर्शनात् तेषां सात्त्विकानां पापासम्भवादीश्वरार्पणेन च पुण्यफलस्य त्यक्तत्वात् त्रिविधमपि कर्मफलं न भवतीत्यर्थः १२

पञ्चैमानिमहाबाहोकारणानिनिबोधमे सांख्येकृतान्तेप्रोक्तानिसिद्धयेसर्वकर्मणां १३

शाङ्करभाष्यं

स्यान्तःपरिसमाप्तिर्यत्नसकृतान्तःकर्मान्तइत्येतत् यावानर्थउदपानेसर्वंकर्माऽखिलंपा र्थज्ञानेपरिसमाप्यतइत्यात्मज्ञानेसञ्जातेसर्वकर्मणांनिवृत्तिंदर्शयति अतस्तस्मिन्ना त्मज्ञानार्थेसांख्येकृतान्तेवेदान्तेप्रोक्तानिकथितानिसिद्धयेनिष्पत्त्यर्थंसर्वकर्मणां १३

आनन्दगिरिकृतटीका।

ननुअपरमार्थसंन्यासवदविशेषादज्ञानांपरमार्थसंन्यासोऽपिकिंनस्यात्त्यागस्यस्तु करत्वात्तत्राह अतःपरमार्थेति तस्यसम्यग्दर्शनादविद्यानिवृत्तौतदारोपितक्रिया कारकादिनिवृत्तेरितिहेत्वर्थः विद्यावतःसर्वकर्मसंन्यासित्वसम्भावनामुक्त्वा एवका रव्यावर्त्त्यंप्रदर्शयति नत्विति अविदुषोऽशेषकर्मणांतद्धेतूनाञ्चरागादीनांत्यागायो गेकारकेष्वधिष्ठानादित्यात्मदर्शनंहेतुमाह क्रियेति कथमधिष्ठानादीनांक्रियाक र्तृत्वं कथञ्चाविदुषस्तेष्वात्मत्वधीरित्याशंक्यानन्तरश्लोकचतुष्टयस्यतात्पर्यमाह त देतदिति कर्माधिष्ठानादीनामप्रामाणिकत्वाशङ्कामादावुद्धरति पञ्चेतिवक्ष्यमाणेष्वित्यर्थः वस्तूनांतेषामेववैषम्यंनिर्दिदर्शयिषितं नहिचे तःसमाधानादृतेज्ञातुंशक्यं तत्सांख्यशब्दंव्युत्पादयति ज्ञातव्येति आत्मा त्वं पदार्थस्तत्पदार्थाभ्यांज्ञातयोरैक्यधीस्तदुपयोगिनश्चश्रवणादयः पदार्थास्तेसंख्यायन्तेव्य त्पाद्यन्ते कृतान्तशब्दस्यवेदान्तविषयत्वंविभजते कृतमित्यादिना वेदान्तस्यतत्वधी

भाषा अनुवाद

जोकहो किकर्मो पुरुषको कर्मफलक्योंनहोंगे इसशङ्कापर सङ्गत्यागीविद्वानमनु ष्यको जोकर्मबन्धनहीं यहसिद्धकरनेकीइच्छासे यहांसेपांचश्लोकसेकहतेहैं किहे महाबाहो कर्मोकीनिष्पत्तिमे येपांचकारण मेरेवचनसे जानो औअपनेकर्त्तत्वरू प अभिमानको निवृत्तिकेअर्थ इनकारणोको अवश्य जाननाचाहिये किइसप्रकार परमात्मा सम्यकरूपसे प्रसिद्धअर्थात्ज्ञानका विषयहोताहै इसअर्थका सूचनकर नेवाला जोसांख्यभावार्थ यहकि तत्त्वज्ञानमे प्रकाशमान आत्मबोधहीको सांख्यक हतेहैं औरऐसेकर्मोका अन्तअर्थात्समाप्ति इसमेंहै इसअर्थकासूचक जोकृतान्तअ र्थात्सांख्यकृतान्तकहै वेदान्तसिद्धान्तमे अथवाइसमे सबतत्त्वगनेहैं इसअर्थकासूच क सांख्यऔर इसतरहसे कियाहै अन्तअर्थात् सकलनिर्णय इसमेहै इसअर्थका सूचक जोकृतान्तपद इनदोनोपदार्थोको सांख्यकहतेहैं सोईसांख्यमे येपांचोका रण अच्छीप्रकारसे कहाहै इससेतुम सम्यकप्रकारसेइनकारणोकोजानो १३

अधिष्ठानंतथाकर्त्ताकरणञ्चपृथग्विधं विविधाश्चपृथक्चेष्टादैवञ्चैवात्रपञ्चमं १४

## शाङ्करभाष्य।

कानितानीत्युच्यते अधिष्ठानमिति अधिष्ठानमिच्छाद्वेषसुखदुःखज्ञानादीना मभिव्यक्तेराश्रयोधिष्ठानंशरीरन्तथाकर्त्तोपाधिलक्षणोभोक्ता करणञ्चश्रोत्रादि कंशब्दाद्युपलब्धयेपृथग्विधं नानाप्रकारंद्वादशसंख्यं विविधाश्चपृथक्चेष्टावायवीयाः

## आनन्दगिरिकृतटीका

द्वाराकर्मावसानभूमित्वेवाक्योपक्रमानुकूल्यंदर्शयति यावानिति उदपानेकूपादौ यावानर्थःस्नानादिःतावानर्थःसमुद्रेसम्पद्यतेऽतोयथाकूपादिकृतंकार्य्यंसर्वंसमुद्रेन्तर्भवति तथासर्वेषु वेदेषु कर्मार्थेषु यावत्फलं तावत्ज्ञानवतोब्राह्मणस्यज्ञानेन्तर्भवति ज्ञानंप्राप्तस्यकर्त्तव्यानवशेषादित्यर्थः तत्रैववाक्यान्तरमनुक्रामति सर्वमिति उदाहृतवाक्ययोस्तात्पर्यमाह आत्मेति आत्मज्ञानेसतिसर्वकर्मनिवृत्तावपिकथंवेदान्तस्यकृतान्तत्वमित्याशंक्याह अतइति तानिमद्वचनतोनिबोधेति पूर्वेणसम्बन्धः १३

## स्वामिकृतटीका

ननु कर्म्मकुर्वतः कर्म्मफलंकथंनभवेदित्याशंक्य सङ्गत्यागिनोनिरहङ्कारस्यकर्मलेपोनास्तीत्युपपादयितुमाह पञ्चेति पञ्चभिः सर्वकर्मणांसिद्धयेनिष्पत्तये इमानि वक्ष्यमाणानिपञ्चकारणानि मेवचनान्निबोधजानीहि आत्मनःकर्त्तृत्वाभिमाननिवृत्तयेर्थमवश्यमेतानिज्ञातव्यानीत्येवंतेषांस्तुत्यर्थमेवाह सांख्यइति सम्यक्ख्यायते ज्ञायतेपरमात्माअनेनेतिसांख्यंतत्त्वज्ञानंतस्मिन्प्रकाशमानअत्मात्मबोधःसांख्यःतस्मिन्कृतंकर्म तस्यान्तःसमाप्तिर्यस्मिन्नितिकृतान्तस्तस्मिन् वेदान्तसिद्धान्तइत्यर्थः यद्वा संख्यायन्तेगण्यन्तेतत्त्वान्यस्मिन्नितिसांख्यं कृतोऽन्तोनिर्णयोस्मिन्नितिकृतान्तंसांख्यशास्त्रमेव तस्मिन्प्रोक्तानि अतःसम्यङ्निबोधेत्यर्थः १३

## भषा अनुवाद।

सोई सर्व्वकर्म्मसम्पत्तिकेविषयमे कारणकहतेहैं किअधिष्ठानकहेशरीरऔ कर्त्ताकहे चितऔजडकीग्रन्थिरूप अहङ्कार औभिन्नभिन्नअनेकप्रकारकेकरणस्वरूप चक्षुआदिइन्द्री औविविधकहे कार्यसे वा स्वरूपसेभिन्नभिन्नचेष्टा अर्थात् प्राणअपानादिवायुके व्यापारसमूह औअत्रकहे अधिष्ठानशरीरआदि सबकेमध्यमे पञ्चमस्वरूप दैवअन्तर्यामी सर्व्वनियन्ता अथवा चक्षुआदिइन्द्रियोंके अनुकूलकारी सूर्यआदिदेवताजानो अथवा अन्तर्यामी इहांचिदाभासज्ञानहै १४

शरीरवाङ्मनोभिर्यत्कर्मप्रारभतेनरः न्याय्यंवाविपरीतंवापञ्चैतेतस्यहेतवः १५

शाङ्करभाष्यं

प्राणापानाद्यादैवञ्चैवदैवमेवात्रएतेषुचतुर्षुपञ्चमंपञ्चानांपूरणमादित्यादिचक्षुरा
द्यनुग्राहकं १४ शरीरेतिशरीरवाङ्मनोभिर्यत्कर्मत्रिभिरेतैःप्रारभते निर्व
र्त्तयति नरःन्याय्यम्वाधर्मंशास्त्रीयंविपरीतंवाअशास्त्रीयं अधर्म्यंयच्चापिनिमिषितचे
ष्टादिजीवनहेतुस्तदपिपूर्व्वकृतधर्म्माधर्मयोरेवकार्य्यमिति न्याय्यविपरीतयोरेवग्रह
णेनगृहीतंपञ्चैतेयथोक्तास्तस्यसर्व्वस्यैवकर्मणोहेतवःकारणानि ननु अधिष्ठानादी
निसर्व्वकर्म्मणांकारणानिकथमुच्यते शरीरवाङ्मनोभिः प्रारभ्यतइतिनैषदोषःविधि
प्रतिषेधलक्षणंसर्व्वंकर्मशरीरादित्रयप्रधानं तदङ्गतयादर्शनश्रवणादिचजीवनलक्ष

आनन्दगिरिकृतटीका

कर्मार्थान्यधिष्ठानादीनिमानमूलत्वात् ज्ञेयानीत्युक्तमिदानींप्रश्नपूर्व्वकंविशेषतस्ता
निनिर्द्दिशति कानीत्यादिना प्रतीकमादायव्याकरोति अधिष्ठानमिति उपाधिलक्ष
णोबुद्ध्यादिरुपाधिस्तल्लक्षणस्तत्स्वभावोबुद्ध्याद्यनुविधायीतद्धर्म्मात्मनिपश्यन्नुपहित
स्तत्प्रधानइत्यर्थः तत्रकार्य्यलिङ्गकमनुमानंसूचयति शब्दादीति ज्ञानेन्द्रियाणिपञ्च
पञ्चकर्म्मेन्द्रियाणिमनोबुद्धिश्चेतिद्वादशसंख्यात्वं चेष्टायाविविधत्वंनानाप्रकारत्वंतदे
वस्पष्टयति वायवीयाइति पृथक्त्वमसङ्कीर्णत्वंनहिप्राणापानादिचेष्टानांमिथः सङ्क
रोस्ति दैवंविशदयति आदित्यादीति १४ पञ्चानामधिष्ठानादीनामुक्तानां सर्व्व

स्वामिकृतटीका

तान्येवाह अधिष्ठानमिति अधिष्ठानंशरीरं कर्त्ताचिदचिद्ग्रन्थिरहङ्कारः पृ
थग्विधमनेकप्रकारं करणंचक्षुःश्रोत्रादिविविधाःकार्य्यतःस्वरूपतश्चपृथग्भूतास्चे
ष्टाःप्राणापानादीनांव्यापाराः अत्रएतेष्वेवपञ्चमंदैवंचक्षुराद्यनुग्राहकमादित्यादि
सर्व्वप्रेरकोऽन्तर्यामीवा १४ एतेषामेव सर्व्वकर्महेतुत्वमाह शरीरेति य

भाषाअनुवाद

इन्हींपांचोंको सर्व्वकर्ममें कारणत्वकहतेहैं किइन्हींपांचोकेकारणसे आरम्भ
कियेजाते जोकर्मसकल तिनकोशरीरादिमें अन्तर्गतकहें मानिके इसश्लोकमेंक
हाहै किजिसहेतुकर्ममात्र जोशारीरिक औवाचनिक तथामानसिक होतेहैं येप्र
सिद्धहैं श्लोककाअर्थ यहहै किशरीरवचनऔमनकेद्वारा सबमनुष्य जोकोईधर्म
या अधर्मकेकारणहै येईअधिष्ठानकहे शरीरआदिपांच कर्मोंकेहेतुहैं १५

तत्रैवंसतिकर्त्तारमात्मानंकेवलन्तुयः पश्यत्यकृतबुद्धित्वान्नसपश्यतिदुर्मतिः १६

## शाङ्करभाष्यं

एवंनिर्धारणाय नीकृतमुच्यते शरीरादिभिरारभ्यतइति फलकालेपितत्प्रधानैर्भुज्यतेइ तिपञ्चानामेवहेतुत्वं नविरुध्यते १५ तत्रेति तत्रेतिप्रकृतेनसम्बध्यते एवं सतिएवंयथोक्तैःपञ्चभिर्हेतुभिर्निर्वर्त्तसति कर्मणितत्रैवंसतीतिदुर्मतित्वस्यहेतुत्वे नसम्बध्यतेतत्रैतेषामात्मानमन्यत्वेनाविद्ययापरिकल्पितैःक्रियमाणस्य कर्मणोऽहमे वकर्त्तेति कर्त्तारमात्मानंकेवलंशुद्धंतुयःपश्यत्यविद्वान्कस्माद्वेदान्ताचार्योपदेशन्या येरकृतबुद्धित्वादसंस्कृतबुद्धित्वाद्योपिदेहादिव्यतिरिक्तात्मवाद्यन्यमात्मानमेव केवलं कर्त्तारंपश्यत्यसावप्यकृतबुद्धिरेवातोऽकृतबुद्धित्वान्नसपश्यत्यात्मनस्तत्त्वं कर्मणोवेत्य

## आनन्दगिरिकृतटीका

कर्मसिद्ध्यर्थत्वंस्फुटयति शरीरेति ननुजीवनकृतंनिमिषोन्मेषादिकर्मान्तरंसाधा रणमस्तितत्कथंराशिद्वयकरणमितितत्राह यच्चेति अधिष्ठानादीनांकर्मसामान्हेतुत्वं प्रतिज्ञायशरीरादित्रिविधकर्महेतुत्वोक्तिरयुक्तेति शङ्कते नन्विति पूर्वापरविरोधं परिहरति नैषदोषइति ननु जीवनकृतानिस्वाभाविकानिकर्माणिदर्शनादीनिविधि निषेधवाह्यत्वान्नदेहादिनिर्वर्त्तनानीत्याशंक्याह तदङ्गतयेति तस्यदेहादित्रयस्यप्रधान स्याङ्गञ्चक्षुरादितन्निष्पाद्यत्वेनजीवनकृतंदर्शनादिप्रधानकर्मण्यन्तर्भूतमिति त्रैविध्य मविरुद्धमित्यर्थः देहाद्यारम्भेत्रिविधेकर्मणिसर्वकर्मान्तरभावेपि कथंपञ्चानामेवाधि ष्ठानादीनांतत्रहेतुत्वंफलोपभोगकाले करणान्तरापेक्षासम्भवादित्याशंक्य जन्मका लभाविनोभोगकालभाविनश्चसर्वस्यकारणस्यतेष्वेवान्तर्भावान्मैमित्याह फलेति १५

## स्वामिकृतटीका।

योक्तैःपञ्चभिःप्रारभ्यमाणंकर्मत्रिष्वेवान्तर्भाव्य शरीरवाङ्मनोभिरित्युक्तं शरीरं वाचिकं मानसञ्च त्रिविधंकर्मेति प्रसिद्धःशरीरादिभिर्यत्कर्मधर्म्यमधर्म्यंवाकरोति नरस्तस्यसर्वस्य कर्मण एतेपञ्चहेतवः १५ ततःकिमतआह तत्रेति तत्र

## भाषाअनुवाद

तोइससे फेरिक्याहोताहै इसअपेक्षापर कहतेहैं किउनकर्मोंके हेतुजोअ धिष्ठानादिपांचमानहैं औरकोईहेतुनहींहै सोहोनेसेभी शास्त्रऔआचार्यके उप देशसे नहींशोधीगईबुद्धि इसकारण जोदुर्मतिमनुष्य उपाधिरहित असङ्गरूप आत्माको कर्त्तारूप देखतेहैं इससे वेदुर्मतिमनुष्य सम्यक्दर्शी नहींहैं १६

शाङ्करभाष्यं

योऽतोदुर्मतिःकुत्सिताविपरीतादुष्टाजस्रंजननमरणाप्रतिपत्तिहेतुभूता मतिरस्ये
तिदुर्मतिः सपश्यन्नपिनपश्यति यथातैमिरिकोऽनेकञ्चन्द्रं यथावाभ्रेषु धावत्सुचन्द्रं
धावन्तं यथा वाहनेउपविष्टोऽन्येषुधावत्स्वात्मानंधावन्तंपश्यति १६
कःपुनःसुमतिर्यःसम्यक्पश्यतीत्युच्यते यस्येति यस्यशास्त्राचार्य्योपदेशन्याय
संस्कृतात्मनोनभवत्यहंकर्तेत्यहंकर्त्तेत्येवंलक्षणोभावनाप्रत्ययअतएव पञ्चाधिष्ठाना
दयोऽविद्ययात्मनिकल्पिताःसर्वकर्मणांकर्त्तारोनाहमहन्तुतद्व्यापाराणांसाक्षिभूतः
अप्राणोह्यमनाःशुभ्रोऽक्षरात्परतःपरःकेवलोविक्रियइत्येवपश्यतीतिएतद्बुद्धिरन्तः

आनन्दगिरिकृतटीका।

क्रियाकर्त्तृत्वमधिष्ठानादीनामापाद्यविदुषस्तेभ्यात्मदृष्टिमनुवदति तत्रेति तत्र
पदपरामर्शयोग्यंप्रकृतंसर्वंकर्मप्रतीकमादायपूर्वेणसम्बन्धाक्षरार्थंकथयति एवमिति अ
धिष्ठानादीनामुक्तरीत्याकर्त्तृत्वेसत्यन्यगतं कर्तृत्वमात्मनोध्यारोप्यपश्यतोदुर्मतिरि
त्यात्मनिकर्तृत्वंपश्यन्नित्याह तत्रैवमिति कर्त्तारमित्यादिव्याचष्टे तत्रेत्यादिना ते
ष्वधिष्ठानादिषुतैरधिष्ठानादिभिरारोपितात्मभावैरित्यर्थः अकर्त्तारमात्मानंकर्त्ता
रंपश्यतीत्यत्रप्रश्नद्वाराहेतुमाह कस्मादिति ननुशास्त्रसंस्कृतबुद्धिरेवातिरिक्ता
त्मवादीकर्तृत्वंतस्यानुमन्यतेनासौकर्तृत्वमात्मनिपश्यन्नपिभवत्यकृतबुद्धिस्तत्राह यो
पीति तस्यापिशास्त्रपूर्वकमाचार्य्योपदेशेनतदनुसारिन्यायैश्चानाहितबुद्धित्वादकृ
तबुद्धित्वंसिद्धमित्यर्थः कौटस्थ्यमात्मनस्तत्त्वंयाथात्म्यंकर्मणोपितत्त्वमविद्याकृताधि
ष्ठानादिकृतत्वंनात्मास्पर्शित्वकर्मणोस्तत्त्वदर्शनाभावोऽतःशब्दार्थः दुष्टत्वेसप्टीकर्त्तु
दुर्मतित्वंविवृणोति जननेति अहंकर्त्तेत्यात्मदर्शनवतोपिनाविदुषस्तद्दर्शनमस्तीत्य
त्रदृष्टान्तमाह यथेति तिमिरोपहतचक्षुरनेकञ्चन्द्रंपश्यन्नपितत्त्वतोनतंपश्यत्येव
मविद्वानात्मानंकर्त्तारंपश्यन्नपि तत्त्वतोनतंपश्यतीत्यर्थः अधिष्ठानादिष्वविद्यया
सम्बद्धात्मनःस्वात्मनितद्गतक्रियारोपेदृष्टान्तमाह यथावेति अन्येष्वाहकेषुपुरुषेषु
धावनकर्तृषुवाहनेस्थितःस्वात्मानंप्रधावनकर्त्तारमविवेकादभिमन्यते तथाधिष्ठाना
दिषुक्रियाकर्त्तृषुतद्गतंस्वात्मानंकर्त्तारंमन्यमानोदुर्मतिरित्यर्थः १६

स्वामिकृतटीका।

सर्वस्मिन्कर्मणिएतेपञ्चहेतवइत्येवंसति केवलंनिरुपाधिमसङ्गमात्मानं यःकर्त्तारं
पश्यति शास्त्राचार्य्योपदेशाभ्यामसंस्कृतबुद्धित्वात् दुर्मतिरसौ सम्यक्नपश्यति १६

यस्यनाहंकृतोभावोबुद्धिर्यस्यनलिप्यते हत्वापिसइमांल्लोकान्नहन्तिननिबध्यते १७

## शाङ्करभाष्यम्।

करणंयस्यात्मनउपाधिभूतानलिप्यतेनानुशायिनीभवतीदमहमकार्षन्तेनाहं नरकं गमिष्यामीत्येवंयस्यबुद्धिर्नलिप्यतेससुमतिःसपश्यतिहत्वापिसइमान्लोकान्सर्वान् प्राणिनइत्यर्थः नहन्तिहननक्रियांनकरोति ननिबध्यते नापितत्कार्येणाधर्मफलेनस म्बध्यते ननुहत्वापिनहन्तीतिविप्रतिषिद्धमुच्यतेयद्यपिस्तुतिः नैषदोषःलौकिकपार मार्थिकदृष्ट्यपेक्षयातदुपपत्तेःदेहाद्यात्मबुद्ध्याहन्ताहमितिलौकिकींदृष्टिमाश्रित्यह त्वापीत्याह यथादर्शितांपारमार्थिकींदृष्टिमाश्रित्यनहन्तिननिबध्यतइतितदुभय मुपपद्यतएव नन्वधिष्ठानादिभिः सम्भूयकरोत्येवात्माकर्त्तारमात्मानंकेवलंत्विति केवलशब्दप्रयोगान्नैषदोषःआत्मनोऽविक्रियस्वभावत्वेऽधिष्ठानादिभिःसंहतत्वानुपप त्तेःविक्रियावतोह्यन्यैःसंहननंसम्भवामिसंहत्य वाकर्त्तृत्वंस्यान्नत्वविक्रियस्यात्मनःकेन चित्संहननमस्तिइतिनसम्भूयकर्त्तृत्वमुपपद्यतेअतःकेवलत्वंआत्मनःस्वाभाविकमि तिकेवलशब्दोऽनुवादमात्रंअविक्रियत्वञ्चात्मनःश्रुतिस्मृतिन्यायप्रसिद्धंअविकार्योऽय मुच्यतेगुणैरेवकर्माणिक्रियन्तेशरीरस्थोपिनकरोतीत्यादिसकृदुपपादितंगीतास्वेव तावत्श्रुतिषुचध्यायतीवलेलायतीवेत्येवमाद्यासुन्यायानिवाक्यानिदर्शितंन्यायतश्चनिरव यवमपरतन्त्रमविक्रियमात्मतत्त्वमितिराजमार्गः विक्रियावत्त्वाभ्युपगमेप्यात्मनःस्व

## भाषाअनुवाद

जिसकोकर्मलेपनहींहै ऐसासुमतिकौनहै इसअपेक्षासे कहतेंहैं किमैने यहकर्मकिया औमैकर्ताहूं ऐसीवासनाजिसकेनहींहै अथवा शरीरऔइन्द्रीमात्र को कर्त्तृत्वदेखनेसे अहङ्कारस्वभावरूप कर्त्तृत्वकाभीलेशजिसकोनहींहै इसहेतु से जिसकीबुद्धि इष्टअनिष्टविचारसे सकलकर्ममेंआसक्तनहींहोतीहै ऐसाजोदेहा दिसेभिन्नरूप आत्मदर्शीपुरुष सोप्राणियोंकी लोकदृष्टिसे हननकरकेभी सबमें अभिन्नरूप आत्मदृष्टिहेतुसे किसीकाभी हनन नहींकरता औकर्मफलसे बन्ध कोनहींपावताहै सत्वशुद्धिकेद्वारा अपरोक्षकहे प्रत्यक्षज्ञानउत्पन्नहेतुसे निष्का मकर्मकेद्वारा उसकोबन्धनकीशङ्का औरक्याहै यह५अध्यायके१०श्लोकमें कहचु केहैं किजोकर्मफलकी आशक्तिछोड़ भगवदर्पणपूर्वक कर्मकाअनुष्ठानकरतेहैं ते मनुष्य जलकेबीच वर्त्तमान पद्मपत्रकेसमान पुण्यपापसमस्तकर्मसे अलगरहते लि प्तनहींहोतेहैं अर्थात् पुन्य औ पाप उनको कभी नहीं लगता है १७

शाङ्करभाष्य

कोऽयमविक्रियायस्वभावितुमर्हति नाधिष्ठानादीनांकर्माख्यात्मकर्त्तृकाणिस्युर्नहिपर स्यकर्मपरेणाकृतमागन्तुमर्हतियत्त्वविद्ययागमितंनतत्तस्ययथारजतत्वंनशुक्तिकायां यथावातलमलवत्त्ववालैर्गमितमविद्ययानाकाशस्यतथाधिष्ठानादिविक्रियापितेषामे वेतिनात्मनःतस्मात्युक्तमुक्तमहंकृतत्वबुद्धिलेपाभावात् विद्वान्नहन्तिननिबध्यतइति नायंहन्तिनहन्यतइति प्रतिज्ञायनजायतइत्यादिहेतुवचनेनाविक्रियत्वमात्मनउक्त्वा वेदाविनाशिनमितिविदुषःकर्माधिकारनिवृत्तिंशास्त्रादौसङ्क्षेपतउक्त्वामध्येप्रसारि तञ्चतत्रतत्रप्रसङ्गंकृत्वाइहोपसंहरति शास्त्रार्थपिण्डीकरणायविद्वान्नहन्तिननिव ध्यतइति एवञ्चसति देहभृत्त्वाभिमानानुपपत्तावविद्याकृताशेषकर्मसंन्यासोपपत्तेः संन्यासिनामनिष्टादित्रिविधंकर्मणःफलंनभवतीत्युपपन्नंतद्विपर्ययाच्चेतरेषांभवतीत्ये तच्चापरिहार्यमित्येषगीताशास्त्रस्यार्थउपसंहृतः सएषसर्ववेदार्थसारोनिपुणमति भिः पण्डितैर्विचार्यप्रतिपत्तव्यइतितत्रतत्रप्रकरणविभागेनदर्शितोऽस्माभिःशास्त्र न्यायानुसारेण १७

आनन्दगिरिकृतटीका

विपरीतदृष्टेर्दुर्मतित्वंशिष्टस्यसम्यग्दृष्टेःसुमतित्वंप्रश्नपूर्वकमाह कःपुनरित्यादिना अहंकर्त्तेत्यात्मनिकर्तृत्वप्रत्ययाभावेकुतस्तकर्तृत्वधीरित्याशंक्याह एतइति कथंत र्हिअकर्तृत्वधीरात्मनीत्याशंक्याधिष्ठानादीनां तद्यापाराणाञ्चसाक्षित्वादित्याशंक्या ह अहंत्विति आत्मनोनस्वतोऽस्तिक्रियाशक्तिमत्त्वमित्यत्रप्रमाणमाह अप्राणोही ति नापितस्यस्वतोज्ञानशक्तिमत्त्वमित्याह अमनाइति उपाधिद्वयासम्बन्धेशुद्धत्वं फलितमाह शुभ्रइति कारणसम्बन्धादशुद्धिमाशंक्योक्तं अक्षरादिति कार्यकार णयोरात्मसम्बन्धितत्वेनपार्थक्येसद्वितीयत्वमाशंक्य तयोराविद्यकपारवश्यत्वान्नैवमि त्याह केवलइति जन्मादिसर्वविक्रियारहितत्वेन कौटस्थ्यमाह अविक्रियइति बु द्धिर्यस्येत्यादिव्याचष्टे बुद्धिरिति नानुशायिनी नानुशयवती नलेपशालिनीत्यर्थः द्वितीयपादस्याक्षरार्थमुक्त्वावाक्यार्थमाह इदमिति पापंकर्मेदमापरज्यते लो कानांप्राणसम्बन्धाभावेकुतोहिंसेत्याशंक्याह प्राणिनइति विरुद्धार्थोक्त्वास्तुतिरपि नयुक्तेतिशङ्कते नन्विति विरोधंपरिहरति नैषदोषइति लौकिकदृष्टिमवष्टभ्या ह हत्वापीति निहंर्यंविशदयति देहादीति तात्त्विकींदृष्टिमाश्रित्यनहन्तीति निर्दे पश्यति पादयति यथेति नाहंकर्त्ताकिन्तुकर्तृ तद्व्यापारयोःसाक्षीक्रियाज्ञानशक्तिमद्

आनन्दगिरिकृतटीका

माविद्यविनिर्मुक्तः शुद्धः सन् कार्यकारणासम्बद्धो द्वितीयोऽविक्रियइत्येवं पारमार्थिकदृष्टेर्यथादर्शितत्वं द्रष्टव्यं हत्वापीत्येतन्न हन्तीत्यादिचोभयं दृष्टिद्वयावष्टम्भादुपपन्नमित्युपसंहरति तदुभयमिति केवलमेवात्मानं कर्त्तारं पश्यन् दुर्मतिरित्यत्रात्मविशेषणसमर्पककेवलशब्दसामर्थ्यादात्मनोविशिष्टस्यकर्त्तृत्वमितिशंकते नन्विति आत्मनोवैशिष्ट्यायोगान्नविशिष्टस्यापिकर्त्तृत्वमिति दूषयति नैपदोषइति अविक्रियस्यात्माव्ये पिकथमात्मनोसंहतत्वमित्याशंक्याह अविक्रियेति अधिष्ठानादिभिरात्मनःसंहननेपिनकर्त्तृत्वमविक्रियस्यक्रियान्वयव्याघातादित्याह संहत्येतिसंहतत्वानुपपत्तिं व्यक्तीकरोति नत्विति असंहतत्वेफलितमाह इतिनेति कथंतर्हिकेवलत्वमात्मनिकेवलशब्दादुक्तं तदाह तत इतिकर्त्तृत्वमात्मनोऽनुपपन्नंनास्याविक्रियत्वसुप्रतीत्याशंक्याह अविक्रियत्वञ्चेति तत्रश्रुतिवाक्यान्युदाहरति अविकार्योयमिति नायंहन्तिनहन्यत इत्यादिवाक्यसादिशब्दार्थः उक्तवाक्यानामात्माविक्रियत्वेतात्पर्यंसूचयति असङ्गदिति निःकलंनिःक्रियंशान्तमित्यादिवाक्यंश्रुतावादिशब्दार्थः यानिवाक्यानि तैरात्मनोविक्रियत्वंदर्शितमितियोजनान्यायतश्चतद्दर्शितमिति पूर्वेणसम्बन्धः न्यायमेवदर्शयति निरवयवमिति नतावदात्मास्वतोविक्रियते निरवयवत्वादाकाशवन्नापिपरतोसङ्गस्याकार्यस्यपराधीनत्वायोगादित्यर्थः किंवात्मनःस्वनिष्ठावाविक्रियाधिष्ठानादिनिष्ठावानाद्यःस्वनिष्ठाविक्रियानुपपत्तेरात्मनोदर्शितत्वादित्याशयेनाह विक्रियावत्वेति साचायुक्तत्युक्तमितिशेषः द्वितीयंदूषयति नेत्यादिना अधिष्ठानादिकृतमपिकर्म तद्योगादात्मन्यागच्छतोत्याशंक्यतदागमनंवास्तवमाविद्यंवेति विकल्पाद्यंदूषयति नहीति द्वितीयंगिरत्यति यच्चेति आत्मन्यविद्यारोपितंकर्मनात्मीयमित्यतद्दृष्टान्ताभ्यामुपपादयति यथेत्यादिना आत्मनोविक्रियत्वेनकर्त्तृत्वाभावेफलितमाह तस्मादिति ननुप्रागेवात्मनोविक्रियत्वंप्रतिपादितंतदिहकस्मादुच्यतेतत्राह नायमिति शास्त्रादौ प्रतिज्ञायहेतुपूर्वकंसंक्षिप्योक्तमध्येतत्प्रसङ्गप्रसारितं कर्माधिकारनिवृत्तिमिहोपसंहरतीतिसम्बन्धः प्रतिज्ञातस्य हेतुनोपपादितस्यान्ते निगमनं किमर्थमित्याशंक्याह शास्त्रार्थेति कर्माधिकारोविदुषोनेति स्थितेतस्यदेहाभिमानाभावेसत्यविद्योत्थसर्वकर्मत्यागसिद्धेरनिष्टमिष्ट मिश्रञ्चेति त्रिविधंकर्मफलंसंन्यासिनां नेति प्रागुक्तं युक्तमेवेति परमप्रकृतमुपसंहरति एवञ्चेति ये पुनरविद्वांसोदेहाभिमानिनस्तेषांत्रिविधंकर्मफलंचावश्यंमिति हेतुवचनमिदमर्थं निगमयति तद्विपर्ययाच्चेति अधिष्ठानादिकृतंकर्मगात्मगतमविदुषामेवकर्माधिकारोदेहाभिमानित्वेनतत्त्यागा

## शाङ्करभाष्यं

अथेदानीं तेषां कर्म्मणां प्रवर्त्तकमुच्यते ज्ञानमिति ज्ञानं ज्ञायतेऽनेनेति सर्व्वविषयमविशेषेणोच्यते तथा ज्ञेयं ज्ञातव्यं तदपि सामान्येनैव सर्वमुच्यते तथा परिज्ञातोपाधिलक्षणोऽविद्याकल्पितो भोक्ता इत्येतत् त्रयमेषामविशेषेण सर्व्वकर्मणां प्रवर्त्तिकालिविधा त्रिःप्रकारा कर्मचोदना ज्ञानादीनां हि त्रयाणां सन्निपाते हानोपादानादिप्रयोजनः सर्वकर्मारम्भः स्यात्ततः पञ्चभिरधिष्ठानादिभिरारब्धं वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं त्रिषु करणादिषु संगृह्यते इत्येतदुच्यते करणं क्रियतेऽनेनेति वाह्यं श्रोत्रादि अन्तस्थं बुध्यादि धर्म्मं प्सिततमं कर्त्तुः क्रियया व्याप्यमानं कर्त्ता करणानां व्यापारयितोपाधिलक्षण इति त्रिविधः त्रिप्रकारः कर्म्मसंग्रहः संगृह्यते अस्मिन्निति संग्रहः कर्म्मणः संग्रहः कर्म्मसंग्रहः कर्म्म एषु हि त्रिषु समवैति तेनायं त्रिविधः कर्म्मसंग्रहः १८

## आनन्दगिरिकृतटीका

योगाद्देहाभिमानाभावात् विदुषां कर्माधिकारनिवृत्तिरित्युपसंहृतमर्थं संक्षिप्याह इत्यष इति उक्तश्च गीतार्थे वेदार्थत्वादुपादेय इत्याह स एष इति कथमयमर्थो वेदार्थोपि प्रतिपत्तुं शक्यते तत्राह निपुणेति भाष्यकृता मानयुक्तिभ्यां विभज्यानुक्तत्वान्नाख्यार्थस्योपादेयत्वमित्याशंक्याह तत्रेति १७

शास्त्रार्थोपसंहारानन्तर्यमथेत्युक्तमिदानीमिति प्रवर्त्तकापदेशापेक्षावस्थोक्ता कर्म्मणां येषु विदुषां नाधिकारोऽविदुषाञ्चाधिकारस्तेषामित्यर्थः ज्ञानशब्दस्य करणव्युत्पत्त्या ज्ञानमात्रार्थत्वमाह ज्ञानमिति ज्ञेयशब्दस्यापि तद्वदेव ज्ञातव्यमात्रार्थत्वमाह तथेति उपाधिलक्षणत्वं तत्प्रधानत्वमुपहितत्वं तस्यावस्तुत्वार्थमविद्याकल्पि

## स्वामिकृतटीका

कस्तर्हि सुमतिर्यस्य कर्मलेपो नास्तीत्युक्तमित्यपेक्षायामाह यस्येति अहमिति कृतोऽहङ्कर्त्तेत्येवंभूतो भावोऽभिप्रायो यस्य नास्ति यद्वा अहंकृतोऽहङ्कारस्य भावः स्वभावः कर्त्तृत्वाभिनिवेशो यस्य नास्ति शरीरादीनामेव कर्मकर्त्तृत्वालोचनादित्यर्थः अतएव यस्य बुद्धिर्न लिप्यते इष्टानिष्टबुद्ध्या कर्मसु न सज्जते स एवम्भूतो देहादिव्यतिरिक्तात्मदर्शी इमान् लोकान् सर्वानपि प्राणिनो लोकदृष्ट्या हत्वापि विविक्ततया स्वदृष्ट्या न हन्ति न च तत्फलैर्निवध्यते वन्धनं प्राप्नोति किंपुनः सत्त्वशुद्धिद्वारा परोक्षज्ञानोत्पत्तिहेतुभिः कर्मभिस्तस्य वन्धाशङ्केत्यर्थः तदुक्तं ब्रह्मण्याधाय कर्माणि सङ्गं त्य... ...ति यः लिप्यते न स पापेन पद्मपत्रमिवाम्भसेति भगवदुक्तत्वादित्यर्थः १७

ज्ञानंज्ञेयंपरिज्ञातात्रिविधाकर्मचोदना कारणंकर्मकर्त्तेति त्रिविधःकर्मसंग्रहः१८

आनन्दगिरिकृतटीका।

तविशेषणमेतदेवत्रयंसर्वकर्म्मप्रवर्त्तकमित्याह इत्येतदिति सर्वकर्म्मणांप्रवर्त्तकमि त्यध्याहर्त्तव्यं चोदनेतिक्रियायाःप्रवर्त्तकंवच्चनमिति भाष्यानुसारेणचोदनाशब्दा र्थमाह प्रवर्त्तिकेति सर्वकर्मणामिति पूर्व्वेणसम्बन्धः त्रैविध्यंज्ञानादीनांप्रागुक्तंकर्म णांचोदनेति विग्रहः तेषांसर्वकर्म्मप्रवर्तकत्वमनुभवेनसाधयति ज्ञानादीनामिति हानोपादानादीत्यादिपदेनोपेक्षाविवक्षिता करणमित्यादेस्तात्पर्यमाह ततइति ज्ञानादीनांप्रवर्त्तकत्वादित्यर्थः उक्तार्थेश्लोकभागमवतारयति इत्येतदिति बाह्य मन्तस्थञ्चद्विविधंकरणव्युत्पत्त्याकथयति करणमिति उक्तलक्षणंकर्मैवस्फुटयति कर्त्तुरिति स्वतन्त्रोहिकर्त्तासातन्त्र्यञ्चकारप्रयोज्यस्यतत्प्रयोक्तृत्वमित्याह कर्त्ते ति कथमुक्तोत्रिविधेकर्मसंगृह्यते तत्राह कर्मेति कर्मणोहिप्रसिद्धंकारकाश्रयत्व मिति भावः १८ अनन्तरश्लोकनवकतात्पर्यमाह अथेति ज्ञानादिप्रस्तावा

भाषाअनुवाद

कर्ममेअभिनिवेशजोइच्छाऔआशक्तिकहे तनमनसेलगेरहनाइनदोनोसेरहितपु रुषहननकरकेभीहननहीं करतेओबन्धकोनहींप्राप्तहोतेइसपूर्वोक्तवाक्यमात्रके कहनेकेलियेकर्मकीविधिहै औकर्मध्येयकहेकल्याणकरहै औकर्मफलआदिसबको त्रिगुणात्मकत्वहेतुसे गुणातीतजोआत्मातिसकोइसकर्मविधिआदिकेसाथकुछसम्ब न्धनहींहै इसकहनेकोअभिप्रायसेकर्मविधिऔकर्मध्येयकहतेहैं किज्ञानकहेयही इष्टकासाधनहै ऐसाजोबोधऔज्ञेयकहेइष्टकेसाधनस्वरूपजोकर्मऔपरिज्ञाताक हेऐसेज्ञानकाआश्रयभूतजोमनुष्ययहीत्रिविधकर्म विधिकहेप्रेरणाहै अर्थात् इसी प्रेरणासेलोगकर्ममेप्रवृत्तहोतेहैं सोकार्थयहहैं किकर्मविषयकजोविधिसोउक्तरू पत्रिगुणात्मकज्ञानआदिकोअवलम्बनकरकेप्रवृत्तहोतीहै यहदूसरेअध्यायके ४५ श्लोकमेकहाहै किहेअर्जुनत्रिगुणात्मकसकामअधिकारीकेसम्बन्धसेफलसम्बन्धवे दमेकहाहै औकरणकहेसाधनऔकर्मकहेकर्त्ताकीअत्यन्तइच्छाकीअधिकईसे कि याजायजोव्यापारऔकर्त्ताकहे क्रियाकाकरनेहाराओरसबकर्मसम्पूर्णरूपसेइसी मेगृहीतहोतेहैं इनअर्थके सूचनकरनेवालेपदकोकर्मसंग्रहकहतेहैं करणकर्मक र्त्तारूपतीनकारकयेक्रियाकेआश्रयहैं औरसंप्रदान अपादानऔअधिकरणयेतीन केवलपरम्पर आक्रमणसे क्रियाकेप्रवर्त्तकहैं साक्षात्क्रियाके आश्रयस्वरूप न हीहैं इसीसे पूर्व्वोक्ततीनकारणोंकोक्रियाके आश्रयस्वरूप कहा है १८

ज्ञानंकर्मचकर्ताचत्रिधैवगुणभेदतः प्रोच्यतेगुणसंख्यानेयथावच्छृणुतान्यपि १९

शाङ्करभाष्यं

अथेदानींक्रियाकारकफलानांसर्वेषांगुणात्मकत्वात् सत्वरजस्तमोगुणभेदतः त्रिविधोभेदोवक्तव्यइत्यारभ्यते ज्ञानंकर्मचेति ज्ञानंज्ञायतेऽनेनेतिकर्मच कर्मक्रियानकारकं पारिभाषिकमीप्सिततमंकर्मकर्ताचनिर्वर्तकः क्रियाणांत्रिधैवावधारणं गुणव्यतिरिक्तजात्यन्तराभावप्रदर्शनार्थंगुणभेदतःसत्वादिभेदेनेत्यर्थःप्रोच्यतेकथ्यते गुणसंख्यानेकापिलेशास्त्रेकापिलमपिगुणसंख्यानंशास्त्रंतदपिगुणभोक्तृविषयेप्रमाणमेवपरमार्थब्रह्मैकत्वविषयेयद्यपिविरुध्यतेतथापितेहिकापिलागुणगौणव्यापारनिरूपणेऽभियुक्ताइतितच्छास्त्रमपिवक्ष्यमाणार्थस्तुत्यर्थत्वेनोपादीयतइतिनविरोधः यथावद्यथान्यायंयथाशास्त्रंशृणु तान्यपिज्ञानादीनितद्भेदजातानिगुणभेदकृतानि शृणुवक्ष्यमाणेऽर्थे मनःसमाधिं कुर्वित्यर्थः १९

स्वामिकृतटीका

हत्वापिनहन्तिननिबध्यत इत्येतदेवोपपादयितुं कर्मचोदनायाःकर्माश्रयस्यच कर्मफलादीनाञ्चत्रिगुणात्मकत्वान्निर्गुणस्यआत्मनस्तत्सम्बन्धोनास्तीत्यभिप्रायेणकर्मचोदनांकर्माश्रयञ्चाह ज्ञानमिति ज्ञानमिष्टसाधनमेतदितिबोधः ज्ञेयमिष्टसाधनंकर्मपरिज्ञाताएतत्ज्ञानाश्रयःएवंत्रिविधाकर्मचोदनाचोद्यते प्रवर्त्ततेऽनयेति चोदनाज्ञानादित्रयंकर्मप्रवृत्तिहेतुरित्यर्थः यद्वाचोदनेतिविधिरुच्यते तदुक्तं भट्टैः चोदनाचोपदेशश्चविधिश्चैकार्थवाचिनइति ततश्चायमर्थः उक्तलक्षणंत्रिगुणात्मकं ज्ञानादित्रयमवलम्ब्यकर्मविधिःप्रवर्त्ततइति तदुक्तं त्रैगुण्यविषयावेदाइति तथाकरणंसाधकतमंकर्म चकर्त्तुरीप्सिततमंकर्त्ताक्रियानिवर्त्तकः कर्मसंगृह्यतेऽस्मिन्निति कर्मसंग्रहः कारणादित्रिविधंकारकंक्रियाश्रयइत्यर्थः संप्रदानादिकारकत्रयन्तु परम्परयाक्रियाप्रवर्त्तनमेवकेवलंनतुसाक्षात् क्रियायाश्चाश्रयःअतःकरणादित्रयमेव क्रियाश्रयइत्युक्तं १८ ततःकिमतआह ज्ञानंकर्मचेति गुणाःसम्यक्कार्यभेदेन

भाषाअनुवाद।

अवक्रियाकारक औफलको गुणात्मतासे सत्व रजतमकृत त्रिविधभेदकहाचाहतेहैं इसअपेक्षापर कहतेहैं किइसीमे गुणकार्यभेदसे सम्पूर्णप्रतिपादन करके कहतेहैं इसअर्थका सूचनकरनेवला संख्यानकहेसांख्यशास्त्र तिसमेसात्विकआदि गुणभेदक्रमसे तथाकार्यकेद्वारा ज्ञानऔकर्मतथाकर्त्ता येप्रत्येकत्रिविधस्वरूप कहे गयेहैं सोईमैयथावत्कहताहूं तिनकोभी तुमसम्यक् श्रवणकरो १९

### शाङ्करभाष्यं

ज्ञानस्यतुतावत्त्रिविधत्वमुच्यते सर्वेति सर्वभूतेषुअव्यक्तादिस्थावरान्तेषुभूते षुयेनज्ञानेनैकंभावंवस्तुभावशब्दोवस्तुवाचोएकमात्मवस्त्वित्यर्थः अव्ययंनव्येति स्वात्म नातद्धर्म्मणावाकूटस्थमित्यमित्यर्थः इच्चतेयेनज्ञानेनपश्यतितञ्चभावमविभक्तं प्रतिदे हं विभक्तेषुदेहभेदेषुनविभक्तंतदात्मवस्तुव्योमवन्निरन्तरमित्यर्थः तत्ज्ञानंअद्वैतात्म दर्शनंसात्त्विकंसम्यक्दर्शनंविद्धीति २०। यानिद्वैतदर्शनान्यसम्यक्तानिरा

### आनन्दगिरिकृतटीका

नन्तर्वमर्थशब्दार्थः इदानींप्रस्तुतज्ञानाद्यवान्तरभेदापेक्षायामित्यर्थः तेषां गुणभेदानां त्रैविध्येहेतुमाह गुणात्मकत्वादिति वक्ष्यमाणस्तोकंनकेनेतिप्रश्नः एवं स्थिते प्रथमस्यवान्तरभेदप्रतिज्ञाक्रियतइत्याह इत्यारभ्यतइति कर्तुरीप्सिततमंकर्म्मेति यत्तत्परिभाष्यतेतन्नात्रकर्मशब्दवाच्यमित्याह नेति गुणातिरेकेणविधान्तरंज्ञाना दिषुनेतिनिर्द्धारयितुमवधारणमित्याह गुणेति ज्ञानादीनांप्रत्येकंगुणभेदमयुक्तेत्रैवि ध्येप्रमाणमाह प्रोच्यतइति ननुकापिलंपातञ्जलमित्यादिशास्त्रंविरुद्धार्थत्वादप्रमाणं कथमिहप्रमाणीक्रियतेतत्राह तथापीति विषयविशेषविरोधेपिप्रकृतेऽर्थेप्रामाण्यम विरुद्धमित्यर्थः यद्यपिकापिलादयोगुणवृत्तिविचारेगौणव्यापारस्वभोगादेर्निरूपणे च निपुणास्तथापिकथंतदीयशास्त्रमत्रप्रमाणीकृतमित्याशंक्याह तेहीति ज्ञानादिषु प्रत्येकमवान्तरभेदोवक्ष्यमाणोर्थस्तस्यतन्त्रान्तरेपिप्रसिद्धकथनंस्तुतिस्तादर्थ्येनकापि लादिमतोपादानमिहोपयोगीत्यर्थः तृतीयपादस्याविरुद्धार्थत्वंनिगमयति नेति य थावदित्यादिव्याचष्टे यथान्यायमिति १९

### स्वामिकृतटीका

ख्यायन्तेप्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानंसांख्यशास्त्रंतस्मिन्ज्ञानञ्चकर्मचकर्त्ताच प्रत्येकंसत्वादिगुणभेदेनत्रिधैवोच्यते तान्यपिज्ञानादीनिवक्ष्यमाणानियथावच्छृणु त्रिधैवेत्यवकारोगुणत्रयोपाधिव्यतिरेकेणात्मनःस्वतःकर्मादिप्रतिषेधार्थः चतुर्दशा ध्यायेतत्रसत्वंनिर्मलत्वादिनागुणानांबन्धत्वप्रकारोनिरूपितः सप्तदशाध्यायेयजन्ते सात्त्विकादेवानित्यादिना गुणकृतत्रिविधस्वभावनिरूपणेन रजस्तमःस्वभावंपरि त्यज्य सात्त्विकाहारादिसेवयासात्त्विकस्वभावः सम्पादनीयइत्युक्तं इहतुक्रियाकारक फलादीनामात्मसम्बन्धोनास्तीति दर्शयितुं सर्वेषांत्रिगुणात्मकत्वमुच्यत इतिविशेषो ज्ञातव्यः १९

सर्वभूतेषुयेनैकंभावमव्ययमीक्ष्यते अविभक्तंविभक्तेषुतज्ज्ञानंविद्धिसात्त्विकं २०
पृथक्त्वेनतुयज्ज्ञानंनानाभावान्पृथग्विधान् वेत्तिसर्वेषुभूतेषुतज्ज्ञानंविद्धिराजसं२१

शाङ्करभाष्यं

जसानितामसानिचेतिनसाक्षात्संसारोच्छित्तयेभवन्तिपृथक्त्वेनेति पृथक्त्वेनतुभेदे नप्रतिशरीरमन्यत्वेनयत्ज्ञानंनानाभावान्भिन्नमात्मनःपृथग्विधान्पृथक्प्रकारान् भिन्नलक्षणानित्यर्थः वेत्तिविजानातियत्ज्ञानंसर्वेषुभूतेषुज्ञानस्यकर्तृत्वासम्भवा द्येनज्ञानेनवेत्तीत्यर्थः २१ यत्त्विति यत्तुज्ञानंकृत्स्नवत्समस्तवत्सर्वविषय

आनन्दगिरिकृतटीका।

ज्ञानादीनांप्रत्येकंत्रैविध्यंज्ञातव्यंप्रतिज्ञायज्ञानत्रैविध्यार्थंश्लोकत्रयमवतारय ति ज्ञानस्येति तत्रसात्विकंज्ञानमुपन्यस्यति सर्वेति भूतानिकार्यकारणात्मकान्यु पाधिजातानिअद्वितीयमखण्डैकरसंप्रत्यगात्मभूतमबाधितत्त्वंज्ञेयत्वेनविवक्षितमि त्याह एकमिति विवक्षितमव्ययत्वं सङ्क्षिपति कूटस्थेति प्रतिदेहमविभक्तमि त्युक्तंव्यनक्ति विभक्तेष्विति तत्ज्ञानमित्यादिव्याकरोति अद्वैतेति २०

द्वैतदर्शनान्यपिकानिचिद्भवन्तिसत्त्वनिष्ठ तानिसम्यग्ज्ञानानीत्याशंक्याह यानीति तेषामसक्तंहेतुमाह राजसानीति प्रतिदेहमन्यत्वं नभिन्नात्मनोयेनज्ञानेनजाना तितत्ज्ञानंराजसमितिव्याचष्टे भेदेनेति पृथक्त्वं पृथग्विधत्वञ्चपुनरुक्तमित्याशंक्य हेतुहेतुमत्त्वेनविभागंविवक्षित्वाह भिन्नेति ज्ञानस्यज्ञानकर्तृत्वमयुक्तमित्याशंक्या ह येनेति २१ यत्त्विति सक्तत्वमेवव्यनक्ति एतावानिति एकस्मिन्कार्येज्ञा

स्वामिकृतटीका

तत्रज्ञानस्यसात्त्विकादित्रैविध्यमाह सर्वेतित्रिभिः सर्वेषुभूतेषुब्रह्मादिस्था वरान्तेषुविभक्तेषुपरस्परं व्यावृत्तेषु अविभक्तमनुस्यूतंएकमव्ययं निर्विकारंभावंपर मात्मतत्त्वंयेनज्ञानेनेक्षते आलोचयति तत्ज्ञानंसात्त्विकंविद्धि २० राजसं

भाषा अनुवाद

इसश्लोकसेले तीनश्लोकसे इसज्ञानकासात्त्विकआदिभेदसेतीनप्रकारकहतेहैंकि ब्रह्मादिस्थावरपर्यन्तपरस्परभिन्नभिन्नसकलवस्तुमेंप्राप्तएकनिर्विकारस्वरूपअव्यय परमात्मतत्वकाजिसज्ञानसेआलोचननकियाजायउसज्ञानकोसात्विकज्ञानजानो२० इसश्लोकमेराजसज्ञानकहतेहैं किभूतकहेदेहधारीमात्रमेनानाभावअर्थात्सबकी शरीरमेक्षेत्रज्ञआत्मापृथक्पृथक्सुखीदुखीरूपसेभिन्नभिन्नभीजानाजायजिसज्ञान सेसोज्ञान राजसजानो २१ तामसज्ञानकहतेहैं किएककार्यमेअर्थात् स्थूलशरीर

यत्तुकृत्स्नवदेकस्मिन्कार्य्येसक्तमहैतुकं अतत्वार्थवदल्पञ्चतत्तामससमुदाहृतं २२

### शाङ्करभाष्यं ।

मिवएकस्मिन्कार्यदेहेवाह्विवीप्रतिमादौसक्तं एतावानेवात्मेश्वरोवानातःपरमस्तीति यथानग्नक्षपणकादीनांशरीरान्तर्वर्तिदेहपरिमाणोजीवईश्वरोवा पांपाणादावर्चा दिमात्रंइत्येवंएकस्मिन्कार्येसक्तमहैतुकंहेतुवर्जितंअयुक्तिकंनिःप्रमाणकमतत्वार्थव त्अयथाभूतोऽर्थस्तत्वार्थःसोऽस्यज्ञेयभूतोस्तीतितत्वार्थवदतत्वार्थवद्हैतुकत्वादेवाल्प विषयत्वादल्पफलत्वाद्वातत्तामससमुदाहृतं तामसानांहिप्राणिनामविवेकिनामीदृशं ज्ञानंदृश्यते २२ अथकर्मणांत्रैविध्यमुच्यते नियतमिति नियतंनित्यंसङ्गरहित मासक्तिवर्जितमरागद्वेषतःकृतंरागप्रयुक्तेनद्वेषप्रयुक्तेनचकृतंतद्विपरीतं कृतमराग द्वेषतःकृतमफलप्रेप्सुना फलंप्रेप्सतीतिफलप्रेप्सुःफलतृष्णस्तद्विपरीतेनाफलप्रेप् सुनाकर्त्रा कृतंकर्मयत्तत्सात्विकमुच्यते २३

### आनन्दगिरिकृतटीका ।

नक्षसक्तत्वमेवदृष्टान्तेनसाधयति यथेत्यादिना यन्निर्युक्तिकन्तदेव ज्ञानस्याभासत्वे कारणमित्याह अहैतुकत्वादिति स्वरूपतोविषयतस्याभासत्वंफलतोवेत्याह अल्पमि तितामसंज्ञानमुक्तलक्षणनित्यज्ञानानुभवंप्रमाणयति तामसानांहीति २२ त्रिविधं कर्मवक्तुमनन्तरश्लोकत्रयमित्याह अथेति तत्रसात्त्विकंकर्मनिरूपयति नियतमिति२३

### स्वामिकृतटीका ।

ज्ञानमाह पृथक्त्वेनेतिपृथक्त्वेनतुयत्ज्ञानमित्यस्यैवविवरणंसर्वेषुभूतेषुदेहेनानाभावा न्त्रस्तुतएवानेकान्त्वेवज्ञानप्रथग्विधान्सुखदुःखत्वादिरूपेणविलक्षणान्येनज्ञाने न वेत्तितत्ज्ञानंराजसंविद्धि २१ तामसंज्ञानमाहयत्त्विति एकस्मिन्कार्येदेहे प्रति मादौवाकृत्स्नवत्परिपूर्णवत्सक्तंएतावानेवात्माईश्वरोवेत्यभिनिवेशयुक्तं अहैतुकं नि रुपपत्तिकंअतत्वार्थवत्परमार्थावलम्बनशून्यंअतएवाल्पंतुच्छंअल्पविषयत्वात्अल्पफ लत्वाच्चयदेवम्भूतंज्ञानंतत्तामससमुदाहृतं २२ इदानींत्रिविधंकर्माह नियतमिति त्रि

### भाषा अनुवाद

मेअथवाप्रतिमाआदिमेंसक्तकहेशरीरहीआत्माऔप्रतिमाही ईश्वरहै ऐसेनिश्चयसे युक्त औअहेतुककहेयुक्तिविरुद्ध औपरमार्थअवलम्बनरहित जोज्ञान उक्तकारणों सेअल्पविषयअल्पफलहेतुसेतुच्छहै उसज्ञानकोशिष्टजनोनेतामसरूपनिरूपणकि याहै २२ अबइसश्लोकसेले तीनश्लोककेद्वारा सकलकर्मको त्रिविधकहतेहैं कि

नियतंसङ्गरहितमरागद्वेषतःकृतं अफलप्रेप्सुनाकर्मयत्तत्सात्विकमुच्यते २३
यत्तुकामेप्सुनाकर्मसाहङ्कारेणवापुनः क्रियतेबहुलायासंतद्राजसमुदाहृतं २४

शाङ्करभाष्यं

यत्विति यत्तुकामेप्सुनाकर्मफलप्रेप्सुनेत्यर्थःकर्मसाहङ्कारेणेतिनतत्त्वज्ञानापेक्षयाकिंतर्हिलौकिकश्रोत्रियनिरहङ्कारापेक्षया योहि परमार्थनिरहङ्कारआत्मवित्तस्यकामेप्सुत्वबहुलायासकर्तृत्वप्राप्तिरस्ति सात्त्विकस्यापिकर्मणोऽनात्मवित्साहङ्कारःकर्त्ताकिमुतराजसतामसयोर्लोकेऽनात्मविदपि श्रोत्रियनिरहङ्कारउच्यते निरहङ्कारोयंब्राह्मणइति तस्मात्तदपेक्षयैवसाहङ्कारेणवेत्युक्तं पुनःशब्दः पादपूरणार्थःक्रियते बहुलायासंकर्म महतायासेननिर्वर्त्यते तत्कर्मराजसमुदाहृतं २४ अनुबन्धमिति अनुबन्धःपश्चाद्भावि यद्वस्तुसोऽनुबन्धउच्यते तञ्चानु

आनन्दगिरिकृतटीका

राजसंकर्मनिर्दिशति यत्त्विति फलप्रेप्सुनाकर्त्रायत्कर्मक्रियतेतद्राजसमित्युत्तरत्रसम्बन्धः तत्त्वज्ञानवतानिरहङ्कारेणसाहङ्कारेणातत्त्वज्ञेनक्रियतेकर्मेति विवक्षांवारयति साहङ्कारेणेति तत्वज्ञानवतानिरहङ्कारेणकृतंकर्मापेक्ष्यसाहङ्कारेणाज्ञेनकृतमेतत्कर्मेतिनविवक्ष्यतेचेत्तर्हिकिमत्रविवक्षितमितिपृच्छति किंतर्हीति योहिदुरितरहितःश्रोत्रियोलोकादनपेतस्तस्यदहङ्कारवर्जितंकर्मतदपेक्षयेदंसा

स्वामिकृतटीका

भिः नियतंनित्यतयाविहितंसङ्गरहितमभिनिवेशशून्यं अरागद्वेषतः पुत्रादिप्रीत्यावाशत्रुद्वेषेणवायत्कृतंनभवतिफलंप्राप्तुमिच्छतीतिफलप्रेप्सुस्तद्विलक्षणेन निःकामेनकर्त्रा यत्कृतंकर्म तत्सात्विकमुच्यते २३

भाषाअनुवाद

लप्राप्तिकोइच्छाकरतेहैं ऐसे जोफलकेलोभीजनोंसे कियेजातेहैं उनसेभिन्न रूपनिःकामकर्मके अनुष्ठानकरनेवालोंसे नियतकहेनित्यरूपसे विहित औ अभिनिवेशआसक्तिशून्य जोकर्मकियेजायं औरजोपुत्रआदिकेप्रीत्यर्थ अथवा शत्रुपरक्रोधक्रमसे कियेनहोंय ऐसेकर्म सात्विकहैं २३

औरकर्मफलप्राप्तिकाइच्छुक अथवा अहङ्कारीकहे जोअपनेसमान औरकोनहीमानताहै ऐसेअहङ्कारयुक्तमनुष्यसे कियेगये अथवा जोकर्म अतिक्लेशयुक्तहोंय उन्हींको शिष्टजन राजसस्वरूपकहतेहैं २४ अबतामस कर्मकहतेहैं कि

अनुबन्धंक्षयंहिंसामनपेक्ष्यचपौरुषं मोहादारभ्यतेकर्मयत्तत्तामसमुच्यते २५

शाङ्करभाष्यं।

बन्धं क्षयंयस्मिन् कर्मणिक्रियमाणेशक्तिक्षयोऽर्थक्षयोवातत्क्षयंहिंसांप्राणिपीडा
ञ्चानपेक्ष्यचपौरुषंपुरुषकारंशक्तोमीदंकर्मसमापयितुमित्येवमात्मसामर्थ्यं इत्येतान्य
नुबन्धादीन्यनपेक्ष्यपौरुषान्तानिमोहादविवेकतआरभ्यतेकर्मयत् तत्तामसन्तमो
निर्वृत्तमुच्यते २५ मुक्तेति मुक्तसङ्गोमुक्तःपरित्यक्तःसङ्गोयेनसमुक्तसङ्गोऽ
नहम्वादीनाहं वदनशीलोधृत्युत्साहसमन्वितोधृतिर्धारणमुत्साहसुद्यमस्ताभ्यांसम
न्वितःसंयुक्तोधृत्युत्साहसमन्वितःसिद्ध्यसिद्ध्योःक्रियमाणस्यकर्मणःफलसिद्धावसिद्धौ
चसिद्ध्यसिद्ध्योःनिर्विकारःकेवलंशास्त्रप्रमाणप्रयुक्तफलरागादिना युक्तोयःसनिर्वि
कारउच्यते एवम्भूतःकर्त्तायः ससात्विकउच्यते २६ रागीति रागीरागो

आनन्दगिरिकृतटीका।

हङ्कारेणवाकर्मेत्युक्तमित्याह लौकिकेति ननुतत्वज्ञानवतोनिरहङ्कारस्यकर्मक
र्त्तत्वमपेक्ष्यसाहंकारेणेत्यादिकिंनेष्यतेतत्राह योहीति विशेषणान्तरवशादेतत्तत्व
विदोनिवारितत्वान्नतदपेक्षमिदंविशेषणमित्यर्थः साहंकारस्यैवराजसेकर्मणिक
र्त्तत्वमित्येतत्कैमुतिकन्यायेनसाधयति सात्विकस्येति नन्वात्मविदोन्यस्यनिरहंका
रत्वायोगात्कथंतदपेक्षयासाहङ्कारेणेत्युक्तंतत्राह लोकइति २४

सम्प्रतितामसंकर्मोदाहरति अनुबन्धमित्यादिना २५

इदानींकर्तृवैविध्यंमुक्तादौसात्विकंकर्त्तारंदर्शयति मुक्तेति सङ्गोनामफला
भिसन्धिर्वाकर्तृत्वाभिमानोवानाहंवचनशीलःकर्त्ताहमिति वदनशीलोनभवतीत्यर्थः

स्वामिकृतटीका

राजसंकर्माह यत्विति यत्तुकर्मकामेप्सुनाफलंप्राप्तुमिच्छतासाहङ्कारेणवा
मत्समःकोऽन्यःश्रोत्रियोऽस्तीत्येवं निरूढाहङ्कारयुक्तेनचक्रियतेतत्पुनर्बहुलायास
मतिक्लेशयुक्तं तत्कर्मराजसमुदाहृतं २४ तामसंकर्माह अनुबन्धमिति अ
नुबध्यतइत्यनुबन्धं पश्चाद्भाविशुभाशुभंक्षयं वित्तक्षयंहिंसांपरपीडांपौरुषञ्चस्वसाम
र्थ्यमनपेक्ष्यापर्यालोच्य केवलंमोहादेव यत्कर्मारभ्यते तत्तामसमुदाहृतं २५

भाषाअनुवाद

पश्चात् बन्धकरि ऐसेअनुबन्धकहैंपश्चात् भावी शुभअशुभ औधनव्यय औअपनीसा
मर्थ्य नविचारि केवलमोहसे जोकर्म आरम्भकियेजाय वेई तामस कर्म हैं २५

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्तासात्त्विक उच्यते २६ रागीकर्मफलप्रेप्सु र्लुब्धोहिंसात्मकोऽशुचिः हर्षशोकान्वितः कर्त्ता राजसःपरिकीर्त्तितः २७

शाङ्करभाष्यं

स्यास्तीतिरागीकर्मफलप्रेप्सुःकर्मफलार्थलुब्धःपरद्रव्येषुसञ्जाततृष्णः तीर्थादौचस्व द्रव्यापरित्यागीर्हिंसात्मकःपरपीड़कस्वभावः अशुचिर्बाह्यान्तःशौचवर्जितोहर्षशो कान्वितः इष्टप्राप्तौहर्षोऽनिष्टप्राप्ताविष्टवियोगेचशोकस्ताभ्यांहर्षशोकाभ्यांसमन्वि तःसंयुक्तः तस्यैवचकर्मणःसम्पत्तिविपत्त्योर्हर्षशोकौस्यातां ताभ्यांसमन्वितःसंयुक्तो यःकर्त्ता सराजसःपरिकीर्त्तितः २७

आनन्दगिरिकृतटीका

धारणंधैर्यंक्रियमाणस्यकर्मणोयदिफलासिद्धिस्तर्हिनानुष्ठानविभ्रमः सत्त्ववेदित्याशं क्याह केवलमिति फलरागादिनेत्यादिशब्देनकर्मरागोगृह्यते अयुक्तइतिच्छेदः २६

राजसंकर्त्तारंकथयति रागीति कर्मविषयोरागःकर्मफलप्रेप्सुरिति फलरा गस्यपृथक्कथनात्स्वाभिप्रायाप्रकटीकरणपूर्वकंपरपीड़नंपरवृत्तिविच्छेदनंतेनस्वा र्थपरइत्यर्थः २७ दीर्घंस्वयितुं शीलमस्येतिव्युत्पत्तिं गृहीत्वाविवक्षितार्थमाह

स्वामिकृतटीका

कर्त्तारंत्रिविधमाह मुक्तसङ्गइतित्रिभिः मुक्तसङ्गस्त्यक्ताभिनिवेशःअनह स्वादीगर्वोक्तिरहितःधृतिर्धैर्यंउत्साहउद्यमस्ताभ्यांसमन्वितः संयुक्तःआरब्धस्यकर्म णःसिद्धावसिद्धौचनिर्विकारोहर्षविषादशून्यःसएवम्भूतःकर्त्तासात्त्विकउच्यते २६

राजसंकर्त्तारमाह रागीति रागीपुत्रादिप्रीतिमान्कर्मफलप्रेप्सुःकर्मफल कामीलुब्धःपरस्वाभिलाषी हिंसात्मकोमारकस्वभावः अशुचिःविहितशौचशून्यः लाभालाभयोर्हर्षशोकाभ्यांसमन्वितः कर्त्ताराजसः २७

भाषाअनुवाद

इसश्लोकसेलेतीनश्लोकमें कर्मकर्त्तासबको त्रिविधकरकेकहतेहैं किकर्मअ नुष्ठाई पुरुष कर्तृत्वअभिनिवेशबुद्धिरहित औगर्ववचनरहित औधैर्यउत्साह जो उद्यमस इनदोनोंकेद्वारा युक्तसमस्तकर्ममे सिद्धिअसिद्धिकीअपेक्षा हर्षविषादशून्य होयं ऐसेकर्त्तापुरुषोंको सात्त्विकस्वरूपकहतेहैं २६ औरपुत्रआदिमे स्नेहयुक्त औकर्मफलकाकामीऔपरधनका अभिलाषी औनिर्दयस्वभाव औशौचरहितऔ हानिलाभमे शोकहर्षयुक्त कर्मकारीमनुष्य राजसस्वरूप कहे रजोगुणीहै २७

अयुक्तःप्राकृतःस्तब्धःशठोनैष्कृतिकोऽलसः विषादीदीर्घसूत्रीचकर्त्तातामसउच्यते २८ बुद्धेर्भेदंधृतेश्चैवगुणतस्त्रिविधंशृणु प्रोच्यमानमशेषेणपृथक्त्वेनधनञ्जय २९

## शाङ्करभाष्यं।

अयुक्तइति अयुक्तोऽसमाहितःप्राकृतोऽत्यन्तासंस्कृतबुद्धिःप्रकृतिपरवशोबालिशः स्तब्धोदण्डवन्ननमतिकस्मैचित्शठःमायावीशक्तिगूहनकारीमायावान्नैष्कृतिकःपरवृत्तिच्छेदनपरःअलसोऽप्रवृत्तिशीलःकर्त्तव्येष्वपि विषादीसर्वदाअवसन्नस्वभावःदीर्घसूत्रीचकर्त्तव्यानांदीर्घप्रसारणःसर्वदामन्दस्वभावःयदद्यश्वोवाकर्त्तव्यं तन्मासेनापिनकरोति यश्चैवम्भूतःसकर्त्तातामसउच्यते २८ बुद्धेर्भेदमिति बुद्धेर्भेदं धृतेश्चैवभेदंगुणतःसत्त्वादिगुणतःत्रिविधंशृणुइतिसूत्रोपन्यासःप्रोच्यमानंकथ्यमान

## आनन्दगिरिकृतटीका

कर्त्तव्यानामिति एवंक्रियमाणेमतिअनिष्टमिदंकयञ्चिदापद्येत यदापुनरेवंक्रियते तदात्वनिष्टमेवसम्भावनीयमनीतमिति चिन्तापरम्परायांमन्दप्रवृत्तिरित्यर्थः तदेवस्फुटयति यदद्येति २८ ज्ञानादीनांप्रत्येकंत्रैविध्यमुक्त्वा वृत्तिमत्याबुद्धेस्तद्वृत्तेश्च

## स्वामिकृतटीका

तामसंकर्त्तारमाह अयुक्तइति अयुक्तोऽनभिहितःप्राकृतोविवेकशून्यःस्तब्धोऽनम्रः शठःशक्तिगूहनकारीनैष्कृतिकःपरापमानीअलसोऽनुद्यमशीलःविषादीशोकशीलः यदद्यश्वोवाकर्त्तव्यंतन्मासेनापिनसम्पादयतियःसदीर्घसूत्रीएवंभूतःकर्त्तातामसः कर्तृत्रैविध्येनैवज्ञातुरपित्रैविध्यमुक्तं कर्मत्रैविध्येनचज्ञेयस्यापित्रैविध्यमुक्तं ज्ञातव्यं बुद्धेस्त्रैविध्येनचकरणस्याप्युक्तंभविष्यति २८ इदानींबुद्धेर्धृतेश्चत्रैविध्यंप्रतिजानीते

## भाषाअनुवाद

औरअयुक्तकहेअसावधान औप्राकृतकहेविवेकरहित औस्तब्धजोअनम्रस्वभाव औशठकहेकर्मचोर औनैष्कृतिककहेपरका अपमानकरनेवाला तथाआलसी औविषादीजोसदाशोगी औदीर्घसूत्रीकहे जोकार्यतुरतकरनेकाहो उसेमहीनोंटालै ऐसे मनुष्यतामसकर्त्ता कहातेहैं ऐसेहीकर्त्ताकोत्रैविध्यसे ज्ञाताभी तीनप्रकारहैं औकर्मकोत्रैविध्यसे ज्ञेयमात्रकोत्रैविध्यकहा औबुद्धिविविधकहनेसे कारणभी तीनप्रकारकेहैं २८ अबबुद्धि औधृतिकहेधैर्यकी त्रैविध्यकहनेकी प्रतिज्ञाकरतेहैं किहेधनञ्जयअर्जुन बुद्धिऔधैर्यके सत्त्वआदि गुणक्रमसे तीनभेदजोहैं उनकोमैं भिन्नभिन्न कहताहूं तुमसावधानहो सुनो २९

प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ३०

शाङ्करभाष्यं

मशेषेण निरवशेषतो यथावत् पृथक्त्वेन विवेकतो धनञ्जय दिग्विजये मानुषं दैवञ्च प्रभूतं धनं जयते तेनासौ धनञ्जयोऽर्जुनः २९ प्रवृत्तिञ्चेति प्रवृत्तिञ्च प्रवृत्तिः प्रवर्त्तनं बन्धहेतुः कर्ममार्गः निवृत्तिञ्च निवृत्तिर्मोक्षहेतुः संन्यासमार्गः बन्धमोक्षसमानवाक्यत्वात् प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गावित्यवगम्यते अथवा कार्य्याकार्य्ये विहितप्रतिषिद्धे लौकिके वा या शास्त्रबुद्धे वा कर्त्तव्याकर्त्तव्ये करणाकरणे इत्येतत् कस्य देशकालाद्यपेक्षया विजानाति दृष्टादृष्टार्थानां कर्मणां भयाभये बिभेत्यस्मादिति भयं तद्विपरीतमभयं भयञ्चाभयञ्च भयाभये दृष्टादृष्टयोर्भयाभययोः कारणे इत्यर्थः बन्धं सहेतुकं मोक्षञ्च सहेतुकं या वेत्ति विजानाति बुद्धिः सा पार्थ सात्त्विकी तत्र ज्ञानं बुद्धेर्वृत्तिर्बुद्धिस्तु वृत्तिमती धृतिरपि वृत्तिविशेष एव बुद्धेः ३० ययेति यया धर्मं शास्त्रचोदितं अधर्मञ्च प्रतिसिद्धं

आनन्दगिरिकृतटीका

धृत्याख्याया स्त्रैविध्यं सूचयति बुद्धेरिति सूत्रविवरणं प्रतिजानीते प्रोच्यमानमिति अर्जुनस्य धनञ्जयत्वं व्युत्पादयति दिगिति २९ तत्रादौ सात्त्विकीं बुद्धिं निर्दिशति प्रवृत्तिञ्चेति प्रवृत्तिराचरणमात्रं अनाचरणमात्रञ्च निवृत्तिरितिकिं नेष्यते तत्राह बन्धेति यस्मिन् वाक्ये बन्धमोक्षावुच्येते तस्मिन्नेव प्रवृत्तिनिवृत्त्योरुक्तत्वात् कर्ममार्गस्य बन्धहेतुत्वान्मोक्षहेतुत्वाच्च संन्यासमार्गस्य तावेवात्र ग्राह्यावित्यर्थः करणाकरणयोर्निर्विषयत्वायोगाद्विषयापेक्षामवताय्य योगं प्रविषयं निर्दिशति कस्येति अनिष्टसाधनं भयमिष्टसाधनमभयमिति विभजते भयेति वक्ष्यादिज्ञानमात्रस्य बुद्ध्यन्तरेऽपि सम्भवाद्विशेषणं न बुद्धिशब्दितस्य ज्ञानस्य प्रागेव त्रैविध्यप्रतिपादनात् किमिति बुद्धेरिदानीं त्रैविध्यं प्र

स्वामिकृतटीका

तेबुद्धेर्भेदमिति स्पष्टोऽर्थः २९ तत्र बुद्धेस्त्रैविध्यमाह प्रवृत्तिमिति त्रिभिः प्रवृत्तिं

भषा अनुवाद।

अब इस श्लोकसे ले तीन श्लोकसे बुद्धिकी त्रैविध्य कहते हैं कि धर्ममे प्रवृत्ति और अधर्मसे निवृत्ति औ देशकालके अनुसार जो कर्त्तव्य औ अकर्त्तव्य औ काज अकाज जानि अर्थ अनर्थ जान तथा बन्ध होकैसे औ मोक्ष होवा कैसे होता इस विचारसे भय अभय ये सब बुद्धि कहे अन्तःकरण जानिपरै जो ऐसी बुद्धि सात्त्विकी है इस जगह बुद्धिके द्वारा पुरुष सब जानता है यह कहनेको थे पर वह रीति छोड इसी तरह कहा करणको कर्त्ता करके कहा है ३०

यथाधर्म मधर्मञ्च कार्य्यञ्चाकार्य्यमेवच अयथावत्प्रजानातिबुद्धिःसापार्थराजसी ३१
अधर्म्मधर्ममितियामन्यतेतमसावृता सर्व्वार्थान्विपरीतांश्चबुद्धिःसापार्थतामसी ३२

## शाङ्करभाष्यं

कार्यञ्चाकार्यमेवचपूर्वोक्तेएवकर्याकार्ये अयथावन्नयथावत्सर्व्वतोनिर्णयेन नप्रजानातियाबुद्धिःसापार्थराजसी ३१ अधर्ममिति अधर्मंप्रतिषिद्धं धर्मंविहितमिति या मन्यतेजानाति तमसावृताऽसतीसर्वार्थान् सर्व्वानेवज्ञेयपदार्थान्विपरीतानेव जानाति बुद्धिःसापार्थतामसी ३२ धृत्येति धृत्यायया ऽव्यभिचारिण्येतिव्यवहितेन

## आनन्दगिरिकृतटीका।

तिज्ञायव्युत्पाद्यतेतत्राह ज्ञानमिति तर्हिज्ञानेनगतत्वान्नपुनर्धृतिर्व्युत्पादनीयेत्याशंक्याह इत्तिरपीति विशेषशब्देनज्ञानाद्यावृत्तिरिष्टा ३० कार्य्याकार्यवोर्द्धर्म्माधर्म्मयोर्पौनरुक्त्यंपरिहरति पूर्व्वोक्तेइति पूर्व्वश्लोकेकार्याकार्यशब्दाभ्यांदृष्टादृष्टार्थानां कर्मणांकरणाकरणेनिर्दिष्टेतयोरेवावापिग्रहान्नधर्माधर्माभ्यां पूर्व्वपर्यायाभ्याङ्ताथंर्ते त्यर्थःयाबुद्धिर्यया बुद्ध्या वोद्धा निर्णयेन नजानातीत्यर्थः ३१ धर्मशब्दोनपुंसकलिङ्गोपीत्यभिप्रेत्य धर्ममित्युक्तं तमसावृताऽविवेकेनवेष्टितेत्यर्थः कार्याकार्यादीन्

## स्वामिकृतटीका।

धर्म्मनिवृत्तिसधर्मंयस्मिन्देशेकालेचयत्कार्यमकार्यञ्चभयाभयेकार्य्याकार्यनिमित्तौ अर्थानर्थौ कथं बन्धःकथंवामोचइति याबुद्धिरन्तःकरणंवेति सासात्त्विकी ययापुमान्वेत्तीति वक्तव्येकरणेकर्तृत्वोपचारः काष्ठानिपचन्तीतिवत् ३० राजसींबुद्धिमाह ययेति अयथावत्सन्देहास्पदत्वेनेत्यर्थः स्पष्टमन्यत् ३१

## भाषाअनुवाद

और हेपार्थअर्जुन जिसबुद्धिसे धर्मअधर्म औकाजअकाज अयथावत्कहेठीकठीक नजानाजाय सोबुद्धिराजसोहै ३१ और तमोगुणसे आवृत कहे घेरी जोबुद्धि अधर्मकोभीजानि धर्मकेसकल विषयको विपरीतकहे उलटाजाने ऐसी विपरीत ग्रहणकारनेवाली बुद्धि तामसी है यहांभी करणता बुद्धिकीउचित थी पर कर्तारूपसे कहाहै अथवा धर्मरूप अन्तःकरणकीवृत्ति बुद्धि औनिश्चय तथा इच्छादिपचआदिरूप अन्तःकरण की वृत्तिवकुतभी रहते धर्म अधर्म औ भय अभय की साधनरूप बुद्धिको प्रधानकियाहै औरसब उपलक्षणरूपसे त्रिविधकहे गयेहैं ३२ अबइसश्लोकको अवधिकरके तीनश्लोकसेधृति की त्रैविध्य कहे

धृत्यायया धारयते मनःप्राणेन्द्रियक्रियाः योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ३३

## शाङ्करभाष्यं।

सम्बन्धः धारयते किं मनःप्राणेन्द्रियक्रियाः मनश्च प्राणाश्चेन्द्रियाणि तेषां क्रियाश्चेष्टा स्ता उच्छास्त्रमार्गप्रवृत्तेर्धारयति धृत्याहि धार्यमाणा नुच्छास्त्रमार्गविषया भवन्ति योगेनेति योगेन समाधानेनाव्यभिचारिण्या नित्यसमाधानानुगतयेत्यर्थः एतदुक्तं भवत्यव्यभिचारिण्या धृत्या मनःप्राणेन्द्रियक्रियाः धार्यमाणा योगेन धारयतीति यैवंलक्षणा धृतिः सा पार्थ सात्त्विकी ३३ ययेति ययातु धर्मकामार्थान् धर्मश्च कामाश्चार्थश्चते

## आनन्दगिरिकृतटीका

ताननुक्तांश्च संग्रहीतुं सर्वार्थानित्युक्तं तद्व्याचष्टे सर्वानेवेति विपरीतांश्चेति चकारमवधारणे गृहीत्वा विपरीतानेवेत्युक्तं ३२ इदानीं धृतित्रैविध्यं व्युत्पिपादयिषुरादौ सात्त्विकीं धृतिं व्युत्पादयति धृत्येति निर्दिष्टानां चेष्टानां कथं धृत्या धारणं तत्राह ताइति तदेवानुभवेन साधयति धृत्याहीति ध्रियतेऽनयेति धृतिर्यत्नविशेषः तया धृत्या धार्यमाणा यथोपदिष्टाश्चेष्टाः शास्त्रमतिक्रम्य नार्थान्तरावगाहिन्यो भवन्तीत्यर्थः धृतिमेव समाध्यविनाभूतत्वेन विशिनष्टि योगेनेति ननु धृतेर्नियमेन समाध्यनुगतत्वं कथमुक्तक्रियाधारणोपयोगीत्याशंक्याह एतदिति उक्तक्रिया धार्यमाणा योगेन ब्रह्मणि समाधानेनैकाग्रेणाव्यभिचारिण्याऽविनाभूतया धृत्या धारयत्यथ तदविनाभावाभावे नियमेन तद्धारणासिद्धेरित्यर्थः ३३

## स्वामिकृतटीका

तामसीं बुद्धिमाह अधर्ममिति विपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः बुद्धिरन्तःकरणं पूर्वोक्तं ज्ञानं तद्वृत्तिं धृतिरपि तद्वृत्तिरेव यद्वा अन्तःकरणस्य धर्मिणो बुद्धिरध्यवसायलक्षणा वृत्तिरेव इच्छाद्वेषादीनां तद्वृत्तीनां बहुत्वेऽपि धर्माधर्मभयाभयसाधनत्वेन प्राधान्यादेतासां त्रैविध्यमुक्तं उपलक्षणं चैतदन्यासां ३२ इदानीं धृतेस्त्रैविध्यमाह धृत्येति त्रिभिः योगेन चित्तैकाग्रेणहेतुनाऽव्यभिचारिण्या विषया

## भाषाअनुवाद

तेहैं कि हेअर्जुन योगकहे चित्तकी एकाग्रतासे औरऔर विषयका धारण न करके जो धैर्यसे मन औप्राण तथा सब इन्द्रियोंकी सकलक्रियाकी ऊई जांय वही धृति सतोगुणी है ३३

ययातुधर्मकामार्थान्धृत्याधारयतेऽर्जुन प्रसङ्गेनफलाकांक्षीधृतिःसापार्थराजसी ३४
ययास्वप्नंभयंशोकंविषादंमदमेवच नविमुञ्चतिदुर्मेधाधृतिःसातामसीमता ३५

## शाङ्करभाष्यं

धर्मकामार्थाःतान्धर्मकामार्थान्धृत्याययाधारयते मनसिनित्यकर्त्तव्यरूपानेवधार यतेहेअर्जुन प्रसङ्गेनयस्ययस्यधर्मादेर्धारणप्रसङ्गस्तेनतेनप्रसङ्गेनफलाकांक्षीचभव तियःपुरुषःतस्यधृतिर्यासापार्थराजसी ३४ ययेति ययास्वप्नंनिद्राम्भयन्त्रासंशोकंस न्तापंविषादमवसादंविषण्णवदनतां मदंविषयसेवां आत्मनोबहुमन्यमानोमत्तइव मदमेवचमनसि नित्यमेवकर्त्तव्यरूपतया कुर्वन्नविमुञ्चतिधारयत्येवदुर्मेधाःकुत्सि तमेधाः पुरुषोयस्तस्यधृतिर्यासातामसीमता ३५ गुणभेदेनक्रियाणांकारकाणाञ्च

## आनन्दगिरिकृतटीका

राजसींधृतिंदर्शयति ययात्विति तेषांधारणप्रकारमभिनयति मनसीति फला कांक्षीतिकस्यविशेषणंतत्राह यःपुरुषइति ३४ तामसीं धृतिंव्याचष्टे ययेति शो कंप्रियवियोगनिमित्तंसन्तापंविषण्णतामिन्द्रियाणांग्लानिः विषयसेवा कुमार्गप्रवृ त्तेरुपलक्षणमुक्तं स्वप्नादिमदान्तंसर्वमेवकर्त्तव्यतयात्मनोबहुमन्यमानोमनसि नि त्यमेवकुर्वन्दुर्मेधाःन मुञ्चति किन्तुधारयत्येवेति योजना ३५ इतिमनुद्यानन्त

## स्वामिकृतटीका।

न्तरमवधारयन्त्याययाधृत्यामनसःप्राणस्यइन्द्रियाणाञ्च क्रियाधारयते नियच्छति साधृतिःसात्विकी ३४ राजसींधृतिमाह ययात्विति ययातुधृत्याधर्मार्थकामान् प्राधान्येनधारयते नविमुञ्चति तत्प्रसङ्गेनतत्फलाकांक्षीचभवतिसाराजसी धृतिः ३४ तामसींधृतिमाह ययेति दुष्टा अविवेकबहुलामेधायस्यसदुर्मेधाः पुरुषोयया धृत्यास्वप्नादीन्नविमुञ्चति पुनःपुनरावर्त्तयति स्वप्नोवनिद्रा साधृतिस्तामसी ३५

## भाषाअनुवाद

अब राजसीधृतिकहतेहैं कि हेअर्जुन तिससेभिन्नजोधृति, किजिससे धर्मअर्थ औकाम सबश्रेष्ठरूपसे धारणकियेजांय परित्यक्तनहोंय औउनकेसङ्गसे धर्मादि के फलकीआकांक्षा भीहोय ऐसीधृतिका नाम राजसीहै ३४ अबतामसीधृति कहतेहैं किहेअर्जुन जिसमनुष्यकी दुर्मेधाकहे अविवेकिनी नीचबुद्धिहै और वहदुर्बुद्धिमनुष्य जिसधृतिकहेधैर्यसे निद्राऔभयशोक तथा विषादकहेदुख औ मद इनकोनहीं छोडताहै वहधृति तामसीहै ३५ अबसुखभी तीनप्रकारका है य

सुखंत्विदानींत्रिविधंशृणुमेभरतर्षभ अभ्यासाद्रमतेयत्रदुःखान्तञ्चनिगच्छति ३६
यत्तदग्रेविषमिवपरिणामेऽमृतोपमं तत्सुखंसात्विकंप्रोक्तमात्मबुद्धिप्रसादजं ३७

शाङ्करभाष्यं

त्रिधाभेदउक्तोऽथेदानींफलस्यसुखस्यत्रिविधोभेदउच्यते सुखमिति सुखन्तुइदानीं त्रिविधंशृणुसमाधानंकुर्वित्येतन्मेममभरतर्षभअभ्यासात्परिचयादावृत्तेःरमतेरतिं प्रतिपद्यतेयत्रयस्मिन्सुखानुभवेदुःखान्तञ्चदुःखावसानंदुःखोपशमञ्चनिश्चयेन प्राप्नोति ३६ तदिति यत् सुखमग्रेपूर्वंप्रथमसन्निपातेज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासपूर्वकत्वाद्विषमिव दुःखात्मकंभवति परिणामेज्ञानवैराग्यादिपरिपाकजंसुखममृतोपमन्तत्सुखंसात्विकंप्रोक्तंविद्वद्भिरात्मनोबुद्धिरात्मबुद्धेःप्रसादोनैर्मल्यंसलिलवत् स्वच्छता ततोजातमात्मबुद्धिप्रसादजमात्मविषयावात्मावलम्बनाबुद्धिरात्मबुद्धिस्तत्प्रसादेप्रकर्षाद्वाजातमित्येतत्तस्मात्सात्विकंतन्मतं ३७

आनन्दगिरिकृतटीका

श्लोकतात्पर्य्यमाह गुणेत्यादिना क्रियमाणंकारकाणांगुणतस्त्रैविध्योक्त्यनन्तरं फलस्यसुखस्यत्रैविध्योक्त्यवसरेसतीत्याह इदानीमिति हेयोपादेयभेदार्थंत्रैविध्यंसमाधानमैकाग्र्यंममवचनादितिशेषः यत्रेत्युभयत्रसम्बध्यतेतत्त्रिविधंसुखमितिपूर्वेण सम्बन्धः ३६ तत्रसात्विकंसुखमादेयत्वेन दर्शयति यत्तदिति प्रथमसन्निपातं विभजते ज्ञानेति कुतस्तस्यदुःखात्मकत्वंतत्राह अत्यन्तेति दुःखात्मकत्वेदृष्टान्तमाह

स्वामिकृतटीका

इदानीं सुखस्यत्रैविध्यं प्रतिजानीते सुखन्त्विति स्पष्टोऽर्थः ३६

भाषाअनुवाद

ह प्रतिज्ञाआधेश्लोकसेकहतेहैं कि हेभरतवंशीअर्जुन अवत्रिविधसुखभी हमसेसुनो किजोपुरुष नित्यअभ्यासकेहेतुसे सुखभोगकरताहै औरविषयीलोगोंकेसमान विषयवासनासे अतिकठिनकर के सुखभोग नहीकरता प्रीतिको नहीप्राप्त होताहै ऐसाजोसुखभोगीपुरुष सोहठात्दुखके अन्तकोप्राप्त होताअर्थात्दुखसेछूटजाताहै ३६ औरवहसुखकैसाहै दूसपरकहते हैं किजोसुखअग्रेकहे प्रथमविषकेतुल्य है औअन्तको अमृतसमानहोताहै वहसुखसात्विकहै औआत्मा तथाबुद्धिकी प्रसन्नतासे उत्पन्नहै अर्थात्मलरूप रजोगुणतमोगुण तिनको सतोगुण दूरकरैहै तब वहसुखप्रगटैहै ३७ अवराजस सुखकहते हैं किविषय वासनासहि

विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमं परिणामेविषमिवतत्सुखंराजसंस्मृतं ३८

## शाङ्करभाष्यं

विषयेति विषयेन्द्रियसंयोगाद्यत्सुखंजायतेप्रथमंप्रथमक्षणेऽमृतोपममस्तत संप्रपरिणामेविषमिवबलवीर्यरूपप्रज्ञामेधात्मनोत्साहहानिहेतुत्वादधर्मतज्जनितनर कादिहेतुत्वाच्चपरिणामेतदुपभोगविपरिणामान्तेविषमिवतत्सुखंराजसंस्मृतं ३८ यदग्रेचेति यदग्रेचानुबन्धेचावसानोत्तरकाले च सुखं मोहकरमात्मनोनिद्रा लस्यप्रमादोत्थनिद्राचालस्यञ्चप्रमादश्चतेभ्यःसमुत्तिष्ठतीति निद्रालस्यप्रमादोत्थन्त त्तामसमुदाहृतं ३६ अथेदानींप्रकरणोपसंहारार्थः श्लोकआरभ्यते नेति न

## आनन्दगिरिकृतटीका

विषमिवेति ज्ञानादिपरिपाकावस्थापरिणामस्तस्मिन्सति ततोजातमितियोजना तत्रैव हेत्वन्तरमाह आत्मनइति आत्मबुद्धिग्रहणार्थान्तरमाह आत्मविषयेति अन्तः करणनैर्मल्याद्वा सम्यकज्ञानप्रकर्षाद्वा जातत्वादिति तच्छब्दार्थः ३७ राजसंसुखंहेयत्वायकथयति विषयेति बलंसङ्घातसामर्थ्यं वीर्यं पराक्रमकृतं य शोरूपंशरीरसौन्दर्यंप्रज्ञाश्रुतार्थग्रहणसामर्थं मेधागृहीतार्थस्याविस्मरणेनधारण शक्तिःधनंगोहिरण्यादि उत्साहस्तुकार्यंप्रत्युपक्रमादिः एतेषां नाशकत्वादैहिकं सुखंविषसममित्यर्थः तत्रैवहेत्वन्तरमाह अधर्मेति ३८

## स्वामिकृतटीका

तत्रसात्त्विकंसुखमाह अभ्यासादिति सार्द्धेन यत्र यस्मिन्सुखे अभ्यासाद्रमतेनतु विषयसुखइवसहसारतिंप्राप्नोतियस्मिन्रममाणश्चदुःखस्यान्तमवसानं नितरांगच्छ तिप्राप्नोति कीदृशंयत्तत् किमपिअग्रे प्रथमंविषमिव मनःसंयमाधीनत्वात्दुःखावह मिवभवति परिणामेत्वमृतसदृशंआत्मविषयाबुद्धिरात्मबुद्धिस्तस्याःप्रसादोरजस्तमोम लत्यागेन स्वच्छतयावस्थानंततोजातं यत् सुखं तत्सात्त्विकंप्रोक्तंयोगिभिः ३७ राजसंसुखमाह विषयेति विषयाणामिन्द्रियाणाञ्चसंयोगात् यत्तत्प्रसिद्धं स्त्री संसर्गादिसुखं अमृतमुपमायस्य तादृशंभवति अग्रे प्रथमंपरिणामेच विषतुल्यं इ हामुत्रचदुःखहेतुत्वात् तत् सुखं राजसंस्मृतं ३८

## भाषाअनुवाद

त इन्द्रियोंकेसंयोगसे जोप्रियसङ्गमआदि सुखहोताहै और पहलेतो अमृततुल्य लगताहै औअन्तको दुखदाईहेतुसे विषसमान होता सोई सुख राजस है ३८

